# शरद्रात्रिः

## श्री बेल्लम्कोण्ड रामराय कवीन्द्र

श्री बेल्लंकोण्ड रामराय कवीन्द्रुल ट्रस्ट्
**नरसरावपेट**




# श्री बेल्लम्कोण्ड रामरायशास्त्रिणः

जननम् दि. २७.१२.१८७५, निर्याणम् दि. २७.१०.१९१४

# वैयाकरणसिद्धान्तकौमुदी

## श्री बेल्लम्कोण्ड रामराय कवीन्द्र विरचित

## शरद्रात्र्याख्यया व्याख्यया समलंकृतम्

अनुग्राहकाः

**श्री श्री जगद्गुरवः भारतीतीर्थमहास्वामिनः**

दक्षिणाम्नाय, श्री शारदा पीठम्, शृङ्गेरी

संशोधकः


**डा. कम्भम्पाटि सीतारामाञ्जनेयुलु**

M.A (Sanskrit)Ph.D.,M.A (Telugu).



श्री बेल्लंकोण्ड रामराय कवीन्द्रुल ट्रस्ट्

नरसरावपेट

CONTACT NO'S : - (+91) 9866400133 And 9700311109.

E - mail : - bvlnckumar@gmail.com

ॐ

श्रीरस्तु

# श्री हयग्रीवाय नमः




ज्ञानानन्दमयं देवं निर्मलस्फटिकाकृतिम्।
आधारं सर्वविद्यानां हयग्रीवमुपास्महे ॥

# शरद्रात्रिः

AUTHOR:

## SRI BELLAMKONDA RAMA RAYA KAVI.

DIGITALIESED BY :

BELLAMKONDA CHAKRADHAR KUMAR.
(GREAT - GRAND SON OF AUTHOR.).

## THANKS TO

SRI KAMBHAMPATI SITARAMANJANEYULU GARU.

First Printed Edition : - 1956.

First Digital Edition : - 10th MAY 2013.

SRI BELLAMKONDA RAMA RAYA KAVINDRULA TRUST.

NARASARAOPET.

SRI NILAYAM
Do.No. 12-8-5/5.,
PRAKASH NAGAR.,
NARASARAOPET .
PIN - 522601.
GUNTUR District.,
ANDHRA PRADESH.
E - Mail : - bvlnckumar@gmail.com
Ph.No's : - (+91) 9866400133 & 9700311109.

# निवेदनम्

विदितचरमेवैतत् सर्वेषां विदुषां यत् श्रीबेल्लंकोण्डोपनामक रामरायकवीन्द्रः हयवदनपरब्रह्मोपासनासमासादितसकलविद्यः, शताधिकग्रन्थकर्ता, एकसन्थाग्राही चेति । अस्य पिता मोहनरायः, अयं गर्तपुरीमण्डलान्तर्गत "पमिडिपाडु" ग्रामनिवासी च । अयं पुरिघल्लोपनामक रामसूरिगुरोस्समासादितानवद्यशब्दविद्यः। एकादशमासेष्वेवायं तर्कव्याकरणवेदान्तालंकारादिशास्त्रेषु परिनिष्ठित आसीत्। कवीन्द्रोऽयं ऐकोनचत्वरिंशद्वर्षपरिमितवयस्येव ।शताधिकग्रन्थकर्ता आसीदिति अनितरसाधारणोऽयं विषयः । कविरयं भगवद्गीतायाः शंकरभाष्यस्य विस्तृत-परमतनिरासपरं भगवद्गीता भाष्यार्कप्रकाशिकेति व्याख्यानं सुलभशैल्या व्यरचयत् ।

विद्वच्छिखामणयस्सर्वेऽपि रामरायकवेः सर्वतोमुखपाण्डित्यं जानन्त्येव । भट्टोजीदीक्षितविरचित वैयाकरणसिद्धान्तकौमुद्याः श्रूमद्ज्ञानेन्द्रसरस्वतीकृतं "तत्त्वबोधिनी" इति व्याख्यानं वासुदेवदीक्षितकृतं बालमनोरमा इति व्याख्यानं चेति व्याख्यानद्वयं प्रसिद्धं वर्तते । एतयोर्द्वयोः तत्त्वबोधिनी प्राचीना । कौमुद्याः प्रौढमनोरमेत्यपरमपि व्याख्यानमस्ति । तत्तु वैयाकरणसिद्धान्तकौमुदीरचयित्रा भट्टोजीदीक्षितेनैव लिखितमस्ति । तत्तु प्रौढवैयाकरणानामेव मनोरञ्जकम्। रामरायकविस्तु शरद्रात्रिरित्यभिनवं व्याख्यानं सिद्धान्तकौमुद्याः विरचितवान् ।

शरद्रात्रावस्यां रामरायकवीन्द्रः शिष्यबुद्धिवैशद्यार्थमेव सुलभशैल्या पूर्वोत्तरपक्षौ स्थापयित्वा तलस्पर्शि पांडित्यं प्रदर्शयति । अत्र प्रर्शिता विषयाः मुनित्रयसम्मता इत्येव न, किन्तु विपश्चिद्वरान् अत्यन्तं विस्मापयेयुः । एते विषयाः " काणादं पाणिनीयं च सर्वशास्त्रोपकारकम् " इत्युक्तरीतिवत् शब्दशास्त्रविद्यार्थिनां तत्कोविदानां चात्यन्तमुपकारका भवेयुरिति महदिदं प्रमोदस्थानम् ।

प्रायशः लोके तावत् यस्सुकविरस्ति न तस्य पाण्डित्यं वर्तते, यश्शास्त्रवित्

न स कविर्भवतीति दृश्यतेऽस्माभिः। किन्त्वस्मिन्विषये सुकवित्वं शास्त्रनिष्णातत्वं च द्वयमपि वर्तते पंडितरायजगन्नाथवत् । उपास्योपासकयोरभेदेनायं हयवदनपरब्रह्मोपासक इति कृत्वा हयग्रीवावतार इत्यपि केचित् मन्यते ।

प्रथमतः एकवारं केवलायाः शरद्रात्रिव्याख्याया एव ग्रन्थरूपेण संयोजनं विधाय जगद्गुरूणां श्री श्री भारतीतीर्थमहास्वामिनां पादपद्मयोः सविधे मया समर्पितम्। तद्दृष्ट्वा जगद्गुरवः केवलया शरद्रात्र्या नालंभवति, परन्तु सा व्याख्या मूलेन साकं योजनीयेति मामादिष्टवन्तः । तदनु मया जगद्गुरूणामाज्ञया तथैवाकारि ।

व्याकरणविद्वांस एव शरद्रात्रेः स्वरूपनिर्धारणे समर्थाभवन्तीति, अपि च तत्कार्यमपि दीर्घकालसाध्यमिति, तत्प्रतिकृतीनां संस्कृतभाषायां विद्यमानत्वेपि आन्ध्रलिप्यां विद्यमानत्वात् तद्दृष्ट्वा संस्कृतलिप्यां तद्रूपकल्पने विलम्बः संजातः, तथाकृताऽपि एकवारं कम्प्यूटर्यन्त्रे मृग्या एवाभूदिति च महान् विषादस्सञ्जातः । पुनः शीघ्रसम्पादने मया बहुधा प्रयतितम् । आन्ध्रदेशे संस्कृताक्षरविन्यासकानां न्यूनत्वात् एतद्रूपकल्पने बहुकालः व्यतीत इति सप्रश्रयं निवेदयामि ।

अस्याः शरद्रात्रेः आन्ध्रलिपिप्रतिकृतेरपि शरत्काले एव आविष्करणमभूदिति काकतालीयमेवासीदिति, अद्यापि एतद्शरद्रात्रेः संस्कृतलिपिप्रतिकृतेरपि शरत्काले एव आविष्क्रियत इति द्वयोरपि काकतालीयमेव भवतीतीदं महत् प्रमोदकारकं भवति ।

एवं निवेदयिता

**कम्भम्पाटि सीतारामाञ्जनेयुलु**

पार्थिव आश्वयुज शुद्ध दशमी,
सौम्यवासरः
१२-१०-२००५

ॐ

।। श्रीगणेशाय नामः ।।

अथ

# वैयाकरणसिद्धान्तकौमुदी ।

मुनित्रयं नमस्कृत्य तदुक्तीः परिभाव्य च ।
वैयाकरणसिद्धान्तकौमुदीयं विरच्यते ।।१।।

---

।। श्रीहयग्रीवाय नमः ।।

## श्रीबेल्लंकोण्ड रामरायकवीन्द्रविरचिता शरद्रात्रिः सिद्धान्तकौमुदीव्याख्या

### —: व्याख्यानपीठिका :—

श्रीमद्धयग्रीवपदं प्रणम्य,
कलार्थिहृत्कैरवभासनाय ।
श्रीरामगुर्वाश्रयलब्धविद्यो,
रामश्शरद्रात्रिमिमां करोति ॥

श्रीशङ्करश्शं जगतो विधातुं,
नृत्तं करोति स्म दिनान्तकाले ।
यद्वीक्षणेनानिमिषत्वमाप्ता,
जागर्ति नेत्रे दिवि देवजातिः ।।

नृत्तावसाने नटराजराजो,
ननाद ढक्कां नव पञ्चवारम्।
उद्धर्तुकामः सनकादिसिद्धान्,
एतद्विमर्शे शिवसूत्रजालम् ।।

शाब्दस्य भेत्तुं तमसो नृणां सोऽ,
वासीच्छिवः पाणिनिनामधेयः ।
'आ वृद्धिरादैचम'नेन चालं,
प्राणायि शाब्दं किल सूत्रजालम् ॥

व्याख्यातुमीशस्य वचांसि विष्णो,
रन्यः क्षमो नैव यतस्ततोऽस्य।
पतञ्जलीभूय हरिर्बभाषे,
भाष्यं महच्छब्दवतंसपूर्वम् ॥

(महच्छब्दवतंसपूर्वमिति—महदिति शब्दवतंसः पूर्वो यस्य महाभाष्यमित्यर्थः) आदिशेषस्यापि विष्ण्वंशत्वात्, विष्णुः पतञ्जलीभूयेत्युक्तम्

गम्भीरपातञ्जलभाष्यसिन्धु,
स्सुदुस्तरो मन्दधियामितीशः।
भट्टोज्यभिख्यो भुवि सङ्ग्रहेण,
व्याख्यातवान् पाणिनिसूत्रजालम्।।

सिद्धान्तकौमुदीं शाब्द,तमश्छेदकरीं नृणाम्।
महेश्वरादृते कोऽन्यः, कर्तुं वर्तयितुं प्रभुः।।

ननु, भट्टोजिदीक्षितानां कथमीश्वरांशत्वमत आह।
सिद्धान्तेति, शाब्दतमः किमयम् ?

ज्ञानेन्द्रवाणीकृतया तत्त्वबोधिन्यभिख्यया ।
व्याख्यया कौमुदी मन्द(बुद्ध्या)मन्दसुदुर्ग्रहा।।
जिज्ञासितव्याकरणा, मन्दमन्दधियां तथा।
सुखबोधाय कौमुद्याश्शरद्रात्रिर्विधीयते ।।

यदत्रासौष्ठवं किञ्चित्तन्ममैव गुरोर्नहि।
यदत्र सौष्ठवं किञ्चित्तद्गुरोरेव मे न हि ।।
प्रेरको वासुदेवोऽत्र वाचको हयकन्धरः ।
वक्ताऽहं केवलं किञ्चित्क्षमध्वं मयि तद्बुधाः।।

ननु, महाभाष्यादिग्रन्थपाठकानां शाब्दिकानां बहूनां सत्त्वात् कौमुदीव्याख्याने केयं नाम अस्य तव प्रवृत्तिः । अत आह प्रेरक इति। इति व्याख्यानश्लोकपीठिका।

**अथ ग्रन्थप्रारम्भः**

अथ तत्रभगवान् परमकारुणिकः भट्टोजीदीक्षितश्शाब्दतमस्सागरपतितजनोत्तारणाय नावमिव सिद्धान्तकौमुदीं चिकीर्षुः, चिकीर्षितग्रन्थस्य निर्विघ्नपरिसमाप्तिप्रचयगमनार्थं मङ्गलमारचय्य शिष्यशिक्षार्थं ग्रन्थतो निबध्नाति **"मुनित्रय"** मिति।।

मुनित्रयं नमस्कृत्य तदुक्तीः परिभाव्य च ।
वैयाकरणसिद्धान्तकौमुदीयं विरच्यते।।

ईश - ब्रह्म - विष्ण्ववतारभूतं पाणिनि-कात्यायन-पतञ्जलिनामकमुनित्रयमित्यर्थः ।

**अइउण् ।१। ऋलृक्।१। एओङ् ।३। ऐऔच् ।४। हयवरट् ।५। लण् ।६। ञमङणनम् ।७। झभञ् ।८। घढधष् ।**

**९। जबगडदश् ।१०। खफछठथचटतव् ।११। कपय् । १२। शषसर् ।१३। हल् । १४।** इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि ।। एषामन्त्या इतः ।। लण्सूत्रेऽकारश्च ।। हकारादिष्वकार उच्चारणार्थः। ।। **१हलन्त्यम् ।१।३।३।।** हलिति सूत्रेऽन्त्यमित्स्यात् **२आदिरन्त्येन सहेता ।१।१।७१।।** अन्त्येनेता सहित आदिर्मध्यगानां खस्य च संज्ञा स्यात् । इति हल्संज्ञायाम्।। ।।

---

सूत्रवार्तिकभाष्यप्रणेतॄनिति भावः **"विरच्यत इति"** मयेति शेषः। (महेश्वरादागतानीति साक्षाद्वचनेन) मयेति साक्षादवचनेन निमित्तमात्रमेवाहं ईश्वरेणैव सर्वः कृत इति ग्रन्थकर्तुर्निरभिमानता सूच्यते।।

### * संज्ञाप्रकरणम् *

1. सू.."अ इ उ ण्" सर्ववेदेषु प्रधानस्य प्रणवस्य प्रथमावयवत्वेन च (उच्यते)

सू. "अइउण्" वर्णानाम्मध्ये अकारस्य भगवद्विभूतित्वेन सर्ववेदमूलभूतस्य प्रणवस्य प्रथमावयवत्वेन च पूज्यत्वात्, सूत्रजाले तस्य प्रथमतो निर्देशः। नटराजनादितढक्कानादे तस्यैव प्रथमम‌भिव्यक्तत्वादिति वा। अत एव,"अ इ उ ण्" इति निर्दिष्टम्, न तु "इ अ उ ण्" इति । शिवसूत्रजालस्य अक्षरसमाम्नायत्वेन अक्षराभ्यासे अक्षराणां स्फुटप्रतिपत्तिरुचितेति, अ इ उ ण्, इत्यादावाद्वुण इत्यादि सन्धिर्न। सन्धिकरणे तु अकारेकारयोस्स्थाने एकारः तत एकारस्य अयादेशश्चेति, अयुण् इति स्यात्। किञ्च अयुण् इति सूत्रिते इण् उक् इत्यादि प्रत्याहाराणामप्रसिद्धिः। यु इत्यक्षरे यकारस्यैवादित्वात् ।

2. "आदिरन्त्येन' इत्यनेन प्रत्याहारे कृते "य् ण्" इत्याद्यनिष्टापत्तिश्च। अपि च "आद्वुण" इत्यादि शास्त्रस्य शिवसूत्राभिव्यक्तिसमयेऽसत्त्वात् सुतरां न सन्धि–प्रसक्तिः। किञ्च नटराजनादितढक्कातस्सकाशात् अ, इ, उ, ण् इत्याकार एव नादस्समजनि। नतु, "अयुण्" इति, नाऽत्र शङ्कावकाशः । न च "अयुण्" इत्येव नादः कुतो नासीदिति वाच्यम्। दैवाधीनत्वात्तस्य। इणुगादिप्रत्याहारनिर्वहणोन्मुखत्वाच्च दैवस्य । एतेन " अ उ इ ण्" इति कुतो न सूत्रितम् इति शङ्काऽपि प्रत्युक्ता । दैवात्तादृशढक्कासकाशात् "अ उ इ ण्" इत्याकारकनादस्यानुद्भूतत्वात् सूत्रपक्षे रप्रत्याहारो न सिद्ध्यति, लण् सूत्रस्थावर्णस्य अन्त्यत्वाभावात्। न्यासपक्षे तु सुलभ एव सः। यद्वा "अनिदिता" इति न्यासस्सुकरः। इता सहोच्चार्यमाणः अनिद्वर्णः स्वस्य मध्यगानाञ्च संज्ञा स्यादिति तदर्थः। पूर्वस्मान्न्यासादस्मिन्न्यासे मात्रालाघवमस्तीति विशेष इति चेदुच्यते। "अनिदिता" इत्यादिन्यासे यण् इति प्रत्याहारः ।

य, ह, औ, ऐ, ओ, ए, ऋ, लृ इत्येतेषां वर्णानामपि संज्ञा स्यात्। अ इ उ ण् सूत्रगतेन णकारेण इता सह यकारस्य अनिदितः प्रत्याहारात्। ततश्च धात्रंश इत्यादौ

"यणो मयो द्वे वाच्ये" इति द्वित्वादिकं न स्यात्। तथा सुडिति प्रत्याहारोऽपि सुप्सूत्रगतस्य सोः टासूत्रगत टकारेण सहोच्चारणात्, सु, ङस्, ङि इत्यादीनां संज्ञा स्यात्। ततश्च "यूष्णा" इति न सिद्ध्येत् । टायाः सुट्त्वेन "सुडनपुंसकस्य" इति सर्वनामस्थानत्वात्, अल्लोपोऽनः इत्यल्लोपासिद्धेः। "आदिरिता" इति न्यासे तु आदिशब्देन सूत्रादिवर्णग्रहणात्, यण् प्रत्याहारः अ,इ,उण्, सूत्रगत, णकारेण सह न भवत्येव। किन्तु सुट्प्रत्याहार ष्टा टकारेण सह सुप्सुवर्णस्य उच्चारणात् स्यादेव इति। नन्वेवं सूत्रमतेऽपि दुर्वार एवायं दोषः। तथाहि। यद्यादिशब्देन सूत्रादिर्गृह्यते इण्, यणादि प्रत्याहारासिद्धिः। यदि तु विवक्षुणा प्रथमं गृहीतो वर्ण एव आदिरित्युच्यते, तर्हि, यण् प्रत्याहारः। अ इ उ ण् सूत्रस्थणकारेण सह सम्भवेदेव इति चेत्सत्यम् । तर्हि ब्रूमः। आद्यन्तशब्दावत्र पूर्वोत्तरवाचकौ । न तु प्रथमचरम वाचकौ। तथा च उत्तरेण इता सहोच्चरितः पूर्वः स्वस्य मध्यगानाञ्च संज्ञा स्यादिति तदर्थः। तथा च पूर्वस्य यकारस्य उत्तरेण लण् सूत्रगतणकारेण सहैव प्रत्याहारस्स्यात्। न तु अ इ उ ण् सूत्रगतेन पूर्वेण णकारेण इति न दोषस्सूत्रमते।

ननु "आदिरिता" इति न्यासेऽपि न दोषः। आदिशब्दस्य पूर्व इत्यर्थात्, पूर्वशब्देन प्रतियोगिना परशब्दस्य आक्षेपो न्याय्य इति कृत्वा इतेत्यनेनैव **"परेणेता"** इत्यर्थसिद्धेर्नार्थोऽन्त्यपदेन इति चेत्सत्यम्। आक्षेपज्ञापनाङ्गीकार (बलेन) एतेन अन्त्येन सहेत्यस्यापाकरणं न न्याय्यमिति प्रतिभाति। प्रतिबोद्धॄणां क्लेशावहत्वात्। तस्मादर्थक्लेशाभावात् सूत्रकारोक्तमेव रमणीयम् वर्णलाघवा "दादि"रितीति न्यासमतं रमणीयमित्यन्ये; द्वयोः किं वा रमणीयमित्यत्र सहृदयहृदयमेव प्रमाणम्।

न च न्यासमतस्य मूलकारानभिमतत्वाद्दुष्टत्वं शंक्यम् । अर्धमात्रालाघवमपि पुत्रोत्सवं मन्यन्ते इति परिभाषया लाघवगुणवतो न्यासस्य मूलकाराभिमतत्वात्। अन्यथा **अकोऽकि** दीर्घ इत्यादिन्यसानामप्रामाण्यापत्तेः। वस्तुतस्तु "अनिदन्त्येन सहेता" इति न्यासस्सुवचः। मात्रालाघवं गुणः। किञ्च सूत्रमते उत्तरेण इता सहितः पूर्वोऽपि इद्वर्ण एव ग्रहीतव्यस्स्यात्। पूर्वोत्तरयोः परस्परप्रतियोगित्वात्। प्रतियोगिनि सति अप्रतियोगिनो ग्रहणस्यान्याय्यत्वात्। ततश्च ण्, क्, ण्, च्, इति प्रत्याहारापत्तिः। न्यासमते तु अन्त्येनेत्यनेन आदेराक्षेपः। उत्तरेणेता सहितः पूर्वः अनित् स्वस्य मध्यगानाञ्च संज्ञा स्यादिति निर्दुष्टोऽर्थः। न चाऽदिपदाभावे समुदायाक्षेपो न स्यादिति वाच्यम्। इदनितपदाभ्यां समुदायाक्षेपस्य सुलभत्वात्। न चैवं मतद्वयेऽपि अन्त्येनेत्यस्य उत्तरेणेत्यर्थात्। सुट्प्रत्याहारष्टाकारेण स्यादिति शंक्यम्। सुट् प्रत्याहारा..... तर..... फलासन्निहितेन औट्टकारेणैव सुट्प्रत्याहारस्य न्याय्यत्वादिति पूर्वमेवोक्तत्वात्। न च व्याप्तिन्यायेन टाटकारेणैव सुट्प्रत्याहारः स्यादिति वाच्यम्। औट्टकारवैयर्थ्यादन्यथानुपपत्त्या सुट्पत्याहारस्य औट्टकारेणैव भाव्यत्वात्, ननु **"अनिदन्त्येन सहे"** ति न्यासे आदिशब्दाभावात्, 'अन्त्येनेता सहितःमध्यमोऽनित् पूर्वेषां संज्ञा स्यात्' इत्यापतेदिति चेन्मैवम्। अन्त्येनेत्यस्य

चरमेणेति यद्यर्थस्स्यात्तर्हि आदिमध्यान्तानां त्रयाणां प्रतियोगिपदार्थत्वान्मध्यमोऽनिदित्यर्थस्स्यात्। प्रकृते तु अन्त्येनेत्यस्य उत्तरेणेत्यर्थात् पूर्वोत्तरयोर्द्वयोरेव प्रतियोगिपदार्थत्वात्। उत्तरेणेता सहितऽनितः पूर्वो उत्तरेणेता सहितोऽनित् पूर्व एव स्यान्न तु मध्यमः इति। नन्वेवं उत्तरेणेता सहितः पूर्वोऽनित् स्वस्य संज्ञा स्यादित्येवार्थस्स्यात्। "स्वं रूप" मिति सूत्रात्स्वशब्दानुवृत्तेः। मध्यमानां इत्यर्थस्तु न स्यात् मध्यमाक्षेपाभावात् । इति चेन्मैवम्। स्वस्य। स्वयं संज्ञा भवत्येवेति स्वसंज्ञार्थं सूत्रस्यानावश्यकत्वादिदं सूत्रं व्यर्थीभूय मध्यगानामिति सूचयतीति केयमीश्वराज्ञा। ननु मध्यगानामित्येव सूचयतीति केयमीश्वराज्ञा। अनितः पूर्वेषां इत उत्तरेषां वा इत्यपि सूचयेदेव इति चेन्मैवम्। 'गौरावस्कन्दि'न्नित्यत्र पूर्वोत्तरयोर्गौरावर्णयोर्ग्रहणात्। यथा "गौतमदारा" इति लभ्यते, तद्वदिहापि शब्दशास्त्रे अण् इति पूर्वोत्तरयोर्ग्रहणात् इ, उण् इति लभ्यत एवेति। न चैवं लोकव्यवहारसिद्धस्य पूर्वोत्तरवर्णोच्चारणे समुदायसिद्धिरूपस्यार्थस्य इह शास्त्रे सूत्रणं व्यर्थमिति वाच्यम्। अन्त्यस्यापि ग्रहणं स्यात् तन्माभूदित्येतदर्थं सूत्रस्यास्य आवश्यकत्वात्। न हि अणिति संज्ञा णकारस्य भवति। ननु स्वस्येति स्वपदेन अन्त्येनेता सहित आदिरेव गृह्यत इति स्यादेवेहाप्यन्त्यस्य संज्ञेति चेन्मैवम्। 'अन्त्येनेत्यप्रधानतृतीयानिर्देशात्' तस्य न संज्ञायामन्वयः। इदमेवास्याप्राधान्यम्।।

ननु 'पुत्रेण सहागतः पिते'त्यत्र पुत्रेणेत्यप्रधानतृतीयानिर्देशः आगमनक्रियान्वयित्वमस्त्येव पुत्रस्य इति कथमिव संज्ञानन्वयित्वमस्त्यस्येति चेन्मैवम् । अत्राप्युच्चारणक्रियान्वयित्व—मस्त्येवान्त्यस्य। यथा तत्र पितुरागमनम् एव सफलं तथा इहापि आद्युच्चारणमेव सफलम् । फलं चादेस्संज्ञात्वमिति स्फुटमेव सफलम्। तस्मादन्त्येनेता इति पदद्वयमवधिनिर्देशार्थमेवेति बोध्यम्। अवधेः प्रकृतानन्वयादिति भावः। ततश्च प्रत्याहारेष्वितां न ग्रहणमिति ध्वनितमिति भावः।

ननु प्रत्याहारेष्विद्ग्रहणेन, ककारादेरच्त्वेऽपि हल्त्वान्न यणादिकमिति कथमनुनासिक इति निर्देशः। प्रत्याहारेष्विदग्रहणं ज्ञापयतीति चेदुच्यते । अच्त्वहल्त्वयोरेकत्रावस्थानस्य विरुद्धत्वात्। ककारे अच्त्वं वा हल्त्वं वा इति विनिगमनाविरहात्। द्वयोरेकस्य धर्मस्य अवश्यनिषेद्धव्यत्वादनुनासिक इति निर्देशेन ककारे अच्त्वनिषेधनाद्यत्र अच्त्व हल्त्वधर्मद्वयं तत्र हल्त्वं बलीय इति सिद्धत्वात्। ककारादावच्त्वस्य प्रकल्प्य निवर्तनात्। अप्रकल्पनस्यैव "प्रक्षाळनाद्धि पङ्कस्य दूरादस्पर्शनं वर" मिति न्यायेन वरत्वात्, प्रत्याहारेष्वितां न ग्रहणमिति ज्ञापितमिति।

ननु अकारादिषु यथा अण्त्व, अश्त्व, अच्त्व, अट्त्व, अम्त्वादीनां अविरोधेन स्थितिः तथा ककारादौ अच्त्वहल्त्वयोः न कथमविरोधेन स्थितिरिति चेत्तत्प्रयुक्तकार्यविरोधादिति विद्धि। तथा हि। राम इना इति स्थले इकारस्य अच्त्वेन **आद्गुण** इति पूर्वपरयोरेको गुण आदेशः प्राप्तः, इकारस्याट्त्वेन अट्कुप्वाङिति नस्य णत्वं प्राप्तम्। एवञ्च इकारस्य अच्त्वेन अट्त्वेन प्रवृत्तयोः गुणणत्वयोः व्याश्रयत्वेनाविरोधाद्धर्मयोरपि तयोरविरोधः।

**१ हलन्त्यम्** ।१।३।३॥ उपदेशेऽन्त्यं हलित्स्यात् । उपदेश आद्योच्चारणम् ॥ ततोऽणजित्यादिसंज्ञासिद्धौ॥ **३उपदेशेऽजनुनासिक इत्** ।१।३।२॥ उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात् ॥ प्रतिज्ञानुनासिक्याः पाणिनीयाः॥ लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा। प्रत्याहारेष्वितां न ग्रहणम् । अनुनासिक इत्यादिनिर्देशात्। न ह्यत्र ककारे परेऽच्कार्यं दृश्यते । आदिरन्त्यनेत्येतत्सूत्रेण कृताः संज्ञाः प्रत्याहारशब्देन व्यवह्रियन्ते। **४ऊकालोऽज्झ्रस्वदीर्घप्लुतः** ।१।२।२७॥ उश्च ऊ2श्च ऊ३श्च वः । वां काल इव कालो यस्य सोऽच् क्रमात् ह्रस्वदीर्घप्लुतसंज्ञः स्यात् । स प्रत्येकमुदात्तादिभेदेन त्रिधा ॥ **५ उच्चैरुदात्तः** ।१।२।२९॥ ताल्वादिषु सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात् । **आ ये** ॥ **५नीचैरनुदात्तः** ।१।२।३० स्पष्टम् । **अर्वाङ्**। **७समाहारः स्वरितः** ।१.२।२९। उदात्तानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन्सोऽच् स्वरितसंज्ञः स्यात् ॥ **८तस्यादित उदात्तमर्धह्रस्वम्** । १।२।३२॥ ह्रस्वग्रहणमतन्त्रम्। स्वरितस्यादितोऽर्धमुदात्तं बोध्यम् । उत्तरार्धं तु परिशोषादनुदात्तम् । तस्य चोदात्तस्वरितपरत्वे श्रवणं स्पष्टम् । अन्यत्र तूदात्तश्रुतिः प्रातिशाख्ये प्रसिद्धा । क्क[1] वोश्वाः रथानां न ये२ राः । शतचक्रं यो३ ह्यः। इत्यादिष्वनुदात्तः । अग्निमीळे इत्यादावुदात्तश्रुतिः । स नवविधोऽपि प्रत्येकमनुनासिकाननुनासिकत्वाभ्यां द्विधा ॥ **९मुखनासिकावचनोऽनुनासिकः** ।१।१।८॥ मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् । तदित्थम् । अ इ उ ऋ एषं वर्णानां प्रत्येकमष्टादश भेदाः ॥ लृवर्णस्य द्वादश तस्य दीर्घाभावात् ॥ एचामपि द्वादश । तेषां ह्रस्वाभावात् ॥ **१०तुल्यास्यप्रयत्नं सवर्णम्** १।१।९॥ ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात्॥ अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषाणां मूर्धा । लृतुलसानां दन्ताः। उपूपध्मानीयानामोष्ठौ । ञमङणनानां नासिका च । एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूलीयस्य जिह्वामूलम् । नासिकानुस्वारस्य ॥ इति स्थानानि ॥ ॥ यत्नो द्विधा । आभ्यन्तरो बाह्यश्च । आद्यश्चतुर्धा । स्पृष्टेषत्स्पृष्टविवृतसंवृतभेदात् । तत्र स्पृष्टं प्रयत्नं स्पर्शानाम् । ईषत्स्पृष्टमन्तस्थानाम्। विवृतमूष्मणां स्वराणां च । ह्रस्वस्यावर्णस्य प्रयोगे संवृतम् । प्रक्रियादशायां तु विवृतमेव । एतच्च सूत्रकारेण ज्ञापितम् । तथा हि ॥

---

एवमेवेतरत्रापि बोध्यम्। ककारादावच्त्वहल्त्वे तु विरुद्धे एव। अच्त्वेन यणादिकार्यप्रसक्तिः। हल्त्वेन तन्निषेधश्चेति।

न चैवमिकारादेरच्त्वेऽपि अट्त्वेन गुणकार्याप्राप्तिः। तस्मादच्त्वहल्त्वयोर्विरुद्धधर्मत्वम्।

ननु हकारादिस्थितत्वादकारस्य कथं न हल्त्वम् ? त्वदुक्तरीत्या अकारे अच्त्वस्य सत्त्वेऽपि हल्त्वेन बाधितत्वादिति चेन्मैवम्। तत्राऽकारस्य उच्चारणार्थत्वात् । अन्यथा अकारस्य हल्त्वार्थमेकत्रैवोच्चारणं कर्तव्यम्, न तु हयादिषु सर्वेष्विति।

ननु हश्त्वयञ्त्व वल्त्वादि सिद्ध्यर्थमकारस्य हयवादिषूच्चारणमावश्यकमेवेति चेत्तथापि मगणादिषु निरर्थकमेव। ननु निरर्थकस्थले भवत्वकार उच्चारणार्थः, न त्वन्यत्रेति चेन्मैवम्। तत्साहचर्यात् स्वरूपमित्यादिनिर्देशाच्च नाकारस्य हल्त्वम्। अन्यथा संयोगाद्योस्सकारककारयोर्लोपस्स्यादिति वक्ष्यमाणेन स्वमित्यत्र अकारस्य हल्त्वेन सकारवकाराकारमकारात्मकनिरन्तरहल्संयोगादिभूतसकारस्य लोपः स्यादिति बोद्ध्यम्। "अच्कार्यमिति" अचि परे भवितव्यं यणादिरूपं कार्यमित्यर्थः। ननु "प्रत्याहारेष्वितां न ग्रहण" मित्युक्तं कः पुनः प्रत्याहारपदार्थः? अत आह "आदिरन्त्येनेति.......व्यवह्रियन्त"इति वृद्धव्यवहारसिद्धत्वान्न प्रत्याहारसंज्ञाविधायकं किञ्चित्सूत्रमस्तीति भावः। **"ऊकाल"** इति उ ऊ२ ऊ३ कालः, उकाल इवैकमात्राकालः, ऊकाल इव द्विमात्राकालः, ऊ३ काल इव त्रिमात्राकालश्चेत्यर्थः। यद्यपि स्पष्टप्रतिपत्त्यर्थ सवर्णदीर्घसन्धिमकृत्वा उ ऊ२ ऊ३ कालोऽजित्येव सूत्रयितव्यम्, तथापि लाघवार्थं "ऊकाल" इति सूत्रितम्। व्याख्यानतो विशेषप्रतिपत्तिसम्भवात्।

ननु अकारस्यैवादित्वादभ्यर्हिततत्वाच्च, आकालोऽजित्येव सूत्रयितव्ये कुत ऊकाल इति सूत्रितमिति चेदत्राहुर्वृद्धाः। एतत्सूत्रकरणसमये पाणिनिना कुक्कुटध्वनिः कु कू२ कू३ इति समाकर्णितः। तदनुरोधेनैवं कृतं सूत्रमिति। पाणिनेः महेश्वरभक्तत्वादुवर्णस्य च महेश्वरपरत्वादूकाल इति सूत्रितमिति मम मतम्। न चैवम् 'अ इ उ ण्'िति कथमकार आदावुक्त इति वाच्यम्। तत्सूत्रस्य शिवसूत्रत्वेन, पाणिनिसूत्रत्वाभावाच्छिवस्य च विष्णुभक्तत्वादिति।।

*अर्धह्रस्वमिति अर्धभाग इत्यर्थः। ननु अर्धपदेनैव अर्धभागार्थसिद्धौ किमर्थं ह्रस्वग्रहणमित्यत आह। अतन्त्रमिति। कस्य चनार्थस्य विवक्षया नेदम्प्रयुक्तमित्यर्थः ।

न चैवं ह्रस्वपदस्य वैयर्थ्यमेवापतितमिति वाच्यम्। वर्णेनाप्यनर्थकेन न भवितव्यम्। किम्पुनर्महता सूत्रेणेति भाष्यादामुष्मिकमस्ति पठनफलमिति। अत्र "ह्रस्वग्रहणमतन्त्र" मिति कौमुद्या आशयं केचिदन्यथा वर्णयन्ति। तथा हि। ननु ह्रस्वपदस्य ह्रस्वसंज्ञाया भागस्य चाभिधायकत्वेन "कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्यय" इति परिभाषया एतच्छास्त्रसङ्केतितासङ्केतितयोस्सङ्केतितस्यैव बलीयस्त्वेन, अन्यथा कानाम्रेडित इत्यत्र

**११ अ अ** । ।८।४।६८। विवृतमनूद्य संवृतोऽनेन विधीयते । अस्य चाष्टाध्यायीं सम्पूर्णां प्रत्यसिद्धत्वाच्छास्त्रदृष्टचा विवृतत्वमस्त्येव । तथा च सूत्रम्-१२ **पूर्वत्रासिद्धम्** । ।८।२।१। अधिकारोऽयम् । तेन सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा । त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धं स्यात् । बाह्यप्रयन्तस्त्वेकादशधा । विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति।

खयां यमाः ख्यः ᳵक ᳵपौ विसर्गः शर एव च ।
एते श्वासानुप्रदाना अघोषाश्च विवृण्वते।।
कण्ठमन्ये तु घोषाः स्युः संवृता नादभागिनः ।
अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः।।

वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे मध्ये यमो नाम पूर्वसदृशो वर्णः प्रातिशाख्ये प्रसिद्धः । पलिक्क्नी, चख्ख्नतुः, अग्ग्निः, घ्घ्नन्तीत्यत्र क्रमेण कखगघेभ्यः परे तत्सदृशा एव यमाः । तत्र वर्गाणां प्रथमद्वितीयाः खयः, तथा तेषामेव यमाः, जिह्वामूलीयोपध्मानीयौ, विसर्गः, शषसाश्चेत्येतेषां विवारः श्वासोऽघोषश्च । अन्येषां तु संवारो नादो घोषश्च । वर्गाणां प्रथमतृतीयपञ्चमाः प्रथमतृतीययमौ यरलवाश्चाल्पप्राणाः । अन्ये महाप्राणा इत्यर्थः । बाह्यप्रयत्नाश्च यद्यपि सवर्णसंज्ञायामनुपयुक्ताः, तथाप्यान्तरतम्यपरीक्षयामुपयोक्ष्यन्त इति बोध्यम् । कादयो मावसानाः स्पर्शाः । यरलवा अन्तःस्थाः । शषसहा ऊष्माणः । अचः स्वराः । ᳵ क ᳵ प इति कपाभ्यां प्रागर्धविसर्गसदृशौ जिह्वामूलीयोपध्मानीयौ । अं अः इत्यचः परावनुस्वारविसर्गौ । इति स्थानप्रयत्नविवेकः । **'ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्'*** (वा १५०) । अकारहकारयोरिकारशकारयोर्ऋकारषकारयोर्लृकारसकारयोश्च मिथः सावर्ण्ये प्राप्ते-१३ **नाऽऽज्झलौ** । ।१।१।१०। आकारसहितोऽच् आच्, स च हल् चेत्येतौ मिथः सवर्णौ न स्तः । तेन दधीत्यस्य हरति शीतलं षष्ठं सान्द्रमित्येतेषु परेषु यणदिकं न । अन्यथा दीर्घादीनामिव हकारदीनामपि ग्रहणकशास्त्रबलादच्त्वं स्यात् । तथा हि-१४ **अणुदित्सवर्णस्य चाप्रत्ययः** । ।१।१।६९। प्रतीयते विधीयत इति प्रत्ययः, अविधीयमानोऽणुदिच्च सवर्णस्य संज्ञा स्यात् । अत्राण् परेण णकारेण । कु चु टु तु पु एते उदितः । तदेवम्। अ इत्यष्टादशानां संज्ञा। तथेकारोकारौ। ऋकारस्त्रिंशतः। एवम् लृकारोऽपि। एचो द्वादशानाम्। एदैतोरोदौतोश्च न मिथः सावर्ण्यम्।ऐऔच् '

इति सूत्रारम्भसामर्थ्यात् । तेनैश्चतुर्विंशतेः संज्ञाः स्युरिति नापादनीयम् । **'नाऽऽज्झलौ '** (सू १३) इति सावर्ण्यनिषेधो यद्यप्याक्षरसमाम्नायिकानामेव, तथापि हकारस्याऽऽकारो न सवर्णः। तत्राऽऽकारस्यापि प्रश्लिष्टत्वात् । तेन 'विश्वपाभिः ' इत्यत्र **'हो ढः'** (सू ३२४) इति ढत्वं न भवति । अनुनासिकभेदेन यवला द्विधा । तेनाननुासिकास्ते द्वयोर्द्वयोः संज्ञाः । १५ **तपरस्तत्कालस्य** । ।१।१।७०। तः परो यस्मात्स च तात्परश्चोच्चार्यमाणसमकालस्यैव संज्ञा स्यात् । तेन 'अत्' 'इत्' 'उत्' इत्यादयः षण्णां षण्णां संज्ञाः । 'ऋत्' इति द्वादशानाम् । १६ **वृद्धिरादैच्** । ।१।१।१। आदैच्च वृद्धिसंज्ञा स्यात् । १७ **अदेङ्गुणः** ।१।१।२। अदेङ् च गुणसंज्ञाः स्यात् । १८ **भूवादयो धातवः** । ।१।३।१। क्रियावाचिनो भ्वादयो **गुणसंज्ञाः** स्युः । १९ **प्राग्रीश्वरान्निपाताः** ।१।४।५६। इत्यधिकृत्य । २० **चादयोऽसत्त्वे** । ।१।४।५७। अद्रव्यार्थाश्चादयो निपातसंज्ञाः स्युः । २१ **प्रादयः** । ।१।४।५८। अद्रव्यार्था प्रादयस्तथा । २२ **उपसर्गाः क्रियायोगे** । ।१।४।५९। २३ **गतिश्च** । ।१।४।६०। प्रादयः क्रियायोगे उपसर्गसंज्ञा गतिसंज्ञाश्च स्युः । प्र परा अप सम् अनु अव निस् निर् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप एते प्रादयः । २४ **न वेति विभाषा** । ।१।१।४४। निषेधविकल्पयोर्विभाषा संज्ञा स्यात् । २५ **स्वं रूपं शब्दस्याशब्दसंज्ञा** । ।१।१।६८। शब्दस्य स्वं रूपं संज्ञि, शब्दशास्त्रे या संज्ञा तां विना । २६ **येन विधिस्तदन्तस्य** । ।१।१।७२। विशेषणं तदन्तस्य संज्ञा स्यात् स्वस्य च रूपस्य । समासप्रत्ययविधौ प्रतिषेधः । उगिद्वर्णग्रहणवर्जम् । २७ **विरामोऽवसानम्** । ।१।४।११०। वर्णानामभावोऽसानसंज्ञः स्यात् । २८ **परः सन्निकर्षः संहिता** । ।१।४।१०९। वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात् । २९ **सुप्तिङन्तं पदम्** । ।१।४।१४। सुबन्तं तिङन्तं च पदसंज्ञं स्यात् । ३० **हलोऽनन्तराःसंयोगः** । ।१।१।७। अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः । ३१ **ह्रस्वं लघु** । ।१।४।१०। ३२ **संयोगे गुरु** । ।१।४।११। संयोगे परे ह्रस्वं गुरुसंज्ञं स्यात् । ३३ **दीर्घं च** । १।४।१२। दीर्घं च गुरुसंज्ञं स्यात् ।।

।। इति संज्ञाप्रकरणम् ।।

---

'आम्रेडितं द्विस्त्रिरुक्त'मित्यर्थस्यैव लाभप्रसङ्गेन ह्रस्वपदेनात्र ऊकालोऽजिति ह्रस्वसंज्ञैवाभिधीयते,

## अथ परिभाषाप्रकरणम् ।२।

३४ **इको गुणवृद्धी** । १।१।३। गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते तत्र 'इकः' षष्ठ्यन्तं पदमुपतिष्ठते । ३५ **अचश्च** । ।१।२।२८। ह्रस्वदीर्घप्लुतशब्दैर्यत्राज्विधीयते तत्र 'अचः' इति षष्ठ्यन्तं पदमुपतिष्ठते । ३६ **आद्यन्तौ टकितौ** । ।१।१।४६। टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः । ३७ **मिदचोऽन्त्यात्परः** । ।१।१।४७। 'अचः' इति निर्धारणे षष्ठी । अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात् । ३८ **षष्ठी स्थानेयोगा** । ।१।१।४९। अनिर्धारितसम्बन्धविशेषा षष्ठी स्थानेयोगा बोध्या । स्थानं च प्रसङ्गः । ३९ **स्थानेऽन्तरतमः** । ।१।१।५०। प्रसङ्गे सति सदृशतम आदेशः स्यात् । 'यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः' (प १४)। ४० **तस्मिन्निति निर्दिष्टे पूर्वस्य** । ।१।१।६६। सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य बोध्यम् । ४१ **तस्मादित्युत्तरस्य** । ।१।१।६७। पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयम् । ४२ **अलोऽन्त्यस्य** । ।१।१।५२। षष्ठीनिर्दिष्टस्यान्त्यस्याल आदेशः स्यात् । ४३ **ङिच्च** । ।१.१।५३। अयमप्यन्त्यस्यैव स्यात् । '–सर्वस्य' (सू ४५) इत्यस्यापवादः । ४४ **आदेः परस्य** । ।१।१।५४। परस्य यद्विहितं तत्तस्यादेर्बोध्यम् । 'अलोऽन्त्यस्य' (सू ४२) इत्यस्यापवादः । ४५ **अनेकाल्शित्सर्वस्य** । ।१।१।५५। स्पष्टम् । 'अलोन्त्य' ४२ सूत्रापवादः । 'अष्टाभ्य औश्' (सू ३७२) इत्यादौ 'आदेः परस्य' (सू ४४) इत्येतदपि परत्वादनेन बाध्यते । ४६ **स्वरितेनाधिकारः** । ।१।३।११। स्वरितत्वयुक्तं शब्दस्वरूपमधिकृतं बोध्यम् । 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' (प ३९) 'असिद्धं बहिरङ्गमन्तरङ्गे' (प ५१) 'अकृतव्यूहाः पाणिनीयाः' (प ५७) । निमित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्यं न कुर्वन्तीत्यर्थः ।।

**इति परिभाषाप्रकरणम् ।।**

---

न तु भाग इत्याशङ्क्य ह्रस्वग्रहणमतत्रमित्युक्तमतन्त्रं नैतच्छास्त्रसङ्केतितमित्यर्थ इति।

**'अ अ'** इति पदद्वयमिदम्। प्रथमे षष्ठ्याः, द्वितीये प्रथमायाश्च विभक्तेः। **"सुपा"** मिति लुक्। तथा च **'षष्ठी स्थानेयोगेति** परिभाषया स्थाने पदोपस्थितौ अस्य स्थाने अस्यादित्यर्थसिद्धिः। नन्विदमकारस्थानेऽकारविधानं व्यर्थमित्याशङ्क्य "विवृतमनूद्य संवृतोऽनेन विधीयत" इत्युक्तम्। स्वराणां विवृतप्रयत्नवत्त्वादकारस्य च स्वरत्वेन विवृतत्वा—

## अथाच्सन्धिप्रकरणम् ।३।

४७ **इको यणचि** । ।६।१।७७। इकः स्थाने यण् स्यादचि संहितायां विषये । 'सुधी उपास्यः' इति स्थिते । स्थानत आन्तर्यादीकारस्य यकारः । 'सुध्य् उपास्यः' इति जाते ।

---

द्विवृतस्याकारस्य स्थाने अकारो भवति। वैलक्षण्यात्स च संवृत इति भावः। विवृताकारस्थाने संवृताकार आदेशस्स्यादिति सूत्रस्य परमार्थः। एतेन सर्वत्राप्यवर्णस्य संवृतत्वं प्राप्तम्। तेन दण्ड आनयनमिति स्थले अकारस्य संवृतत्वेन आकारस्य विवृतत्वेन च प्रयत्नभेदेन सावर्ण्याभावान्न सवर्णदीर्घः। अत आह-"अस्य चेति" सूत्रस्येत्यर्थः। एतेन **'अ अ'** इत्यस्यासिद्धत्वेन दण्ड आनयनमित्यत्र अकारस्य विवृतत्वमेव। न त्वेतत्सूत्रात्संवृतत्वमिति सवर्णदीर्घो लभ्यत एवेति भावः ।

नन्वेतत्सूत्रं मास्तु, प्रयोजनाभावादत आह। ह्रस्वस्येति। प्रयोगदशायामवर्णो ह्रस्वस्संवृतः। प्रक्रियादशायान्तु विवृतः परिनिष्ठितशब्दोच्चारणम् प्रयोगदशा। यथा-राम, हरे, कृष्णेत्यादिः । सवर्णदीर्घादिसन्धिग्रहणं प्रक्रियादशेति विवेकः। तथा च- श्रीराम राम रामेति रमे रामे मनोरमे। इत्यादिषु श्रूयमाणो ह्रस्वाकारो विवृत इति सिद्धम्। **अ अ** इति सूत्रे ह्रस्वाकारयोरेव निर्देशाद्ध्रस्वस्य विवृतस्य वर्णस्य स्थाने ह्रस्वस्संवृतोऽकारस्स्यादित्येवार्थः। ननु **अ अ** इत्यस्य संवृताकारस्य स्थाने विवृताकारो भवतीत्यर्थः कुतो न वाच्य इति चेदुच्यते। **"अकारस्य विवृतोपदेश आकारग्रहणार्थः"** इति वार्तिकात्।"यदयं **अ अ** इति अकारस्य विवृतस्य संवृतता प्रत्यापत्तिं शास्ती"ति भाष्याच्च विवृतस्यैवोपदिष्टस्य अकारस्य संवृतोऽनेन विधीयते। न च अ इ उ ण्सूत्रगतः विवृतोऽकार इति वाच्यम्। "तस्य विवृतोपदेशादन्यत्रापि विवृतोपदेशः सवर्णग्रहणार्थः" इति वार्तिकात्। न च संवृतोऽप्यकारस्सवर्णान् गृह्णीयादेवेति वाच्यम्। नैव गृह्णीयाद्विवारभेदादिति।

ननु **अ अ** इति सूत्रवशात्सर्वोऽप्यकारस्संवृत एव भवेत्त्राह। "अस्य चेति"अ अ इति सूत्रस्येत्यर्थः। शास्त्रदृष्टचेति । शास्त्रपर्यालोचनया "अकस्सवर्णे दीर्घ" इत्यादि शास्त्रदृष्टचा वा तादृशशास्त्रप्रयुक्तकार्यकरणासमय इति भावः। कथं पुनरस्यासिद्धत्वमष्टाध्यायीम्प्रति? तत्राह। तथा चेति । पूर्वत्रासिद्धम्। पूर्वत्रेति सप्तम्यास्त्रल्। पूर्वस्मिन्नित्यर्थः। अनेन च परस्याक्षेपः। पूर्वपरयोरन्योन्यप्रतियोगित्वात्। तदेवम्।

### *अथ स्वरसन्धिः*

**"इको यणचि"** नन्वत्र "ङमो ह्रस्वादचि ङमुण्णित्यम्" इति ङमुडागमेन इको यण्णचीति भाव्यमिति चेत् संहिताया अविवक्षणादिति विद्धि। तदुक्तं "संहितैकपदे नित्या नित्या धातूपसर्गयोः। नित्या समासे वाक्ये तु सा विवक्षामपेक्षत" इति। अत्र इक इति षष्ठ्या अनिर्धारितसंबन्धविशेषत्वात् "षष्ठी स्थानेयोगा" इति परिभाषोपस्थितिः।

४८ **अनचि च** । ।८।४।४७। अचः परस्य यरो द्वे वा स्तो न त्वचि । इति धकारस्य द्वित्वम् । ४९ **स्थानिवदादेशोऽनल्विधौ** । ।१।१।५६। आदेशः स्थानिवत् स्यान्न तु स्थान्यलाश्रयविधौ । अनेनेह यकारस्य स्थानिवद्भावेनाच्त्वमाश्रित्य 'अनचि च ' (सू ४८) इति द्वित्वनिषेधो न शङ्क्यः, 'अनल्विधा' वेति तन्निषेधात् ।५० **अचः परस्मिन्पूर्वविधौ** । ।१।१।५७।

---

संहिताधिकारीयत्वात्संहितायामिति। सा च विषयसप्तमी। तथा च इकः स्थाने यण् स्यादचि परे संहितायां विषय इत्यर्थ उपपन्नः। "प्रत्याहारग्रहणे तु तद्वाच्यवाच्ये निरूढा लक्षणा" इत्यस्यायमर्थः। प्रत्याहारोऽत्र इक् तद्वाच्यः इ उ ऋ ऌ। तद्वाच्यः तत्सवर्णाः "अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः। ऌ वर्णस्य द्वादश, तस्य दीर्घाभावात्" इत्युक्तरीत्या षडधिकषष्टिः। तत्र निरूढलक्षणा। लक्षणयाऽयमर्थो न त्वभिधयेति भावः। "अणुदित्सवर्णस्य चाप्रत्यय" इत्यविधीयमानस्याण एव सवर्णग्राहकत्वोक्त्या रप्रत्याहारस्य असवर्ण इति चर्त्वस्याभिधायकत्वमेव। अतः समसंख्याभावात् "यथा सङ्ख्यमनुदेशस्समानाम्" इति यथासङ्ख्यं न। अत एवाह–स्थानत आन्तर्यादीकारस्य यकार इति।(अन्यथा यथासङ्ख्येन ईकारस्य यकार इत्येव ब्रूयात्)। ननु शब्दानां नित्यत्वात् इकः स्थाने यणादेशस्स्यादित्यनेन इको नाशस्य श्रवणात्कथं तदुपपत्तिरिति चेत्, अत एव **'स्थानेऽन्तरतम'** इत्यत्र स्थान इत्यस्य प्रसङ्गे सतीत्यर्थोऽभाणि। तथा च इगुच्चारणप्रसक्तौ यणुच्चार्यत इति भावः। इग्बुद्धिनाशेन यण्बुद्धिर्जातेति बुद्धिगतमेव नाशादिकं केचिद्वर्णयन्ति ।

2. सू. **"अनचि च"।** न अच् अनच् । तस्मिन्ननचि। नञः प्रतिषेधोऽर्थः। स च द्विविधः, प्रसज्यप्रतिषेधः पर्युदासप्रतिषेध इति । तदेतद्विशदीकृतमत्रैव तत्त्वबोधिन्याम् ।

3. अनल्विधौ, नञोऽत्र प्रसज्यप्रतिषेधोऽर्थः। ननु शास्त्रस्य वर्णात्मकत्वाद्वर्णा–नामल्त्वादलाश्रयविधौ आदेशस्य स्थानिवत्त्वाभावे पुनः कस्मिन् भवतीत्याशंकामन्तरुद्भाव्य "अनल्विधाविति किमिति" तत्त्वबोधिनी।स्थान्यलाश्रयविधौ स्थान्यवयवाल्मात्रवृत्तिधर्मपुरस्कारके लोपात्मके विध्यात्मके च विधौ कार्ये। अल्मात्रवृत्तिधर्मपुरस्कारकत्वञ्च विधेः करणत्वादिना। एवञ्च अल्मात्रवृत्तिधर्मकरणकविधौ अल्मात्रवृत्तिधर्मपरकविधौ अल्मात्रवृत्तिधर्मस्थानकविधौ अल्मात्रवृत्तिधर्मनिमित्तकविधौ च न स्थानिवदिति लब्धम्। तदेतदाह तत्त्वबोधिन्याम् 'यश्चाला विधि' रित्यादिना। सुध् य् उपास्य इति प्रकृतस्थले आदेशो यः स्थानी ईः तद्वत्स्यात् इति स्थानिवद्भावे प्राप्ते "अनल्विधावि"ति निषेधः। अयं विधिर्द्वित्वनिषेधरूपः । अल्मात्रवृत्तिधर्मनिमित्तकः अलेव अल्मात्रम्। एकालिति यावत्। स चात्र ईकारः। तद्वृत्तिर्यो धर्मः अच्त्वरूपः। तन्निमित्तकः अनचि चेति, अच्त्वं हि निमित्तीकृत्य अचः परस्य यरो द्वित्वं निषिध्यतेएवमल्विधौ स्थानिवद्भावस्याप्राप्तौ तत्प्राप्त्यर्थं सूत्रम्।

अल्विध्यर्थमिदम् । परनिमित्तोऽजादेशः स्थानिवत्स्यात् स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये । इति यणः स्थानिवद्भावे प्राप्ते । ५१ **न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु** । ।१।१।५८ पदस्य चरमावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्तोऽजादेशो न स्थानिवत् । इति स्थानिवद्भावनिषेधः । ५२ **झलां जश् झशि** । ।८।४।५३। स्पष्टम् । इति धकारस्य दकारः । ५३ **अदर्शनं लोपः** । ।१।१।६०। प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात् । ५४ **संयोगान्तस्य लोपः** । ।८।२।२३। संयोगान्तं यत्पदं तदन्तस्य लोपः स्यात् । इति यलोपे प्राप्ते ।

---

4. **"अचः परस्मिन् पूर्वविधौ",** अत्र स्थानिवदिति आदेश इति च पूर्वसूत्रादनुवर्त्येते। अत्र शास्त्रे अनुवृत्त्या पूर्वसूत्रात् अपकर्षेण पश्चिमसूत्रात् मण्डूकप्लुत्या व्यवहितात्पुर्वस्माद्वा पश्चिमाद्वा सूत्रात्स्वरितं पदं सूत्रेऽन्वेति। अच इति षष्ठी स्थानेयोगा, परस्मिन्निति निमित्त सप्तमी-ग्र-ह परनिमित्तोऽजादेशः स्थानिवत्स्यादिति। अजादेशः अच्स्थानिकादेशः कदा पूर्वस्य विधौ। पूर्वत्वञ्च स्थानिभूताजपेक्षयेत्याह-स्थानिभूतादच" इति पूर्वस्येत्युक्तौ व्यवहितस्यैव भवति नाव्यवहितस्येति पूर्वत्वेन दृष्टस्येत्युक्तम्। फलन्तु अचीकमतेत्यादौ णेः स्थानिवद्भावेन सन्वद्भावः। प्रकृते परनिमित्तोऽजादेशः अज्निमित्तः अच्स्थानिकः यणादेशः स्थानिवत्स्यात्-अज्वत्स्यात्। स्थानिभूतादचः पूर्वत्वेन दृष्टस्य धकारस्य विधौ द्वित्वनिषेधरूपे कार्ये कर्तव्ये इति स्थानिवद्भावप्राप्तिः। व्यूढोरस्केनेत्यादौ पुर्वविध्यभावान्नेति बोध्यम्।।

5. **"अदर्शनं लोपः"** प्रसक्तस्येति किम् ? दधि। **"भाषायां धाञ् कृ सृ गमि जनि नमिभ्य"** इति वार्तिकात् धाधातोः क्विप्प्रत्ययः। स च लिड्वत्स्यात्।। तेन **"लिटि धातोरनभ्यासस्य" "एकाचो द्वे प्रथमस्य** इति द्वित्वम्। अभ्यासस्य ह्रस्वः, "अभ्यासाच्चेति झशां जशः। अतो लोपः । दधि । अत्र अदर्शनं लोपसंज्ञं स्यादित्येतावत एवोक्तौ अविहितस्य क्विपोऽत्र अदर्शनेन क्विब्लोपात् प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रात् **"ह्रस्वस्य पिति कृति तुक्"** इति तुगागमस्यात् । प्रसक्तस्येत्युक्तौ क्विपः प्रसङ्ग एवात्र नास्तीति न तद्दोष इति वेद्यम् ।

6. सू. **"संयोगान्तस्य लोपः"**। अत्र पदस्येत्यधिकारः संयोगान्तस्य पदस्य लोपः स्यात्। अलोन्त्यस्येति पदस्य लोपो नाम पदान्त्यस्य लोपः। तदेतदाह - "संयोगान्तं यत्पदं तदन्तस्य लोपस्स्यात्" इति । ननु "येन विधिस्तदन्तस्य" इति पदविशेषणं संयोगपदं तदन्तस्य संज्ञा स्यादेवेति अन्तस्येतीह व्यर्थमित्याशङ्क्य, "यद्यपी"त्यादि तत्त्वबोधिनी। अयम्भावः। "हलोऽनन्तरास्संयोग" इत्यस्य निरन्तरहल्समुदायस्य संयोगसंज्ञेति तादृशसमुदायघटकीभूतानां हलां प्रत्येकं संयोगसंज्ञेति च द्वेधा व्याख्यानम्। आद्यपक्षे

**'यणः प्रतिषेधो वाच्यः'** (वा ४८०६) । **'यणो मयो द्वे वाच्ये'** (वा ५०१८) । 'मय इति पञ्चमी यण इति षष्ठी' इति पक्षे यकारस्यापि द्वित्वम् । तदिह धकारयकारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि । एकधमेकयम् । द्विधं द्वियम् । द्विधमेकयम् । एकधं द्वियम् । सुद्ध्युपास्यः । मद्ध्वरिः । धात्त्रंशः । लाकृतिः ।

---

नास्योपयोगोन्तपदस्य द्वितीये तु दृषत्करोतीत्यत्र तकार ककार संयोगे संयोगसंज्ञस्तकारः सः अन्ते यस्य तत्पदं दृषत् तदन्तस्य तकारस्य लोपस्स्यात्। ननु कृतेनाप्यन्त्यपदेन कथमयं दोषो वार्यते? अत आह । संयोगावन्ते यस्येति प्रकृते एकस्यैव तकारस्य अन्ते सत्वेन संयोगद्वयस्याभावान्नोक्तदोष इति भावः ।

7. **सुध्युपास्य इति।** "यणेव दुर्लभ" इति तत्त्वबोधिनी। सुधीपदान्तश्रूयमाणेकारस्य ध्यायत्यवयवयण्स्थाने जातत्वेन इग्यणसम्प्रसारणसंज्ञा। ततः 'सम्प्रसारणाच्च' इति पूर्वरूपमेव स्यात् न तु यणिति चेन्न। सम्प्रसारणपूर्वत्वे समानाङ्गग्रहणमिति वार्तिकम्। सम्प्रसारणाच्चेति पूर्वरूपे कर्तव्ये एकस्मिन्नेवाङ्गे कर्तव्यमिति भावः । अर्थस्तु सम्प्रसारणाच्चेति सूत्रे समानाङ्गपदग्रहणं कर्तव्यमिति। तथा च समानाङ्गे सम्प्रसारणाच्चेति सूत्रे समानाङ्गपदग्रहणं कर्तव्यमिति। तथा च समानाङ्गे सम्प्रसारणाच्चेति सूत्रितं भवति। समानाङ्गं एकाङ्गम् । प्रकृते तु ईकारोकारयोः भिन्नाङ्गावयवत्वेन न पूर्वरूपमिति ज्ञेयम् ।

8. "धात्रंशः"। 'रेफस्य दित्वं नेति तत्त्वबोधिनी । यणो मयो द्वे वाच्ये-यणः परस्य मय इति, मयः परस्य यण इति च द्वेधा व्याख्यानम् । मयः परस्य यण इति मते अत्र तकारात्परस्य रेफस्य द्वित्वं प्राप्तं न भवति। कुतः? साक्षाच्छ्रुतेन निमित्तभावेन कार्यित्वस्य बाधनात्। कार्यमनुभवन् हि कार्यं निमित्ततया नाश्रियते। न त्वननुभवन्नपीति परिभाषायाः रेफरूपः कार्यी द्वित्वरूपं कार्यमनुभवन्नपि अननुभवन्नपि "अचो रहाभ्याम् इति यरो द्वित्वरूपं कार्यं प्रति न निमित्तत्वं भवेत्। तेन सूत्रवैयर्थ्यं प्रसज्येत। अतः रेफस्य निमित्तत्वमेव कार्यित्वं बाधत इति भावः ।

स्वप्रथमप्राप्तोपदेश्यत्वेन गृहीतसमुदायघटकविधीयमानातिरिक्तस्वप्रथमप्राप्तिकालिक प्राप्तियोग्यलक्ष्यशून्यत्वं तल्लक्ष्यत्वम्। संप्रसारण संज्ञाप्रयोजकप्रत्ययनिरूपित-अङ्गत्वानवरुद्धसमुदाय-घटकवर्णावृत्तित्वं संप्रसारणसंज्ञाप्रयोजकीभूतो यः प्रत्ययः तन्निरूपितं यदङ्गं तत्त्वानवरुद्धो यस्समुदायः तद्घटकीभूतानां वर्णानां वृत्त्यभावः। स्वप्रथमप्राप्तावुद्देश्यत्वेन गृहीतो यस्समुदायः तद्घटकीभूतात् विधीयमानात् अतिरिक्तं यत् स्वप्रथमप्राप्तिकालिकप्राप्तियोग्यं लक्ष्यं तच्छून्यत्वम् ।

संज्ञाप्रकरणे "ह्रस्वग्रहणमतन्त्रम्" अस्यायमर्थः। श्रीहरिशास्त्रिभिरभिहितः। तथा हि - ह्रस्वपदस्य लोके एकमात्राकालोऽर्थः। अस्मिन् शास्त्रे तु एकमात्राकालिकोऽच् ह्रस्वस्यार्थः अर्धह्रस्वमिति अर्धश्चासौ ह्रस्वश्च अर्धह्रस्वमिति च समासद्वयम्।

५५ **नादिन्यक्रोशे पुत्रस्य** । ।८।४।४८। पुत्रशब्दस्य न द्वे स्त आदिनीशब्दे परे आक्रोशे गम्यमाने । पुत्रादिनी त्वमसि पापे । 'आक्रोशे' किम् । तत्त्वकथने द्विर्वचनं भवत्येव । पुत्त्रादिनी सर्पिणी । 'तत्परे च' (वा ५०२१) । पुत्रपुत्रादिनी त्वमसि पापे । **'वा हतजग्धयोः'** (वा ५०२२) । पुत्रहती–पुत्त्रहती । पुत्रजग्धी–पत्त्रजग्धी । ५६ **त्रिप्रभृतिषु शाकटायनस्य** । ।८।४।५०। त्र्यादिषु वर्णेषु संयुक्तेषु वा द्वित्वम् । इन्न्द्र–इन्द्रः । राष्ट्ट्रम् राष्ट्रम् । ५७ **सर्वत्र शाकल्यस्य** । ।८।४।५१। द्वित्वं न । अर्कः । ब्रह्मा । ५८ **दीर्घादाचार्याणाम्** । ।८।४।५२। दित्वं न। दात्रम् । पात्रम् । ५९ **अचो रहाभ्यां द्वे** । (७–४–४६) अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । हर्य्यनुभवः । नह्य्यस्ति । ६० **हलो यमां यमि लोपः** । ।८।४।६४। हलः परस्य यमो लोपः स्याद्वा यमि । इति लोपपक्षे द्वित्वाभावपक्षे चैकयं रूपं तुल्यम् । लोपारम्भफलं तु ' आदित्यो देवता अस्येत्यादित्यं हविः ' इत्यादौ । ' यमां यमि ' इति यथासंख्यविज्ञानान्नेह । माहात्म्यम् । तादात्म्यम् । ६१ **एचोऽयवायावः** । ।६।१।७८। एचः क्रमादय् अव् आय् आव् एते स्युरचि । ६२ **तस्य लोपः** । ।१।३।९। तस्येतो लोपः स्यात् । इति यवयोर्लोपो न । उच्चारणसामर्थ्यात् । एवं चेत्संज्ञापीह न भवति । हरये । विष्णवे । नायकः । पावकः । ६३ **वान्तो यि प्रत्यये** । ।६।१।७९। यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्तः । गोर्विकारो गव्यम्। 'गोपयसोर्यदिति यत्' (सू १५३८) नावा तार्य नाव्यम् । 'नौवयोधर्म ' (सू १६४३) इत्यादिना यत् । **'गोर्यूतौ छन्दस्युपसंख्यानम्'** (वा ३५४३) अध्वपरिमाणे च ' (वा ३५४४) गव्यूतिः । ऊतियूति–' (सू ३२७४) इत्यादिना यूतिशब्दो निपातितः । 'वान्तः ' इत्यत्र वकारात् गोर्यूता 'वित्यत्र छकाराद्वा पूर्वभागे 'लोपो व्योर्विलीति ' (सू० ८७३) इति लोपेन वकारः प्रश्लिष्यते । तेन श्रूयमाणवकारान्त आदेशः स्यात् । वकारो न लुप्यत इति यावत् । ६४ **धातोस्तन्निमित्तस्यैव** । ।६।१।८०। यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेशस्तर्हि तन्निमित्तस्यैव नान्यस्य । लव्यम् । अवश्यलाव्यम् ।

---

कर्मधारयसमासे ह्रस्वपदस्य नपुंसकत्वं सौत्रम्। अत्र विचार्यते। एकमात्राकालिकस्य अचो ह्रस्वपदाभिधेयस्य अर्थः अर्धभागः न संभवति। षष्ठीसमासो नात्रोपयुज्यते, अ इत्यक्षरस्य द्वैधीकरणानुपपत्तेः। कर्मधारयाश्रयणे तु अ इति दीर्घस्वरिते (दीर्घाक्षरे)

'तन्निमित्तस्यैव ' इति किम् । ओयते । औयत । ६५ **क्षय्यजय्यौ शक्यार्थे** । ६।१।८१। यान्तादेशनिपातनार्थमिदम् ।क्षेतुं शक्यं क्षय्यम् । जेतुं शक्यं जय्यम् । 'शक्यार्थे' किम् । क्षेतुं जेतुं योग्यं क्षेयं पापं जेयं मनः । ६६ **क्रय्यस्तदर्थे** । ६।१।८२। तस्मै प्रकृत्यर्थायेदं तदर्थम् । क्रेतारः क्रीणीयुरिति बुद्ध्या आपणे प्रसारितं क्रय्यम् । क्रेयमन्यत् । क्रयणार्हमित्यर्थः । ६७ **लोपः शाकल्यस्य** । ।८।३।१९। अवर्णपूर्वयोः पदान्तयोर्यवयोर्वा लोपोऽशि परे । 'पूर्वत्रासिद्धम् ' (सू १२) इति लोपशास्त्रस्यासिद्धत्वान्न स्वरसन्धिः । हर एहि-हरयेहि । विष्ण इह विष्णविह । श्रिया उद्यतः- श्रियायुद्यतः । गुरा उत्कः-गुरावुत्कः । 'कानि सन्ति' 'कौ स्तः' इत्यत्रास्तेरल्लोपस्य स्थानिवद्भावेन यणावादेशौ प्राप्तौ 'न पदान्त' (सू ५१) इति सूत्रेण पदान्तविधौ तन्निषेधान्न स्तः । ६८ **एकः पूर्वपरयोः**। ।६।१।८४। इत्यधिकृत्य । ६९ **आद् गुणः** । ।६।१।८७। अवर्णदचि परे पूर्वपरयोरेको गुण आदेशः स्यात्संहितायाम् । उपेन्द्रः । रमेशः । गङ्गोदकम् । ७० **उरण्रपरः** । ।१।१।५१। 'ऋ इति त्रिंशत संज्ञा' इत्युक्तम्, तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते । तत्रान्तरतम्यात् 'कृष्णर्द्धिः' इत्यत्र अर् । 'तवल्कार' इत्यत्र अल् । अचो रहाभ्याम् -(सू ५९) इति पक्षे द्वित्वम् । ७१ **झरो झरि सवर्णे** । ८।४।६५। हलः परस्य झरो लोपो वा स्यात्सवर्णे झरि । द्वित्वाभावे लोपे सत्येकधम् । असति लोपे, द्वित्वलोपयोर्वा द्विधम् । सति द्वित्वे लोपे चासति त्रिधम् । कृष्णर्धिः-कृष्णर्द्धिः-कृष्णर्द्द्धिः । 'यण इति पञ्चमी मय इति षष्ठी' इति पक्षे ककारस्य द्वित्वम् । लस्य तु 'अनचि च ' (सू ४८) इति । तेन 'तवल्कारः' इत्यत्र रूपचतुष्टयम् ।

द्वित्वं लस्यैव कस्यैव नोभयोरुभयोरपि ।
तवल्कारादिषु बुधैर्बोध्यं रूपचतुष्टयम् ।।

---

एकमात्राकालद्वयस्य सत्त्वेऽपि एकमात्राकालिकाज्द्वयं नास्ति। अ इति ह्रस्वस्वरिते (स्वाक्षरेषु) एकमात्राकालस्यैकस्यैव सत्त्वेन एकमात्राकालिकाज्द्वयासम्भवस्सिद्ध एव। तस्मादयमपि समासोऽत्र नोपयुज्यते। तर्हि लौकिकहस्वपदार्थग्रहणेन अर्थश्चासौ ह्रस्व इति पुनरपि कर्मधारयाश्रयणे दीर्घस्वरिते (दीर्घाकारे) एकमात्राकालद्वयसत्त्वेन अर्धांशस्य एकमात्राकालस्य एकस्य लब्धत्वेन इष्टसिद्धावपि प्लुतस्वरिते (प्लुताकारे) नेष्टं

७२ **वृद्धिरेचि** । ।६।१।८८। आदेचि परे वृद्धिरेकादेशः स्यात् । गुणापवादः । कृष्णैकत्वम् । गङ्गौघः। देवैश्वर्यम् । कृष्णौत्कण्ठ्यम् । ७३ **एत्येधत्यूठ्सु** । ६।१।८९। अवर्णादिजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात् । पररूपगुणापवादः । उपैति । उपैधते । प्रष्ठौहः । एजाद्योः' किम्, उपेतः । मा भवान्प्रेदिधत् । पुरस्तादपवादन्यायेनेयं वृद्धिः । 'एङि पररूपम्' (सू ७८) इत्यस्यैव बाधिका, न तु ओमाङोश्च' (सू ८०) इत्यस्य । तेन 'अवैहि' इति वृद्धिरसाधुरेव । **'अक्षादूहिन्यामुपसंख्यानम्'** (वा ३६०४) अक्षौहिणी सेना । **'स्वादीरेरिणोः'**(वा ३६०६) । स्वैरः । स्वनेरितुं शीलमस्येति स्वैरी । स्वैरिणी । **'प्रादूहोढोढ्येषैष्येषु'** (वा ३६०५) । प्रौहः प्रौढः । **'अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्'** (प १५) 'व्रश्च–' (सू २९४) इति सूत्रे राजेः पृथग्भ्राजिग्रहणाज्ज्ञापकात् । तेन ऊढग्रहणेन क्तान्तमेव गृह्यते, न तु क्तवत्वन्तस्यैकदेशः। प्रोढवान् । प्रौढिः । इष इच्छायाम् 'तुदादिः।इष गतौ दिवादिः। 'इष आभीक्ष्ण्ये' क्र्यादिः, तेषां घञि ण्यति च 'एषः' 'एष्यः ' इति रूपे, तत्र पररूपे प्राप्ते अनेन वृद्धिः । प्रैषः । प्रैष्यः । यस्तु 'ईष उञ्छे' यश्च 'ईष गतिहिंसादर्शनेषु' तयोर्दीर्घोपधत्वात् ईषः, ईष्यः । तत्राद्गुणे प्रेषः प्रेष्यः । **'ऋते च तृतीयासमासे'**(वा ३६०७) सुखेन ऋतः सुखार्तः । 'तृतीया' इति किम् । परमर्तः । **'प्रवत्सतरकम्बलवसनदशार्णानामृणे'** (वा ३६०८–९) । प्रार्णम् । वत्सतरार्णमित्यादि । 'ऋणस्यापनयनाय यदन्यद् ऋणं क्रियते तद् ऋणार्णम् । दशार्णो देशः । नदी च दशार्णा । ऋणशब्दो दुर्गभूमौ जले च । ७४ **उपसर्गादृति धातौ** । ।६।१।९१। अवर्णान्तादुपसर्गाद् ऋकारादौ धातौ परे वृद्धिरेकादेशः स्यात् । उपार्च्छति । प्रार्च्छति । **७५ अन्तादिवच्च** । ।६।१।८५। योऽयमेकादेशः स पूर्वस्यान्तवत्परस्यादिवत्स्यात् । इति रेफस्य पदान्तत्वे । **७६ खरवसानयोर्विसर्जनीयः** । ।८।३।१५। खरि अवसाने च परे रेफस्य विसर्जनीयः स्यात्पदान्ते । इति विसर्गे प्राप्ते । अन्तवद्भावेन पदान्तरेफस्य न विसर्गः । 'उभयथर्क्षु' (सू ३६३०), 'कर्तरि चर्षिदेवतयोः'

---

सिध्यति। तत्र एकमात्राकालत्रयस्य सत्वेन न तदर्धांशस्य सार्धैकमात्राकालत्वात्। किञ्च। ह्रस्वस्व (स्वाकारे) रिते एकमात्राकालस्यैकस्यैव सत्वेन तदर्धांशस्यार्धमात्राकालत्वात्। तस्मात् ह्रस्वस्यार्ध इत्येव समासः। तथा च ह्रस्वस्वरितेऽपि एकमात्राकालस्यार्धांशः अर्धमात्राकालोस्तीति सर्वमनवद्यम्। । एवं एतच्छास्त्रसङ्केतितमर्थं विहाय ह्रस्वपदस्य लौकिकार्थग्रहणेन

(सू ३१६७) इत्यादिनिर्देशात् । उपसर्गेणैव धातोराक्षेपे सिद्धे 'धातौ' इति योगविभागेन पुनर्वृद्धिविधानार्थम् । तेन 'ऋत्यकः' (सू ९२) इति पाक्षिकोऽपि प्रकृतिभावोऽत्र न भवति । ७७ **वा सुप्यापिशलेः** । ।६।१।९२। अवर्णान्तादुपसर्गाद् ऋकारादौ सुब्धातौ परे वृद्धिरेकादेशो वा स्यात् । आपिशलिग्रहणं पूजार्थम् । प्रार्षभीयति । प्रर्षभीयति । सावर्ण्यात् लृवर्णस्य ग्रहणम्, प्राल्कारीयति प्रल्कारीयति । तपरत्वाद्दीर्घो न, उप ऋकारीयति–उपर्कारीयति । ७८ **एङि पररूपम्** । ।६।१।९४। अवर्णान्तादुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यात् । प्रेजते । उपोषति इह 'वा सुपि' इत्यनुवर्त्य वाक्यभेदेन व्याख्येयम् । तेन एङादौ सुब्धातौ वा, उपेडकीयति, उपैडकीयति । प्रोघीयति, प्रौघीयति । **एवे चानियोगे'** (वा ३६३१) नियोगोऽवधारणम् । क्वेव भोक्ष्यसे । अनवक्लृप्तावेवशब्दः । 'अनियोगे' किम्–तवैव । ७९ **अचोऽन्त्यादि टि** । ।१।१।६४ अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् । **'शकन्ध्वादिषु पररूपं वाच्यम्'** (वा ३६३२) तच्च टेः । शकन्धुः । कर्कन्धुः, कुलटा । **'सीमन्तः केशवेशे'** (वा ३६३३) सीमान्तोऽन्यः । मनीषा । हलीषा । लाङ्गलीषा । पतञ्जलिः । 'सारङ्गः पशुपक्षिणोः' (ग १३६) । साराङ्गोऽन्यः । आकृतिगणोऽयम् । मार्तण्डः । **ओत्वोष्ठयोः समासे वा'** (वा ३६३४) । स्थूलोतुः, स्थूलौतुः । बिम्बोष्ठः, बिम्बौष्ठः । समासे' किम् । तवौष्ठः । ८० **ओमाङोश्च** । ।६।१।९५। ओमि आङि च आत्परे पररूपमेकादेशः स्यात् । शिवायों नमः । शिव एहि–शिवेहि ।

---

कृत्रिमाकृत्रिमन्यायविरोधस्सम्प्राप्त इत्याशयेन अतन्त्रमिति कौमुदीकारः। तन्न्यायस्यानित्यत्वेन वैवक्षिकत्वात् अविवक्षितमित्यर्थः। एतच्छास्त्रसङ्केतितं न संभवतीति यावत्।।

**ओ माङोश्च** इति। अत्र **आद्गुण** इति सूत्रात् आदिति **"ए ङि पररूपम्"** इति सूत्रात्पररूपमिति चानुवर्तेते। तदेतदाह। ओमि आङि चेति। ओमि उदाहरणमाह शिवायोन्नम इत्यादि। तत्र आङि पररूपस्योदाहरणमाह। शिवेहीति। ननु शिव आ इहि इति स्थिते यद्याद्गुणस्स्यात्तर्हि आङ्परकत्वं न स्यात्। अथ यदि आद्गुणात्पूर्वं शिव आ इत्यनयोः पररुपं तर्हि, शिवा इहि आद्गुणः शिवेहीति रूपसिद्धावपि न प्रयोजनम् । आङि पररूपविधानेन; सवर्णदीर्घेणैवेष्टसिद्धेः इति चेत्सत्यम्। तथापि धातूपसर्गयोः

८१ **अव्यक्तानुकरणस्यात इतौ** । ।६।१।९८। ध्वनेरनुकरणस्य योऽच्छब्दस्तस्मादितौ परे पररूपमेकादेशः स्यात् । पटत् इति पटिति । **'एकाचो न'** (वा ३६३७) । श्रदिति । ८२ **नाम्रेडितस्यान्त्यस्य तु वा** । । ६।१।९९। आम्रेडितस्य प्रागुक्तं न स्यात् । अन्त्यस्य तु तकारमात्रस्य वा स्यात् । **'डाचि बहुलं द्वे भवतः'** (वा ४६९७) । इति बहुलग्रहणाद् द्वित्वम् । ८३ **तस्य परमाम्रेडितम्** । ।८।१।२। द्विरुक्तस्य परं रूपमाम्रेडितसंज्ञं स्यात् । पटत्पटेति । ८४ **झलां जशोऽन्ते** । ।८।२।३९। पदान्ते झलां जशः स्युः । पटत्पटदिति । ८५ **अकः सवर्णे दीर्घः** ।६।१।१०१। अकः सवर्णेऽचि परे दीर्घ एकादेशः स्यात् । दैत्यारिः । श्रीशः । विष्णूदयः । 'अचि' किम् । कुमारी शेते । 'नाज्झलौ' (सू १३) इति सावर्ण्यनिषेधस्तु न दीर्घशकारयोः, ग्रहणकशास्त्रस्य सावर्ण्यविधिनिषेधाभ्यां प्रागनिष्पत्तेः । 'अकः' किम्–हरये । 'अकोऽकि दीर्घः' इत्येव सुवचम् । **'ॠति सवर्णे ॠ वा'** (वा ३६४०) । होतृकारः–होतॄकारः । **ऌति सवर्णे ॡ वा '** (वा ३६४१) । होत्ॡकारः । पक्षे ॠकारः सवाण्यात्। होतृकारः । ॠति ॠ वा' 'ऌति ऌ वा' इत्युभयत्रापि विधेयं वर्णद्वयं द्विमात्रम् । आद्यस्य मध्ये द्वौ रेफौ , तयोरेका मात्रा । अभितोऽज्भक्तेरपरा । द्वितीयस्य तु मध्ये द्वौ लकारौ, शेषं प्राग्वत् । इहोभयत्रापि 'ॠत्यकः' (सू ९२) इति पाक्षिकः प्रकृतिभावो वक्ष्यते । ८६ **एङः पदान्तादति** । ।६।१।१०९। पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात् । हरेऽव । विष्णोऽव । ८७ **सर्वत्र विभाषा गोः** । ।६।१।१२२। लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः स्यात्पदान्ते । गो अग्रम्, गोऽग्रम् । 'एङन्तस्य' किम्–चित्रग्वग्रम् । 'पदान्ते किम्–गोः । ८८ **अवङ् स्फोटायनस्य** । ।६।१।१२३। 'अति' इति निवृत्तम् । अचि परे पदान्ते गोरवङ् वा स्यात् । गवाग्रम् । 'पदान्ते' किम्–गवि । व्यवस्थितविभाषया गवाक्षः । ८९ **इन्द्रे च** । ।६।१।१२४। गोरवङ् स्यादिन्द्रे । गवेन्द्रः ।

---

कार्यस्यान्तरङ्गत्वेन उपसर्गस्याङः धातोरिहीत्यस्य च यत्कार्यमाद्गुण इति तत्प्रथममेव प्रवर्तते। पश्चात् शिव एहीति स्थिते भूतपूर्वगत्या स्थानिवद्भावेन वा एकारे आङ्रूपत्वमस्तीति न कोऽपि दोषः। न चानल्विधाविति स्थानिवद्भावनिषेधोऽत्र शङ्क्यः। अचः परस्मिन्निति स्थानिवद्भाव स्वीकारात्। न च स्थनिभूतादचः पूर्वत्वेन

## अथ प्रकृतिभावः ।४।

९० **प्लुतप्रगृह्या अचि नित्यम्** । ।६।१।१२५। प्लुताः प्रगृह्याश्च वक्ष्यन्ते, तेऽचि परे नित्यं प्रकृत्या स्युः । एहि कृष्ण३ अत्र गौश्चरति । हरी एतौ । 'नित्यम्' इति किम् । 'हरी एतौ' इत्यादावयमेव प्रकृतिभावो यथा स्यात्, 'इकोऽसवर्णे'–(सू ९१) इति ह्रस्वसमुच्चितो मा भूत् । ९१ **इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च** ।६।१।१२७। पदान्ता इकोऽसवर्णेऽचि परे प्रकृत्या स्युर्ह्रस्वश्च वा । अत्र ह्रस्वविधिसामर्थ्यादेव प्रकृतिभावे सिद्धे तदनुकर्षणार्थश्चकारो न कर्तव्य इति भाष्ये स्थितम् । चक्रि अत्र– चक्र्यत्र । 'पदान्ताः' इति किम् । गौर्यौ । **'न समासे'** (वा ३६८४) । वाप्यश्वः। **'सिति च'** (वा ३६८४) । पार्श्वम् । ९२ **ऋत्यकः** । ।६।१।१२८। ऋति परेऽकः प्राग्वत् । ब्रह्म ऋषिः–ब्रह्मर्षिः । 'पदान्ताः' इत्येव । आर्च्छत्। समासेऽप्ययं प्रकृतिभावः । सप्तऋषीणाम्–सप्तर्षीणाम् । ९३ **वाक्यस्य टेः प्लुत उदात्तः** । ।८।२।८२। इत्यधिकृत्य । ९४ **प्रत्यभिवादेऽशूद्रे**। ।८।२।८३। अशूद्रविषये प्रत्यभिवादे यद्वाक्यं तस्य टेः प्लुतः स्यात्, स चोदात्तः । अभिवादये देवदत्तोऽहम् । आयुष्मान् एधि देवदत्ता ३ **'स्त्रियां न** (वा ४८६४) अभिवादये गार्ग्यहम् । आयुष्मती भव गार्गि **नाम गोत्रं वा यत्र प्रत्यभिवादवाक्यान्ते प्रयुज्यते तत्रैव प्लुत इष्यते** नेह। आयुष्मानेधि । **'भोराजन्यविशां वेति वाच्यम्** ' (वा ४८६५) आयुष्मानेधि भो ३ः आयुष्मानेधीन्द्रवर्म ३ न् । आयुष्मानेधीन्द्रपालित ३।। ९५ **दूराद्धूते च** । ।८।२।८४। दूरात्सम्बोधने यद्वाक्यं तस्य टेः प्लुतः स्यात् ।

---

दृष्टस्य विधिकर्तव्यता नास्ति। पूर्वत्वेन दृष्टस्याकारस्य आदेशभूतस्य एकारस्य चोभयोरपि पररूपस्य कर्तव्यत्वादिति वाच्यम्। उभयोः कर्तव्यतायामपि स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधिकर्तव्यतायास्सत्त्वात्। वस्तुतस्तु, "एङि पररूपं इति सूत्रं सर्वमत्रानुवर्त्य एङ्रूपे ओमि आङि च परे इति व्याख्येयम्। आङः एङ्रूपत्वञ्च आद्गुणप्रवृत्त्या सम्भवति। ततश्च शिव एहीत्यत्र एङ्रूपस्याङस्सत्त्वात्पररूपसिद्धिः। सर्वस्मिन्नपि पक्षे आङ आकारस्य कथमेङ्रूपत्वमिति वाच्यम् । आद्गुणप्रवृत्त्या एङ्त्वं प्राप्ते आङीत्यर्थात् अथवा ओमि परे आङ्स्थानिके एङि परे च पररूपमिति व्याख्येयम्। न चात्रापि कथमाङ्स्थानिकत्वमेङः आङिकारोभयस्थानिकत्वादिति वाच्यम्। उभयस्थानिकत्वेऽप्याङ्स्थानिकत्वानपायादिति। ङीत्सूत्रे (?) आवश्यकस्य निपातस्य

सक्तून्पिब देवदत्त३ ।९६ **है हे प्रयोगे हैहयोः** । ।८।२।८५। एतयोः प्रयोगे दूराद्धूते यद्वाक्यं तत्र हैहयोरेव प्लुतः स्यात् । हे ३ राम । राम है ३ । ९७ **गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्** ।।८।२।८६। दूराद्धूते यद्वाक्यं तस्य ऋद्भिन्नस्यानन्त्यस्यापि गुरोर्वा प्लुतः स्यात् । दे ३ वदत्त । देवद ३ त्त । देवदत्त ३ । 'गुरोः किम् । वकारत्परास्याकारस्य मा भूत् । 'अनृतः' किम् । कृष्ण ३ । एकैकग्रहणं पर्यायार्थम् । इह 'प्राचाम्' इति योगो विभज्यते । तेन सर्वः प्लुतो विकल्प्यते । ९८ **अप्लुतवदुपस्थिते** ।६।१।१२९। उपस्थितोऽनार्ष इतिशब्दः, तस्मिन्परे प्लुतोऽप्लुतवद्भवति (अप्लुतकार्यं यणादिकं करोतीत्यर्थः) सुश्लोक ३ इति –सुश्लोकेति । वत्' किम् । अप्लुत इत्युक्तेऽप्लुत एव विधीयेत, प्लुतश्च निषिध्येत । तथा च प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणं न स्यात् । अग्नी ३ इति । ९९ **ई ३ चाक्रवर्मणस्य** । ।६।१।१३०। ई ३ कारः प्लुतोऽचि परेऽप्लुतवद्वा स्यात् । चिनुही३ इति–चिनुहीति । चिनुही३ इदम्–चिनुहीदम् । उभयत्र विभाषेयम् । १०० **ईदूदेद् द्विवचनं प्रगृह्यम्** । ।१।१।११। ईदूदेदन्तं दिवचनं प्रगृह्यसंज्ञं स्यात् । हरी एतौ । विष्णू इमौ । गङ्गे अमू । पचेते इमौ । ' मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' इत्यत्र त्विवार्थे वशब्दो वाशब्दो वा बोध्यः । १०१ **अदसो मात्** । ।१।१।१२। अस्मात्परावीदूतौ प्रगृह्यौ स्तः । अमी ईशाः । रामकृष्णावमू आसाते । 'मात्' किम् । अमुकेऽत्र । असति माद्ग्रग्रहणे एकारोऽप्यनुवर्तेत । १०२ **शे** । ।१।१।१३। अयं प्रगृह्यः स्यात् । अस्मे इन्द्राबृहस्पती । १०३ **निपात एकाजनाङ्** । ।१।१।१४। एकोऽज्निपात आङ्वर्जः प्रगृह्यः स्यात् । इ विस्मये । इ इन्द्रः ।

---

स्पष्टप्रतिपत्त्यर्थमत्रैव कृतत्वान्न निपात इत्येतदपनेतुं शक्यते। वर्णग्रहणेषु व्यक्तिसङ्ख्या न विवक्ष्यते। किन्तु जातिरेव निर्दिश्यत इत्येतद् ज्ञापनार्थमत्रैकपदस्य कृतत्वादेकेत्यपि नापनेतुं शक्यते। अतः यथासूत्रमनवद्यम्। ननु "अपृक्त एकाल्प्रत्यय" इत्यत्रैकग्रहणमेव व्यर्थीभूय तद् ज्ञापयतीत्येकग्रहणमनर्थकमेव । आङ्भिन्नः आङ्सदृशः हल् व्यञ्जनमेव भवेत्। न तु हलन्तं पुनरित्यादितथाविधस्य व्यञ्जनस्य निपातस्य निपातेष्वपठितत्वात्। तद्भिन्नस्तत्सदृशो निपातः आङ् एव स्यात्। न तु हल्। अभावादिति कृत्वा आङित्यस्यानर्थक्यं तदवस्थमेव। अतः निपातोऽनाङित्येव सूत्रयितव्यं लाघवादिति चेत्

उ वितर्के । उ उमेशः । 'अनाङ्' इत्युक्तेरङिदाकारः प्रगृह्य एवं । आ एव नु मन्यसे । आ एवं किल तत् । ङित्तु न प्रगृह्यः। ईषदुष्णम् ओष्णम् ।ईषदर्थे क्रियायोगे मर्यादाऽभिविधौ च यः।एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् 'वाक्यम्सरणयोरङित्' । १०४ **ओत्** । ।१।१।१५। ओदन्तो निपातः प्रगृह्यः स्यात् । अहो ईशाः । १०५ **सम्बुद्धौ शाकल्यस्येतावनार्षे** । ।१।१।१६। सम्बुद्धिनिमित्तकओकारो वा प्रगृह्योऽवैदिके इतौ परे । विष्णो इति, विष्ण इति विष्णविति । 'अनार्षे इति किम् । ब्रह्मबन्धवित्यब्रवीत् । १०६ **उञः** । ।१।१।१७। उञ इतौ वा प्रागुक्तम् । उ इति–विति । १०७ **ऊँ** । ।१।१।१८। उञ इतौ दीर्घोऽनुनासिकः प्रगृह्यश्च ऊँ इत्ययमादेशो वा स्यात् ऊँ इति, विति । १०८ **मय उञो वो वा** । ।८।३।३३। मञः परस्य उञो वो वा स्यादचि । किम् उक्तम्, किम्वुक्तम् । वत्वस्यासिद्धत्वान्नानुस्वारः । १०९ **ईदूतौ च सप्तम्यर्थे** । ।१।१।१९। सप्तम्यर्थे पर्यवसन्नमीदूदन्तं प्रगृह्यं स्यात् । सोमो गौरी अधिश्रितः । मामकी तनू इति । 'सुपां सुलुक्–' (सू ३५६१) इति सप्तम्या लुक् । अर्थग्रहणं किम्–वृत्तावर्थान्तरोपसंक्रान्ते मा भूत् । वाप्यामश्वो वाप्यश्वः । ११० **अणोऽप्रगृह्यस्यानुनासिकः** । ।८।४।५७। अप्रगृह्यस्याणोऽवसानेऽनुनासिको वा स्यात् । दधिँ, दधि । 'अप्रगृह्यस्य' किम् । अग्नी ।।

**।। इति अच्सन्धिप्रकरणम् ।।**

## अथ हल्सन्धिप्रकरणम् ।५।

१११ **स्तोः श्चुना श्चुः** । ।८।४।४०। सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः । हरिश्शेते । रामश्चिनोति । सच्चित् । शार्ङ्गिञ्जय

---

न।अनाङिति प्रसज्यप्रतिषेधस्यैव भाष्यकारसम्मतत्वात्। आङो न प्रगृह्यत्वमित्येवार्थलाभः। तेन प्रेत्यादिनां सर्वेषामपि निपातानां प्रगृह्यत्वं स्यात्। अतस्तद्वारणार्थमजित्यावश्यकमेव। ननु पर्युदासेन अजित्यस्यापनये यादृशलक्ष्यसिद्धिः प्रसज्यप्रतिषेधेन अजित्यस्य सत्वेऽपि तादृशलक्ष्यसिद्धिरेव भवति। न तु भिन्नलक्ष्यसिद्धिरिति कृत्वा लाघवात्पर्युदास एवाङ्गीकार्य इति चेत् न तथा, लक्ष्यभेदोप्यस्यैव, द्रष्टव्यमेतत्तत्वबोधिन्यां तथाहीत्यारभ्य।

**इति स्वरसन्धिः**

**अथ हल्सन्धिः**

हल् सन्धौ–येन ना प्राप्तिन्यायेति–"येन नाप्राप्तौ यो विधिरारभ्यते स तस्यैव बाधक" इति न्यायेन निरवकाशमूलकः तक्रकौण्डिन्यन्यायमूलकश्चेति। अपवादो द्विविधः। "सर्वेभ्यो बाह्मणेभ्यो दधि दापयति, तक्रं कौण्डिन्याय" इत्ययमेव येन

११२ **शात्** । ।८।४।४४। शात्परस्य तवर्गस्य चुत्वं न स्यात् । विश्नः । प्रश्नः । ११३ **ष्टुना ष्टुः** । ।८।४।४१। स्तोः ष्टुना योगे ष्टुः स्यात् । रामष्षष्ठः । रामष्टीकते । पेष्टा । तट्टीका । चक्रिण्ढौकसे । ११४ **न पदान्ताट्टोरनाम्** ।८।४।४२। 'अनाम्' इति लुप्तषष्ठीकं पदम् । पदान्ताट्टवर्गात्परस्यानामः स्तोः ष्टुर्न स्यात् । षट् सन्तः । षट् ते । 'पदान्तात् ' किम्–ईट्टे । 'टोः' किम्–सर्पिष्टमम् । **'अनाम्नवतिनगरीणमिति वाच्यम्'** (वा ५०१६) । षण्णाम् । षण्णवतिः । षण्णगर्यः।। ११५ **तोः षि** । ।८।४।४३। तवर्गस्य षकारे परे न ष्टुत्वम् । सन्षष्ठः । झलां जशोऽन्ते (सू ८४) वागीशः। चिद्रूपम् ।।

---

नाप्राप्तिन्यायः। येन उत्सर्गशास्त्रेण 'विसर्जनीयस्य' स इत्यादिना सत्वादेः नाप्राप्तौ आवश्यकप्राप्तौ सत्याम् घना घनः क्षोभणः इत्यादिस्थल इत्यर्थः। यो विधिः कुप्वोःᳲकᳲपौ चेत्यादिः आरभ्यते सः तस्यैवोत्सर्गशास्त्रस्य बाधकः, न तु पुनः तदन्यस्य, शर्परे विसर्जनीय इत्यस्य विशेषशास्त्रस्येति तदर्थः। अयं भावः सामान्यशास्त्रं विशेषशास्त्रं अपवादशास्त्रं च यत्र लक्ष्ये प्रवर्तते तत्र विशेषशास्त्रेणैव सामान्यापवादशास्त्रद्वयं बाध्यते। यत्र सामान्यमपवादश्च प्रवर्तेते, तत्र सामान्यमपवाद्यतेऽपवादशास्त्रेण। तेन सामान्यशास्त्रबाधनार्थं प्रवृत्त्या चरितार्थत्वेन दुर्बलमपवादशास्त्रं विशेषशास्त्रेण बाध्यत इति। ननु विशेषशास्त्रमपि अपवादशास्त्रमेवेति विशेषापवादयोः को भेद इति चेदुच्यते। निरवकाशमूलकोऽपवादो विशेषशास्त्रमिति तक्रकौण्डिन्यन्यायमूलकोऽपवादः अपवादशास्त्रमिति च बुद्ध्या मयाऽत्र व्यवहृतम् । खरि परतः, शर्परकखरि परतः; कुप्वोः परतश्च विहितं विधित्रयम्। तत्र प्रथमं प्रति द्वितीयतृतीये विशेषशास्त्र एव। द्वितीयतृतीययोरेकं प्रत्यपरं विशेषशास्त्रं न तत्र इदं विशेषशास्त्रमिति निर्णेतुं शक्यते। शर्परकेऽपि खरि कुप्वोर्विशेषत्वात् कुप्वोरपि शर्परकखरः विशेषत्वात्। अतः केन विशेषशास्त्रेण किं विशेषशास्त्रं बाध्यत इति संदेहनिबर्हणार्थे इयं न्यायमूला परिभाषा। कुप्वोरिति सूत्रं खरि परतः जायमानस्य विसर्जनीयस्य बाधनार्थमारब्धं वा उत शर्परकखरि परतः जायमानविसर्जनीयबाधनार्थम् इति विकल्प्य तदुभयोर्मध्ये यत्सामान्यं विसर्जनीयसत्वन्तस्य प्राचुर्यत्वेन तद्बाधनार्थमेव नत्वप्रचुरशर्परे विसर्जनीयस्येति बोध्योऽत्र न्यायः। तेन यद्बाधनार्थं यदपवादशास्त्रं प्रवृत्तं तद्बाधने तस्य चरितार्थत्वेन दुर्बलं तदपवादशास्त्रं सबलेनान्येनापवादशास्त्रेण बाध्यत इति। नन्वयं न्यायस्तत्रापि संयोज्य एव। तथा हि–शर्परे विसर्जनीय इति सूत्रं विसर्जनीयसत्वबाधनार्थं प्रवृत्तं वा? उत कुप्वोः परतःकःप बाधनार्थम् इति विकल्प्य पूर्वस्य प्राचुर्यत्वेन तद्बाधनार्थमेवेति तत्र तच्चरितार्थमन्येन कुप्वोरिति सूत्रेण सबलेन तद्बाध्यत इति चेन्मैवम्। कुप्वोरपि शर्परत्वे विसर्गस्य भाव्यत्वेन शर्परे सूत्रस्य विशेषेणापवादत्वात्। खर्दृष्ट्या

कुप्वोर्विशेषत्वेऽपि शर्परकखर्दृष्टया न विशेषत्वम्। शर्परकखरन्तर्गतकुप्वोरपि विसर्गस्य भाव्यत्वात् अशर्परकखरन्तः साति कुप्वोरेव हि कःप प्राप्तिः। तस्मात् विसर्जेनीयसस्य कुप्वोरिति विशेषशास्त्रम्। तस्य तु शर्पर इत्येतद्विशेषशास्त्रमित्ययं न्याय इति चे त्तथाऽस्तु ।

1. **स्तोः श्चुना श्चुः। अणुदित्सवर्णस्य चाप्रत्यय** इत्युदित्त्वेन सवर्णग्रहणात्। स्तुरित्यत्र तवर्गस्य श्चुना चवर्गस्य च ग्रहणम्। स्तोः श्चुना सह योगे स्तोः स्थाने श्चुः स्यात्। स च श्चुः विधीयमानः **"स्थानेऽन्तरतम"** इति अन्तरतमस्स्यात्। स्तोः श्चुना योगश्च, श्चौ पूर्वत्रस्थितेऽपि परत्र स्थितेऽपि स्तोः भवति। एतेन श्चौ परतः स्तोश्चुस्स्यादित्येकार्थः। श्चोः परस्य स्तोः श्चुस्स्यादित्यन्योऽर्थः लब्धः। एवं च स्तोः श्चुना योगे स्तोः श्चुस्स्यात् इत्यनुगतार्थे प्रथमः कार्यः द्वितीयः निमित्तं, तृतीयः स्थानी, चतुर्थः आदेशः, स्थान्यादेशयोर्यथासंख्यमस्ति। तेन सकारस्य स्थाने शकारः, तवर्गस्य स्थाने चवर्गश्च स्यादित्यर्थः। निमित्तकार्यिणोरपि यथासंख्यसत्वे सकारस्य शकारयोगे तवर्गस्य चवर्गयोगे चेत्यर्थस्स्यात्। तेन 'शादि'ति सूत्रं व्यर्थं स्यात्। श्चुत्वरूपकार्ये शकारसकारयोर्निमित्तकार्यित्वे सकारतवर्गयोर्निमित्तकार्यित्वाभावात्। शात्परस्य तवर्गस्य श्चुत्वप्राप्तेरेवाभावात्। प्राप्तिपूर्वको हि निषेधः। अतः निमित्तकार्यिणोर्यथासंख्यं न । ननु **स्तो श्चुना श्चुरिति** सूत्रात् श्चौ परतः स्तो श्चुस्स्यात् इत्ययमेवार्थो लभ्येत।न तु पुन श्चोः परस्य स्तोः श्चुस्स्यादिति। अतः तद्ज्ञापनार्थं शादित्यावश्यकमिति चेन्न। परत्वबोधनार्थं पञ्चम्या आवश्यकत्वेऽपि "शा"त्सूत्रे तु श्च्वनुवर्तनस्य निरर्थकत्वात्। तदनुवर्तने शात् सूत्रस्य अभिधेयकल्पनायोगात्। ननु स्तोरिति सूत्रात् सकारमात्रमनुवृत्तं कृत्वा शात्परस्य सस्य श्चुत्वं न स्यादित्यर्थकल्पने शात्सूत्रस्य वैयर्थ्यमेव न स्यादिति चेत् न। स्तोश्चौ श्चुरित्येकार्थाश्रयणेन शात्सस्य श्चुत्वप्राप्तिरेव नास्तीति कृत्वा निषेधस्यासम्भवात्। ननु, अत एव शात्सूत्रं व्यर्थीभूय स्तोश्चुना श्चुरिति सूत्रस्य श्चोः परस्य स्तोश्चुरिति द्वितीयार्थमपि प्रकल्प्यते न शात्सस्य श्चुत्वप्राप्तौ तन्निषिध्य, स्वस्थाने चरितार्थ इति न पुनर्यथासङ्ख्याभावं द्योतयितुं निमित्तकार्यिणोः क्षमते इति चेत्, न तथा–श्चुनेति तृतीययैव अर्थद्वयज्ञापनस्य कृतत्वात्। अन्यथा श्चाविति सप्तमी श्चोरिति पंचमी वा लाघवात्सूत्रे विहितं स्यात्। न हि सहयोगे अप्रधानस्य पूर्वत्र परत्र वा स्थितिनियमः। वृद्धो यूनेत्यत्र युवप्रत्ययान्तस्य अप्रधानस्य परत्र पुमान् स्त्रियेत्यत्र अप्रधानस्य स्त्रिया इत्यस्य पूर्वत्र च विग्रहवाक्ये स्थितिदर्शनात्। किञ्च शात्सूत्रस्य शात्सस्येत्यर्थ–वचनमप्ययुक्तम्, भाष्यादिविरोधात् जस्स्यादित्यादिलक्ष्यविरोधाच्च। अतः शात्सूत्रं व्यर्थीभूय निमित्तकार्यिणोर्न यथा संख्यमिति ज्ञापयित्वा ततः शात्तोश्चुत्वप्राप्तौ तन्निषिध्य स्वस्थाने चरितार्थमिति सर्वं सुष्ठु ।

११६ **यरोऽनुनासिकेऽनुनासिको वा** । ।८।४।४५। यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात् । एतन्मुरारिः, एतद्मुरारिः,स्थानप्रयत्ना- भ्यामन्तरतमे स्पर्शे चरितार्थो विधिरयं रेफे न प्रवर्तते । चतुर्मुखः । **'प्रत्यये भषायां नित्यम्'** (वा ५०१७) । तन्मात्रम् । चिन्मयम् । कथं तर्हि 'मदोदग्राः ककुद्मन्तः' इति? यवादि (ग २५०) गणे दकारनिपातनात् । ११७ **तोर्लि** । ।८।४।६०। तवर्गस्य लकारे परे परसवर्णः स्यात् । तल्लयः । विद्वाल्ँलिखति । नकारस्यानुनासिको लकारः । ११८ **उदः स्थास्तम्भोः पूर्वस्य** । ।८।४।६१। उदः परयोः स्थास्तम्भोः पूर्वसवर्णः स्यात् । 'आदेः परस्य' (सू ४४) । उत्थानम् । उत्तम्भनम् । अत्राघोषस्य महाप्राणस्य सस्य तादृश एव थकारः । तस्य 'झरो झरि-' (सू ७१) इति पाक्षिको लोपः । लोपाभावपक्षे तु थकारस्यैव श्रवणम् । नतु 'खरि च' (सू १२१) इति चर्त्वम् । चर्त्वं प्रति थकारस्यासिद्धत्वात् ।

---

2. सू. **यरोऽनुनासिकेऽनुनासिको वा**, एतद् मुरारिरिति स्थिते दकारस्य पदान्तयर्त्वात्, अनुनासिके मकारे परे दकारस्य स्थाने अनुनासिकः दकारेण स्थानप्रयत्नाभ्यामन्तरतमः नकारः स्यात्। एतन्मुरारिरिति भवति। अथ कथं चतुर्मुख इत्यादिः? रेफस्य पदान्तयर्त्वात् मकारे परतः रेफस्थाने रेफेण स्थानत आन्तर्यवान् णकारोऽनुनासिकः स्यादित्याशङ्क्याह। "स्थानप्रयत्नाभ्या" मित्यादि। अयम्भावः, स्थानिनो यादृक्स्थानं प्रयत्नश्च तादृक्स्थानप्रयत्नवानेव आदेशो विधेय इतीदं तावदभ्युपगन्तव्यम्। अन्यथा प्रकृते अनुनासिकस्स्यादित्यनेन ञमङणनानामनुनासिकत्वेन एतद् मुरारिरित्यत्र दकारस्य स्थाने नकारस्यैव कुतो विधेयता स्यात् । किन्तु ञादीनामपि तथात्वे विनिगमकाभावात्। ञादीनां मध्ये कस्यापि न विधेयता स्यात्। अतः विनिगमना तावत् कल्पनीया। सा चात्र स्थान्यन्तरतम आदेशस्स्यादित्येवंरूपा ज्ञेया। दृश्यते हि लोके यादृगधिकारिस्थाने तादृगेवाधिकारिणो विधानम्। अन्तरतमत्वञ्चास्मिन् शास्त्रे स्थानतः प्रयत्नतश्चेत्युभयतः। यत्र तु इको यणचीत्यादौ स्थानत आन्तर्य न प्रयत्नतः तत्र विधानारम्भसामर्थ्यात् स्थानत आन्तर्यवानेवादेशः कल्पनीयः, यत्र तूभयथा आन्तरतम्यं सम्भवति, यथा प्रकृते तत्र न स्थानत एव आन्तर्यवानादेशः कल्पयितुं शक्यते। विधानस्य आन्तरतमे लक्ष्ये चरितार्थत्वेन सामर्थ्यस्य उपक्षीणत्वात्। अतः चतुर्मुख इत्यादौ चतुण्मुख इत्याद्यनिष्टरूपापत्तिर्न शक्या सम्भावयितुमित्यलं प्रपञ्चेन।

११९ **झयो होऽन्यतरस्याम्** । ।८।४।६२। झयः परस्य हस्य पूर्वसवर्णो वा स्यात् । घोषवतो नादवतो महाप्राणस्य संवृतकण्ठस्य हस्य तादृशो वर्गचतुर्थ एवादेशः । वाग्घरिः, वाग्हरिः।। १२० **शश्छोऽटि** । ।८।४।६३। पदान्ताज्झयः परस्य शस्य छो वा स्यादटि । दस्य चुत्वेन जकारे कृते, १२१ **खरि च** । ।८।४।५५। खरि परे झलां चरः स्युः । इति जकारस्य चकारः । तच्छिवः, तच्शिवः । 'छत्वममीति वाच्यम्' (वा ५०२५) तच्छ्श्लोकेन, तच्श्लोकेन। अमि किम्, वाक् श्च्योतति । १२२ **मोऽनुस्वारः** । ।८।३।२३। मान्तस्य पदस्यानुस्वारः स्याद्धलि । 'अलोऽन्त्यस्य' (सू ४२) । हरिं वन्दे । 'पदस्य' इति किम्–गम्यते । १२३ **नश्चापदान्तस्य झलि** । ।८।३।३२। नस्य मस्य चापदान्तस्य झल्यनुस्वारः । यशांसि । आक्रंस्यते । 'झलि' किम्–नम्यते । १२४ **अनुस्वारस्य ययि परसवर्णः** । ।८।४।५८। स्पष्टम्। अङ्कितः । अञ्चितः । कुण्ठितः । शान्तः । गुम्फितः । 'कुर्वन्ति' इत्यत्र णत्वे प्राप्ते तस्यासिद्धत्वादनुस्वारे परसवर्णे च कृते तस्यासिद्धत्वान्न णत्वम् १२५ **वा पदान्तस्य** । ।८।४।५९ पदान्तस्यानुस्वारस्य ययि परे परसवर्णो वा स्यात् । त्वङ्करोषि, त्वं करोषि । संय्यन्ता, संयन्ता । सव्वँत्सरः, संवत्सरः । यलँ्लोकम्, यं लोकम् । अत्रानुस्वारस्य पक्षेऽनुनासिका यवलाः । १२६ **मो राजि समः क्वौ** । ।८।३।२५। क्विबन्ते राजतौ परे समो मस्य

---

3. कुर्वन्ति – रषाभ्यां नो णस्समानपदे ८–४–१ अट्कुप्वाङ्नुम्व्यवायेऽपि ८–४–२ इति नस्य णत्वं प्राप्तं नश्चापदान्तस्य झलि ८–३–२४ इति अनुस्वारश्च प्राप्तः, परत्वाण्णत्वे, असिद्धत्वादनुस्वारः। तस्य अनुस्वारस्य ययीति परसवर्णेन पुनर्नकारः प्राप्तः। तस्य अट्कुप्वाङिति णत्वे कर्तव्ये त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धं स्यादिति अनुस्वारस्येत्यस्य परत्वेन असिद्धत्वान्न णत्वम् । ननु लक्ष्ये लक्षणं सकृदेव प्रवर्तते नासकृदिति न्यायात्, प्रथमत एव णत्वमाजिगमिषदनुस्वारेण बाधितम् । अतः कथं पुनर्नस्य णत्वप्राप्तिः, परसवर्णेन बाधिताभवितुमिति चेत् – उच्यते, लक्ष्ये लक्षणस्य प्रवृत्तिर्नाम स्वायत्तकार्यकरणम् । अत्र तु णत्वरूपं स्वायत्तं कार्यम्, अट्कुप्वाङिति लक्षणं कुर्वन्तीति लक्ष्ये नाकरोदिति न दोष इति । ननु शास्त्रासिद्धिपक्षे भवतु भवदुक्तरीत्या तद्दोषवारणं कथं कार्यासिद्धिपक्षे ब्रूहीति चेत् तर्हि झोन्त इति अन्तादेशीयनकारस्य पुराणत्वप्राप्तिः। अधुना तु परसवर्णनकारस्येति विभिन्नलक्ष्यत्वान्न दोष इति विद्धि ।

म एव स्यात् । सम्राट् । १२७ **हे मपरे वा** । ।८।३।२६। मपरे हकारे परे मस्य म एव स्याद्वा । ह्वल, ह्मल चलने। किम् ह्मलयति, किं ह्मलयति । **'यवलपरे यवला वेति वक्तव्यम्'** (वा ४९०२) १२८ **यथासंख्यमनुदेशः समानाम्** । ।१।३।१०। समसम्बन्धी विधिर्यथासंख्यं स्यात् । कियँ ह्यः, किं ह्यः । किवँ ह्वलयति, किं ह्वलयति । किलँ ह्लादयति, किं ह्लादयति । १२९ **नपरे नः** । ।८।६।२७। नपरे हकारे परे मस्य नः स्याद्वा । किन् ह्नुते, किं ह्नुते । १३० **ङ्णोः कुक्टुक्शरि** । ।८।३।२८। ङकारणकारयोः कुक्टुकावागमौ वा स्तः शरि । कुक्टुकोरसिद्धत्वाज्जश्त्वं न । **'चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्'** (वा ५०२३) पौष्करसादिराचार्यः । प्राङ्ख् षष्ठः, प्राङ्क्षष्ठः, प्राङ् षष्ठः । सुगण्ठ् षष्ठः, सुगण्ट् षष्ठः, सुगण् षष्ठः । १३१ **डः सि धुट्** । ।८।३।२९। डात्परस्य सस्य धुड् वा स्यात् । षट्त् सन्तः, षट् सन्तः । १३२ **नश्च** । ।८।३।३०। नकारान्तात्परस्य सस्य धुड् वा स्यात् । सन्त्सः, सन्सः । १३३ **शि तुक्** । ८।३।३१। पदान्तस्य नस्य शे परे तुग्वा स्यात् । 'शश्छोऽटि' (सू १२०) इति छत्वविकल्पः । पक्षे 'झरो झरि–' (सू ७१) इति चलोपः । सञ्छम्भुः, सञ्च्छम्भुः,सञ्च् शम्भुः, सञ् शम्भुः ।।

अछौ अचछा अचशा अशाविति चतुष्टयम् ।
रूपाणमिह तुक्छत्वचलोपानां विकल्पनात् ।।

१३४ **ङमो ह्रस्वादचि ङमुण् नित्यम्** । ।८।३।३२। ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो नित्यं ङमुडागमः स्यात् । प्रत्यङ्ङात्मा । सुगण्णीशः । सन्नच्युतः । १३५ **समः सुटि** ।८।३।५। समो रुः स्यात्सुटि । 'अलोऽन्त्यस्य' (सू ४२) । १३६ **अत्रानुनासिकः पूर्वस्य तु वा** । ।८।३।२। अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा स्यात् । १३७ **अनुनासिकात् परोऽनुस्वारः** । ।८।३।४। अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः स्यात् । 'खरवसानयोर्विसर्जनीयः' (सू ७६) । १३८ **विसर्जनीयस्य सः** । ।८।३।३४। खरि विसर्जनीयस्य सः स्यात् । एतदपवादे 'वा शरि' (सू १५१) इति पाक्षिके विसर्गे प्राप्ते **'संपुंकानां सो वक्तव्यः'** (वा ४८९२) सँस्स्कर्ता संस्कर्ता । ' समो वा लोपमेके ' इति भाष्यम् । लोपस्यापि रुप्रकरणस्थत्वादनुस्वारानुनासिकाभ्यामेकसकारं रूपद्वयम् । द्विसकारं तूक्तमेव ।

तत्र 'अनचि च ' (सू ४८) इति सकारस्य द्वित्वपक्षे त्रिसकारमपि रूपद्वयम् । अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमानामकारोपरि शर्षु च पाठस्योपसंख्यातत्वेनानुस्वारस्याप्यच्त्वात् । अनुनासिकवतां त्रयाणां 'शरः खयः' (वा ५०१९) इति कद्वित्वे षट् । अनुस्वारवतामनुस्वारस्यापि द्वित्वे द्वादश । एषामष्टादशानां तकारस्य द्वित्वे वचनान्तरेण पुनर्द्वित्वे चैकतं द्वितं त्रितमिति चतुष्पञ्चाशत् । अणोऽनुनासिकत्वेऽष्टोत्तरं शतम् ।१३९ **पुमः खय्यम्परे** । ।८।३।६। अम्परे खयि पुम्शब्दस्य रुः व्युत्पत्तिपक्षे 'अप्रत्ययस्य' (सू १५५) इति षत्वपर्युदासात्, ᳲ **क ᳲपयोः** प्राप्तौ, अव्युत्पत्तिपक्षे तु षत्वप्राप्तौ,**'संपुंकानाम्–'** (वा ४८९२) इति सः । पुँस्कोकिलः, पुंस्कोकिलः । पुँस्पुत्रः, पुंस्पुत्रः । 'अम्परे' किम् पुंक्षीरम् । ' खयि ' किम् । पुंदासः । **'ख्याञादेशे न'** (वा १५९१) पुंख्यानम् । १४० **नश्छव्यप्रशान्** । ।८।३।७। अम्परे छवि नकारान्तस्य पदस्य रुः स्यात्, न तु प्रशान्शब्दस्य । विसर्गः। सत्वम् । श्चुत्वम् । शार्ङ्गिँ छन्धि, शार्ङ्गिंश्छिन्धि । चक्रिँस्त्रायस्व चक्रिंस्त्रायस्व । 'पदस्य ' किम् । हन्ति । 'अम्परे ' किम् । सन्त्सरुः । संत्सरुः खड्गमुष्टिः । 'अप्रशान्' किम् । प्रशान्तनोति । १४१ **नॄन्पे** । ।८।३।१०। नॄन् इत्यस्य रुः स्याद्वा पकारे परे । १४२ **कुप्वोᳲ क ᳲपौ च** । ।८।३।३७। कवर्गे पवर्गे च परे विसर्जनीयस्य क्रमाज्जिह्वामूलीयोपध्मानीयौ स्तः । चाद्विसर्गः । येन नाप्राप्तन्यायेन 'विसर्जनीयस्य सः' (सू १३८) इत्यस्यापवादोऽयम् । नतु 'शर्परे विसर्जनीयः' (सू १५०) इत्यस्य । तेन 'वासः क्षौमम्' इत्यादौ विसर्ग एव । नॄँ ᳲपाहि, नॄंᳲपाहि, नॄँःपाहि, नॄंःपाहि, नॄन्पाहि ।१४३ **कानाम्रेडिते** । ।८।३।१२। कान्नकारस्य रुः स्यादाम्रेडिते परे । **'संपुंकानाम्'** (वा ४८९२) इति सः । यद्वा १४४ **कस्कादिषु च** । ।८।३।४८।

ᳲ कᳲपयोरपवादः। एष्विण उत्तरस्य विसर्गस्य षः स्यात् । अन्त्यस्य तु सः । काँस्कान्, कांस्कान् । कस्कः । कौतस्कुतः सर्पिष्कुण्डिका । धनुष्कपालम् । आकृतिगणोऽयम् । १४५ **संहितायाम्** । ।६।१।७२। इत्यधिकृत्य । १४६ **छे च** । ।६।१।७३। ह्रस्वस्य छे परे तुगागमः स्यात्संहितायाम् । श्चुत्वस्यासिद्धत्वाज्जश्त्वेन दः । ततश्चर्त्वस्यासिद्धत्वात्पूर्वं श्चुत्वेन जः । तस्य चर्त्वेन चः । श्चुत्वस्यासिद्धत्वात् 'चोः कुः ' (सू ३७८) इति कुत्वं न । स्वच्छाया । शिवच्छाया । १४७ **आङ्माङोश्च** । ६।१।७४। एतयोश्छे परे तुक्स्यात् । 'पदान्ताद्वा ' (सू १४९) इति

विकल्पापवादः । आच्छादयति । माच्छिदत् । १४८ **दीर्घात्** । ।६।१।७५। दीर्घाच्छे परे तुक्स्यात् । दीर्घस्यायं तुक्, न तु छस्य । '-सेनासुराच्छाया-' (सू ८२८) इति ज्ञापकात् । चेच्छिद्यते । १४९ **पदान्ताद्वा** । ।६।१।७६। दीर्घात्पदान्ताच्छे परे तुग्वा स्यात्। लक्ष्मीच्छाया, लक्ष्मीछाया ।।

।। **इति हल्सन्धिप्रकरणम्** ।।

---

4. व्युत्पत्तिपक्षे तु अप्रत्ययस्येति षत्वपर्युदासात्- अस्मिन् शास्त्रे व्युत्पत्तिपक्षोऽव्युत्पत्तिपक्षश्चेति पक्षद्वयमस्ति, तत्र उणादिषु सर्वेषामपि शब्दानां प्रकृतिप्रत्यययोगेन कस्य चनावयवार्थस्य प्रवचनं व्युत्पत्तिपक्षः। प्रकृतिप्रत्यययोगं विनैव रूढ्या कस्य चनार्थस्य प्रवचनमव्युत्पत्तिपक्षः। प्रकृते पूञो डुम् सुन्निति पूञः प्रकृतेः डुम्सुन्प्रत्यययोगेन निष्पन्नः पुंशब्दः पवित्ररूपावयवार्थबोधक इति व्युत्पत्तिपक्षवादिनः। पुमिति रूढ्यैव पुरुषादर्थबोधक इत्यव्युत्पत्तिपक्षवादिनः। उभयत्रापि पुंमांश्चासौ कोकिलश्च पुंस्कोकिल इति विग्रहः। पुम् कोकिलः इति स्थिते पुमः खयीति मस्य रुः, रोः पूर्वस्मात्परोऽनुस्वारः, आगमः पुंरु कोकिलः । इदुदुपधस्य चाप्रत्ययस्येति अव्युत्पत्तिपक्षे उदुपधस्य विसर्गस्य षत्वं प्राप्तम् । न च अलोन्त्यात्पूर्व उपधेति अन्त्यालो विसर्गस्य पूर्वानुस्वार एवोपधा। तत्कथमत्र उपधात्वम्, पुमुकारस्येति शङ्क्यम् । इदुदुपधस्येति सुत्रदृष्ट्या अनुनासिकादिति सूत्रस्यासिद्धत्वेन अनुस्वारस्यासिद्धत्वात् । व्युत्पत्तिपक्षे तु पुंः कोकिल इत्यत्र विसर्गस्य डुम्सुन् प्रत्ययावयवमकारस्थानिकादेशत्वेन स्थानिवद्भावेन प्रत्ययत्वात्. अप्रत्ययस्येति पर्युदासेन प्रत्ययभिन्नस्येत्यर्थादत्र विसर्गस्य न षत्वं प्राप्नोति। किन्तु कुप्वो कपौचेति अःकः, प्राप्तः, पुंः पुत्र इत्यत्रः अः पः प्राप्तः। तदुभयं निवार्य सम्पुङ्कानामिति विसर्गस्य सः । पुंस्कोकिलः। पुंस्पुत्र इति च भवति। ननु पूञो डुम्सुन्निति पुम्स्शब्दोऽयम्। अत एव पुंसोऽसुङिति निर्देशः। अन्यथा पुम्शब्दश्चेत् पुमोऽसुङित्येव पठ्येत। तथा च पुंस्कोकिलः पुंस्कोकिल इति भवत्येवेति, किमनेन सम्पुङ्कानामिति वार्तिके पुं ग्रहणेन इति चेत् ससजुषोरुरिति सरुत्वे तस्य रोः पुनर्विसर्जनीये तस्य चअः के प्राप्ते तद्वारणार्थमिति विद्धि। ननु पदान्तसस्य रुत्वं विहितम् । अत्र तु पुंस् इति न पदं सुप्तिङन्तं पदमिति परिभाषितत्वादिति चेत् न - समासे विभक्त्यादीनां लुप्तत्वेऽपि प्रत्ययलोपे प्रत्ययलक्षणमिति वा स्थानिवद्भावेन वा पुंसः पदत्वं स्यादेव। अन्यथा कतीत्यादयोऽपि न पदानि स्युः। ननु पुमः खयीति सूत्रं व्यर्थमिति चेत् न। अनुनासिकवद्रूपसिध्यर्थमावश्यकत्वात्। किञ्च, प्रकृतेऽपि पुंस् इत्यत्र रुत्वात्पूर्व संयोगान्तस्य लोपस्स्यात्। न च परत्वाद्रुत्वं शङ्क्यम्, तस्यासिद्धत्वात्। अतः अनुस्वारवद्रूपसिध्यर्थमपीदमावश्यकम्। अत एव पाणिनिरपि संयोगान्तलोपं कृत्वा पुम इति पुम्शब्दषष्ठीं निर्दिदेशेति सूक्ष्मदृष्ट्यावधेयम्, पुंसो सुङिति निर्देशस्तु सर्वनामस्थानपरकत्वेन पुंसस्संयोगान्तपदत्वाभावात्सस्य लोपो न स्यादिति सर्वनामस्थानस्य सुप्त्वेन तदन्तस्यैव पदत्वात्।

5. न श्छव्यप्रशान् पदाङ्गाधिकारे तदन्तविधेरभ्युपगमात्, अस्य सूत्रस्य पदाधिकारीयत्वात् न इत्यस्य नान्तस्येत्यर्थः। अप्रशानित्यप्यत्र लिङ्गम्। तथा हि। न इत्यस्य तदर्थानभिधाने नान्तस्य प्रशान्शन्दस्य रुप्राप्तिरेव नास्तीति कृत्वा, अप्रशानिति निषेधस्य आनर्थक्यात् ।

6. येन नाप्राप्तिन्यायेन (येन नाप्राप्तौ यो विधिरारभ्यते स तस्यैव बाधको नेतरस्येति न्यायेन) येन सामान्यशास्त्रेण नाप्राप्तिः कस्यचिद्विधेरत्यन्तप्राप्तिर्भवति तत्र तस्यैव सामान्यशास्त्रस्य सः विशेषविधिशास्त्रं बाधकं नेतरस्य यत्किञ्चिद्विधिप्रापकस्य शास्त्रस्य न बाधकमित्यर्थः। प्रकृते विसर्जनीयस्य स इति सामान्यशास्त्रेण विसर्जनीयस्थानिकसादेशविधेरत्यन्तप्राप्तौ यो विधिः कुप्वोᳵकᳶपौ चेति ᳵक ᳶ पविधिरारभ्यते। सः कुप्वोरिति विधिः तस्यैव विसर्जनीयस्य स इत्यस्य बाधकः भवति। इतरस्य तस्मादन्यस्य शर्परे विसर्जनीयस्य न। यतस्तेन विसर्जनीयस्थानिकविसर्जनीयादेशस्य ईषत्प्राप्तत्वात्। अयम्भावः खर्परकत्वेन जायमानं विसर्जनीयस्य सत्वं शर्परकखर्परकत्वेन जायमानं विसर्जनीयस्य विसर्जनीयत्वम्। अतः उभयकार्यमध्ये सत्वं प्रचुरं सामान्यत्वात्, विसर्जनीयत्वमत्यल्पं विशेषत्वात्। ततः यच्छास्त्रं विसर्जनीयस्य बाहुल्येन सत्वं जनयति तदनेनापवाद्यते। यत्पुनः, विसर्जनीयत्वमल्पशो जनयति तन्न बाध्यते। तत्रैवापवादशास्त्रस्य चरितार्थत्वादिति गूढाभिसन्धिः। तक्र कौण्डिन्यन्यायमूलकोऽयमपवाद इति भावः।

7. नॄन् पे ननु नॄन्नकारस्य रोरभावपक्षे नॄन् पाहीति रोरादेशपक्षे अत्रानुनासिक इति अनुनासिकपक्षे नॄँः पाहीति नॄँ ᳶ पाहीति च रूपाणां सिद्धत्वेऽपि अनुनासिकाभावपक्षे अनुनासिकात्परोऽनुस्वार इत्यनुस्वारस्य रोः पूर्वस्मात्परस्यागमस्य भाव्यत्वेन नॄंः पाहि नॄं पाहीत्येव रूपद्वयं सिद्धचेन्न तु कैमुदीलिखितरीत्या नॄ पाहि नॄः पाहीति रूपद्वयं सिद्ध्यतीति चेत्तथैव। अक्षरविन्यासकर्तृप्रमादापतितमिदं रूपद्वयमिति विद्धि ।

8. कस्कादिषु च। अन्यत्र तु सः अन्यत्रेत्यस्य कस्कादिष्विणोऽन्यस्मात्परस्य विसर्गस्येत्यर्थः। न पुनः कस्कादिगणपठितेभ्य इतरत्र इणः परस्य विसर्गस्य सस्स्यादित्यर्थ इति भ्रमितव्यम्। पाशकल्पककाम्येष्विति सर्पिष्पाश इत्यादिरूपासिद्धिप्रसङ्गात् । कांस्कानित्यत्र संपुंकानामिति वार्तिके कान्ग्रहणाभावेऽपि सत्वं स्यादिति पक्षान्तरमाविर्भावयितुं विन्यस्तस्य यद्वेत्यस्य नैरर्थक्याच्च । कस्कादिगणे अयस्कान्त इत्याद्युदाहरणेषु इण्भिन्नोत्तरस्य विसर्गस्य सत्वसिद्धये पुनः पूर्वोक्तार्थस्वीकारस्यावश्यकत्वाच्चेति ।

9. सेना सुराच्छायेति ज्ञापकात् । यदि दीर्घस्य तुक् तर्हि तस्य श्चुत्वेन चकारे प्रथमतश्चकारः पश्चात् छकारश्च श्रूयते न च खरि चेति छस्य चर्त्वेन चकारे कृते चकारद्वयमेव श्रूयतेति वाच्यम् । छमनुसृत्यागतस्तुक् छसन्निपातादेव श्चुत्वं प्राप्य चकारीभूय छस्य चर्त्वं सम्पादयतीत्युक्ते सन्निपातपरिभाषाविरोधात् । न च खरि चेति चर्त्वं श्चुत्वात्पूर्वमेव कर्तव्यम्। तथात्वे प्रथमत एव छस्य चः पश्चात्तुकश्चुत्वेन चः। तथा च चकारद्वयं श्रूयत एवेति वाच्यम्। श्चुत्वदृष्ट्या चर्त्वस्यासिद्धत्वेन प्रथमत एव तुकश्चुत्वं स्यात्। किञ्च तुकोऽपि छमनुसृत्यागतत्वेन छ विघातकत्वमनुपपन्नं चर्त्वसम्पादनद्वारेति पूर्वोक्तपरिभाषाविरोधस्तदवस्थ एव । श्चुत्वस्यासिद्धत्वा च्चोः कुरिति कुत्वं नेति। ननु श्चुत्वं कृत्वा पश्चात् चर्त्वेन चकारः कृतोऽपि तेन चर्त्वस्यासिद्धत्वात्कुत्वं नेति वाच्यमिति चेन्मैवम्। चर्त्वस्यासिद्धत्वेऽपि जकारस्य कुत्वं दुर्वारमेव। अतः जकारस्यापि कुत्वं वारयितुं प्रथमतश्चुत्वस्यैवासिद्धत्वमित्युक्तम् ।

**इति हल् सन्धिः**

# अथ विसर्गसन्धिप्रकरणम् ।६।

'विसर्जनीयस्य सः' (सू १३८) । विष्णुस्त्राता । १५० **शर्परे विसर्जनीयः।** ।८।३।३५। शर्परे खरि विसर्जनीयस्य विसर्जनीयः न त्वन्यत् । कः त्सरुः । 'घनाघनः क्षोभणः' । इह यथायथं सत्वं जिह्वामूलीयश्च न । १५१ **वा शरि** । ।८।३।३६। शरि परे विसर्जनीयस्य विसर्जनीय एव वा स्यात् । हरिः शेते, हरिश्शेते **'खपरे शरि वा विसर्गलोपो वक्तव्य'** (वा ४९०६) राम स्थाता, रामःस्थाता । हरि स्फुरति, हरिः स्फुरति । पक्षे विसर्गे सत्वे च त्रैरूप्यम् । 'कुप्वो ≍क ≍पौ च '।(सू १४२) । क करोति, कः≍करोति । क खनति, क≍ खनति । क पचति, क≍ पचति। क फलति क≍ फलति । १५२ **सोऽपदादौ** । ।८।३।३८। विसर्जनीयस्य सः स्यादपदाद्योः कुप्वोः परयोः । 'पाश–कल्पक काम्येष्विति वाच्यम्' (वा ५०३३) । पयस्पाशम् । यशस्कल्पम् । यशस्कम् । यशस्काम्यति । **'अनव्ययस्येति वाच्यम्'** (वा ४९०१) । प्रातःकल्पम् । **'काम्ये रोरेवेति वाच्यम्'** (वा ४९०२) नेह । गीःकाम्यति । १५३ **इणः षः** । ।८।३।३९। इणः परस्य विसर्गस्य षकारः स्यात्पूर्वविषये । सर्पिष्पाशम् । सर्पिष्कल्पम् । सर्पिष्कम् । सर्पिष्काम्यति। १५४ **नमस्पुरसोर्गत्योः** । ।८।३।४०। गतिसंज्ञयोरनयोर्विसर्गस्य सः कुप्वोः परयोः । नमस्करोति । साक्षात्प्रभृतित्वात्कृञो योगे विभाषा गतिसंज्ञा । तदभावेनमः करोति । 'पुरोऽव्ययम्' (सू ७६८) इति नित्यं गतिसंज्ञा । पुरस्करोति । अगतित्वान्नेह । पूः पुरौ पुरः प्रवेष्टव्याः । १५५ **इदुदुपधस्य चाप्रत्ययस्य।** ।८।३।४१। इकारोकारोपधस्याप्रत्ययस्य विसर्गस्य षः स्यात्कुप्वोः । निष्प्रत्यूहम् । आविष्कृतम् । दुष्कृतम् । 'अप्रत्ययस्य' किम्।अग्निः करोति । वायुः करोति । **'एकादेशशास्त्रनिमित्तकस्य न षत्वम् । कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठात्'** (वा ४९१५) । तेनेह न–मातुः कृपा । 'मुहुसः प्रतिषेधः' (वा ४९११) मुहुः कामा । १५६ **तिरसोऽन्यतरस्याम्** । ।८।३।४२। तिरसो विसर्गस्य सो वा स्यात्कुप्वोः । तिरस्कर्ता, तिरःकर्ता । १५७ **द्विस्त्रिश्चतुरिति कृत्वोऽर्थे** । ।८।३।४३। कृत्वोऽर्थे वर्तमानानामेषां विसर्गस्य षकारो वा स्यात्कुप्वोः । द्विष्करोति, द्विःकरोति । इत्यादि । 'कृत्वोऽर्थे किम्–चतुष्कपालः । १५८ **इसुसोः सामर्थ्ये** ।।८।३।४४। इसुसोर्विसर्गस्य षः स्याद्वाकुप्वोः । सर्पिष्करोति, सर्पिः करोति । धनुष्करोति, धनुः करोति । सामर्थ्यमिह व्यपेक्षा । 'सामर्थ्ये' किम्–तिष्ठतु सर्पिः, पिब त्वमुदकम् । १५९

**नित्यं समासेऽनुत्तरपदस्थस्य** । ।८।३।४५। इसुसोर्विसर्गस्यानुत्तरपदस्थस्य समासे नित्यं षः स्यात्कुप्वोः परयोः । सर्पिष्कुण्डिका । 'अनुत्तरपदस्थस्य ' इति किम्–परमसर्पिःकुण्डिका । कस्कादिषु सर्पिष्कुण्डिकाशब्दोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थो, व्यपेक्षायां नित्यार्थश्च । १६० **अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य** ।।८।३।४६। अकारादुत्तरस्यानव्ययस्य विसर्गस्य समासे नित्यं सकारादेशः स्यात्करोत्यादिषु परेषु । न तूत्तरपदस्थस्य । अयस्कारः । अयस्कामः । अयस्कंसः । अयस्पात्रम् । अयस्सहिता कुशा अयस्कुशा । अयस्कर्णी । ' अतः' किम्–गीःकारः । 'अनव्ययस्य' किम् स्वःकामः । 'समासे ' किम्–यशः करोति । 'अनुत्तरपदस्थस्य ' किम्–परमयशःकारः । १६१ **अधश्शिरसी पदे** । ।८।३।४७। एतयोर्विसर्गस्य सादेशः स्यात्पदशब्दे परे । अधस्पदम् । शिरस्पदम् । समास इत्येव । अधः पदम् । शिरः पदम् । अनुत्तरपदस्थस्येत्येव । परमशिरःपदम् । **कस्कादिषु च** । भास्करः ।।

।। इति विसर्गसन्धिप्रकरणम् ।।

## अथ स्वादिसन्धिप्रकरणम् ।७।

'स्वौजसमौट्' (सू १८३) इति सुप्रत्यये 'शिवस् अर्च्यः ' इति स्थिते । १६२ **ससजुषो रुः** । ।८।२।६६। पदान्तस्य सस्य 'सजुष्' शब्दस्य च रुः स्यात् । जश्त्वापवादः । **१६३ अतो रोरप्लुतादप्लुते** । ।६।१।११३। अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति । 'भोभगोअघो–' (सू १६७) इति प्राप्तस्य यत्वस्यापवादः । उत्वं प्रति रुत्वस्यासिद्धत्वं तु न भवति, रुत्वमनूद्योत्वविधेः सामर्थ्यात् ।

---

अथ स्वादिसन्धिः

1. विष्णुस्त्राता– ननु स स जुषोरुरिति रुत्वं पुनः किमिति नात्र स्यादिति चेत्, लक्ष्ये लक्षणं सकृदेव प्रवर्तते नासकृदिति निषेधादिति विद्धि । ननु सुप्सकारस्य पुरा रुत्वमधुना विसर्जनीयादेशसकारस्येति लक्ष्यभेदान्न त्वदुक्तो निषेध इति चेत् न । स्थानिवद्भावेन अस्मिन्नपि सकारे सुप्त्वसद्भावादयमपि सुप्सकार एवेति । ननु अयं सकारो न सुप् इति मया नोक्तम्। किन्तु सुप्प्रत्याहारघटकीभूतो यस्सकारस्स नायं स इति मयोक्तमिति चेत्, न। आकृत्युच्चारणप्रयुक्तभेदाभावात् सकारद्वयस्यापि एकसकारत्वमेवेति ।

१६४ **प्रथमयोः पूर्वसवर्णः** । ६।१।१०२। अकः प्रथमाद्वितीययोरचि परे पूर्वसवर्णदीर्घ एकादेशः स्यात् । इति प्राप्ते ।

---

ननु स्थानित्वादेशत्वप्रयुक्तभेदस्य सुप्सकारस्य विसर्जनीयसकारस्य च विद्यमानत्वान्नैकत्वमिति चेत् – तर्हि रोरादेशस्य विसर्जनीयसकारोऽपि स्थान्येवेति न तादृगपि भेदः। ननु र्वादेशे कृते हि विसर्जनीयस्य स्थानित्वम् । अतः र्वादेशे कर्तव्ये एव।लक्ष्ये लक्षणपरिभाषाप्रवृत्त्या र्वादेश एव न भवेत्, इति कृत्वा नास्ति स्थानित्वं विसर्जनीयस्येति सकारयोर्भेदः स्थानित्वादेशत्वरूपोऽस्त्येवेति चेत्तर्हि अनवस्थारूपदोषापत्तेर्न विसर्जनीयसस्य रुत्वम्। तथा हि, रुत्वे कृते पुनर्विसर्जनीयः तस्य पुनस्सत्वन्तस्य पुनारुत्वन्तस्य पुनर्विसर्जनीय इत्यनवस्थानात्। यद्वा रुत्वं प्रति विसर्जनीयस्य स इत्यस्यासिद्धत्वेन न रुत्वमिति विद्धि। ननु "ससजुषोरु र खरि" 'अवसाने विसर्जनीयः' इति सूत्रयित्वा 'विसर्जनीयस्य स' इति सूत्रं त्यज्यताम् लाघवादिति चेत् मैवम् । (शर्परे विसर्जनीयः) वा शरीति (सूत्रद्वयवशात् जातानां कः त्सरुः) हरिः शेते इत्यादिरूपान्तराणामसिद्धेः। ननु ससजुषोरु रखयि इति सूत्रयित्वा "वा शरि" इत्यस्य शरि परतः रोर्वा विसर्जनीय इत्यर्थः प्रोक्तव्य इति चेत् मैवम्। हरिश्शेत इति रूपान्तरासिद्धेः, तथात्वे हरिश्शेत इत्येव स्यादिति। ननु शरवसानयोर्विसर्जनीय इति सूत्रयित्वा वा शरीत्यस्य कौमुद्युक्तार्थ एव वाच्य इति चेन्मैवम् । तथा हि– हरिश्शेत इत्येतस्यासिद्धेः। ननु वा शरीत्यस्य शरि परतस्स सजुषोरुर्वेति वाच्यम् । तथा च ससजुषोरु र खयि, वा शरि, शरवसानयो र्विसर्जनीयः, इति सूत्रत्रये स्थिते हरिस् शेते इत्यत्र रुत्वस्य वा शरी त्यनेन वैकल्पिकत्वेन रुत्वे कृते पश्चाद्विसर्जनीये च कृते हरिः शेत इति, रुत्वे न कृते स्तोश्चुना श्चुरिति सस्य श्चुत्वे हरिश्शेत इति च रूपद्वयं सिद्ध्यतीति चेत् मैवम्। शर्परे विसर्जनीय इति कः त्सरुः इत्यादिरूपासिद्धेः। ननु तर्हि शर्परेति विसर्जनीय इति सूत्रमप्युत्सृज्य ससजुषोरखयि शर्परे वा शरि शरवसानयोर्विसर्जनीय इति सूत्रयित्वा शर्परे सूत्रस्य शर्परके खयि परतस्तु रुस्स्यादित्यर्थो वाच्य इति चेत् मैवमपि, अग्निः करोतीत्यादौ खयि परतोऽपि सस्य रुत्वेन रुत्वस्य च विसर्जनीयेन तस्य च कुप्वोः×कः×पौ चेति जिह्वामूलीयादिश्रवणात्। ननु कुप्वोः क×पौ×चेत्यस्य कवर्गे पवर्गे च परे ससजुषोर्जिह्वामूलीयोपध्मानीयौ स्त इत्यर्थो वाच्यः। एवञ्च सोपदादौ इणष्ष इत्यादिषु यत्र यत्र विसर्जनीयस्य सत्वषत्वादिकार्यं श्रूयते, तत्र तत्र तत्तत्कार्यं सकारस्यैव वक्तव्यमिति चेन्मैवमपि, कु×प्वो×परतो विसर्गश्रवणस्यापीष्टत्वात्। ननु तदर्थमपि कुप्वोरिति सूत्रे चात्सस्यैव विसर्जनीयो वक्तव्य इति चेत् यथाकथञ्चिदेतत्न्यासस्य निर्दुष्टत्वेऽपि अष्टाध्यायीगतपौर्वापर्यविनिमयाद्भाष्यविरोधाच्चानङ्गीकार्यत्वमेवेति। केचित्तु रस्सः खरीति विन्यासः कर्तव्य इत्याहुः। एतन्मतेऽपि यत्र यत्र वा शरीत्यदौ विसर्जनीयस्य यद्यद्यत्कार्यविधानं तत्र तत्र रोरेव वाच्यम्। एवमपि रोस्सुपि गीर्षु इति न सिद्ध्येत् । तदर्थं तत्सूत्रस्य रोरेव सप्तमी बहुवचने सत्वं स्यादित्यर्थः कल्प्यः,तथापि भाष्यादिविरोधस्तदवस्थ एव। तस्माद्यथास्थितं रमणीयम् ।

१६५ **नादिचि** । ।६।१।१०४। अवर्णादिचि परे न पूर्वसवर्णदीर्घः । 'आद् गुणः' (सू ६९) 'एङः पदान्तादति ' (सू ८६) शिवोऽर्च्यः। 'अतः' इति तपरः किम्-देवा अत्र। 'अतीति तपरः किम्-श्व आगन्ता। 'अप्लुतात् ' किम्- एहि सुस्रोत ३ अत्र स्नाहि । प्लुतस्यासिद्धत्वादतः परोऽयम् । 'अप्लुतात्' इति विशेषणे तु तत्सामर्थ्यान्नासिद्धत्वम् । तपरकरणस्य तु न सामर्थ्यम्, दीर्घनिवृत्त्या चरितार्थत्वात् । 'अप्लुते' इति किम्-तिष्ठतु पय अ ३ ग्निदत्त । 'गुरोरनृतः-' (सू ९७) इति प्लुतः ।

---

2. एहि सुश्रोत अत्र स्नाहि। सुश्रोत इति कश्चन तस्य सम्बुद्धिः, सुस्रोतस् इति स्थिते "दूराद्धूते च" इति टेरस् इत्यस्य प्लुतत्वम्। ससजुषोरुरिति ततस्सस्य रुत्वम्। न चात्र पूर्वत्रासिद्धमिति प्रथमत एव रुत्वं पश्चात्प्लुत इति वाच्यम्। त्रैपादिकपरशास्त्रस्य दूराद्धूत इत्यस्य प्रवृत्तावपि ससजुषोरुरित्यस्य प्रवृत्तियोग्यतानपायेन अस्मिन् विभिन्नविषयस्थले पूर्वत्रासिद्धेरभावात्। अन्यथा रुत्वं प्रति नित्यं समास इति षत्वादिकमपि (स) परमसिद्धं भवेत्। ननु भवतु विभिन्नविषयस्थले तदभावः । प्रकृते विभिन्नविषयत्वमेव नास्ति। यस्य प्लुतो विधीयते तत्सस्यैव रुत्वविधानात्। एकस्मिन् शास्त्रे प्रवृत्ते अपरस्य प्रवृत्तियोग्यता यत्र नास्ति, तत्रैवापवाद्यापवादकभाव इति नियमोऽयमपवादस्थल एव, न त्वसिद्धिस्थले। पूर्वापरोभयशास्त्रप्रवृत्तियोग्यताशालिनि एकस्मिन् विषये एकशास्त्रप्रवृत्यनन्तरमपरशास्त्रस्य प्रवृत्तियोग्यतायास्सत्त्वे वा असत्त्वे वा पूर्वत्रासिद्धिः प्रवर्तते इति चेत् - शास्त्रासिद्धिमते स सजुषोरुरित्यस्यैव प्रथमं प्रवृत्तिरस्तु। कार्यसिद्धिमते तु पूर्वपरकार्ययोरुत्वप्लुतयोर्विरोधाभावान्नात्रासिद्धिप्रसक्तिः। परकार्ये प्लुते सिद्धेऽसिद्धे वा रुत्वप्रवृत्तिसम्भवात्, ननु नात्र विरोधः, प्रयोजको हेतुरिति पूर्वमेवोक्तमितिचेत्, भवतु। तथापि पूर्वकार्ये कर्तव्ये परं कार्यं कृतमप्यकृतवत्स्यादिति, परं प्लुतकार्यं प्रथमत एव कर्तव्यम् । पश्चाद्रुत्वप्रवृत्तिस्स्वदृष्टया अप्लुतस्यैव सस्य भवतु, इति यथोक्तं सुष्ठु। सुस्रोतर् अत्र इति स्थिते अतो रोरप्लुत इत्येतावदेव न्यासे कृते एतच्छास्त्रदृष्ट्या त्रैपादिकप्लुतस्यासिद्धत्वेन अतः पर एवायं रुरिति तस्य उस्स्यात् । ननु कृतेऽप्यप्लुतादिति विशेषणे तद्दोषस्तदवस्थ एव। प्लुतस्यासिद्धत्वेन अप्लुतादतः पर एवायं रुरिति आशङ्क्याह । 'अप्लुतादिति विशेषणे' त्वित्यादिकौमुदी। अयमाशयः । अतो रोरिति शास्त्रदृष्ट्या प्लुतस्यासिद्धत्वेन सर्वोऽपि रुरतः परः अप्लुत एव भवति, न तु प्लुत इति कृत्वा, अप्लुतादिति विशेषणं कुर्वन् सूत्रकारः अप्लुताद्दृष्ट्या अप्लुते दृष्ट्या च प्लुतशास्त्रं सिद्धमेवेति ज्ञापितवान्, न तु पुनस्सूत्रं सर्वदेशदृष्ट्या इति। ननु अत इति तपरकरणं व्यर्थीभूय ज्ञापयत्येतदित्यतोऽपि अप्लुतादिति व्यर्थमेवेति शङ्क्याऽऽह, तपरकरणस्य न सामर्थ्यमिति। एकत्र चरितार्थस्य

१६६ **हशि च** । ।६।१।११४। अप्लुतादतः परस्य रोरुः स्याद्धशि। शिवो वन्द्यः । रोरित्युकारानुबन्धग्रहणान्नेह । प्रातरत्र । भ्रातर्गच्छ । 'देवास्' इह इति स्थिते । रुत्वम् ।१६७ **भोभगोअघोअपूर्वस्य योऽशि** ।८।३।१७। एतत्पूर्वकस्य रोर्यादेशः स्यादशि परे । असन्धिः सौत्रः । 'लोपश्शाकल्यस्य" (सू ६७०) देवा इह, देवा यिह। 'अशि' किम्–देवास्सन्ति यद्यपीह यत्वस्यासिद्धत्वाद्विसर्गो लभ्यते तथापि विसर्गस्य स्थानिवद्भावेन रुत्वाद्यत्वं स्यात् । न ह्ययमल्विधिः । रोरिति समुदायरूपाश्रयणात् । भोस्, भगोस्, अघोस्, इति सकारान्ता निपाताः। तेषां रोर्यत्वे कृते ।

---

सामर्थ्योपक्षयात् । अस्मिन् शास्त्रे इदं महदाश्चर्यं यन्निरर्थकस्य सर्वाधिकसामर्थ्यमिति । एतत्सर्वम् अप्लुते किमित्यत्रापि बुद्धिमद्भिस्सुलभेन ऊहनीयमिति, पुनरुक्तभीत्या न विवृतं कौमुदीकारेण । अथ उत्वाभावेन सुस्रोत३र् अत्र इति स्थले भो भगो इति यत्वं लोपश्शाकल्यस्येति लोपः, सुस्रोत३अत्र स्नाहीति रूपम्। यलोपस्य पाक्षिकत्वेन सुस्रोता यत्र स्नाहीत्यपि पाक्षिकं रूपं भवति। एहि स्नाहीत्येतद्द्वयं दूरात्संबोधनज्ञापनार्थं वाक्यद्योतनार्थञ्च।।

स सजुषोरुरित्यत्र रुरिति इत्संज्ञकउकारवद्रेफग्रहणन्तु, रुत्वप्रयुक्तकार्यप्राप्त्यर्थं रुत्वप्रयुक्तकार्यप्राप्तिस्सामान्यरेफस्य माभूदित्येतदर्थञ्च। तेन अवसाने शिवर् इत्यत्र रोरपि खरवसानयोरिति रेफकार्यं विसर्गः। प्रातर् अत्र इत्यत्र प्रातरित्यस्य रेफान्ताव्ययत्वेन तद्रेफस्य रुत्वाभावात् नोत्वम्। अनुबन्धो नाम इत्संज्ञकवर्णः ।

(3) अशि किं? देवास्सन्ति । अशीति नियमाभावे अलि परतोऽपि अ (त्) पूर्वस्य रोर्यस्स्यात्। तेन देवास् सन्ति, रुत्वं देवार् सन्ति परत्वात् भो भगो इति यत्वे कृते, तस्यासिद्धत्वाद्विसर्गः। देवाः सन्ति। विसर्जनीयस्य सत्वं देवास्सन्तीति स्यादेवेति देवास्सन्तीति प्रत्युदाहरणमनुपपन्नमिति मनसि निधाय यद्यपीत्यादिकौमुदी।

अयम्भावः – देवास्सन्तीति स्थले स्थानिवत्सूत्रेण आदेशे विसर्गे स्थानिभूतरुधर्मस्य रुत्वस्य अतिदेशेन विसर्गस्य रुत्वाद्यत्वं स्यात् इति। ननु अनल्विधाविति तन्निषेधात् अलो विधिरल्विधिरिति, षष्ठीसमासाश्रयणे स्थान्यवयवस्य अलः रुरेफस्य यत्वविधानात्। न चाचः परस्मिन्निति स्थानिवद्भावश्शङ्क्यः स्थानिभूताच्पूर्वस्य विधानाभावात् नात्र स्थानिवद्भाव इति चेन्न। **अल्विधिर्नाम** स्थान्यवयवाल्मात्रवृत्तिधर्मपुरस्कारकविधिः। तथा च प्रकृते स्थानी रुः तदवयवोऽल् रेफः, तन्मात्रवृत्तिधर्मः रेफत्वरूपः, तत्पुरस्कारको विधिस्तु खरवसानयोरिति विसर्जनीय एव स्यात्, न तु भो भगो इति यत्वम् । यत्वस्य प्रवृत्तिं प्रति न रत्वस्य प्रयोजकत्वमपि तु रुत्वस्यैव। अत एव हि शिवो वन्द्य इत्यादौ सोरुत्वं प्रातरत्रेत्यादौ रेफस्य नोत्वम्, रुत्वन्तु नाल्मात्रम् । तत्र रेफोकारालद्द्वयसत्त्वात् । अतः स्थानिभूतरुवृत्तिधर्मपुरस्कारकयत्वविधौ कर्तव्ये नानल्विधाविति निषेध इति।

१६८ **व्योर्लघुप्रयत्नतरः शाकटायनस्य** । ।८।३।१८। पदान्तयोर्वकारयकारयोर्लघूच्चारणौ वयौ वा स्तोऽशि परे । यस्योच्चारणे जिह्वाग्रोपाग्रमध्यमूलानां शैथिल्यं जायते स लघूच्चारणः । १६९ **ओतो गार्ग्यस्य** ।८।३।२०। ओकारात्परस्य पदान्तस्यालघुप्रयत्नस्य यकारस्य नित्यं लोपः स्यात् । गार्ग्यग्रहणं पूजार्थम् । भो अच्युत । लघुप्रयत्नपक्षे भोयच्युत । 'पदान्तस्य' किम्–तोयम् । १७० **उञि च पदे** ।८।३।२१। अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोप उञि पदे । स उ एकाग्निः । 'पदे' किम्–तन्त्रयुतम् । वेञः सम्प्रसारणे रूपम् । यदि तु प्रतिपदोक्तो निपात उञिति ग्रहीष्यते, तर्ह्युत्तरार्थं पदग्रहणम् । १७१ **हलि सर्वेषाम्** । ।८।३।२२। भोभगोअघोअपूर्वस्य लघ्वलघूच्चारणस्य यकारस्य लोपःस्याद्धलि सर्वेषां मतेन । भो देवाः । भो लक्ष्मि । भो विद्वद्वृन्द । भगो नमस्ते । अघो याहि । देवा नम्याः । देवा यान्ति । 'हलि' किम्–देवायिह, देवा इह ।

१७२ **रोऽसुपि** । ।८।२।६९। अह्नो रेफादेशः स्यान्न तु सुपि । रोरपवादः । अहरहः । अहर्गणः । 'असुपि' किम्–अहोभ्याम् । अत्र 'अहन्' (सू ४४३) इति रुत्वम् । **'रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्'** (वा ४८४७) अहोरूपम्। गतमहो रात्रिरेषा । एकदेशविकृतस्यानन्यत्वाद्–अहोरात्रः, अहोरथन्तरम् । **'अहरादीनां पत्यादिषु वा रेफः '** (वा ४८५१) । विसर्गापवादः । अहर्पतिः गीर्पतिः धूर्पतिः । पक्षे विसर्गोपध्मानीयौ । १७३ **रो रि** । ।८।३।१४। रेफस्य रेफे परे लोपः स्यात् । १७४ **ढ्रलोपे पूर्वस्य दीर्घोऽणः** । ।६।३।१११। ढरेफौ लोपयतीति तथा तस्मिन्वर्णेऽर्थाद् ढकारे रेफात्मके परे पूर्वस्याणो दीर्घः स्यात् । पुना रमते । हरी रम्यः । शम्भू राजते । 'अणः' किम्–तृढः । वृढः । 'तृहू हिंसायाम् 'वृहू उद्यमने । पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्यैव दीर्घार्थम् । अजर्घाः। लीढः । 'मनस् रथः ' इत्यत्र रुत्वे कृते 'हशि च' (सू १६६) इत्युत्वे ' रो रि ' (सू १७३) इति रेफलोपे च प्राप्ते ।

---

4. **तन्नविधौ।** तन्त्रयुताम् तन्त्रे उतम्। एचोऽयवायावः। तन्त्रम् उतम्, अत्र उतमित्यस्य पदत्वेऽपि, तद्गतोकारमात्रस्य पदत्वाभावात् न यलोपः।

5. **रो रि।** अत्र ढो ढे लोप इति सूत्राल्लोपपदानुवृत्तिः। रः रि इति पदविभागः। र् शब्दस्य षष्ठीसप्तम्यौ विभक्ती। न चात्र रो रिति रुशब्दषष्ठी शङ्कनीया। पुनर् रमत इत्यादौ रुभिन्नरेफस्य रेफे परे लोपाभावप्रसक्तेः। इति स्वादिसन्धिः ।

१७५ **विप्रतिषेधे परं कार्यम्** । ।१।४।२। तुल्यबलविरोधे सति परं कार्यं स्यात् । इति रेफलोपे प्राप्ते । 'पूर्वत्रासिद्धम्' (सू १२) इति 'रो रि ' (सू १७३) इत्यस्यासिद्धत्वादुत्वमेव । मनोरथः । १७६ **एतत्तदोः सुलोपोऽकोरनञ्समासे हलि** । ।६।१।१३२। अककारयोरेतत्तदोर्यः सुस्तस्य लोपः स्याद्धलि न तु नञ्समासे । एष विष्णुः । स शम्भुः । 'अकोः' किम्–एषको रुद्रः । ' अनञ्समासे ' किम्–असशिशवः । 'हलि' किम्–एषोऽत्र । १७७ **सोऽचि लोपे चेत्पादपूरणम्** ।६।१।१३४। 'सस्' इत्येतस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्येत । 'सेमाम विड्ढि प्रभृतिम् य ईशिषे ।'इह ऋक्पाद एव गृह्यते ' इति वामनः । 'अविशेषाच्छ्लोकपादोऽपि ' इत्यपरे । 'सैष दाशराथी रामः' । 'लोपे चेत्' इति किम्– 'स इत्क्षेति' 'स एवमुक्त्वा'। 'सत्येव' इत्यवधारणं तु 'स्यश्छन्दसि बहुलम्' (सू ३५२६) इति पूर्वसूत्राद्बहुलग्रहणानुवृत्त्या लभ्यते । तेनेह न । 'सोऽहमाजन्मशुद्धनाम् ' ।।

**।। इति स्वादिसन्धिप्रकरणम् ।।**

## अथाजन्तपुँल्लिङ्गप्रकरणम् ।८।

१७८ **अर्थवदधातुरप्रत्ययः प्रातिपदिकम्** । ।१।२।४५। धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वाऽर्थवच्छब्दस्वरूपं प्रातिदिकसंज्ञं स्यात् । १७९ **कृत्तद्धितसमासाश्च** । ।१।२।४६। कृत्तद्धितान्तौ समासाश्च प्रातिपदिकसंज्ञाः स्युः । पूर्वसूत्रेण सिद्धे समासग्रहणं नियमार्थम् । यत्र संघाते पूर्वो भागः पदं तस्य चेद्भवति तर्हि समासस्यैव । तेन वाक्यस्य न । १८० **प्रत्ययः** । ।३।१।१। आ पञ्चमपरिसमाप्तेरधिकारोऽयम् १८१ **परश्च** । ।३।१।२। अयमपि तथा । १८२ **ङ्याप्प्रातिपदिकात्** । ।४।१।१। ङ्यन्तादाबन्तात्प्राति– पदिकाच्चेत्या पञ्चमपरिसमाप्तेरधिकारः । **'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्'** (प ७२) इत्येव सिद्धे ङ्याब्ग्रहणं ङ्याबन्तात्तद्धितोत्पत्तिर्यथा स्यान्ङ्याबभ्यां प्राङ् माभूदित्येवमर्थम् । १८३ **स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्या– म्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्** । ।४।१।२। ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः । सुङस्योरुकारेकारौ जशटङपाश्चेतः । १८४ **विभक्तिश्च** । ।१।४।१०४। सुप्तिङौ विभक्तिसंज्ञौ स्तः । तत्र 'सु' 'औ' 'जस्' इत्यादीनां त्रिकाणां प्रथमादयः सप्तम्यन्ताः प्राचां संज्ञाः । ताभिरिहापि व्यवहारः । १८५

**सुपः** । ।१।४।१०३। सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचन संज्ञानि स्युः । १८६ **द्व्येकयोर्द्विवचनैकवचने** । ।१।४।२२। द्वित्वैकत्वयोरेते स्तः । १८७ **बहुषु बहुवचनम्** । ।१।४।२१। बहुत्वे एतत्स्यात् । रुत्वविसर्गौ । रामः । १८८ **सरूपाणा मेकशेष एकविभक्तौ** । ।१।२।६४। एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते । 'प्रथमयोः पूर्वसवर्णः' (सू १६४) ' नादिचि ' (सू १६५) ' वृद्धिरेचि ' (सू ७२) । रामौ ॥

---

**अथ अजन्तपुम्लिङ्गशब्दाः**

1. सू. **सरूपाणामेकशेष एकविभक्तौ** – स्यादेतत्। एतत्सूत्रं विचारितं स्याद्विचार्यत इति यावत्। एकशेष इति समस्तपदं वा? व्यस्तं वा? व्यस्तत्वे एकपदं लुप्तषष्ठीकं वा? लुप्तप्रथमाकं वा? समस्तपरत्वे, एकस्य शेषः एकशेष इति शेषशब्दो भावसाधनः। न चात्रैकदेशान्वयो दुष्ट इति शङ्क्यः, तस्य भाष्यकारैरङ्गीकृतत्वात्। अथ शब्दानुशासनम्। केषां शब्दानामित्यादौ व्यस्तत्वे लुप्तषष्ठीकत्वे एतद्दोषशङ्कैव नास्ति। एकपदस्य लुप्तप्रथमाकत्वे शेषपदं कर्मसाधनम्। इदमेवाभिप्रेत्य एकशिशष्यत इति कैमुद्यामुक्तम्। एकविभक्तावित्यपि न निमित्तसप्तमी, किन्तु परसप्तम्येव। तेन एकविभक्तौ परतस्सरूपाणामिति सारूप्यस्योपलक्षणमेकविभक्ताविति। एकविभक्तौ परतो यानि सरूपाणि तेषामेकश्शिष्यत इत्यर्थोक्तौ स्वसा च स्वसारौ च स्वसार इत्यत्रैकशेषो न स्यात्। जसि परतः पूर्वयोः स्वसा इति स्वसाराविति च पदयोस्सारूप्याभावादत आह–दृष्टानीति। एकविभक्तौ सु औ इत्यादौ प्रत्यये परतः पूर्वं स्वसा स्वसारौ इति स्वसृपदयोरुभयोरपि सारूप्यस्य दृष्टत्वात्। एवमपि जननीवाचिपरिच्छेत्तृवाचिनोर्मातृशब्दयोः एकविभक्तौ सुशस्भ्यां भिसादौ प्रत्यये परतस्सारूप्यस्य दृष्टत्वादेकशेषः स्यादित्यत आह। एवेति। एकस्यामपि विभक्तौ यानि सरूपाण्येव दृष्टानि, न तु विरूपाणि दृष्टानि, तेषामेकशेषः स्यादिति पर्यवसितोऽर्थः। सप्तस्वपि विभक्तिषु परतः येषां शब्दानां न किञ्चदपि वैरूप्यं दृश्यते, तेषां समानानुपूर्वीकाणां (सरूपाणां) शब्दानाम् एकविभक्तौ परतः एकश्शिष्यते। स च

१८९ **चुटू** । ।१।३।७। प्रत्ययाद्यौ चुटू इतौ स्तः । इति १९० **न विभक्तौ तुस्माः** । ।१।३।४। विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः । इति सकारस्य नेत्त्वम् । १९१ **अतो गुणे** । ।६।१।९७। अपदान्तादकाराद् गुणे परतः पररूपमेकादेशः स्यात् । इति प्राप्ते । परत्वात्पूर्वसवर्णदीर्घः । 'अतो गुणे' (सू १९१) इति हि **'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान्** ' (प ६०) इति न्यायेन ' अकः सवर्णे दीर्घः ' (सू ८५) इत्यस्यैवापवादः । न तु 'प्रथमयोः–' (सू १६४) इत्यस्यापि । रामाः । १९२ **एकवचनं संबुद्धिः** । ।२।३।४९। संबोधने प्रथमाया एकवचनं संबुद्धिसंज्ञं स्यात् । १९३ **एङ्ह्रस्वात्संबुद्धेः** । ।६।१।६९। एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते संबुद्धेश्चेत् । सम्बुद्ध्याक्षिप्तस्याङ्गस्यैङ्ह्रस्वाभ्यां विशेषणान्नेह । हे कतरत् कुलेति । हे राम । हे रामौ । हे रामाः । 'एङ् ' ग्रहणं किम्–हे हरे । हे विष्णो । अत्र हि परत्वान्नित्यत्वाच्च संबुद्धिगुणे कृते ह्रस्वात्परत्वं नास्ति ।

---

विभक्तिसन्निहित इति। ननु सरूपाणामित्यस्य समानार्थबोधकानामित्यप्यन्यार्थस्वीकारे मातृशब्दयोस्समानार्थाभावान्नैकशेषो भवेदेवेति कृत्वा व्यर्थमेवेत्यवधारणमिति चेत् न तथा विरूपाणामिति वक्ष्यमाणवार्तिकं प्रत्याख्याय सरूपाणामित्यस्य सरूपाश्च सरूपाश्च सरूपाः, तेषां सरूपाणामित्येकशेषेण रूपशब्दस्य अर्थस्वरूपोभयार्थकत्वेन अर्थद्वयस्वीकारे तु अयम्भवितार्थः। एकविभक्तौ यानि समानानुपूर्वीकाणि विभिन्नार्थबोधकान्यपि दृष्टानि तेषामेक एव शिष्यत इत्येकोऽर्थः। एकविभक्तौ यानि समानार्थबोधकानि विभिन्नानुपूर्वीकाण्यपि दृष्टानि तेषामेकशेष इत्यन्योऽर्थ इति। समानानुपूर्वीकत्वं समानार्थबोधकत्वञ्चोभयमपि नैकत्रेति। अन्यथा सरूपाणामित्यत्रापि एकशेषो न स्यात् विभिन्नार्थकत्वात्। इदमनुगतलक्षणम् एकविभक्तिपरकत्वे सति दृष्टसमानानुपूर्वीकत्वसमानार्थबोधकत्वान्यतरधर्मवतां तदुभयधर्मवताञ्च शब्दानामेकश्शेषो भवति इति । सोऽपि विभक्तौ परत एव एकशेषः। अन्यथा श्रीराम राम रामेत्यादावेकशेषस्स्यात्। एकशेषे विभक्तिपरकत्वस्य हेतुत्वेऽपि कण्ठात्तन्नोक्तमनैमित्तिकत्वेन अन्तरङ्गत्वात् सुबुत्पत्तेः प्रागेकशेषे यथा स्यादिति ।

2. **सू. एङ् ह्रस्वात्सम्बुद्धेः** । अत्र ६–४–१ प्रारभ्य उपर्यङ्गाधिकारत्वेन अङ्गस्येत्यधिकाराभावेऽपि, सम्बुद्धेरिति पदेन अङ्गमाक्षिप्यते। सम्बुद्धौ प्रत्यये परतः

पूर्वस्य तदादिशब्दरूपस्य अङ्गत्वात्। एवमाक्षिप्तस्याङ्गस्य विशेष्यत्वेन येन विधिस्तदन्तस्येति विशेषणे एङ्ह्रस्वादिति पदे तदन्तविधिः। तथा च एङ्ह्रस्वान्तादिति लब्धम्। एङन्तत्वं ह्रस्वान्तत्वञ्चैकत्र न सम्भवतीति असम्भवादेव प्रत्येकमन्वयः एङ् ह्रस्वान्यतरान्तादङ्गादिति। अङ्गाक्षेपाभावे हे कतरदिति न सिद्ध्चेत् । तथा हि –किमो डतरप्रत्यये कृते निष्पन्नस्य कतरशब्दस्य सम्बोधने सुप्रत्यये कृते। अद्डतरादिभ्य इति सोरद्डादेशे च कृते, कतर अद् इति स्थिते, टेः डिति परे, भस्य टेर्लोपस्यादिति रकारोपर्यकारस्य लोपे, कतरद् । वावसाने कतरत्। अत्र ह्रस्वान्तात्परो हल् लुप्यते। सम्बुद्धेश्चेदिति व्याख्याने ह्रस्वान्तात् कतरशब्दाद्धल् तकारो लुप्यत एव , तस्य सम्बुद्ध्यवयवत्वात्। अङ्गाक्षेपे तु ह्रस्वान्तं यदङ्गमित्युक्तौ यस्मात्प्रत्ययो विहितः कतरशब्दात् यः प्रत्ययः अद् (ड्) प्रत्ययः तस्मिन्प्रत्यये अदिपरे पूर्वं कतर् अङ्गम्। न तु कतर इत्येतत्। टिलोपस्य परत्वेन पुरैव कृतत्वात्। यदङ्गमद्ड्प्रत्यये परे तन्न ह्रस्वान्तम् यद्ध्रस्वान्तं तन्नाङ्गमिति नात्र सम्बुद्ध्यवयवहल्लोप इति। ननु कतर सु इत्यस्यामवस्थायामेव सम्बुद्धिलोपः कर्तव्यः। तथात्वे, नाङ्गाक्षेपेण लाभ इति चेत् न। सम्बुद्धिलोपात्परत्वेन प्रथमत एव सोरद्डादेश इति। ननु कतर सु इत्यस्यामवस्थायां सम्बुद्धिलोपे प्राप्ते परत्वादतोम्। अपवादत्वादतोमं बाधित्वा अद्डादेशः प्राप्तः। ततः तं बाधित्वा नित्यत्वात्पुनस्सम्बुद्धिलोपः। परत्वात्तं बाधित्वा पुनरतोम्। एवंरीत्या चक्रकापत्त्या "चक्रकेष्विष्टतो व्यवस्थे"ति भाष्यकारसिद्धान्तात् सम्बुद्धिलोपस्येष्टत्वेन प्रथमतस्सोरेव लोप इति किमङ्गाक्षेपेण, (अङ्गाक्षेपाभावे) अद्डादेशे कृतेऽपि अकृतेऽपि सम्बुद्धिलोपस्य प्रसक्तिसद्भावेन एङ्ह्रस्वादित्यस्य कृताकृतप्रसङ्गित्वरूपं नित्यत्वम्। सति त्वङ्गाक्षेपे अद्डादेशे कृते, सम्बुद्धिलोपप्रसक्त्यभावेन तस्य नित्यत्वाभावात्परत्वादड्डादेश एव। किञ्च, अङ्गाक्षेपे सत्यपि टिलोपस्य परनिमित्तकत्वेन बहिरङ्गत्वात् सम्बुद्धिलोपस्य अपरनिमित्तकत्वेन अन्तरङ्गत्वाच्च, अन्तरङ्गे कार्ये कर्तव्ये बहिरङ्गमसिद्धं स्यादिति कतरदित्यत्र सम्बुध्यवयवहल्लोपस्स्यादेवेति न चेष्टसिद्धिरपि इति चेन्न। अन्तरङ्गबहिरङ्गभावस्य वैवक्षिकत्वेनानित्यत्वात्। टिलोपस्य विशेषविहितत्वेन तस्याप्यन्तरङ्गत्वाच्च, भाष्यविरोधाच्च, प्रथमत एव टिलोपः अतोमः अपवादत्वान्नित्यमपि सम्बुद्धिलोपं बाधत इति। न च प्रथमतस्सम्बुद्धिलोपश्चेति। ननु

अतोमोऽन्यत्र चरितार्थवेन दुर्बलत्वादपावादोऽपि दुर्बलो नित्येन बाध्यत एवेति चेत्, तर्हि सम्बुद्धिलोपं बाधित्वा अपवादत्वाददड्डादेशस्स्यात्। ननु सोप्यद्डादेशः प्रथमैकवचने चरितार्थ इति नास्य बाधकः। अन्यथा पूर्वोक्तचक्रकापत्तौ अद्डादेशबाधकत्वं कथं स्यादेङ्ह्रस्वादित्यस्य अयमत्र दुरुद्धरप्रश्ननिष्कर्षः ।

कतर सु इत्यत्र सम्बुद्धि (सु) लोपः स्वमोर्नपुंसकात्, अतोम्, अद्डादेशः एते प्राप्ताः। प्रथमं नित्यशास्त्रं द्वितीयं परं तृतीयमपवादश्चतुर्थमप्यपवाद एव पूर्वं बाधित्वा, परं तद्बाधित्वा तृतीयमपवादस्तद्बाधित्वा चतुर्थंप्रथमैकवचने चरितार्थम्। तदपि बाधित्वा प्रथमं नित्यमेव स्यादिति, सत्यप्यङ्गाक्षेपे सुलोप एव स्यादिति हे कतरदिति न सिद्ध्यत्येवेति । ननु अतोऽमि कृतेऽप्यकृतेऽपि सम्बुद्धिलोपः प्राप्नोत्येवेति कृत्वा परमप्यतोमं सम्बुद्धिलोपो बाधत एव नित्यत्वादिति कथं सम्बुद्धिलोपबाधकत्वमतोमित्यस्येति चेन्नैष दोषः। अतोमि कृते सति, सम्बुद्धिलोपं बाधित्वा, अद्डादेश एव प्रवर्तत इति, न सम्बुद्धिलोपस्य, कृताकृतप्रसङ्गित्वरूपं नित्यत्वमतोमम्प्रति, किन्तु अद्डादेशं प्रतीत्येवेति।

1. एवञ्च चक्रकापत्तिरपि नात्र। नित्यस्य सम्बुद्धिलोपस्य बाधकत्वं नास्ति। परस्य स्वमोर्नपुंसकादित्यस्येति अङ्गाक्षेपाभावेऽपि त्वदुक्तरीत्याऽपि हे कतरदिति न सिद्ध्यत्येवेति न च वाच्यम् । अद्डादेशं प्रति सम्बुद्धिलोपस्य नित्यत्वेऽपि स्वमोर्लुकं प्रति नित्यत्वाभावेन परेण स्वमोर्लुका सम्बुद्धिलोपस्य बाधात् । न हि स्वमोर्लुकि कृते सम्बुद्धिलोपः प्राप्नुयात् । मास्तु च वैयधिकरण्येनान्वयोऽपि, एङ्ह्रस्वान्तात्पराया-स्सम्बुद्धेर्लोपस्स्यादित्यर्थाश्रयणेनैव सुलोपसिद्धेः । यदि पुनस्सत्यप्यङ्गाक्षेपे चक्रकापत्तौ चक्रकेष्विष्टतो व्यवस्थेति भाष्यकारसिद्धान्ताश्रयणादस्माकमपि हे कतरदिति सिद्ध्यत्येवेति वदसि, तर्हि अङ्गाक्षेपेण कोऽर्थः? अतः मास्त्वङ्गाक्षेपः। मास्तु च वैयधिकरण्येनान्वयः, इति पूर्वः पक्षः।

**उत्तरस्तु** – अद्डादेशं बाधित्वा यदा सम्बुद्धिलोपो नित्यत्वादाजिगमिषति, तदैव विशेषविहितत्वाट्टिलोपस्स्यादिति। ननु अद्डादेशे कृते टिलोपप्रसक्तिः। स एव न कृतो भवेत् आजिगमिषन्तमद्डादेशं सम्बुद्धिलोपो बाधत इति हेतोः,

कतर सु इत्यस्यामवस्थायामेव सोर्लोपो भवति वा? अद्डादेशो भवति वा? इति विचिकित्सा भवति। तदानीं नित्यत्वाद्भवत्येव सुलोप इति चेत् न हि अद्डादेशे कृते विशेषविहितत्वेन टिलोपस्य कृतत्वात्। ह्रस्वान्ताङ्गाभावेन सम्बुद्धिलोपो न भवेदिति, नास्ति कृताकृतप्रसङ्गित्वरूपं नित्यत्वं सम्बुद्धिलोपस्येति। ननु कृताकृतप्रसङ्गित्वं नाम तस्मिन् कृतेऽपि, तस्मिन्नकृतेऽपि यस्य प्राप्तियोग्यतामात्रमस्ति तस्य तथात्वं नित्यत्वमिति। प्रकृते अद्डादेशे कृतेऽप्यकृतेऽपि सम्बुद्धिलोपस्य प्राप्तियोग्यतास्त्येव। विशेषविहितेन टिलोपेन बाधात्प्राप्तिर्माभूदपि, तेन नित्यत्वानपायात्प्रथममेव सम्बुद्धिलोपः स्यात् न त्वद्डादेश इति ।

*एङ् ह्रस्वात्सम्बुद्धेः। अङ्गस्याक्षेपः। फलन्तु हे कतरत्। वैयधिरकण्यान्वयफलन्तु – हे ज्ञान। अत्र विचार्यते। कतर सु इत्यस्यामवस्थायां स्वमोर्नपुंसकादिति सोर्लुक्, अतोमिति सोरम्। अद्डतरादिभ्य इति सोरद्ड्, एङ्ह्रस्वादिति सोर्लोपश्च प्राप्तः। तत्र लुकः परत्वादम्। अमोपवादत्वादद्ड् नित्यत्वात्सुलोपः। न च नित्यादपवादो बलीय इति सुलोपाभावश्शङ्क्यः। अमोपवादत्वेन अद्डादेशः प्रथमैकवचने चरितार्थस्सन् नित्येन सुलोपेनात्र बाध्यत एवेति। वस्तुतस्तु सुलोपस्य नायमपवादः, किन्तु अम एवेति बोध्यम्। सुलोपं बाधित्वा पुनः परत्वात्सोर्लुक्, इत्येवं चक्रकापत्तौ चक्रकेष्विष्टतो व्यवस्थेति अद्डादेशस्येष्टत्वेन हे कतरदिति स्यादेवेति कृत्वा अङ्गाक्षेपो व्यर्थः। न च अद्डादेशे कृतेऽपि, एङ्ह्रस्वादिति तलोपस्स्यादेवेति वाच्यम्। वैयधिकरण्यान्वयाभावस्यापि अङ्गाक्षेपाभावसमुच्चायकत्वात्, ह्रस्वात्पराया स्सम्बुद्धेरवयवहल्लुप्यत इति सामानाधिकरण्येनान्वये कतर अद्डितीति टिलोपः। कतर् अद् ह्रस्वात्परसम्बुद्ध्यभावान्न सम्बुद्धिलोप इति। नन्वेवं ज्ञानेति न सिद्ध्येत्। अमि पूर्वे कृते ह्रस्वात्परसम्बुद्ध्यभावादिति वाच्यम्। तत्रापि ज्ञान सु इत्यवस्थायां स्वमोर्नपुंसकादिति लुक्। तं बाधित्वा अम् तं च बाधित्वा अन्तरङ्गत्वात्सुलोपः (अदन्तत्वाङ्गत्वक्लीबत्वधर्मत्रयाश्रयेण बहिरङ्गमतोम्, ह्रस्वान्तत्वमात्राश्रयेण अन्तरङ्गं सम्बुद्धिलोपं इति ज्ञेयम्) इति सम्बुद्धिलोपेनेष्टसिद्धेः। किञ्च, सत्यप्यङ्गाक्षेपे, तव मते हे कतरदिति

१९४ **अमि पूर्वः** । ।६।१।१०७। अकोऽम्यचि परतः पूर्वरूपमेकादेशः स्यात् । रामम् । रामौ । १९५ **लशक्वतद्धिते** । ।१।३।८। तद्धितवर्जं प्रत्ययाद्या लशकवर्गा इतः स्युः । इति शसः शस्येत्संज्ञा । १९६ **तस्माच्छसो नः पुंसि** । ।६।१।१०३। पूर्वसवर्णदीर्घात्परो यः शसः सकारस्तस्य यः स्यात्पुंसि । १९७ **अट्कुप्वाङ्नुम्व्यवायेऽपि** । ।८।४।२। अट् कवर्ग पवर्ग आङ् नुम् एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः स्यात्समानपदे । 'पदव्यवायेऽपि' (सू १०५७) इति निषेधं बाधितुमाङ्ग्रहणम् । नुम्ग्रहणमनुस्वारोपलक्षणार्थम् । तच्चाकर्तुं शक्यम् । अयोगवाहानामट्सूपदेशस्योक्तत्वात् । इति णत्वे प्राप्ते । १९८ **पदान्तस्य** । ।८।४।३७। पदान्तस्य नस्य णत्वं न स्यात् । रामान् । १९९ **यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्** । ।१।४।१३। यः प्रत्ययो यस्मात्क्रियते तदादि शब्दस्वरूपं तस्मिन्प्रत्यये परेऽङ्गसंज्ञं स्यात् । 'भवामि' 'भविष्यामि' इत्यादौ विकरणविशिष्टस्याङ्गसंज्ञार्थं तदादिग्रहणम् । 'विधिः' इति किम्–स्त्री इयती । 'प्रत्यये' किम्–प्रत्ययविशिष्टस्य ततोऽप्यधिकस्य वा मा भूत् । २०० **अङ्गस्य** । ।६।४।१। इत्यधिकृत्य । २०१ **टाङसिङसामिनात्स्याः** । ।७।१।१२। अकारान्तादङ्गाट्टादीनां क्रमादिनादय आदेशाः स्युः । णत्वम् । रामेण । २०२ **सुपि च** । ।७।३।१०२। यञादौ सुपि परे अतोऽङ्गस्य दीर्घः स्यात् । रामाभ्याम् ।२०३ **अतो भिस ऐस्** । ।७।१।९। अकारान्तादङ्गाद्भिस ऐस् स्यात् । अनेकाल्त्वात्सर्वादेशः । रामैः । २०४ **ङेर्यः** । ७।१।१३। अतोऽङ्गात्परस्य ङे इत्यस्य यादेशः स्यात् । रामाय । इह स्थानिवद्भावेन यादेशस्य सुप्त्वात् 'सुपि च' (सू २०२) इति दीर्घः । **'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य'** (प ८६) इति परिभाषा तु नेह प्रवर्तते । 'कष्टाय क्रमणे (सू २६७०) इत्यादिनिर्देशेन तस्या अनित्यत्वज्ञापनात् । रामाभ्याम् ।

---

न सिद्ध्यत्येव । तथा हि, कतर अद् टिलोपस्य परनिमित्तकत्वेन बहिरङ्गत्वात्। ह्रस्वान्तादङ्गात्परसम्बुद्धिसम्भवात्सम्बुद्धिलोपस्स्यादेवेति।

3. रामैः। राम भिस् इति स्थिते, अतो भिस ऐस् इति भिस ऐस् प्राप्तः। बहुवचने झल्येदिति अतोऽङ्गस्यैकारः प्राप्तः। उभयोः प्राप्तौ केन भाव्यमित्युक्तौ परत्वादेकारेणैवेति, रामेभिरित्येव स्यात् कथं रमैरिति पूर्वपक्षः। उत्तरस्तु परत्वादेकारे कृते, भिस ऐसः सर्वथा निरवकाशत्वमेवेति तत्सूत्रवैयर्थ्यान्निरवकाश–

२०५ **बहुवचने झल्येत्** । ।७।३।१०३। झलादौ बहुवचने सुपि परे अतोऽङ्गस्येकारः स्यात् । रामेभ्यः । 'बहुवचने' किम्–रामः' रामस्य । 'झलि' किम्–रामाणाम् । 'सुपि' किम्–पचध्वम् । जश्त्वम् । २०६ **वाऽवसाने** ।८।४।५६। अवसाने झलां चरो वा स्युः । रामात्, रामाद् । द्वित्वे रूपचतुष्टयम् । रामाभ्याम् । रामेभ्यः । रामस्य। सस्य द्वित्वपक्षे 'खरि च' (सू १२१) इति चर्त्वेऽप्यान्तरतम्यात्स एव, न तु तकारः । अल्पप्राणतया प्रयत्नभेदात् । अत एव 'सः सि–'(सू २३४२) इति तादेश आरभ्यते । २०७ **ओसि च** । ।७।३।१०४। ओसि परे अतोऽङ्गस्येकारः स्यात् । रामयोः । २०८ **ह्रस्वनद्यापो नुट्** । ।७।१।५४। ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः स्यात् ।२०९ **नामि** । ।६।४।३। नामि परेऽजन्तस्याङ्गस्य दीर्घः स्यात् । रामाणाम् । 'सुपि

---

मूलकापवादशास्त्रेण तेनैव परशास्त्रं बाध्यते अपवादस्य सर्वाधिकबलवत्त्वादिति ।

4. रामाय। राम ङे। ङेर्यः इति यादेशः राम य इति स्थिते, सुपि चेति दीर्घः। रामाय, स्यादेतत्, यञादौ सुपि परे अतोऽङ्गस्य दीर्घस्स्यादिति यादेशे, यञादित्वे सत्यपि सुप्त्वान्नास्तीति कथमत्र सुपि चेति दीर्घ इत्याशङ्क्य स्थानिवद्भावेन सुप्त्वादिति कौमुदी। ननु स्थानिवदादेशोऽनल्विधाविति, अल्विधौ स्थानिवद्भावो निषिद्धः। प्रकृते चायं दीर्घः अल्विधिरेव। अलि यञादौ सुपि परतो विधीयमानत्वात्। न चाचः परस्मिन्निति स्थानिवद्भावः। ङेर्यादेशस्याजादेशत्वेऽपि परनिमित्तकत्वाभावात् कथं सुप्त्वं स्थानिवद्भावेन यादेशश्च इति चेन्न किञ्चिदेतत् ।

अनल्विधावित्यत्र अलस्स्थान्यवयवत्वं विशेषणीकृत्य स्थान्यवयवाल्मात्रवृत्तिधर्म निमित्तके कार्ये कर्तव्ये न स्थानिवद्भाव इति निरुक्तत्वात्। प्रकृते तु आदेशभूतयावयवयकारनिष्ठ–यत्त्वनिमित्तकअदन्ताङ्गदीर्घरूपकार्यस्य कर्तव्यत्वान्नानल्विधाविति निषेध इति। नन्वदन्ताङ्गनिमित्तकत्वेन जायमानङेर्यादेशः कथं स्वोपजीव्यादन्ताङ्गविघाताय शक्नुयाद्दीर्घसम्पादनद्वारा सन्निपातपरिभाषाविरो– धादित्याशङ्क्याह। तस्याः परिभाषाया अनित्यत्वज्ञापनादिति। ज्ञापने लिङ्गन्तु कष्टाय क्रमण इत्यादिनिर्देशः । एतत्परिभाषायां नत्यत्वे कष्टायेत्यत्रापि रामायेत्यादाविव कष्टयेत्येव स्यादिति भावः।

च' (सू २०२) इति दीर्घो यद्यपि परस्तथापीह न प्रवर्तते , संनिपातपरिभाषाविरेधात् । 'नामि'(209) इत्यनेन त्वारम्भसामर्थ्यात्परिभाषा बाध्यते । रामे । रामयोः । सुप्येत्वे कृते ।२१० **अपदान्तस्य मूर्धन्यः** । ।८।३।५५। आ पादपरिममाप्तेरधिकारोऽयम् । २११ **इण्कोः** । ।८।३।५७ इत्यधिकृत्य । २१२ **आदेशप्रत्यययोः** । ।८।३।५९। 'सहेः साडः सः ' (सू ३३५) इति सूत्रात् 'सः' इति षष्ठयन्तं पदमनुवर्तते । इण्कवर्गाभ्यां परस्यापदान्तस्यादेशः प्रत्ययावयवश्च यः सकारस्तस्य मूर्धन्यादेशः स्यात्। सस्य । विवृताघोषस्य सस्य तादृश एव षः । रामेषु । ' इण्कोः' किम्–रामस्य । 'अदेशप्रत्यययोः' किम्–सुपीः । सुपिसौ । सुपिसः । 'अपदान्तस्य' किम्–हरिस्तत्र । एवं कृष्णमुकुन्दादयः । २१३ **सर्वादीनि सर्वनामानि** । ।१।१।२७। सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युः । 'तदन्तस्यापीयं संज्ञा' 'द्वन्द्वे च' (सू २२२) इति ज्ञापकात् । तेन 'परमसर्वत्र' इति त्रल् 'परमभवकान्' इत्यत्राकच्च सिध्यति ।

---

5. नामीत्यनेन त्वित्यस्यायमवतरणिकाग्रन्थः। ननु यथा अदन्ताङ्गनिमित्तकत्वेन जायामान–आमो नुडागमः सुपि चेति दीर्घसम्पादनद्वारा स्वोपजीव्यादन्ताङ्गविघाताय न भवतीति सन्निपातपरिभाषाविरोधात् राम नाम् इत्यत्र सुपि चेति दीर्घो दुर्घटः। तथा ह्रस्वान्ताङ्गनिमित्तकत्वेन जायमानो नुट् नामीति दीर्घसम्पादनद्वारा ह्रस्वान्ताङ्गविघाताय न शक्नुयादिति सन्निपातपरिभाषाविरोधान्नामीति दीर्घोऽपि दुघर्ट एवेत्याशङ्क्याहेति।

6. आदेशस्य प्रत्ययावयवस्य च यस्सकार इति पाठः प्रामादिकः। आदेशः प्रत्ययावयवश्च यस्सकार इति समीचीनः पाठः।

7. सर्वादीनिति। सर्व आदिर्येषान्तानि सर्वादिगणपठितानीत्यर्थः। शब्दरूपाणि सर्वनामानि स्युरिति यथाश्रुतार्थे सर्व इति कस्य चिन्नाम। तस्यापि सर्वनाम संज्ञा स्यादिष्टापत्तौ, सर्वस्मै इत्यादीनि रूपाण्येव स्युः, न तु सर्वायेत्यादीनि। अतः सर्वाद्यर्थबोधकानीति, सर्वादीनि शन्दरूपाणीत्यस्य विशेषणं देयम्। तच्च सूत्राक्षरैरेव सिद्ध्यति। तथाहि । सर्वादीनीत्यावर्त्यते। आवृत्तस्य च लक्षणया सर्वाद्यर्थबोथकानीत्यर्थः। अथवा – सर्वः, सर्वार्थः आदिर्येषां विश्वाद्यर्थानां ते सर्वादयः, सर्वाद्यर्था इत्यर्थः। सर्वादयोऽर्था एषां सन्तीति सर्वादीनीति समासाश्रयणेनाभिधयैव तादृशार्थसिद्धिः। सर्वाद्यर्थबोधकत्वञ्च सर्वनामगणपठितसर्वादिशब्दार्थाभिन्नार्थबोधकत्वम्।

8. **द्वन्द्वे चेति** ज्ञापकात्, वर्णाश्रमेतराणामित्यादौ अवयवस्य इतरशब्दस्यैव सर्वादीनीति

२१४ **जसः शी** ।७।१।१७। अदन्तात्सर्वनाम्नः परस्य जसः शी स्यात् । अनेकाल्त्वात्सर्वादेशः । न च 'अर्वणस्तृ-' (सू ३६४) इत्यादाविव **'नानुबन्धकृतमनेकाल्त्वम्'** (प ६) इति वाच्यम् । सर्वादेशत्वात्प्रागित्संज्ञाया एवाभावात् । सर्वे । २१५ **सर्वनाम्नः स्मै** ।७।१।१४। अतस्सर्वनाम्नो ङे इत्यस्य स्मै स्यात् । सर्वस्मै । २१६ **ङसिङ्योः स्मात्स्मिनौ** । ।७।१।१५। अतस्सर्वनाम्नः एतयोरेतौ स्तः । सर्वस्मात् । २१७ **आमि सर्वनाम्नः सुट्** । ।७।१।५२। अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः स्यात् । एत्वषत्वे । सर्वेषाम् । सर्वस्मिन् । शेषं रामवत् । एवं विश्वादयोऽप्यदन्ताः । सर्वादयश्च पञ्चत्रिंशत् । सर्व विश्व उभ

---

सर्वनामसंज्ञाया विहितत्वे तदन्तस्य वर्णाश्रमेतरशब्दस्याविहितत्वे द्वन्द्वे उक्तसंज्ञा नेति निषेधोऽनर्थकः। निषेधस्य प्राप्तिपूर्वकत्वेन प्रकुते द्वन्द्वे इतरशब्दान्ते संज्ञायाः प्राप्तेरेवाभावात् । तेन द्वन्द्वे चेत्येतद्व्यर्थीभूय तदन्तस्यापि संज्ञास्तीति ज्ञापयतीति भावः।

9. **अनेकाल्त्वात्सर्वादेशः,** ननु अनेकाल् शित्सर्वस्येति शित्वादेव सर्वादेश इति किमिति नोक्तमिति चेत्, उच्यते – श इत्यस्य प्रत्ययत्वे लब्धे लशक्वतद्धित इति प्रत्ययादिभूतशकारस्येत्संज्ञा स्यात्, जसादेशात्प्राक्तदेव न लभ्यते जसादेशानन्तरं हि स्थानिवद्भावेन प्रत्ययत्वमानीयते। अतः शित्वान्न सर्वादेशोऽत्र अनेकाल्त्वात्सर्वादेशेऽपि नानुबन्धकृतमनेकाल्त्वमिति परिभाषाविरोधोऽपि नास्ति। शस्य पूर्वोक्तरीत्या "जसादेशात्प्राक् इत्संज्ञाभावेन अनुबन्धत्वाभावात् । ननु जसश्शी इति किं दीर्घादेशेन ? शि इत्येव सूत्रयितव्यं लाघवात्। सर्वशब्दादीकारे परे आद्गुण इति सर्वे इति रूपं स्यादेवेति चेत् मैवम् । औङ आप इत्युत्तरसूत्रे अनुवृत्त्यर्थं शी इत्यस्यैवावश्यकत्वात्। ननु तत्रापि शि इत्ययमेवानुवर्त्यतामिति चेत्तर्हि, तस्मादप्युत्तरस्मिन् नपुंसकाच्चेति सूत्रे शी इत्यस्यैवावश्यानुवर्तनीयत्वात्। अन्यथा वारिणी इति रूपसिद्धिर्न स्यात् किञ्च, शि इत्यनेनैव सर्वार्थसिद्धौ जश्शसोश्शिरित्यतोप्युत्तरसुत्रस्थितशिग्रहणमेवात्राप्यपकृष्यते यदि तर्हि, प्रकृते सूत्रे शिग्रहणेनापि नार्थस्स्यात्, अतः वारिणी इत्यादिरूपसिद्ध्यर्थं नपुंसकाच्चेति सूत्रे अवश्यकर्तव्येन शीग्रहणेनैवात्रैव कृतेन सर्वे इत्यादिरूपसिद्धिर्भवतीति यथास्थितं सूत्रं रमणीयम्,।

10. **आमि सर्वनाम्नः सुट्** – ननु सर्वनाम्नस्स्मै इति सूत्रान्मण्डूकप्लुत्या सर्वनाम्न इति पदमनुवृत्त्य यद्यन्वीयते तर्हीष्टसिद्धिरिति किमनेन सर्वनाम्न इति पृथग्ग्रहणेन इति चेत्, प्रकरणान्तरैर्व्यवधानान्नात्र तदन्वयस्संबध्यते, इति हेतोः पृथग्ग्रहणम् । यद्येतत्सूत्रं तत्प्रकरण एव पठ्यतामिति तर्हि त्रे स्त्रय इत्यादीनामपि पाठः कर्तव्यस्स्यात्तेन

उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सीम । **'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्'** (ग सू १) । **'स्वमज्ञातिधनाख्यायाम्'** (ग सू २) **'अन्तरं बहिर्योगोपसव्यानयोः'** (ग सू ३) त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवत् किम् इति । तत्र उभशब्दो द्वित्वविशिष्टस्य वाचकः । अत एव नित्यं द्विवचनान्तः । तस्येह पाठस्तु 'उभकौ' इत्यकजर्थः । न च कप्रत्ययेनेष्टसिद्धिः । द्विवचनपरत्वाभावेन 'उभयतः' 'उभयत्र' इत्यादाविवायच्प्रसङ्गात् । तदुक्तम् । **'उभयोऽन्यत्र'** (वा २३२) अन्यत्रेति द्विवचनपरत्वाभावे । उभयशब्दस्य द्विवचनं नास्तीति कैयटः, अस्तीति हरदत्तः । तस्माज्जस्ययजादेशस्य स्थानिवद्भावेन तयप्प्रत्ययान्ततया 'प्रथमचरम' (सू २२६) इति विकल्पे प्राप्ते विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वान्नित्यैव संज्ञा भवति । उभये । डतरडतमौ प्रत्ययौ । **'प्रत्ययग्रहणे तदन्ता ग्राह्याः'** (प २४) । यद्यपि संज्ञाविधौ प्रत्ययग्रहणं तदन्तग्रहणं नास्ति, (प २८) 'सुप्तिङन्तम्–' (सू २९) इति ज्ञापकात् । तथापीह तदन्तग्रहणम् । केवलयोः संज्ञायाः प्रयोजनाभावात् । अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद् द्विबहुविषये निर्धारणे वर्तेते । तत्रान्यतमशब्दस्य गणे पाठाभावान्न संज्ञा । 'त्व' 'त्व' इति द्वावप्यदन्तावन्यपर्यायौ, 'एक उदात्तोऽपरोऽनुदात्तः' इत्येके । 'एकस्तान्तः' इत्यपरे । 'नेमः इत्यर्धे । समः सर्वपर्यायः । तुल्यपर्यायस्तु नेह गृह्यते, 'यथासंख्यमनुदेशः समानाम् ' (सू. १२८) इति ज्ञापकात् । **'अन्तरं बहिर्योगोप–'** (ग सू ३) **इति गणसूत्रे 'अपुरीति वक्तव्यम्'** (वा २४०) अन्तरायां पुरि ।

---

अष्टाध्यायी पूर्वापरत्वविरोधो भवेदिति न तद्युक्तम् अथवा इदमेव व्यर्थीभूय सर्वनाम्नो विहितस्याम इत्यर्थं ज्ञापयति नोचेत्सर्वनाम्नः परस्याम इति व्याख्याने वर्णाश्रमेतरेषामिति भवेन्न तु वर्णाश्रमेतराणामिति।

11. उभयतः आश्रयणे नान्तादिवदित्यस्यायमर्थः उभ औ, वृद्धिः उभौ, अन्तादिवच्चेति, पूर्वान्तवद्भावे औकारस्य उभाविति प्रकृतिर्भवति परादिवद्भावे उभ् प्रकृतिः औ प्रत्ययश्च भवति । अत्र द्विवचनान्तउभशब्दः नास्त्येव यद्दिवचनान्तं परादिवद्भावेन औकारपरकं उभ् तन्न प्रकृतिः । उभेत्यस्य प्रकृतित्वात् पूर्वान्तवद्भावेन यत्प्रकृतिः उभावित्याकारकं तन्न द्विवचनपरकम्, द्विवचनस्य औकारस्याभावत् । न चोभावित्येतत्प्रकृतिरपि न भवेत् । प्रकृतेरुभरूपत्वादिति वाच्यम् । पूर्वान्तवद्भावेन उभरूपस्य प्रकृतेरन्तवद्भवतीति उभावित्यस्मिन् प्रकृतित्वातिदेशात्। अथ उभयमपि यद्याश्रीयते पूर्वान्तवद्भावेन प्रकृतित्वं, परादिवद्भावेन द्विवचनान्तत्वञ्च, तर्हि द्विवचनान्त उभप्रकृतिर्लभ्यत एव

तत्रैवायं निषेधः । पूर्वान्तवद्भावपरादिवद्भावयोरुभयोरप्येकत्राश्रयणे एकादेशः पूर्वान्तवन्न स्यात्परादिवच्च न स्यादित्यर्थः, तर्हि कथं द्विवचनान्तत्वमुभावित्यस्येति चेत्स्थानिवद्भावेन द्विवचनान्तत्वमेवेति विद्धि।

12. **तस्येहपाठस्त्वित्यादेरयम्भावः ।** उभशब्दस्य द्वित्वविशिष्टवाचकत्वेन नित्यद्विवचनान्ततया उभ,औ, इति स्थिते वृद्धिरुभौ।अत्र सर्वनाम्नोऽकच् प्राक्टेरिति अकच्प्रत्यये टेरकारात्प्राक् उभ् इत्यस्मात् कृते उभक अ औ, आ तो गुणे, उभक औ वृद्धिः उभकौ इति भवति। ननु सर्वनामगणे मास्तूभशब्दपाठः। उभशब्दात्स्वार्थिके कप्रत्यये कृते उभकाविति भवत्येवेत्याशङ्क्याह, न चेत्यादि । उभशब्दात्कप्रत्यये टेः परत्र कृते, उभशब्दस्य द्विवचनपरत्वन्नास्ति । कप्रत्ययेन व्यवधानात् । अकचि तु टेः प्राक्कृतत्वेन उभकशब्दगतककारोपर्यकारस्य उभशब्दगतभकारोपर्यकाराभिन्नत्वेन उभकशब्दस्य उभशब्दत्वान्मध्ये व्यवधानं नास्ति। एवमुभशब्दस्य कप्रत्यये कृते द्विवचनपरत्वाभावेन अयच्प्रत्यये कृते उभयकमिति स्यात् । अयमुभयकशब्दो न नित्यद्विवचनान्तः। अतः क प्रत्यये कृते उभकाविति न स्यादेवेति। ननु उभशब्दो यथा द्वित्वविशिष्टवाचकः, तथा स्वार्थे क प्रत्ययोप्युभशब्दात्कृतः द्वित्वविशिष्टवाचकः तथा स्वार्थे क प्रत्ययोप्युभशब्दात्कृतः द्वित्वविशिष्टवाचक एव स्वार्थे कृतानां प्रत्ययानां प्रकृत्यभिन्नार्थबोधकत्वात् । स्वार्थो नाम स्वस्य प्रकृतेरर्थ इति ह्यर्थः। तस्मात् उभकशब्दोऽपि द्वित्वविशिष्टवाचकत्वेन नित्यद्विवचनान्त एवेति उभशब्दस्य क प्रत्ययेन व्यवधानेपि द्विवचनपरत्वमस्त्येव। क प्रत्ययस्य स्वाभिन्नार्थकत्वादिति चेत् न तथा । द्विवचनपरत्वं चात्र कृत्रिममेव, न तु (यौगिकम्) प्रतिपदोक्तम् । अन्यथा उभयत आश्रयणे नान्तादिवदिति प्रतिपदोक्तद्विवचनभूतौकारपरत्वं नास्त्येवोभावित्यत्राप्युभशब्दस्य। कृत्रिमत्वञ्च स्थानिवद्भावेन लब्धत्वम्। अन्यथा सार्वविभक्तिकस्तसिल् इति द्वितीयाविभक्तौ कृतस्य तसिलोऽपि द्विवचनत्वेन उभशब्दात्तसिल् प्रत्यये परतोऽपि अयच्प्रत्ययो न स्यादुभत इत्येव स्यात्। ननु नायं तसिल् प्रत्ययः अकृत्रिमः औकारस्यैव द्विवचनत्वमकृत्रिमम्। तदादेशभूत तसिल् प्रत्यये द्विवचनत्वं स्थानिवद्भावेन लब्धमिति कृत्रिममेवात्र द्विवचनत्वमिति चेत्, तर्हि कप्रत्ययेन व्यवधानान्नास्त्युभशब्दस्य द्विवचनपरत्वं कप्रत्ययस्य प्रकृत्यभिन्नार्थबोधकत्वेन अर्थकृतव्यवधानाभावेऽपि शब्दकृतव्यवधानसद्भावादिति स्वीक्रियतामुत्तर इति। ननु तथाऽपि कप्रत्ययस्यात्र उभार्थभूतद्वित्वरूपस्वार्थाभिधायकत्वेन द्विवचनत्वादस्मिन् परेप्यस्त्येव उभशब्दस्य द्विवचनपरत्वमिति चेत् न । "कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्यय" इति न्यायेन कृत्रिममेव तान्येकवचनेत्यादिना सूत्रेण कृतद्विवचनसंज्ञं औ इति प्रत्ययस्वरूपमत्र द्विवचनपदेनाभिधीयते, न त्वकृत्रिमं लाक्षणिकमिति न कप्रत्ययेन परेण उभशब्दस्य द्विवचनपरत्वमिति। अन्यथा पूर्वोक्तरीत्या तसिल् प्रत्यये परेऽपि उभत इति स्यादिति, उभावित्यत्र तु अस्यैव द्विवचनभूतौकारपरकत्वमुभशब्दस्य । परन्तु उभशब्दस्य प्रकृतित्वं स्थानिवद्भावेनानीयत इति न दोषः।

13.विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वान्नित्यैव संज्ञा– उभयशब्दस्य सर्वादिगणपठितत्वेन सर्वादीनीति सूत्रात्सर्वनामसंज्ञायां सर्वविभक्तिष्वपि नित्यत्वेन सिद्धायां प्रथमचरमेति सूत्रात् (अयजादेशस्य

२१८ **पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्** । ।१।१।३४। एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणपाठात्सर्वत्र या प्राप्ता सा जसि वा स्यात् । पूर्वे, पूर्वाः । स्वाभिधेयापेक्षावधिनियमो व्यवस्था । व्यवस्थायां किम्–दक्षिणा गाथकाः, कुशला इत्यर्थः । असंज्ञायां किम्–उत्तराः कुरवः । २१९ **स्वमज्ञातिधनाख्यायाम्** । ।१।१।३५। ज्ञातिधनान्यवाचिनः । स्वशब्दस्य या प्राप्ता संज्ञा सा जसि वा स्यात् । स्वे, स्वाः । आत्मीया इत्यर्थः । आत्मान इति वा । ज्ञातिधनवाचिनस्तु स्वाः, ज्ञातयोऽर्था वा । २२० **अन्तरं बहिर्योगोपसंव्यानयोः** । ।१।१।३६। बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य या प्राप्ता संज्ञा सा जसि वा स्यात् । अन्तरे, अन्तरा वा गृहाः । बाह्या इत्यर्थः। अन्तरे, अन्तरा वा शाटकाः । परिधानीया इत्यर्थः । २२१ **पूर्वादिभ्यो नवभ्यो वा** । ।७।१।१६। एभ्यो नवभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात् , पूर्वात् । पूर्वस्मिन्, पूर्वे, एवं परादीनामपि । शेषं सर्ववत् । एकशब्दः संख्यायां नित्यैकवचनान्तः । २२२ **न बहुव्रीहौ** । ।१।१।२९। बहुव्रीहौ चिकीर्षिते सर्वनामसंज्ञा न स्यात् । त्वकं पिता यस्य स त्वत्कपितृकः । अहकंपिता यस्य स मत्कपितृकः । इह समासात्प्रागेव प्रक्रियावाक्ये सर्वनामसंज्ञा निषिध्यते ।

---

स्थानिवद्भावेन तयप्प्रत्ययान्ततया उभयशब्दस्य) जसि विकल्पेन सर्वनामसंज्ञा प्राप्ता । अतः उभयशब्दस्य जसि सर्वनामसंज्ञा, नित्या वा? उत वैकल्पिकी? इति विचिकित्सायामाह । विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वादिति, अयम्भावः यद्यपि प्रथमचरमेति उभयत्र विभाषासूत्रस्य सर्वादीनीति सूत्रापेक्षया परत्वेन उभयशब्दस्य जसि सर्वनामसंज्ञाया वैकल्पिकत्वमुचितम् तथापि सर्वादिसूत्रकृतसंज्ञाया अपरापेक्ष (अपरनिमित्त) कत्वेन अन्तरङ्गत्वादन्तरङ्गं सर्वादीनीति सूत्रमेव प्रथमेति सूत्रं कर्म बाधते । प्रथमेत्यस्य जस्विभक्तिसापेक्षवेन बहिरङ्गत्वात् । तेन सर्वादीनीति सूत्रान्नित्यैवात्र सर्वनामसंज्ञेति।

14. **सुप्तिङन्तमिति ज्ञापकात्** । प्रत्ययग्रहणे तदन्तमपि गृह्यत इति न्यायः यदि संज्ञाविधावप्यस्ति, तर्हि पदरूपसंज्ञाविधानेऽत्र सुप्तिङित्येव सूत्रयितव्यं, सुप्तिङोः प्रत्ययत्वेन तदन्तग्रहणसम्भवात् ।अतः इदमन्तर्ग्रहणं व्यर्थीभूय संज्ञाविधौ प्रत्ययग्रहणे तदन्तर्ग्रहणं नास्तीति ज्ञापयित्वा स्वयं चरितार्थमभवदिति–

15. **त्वत्,** त्वदौ, त्वदः, त्वत्स्मै त्वस्मात् त्वत्स्मिन्नित्यादीनि त्वच्छब्दरूपाणि, पूर्वपरापरेति सूत्रं विशेषविहितत्वेनापवादशास्त्रम् । तेन विभक्तिनिरपेक्षत्वेनान्तरङ्गमपि सर्वादीनीति सूत्रमनेनापवादेन बाध्यते। अपवादस्य सर्वाधिकबलवत्त्वात्, तस्मान्नात्र उभयशब्दाज्जसीव नित्या संज्ञेति शङ्कनीयम्। अस्य सूत्रस्य प्राप्तविभाषारूपत्वेन विशेषशास्त्रत्वादपवादत्वम् । प्रथमेत्यस्य तु उभयत्र विभाषारूपत्वेन नापवादत्वम्।

16. **त्वत्कपितृकः–** इह यूष्मद् सु पितृ सु इति बहुव्रीहौ चिकीर्षिते यदलौकिकं

अन्यथा लौकिकविग्रहवाक्य इव तत्राप्यकच् प्रवर्तेत । स च समासेऽपि श्रूयेत । अतिक्रान्तो भवकन्तम् अतिभवकान् इतिवत् । भाष्यकारस्तु त्वकत्पितृकः, मकत्पितृक इति रूपे इष्टापत्तिं कृत्वैतत्सूत्रं प्रत्याचख्यौ । यथोत्तरं मुनीनां प्रामाण्यम् । **संज्ञोपसर्जनीभूतास्तु न सर्वादयः'** (वा २२५) महासंज्ञाकरणेन तदनुगुणनामेव गणे संनिवेशात् । अतः संज्ञाकार्यमन्तर्गणकार्यं च तेषां न भवति । सर्वो नाम कश्चित्तस्मै सर्वाय देहि । अतिक्रान्तः सर्वमतिसर्वस्मै अतिसर्वाय देहि । अतिकतरं कुलम् । अतितत् ।

२२३ **तृतीया समासे** । ।१।१।३०। इह सर्वनामता न स्यात् । मासपूर्वाय । तृतीया समासार्थवाक्येऽपि न । मासेन पूर्वाय । २२४ **द्वन्द्वे च** । ।१।१।३१। द्वन्द्वे उक्त संज्ञा न । वर्णाश्रमेतराणाम् । समुदायस्यैवायं निषेधः न त्ववयवानाम् । न चैवं तदन्तविधिना सुट्प्रसङ्गः । सर्वनाम्नो विहितस्यामः सुडिति व्याख्यातत्वात् ।

---

शास्त्रीयं प्रक्रियावाक्यं विग्रहवाक्यमस्ति। अस्मिन्वाक्ये युष्मच्छब्दस्य सर्वनामसंज्ञाया निषेधात्, युष्मच्छब्दात्स्वार्थे कृते कप्रत्यये, (सर्वनाम्नोऽकच्प्राक्टेरिति टेः प्राक् न भवति) युष्मद् क सु पितृ क सु इति स्थिते त्वाहौसाविति यष्मदस्त्वादेशे, त्वद् क सु पितृ क सु इति स्थिते समासे विभक्तिलोपात्, त्वत्कपितृक इति भवति। अन्यथा युष्मच्छब्दस्य सर्वनामसंज्ञायां सत्यां सर्वनाम्नोऽक्च्प्राक्टेरिति टेः प्रागकचि कृते, यष्मकद् सु पितृक सु इति स्थिते त्वादेशे सुलोपे, त्वकत्पितृक इति स्यादिति। भाष्यकारास्तु त्वकत्पितृको मकत्पितृक इति रूपद्वयमप्यस्माकमिष्टमेवेति बहुव्रीहौ चिकीर्षितेऽपि युष्मदादीनां सर्वनामसंज्ञासत्वमङ्गीकृत्य न बहुव्रीहाविति सूत्रं प्रत्याचख्युः। तत्र तत्र कौमुदीग्रन्थेषु भाष्यकारस्तु त्वत्कपितृको मत्कपितृक इति रूपे, इति पाठो दृश्यते, स हि प्रामादिकः। त्वकत्पितृको मकत्पितृक इति रूपे इति पठितव्यम् । लौकिकं विग्रहं विग्रहवाक्यं त्वकं पिता यस्य स इत्याद्याकारकम् ।

17 **महासंज्ञाकरणेन–** अन्वर्थसर्वनामसंज्ञाकरणेन तदनुगुणानां सर्वनामसंज्ञाकरणयोग्यानां सर्ववाचकानां न त्वेकैकवाचकानां शब्दानामित्यर्थः। यथा सर्वशब्दः कस्यचित्पुरुषस्य यदि संज्ञा (नाम) भवति, तर्हि स शब्दः विशेषेण तद्वाचक एव भवति, न समस्तवाचकः। अतस्तस्य सर्वनामसंज्ञा नास्ति। तस्या अन्वर्थत्वात्। एवमेव उपसर्जनीभूतोऽपि सर्वशब्दः न सर्वनामसंज्ञां भजते । यथा अतिसर्वाय अतिसर्व इति परमात्मा एक एव न तु सर्वत्रातिसर्वपदं प्रयुज्यते।

२२५ **विभाषा जसि** । ।१।१।३२। जसाधारं यत्कार्यं शीभावाख्यं तत्र कर्तव्ये द्वन्द्वे उक्ता संज्ञा वा स्यात् । वर्णाश्रमेतरे, वर्णाश्रमेतराः । शीभावं प्रत्येव विभाषेत्युक्तम्, अतो नाकच्, किं तु कप्रत्यय एव । वर्णाश्रमेतरकाः । २२६ **प्रथमचरमतयाल्पार्धकतिपयनेमाश्च** । ।१।१।३३। एते जसः कार्यं प्रत्युक्तसंज्ञा वा स्युः । प्रथमे, प्रथमाः । शेषं रामवत् । तयप् प्रत्ययस्ततस्तदन्ता ग्रह्याः । द्वितये, द्वितयाः । शेषं रामवत् । नेमे, नेमाः शेषं सर्ववत् । **'विभाषाप्रकरणे तीयस्य ङित्सूपसंख्यानम्'** (वा २४२) । द्वितीयस्मै, द्वितीयाय इत्यादि । एवं तृतीयः । अर्थवद्ग्रहणान्नेह । पटुजातीयाय । निर्जरः । २२७ **जराया जरसन्यतरस्याम्** । ७।२।१०१। जराशब्दस्य जरस् वा स्यादजादौ विभक्तौ । **'पदाङ्गाधिकारे तस्य च तदन्तस्य च'** (प. ३०) । अनेकाल्वात्सर्वादिशे प्राप्ते **'निर्दिश्यमानस्यादेशा भवन्ति'** (प १३) । एकदेशविकृतस्यानन्यत्वाद् जरशब्दस्य जरस् । निर्जरसौ निर्जरसः । इनादीन्बाधित्वा परत्वाज्जरस्। निर्जरसा । निर्जरसे । निर्जरसः । पक्षे हलादौ च रामवत् । वृत्तिकृता तु 'पूर्वविप्रतिषेधेनेनातोः कृतयोः सन्निपातपरिभाषाया अनित्यत्वमाश्रित्य जरसि कृते निर्जरसिन निर्जरसात् इति रूपे, न तु निर्जरसा निर्जरसः इति केचित्'। तथा भिसि निर्जरसैः इति रूपान्तरमुक्तम् । तदनुसारिभिश्च षष्ठ्येकवचने 'निर्जरस्य' इत्येव रूपमिति स्वीकृतम् । एतच्च भाष्यविरुद्धम्। २२८ **पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु** । ।६।१।६३। पाद दन्त नासिका मास हृदय निशा असृज् यूष् दोष् यकृत् शकृत् उदक, आस्य एषां पदादय आदेशाः स्युः शसादौ वा । यत्तु 'आसनशब्दस्यासन्नादेशः' इति काशिकायामुक्तं तत्प्रामादिकम् । पादः । पादौ । पादाः । पादम् । पादौ । पदः, पादान् । पदा, पादेनेत्यादि । **२२९ सुडनपुंसकस्य** । ।१।१।४३। सुडिति प्रत्याहारः । स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य ।

---

18 **अतितत्** – तमतिक्रान्तः अतितत्, अतितदौ, अतितदः । अत्र सर्वनामसंज्ञाकार्ये सति अतिसः इति स्यात् । अतिकतरमित्यत्रापि अतिकतरदिति स्यात्।

19. **पद्दन्नो** इति पद् दत् नस् मास् हृद् निश् असन् यूषन् दोषन् यकन् शकन् उदन् आसन् इत्यादेशाः। स्थानिनस्तु कौमुद्यामेव दर्शिताः। तत्र दोष इत्यकारान्तस्थानी दर्शितः। स प्रामादिको वा उत प्रामाणिक इत्ययमंश इह विचार्यते। तथा हि – अदन्तेष्वस्य उदाहृतत्वात् । दोष इत्यदन्तः प्रामाणिक एवेति पूर्वः पक्षः। दोष् शब्दस्य नपुंसकत्वमतएव भाष्यादिति मूलादेव स्ववचनाद्वक्ष्यमाणाद्विरुध्येत। इदमकारान्तनिर्देशनमिति

२३० **स्वादिष्वसर्वनामस्थाने** । ।१।४।१७। कप्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदसंज्ञं स्यात् । **२३१ यचि भम्** । ।१।४।१८। यकारादिष्वजादिषु च कप्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं भसंज्ञं स्यात् । २३२ **आ कडारादेका संज्ञा** । ।१।४।१। इत ऊर्ध्वं 'कडाराः कर्मधारय' (सू ७५१) इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया या परा अनवकाशा च । तेन शसादावचि भसंज्ञैव, न पदत्वम् ।अतो जश्त्वं न । दतः । दता । जश्त्वम्, दद्भ्यामित्यादि । मासः । मासा । भ्यामि रुत्वे यत्वे च यलोपः, माभ्याम् । माभिरित्यादि ।

---

सिद्धान्तः। स्यादेतत्, कथमन्यथा दोः दोषणी दोषी दोषणि दोंषि इति शब्दे सौ परतः दोरिति रूपं स्यात्। दमेर्डोसि औणादिके कृते दोस् इति प्रकृतिः। तत्र प्रत्ययावयवत्वेन सस्य षत्वे दोष् इति षान्तश्शब्दः। तस्य सौ परतः शस् प्रभृतिष्वित्यत्र प्रभृतेः प्रकारार्थकत्वेन दोषन्नादेशे सति अल्लोपो न भवति। यजादिस्वादिपरत्वाभावात् तेन दोरिति रूपं न सिद्ध्येत् । न च सौ दोषन्नादेश एव न भवेत्, शस्प्रकारत्वं यकारादिष्वजादिष्वेव प्रत्ययेषु वर्तते। भत्वप्रयोजकत्वरूपधर्मसाम्यादिति वाच्यम्। पदङ्घ्रिश्चरणोऽस्त्रियामिति सौ पादस्य पदादेशसद्भावेन शस्प्रकारत्वं प्रत्ययत्वस्वरूपं प्रत्ययमात्रे अस्तीति वेद्यम्। ननु दोषान्नादेशाभावेऽपि दोरिति रूपं न सिद्ध्येदेव। स सजुषोरुरिति रुत्वस्य पदान्तषकारे दुर्लभत्वात्, इति चेन्मैवम्। आदेशप्रत्यययोरिति सूत्रस्य ८-३-५५ स सजुषोरुरिति ८-२-५६ सूत्रदृष्ट्या असिद्धत्वेन षत्वस्यासिद्धत्वाद्रुत्वम् सुलभमेवेति न कश्चिद्दोषः। तस्माद्दोष इत्यकारान्तनिर्देशः, प्रामादिक एवेति कृत्वा, तत्रापि दोष् इत्येवस्थानी निर्देश्यः इति सर्वं सुष्ठु।

नन्वदन्तेषु दोष्शब्दस्योदाहरणमिति दोषो न परिहृत एवेति चेत्सत्यम्। प्रभृतिग्रहणं प्रकारार्थमिति स्वोक्तमर्थं प्रमाणयितुं कश्च(स)द्दोषणीति भाष्यमुदाहृतम्। तत्र नपुंसकाच्चेति औङश्शीभावे कृते दोषणी इति रूपं भवतीति कृत्वा दोष्शब्दस्य नपुंसकत्वे किं प्रमाणमित्याशङ्कायां तदेव ककुद्दोषणीति भाष्यं प्रमाणमित्याह । अत एव भाष्यादिति तस्माद्दोष्शब्दस्यात्रोदाहरणं न त्वसंगतमिति सर्वं सम्यक् ।

* द्वन्द्वे चेति – तदन्तविधिना द्वन्द्वस्यापि सर्वाद्यन्तस्य सर्वनामत्वे सति, निषिद्ध्यतेऽनेनेति बोध्यम्। प्रसक्तिपूर्वकत्वान्निषेधस्येति भावः। न चैवं तदन्तविधिना सुट्प्रसङ्ग इत्यस्यायमर्थः। द्वन्द्वे चेति निषेधस्यावयवेष्वत्र वृत्तेः वर्णाश्रमेतरेति द्वन्द्वगते इतरशब्दे सर्वनामत्वसद्भावेन सर्वनाम्नः परत्वमामोस्त्येवेति कृत्वा आमि सर्वनाम्न स्सुडिति सुट् स्यादेवेति न वाच्यमिति, ननु तदन्तविधिनेति किम् ? न ह्यत्र तदन्तविधिना द्वन्द्वस्य वर्णाश्रमेतरेति प्रातिपदिकस्य सर्वनामताऽस्ति, येन तदन्तविधिना सुट्प्रसङ्ग इत्युच्येत। सत्यम्, उच्यते, सर्वाद्यन्तस्य द्वन्द्वस्य तदन्तविधिना प्राप्तायां सर्वनामसंज्ञायां द्वन्द्वे चेत्यनेन निषिद्धायामपि अवयवानामनिषेधेन द्वन्द्वसमासावयवस्य प्रकृते इतरशब्दस्य सर्वनामत्वात्सुट्प्रसङ्ग इति न वाच्यम् इति तदर्थात्। अत्र गुरवः । आमि सर्वनाम्नस्सुडिति सूत्रे अत इत्यनुवृत्तिः, अङ्गस्येत्यधिकारः, अत इत्यत्र

२३३ भस्य । ।६।४।१२९। इत्यधिकृत्य । २३४ **अल्लोपोऽनः** । ६।४।१३४। अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपः स्यात् ।

२३५ **रषाभ्यां नो णः समानपदे** । ।८।४।१। एकपदस्थाभ्यां रेफषकाराभ्यां परस्य नस्य णः स्यात् । यूष्णः । यूष्णा 'पूर्वस्मादपि विधौ स्थानिवद्भावः' इति पक्षे तु 'अड्व्यवाये' इत्येवात्र णत्वम् । 'पूर्वत्र सिद्धे न स्थानिवत्' (वा ४३३) इति त्विह नास्ति । **'तस्य दोषः संयोगादिलोपलत्वणत्वेषु'** (वा ४४०) इति निषेधात् ।

---

तदन्तविधिना अदन्तादङ्गाद्विहितस्य सर्वनाम्नः परस्य चामस्सुट् स्यादिति व्याख्याने सुट्प्रसज्यत इत्येवं न वाच्यम्, कुतः ? सर्वनाम्नो विहितस्येति व्याख्यानात्। अदन्तादङ्गात्परस्य सर्वनाम्नो विहितस्यामस्सुडिति तद्व्याख्यानादित्यर्थ इत्याहुः।

**अजन्तपुंलिङ्गशब्देषु–**

**19. रषाभ्यां नो णस्समानपदे–** समानपदत्ववद्वृत्तेर्नस्य णस्स्यात्। रेफषकाराभ्यां परस्येत्यर्थः ।अत्र निमित्तं रषौ निमित्ती नः । समानपदत्वञ्च निमित्तानधिकरणनिमित्तमत्पदाघटितत्वम् । समानपदवैयर्थ्यादयमर्थस्सिद्धः रामेणेत्यादौ यन्निमित्तिमत्पदं रामेणेत्यादिकं तन्निमित्ताधिकरणमेवेति लक्षणसमन्वयः। ननु निमित्ताधिकरणनिमित्तिमत्पदघटितत्वमित्येव लक्षणमास्ताम् । किमिदं नञ्द्वयघटितत्वं लक्षणगौरवावहमिति चेत् न । परमरामेणेत्यादि समस्तपदेनैव लक्षणसमन्वयस्स्यात् । ननु केवलं रामेणेत्यादौ निमित्ताधिकरणनिमित्तिमत्पदेन घटितस्य अन्यस्य पदस्याभावात् । ननु तर्हि निमित्ताधिकरणनिमित्तिमत्पदत्वमित्येवास्तामिति चेत्, न तथा । तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोतीति सर्वाङ्गीण इत्यस्यासिद्धेः यन्निमित्ताधिकरणं सर्वपदं तत् न निमित्तिमदिति हेतोः। अन्यथा निमित्तनिमित्तिद्वयवत्वमिति लक्षणमेव साधुस्स्यात् । नञ्द्वयनिवेशने तु निमित्तनिमित्तिनोरेकपदवृत्तित्वाभावेऽपि निमित्तिमतोऽन्यस्य पदस्याभावात्स्यादेव सर्वाङ्गीण इत्यादौ णत्वम् । तथा हि – यन्निमित्तिमत् सर्वाङ्गशब्दात्कृतखादेशईन् तन्न पदम्, इति हेतोः तस्य ईनः निमित्तानधिकरणत्वे सत्यपि निमित्तिमत्वे सत्यपि न पदत्वम्। तस्मान्निमित्तानधिकरणनिमित्तिमत्प्रत्ययघटिते सर्वाङ्गीण इत्यादौ समासे निमित्ताधिकरणत्वनिमित्तिमत्वधर्मद्वयवति यूष्ण इत्यादौ व्यस्तपदे च निमित्ता नधिकरणानिमित्तिमत्पदाघटितत्वमस्त्येवेतीदं लक्षणं सम्यगिति रामनामेत्यादि समासेषु तु निमित्तानधिकरणनिमित्तिमत्पदेन नामेत्यादिना घटितत्वमस्त्येवेति न लक्षणस्यातिव्याप्तिः। ननु सार्वपथीन इत्यत्र कथं न स्याण्णत्वमिति चेत्। अट्कुप्वाङ्नुम्व्यवायेऽपीति सर्वङ्गीण इत्यत्र अट्कवर्गादिव्यवधानेन णत्वप्राप्तावपि सार्वपथीन इत्यत्र थीकारस्य अडादिभिन्नस्य व्यवधानेन न णत्वमिति। नारायण इत्यत्र तु पूर्वपदात्संज्ञायामग इति णत्वं बोध्यम् । ननु विभाषातिलमाषोमाभङ्गाणुभ्य इति भांगीनशब्दस्य गुरुपूर्वत्वे

२३६ **न लोपः प्रातिपदिकान्तस्य** । ।८।२।७। नेति प्रातिपदिकेति च । लुप्तषष्ठीके पदे । प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नकारस्य लोपः स्यात् । नलोपस्यासिद्धत्वाद्दीर्घत्व मैस्त्वमेत्त्वं च न । यूषभ्याम् । यूषभिः । यूषभ्य इत्यादि । २३७ **विभाषा ङिश्योः** । ।६।४।१३६। अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपो वा स्याद् ङिश्योः परयोः । युष्णि, यूषणि, । पक्षे रामवत् । 'पद्दन्नो–' (सू २२८) इति सूत्रे प्रभृतिग्रहणं प्रकारार्थम् । तथा च औङः श्यामपि दोषन्नादेशः ।

---

गुरुभांगीण इत्यनिष्टरूपापत्तिस्स्यात्। निमित्तिमतः खञादेशस्येनः परत्वाभावादिति चेत् उच्यते। भङ्गशब्दादेव खञ्प्रत्ययस्य कृतत्वेन भांगीन इति विशिष्टे पदत्वमस्त्येवेति निमित्तानधिकरणनिमित्तिमत्पदत्वाद्भांगीन इत्यस्य न णत्वमिति सर्वाङ्गीण इत्यत्र तु सर्वाङ्गशब्दात् खप्रत्ययस्य कृतत्वेन अङ्गशब्दस्य पदत्वेऽपि ईनस्य न पदत्वम् ।अङ्गीन इति तु न स्यादेव । सर्वशब्दयोगादेव अङ्गशब्दस्य खविधानात्। ननु कनकरामेणेत्यत्र णत्वं न स्यात् खनिमित्तानथिकरणेन निमित्तिमता कनकपदेन घटितत्वात्, नि इति चेन्न, तथा रषाभ्यां परस्य नस्यैव निमित्तित्वं, न त्वन्यस्येति हेतोः। ननु, परमकपिनेत्यत्र णत्वं स्यादेव । परमकपिशब्दान्नादेशस्य कृतत्वेन नादेशस्य निमित्तानधिकरणनिमित्तिमत्प्रत्ययत्वेन अपदत्वात्। कपिशब्दस्य निमित्तानधिकरणत्वे सत्यपि निमित्तिमत्वाभावादिति चेत् इष्टापत्तिरेव। ननु प्रातिपदिकान्तनुम्विभक्तिषु चेति माषवापेणेत्यादिसिद्ध्यर्थं कृतस्य विभक्तिग्रहणस्य आनर्थक्यमिति चेत् द्विभाषार्थकत्वस्य सत्वान्नानर्थक्यम् । एवं गुरुभाङ्गीण इत्यत्रापि णत्वघटितरूपमेवेष्टमिति बोध्यम् । निमित्तिनस्तद्धितप्रत्ययस्थत्वात् ।अयं निष्कर्षः, निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वे सति रषाभ्यां परस्य नस्य णस्स्यादित्यनेन परमकनकेत्यादौ न णत्वस्यातिव्याप्तिः। सर्वाङ्गीण इत्यादौ नाप्यव्याप्तिः । एवं पूर्वपदस्थान्निमित्तात्परेषां सर्वप्रत्ययस्थानां नकाराणां णत्वप्राप्तौ सत्यां विभक्तिस्थनकारस्य णत्वविकल्पत्वं ब्रूते प्रातिपदिकान्तेति उभयत्र विभाषासूत्रम् । तेन सर्वाङ्गीण सर्वाङ्गीनेति च रूपद्वयं सिद्ध्यति। सर्वाङ्गीन इति तु न स्यात्, नस्य तद्धितस्थत्वात् ।

20. यूष्णः– यूषन् शस् अल्लोपो नः। यूषन् शस् अत्र रषाभ्यामिति णत्वे कर्तव्ये अल्लोपस्य स्थानिवद्भावः। तथा हि, स्थानिवत्सूत्रेण अल्लोपस्य नात्र स्थानिवद्भावः। स्थान्यवयवाल्मात्रवृत्ति धर्मपुरस्कारकविधित्वात्, अड्व्यवाय इति प्रकृतणत्वस्य । किन्तु– अचः परस्मिन्निति सूत्रेण स्थानिवद्भावः, तत्रापि पूर्वविधावित्यत्र षष्ठीसमासाश्रयणपक्षे न स्थानिवद्भावः, स्थानिभूतदचः पूर्वत्वेन दृष्टस्य विधिकर्तव्यताकत्वाभावात्। किन्तु– पूर्वस्मादपि विधावित्येव स्थानिभूतादचःअकारात्, तदपेक्षयेति यावत् । पूर्वस्मान्निमित्तभूतात् षकारात्परस्य स्थान्यपेक्षया परस्य नस्य णत्वविधौ कर्तव्ये स्थानिवद्भावव्यपदेशात्।

अत एव भाष्ये 'ककुद्दोषणी' इत्युदाहृतः । तेन 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' 'स्वान्तं हृन्मानसं मनः' इत्यादि च संगच्छते । 'आसन्यं प्राणमूचुः' इति च । आस्ये भव आसन्यः । दोष्शब्दस्य नपुंसकत्वमत एव भाष्यात् । तेन 'दक्षिणं दोर्निशाचरः' इति संगच्छते । 'भुजबाहू प्रवेष्टो दोः' इति साहचर्यात्पुंस्त्वमपि । 'दोषं तस्य तथाविधस्य भजतः' इति । द्वयोरह्नोर्भवो द्व्यह्नः।

२३८ **संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ** । ।६।३।११०। संख्यादिपूर्वस्याह्नस्याहन्नादेशो वा स्यात् ङौ । द्व्यह्नि, द्व्यहनि द्व्यह्ने विगतमहर्व्यह्नः । व्यह्नि, व्यहनि व्यह्ने । अह्नः सायः सायाह्नः । सायाह्नि सायाहनि, सायाह्ने । इत्यदन्ताः ।।

विश्वपाः । २३९ **दीर्घाज्जसि च** । ।६।१।१०५। दीर्घाज्जसि इचि च परे पूर्वसवर्णदीर्घो न स्यात् । वृद्धिः विश्वपौ । सवर्णदीर्घः विश्वपाः । यद्यपीह औङि 'नादिचि' (सू १६५) इत्येव सिद्धम् । जसि तु सत्यपि पूर्वसवर्णदीर्घे क्षतिर्नास्ति । तथापि 'गौर्यौ' 'गौर्यः' इत्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तम् । २४० **आतो धातोः** ।६।४।१४०। आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः स्यात् । 'अलोऽन्त्यस्य' (सू ४२) । विश्वपः । विश्वपा । विश्वपाभ्यामित्यादि । एवं शङ्खध्मादयः । 'धातोः' किम्–हाहान् । टा सवर्णदीर्घः हाहा । ङे वृद्धिः हाहै । ङसिङसोर्दीर्घः हाहाः । ओसि वृद्धिः हाहौः । ङौ आद्गुणः हाहे शेषं विश्वपावत् । 'आतः' इति योगविभागादधातोरप्याकारलोपः क्वचित् । क्त्वः । श्नः ।।। **इत्यादन्ताः**

हरिः । 'प्रथमयोः पूर्वसवर्णः' (सू १६४) । हरी । २४१ **जसि च** । ।७।३।१०९। ह्रस्वान्तस्याङ्गस्य गुणः स्याज्जसि परे । हरयः । २४२ **ह्रस्वस्य गुणः** । ।७।३।१०८। ह्रस्वस्य गुणः स्यात्सम्बुद्धौ । 'एङ्ह्रस्वात्–' (सू १९३) इति संबुद्धिलोपः । हे हरे । हरिम् । हरी । हरीन्। २४३ **शेषो घ्यसखि** । ।१।४।७। अनदीसंज्ञौ ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसंज्ञं स्यात् । 'शेषः' किम्–मत्यै ।

---

नन्वेवं चेत्, पूर्वत्रासिद्धेन स्थानिवत्त्रैपादिके कार्ये कर्तव्ये स्थानिवद्भावेनेति वचनस्य का गतिरित्यत आह, तस्य दोष इत्यादि, तस्य तद्वचनस्य दोषः अप्रवृत्तिः

एकसंज्ञाधिकारात्सिद्धे शेषग्रहणं स्पष्टार्थम् । 'ह्रस्वौ' किम्-वातप्रम्ये । 'इदुतौ किम्-मात्रे । २४४ **आङो नाऽस्त्रियाम्** । ।७।३।१२०। घेः परस्याङो ना स्यादस्त्रियाम् । आङिति टासंज्ञा प्राचाम् । हरिणा । 'अस्त्रियाम्' किम्-मत्या । २४५ **घेर्ङिति** । ।७।३।१११। घिसंज्ञकस्य ङिति सुपि गुणः स्यात् । हरये । 'घेः' किम्-सख्ये । 'ङिति' किम्-हरिभ्याम् । 'सुपि' किम्-पट्वी । 'घेर्ङिति' इति गुणे कृते । २४६ **ङसिङसोश्च** । ।६।१।११०। एङो ङसिङसोरति परे पूर्वरूपमेकादेशः स्यात् । हरेः । हर्योः । हरीणाम् । २४७ **अच्च घेः** । ।७।३।११९। इदुद्भ्यामुत्तरस्य ङेरौत्स्याद्धे रन्तादेशश्चाकारः । वृद्धिः । हरौ । हर्योः । हरिषु । एवं श्रीपत्यग्निरविकव्यादयः । २४८ **अनङ् सौ** । ।७।१।९३। सख्युरङ्गस्यानङादेशः स्यादसंबुद्धौ सौ परे । 'ङिच्च' (सू ४३) इत्यन्तादेशः । २४९ **अलोऽन्त्यात्पूर्व उपधा** । ।१।१।६५। अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः स्यात् । २५० **सर्वनामस्थाने चासंबुद्धौ** । ।६।४।८। नान्तस्योपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने परे । २५१ **अपृक्त एकाल्प्रत्ययः** । ।१।२।४१। एकाल्प्रत्ययो यः स सोऽपृक्तसंज्ञः स्यात् । २५२ **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्** । ।६।१।६८। हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सु ति सि इत्येतदपृक्तं हल् लुप्यते । 'हल्ङ्याब्भ्यः' किम्-ग्रामणीः । 'दीर्घात्' किम्-निष्कौशाम्बिः । अतिखट्वः । 'सुतिसि' इति किम्-अभैत्सीत् । तिपा सहचरितस्य सिपो ग्रहणात्सिचो ग्रहणं नास्ति । 'अपृक्तम्' इति किम्-बिभर्ति 'हल्' किम्-बिभेद । 'प्रथमहल्' किम्-राजा । नलोपादिर्न स्यात् संयोगान्तलोपस्यासिद्धत्वात् । सखा । हे सखे ।

---

21. शेषोघ्यसखि- आ कडारादेकासंज्ञा इति। एकसंज्ञाधिकारेण परायाभिसंज्ञाया नदीसंज्ञाबाधनपूर्वकं हर्यादिशब्देषु प्रवृत्तिरस्त्येवेति शेषग्रहणं स्पष्टार्थम्-

22. अनङ् सौ । सोर्डेति न्यासः। सखि सु इति स्थिते सोर्डटिः डिति परे भस्याप्यभस्यापि टेर्लोपस्स्यात्। डित्वकरणसामर्थ्यादिति सखा रुदुशनस्पुरुदंसोनेहसाच्चेति सूत्रेऽपि डा इत्यस्यैवानुवृत्तौ उशना इत्यादिरूपाण्यपि सिद्ध्यन्ति। ननु उशनन् डा उशन् आ इति स्थिते सर्वनामस्थाने चासंबुद्धाविति दीर्घस्स्यात् । उशना इति रूपं स्यादिति चेत् संज्ञापूर्वको विधिरनित्य इति सर्वनामस्थानसंज्ञापूर्वकोऽयं दीर्घविधिरनित्य इति न दीर्घ इति। ननु अनित्यत्वात्पक्षे दीर्घस्स्यादेवेति चेत्। अङ्गवृत्ते पुनर्नाङ्गवृत्तमिति परिभाषा । अङ्गाधिकारीये सोरादेशे कृते पुनरङ्गाधिकारीयं कार्यमुपधादीर्घो न स्यादिति। अनङ्गाज्ञदेशपक्षे तु तत्परभाषाया अनित्यत्वाद्दीर्घ इति बोध्यम्-

23. राजा नलोपो न स्यात्। राजन् सु इति स्थिते हल्ङ्याभ्य इति सूत्रे प्रथमहल्ग्रहणाभावे हलन्तात्परस्य सोर्लोपाभावेऽपि संयोगान्तस्य लोप इति सकारलोपे सर्वनामस्थानेचेति दीर्घे नलोपः । प्रातिपदिकान्तस्येति नलोपे राजा इति सिद्ध्यत्येवेति आशङ्कया संयोगान्तलोपस्यासिद्धत्वादित्युक्तम् । नलोपः प्रातिपदिकान्तस्य ८–१–२ संयोगान्तस्य लोपः १–३–९८ त्रिपाद्यामपि पूर्वम्प्रति परमसिद्धमिति संयोगान्तलोपस्यासिद्धत्वेन नलोपो न स्यादिति। ननु हल्ङ्याभ्य इति सूत्रे प्रथमहल्ग्रहणाभावे हे राजन् सु इति स्थले संयोगान्तलोपे कृते, हे राजन् इति स्थिते संयोगान्तलोपस्यासिद्धत्वेन नलोपो न स्यादेवेति न ङिसम्बुध्योरिति सूत्रे सम्बुद्धिग्रहणं व्यर्थीभूय नलोपं प्रति संयोगान्तलोपो नासिद्ध इति ज्ञापयित्वा स्वांशे चरितार्थमिति किमनेन पथमहल्ग्रहणेनेत्याशङ्का तत्त्वबोधिन्यां समाधापिता। गोमानित्यत्र गोमत् उगिदचामिति नुम् । गोमन् त् सु संयोगान्तलोपेन पथमं सुलोपं पश्चात्तलोपः गोमन् उपधादीर्घः गोमान् । अत्र संयोगान्तलोपो नलोपम्प्रति नासिद्ध इति नलोपस्स्यदिति तदाशङ्कायास्समाधानं न साधु। यत्र नकारविभक्त्योरानन्तर्यं तत्रैव नलोपं प्रति संयोगान्तलोपो नासिद्धः। राजन् स् इत्यादौ यत्र पुनर्गोमानित्यादौ नकारविभक्त्योस्तकारेण व्यवधानं गोमानित्यादौ तत्र संयोगान्तलोपोऽसिद्ध एवेति। ननु, नङि सम्बुध्योरिति सूत्रे निषेधसामर्थ्यात्प्रत्ययलक्षणमित्युक्तम् । तथा चायमर्थः, हे राजन् सु इति स्थले सुलोपात्पश्चात्संयोगान्तलोपस्य सिद्धत्वेन नलोपे प्राप्ते नङिसम्बुध्योरिति निषेधः सम्बुद्धौ परतः नलोपं वारयति। अत्र तु सम्बुद्धेर्हल्ङ्यादिना लोपे सम्बुद्धिपरकत्वमेव नास्तीति, कथं नलोपनिषेध इति कृत्वा प्रत्ययलोपे प्रत्ययलक्षणन्यायेन प्रत्ययपरकत्वमभ्युपेत्य यदि समाधीयते तर्हि न लुमताङ्गस्येति निषेध इति च कृत्वा निषेधसामर्थ्यात्प्रत्ययलक्षणमिति अतस्सम्बुद्धिग्रहणं कथं पूर्वोक्तज्ञापकमिति चेदुच्यते । हल्ङ्यादिना सुलोपपक्षे प्रत्ययलक्षणज्ञापकमिति संयोगान्तलोपेन सुलोपपक्षे संयोगान्तलोपस्य सिद्धत्वज्ञापकमिति च। ननु संयोगान्तलोपपक्षेऽपि सम्बुद्धिपरकत्वाय प्रत्ययलक्षणमवश्यमाश्रयणीयमिति। तद्ज्ञापनार्धकत्वं चात्र आवश्यकमेवेति चेत् तर्हि ङ्यन्तस्य सम्बुध्यन्तस्य च पदस्य नलोपो न स्यादित्यर्थमुपवर्ण्य एतद्ज्ञापनक्लेशो निराकरणीय इति। ननु प्रत्ययलक्षणेन यदि प्रत्ययपरकत्वमाश्रीयते तर्हि नलोपः प्रातिपदिकान्तस्येति नलोपो न स्यात् । राजेत्यादौ नकारस्य पदान्तत्वाभावात्, (सोःपरत्वेन) यदि नाश्रीयते तर्हि नङिसंबुद्ध्योरिति न निषेधः इति चेन्मैवम् प्रातिपदिकान्तस्य नस्येत्यत्र प्रातिपदिकसंज्ञकं यत्पदं तदन्ते श्रूयमाणस्य नस्य लोपस्स्यादित्यर्थवर्णनेन सोः प्रातिपदिकान्तत्वं प्रत्ययलक्षणेन आगतमपि न श्रूयत एवेति अन्ते श्रूयमाणो णकार एवेति न दोष इति। श्लो. संयोगान्तस्य लोपे हि नलोपादिर्न सिद्ध्यति, रात्तु तेनैव लोपस्याद्धलस्तस्माद्विधीयते । हल्ङ्यादिसूत्रे प्रथमहलोऽभावे राजेत्यादौ संयोगान्तलोपे कृते तस्य असिद्धत्वात् नलोपादिः नलोपः उत्वञ्च। (उत्वमभिभोक्त्रेत्यादौ) न सिद्ध्यतीति। यदि तु नङि संबुद्ध्योरिति संबुद्धिग्रहणाद् ज्ञापकान्नलोपं प्रति संयोगान्तलोपस्य नासिद्धत्वमिति, तर्हि अभिभोक्त्रेत्यत्र उत्वं न सिद्ध्यति। किञ्च संयोगान्तलोपसूत्रेणैव यदि लोप इष्यते तर्हि रात्तु रात्सस्येति नियमेन रेफात्सकारस्यैव लोपस्स्यात्। ततः अभिभर्त् (भवान्) इत्यादौ

२५३ **सख्युरसंबुद्धौ** । ।७।१।९२। सख्युरङ्गात्परं संबुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात् । २५४ **अचो ञ्णिति** । ।७।२।११५। ञिति णिति च परेऽजन्ताङ्गस्य वृद्धिः स्यात् । सखायौ । सखायाः । सखायम् । सखायौ । घिसंज्ञाभावान्न तत्कार्यम् सख्या । सख्ये । २५५ **ख्यत्यात्परस्य** । ।६।१।११२। खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उत्स्यात् । सख्युः । २५६ **औत्** ।७।३।११८। इदुद्भ्यां परस्य ङेरौत्स्यात् । उकारानुवृत्तिरुत्तरार्था । सख्यौ । शेषं हरिवत् । शोभनः सखा सुसखा । सुसखायौ । सुसखायः । अनङ्णिद्वद्भावयोराङ्गत्वात्तदन्तेऽपि प्रवृत्तिः । समुदायस्य सखिरूपत्वाभावाद् 'असखि' (सू २४३) इति निषेधाप्रवृत्तेर्घिसंज्ञा । सुसखिना । सुसखये । ङसिङसोर्गुणे कृते कृतयणादेशत्वाभावात् 'ख्यत्यात्–' (सू २५५) इत्युत्त्वं न । सुसखेः । सुसखावित्यादि । एवमतिशयितः सखा अतिसखा । 'परमः सखा यस्य' इति विग्रहे परमसखा परमसखायौ इत्यादि । गौणत्वेऽप्यनङ्णित्त्वे प्रवर्तेते । सखीमतिक्रान्तोऽतिसखिः । लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्न टच् । हरिवत् । इहानङ्णित्त्वे न भवतः । 'गोस्त्रियोः–' (सू ६५६) इति ह्रस्वत्वेन सखिशब्दस्य लाक्षणिकत्वात् । **'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात्'** (प ११४) २५७ **पतिः समास एव** । ।१।४।८। पतिशब्दः समास एव घिसंज्ञः स्यात् । पत्या । पत्ये । पत्युः । पत्युः । पतीनाम् । पत्यौ । शेषं हरिवत् । समासे तु भूपतिना। भूपतये । कतिशब्दो नित्यं बहुवचनान्तः । २५८ **बहुगणवतुडति संख्या**। ।१।१।२३। एते संख्यासंज्ञाः स्युः । २५९ **डति च** । ।१।१।२५। डत्यन्ता संख्या षट्संज्ञा स्यात् । २६० **प्रत्ययस्य लुक्श्लुलुपः** । ।१।१।६१। लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात् । २६१ **षड्भ्यो लुक्** । ।७।१।२२। षड्भ्यः परयोर्जश्शसोर्लुक् स्यात् । २६२ **प्रत्ययलोपे प्रत्ययलक्षणम्** । ।१।१।६२। प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यात् । इति 'जसि च' (सू २४१) इति गुणे प्राप्ते । २६३ **न लुमताङ्गस्य** । ।१।१।६३। लुक् श्लु लुप् एते लुमन्तः । लुमताशब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात् । कति । कति । कतिभिः कतिभ्यः कतिभ्यः । कतीनाम् । कतिषु । अस्मद्युष्मद्षट्संज्ञकास्त्रिषु सरूपाः । त्रिशब्दो नित्यं बहुवचनान्तः । त्रयः । त्रीन् । त्रिभिः । त्रिभ्यः त्रिभ्यः।

२६४ **त्रेस्त्रयः** । ।७।१।५३। त्रिशब्दस्य त्रयादेशः स्यादामि । त्रयाणाम्। परमत्रयाणाम् । गौणत्वे तु नेति केचित् । प्रियत्रीणाम् । वस्तुतस्तु प्रियत्रयाणाम्। त्रिषु । द्विशब्दो नित्यं द्विवचनान्तः । २६५ **त्यदादीनामः** । ।७।२।१०२। एषामकारोऽन्तादेशः स्याद्विभक्तौ । **'द्विपर्यन्तानामेवेष्टिः'** (वा ४४६८) द्वौ । द्वौ । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः । 'द्वि' पर्यन्तानाम्' इति किम् । भवान् । भवन्तौ । भवन्तः । संज्ञायामुपसर्जनत्वे च नात्वम् सर्वाद्यन्तर्गणकार्यत्वात् । द्विर्नाम कश्चित् । द्विः । द्वी । द्वयः । द्वावतिक्रान्तोऽतिद्विः । हरिवत् । प्राधान्ये तु परमद्वावित्यादि । औडुलोमिः। औडुलोमी । बहुवचने तु उडुलोमाः । **'लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः'** (वा २५६०) । बाह्वादीञोऽपवादः । औडुलोमिम् । औडुलोमी । उडुलोमान् ।। **इति इदन्ताः** ।। 'वातप्रमीः' ( उ ४४१) इत्युणादिसूत्रेण माङ ईप्रत्ययः। स च कित् । वातं प्रमिमीते इति वातप्रमीः' । 'दीर्घाज्जसि च ' (सू २३९) वातप्रम्यौ । वातप्रम्यः । हे वातप्रमीः । 'अमि पूर्वः' (सू १९४)। वातप्रमीम् । वातप्रम्यौ । वातप्रमीन् । वातप्रम्या । वातप्रमीभ्याम् । 3वातप्रम्ये। वातप्रमीभ्याम् । वातप्रमीभ्याम् । वातप्रम्य :2 । वातप्रम्योः2। वातप्रम्याम्। दीर्घस्यान्न नुट् । ङौ तु सवर्णदीर्घः । वातप्रमी । वातप्रम्योः। वातप्रमीषु । एवं ययीपप्यादयः । यन्त्यनेनेति ययीर्मार्गः । पाति लोकमिति पपीः सूर्यः । 'यापोः किद्द्वे च' (उ ४३९) इति ईप्रत्ययः । क्विबन्तवातप्रमीशब्दस्य त्वमि शसि ङौ च विशेषः । वातप्रम्यम् । वातप्रम्यः । वातप्रम्यि । 'एरनेकाचः–' (सू २७२) इति वक्ष्यमाणो यण् । प्रधीवत् ।बह्व्यः श्रेयस्यो यस्य सः बहुश्रेयसी । दीर्घङ्यन्तत्वात् 'हल्ङ्याप्–' (सू २५२) इति सुलोपः ।२६६ **यू स्त्र्याख्यौ नदी** । ।१।४।३। ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः । **'प्रथम लिङ्गग्रहणं च'**(वा १०३६)। पूर्व स्त्र्याख्यस्योपसर्जनत्वेऽपि इदानीं नदीत्वं वक्तव्यमित्यर्थः ।

---

तिलोपो न स्यात्. तस्मात् होतोः हलः परस्य लोपो विधीयते हल्ङ्यादिसूत्रेणेति शेषः। अतः कौमुद्यां प्रथमहल् किं? अबिर्भवान् रात्सस्येति नियमान्नात्र संयोगान्तलोपः इति यदि पठ्यते तर्हि सर्वं सुष्ठु स्यात्।

24. क्विबन्तवातप्रमीशब्दस्य अमि शसि ङौ च विशेषः क्विप्तु धातुत्वं न जहातीति वचनात् क्विबन्ते धातुत्वं वर्तत इति एरनेकाचोऽसंयोगपुर्वस्येति यण् स्यादिति भावः। प्रथमलिङ्गं गृहीत्वा यूस्त्र्याख्याावित्यनेन नदीत्वं वक्तव्यमित्येकोर्थः।

25. प्रथमलिङ्गग्रहणञ्च स्त्र्याख्यस्येति उपसर्जनत्वे इति चात्राध्याह्रियेते स्त्र्याख्यस्य पथमं वृत्तेः प्राक् यल्लिङ्गं नदीत्वरूपलिङ्गं तस्य ग्रहणमुपसर्जनत्वेऽपि स्यात् । प्रकृते

२६७ **अम्बार्थनद्योर्ह्रस्वः** । ।७।३।१०७। अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात् सम्बुद्धौ । हे बहुश्रेयसि । शसि बहुश्रेयसीन् । २६८ **आण् नद्याः** । ।७।३।११२। नद्यन्तात्परेषां ङितामाडागमः स्यात् । २६९ **आटश्च** । ।६।१।९०। आटोऽचि परे वृद्धिरेकादेशः स्यात् । बहुश्रेस्यै । बहुश्रेयस्याः । बहुश्रेयस्याः । नद्यन्तात्परत्वान्नुट्, बहुश्रेयसीनाम् । २७० **ङेराम्नद्याम्नीभ्यः** । ।७।३।११६। नद्यन्तादाबन्तान्नीशब्दाच्च ङेराम् स्यात् । इह परत्वादाटा नुड् बाध्यते, बहुश्रेयस्याम् । शेषमीप्रत्ययान्तवातप्रमीवत् । अङ्यन्तत्वान्न सुलोपः अतिलक्ष्मीः । शेषं बहुश्रेयसीवत् । कुमारीमिच्छन् कुमारीवाचरन् वा ब्राह्मणः कुमारी, क्यजन्तादाचारक्विबन्ताद्वा कर्तरि क्विप् । हल्ङ्याप्–' (सू २५२) इति सुलोपः । २७१ **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** । ।६।४।७७। श्नुप्रत्ययान्तस्य इवर्णोवर्णान्तस्य धातोः 'भ्रू' इत्यस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे । ङिच्च' (सू ४३) इत्यन्तादेशः । आन्तरतम्यादेरियङ् । ओरुवङ् , इतीयङि प्राप्ते । २७२ **एरनेकाचोऽसंयोगपूर्वस्य** । ६।४।८२। धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये परे । इति यण् , कुमार्यौ कुमार्यः । हे कुमारि । अमि शसि च कुमार्यम्, कुमार्यः । कुमार्यै । कुमार्याः । कुमार्याः । कुमारीणाम्। कुमार्याम् । कुमार्योः । प्रधीः । प्रध्यौ । प्रध्यः । प्रध्यम् । प्रध्यः । उन्नयतीत्युन्नीः । धातुना संयोगस्य विशेषाणादिह स्यादेव यण् उन्न्यौ। उन्न्यः। हे उन्नीः । उन्न्यम् । ङेराम्

---

बहुश्रेयसीत्यत्र स्त्र्याख्यस्य श्रेयसीशब्दस्य वृत्तेः समासात्प्राक् यल्लिङ्गं नदीत्वमस्ति तस्य वृत्तेः पश्चाद्बहुश्रेयसीत्युपसर्जनत्वेऽपि ग्रहणमस्तीति बहुश्रेयसीशब्दस्य नदीसंज्ञास्तीति फलितम् इत्यन्योऽर्थः ।

26. ङेराम्नद्याम्नीभ्यः । आम्नीभ्य इत्यत्र आम् नीभ्य इति स्थिते यरोऽनुनासिकेऽनुनासिको वेति आपः पकारस्य अनुनासिको मकारः बहुश्रेयसी ङि इति स्थिते । ङेराम् बहुश्रेयसी आम्, अत्र ह्रस्वनद्याप इति नद्यन्तात्परस्यामः नुट् प्राप्तः। आण्नद्या इति आट् च प्राप्तः, परत्वान्नुटं बाधित्वा आटः वात्रागतिरिति ङेरामि ङित्वञ्च स्थानिवद्भावेन न चानल्विधाविति निषेधः । अनुबन्धकार्ये तन्निषेधाभावात् ।

27. प्रधीशब्दस्य ङिति प्रत्यये परे आण्नद्या इति भवति वा न वा? अत्र विचार्यते। प्रकर्षेण ध्यायतीति प्रधीरिति विग्रहे प्रधीशब्दस्य नित्यस्त्रीलिङ्गाभावान्न नदीत्वमिति प्रध्ये प्रध्य इत्यादीन्येव रूपाणि भवन्ति । आतोऽभावात् प्रकृष्टा धीर्यस्येति विग्रहे प्रथमलिङ्गग्रहणञ्चेति वार्तिकस्य प्रथमलिङ्गं गृहीत्वा नदीत्वं वक्तव्यमित्यर्थाश्रयणे

उन्न्याम् । एवं ग्रामणीः । 'अनेकाचः' किम्–नीः । नियौ। नियः । अमि शसि च परत्वादियङ्, नियम्, नियः । ङेराम् । नियाम् । "असंयोगपूर्वस्य' किम्–सुश्रियौ,. यवक्रियौ । **गतिकारकेतरपूर्वपदस्य यण् नेष्यते** (वा ५०३४) । शुद्धधियौ, परमधियौ । कथं तर्हि 'दुर्धियः' 'वृश्चिकभियः' इत्यादि । उच्यते । 'दुःस्थिता धीर्येषाम्' इति विग्रहे 'दुर्' इत्यस्य धीशब्दं प्रति गतित्वमेव नास्ति । यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः । वृश्चिकशब्दस्य बुद्धिकृतमपादानत्वं नेह विवक्षितम् । वृश्चिकसंबन्धिनी भीर्वृश्चिकभीरित्युत्तरपदलोपो वा । २७३ **न भूसुधियोः** । ।६।४।८५। एतयोर्यण् न स्यादचि सुपि । सुधियौ सुधिय इत्यादि । सखायमिच्छति सखीयति । ततः क्विप् । अल्लोपयलोपौ । अल्लोपस्य स्थानिवत्त्वाद्यणि प्राप्ते। **क्वौ लुप्तं न स्थानिवत्** (वा ४३१) । एकदेशविकृतस्यानन्यतयाऽनङ्णित्त्वे, सखा सखायौ, सखायः । हे सखीः । अमि पूर्वरूपात्परत्वाद्यणि प्राप्ते ततोऽपि परत्वात् 'सख्युरसंबुद्धौ' (सू २५३) इति प्रवर्तते, सखायम्, सखायौ । शसि यण्, सख्यः । सह खेन वर्तत इति सखः, तमिच्छतीति सखीः । सुखमिच्छतीति सुखीः । सुतमिच्छतीति सुतीः । सख्यौ । सुख्यौ । सुत्यौ । 'ख्यत्यात्–' (सू २५५) इति दीर्घस्यापि ग्रहणादुकारः, सख्युः, सुख्युः, सुत्युः । लूनमिच्छतीति लूनीः । क्षाममिच्छतीति क्षामीः । प्रस्तीममिच्छतीति प्रस्तीमीः । एषां ङसिङसोर्यण् ।

---

स्यादेव नदीकार्यं धीशब्दस्य नित्यस्त्रीलिङ्गत्वात् । न च नेयङुवङ्स्थानावस्त्री इति धीशब्दस्य इयङ्स्थानत्वेन नदीसंज्ञानिषेधात्प्रधीशब्दस्यापि न नदीसंज्ञेति वाच्यम्। प्रधीशब्दस्य एरनेकाच इति यणस्थानत्वेन नेयङुवङिति निषेधायोगात्। न हि धीशब्दगतनदीत्वं रधीशब्दे अतिदिश्यते। किन्तु नित्यस्त्रीत्वमेवेति यदा तु पुनः वार्तिकस्य पूर्वं स्त्र्याख्यस्य उपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थो वर्ण्यते, तदा धीशब्दस्य नेयङुवङिति निषेधेन पूर्वमेव नदीत्वं नास्तीति प्रधीशब्दे उपसर्जनत्वेऽपि नास्ति नदीत्वमिति बोध्यम्। ननु ङिति ह्रस्वश्चेति इयङुवङ्स्थानस्यापि धीशब्दस्य ङिति वा नदीसंज्ञास्तीति प्रधीशब्देऽपि ङिति परे तादृशं वैकल्पिकं नदीत्वं कुतो न स्यादिति चेन्नैवम्। वृत्तेः प्राक् प्रकृष्टा धीर्यस्येति विग्रहे धीशब्दस्य विद्यमानं हि नदीत्वं प्रधीशब्देऽतिदिश्यते। तद्विग्रहे धीशब्दस्य नदीत्वं नास्त्येव प्रथमान्तत्वात्। ङित्प्रत्ययान्तस्य हि धीशब्दस्य वैकल्पिकं नदीत्वम्। तस्मात् वृत्तेः प्राक् विग्रहावस्थायां प्रथमान्तधीशब्दस्य नदीत्वाभावात् नास्ति प्रधीशब्दस्य ङित्प्रत्ययान्तस्यापीति इदं फलितमत्र। प्रधेयायतीति प्रधीरिति समासाश्रयणे प्रधीशब्देन नदीकार्यं, प्रकृष्टा धीरिति विग्रहे तु नदिकार्यं, वैकल्पिकम् । तेन ङे प्रध्ये प्रध्यै, ङस् प्रध्यः, प्रध्याः, आम् प्रध्यां प्रधीनाम् ङि प्रध्यि प्रध्याम् ।

नत्वमत्वयोरसिद्धत्वात् 'ख्यत्यात् –' (सू २५५) इत्युत्त्वम्, लून्युः, क्षाम्युः, प्रस्तीम्युः । शुष्कीयतेः क्विप् । शुष्कीः । पक्वीः । इयङ् , शुष्कियौ, शुष्कियः । ङसिङसोः शुष्किय इत्यादि । **इति ईदन्ताः।** शंभुर्हरिवत् । एवं विष्णुवायुभान्वादयः ।२७४ **तृज्वत्क्रोष्टुः।** ।७।१।९५। क्रोष्टु शब्दस्तृजन्तेन तुल्यं वर्तते, असंबुद्धौ सर्वनामस्थाने परे । क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः । २७५ **ऋतो ङिसर्वनामस्थानयोः** । ।७।३।११०। ङौ सर्वनामस्थाने च परे ऋदन्ताङ्गस्य गुणः स्यात् । इति प्राप्ते । २७६ **ऋदुशनस्पुरुदंसोऽनेहसां च** । ।७।१।९४। ऋदन्तानामुशनसादीनां चानङ् स्यादसंबुद्धौ सौ परे । २७७ **अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृपोतृप्रशास्तृणाम्** । ।६।४।११। अबादीनामुपधायादीर्घः स्यादसंबुद्धौ सर्वनामस्थाने परे । नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम् । उणादिनिष्पन्नानां तृन्तृजन्तानां संज्ञाशब्दानां चेद्भवति तर्हि नप्त्रादीनामेव । तेन पितृभ्रातृप्रभृतीनां न । उद्गातृशब्दस्य तु भवत्येव । 'समर्थ–' (सू ६४७) सूत्रे 'उद्गातारः' इति भाष्यप्रयोगात् । क्रोष्टा, क्रोष्टारौ, क्रोष्टारः, क्रोष्टारम्, क्रोष्टारौ, क्रोष्टून् । २७८ **विभाषा तृतीयादिष्वचि** । ।७।१।९७। अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत् । क्रोष्ट्रा, क्रोष्ट्रे । २७९ **ऋत उत्** । ।६।१।१११। ऋदन्तान् ङसिङसोरति परे उकार एकादेशः स्यात् । रपरत्वम् । २८० **रात्सस्य** । ।८।२।२४। रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य । इति रेफस्य विसर्गः । क्रोष्टुः । आमि परत्वात् तृज्वद्भावे प्राप्ते **'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन'** (वा ४३७४) । क्रोष्टूनाम् । क्रोष्टरि । क्रोष्ट्रोः । पक्षे हलादौ च शंभुवत्।। **इत्युदन्ताः** ।। हूहूः. हूह्वौ, हूह्वः । हूहूम्, हूह्वौ, हूहून् इत्यादि । अतिचमूशब्दे तु नदीकार्यं विशेषः, हे अतिचमु । अतिचम्वै । अतिचम्वाः । अतिचम्वाः अतिचमूनाम् । अतिचम्वाम् । खलपूः । २८१ **ओः सुपि** । ।६।४।८३। धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ सुपि । **'गतिकारकेतरपूर्वपदस्य यण् नेष्यते'** (वा ५०३४) । खलप्वौ, खलप्व इत्यादि ।

---

28. सुश्रियौ, यवक्रियौ, श्रयत इति श्रीः, श्रिणातीति वा श्रीः। शोभना श्रीर्यस्य सः सुश्रीः। यवान् क्रीणातीति यवक्रीः । अत्र इवर्णस्य धात्ववयवसंयोगपूर्वात्वान्न यण्–

29. गतिकारकेतरपूर्वपदस्य यणणेष्यते। अत्र वार्तिके एरनेकाचोऽसंयोगपूर्वस्येत्यनुवर्त्यते।

एवं सुल्वादयः। 'अनेकाचः' किम्–लूः, लुवौ, लुवः । 'धात्ववयव–' इति किम्–उल्लूः, उल्ल्वौ, उल्ल्वः । 'असंयोगपूर्वस्य' किम्–कटप्रूः, कटप्रुवौ, कटप्रुवः । 'गति–' इत्यादि किम्–परमलुवौ । 'सुपि' किम्–लुलुवतुः । स्वभूः । 'न भूसुधियोः' (सू २७३) । स्वभुवौ, स्वभुवः । एवं स्वयम्भूः । २८२ **वर्षाभ्वश्च** । ।६।४।८४। अस्योवर्णस्य यण् स्यादचि सुपि । वर्षाभ्वौ, वर्षाभ्वः । दृम्भतीति दृम्भूः । 'अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः' (उ ९३) इत्युणादिसूत्रेण निपातितः । दृम्भ्वौ दृम्भ्वः । दृम्भूम्, दृम्भ्वौ, दृम्भून् । शेषं हूहूवत् । 'दृन्' इति नान्ते हिंसार्थेऽव्यये भुवः क्विप् , दृन्भूः ।**'दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः'** (वा ४११८) । दृन्भ्वम्, दृन्भ्व इत्यादि खलपूवत् । करभूः । करभ्वम् । करभ्वः । दीर्घपाठे तु कर एव कारः । स्वार्थिकः प्रज्ञाद्यण् । कारभ्वम् । कारभ्वः । पुनर्भूर्यौगिकः पुंसि । पुनर्भ्वौ इत्यादि । दृन्भूकाराभूशब्दौ स्वयंभूवत् ।। **इत्यूदन्ताः** ।। धाता हे धातः। धातारौ । धातारः । **'ऋवर्णान्नस्य णत्वं वाच्यम्'** (वा ४९६९) धातॄणामित्यादि । एवं नप्त्रादयः । उद्गातारौ । पिता । व्युत्पत्तिपक्षे नप्त्रादिग्रहणस्य नियमार्थत्वान्न दीर्घः । पितरौ, पितरः । पितरम् पितरौ । शेषं धातृवत् । एवं जामातृभ्रात्रादयः । ना, नरौ, नरः । हे नः।

---

तथा चायमर्थः गतिकारकाभ्यामितरदन्यत्पूर्वपदं यस्य तस्य अधात्ववयवसंयोगपूर्वे वर्णान्तधात्वन्तस्य अनेकाचोऽङ्गस्य यण् नेष्यते। शुद्धा धीर्यस्य स शुद्धधीः शुद्धधियौ शुद्धधियः। अत्रानेकाचि अङ्गे यत्पूर्वपदं शुद्धेत्याकारकं तन्न कारकं, नापि गतिसंज्ञकमिति न यण् । शुद्धं ध्यायतीति शुद्धधीरिति विग्रहे तु यण् स्यादेव, शुद्धपदस्य कारकत्वात्। ननु गतिकारकपूर्वपदस्य यणिष्यत इत्येव वार्तिकमस्तु, लाघवादिति चेन्मैवम्। कुमारीमिच्छन् ब्राह्मणः, कुमारी कुमार्यौ इत्यादौ एकपदे गतिकारकपूर्वपदाभावात् यण् न स्यादिति। ननु नियमार्थमिदं वार्तिकम् अन्यथा एरनेकाच इति सूत्रादेव यथा अपूर्वपदस्य अनेकाचोऽङ्गस्य तथा गतिकारकपूर्वपदस्यापि यणस्संभवे किमनेन? तस्मात् नियमश्चात्र एरनेकाच इति सूत्रात्प्राप्तो यण् यदि स पूर्वपदस्यानेकाचोऽङ्गस्य स्यात्तर्हि गतिकारकपूर्वपदस्यैवेति चेन्मैवम्। विपरीतनियमोऽपि तर्हि संभाव्येत, एरनेकाच इति यण् गतिकारकपूर्वस्यैव, नाप्यपूर्वस्य नापि गतिकारकेतरपूर्वस्येति। अतो यथास्थितं वार्तिकं रमणीयमेव ।

30. वृश्चिकाद्भीः वृश्चिकभीः वृश्चिकभियौ वृश्चिकभियः। अत्र भीत्रार्थानां भयहेतुरिति वृश्चिकशब्दस्य अपादानत्वेन कारकत्वमस्तीति कारकपूर्वपदस्य यण् स्यात्। वृश्चिकभियौ इत्यादि कथमिदमित्यत आह, वृश्चिकशब्दस्य बुद्धिकृतमित्यादि।

अयम्भावः भाष्यकाराः चोरात्त्रायत इत्यादिसिद्ध्यर्थं बुद्धिपरिकल्पितं (वैवक्षिकम्) अपायं विश्लेषमाश्रित्य भीत्रार्थानामिति सूत्रं प्रत्याचख्युः । तन्मते यत्र चोरात्त्राणमित्यादौ चोरत्राणयोर्विश्लेषो विवक्षितस्तत्र चोरात्त्रायत इत्यादौ ध्रुवमपायेऽपादानमिति अस्यैवापादानत्वं । यत्र तु वृश्चिकभययोविश्लेषो न विवक्षितस्तत्र वृश्चिकभीःरित्यादौ नास्त्यपादानत्वमिति विवक्षाधीनमेवापादानत्वमिति, नात्र वृश्चिकशब्दस्य कारकत्वमिति । एतन्मते वृश्चिकस्य भीरिति संबन्धसामान्ये षष्ठी। नन्वेवम् भाष्यकारमते भवतु। कथं सूत्रकारमत इत्याशंक्याह वृश्चिकसंबन्धिनी भीर्वृश्चिकभीरित्युत्तरपदलोपो वेति।

31. न भूसुधियोः । शोभना धीर्यस्य स सुधीरिति धीशब्दम्प्रति सुशब्दस्य गतिसंज्ञास्तीति यणः प्राप्तौ क्रियते निषेधोऽनेन । दुर्धिय इत्यत्र दुरित्यस्य दुस्स्थिता धीर्येषामिति विग्रहेण स्थितिक्रियां प्रत्येव उपसर्गसंज्ञा, न तु धीशब्दं प्रतीति नास्ति दुरः कारकत्वं धीपूर्वस्येति बोध्यम् ।

32. सखायमात्मन इच्छति सखीयति । सुप आत्मनः क्यच् इति। सखायं क्यच् इति स्थिते, धात्ववयवत्वात्सुब्लुकि निमित्तापाये नैमित्तिकस्याप्यपाय इति णिद्वद्भावस्याप्यपाये सखि क्यच् इति स्थिते ककारचकारयोरित्संज्ञया लोपे सखि यकृत्सार्वधातुकयोर्दीर्घ इति क्यच आर्धधातुकत्वेन दीर्घः। सखीय ततस्तिप् सखीयति । कर्तरि शप् सखीय अ.ति. अतो गुणे सखीयति इति धातुः। सखीयतेः क्विप् इक्श्तिपौ धातुनिर्देशाविति स्तिपा निर्देशस्सखीयतेरिति। वस्तुतस्तु क्यजन्तात्सखिशब्दादेव क्विप्, न तु तिङन्तादिति भ्रमितव्यम् तथात्वे सखीयति क्विप् इति स्थिते तिपो लोपो न स्यात्, सखीय क्विप् क्विपस्सर्वापहारः। अतो लोपः आर्थधातुकोपदेशकाले यदकारान्तमङ्गं तस्याकारस्य लोपस्स्यादिति क्यचः अकारान्तार्थधातुकत्वेन यकारोपर्यकारस्य लोपः, सखीय् कृदन्तत्वात्सुबुत्पत्तौ सखीय् स् इति स्थिते, लोपो व्योर्वलीति यलोपः । सखी स् अङचन्तत्वान्न सुलोपः । रुत्वविसर्गौ। सखीः इति भवितव्ये सखिशब्दात्सखी शब्द एकदेशविकृतत्वेन अनन्यवद्भवतीति भवत्येवानङ् । सखा सखायावित्यादि। संबुद्धौ तु अनङ्णिद्वद्भावयोरप्रसक्त्या हे सखीरित्येव। ननु सखीय क्विप् इति स्थिते क्विपस्सर्वापहारेऽपि प्रत्ययलोपे प्रत्ययलक्षणन्यायेन तत्परकत्वमभ्युपगम्य क्विपः धातोरिति विहितप्रत्ययत्वेन आर्थधातुकत्वादार्थधातुके परे अतो लोपस्य कृतत्वेन परनिमित्तोयमतो लोपात्मको जादेशस्स्थानिवत्स्यात्. स्थानिभूतादचः पूर्वत्वेन दृष्टस्य सखीशब्देकारस्य विधौ यण्रूपकार्ये कर्तव्ये इति अल्लोपस्य स्थानिवद्भावेन यण् प्राप्त इत्याशङ्क्य क्वौ लुप्तं न स्थानिवदिति समाधापितं कौमुद्याम्। क्विनिमित्तकत्वेन जायमानो लोपो न स्थानिवदिति तदर्थः क्वीति क्विप्क्विनोर्ग्रहणम् । निरनुबन्धकनिर्देशात्। न च लोपो व्योर्वलीति यलोपे कर्तव्य एव अल्लोपस्य स्थानिवद्भावो वाच्य इति वाच्यम्। न पदान्तसूत्रेण यलोपविधौ स्थानिवद्भावनिषेधात् । ननु अल्लोपस्य स्थानिवत्त्वेन यणि कर्तव्ये यलोपस्य स्थानिवित्त्वेन न यण् इति क्वौ लुप्तं न स्थानिवदिति किम् इति चेन्मैवम्। अल्विधित्वेन यलोपो न स्थानिवत्, न चाचः परस्मिन्निति स्थानिवद्भावः यलोपस्य अजादेशत्वाभावात्।

२८३ **नृ च** । ।६।४।६। 'नृ' इत्येतस्य नामि वा दीर्घः स्यात् । नृणाम्, नृणाम् ।। इति ऋदन्ताः ।। 'कॄ' 'तॄ' अनयोरनुकरणे **'प्रकृतिवदनुकरणम्'** (प ३७) इति वैकल्पिकातिदेशादित्त्वे रपरत्वे कीः, किरौ, किरः । तीः, तिरौ, तिर इत्यादि गीर्वत् । इत्त्वाभावपक्षे तु 'ऋदुशनस्-' (सू २७६) इति 'ऋतो ङि-' (सू २७५) इति च तपरकरणादनङ्गुणौ न । कॄः, क्रौ, क्रः

---

33. नप्त्रादिग्रहणम् व्युत्पत्तिपक्षे नियमार्थम् को स नियमः। तृन्तृजन्तानां यद्युपधादीर्घस्तर्हि नप्त्रादीनामेवेति । नन्वेवं धाताराविति न स्यात् इति चेत्तर्हि औणादिकानां तृन्तृजन्तानां यदि भवति तर्हि नप्त्रादीनामेवेति नियमः क्रियताम्। नन्वेवं मातरौ माताराविति रूपद्वयं न सिद्ध्यतीति चेत्, उणादिमात्रव्युत्पन्नानां तृन्तृजन्तानां यदि भवति तर्हि नप्त्रादीनमेवेति, तेन जननीवाचिमातृशब्दस्य, मानपूजायामिति धातोरौणादिके तृनि तृचि वा कृते नप्तृनेष्टृ-इत्याद्यौणादिकसूत्रेण नलोपो निपातितः। अतस्तस्य उणादिमात्रव्युत्पन्नतृन्तृजन्त-त्वादनप्त्रान्नोपधादीर्घः। परिच्छेतृवाचिमातृशब्दस्तु माङ्धातोःण्वुल्तृचाविति तृचि कृते च निष्पन्न इति सत्यप्युणादिव्युत्पन्नत्वे (बहुलमन्यत्रापीति सूत्रात् नप्त्रादिसूत्रे अविशेषेणमातृशब्दस्य पठनाद्वा) पाणिनीयसूत्रव्युत्पन्नस्यापि सम्भवान्नोणादिमात्रव्युत्पन्नत्वमिति माताराविति भवत्येव, धातृशब्दश्च डुधाञ् धातोः ण्वुल्तृचाविति तृचि कृते निष्पन्न इति नौणादिकः। जननीवाचिमातृशब्दस्तु मानधातोःस्तृचि कृते पाणिनीयमतेन लोपासंभवेन मान्तेति स्यान्न तु मातेति हेतोः उणादिमात्रव्युत्पन्न एव। उद्गातार इत्यत्रापि उणादिमात्रव्युत्पन्नत्वाभावात्स्यादेव दीर्घ इति न भाष्यप्रयोगानुसरणक्लेशः कर्तव्यः। अव्युत्पत्तिपक्षे तु नप्त्रादीनां तृन्तृजन्तत्वाभावेन अप्तृन्तृजिति सूत्रिते नप्त्रादीनां दीर्घ एव न स्यादिति तेषां ग्रहणं सार्थकमेवेति बोध्यम्। तेनैतन्मते पितृभ्रातृप्रभृतीनां तृन्तृजन्तत्वाभावात् सूत्रेऽग्रहणाच्च न दीर्घशङ्कास्तीति भावः। ननु अस्मिन्मते न कोऽपि तृन्तृजन्तश्शब्दो लभ्यत इति तृन्तृच्ग्रहणं व्यर्थम् । किञ्च क्रोष्टारौ, धाताराविन्यादीनि न सिद्ध्यन्तीति चेदुच्यते। अव्युत्पत्तिपक्षपातिनः उणादिमात्रव्युत्पन्नानां शब्दानामेव अव्युत्पन्नत्वं वदन्ति,न तु पाणिनीयव्युत्पन्नानां शब्दनामन्यथा तेषां कृत्प्रत्ययविधायकपाणिनीयशास्त्रसङ्कोचप्रसङ्गात्। तस्मादस्मिन् मतेऽपि औणादिकानां नप्त्रादीनामव्युत्पन्नानां पाणिनीयव्युत्पन्नानां तृन्तृजन्तानाञ्च उपधादीर्घस्स्यादिति फलितत्वेन उभयोरपि पक्षयोर्भावैक्यमेवेति सर्वं सुष्ठु ।

34. नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन । ननु आमि परत्वात्तृज्वद्भावे प्राप्ते, तृज्वद्भावे कृतेऽपि ह्रस्वान्तत्वानपायेन ह्रस्वनद्याप इति नुट् स्यादेवेति कृताकृतप्रसंङ्गित्वरूपनित्यत्वान्नुड्भवत्येवेति किमनेन वार्तिकस्थ तृज्वद्भावपदेनेति चेत्, तृज्वद्भावे कृते, नुडागमो न स्यात् सन्निपतपरिभाषयेति नास्ति नुटः नित्यत्वमिति। सन्निपातपरिभाषा चात्र अजादिविभक्तिनिमित्तकत्वेन जायमानः तृज्वद्भावः अजादिविभक्तेरामः नुडागमसम्पादनद्वारा हलादिविभक्तिकत्वं सम्पाद्य अजादिविभक्तित्वविघाताय न भवतीति अचिर ऋत इति सूत्रात् ऋकारस्य विधीयमानं रत्वम्।

35. कीः कृधातोरनुकरणशब्दः, ऋत इद्धातोरिति इत्वं, उरण्रपर इति रपरत्वं

किर् स् स सजुषोरुः किर् र् रोरि किर् ढ्रलोपे पूर्वस्य दीर्घोऽण इति कीर् विसर्गः कीः। इत्वाभावपक्षे क्रा कॄभ्यां कॄभिः। क्रे कॄभ्यां कॄभ्यः। क्रः कॄभ्यां कॄभ्यः क्रः क्रोः क्रोम्। क्रि क्रोः कॄषु-

ननु किर् सु इत्यस्यामवस्थायां ससजुषोरुरिति रुत्वं हल्ङ्याभ्य इति सुलोपः, रात्सस्येति संयोगान्तलोपश्चेति त्रयं प्राप्तम् । तत्र त्रैपादिकत्वात् संयोगान्तलोपस्तावन्न भवति। तथैव रुत्वमपि न भवति। त्रैपादिकत्वेन सुलोपं प्रति तस्याप्यसिद्धत्वात्। अतः परिशेषात् सुलोपस्स्यात् । तस्मात् किरित्येव रुपं स्यात्, न तु कीरिति चेदुच्यते। स्थानिवदादेश इति इत्वस्य स्थानिवद्भावे नाच्त्वादयं सुर् न हलन्तात्परः। किन्तु अजन्तादेवेति सुलोपस्याप्रवृतेः। नन्वेवमपि संयोगान्तलोपं प्रति रुत्वस्यासिद्धत्वात् संयोगान्तलोप एव स्यादिति चेन्मैवम्। लोपे कर्तव्ये इर्त्वस्य स्थानिवद्भावेनाच्त्वात्संयोगस्यैवाभाव इति कृत्वा संयोगान्तलोपस्य असम्भवात् रुत्वं स्यादेवेति। नन्वेवं रुत्वे कर्तव्येऽपि स्थानिवद्भावस्स्यादेवेति चेदस्तु नाम। स्थानिवद्भावे सत्यपि कॄ सु इत्यवस्थायां किर् सु इत्यवस्थायां वा वृत्वं सुलभेन अयमत्र क्रमः। कॄर् सु इति स्थिते रुत्वस्यासिद्धत्वादित्वम्। ततो रुत्वं, पश्चात् रोरीति लोपः ततो ढलोपदीर्घः, ततो विसर्गः कीः इति । अत्र हल्ङ्यादिलोपस्संयोगान्तलोपश्च स्थानिवद्भावान्न भवत इति निष्कृष्टम्। अत्र विचार्यते । ननु स्थानिवद्भावो न स्यात् अनल्विधाविति तन्निषेधात्। तथा हि स्थानी ॠकारः, तदवयवोऽल् स एव व्यपदेशिवद्भावात् तन्मात्रवृत्तिर्धर्मः। ॠ अर्त्वं तद्घटितविधित्वाद्धल्ङ्यादिलोपसंयोगान्तलोपाभावस्य इति चेन्मैवम्। स्थानिधर्मस्याच्त्वस्य न ह्यत्र साक्षाद्धल्ङ्यादिसंयोगान्तलोपनिषेधकत्वं अनचीतिवत्, किन्तु अच्त्वेन हलन्तत्वे निषिद्धे पश्चात्सुलोपनिषेधः। तथा अच्त्वेन संयोगे निषिद्धे पश्चात्संयोगान्तलोपनिषेधः इति परम्परयैवेति कृत्वा नायमल्विधिः। तस्मात् स्थान्यवयवाल्मात्रवृत्तिधर्मसाक्षाद्घटितविधौ कर्तव्ये स्थानिवद्भावो नेति लक्षणनिष्कर्षः कर्तव्य इति। वस्तुतस्तु ॠत इत्त्वे रपरत्वे हलि चेत्युपधादीर्घः। न चात्रापि उपधादीर्घस्य त्रैपादिकत्वाद्धल्ङ्यादिलोपस्स्यादिति वाच्यम्। कार्यासिद्धिमते उपधादीर्घस्य दुर्वारत्वादादावुपधादीर्घः, पश्चाद्धल्ङ्यादिलोपः इति। ननु शास्त्रासिद्धिमते आदावेव हल्ङ्यादिलोपस्स्यात्। पश्चात्तु उपधादीर्घो न भवेत्, हल्परकत्वाभावादिति चेन्मैवम्। हल्ङ्यादिलोपे सत्यपि प्रत्ययलोपप्रत्ययलक्षणन्यायेनोपधादीर्घस्स्यादेवेति प्रत्ययलक्षणनिषेधात् न स्यादुपधादीर्घ इति चेन्मैवम् । अङ्गकार्यविषये एव न लुमतेति निषेधः। उपधादीर्घस्तु नाङ्गकार्यम्। त्रिपाद्यामङ्गाधिकाराभावेन त्रैपादिकस्य कार्यस्य अङ्गकार्यत्वाभावात्। ननु पूर्वत्रासिद्धमिति सूत्रे कौमुद्यां पूर्वम्प्रति परं शास्त्रमसिद्धं स्यादिति शास्त्रासिद्धिमतमेवोपन्यस्तम्, कुतस्त्वया कार्यासिद्धिमतमप्युच्यते इति चेत्सत्यम्। उच्यते। असिद्धपदस्य अविद्यमानमिव स्यादिति अकृतकार्यमिव स्यादिति च अर्थद्वयाश्रयणेन मतद्वयलाभात्। नहि कैमुद्यामसिद्धपदं व्याख्यातम्, येन कौमुदीकारानभिमतं मन्मतं भवेत्। तस्मात्पूर्वशास्त्रम्प्रति परं शास्त्रमविद्यमानमिव स्यादिति शास्त्रासिद्धिपक्षः। पूर्वशास्त्रम्प्रति परं शास्त्रामकृतकार्यमिव स्यादिति कार्यासिद्धिपक्षः। प्रथमपक्षे सापादिकशास्त्रात्प्राक् त्रैपादिकशास्त्रं लक्ष्ये न प्रवर्तते, (कार्यं न करोतीत्यर्थः)

। कृम्, क्रौ, कृन् । क्रा । क्रे इत्यादि ।। **इत्यृदन्ताः** ।। 'गम्लृ' 'शक्लृ' अनयोरनुकरणे अनङ् । गमा । शका । गुणविषये तु लपरत्वम् । गमलौ, गमलः । गमलम्, गमलौ, गम्लॄन् । गम्ला । गम्ले । ङसिङसोस्तु 'ऋत उत्' (सू २७९) इत्युत्त्वे लपरत्वे 'संयोगान्तस्य लोपः' (सू ५४) । गमुल् । शकुल् इत्यादि ।। **इति ऌदन्ताः** ।। इना सह वर्तते इति सेः सयौ सयः । स्मृतेः । स्मृतयौ स्मृतयः । ।। **इत्येदन्ताः** । २८४ **गोतो णित्** । ।७।१।९०। गोशब्दात्परं सर्वनामस्थानं णिद्वत्स्यात् । गौः, गावौ, गावः । २८५ **औतोऽम्शसोः** । ।६।१।९३। 'आ ओतः' इति च्छेदः । ओकारादम्शसोरचि परे आकार एकादेशः स्यात् । शसा साहचर्यात्सुबेव अम् गृह्यते । नेह–अचिनवम्, असुनवम् । गाम्, गावौ गाः । गवा । गवे । गोः–इत्यादि । ओतो णिदिति वाच्यम् । विहितविशेषणं च । तेन सुद्यौः, सुद्यावौ, सुद्यावः । सुद्यामित्यादि । 'ओकारान्ताद्विहितं सर्वनामस्थानम्' इति व्याख्यानान्नेह–हे भानो, हे भानवः । उः शम्भुः स्मृतो येन स स्मृतौः, स्मृतावौ, स्मृतावः । स्मृताम् स्मृतावौ, स्मृताः–इत्यादि ।। **इत्योदन्ताः** ।। २८६ **रायो हलि** । ।७।२।८५। रैशब्दस्य आकारोऽन्तादेशः स्याद्धलि विभक्तौ । राः । अच्यायादेशः रायौ, रायः। रायम्, रायौ, रायः । राया, राभ्यामित्यादि ।। **इत्यैदन्ताः** ।

---

कार्यासिद्धिपक्षे तु प्रवर्तत इति विवेकः । अमुमित्यादिरूपसिद्ध्यर्थं शास्त्रासिद्धिपक्षः । हर एहीत्याद्यर्थं कार्यासिद्धिपक्षश्चेत्युभयमपि स्वीकर्तव्यमेव। तत्र तु लक्ष्यानुरोधात् व्यवस्था ज्ञेया। सर्वमिदं मया लोपश्शाकल्यस्येति सूत्रव्याख्यावसरे प्रपञ्चितमधस्तात् । प्रकृते किर् सु लक्ष्ये तु पक्षद्वयस्यापि प्रसक्तिरस्तीति यथोक्तं सर्वं सुष्ठु ।

36. गुणविषये तु लपरत्वम्, ऋतो ङि सर्वनामस्थानयोरिति गुणविषये असंबुद्धिसुभिन्नसर्वस्थानप्रत्ययेष्वित्यर्थः । उरण् रपर इत्यत्र रप्रत्याहारेण लकारस्यापि ग्रहणात् ऌवर्णस्य स्थाने लपरो गुणः प्रवर्तते, गमॄणामिति षष्ठी गम्लृष्विति सप्तमीबहुवचनम्।

37. सयं सयौ सयः, सया सेभ्यां सेभिः, सयः सेभ्यां सेभ्यः, सयः सयोः सयाम्। सयि सयोस्सेषु। एवं स्मृते शब्दस्य च बोध्यानि रूपाणि–

38. गोशब्दात्परस्य सर्वनामस्थानस्य णिद्वद्भावातिदेशेन अचोञ्णितीति अजन्ताङ्गस्य वृद्धिः स्यात् । तेन गो सु वृद्धिः, गौ सु रुत्वविसर्गौ। गौः–

ग्लौः, ग्लावौ, ग्लावः।ग्लावम्, ग्लावौ, ग्लावः–इत्यादि । 'औतोऽम्शसोः' (सू २८५) इतीह न प्रवर्तते । 'ऐऔच्' (म सू ४) इति सूत्रेण ओदौतोः सावर्ण्याभावज्ञापनात् ।। **इत्यौदन्ताः।।**

**इत्यजन्तपुँलिङ्गप्रकरणम्।।**

## अथाजन्तस्त्रीलिङ्गप्रकरणम् ।१।

रमा । २८७ **औङ आपः** । ।७।१।१८। आबन्तादङ्गात्परस्यौङः शी स्यात् । औङ् इत्यौकारविभक्तेः संज्ञा । रमे । रमाः । २८८ **सम्बुद्धौ च** । ।७।३।१०६। आप एकारः स्यात्सम्बुद्धौ । 'एङ्ह्रस्वात्–' (सू १९३) इति संबुद्धिलोपः, हे रमे । हे रमे, हे रमाः रमाम्, रमे, रमाः । स्त्रीत्वान्नत्वाभावः ।

---

39. स्मृतां स्मृतावौ स्मृताः, स्मृतवा स्मृतोभ्यां स्मृतोभिः, स्मृतवे स्मृतोभ्यां स्मृतोभ्यः, स्मृतोः स्मृतोभ्यां स्मृतोभ्यः, स्मृतोः स्मृतवोः स्मृतवां, स्मृतवि स्मृतवोः स्मृतोषु।

40. राया राभ्यां राभिः, राये राभ्यां राभ्यः, रायः राभ्यां राभ्यः, रायः रायोः रायाम्, रायि रायोः रासु ।

41. ग्लावा ग्लौभ्यां ग्लौभिः। ग्लावे ग्लौभ्यां ग्लौभ्यः, ग्लावः ग्लौभ्यां ग्लौभ्यः, ग्लावः ग्लावोः ग्लावाम्, ग्लावि ग्लावोः ग्लौषु।

**इत्यजन्त पुम्लिङ्गः ।**

**श्रीहयग्रीवाय नमः**

**अथ अजन्ताः स्त्रीलिङ्गाः प्रारभ्यन्ते**

1. इदं सूत्रं त्यक्तुं शक्यम्। तीयस्य ङित्सूपसंख्यानात्। विभाषाप्रकरणे तीयस्य ङित्सूपसंख्यानमिति वार्तिकादित्यर्थः। ननु स्मायादेशवत्। त्स्याडादेशस्य ङित्सूपसङ्ख्यानेन लाभे सत्यपि आपो ह्रस्वो न लभ्येतेति चेन्मैवम्। आपो ह्रस्वस्य साडादेशस्सन्नियोगशिष्टत्वेन यदा स्याट्प्रवृत्तिः तदा ह्रस्वप्रवृत्तिरपीति न दोष इति।

2. अम्बार्था इत्यनेन मातृवाचकाः द्व्यक्षरा आबन्ता एव गृह्यन्ते। तेन हे अम्बाले इत्यादौ हे प्रसूत्यादौ च न ह्रस्वः।

3. अनल्विधावित्युक्तेर्न भवन्ति स्थान्यवयवाल्मात्रवृत्ति आप्त्वरूपधर्मपुरस्कारकत्वादौ ङि चाप इत्यादिविधीनां न स्थानिवद्भाव इति भावः। न च परनिमित्तोजादेशः स्थानिवत्स्यात् । स्थानिभूतादचः पूर्वस्मात्परस्य विधाविति स्थानिवद्भाव इति वाच्यम्। स्थानिभूताच एव शीभावादीन्प्रति निमित्तभूतत्वात्। स्थानिभूताजपेक्षया पूर्वस्य यदि निमित्तत्वं परकार्यं प्रति तदानीं भवतु स्थानिवद्भावः। प्रकृते न तथेति पक्षान्तरमुदाहरति। आ आबिति प्रश्लिष्येति । अयं भावः आङि चाप इत्यादौ आकाररूपादापः परस्यौङश्शी स्यादिति अर्थवचने स्थानिवद्भावेनात्र आत्वे आकाररूपत्वं नास्तीति न दोष इति।

अतिखट्वाय खट्वामतिक्रान्तोऽतिखट्वः। गोस्त्रियोरुपसर्जनस्येति ह्रस्वः, सुपि चेति दीर्घः, अतिखट्वाय। अत्र यञादिसुबाश्रयस्य आकारस्य स्थानिवद्भावेनाप्त्वमप्यस्तीति आकाररूपाऽप्त्वादतिखट्वा इत्यस्य याडाप इति स्यादेवेति न च वाच्यम्। कुतः?आबन्तं यदङ्गं ततः परस्य याड्विधानत्। ननु कथमत्र स्थानिवद्भावः? कस्य वा गोस्त्रियोरिति ह्रस्वस्य न स्थानिवद्भावो यदि न तस्याप्त्वं अतो दीर्घ इति दीर्घस्य यदिस्थानिवद्भावस्तर्हि तस्य ह्रस्वत्वमेव नाप्त्वं यथाकथञ्चित् स्थानिवद्भावेन प्रथम ह्रस्वे आप्त्वमानीय पश्चाद्दीर्घेपि तदाप्त्वं यद्यानीयते तर्हि अनल्विधाविति निषेधः। स्थानिभूतमाप्त्वमाश्रित्यैव याटो विधानात्। न चाचः परस्मिन्निति स्थानिवद्भावः, स्थानिभूतात्पूर्वस्य विधेरभावात् पूर्वस्मादिति पूर्वस्य निमित्तत्वाभावेन विध्यभावाच्च पूर्वपक्ष एवात्र ोपपद्यते इति चेदुच्यते। अनुबन्धकार्ये अनल्विधाविति निषेधाभावात्। अत एव अनल्विधावित्युक्तेर्न भवन्तीति पक्षे अस्वरसतामभ्युपगम्य कौमुदीकारेण आ आबिति प्रश्लिष्येत्यादिकमुक्तमिति । ननु नेदमनुबन्धकार्यं न हि पित्वमाश्रित्यात्र कश्चिद्विधिर्विधीयते, तथात्वे अतिखट्वा इत्याकारे स्थानिभूतपित्त्वमानीयतामिति चेत्तथैवाऽस्तु। पित्त्वस्यानयनेऽपि आकारस्य स्थितत्वेन आप्त्वस्य लब्धत्वादिति। ननु अतिखट्वायेत्यत्र भवत्वेवम्। जरसादेशस्य स्थानिवद्भावेन कथमाबन्तत्वं शङ्कितं पुरेति चेत् नेत्रे निमील्य कृतस्स पूर्वः पक्षः। अथवा स्थानिवदादेश इत्येतावता स्थानिवद्भावमाशङ्क्य अनल्विधावित्यनेन तन्निषेधयतीति स्थितस्य गतिश्चिन्तनीया।

आबन्तं यदङ्गं ततः परस्य याड्विधानादिति यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गमिति अतिखट्वायेत्यत्र यदङ्गं अतिखट्व इति तन्नाबन्तं यदाबन्तं खट्वा इति तन्नात्राङ्गमिति अतिखट्वेत्यस्य आबन्ताङ्गत्वाभावान्न ततः परस्य याडिति भावः। न चाबन्तत्वं स्थानिवद्भावेन प्रकृतेऽङ्गे अनीयतामिति वाच्यम्। आदेशस्स्थानिवत्स्यादिति। आदेशस्य ह्रस्वस्यैवात्र स्थानिवत्त्वमुचितं न त्वतिखट्वस्येति। ननु स्त्रीप्रत्यये तदादिनियमाभावेन यस्मात्प्रत्ययविधिस्तदङ्गमित्येवार्थात्। आपि परतः पूर्वस्याङ्गसंज्ञासम्भवेन अतिखट्वशब्दादजाद्यतष्टापि कृते टापि परतो यदङ्गं अतिखट्व इत्याकारकं तस्येव अतिखट्व इत्यस्यापि अङ्गसंज्ञास्ति। तदन्तविधेरभ्युपगमात् । तस्मादतिखट्व–शब्दोऽप्याबन्ताङ्गमेवेति स्यादेव याडिति चेन्मैवम्। उपसर्जनस्त्रीप्रत्यये तदादिनियमसद्भावात्। तथा च अतिखट्वशब्दस्य आबन्ताङ्गत्वं नास्तीति न याडिति बोध्यम्। उपसर्जनस्त्रीप्रत्यये तदादिनियमादिति कौमुदी। अयमर्थः। प्रत्ययग्रहणे यस्मात्सविहितस्तदादेस्तदन्तस्य च ग्रहणमित्यस्ति काचित्परिभाषा तदादितदन्तांशभेदेन विभिन्नवाक्यार्था चेयम् । प्रत्ययग्रहणे प्रत्ययमात्रे गृह्यमाणे सति यस्मात्प्रकृतिभूतात् शब्दस्वरूपात् स प्रत्ययो विहितस्तदादेः तत्प्रकृतिभूतशब्दस्वरूपमादिर्यस्य तस्य ग्रहणं भवतीति शेषः । प्रत्यये गृह्यमाणे सति तदाद्यंश उपतिष्ठत इति निष्कृष्टार्थः। इयञ्च यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गमिति सूत्रे यस्मात्प्रत्ययविधिस्तदादिप्रत्यये इति योगविभागात्सिद्धः । अत्र च योगविभक्तौ सूत्रे गुह्यमाणे इति उपतिष्ठत इति च शेषः। तथा च प्रत्यये गृह्यमाणे सति यस्मात्प्रत्ययविधिः स प्रत्ययो विहितः तदादि इत्ययमंश उपतिष्ठत इति तदर्थः इति

परिभाषाया एको वाक्यार्थः। द्वितीयस्तु प्रत्ययग्रहणे तदन्तस्य गहणमित्यन्वयात्। प्रत्यये गृह्यमाणे सति तदन्तस्य ग्रहणं भवति तदन्तांश उपतिष्ठत इत्यर्थः। इयञ्च परिभाषा येन विधिस्तदन्तस्येति सूत्रादेव सिद्धः अनुगुणं शब्दस्वरूपं विशेष्यमध्याहृत्य तस्य प्रत्यये विशेषणीकृते सति प्रत्ययान्तार्थलाभात्। तदन्तग्रहणपरिभाषाया उदाहरणन्तु प्रथमचरमतयाल्पार्धकतिपयनेमाश्चेति। तयप्प्रत्ययग्रहणात् तयबन्तग्रहणम्। किञ्च वनोरचेति सूत्रे वन्निति प्रत्ययग्रहणाद्वन्नन्तग्रहणम् । वन्नन्तान्तार्थलाभस्तु पुनस्तस्यप्रातिपदिकविशेषणात्सिद्ध्यति। वन्नन्तं यच्छब्दस्वरूपं तदन्तं यत्प्रातिपदिकम् तस्माद्वन्नन्तान्तादिति तत्र यदंशविधिद्वयं बोध्यम् । एतावता तदन्तांशो विचारितः। अथ तदाद्यंशः प्रकृतोपयोगी विचार्यते। तदाद्यंशयोदाहरणं परमगार्ग्यायणः। तथाहि गर्गशब्दात् गर्गादिभ्यो यञिति अपत्यार्थे यञ्प्रत्यये कृते गार्ग्य इति रूपं भवति। तस्मात्पुनरपत्यार्थे यञिञोश्चेति फकि कृते गार्ग्यायण इति रूपम्। अथ परमगार्ग्यशब्दात्फकि कृते तद्धितेष्वचामादेरित्याद्यचो वृद्धौ परमगार्ग्यायण इति स्यात्। न तु परमगार्ग्यायण इति । एतदर्थमेव तदादिपरिभाषास्वीकारः, स्वीकृतायाञ्च तस्यां यञिञोश्च यञन्तादिञन्ताच्च फक् स्यात् ततो ञन्तं किमित्याकांक्षायां गर्गादिभ्यो यञ् इति सूत्रस्योपस्थितिर्भवति। तथा च यस्मात्प्रत्ययविधिः गर्गशब्दाद्यञ् प्रत्ययो विहितस्तस्मिन् प्रत्यये यञ्प्रत्यये गृह्यमाणे सति यञञोश्चेति सूत्रेण गृह्यमाणे सति तदादेः तत्प्रकृतिभूतं गर्गेत्याकारकं शब्दस्वरूपमनादिर्यस्य तस्य गार्गेत्यस्यैव ग्रहणं भवति, न तु परमगार्गेत्यस्य परमपदस्य तदाद्यंशभिन्नत्वात्। ततश्च परमगागर्यस्यापत्यमिति विग्रहे यञन्तात्पुगित्यनेन परमगार्ग्यशब्दगतगार्ग्यशब्दादेव फक् स्यात्। तद्धितेष्विति वृद्धिश्च गकारादाकारस्यैवेति परमगार्ग्यायण इति रूपसिद्धिः। एवं दर्शितस्तदाद्यंशोपयोगः। अथ विचार्यते , नन्वेवं परमकारीषगन्धी पुत्र इति न सिद्ध्यति। तथा हि करीषगन्धः कश्चन तस्यापत्यं पुमान् कारीषगन्धिः। अत इञिति इञ्प्रत्ययान्तोयम्। ततः तस्यापत्यं स्त्री इति विग्रहे अणिञोर्गुरूपोत्तमयोष्यङ्गोऽत्रेति ष्यङ्प्रत्यये कृते कारीषगन्ध्या इति रूपं भवति। तस्याः पुत्र इति विग्रहे ष्यङस्संप्रसारणम्। पुत्रपत्योस्तत्पुरुषे इति पुत्रशब्दे परतः पूर्वस्य ष्यङन्तस्य कारीषगन्ध्या इत्येतस्य संप्रसारणम्। ततस्संप्रसारणस्येति दीर्घे कारीषगन्धी पुत्रः। अत्र ष्यङस्संप्रसारणमिति सूत्रे ष्यङिति प्रत्ययग्रहणात् तदादिनियमोपस्थितौ यस्मात् ष्यङ् विहितस्तदादेर्ग्रहणमिति लाभात्। ष्यङन्तस्य पदस्येत्यनेन कारीषगन्ध्या इत्यस्यैव ग्रहणं भवति । कारीषगन्धिशब्दादेव ष्यङ् विधानात्, न पुनः परमकारीषगन्ध्येत्येतस्य । ततश्च परमकारीषगन्ध्यापदस्य ष्यङन्तत्वाभावन्न संप्रसारणमिति, परमकारीषगन्ध्यापुत्र इत्येव स्यात्। अतिकारीषगन्ध्यापुत्र इतिवत्। तस्मात्तदाद्यंशनियमोपस्थितौ परमकारीषगन्धीपुत्र इति न सिद्ध्येदिति पूर्वः पक्षः। न चैवं परमगार्ग्यायण इत्यपि न सिद्ध्यत्येव। परमगार्ग्यस्य विशिष्टपदस्य तदादिनियमेन यञन्तत्वाभावात्। तदेकदेशस्य गार्ग्यपदस्य अनर्थकत्वाच्चेति वाच्यम्। परमगार्ग्यायणपदसाधुत्वस्य भाष्यकारेष्टत्वादिति। एवं पूर्वपक्षे प्राप्ते भाष्यकारा एवमाहुः। स्त्रीप्रत्ययेन इति – स्त्रीप्रत्ययविषये तदादिनियमो नेत्यर्थः। स्त्रीप्रत्यये इति किम्? परमगार्ग्यायणः । अत्र यञ् प्रत्ययस्य अस्त्रीप्रत्ययत्वात्तत्र तदादिनियमोऽस्त्येव।

ष्यङस्त्रीप्रत्ययत्वान्न तत्र तदादिनियम इति। परमकारीषगन्ध्याशब्दस्यापि ष्यङन्तत्वमस्त्येवेति परमकारीषगन्धीपुत्र इति रूपसिद्धिः। नन्वेवं परमकारीषगन्धीपुत्र इत्यत्रेव अतिकारीषगन्ध्यापुत्र इत्यत्रापि संप्रसारणं स्यादिति पूर्वपक्षे प्राप्ते, आह नागेशोपाध्यायः। स्त्रीप्रत्यये चानुपसर्जनेन इति अनुपसर्जनस्त्रीप्रत्यये तदादिनियमो नास्ति इत्यस्याः परिभाषाया अर्थः। एतेन च उपसर्जनस्त्रीप्रत्यये तदादिनियमोऽस्तीति सिद्धम्। इदं सर्वमभिप्रेत्यैव कौमुद्यामुक्तं उपसर्जनस्त्रीप्रत्यये तदादिनियमादिति।

अथेयं परिभाषा विचार्यते। तथा हि –यः स्त्रीप्रत्ययः स्त्रीं प्राधान्येनाह तत्र तदादिनियमो नेति नागेशभट्टाः प्राहुः। ननु अजाद्यतष्टाबित्यादिना विहिताष्टाबादयः स्त्रीप्रत्ययाः स्त्रियां विहितत्वात् स्त्रीमेव प्राधान्येन वदन्ति न तु पुमांसं, नापि नपंसकमिति स्वभावत एव सिद्धे यः स्त्रीप्रत्ययः स्त्रीमेव प्राधान्येनाहेत्येतदुक्तिर्व्यर्थैव इति चेन्मैवम्। शब्दस्य प्राधान्यमप्राधान्यं वा अर्थद्वारैव न तु स्वत इति सार्वजनीनम्। तथा च यत्र स्त्रीप्रत्ययार्थस्य प्राधान्यं तत्र तदादिनियमो न, यथा (व्यतिरेकदृष्टान्तः) अतिकारीषगन्ध्यापतिः। अत्र स्त्रीप्रत्ययः ष्यङ्, करीषगन्धेरपत्यं स्त्रीइत्यर्थे ष्यङ्विधानात्। ष्यङः अपत्यं स्त्रीत्यर्थः। इयञ्च कारीषगन्ध्यापदवाच्या। करीषगन्ध्यपत्यं स्त्री अत्यर्थं प्रत्युपसर्जनभूता कारीषगन्ध्यामतिक्रान्ता अतिकारीषगन्ध्या इति समासे अतिक्रान्तापदवाच्यायाः स्त्रियाः प्राधान्यात् कारीषगन्ध्यापदवाच्याया अप्राधान्याच्चेति भावः। विशेष्यभूतोर्थः प्रधानः विशेषणीभूतस्त्वप्रधान इति शास्त्रविदां समयः। तदेव करीषगन्ध्युत्तरष्यङ्प्रत्ययवाच्यस्य करीषगन्ध्यपत्यस्त्रीत्वरूपस्यार्थस्य अत्यर्थं प्रति विशेषणत्वेन उपसर्जनत्वादत्र तदादिनियमोऽस्त्येवेति कृत्वा अतिकारीषगन्ध्यापदस्य ष्यङन्तत्वाभावान्नात्र पतिशब्दे परतस्संप्रसारणम्। अतः अतिकारीषगन्धीपतिरिति न भवति। यथा च (अन्वयदृष्टान्तः) परमकारीषगन्धीपतिः। अत्र करीषगन्ध्युत्तरष्यङ्प्रत्ययवाच्यस्य करीषगन्ध्यपत्यस्त्रीत्वरूपस्यार्थस्य परमपदवाच्यमर्थं प्रति विशेष्यत्वेन अनुपसर्जनत्वान्नात्र तदादिनियमः। तेन परमकारीषगन्ध्या इत्येतस्य ष्यङन्तत्वादत्र पतिशब्दे परतस्संप्रसारणं भवत्येव। परमकारीषगन्धीपतिरिति रूपं सिद्ध्यति इति परिभाषा विचारिता। अथ कौमुदीपङ्क्तिसमन्वयो लिख्यते। तथा हि – यद्यपि जरसादेशस्येत्यादिस्थानिवदादेश इत्येतावता सूत्रेण जरसादेशस्य स्थानिवद्भावप्राप्तिरिति ज्ञेयम्। न च स्थानिवदादेशोऽनल्विधाविति समग्रसूत्रेणैवेति वाच्यम्। अनल्विधावित्युक्तेर्न भवन्तीत्यनुपदं वक्ष्यमाणग्रन्थविरोधात्। ननु स्थानिवद्भावेन आबन्तत्वमानेयम्, स च स्थानी आबेव न त्वाकारमात्रम्। अतो नाल्मात्रविधिरयं इत्याशङ्कायामाह। आ आबिति प्रश्लिष्येति आकाररूपमाप्त्वमल्मात्रवृत्तिधर्म एवेति कृत्वा अनल्विधाविति निषेधोऽत्र प्रवर्तत एवेति भावः। जरसादेशं प्रति आबेव स्थानी भवतु नाम। स्थान्यवयवे आकारात्मके अल्मात्रे एव आकाररूपाप्त्वं वर्तत इति कृत्वा स्थान्यवयवाल्मात्र वृत्तिधर्मपुरस्कारकविधौ कर्तव्ये स्थानिवद्भावनिषेध इति तत्त्वम्। सर्वत्रेति आङि चाप इत्यादिष्वित्यर्थः। अयमाशयः। औङ आप इति सूत्रस्य आकाररूपाबन्तादङ्गात्परस्य औङश्शी स्यादित्यर्थः। यथा रमा औ इति स्थिते आकाररूपाबन्तं यदङ्गं रमेत्याकारकं, ततः परस्य औ इत्यस्य शी इत्ययमादेशः इति। एवं व्याख्याते सति रमा इत्यादौ सर्वत्रापि श्रूयमाण आकारः आकाररूपाऽप्त्वेन

२८९ **आङि चापः** । ।७।३।१०५। आङि ओसि च परे आबन्तस्याङ्गस्यैकारः स्यात् । रमया, रमाभ्याम्, रमाभिः । २९० **याडापः** । ।७।३।११३) आपः परस्य ङिद्वचनस्य याडागमः स्यात् । 'वृद्धिरेचि' (सू ७२) रमायै । सवर्णदीर्घः, रमायाः रमायाः. रमयोः, रमाणाम् । रमायाम्, रमयोः, रमासु । एवं दुर्गादयः । २९१ **सर्वनाम्नः स्याड्ढ्रस्वश्च** । ।७।३।११४। आबन्तात्सर्वनाम्न : परस्य ङितः स्याट् स्यादापश्च ह्रस्वः । याटोऽपवादः । सर्वस्यै । सर्वस्याः । सर्वस्याः । एकादेशस्य पूर्वान्तत्वेन ग्रहणाद् ' आमि सर्वनाम्नः–' (सू २१७) इति सुट्. सर्वासाम् । सर्वस्याम्, सर्वयोः, सर्वासु । एवं विश्वादयोऽप्याबन्ताः । २९२ **विभाषा दिक्समासे बहुव्रीहौ** । ।१।१।२८। अत्र सर्वनामता वा स्यात् । उत्तरपूर्वस्यै उत्तरपूर्वायै । दिङ्नामान्यन्तराले' (सू ८४५) इति प्रतिपदोक्तस्य दिक्समासस्य ग्रहणान्नेह–योत्तरा सा पूर्वा यस्या उन्मुग्धायास्तस्यै उत्तरपूर्वायै । बहुव्रीहिग्रहणं स्पष्टार्थम् । अन्तरस्यै शालायै । बाह्यायै इत्यर्थः । 'अपुरि' इत्युक्तेर्नेह अन्तरायै नगर्यै । २९३ **विभाषा द्वितीयातृतीयाभ्याम्** । ।७।३।११५। अभ्यां ङितः स्याट् स्यादापश्च ह्रस्वः । इदं सूत्रं त्यक्तुं शक्यम्, तीयस्य ङित्सूपसंख्यानात् । द्वितीयस्यै , द्वितीयायै । द्वितीयस्याः, द्वितीयायाः । द्वितीयस्याः, द्वितीयायाः। द्वितीयस्याम्, द्वितीयायाम् । शेषं रमावत्, । एवं तृतीया । 'अम्बार्थनद्योर्ह्रस्वः'

---

अल्मात्रमेव भवतीति कृत्वा स्थानिवद्भावेन तदानयनं दुर्लभमिति प्रश्लेषप्रसङ्गादाह– एवं हल्ङ्याबिति। अतिखट्व इति खट्वामतिक्रान्त इति विग्रहे गोस्त्रियोरुपसर्जनस्येति ह्रस्वः। अति खट्व सु इति स्थिते, (ह्रस्वस्य स्थानिवद्भावेनाबन्तत्वाद्धल्ङ्याब्भ्य इति लोपस्स्यादिति न शङ्क्यम्। आकाररूपस्याप्त्वस्य अल्मात्रवृत्तिधर्मत्वेन स्थानिवद्भावनिषेधादिति भावः। नन्वेवं यत्र स्थानिवद्भावेन आकाररूपाप्त्वमानेयं तत्र स्थानिवद्भावनिषेधः प्रसज्ज्यतां नाम। यत्र केवलमाप्त्वमेवानेयं तत्र स्थानिवद्भावस्स्यादेवेति शङ्कते न चैवमिति। स्वाश्रयमिति यञादिसुबाश्रयमियर्थः। अतिखट्व य इति स्थले सुपि चेति दीर्घः। अतिखट्वाय। इदानीं स्थनिवद्भावेन अतिखट्वा इत्यस्य आबन्तत्वाद्याडापस्स्यादिति पूर्वपक्षाशयः। वस्तुतस्तु पूर्वपक्ष एवायमसङ्गतः। याडाप इति सूत्रेऽपि आकारप्रश्लेषसत्त्वेन आकाररूपो य आप् ततः परस्य ङिद्वचनस्य याट् स्यादित्यर्थे सिद्धे सति अतिखट्वाय इत्यत्रापि आकाररूपाबेव स्थानीति कृत्वा, अल्मात्रविधित्वेन स्थानिवद्भावनिषेधादिति 'तुष्यतु दुर्जन' इति न्यायेन तमेवपूर्वपक्षं सिद्धवत्कृत्य सिद्धान्तमाह – आबन्तमिति यस्मादाप् विहितः तदादि यदाबन्तं ततः परस्य याड्विधानादित्यर्थः। न चोक्तार्थे

(सू २६७) हे अम्ब । हे अक्क । हे अल्ल । 'असंयुक्ता ये डलकास्तद्वतां ह्रस्वो न' (वा ४५९२) हे अम्बाडे, हे अम्बाले, हे अम्बिके । जरा जरसौ, शीभावात्परत्वाज्जरस् । आमि नुटः परत्वाज्जरम्, जरसामित्यादि । पक्षे हलादौ च रमावत् । इह पूर्वविप्रतिषेधेन शीभावं कृत्वा संनिपातपरिभाषाया अनित्यतां चाश्रित्य 'जरसी' इति केचिदाहुः, तन्निर्मूलम् । यद्यपि जरसादेशस्य स्थानिवद्भावेनाबन्तताामाश्रित्य 'औङ आपः' (सू २८७) 'आङि चापः' (सू २८९) 'याडापः' (सू २९०) 'हस्वनद्यापः–' (सू २०८) 'ङेराम्–' (सू २७०) इति च पञ्चापि विधयः प्राप्ताः। एवं नस्निश्पृत्सु, तथाप्यनल्विधावित्युक्तेर्न भवन्ति, 'आ आप्' इति प्रश्लिष्याकाररूपस्यैवापः सर्वत्र ग्रहणात् । एवं 'हल्ङ्याप्–' (सू २५५) इति सूत्रेऽपि 'आ आप्' 'ङी ई' इति प्रश्लेषाद् 'अतिखट्वः' निष्कौशाम्बिः' इत्यादिसिद्धेर्दीर्घग्रहणं प्रत्याख्येयम् । न चैवमपि 'अतिखट्वाय' इत्यत्र स्वाश्रयमाकारत्वं स्थानिवद्भावेनाप्त्वं चाश्रित्य याट् स्यादिति वाच्यम्। आबन्तं यदङ्गं ततः परस्य याड्विधानात्, उपसर्जनस्त्रीप्रत्यये तदादिनियमात् । 'पद्दन्नो–' (सू २२८) इति नासिकाया नस्, नसः, नसा । नोभ्यामित्यादि । पक्षे सुटि रमावत् । निशाया निश्, निशः । निशा ।

२९४ **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** । ।८।२।३६। व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोऽन्तादेशः स्यज्झलि पदान्ते च । षस्य जश्त्वेन डः । निड्भ्याम् । निड्भिः । सुपि 'डः सि धुट्' (सू १३१) इति पक्षे धुट्, चर्त्वम्, तस्यासिद्धत्वात् **'चयो द्वितीयाः–'** (वा ५०२३) इति टतयोष्ठथौ न । 'न पदान्ताट्टोः–'

---

अप्रमाणत्वं शङ्क्यम् । यस्मात् प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गमिति सूत्रादङ्गपदेन तदाद्यंशस्फोरणात्। प्रकृते अतिखट्वायेत्यत्र यस्मात् खट्वशब्दादाप् विहितः तत्खट्वशब्दस्वरूपमादिर्यस्य तत्तदादि खट्वा इत्याकारकं इदमेवाबन्ताङ्गञ्च। (खट्वामतिक्रान्त इति विग्रहे अन्तर्वर्तिनीं विभक्तिमाश्रित्य खट्वा इत्यस्याङ्गत्वात्, ततः परस्य ङिद्वचनस्य नात्र याट् चिकीर्षितः। किन्तु खट्वाशब्दान्तादतिखट्वशब्दादेवेति कृत्वा नात्र याटः प्रसक्तिः।) ननु स्त्रीप्रत्ययेनेति स्त्रीप्रत्यये तदादिनियमाभावात्स्यादेवात्र याडित्यत आह उपसर्जनस्त्रीप्रत्यये तदादिनियमादिति स्त्रीप्रत्यये चानुपसर्जनेनेति अनुपसर्जनस्त्रीप्रत्यये एव तदादिनियमाभावः।

(सू.११४) इति ष्टुत्वं न । निट्त्सु–निट्सु । २९५ **षढोः कः सि** ।८।२।४१। षस्य ढस्य च कः स्यात्सकारे परे । इति तु न भवति, जश्त्वं प्रत्यसिद्धत्वात् । केचित्तु व्रश्चादिसूत्रे (२९४) 'दादेर्धातोः–' (सू ३२५) इति सूत्राद् 'धातोः' इत्यनुवर्तयन्ति, तन्मते जश्त्वेन जकारे, निज्भ्याम्, निज्भिः । 'चोः कुः' (सू ३७८) इति कुत्वं तु न भवति । जश्त्वस्यासिद्धत्वात् । जश्त्वम्, श्चुत्वम्, चर्त्वम् निच्शु, निच्छु । **'मांसपृतानासानूनां मांसपृत्स्नवो वाच्याः शसादौ वा '** (वा ३४९६) । पृतः । पृता । पृद्भ्याम् । पक्षे सुटि च रमावत् । गोपा विश्वपावत् । इत्यादन्ताः ।। मतिशब्दः प्रायेण हरिवत् । स्त्रीत्वान्नत्वाभावः मतीः । नात्वं न, मत्या । २९६ **ङिति ह्रस्वश्च** ।१।४।६। इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ चेवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति परे । 'आण् नद्याः' (सू २६८) । मत्यै, मतये । मत्याः2, मतेः2 ।नदीत्वपक्षे 'औत्' (सू २५६) इति ङेरौत्त्वे प्राप्ते । २९७ **इदुद्भ्याम्** । ।७।३।११७। नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेराम् स्यात् । पक्षे 'अच्च घेः' (सू २४७) । मत्याम्, मतौ । एवं श्रुतिस्मृत्यादयः । २९८ **त्रिचतुरोः स्त्रियां तिसृचतसृ** ।७।२।९९। स्त्रीलिङ्गयो रेतावादेशौ स्तो विभक्तौ परतः ।

---

न तूपसर्जनस्त्रीप्रत्यय इति भावः, इति कौमुदीपङ्क्तिसमन्वयः सर्वं सुष्ठु।

4. दादेरिति सूत्राद्धातोरित्यनुवर्त्य छशोर्विशेष्यं कुर्वन्ति केचित्। तन्मते छशान् तथा रोश्च षस्स्यात्। अलोन्त्यस्येति स च षः अन्त्यस्य स्यात्। तथा च निशादेशस्य निशश्शान्तत्वे सत्यपि धातुत्वं नास्तीति न षत्वं, किन्तु झलां जश् झसीति जश्त्वमेव।

5. न तिसृ चतसृ । नुटः परत्वाद्यत्र अचिररुत इति रत्वं स्यात्तर्हि ह्रस्वनद्याप इति नुटोऽप्रवृत्या एतयोर्नम्परकत्वमेव न सम्भवतीति इदमेव सूत्रं व्यर्थीभूय अचिरत्वं बाधित्वा पूर्वविप्रतिषेधेन नुडेव भविष्यतीति ज्ञापयतीति नुमचिरतृज्वद्भाव इति वार्तिके अचिरग्रहणं प्रत्याख्यातम्–

6. स्त्रीनिष्ठसङ्ख्यासमर्पकयोरिति प्रियतिस्रेत्यत्र तत्त्वबोधिनी। तस्यायं भावः। प्रियाः त्रयः यस्यास्सेति समासे प्रियत्रिशब्दस्य स्त्रीनिष्ठसङ्ख्यासमर्पकत्वेऽपि त्रिशब्दस्य पुंनिष्ठबहुत्वसङ्ख्यासमर्पकत्वमेव इति न तिस्रादेश इति भावः। जहत्स्वार्थावृत्तिरिति अजहत्स्वार्थावृत्तिरिति पक्षद्वयमस्ति। तत्र वृत्तौ अवयवत्वेन घटिताश्शब्दास्स्वार्थं परित्यज्य सामुदायकमर्थं बोधयन्ति। यथानीलाम्बर इत्यत्र नीलाम्बरपदौ नीलत्वाम्बरत्वरूपस्वार्थौ

२९९ **अचि र ऋतः** ।७।२।१०० तिसृ चतसृ एतयोर्ऋकारस्य रेफादेशः स्यादचि । गुणदीर्घोत्त्वानामपवादः तिस्रः । तिस्रः। तिसृभिः। तिसृभ्यः । तिसृभ्यः । आमि **'नुमचिर-'** (वा ४३७४) इति नुट् । ३०० **न तिसृचतसृ** ।६।४।४। तिसृ चतसृ एतयोर्नामि दीर्घो न स्यात् । तिसृणम् । तिसृषु । 'स्त्रियाम्' इति त्रिचतुरोर्विशेषणान्नेह-प्रियास्त्रयस्त्रीणि वा यस्याः सा प्रियत्रिः, मतिशब्दवत् । आमि तु प्रियत्रयाणाम्,' इति विशेषः । 'प्रियास्तिस्रो यस्य सः' इति विग्रहे तु प्रियतिसा प्रियतिस्रौ, प्रियतिस्रः । प्रियतिस्रमित्यादि । प्रियास्तिस्रो यस्य तत्कुलं प्रियत्रि । स्वमोर्लुका ३१९ लुप्तत्वेन प्रत्ययलक्षणाभावान्न तिस्रादेशः । 'न लुमता-' (सू २६३) इति निषेधस्यानित्यत्वात्पक्षे प्रियतिसृ । **रत्वात् पूर्वविप्रतिषेधेन नुम्** (वा ५०३६), प्रियतिसृणी, प्रियतिसृणि । तृतीयादिषु वक्ष्यमाणपुंवद्भावविकल्पात्पर्यायेण नुम्रभावौ, प्रियतिसृणा, प्रियतिस्रा इत्यादि । द्वेरत्वे सत्याप्, द्वे । द्वे । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः ।। इति इदन्ताः ।। गौरी, गौर्यौ । गौर्यः, नदीकार्यम्, हे गौरि । गौर्यै इत्यादि । एवं वाणीनद्यादयः । **प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणाद**नङि णिद्वद्भावे च प्राप्ते **'विभक्तौ लिङ्गविशिष्टाग्रहणम्'** (प.), सखी, सख्यौ, सख्यः- इत्यादि गौरीवत् । अङ्चन्त्वान्न सुलोपः, लक्ष्मीः । शेषं गौरीवत् । एवं तरीतन्त्र्यादयः । स्त्री । हे स्त्रि ।

---

समुत्सृज्य सामुदायकं रौहिणेयत्वरूपमर्थं बोधयतः इति जहत्स्वार्थावृत्तिपक्षः। द्वितीयस्तु नीलत्वाम्बरत्वार्थौ अनुत्सृज्यैव नीलाम्बरत्वधर्मवन्तं रौहिणेयं बोधयन्तीति। यथा वा चन्द्रमुख इत्यादौ चन्द्रसदृशमुखत्वार्थपुरस्कारेणैव कञ्चन पुरुषं चन्द्रमुखशब्दो बोधयति।

7. अचिरऋतः। ननु तिसृ जस्, इको यणचि, तिस्रः इत्यादिसिद्ध्यत्येवेति किमनेन सूत्रेण इति चेत्, यणं बाधित्वा जसि चेति परत्वेन गुणे प्राप्ते, तद्बाधनार्थमिदं सूत्रम्। अत एव गुणदीर्घोत्वानामपवाद इति कौमुदी । यणं बाधित्वा जायमानानां गुणादीनामपवाद इति तदर्थः-

8. द्वेरत्वे सत्याप्। ननु त्यदादीनमः इति विभक्तिमाश्रित्य जायमानं त्यदाद्यत्वं अजाद्यत इति टापमुत्पाद्य हल्ङ्याभ्य इति आपः परस्याः विभक्तेर्लोपाय नालमिति सन्निपातपरिभाषाविरोधात्कथमत्राप्त्वमिति चेत् न या सयोरिति, निषेधेन तस्याः अनित्यत्वादिति त्यदाद्यत्वे सत्यापि कृतेऽपि या सा इति रूपद्वयं सिद्ध्यति। अत इदमेव ज्ञापकमिति भावः-

9. विभक्तौ लिङ्गविशिष्टाग्रहणम्। विभक्तिकार्ये कर्तव्ये प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि

३०१ **स्त्रियाः** । ।६।४।७९। स्त्रीशब्दस्येयङ् स्यादजादौ प्रत्यये परे । स्त्रियौ, स्त्रियः । ३०२ **वाऽम्शसोः** । ।६।४।८०। अमि शसि च स्त्रिया इयङ् वा स्यात् । स्त्रियम् स्त्रीम् । स्त्रियौ । स्त्रियः । स्त्रीः । स्त्रिया । स्त्रियै । स्त्रियाः २ । स्त्रियोः । परत्वान्नुट्, स्त्रीणाम् । स्त्रियाम् , स्त्रियोः, स्त्रीषु । स्त्रियमतिक्रान्तोऽतिस्त्रिः, अतिस्त्रियौ ।।

गुणनाभावौत्त्वनुड्भिः परत्वात्पुंसि बाध्यते ।
क्लीबे नुमा च स्त्रीशब्दस्येयङित्यवधार्यताम् ।।

'जसि च' (सू २४१)अतिस्त्रयः। हे अतिस्त्रे, हे अतिस्त्रियौ । हे अतिस्त्रयः 'वाऽम्शसोः' (सू ३०२) अतिस्त्रियम्–अतिस्त्रिम्, अतिस्त्रियौ, अतिस्त्रियः–अतिस्त्रीन् । अतिस्त्रिणा 'घेर्ङिति' (सू २४५) अतिस्त्रये । अतिस्त्रेः । अतिस्त्रेः, अतिस्त्रियोः२, १अतिस्त्रीणाम् । 'अच्च घेः' (सू २४७) अतिस्त्रौ, अतिस्त्रियोः ।

ओस्यौकरे च नित्यं स्यादम्शसोस्तु विभाषया ।
इयादेशोऽचि नान्यत्र स्त्रियाः पुंस्युपसर्जने ।।

---

ग्रहणमिति वचनस्य ग्रहणं प्रवृत्तिर्नेत्यर्थः। प्रकृते सखिरूपं प्रातिपदिकमाश्रित्य यदनङ्णिद्वद्रूपकार्यद्वयं विहितं तत् लिङ्गशिष्टं सखी इति शब्दस्य रूपमप्याश्रित्य स्यादिति प्राप्तं सत् तद्द्वयं विभक्तिकार्यत्वेन निषिध्यत इति वेद्यम् ।

10. लक्ष्मीः लक्षेर्मुट् चेत्यौणदिकईप्रत्ययान्तोऽयं शब्दः।

11. स्त्रियाः । अचिश्नुसूत्रात् स्त्रीशब्दस्य इवर्णान्तधातुत्वाभावेन इयङोप्राऽप्तौ इको यणचीति यणः प्राप्तौ अयमारम्भःअचिश्नुसूत्रादेव अचीति आन्तरतम्यादियङिति चानुवर्त्य सूत्रस्यान्वयः।

12. गुणनाभावौत्वनुडिभः परत्वार्त्पुसि बाध्यते । नुमा च स्त्रीशब्दस्येयङित्यवधार्यतां । स्त्रीशब्दस्य स्त्रिया इति वां शसोरिति च प्राप्तइयङ् स्त्रीशब्दस्योपसर्जनत्वे अतिस्त्रीरित्यादि पुंलिङ्गे गुणादीनां परत्वाद्धेतोः गुणादिभिर्बाध्यते। क्लीबे नुमा च चाद्यथासम्भवं पूर्वोक्तैर्बाध्यते। इयङं बाधित्वा गुणादयः स्युरिति भावः। यथा अतिस्त्रिः। गोस्त्रियोरुपसर्जनस्येति ह्रस्वः। अस्य जसि जसि चेति गुणः इयङं बाधित्वा भवति । टायां आङो नास्त्रियामिति,नाभावे नेयङ् बाध्यते । ङौ अच्चघेरिति औत्वेन आमि ह्रस्वनद्याप इति नुटा क्लीबे अतिस्त्रीणीत्यादै नुमा अतिस्त्रीणामित्यादौ नुटा च बाध्यते इत्यवधार्यतां ज्ञायताम् ।

13. श्लो. ओस्यौकारे च नित्यं स्यादम्शसोस्तु विभाषया। इयादेशोऽचि नान्यत्र

क्लीबे तु नुम् । अतिस्त्रि , अतिस्त्रिणी, अतिस्त्रीणि । अतिस्त्रिणा । अतिस्त्रिणे, ङेप्रभृतावजादौ वक्ष्यमाणपुंवद्भावात्पक्षे प्राग्वद्रूपम्। अतिस्त्रये अतिस्त्रिणे । अतिस्त्रेः , अतिस्त्रिणः । अतिस्त्रेः, अतिस्त्रिणः ।अतिस्त्रौ अतिस्त्रियोः– इत्यादि । स्त्रियां तु प्रायेण पुंवत् । शसि अतिस्त्रीः । अतिस्त्रिया । 'ङिति ह्रस्वश्च' (सू २९६) इति ह्रस्वान्तत्वप्रयुक्तो विकल्पः । 'अस्त्री' इति तु इयङुवङ्स्थानावित्यस्यैव पर्युदासः। तत्संबुद्धस्यैवानुवृत्तेः । दीर्घस्यायं निषेधः, न तु ह्रस्वस्य । अतिस्त्रियै, अतिस्त्रये । अतिस्त्रियाः, अतिस्त्रेः । अतिस्त्रियाः, अतिस्त्रेः । अतिस्त्रीणाम् । अतिस्त्रियाम्, अतिस्त्रौ। श्रीः, श्रियौ, श्रियः । ३०३ **नेयङुवङ्स्थानावस्त्री** । १।४।४। इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तः, न तु स्त्री । हे श्रीः । श्रियम्, श्रियौ, श्रियः । श्रियै, श्रिये । श्रियाः, श्रियः ।३०४ **वाऽऽमि** । ।१।४।५। इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तः न तु स्त्री । श्रीणाम्, श्रियाम्, श्रियाम्, श्रियि । प्रधीशब्दस्य तु वृत्तिकारादीनां मते लक्ष्मीवद्रूपम्, 'पदान्तरं विनापि स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वम्' इति स्वीकारात् । 'लिङ्गान्तरानभिधायकत्वं तत्' इति कैयटमते तु पुंवद्रूपम् ।

---

स्त्रियाः पुंस्युपसर्जने।) इयङः अप्राप्तिं गुणादिविषये प्रदर्श्य तत्प्राप्तिस्थलानि अधुना संगृह्णाति अर्थस्पष्टस्तत्वबोधिन्याम्। स्त्रीशब्दस्य उपसर्जनत्वे स्त्रीलिङ्गेऽपि गोस्त्रियोरिति स्वादेशेन अतिस्त्रिरित्येव भवति। ङिति ह्रस्वश्चेति सूत्रे नेयङुवङ्स्थानावस्त्री इत्यनुवृत्तेः। अस्त्री इति पर्युदासा द्दीर्घान्तानामेव नदी संज्ञा निषेधः नतु ह्रस्वन्तस्येति अस्त्येवास्य नदीसंज्ञा वैकल्पिकीति। अतिस्त्रि ङे इति स्थिते "आण्नद्या" आप् आटश्च स्त्रिया इतीयङ्। अतिस्त्रिय् ऐ अतिस्त्रियै इत्येकं रूपं नदीत्वपक्षे सिद्ध्यति। नदीत्वाभावे तु घेर्ङितीति इयङं बाधित्वा गुणे अयादेशे च अतिस्त्रिये इति नदीसंज्ञापक्षेऽपि घिसंज्ञास्तीति न भ्रमितव्यम्। अनदीसंज्ञयोरेव घिसंज्ञेत्युक्तत्वात्।

14. अस्त्रीति तु इयङुवङ्स्थानावित्यस्यैव पर्युदासः। अयमर्थः। पर्युदासस्य तद्भिन्नत्वे सति तत्सदृशत्वात् इयङुवङ्स्थानयोरिवर्णोवर्णान्तशब्दयोर्यदुक्तं स्त्रीशब्दभिन्नत्वं तत्स्त्रीशब्दस्य दीर्घान्तत्वेन ईदूदन्तयोरेव नदीत्वनिषेधः। प्रकृते तु अतिस्त्रि शब्दस्य सत्यपि स्त्रीशब्दभिन्नत्वे इयङ्स्थानत्वे च ह्रस्वान्तत्वेन अस्त्रीति पर्युदासाभावात् ङिति ह्रस्वश्चेत्यस्ति वैकल्पिकनदीत्वमिति।

'प्रकृष्टा धीः' इति विग्रहे तु लक्ष्मीवत् । अमि शसि च प्रध्यम्, प्रध्यः- इति विशेषः । सुष्ठु धीर्यस्याः, सुष्ठु ध्यायति वेति विग्रहे वृत्तिकारमते सुधीः श्रीवत् । मतान्तरे तु पुंवत् । सुष्ठु धीः इति विग्रहे तु श्रीवदेव । ग्रमणीः पुंवत् । ग्रामनयनस्योत्सर्गतः पुंधर्मतया पदान्तरं विनापि स्त्रियामप्रवृत्तेः । एवं खलपवनादेरपि पुंधर्मत्वमौत्सर्गिकं बोध्यम् ।। इति ईदन्ताः ।। धेनुर्मतिवत् ।

---

ननु नेयङिति सूत्रे अस्तु अस्त्रीति पर्युदासः। कथं ङितीति सूत्र इति चेत् आह। तत्संबन्धस्यैव चानुवृत्तेरिति फलितमाह दीर्घस्यायं निषेधो न तु ह्रस्वस्येति, ईदूदन्तयोरेव निषेधः (नेयङिति सूत्रान्न तु ह्रस्वान्तयोरिति भावः)

15. प्रधीशब्दः। प्रकृष्टा धीर्यस्यास्सेति विग्रहे धीशब्दस्य पदान्तरं विनापि स्त्रीवाचकत्वमस्तीति नित्यस्त्रीलिङ्गत्वमस्त्येव। प्रथमलिङ्गग्रहणञ्चेति प्रधीशब्दस्यापि तदस्तीति नदीसंज्ञक एव प्रध्यायतीति प्रधीरिति विग्रहेऽपि प्रधीशब्दस्य पदान्तरं विनापि स्त्रीवाचकत्वस्य संभवान्नदीसंज्ञक एव। (यूस्त्र्याख्यौ नदीति सूत्रात्) न च नेयङुवङिति निषेधश्शङ्क्यः । एरनेकाच इति क्विबन्तत्वेन प्रधीशब्दः इवर्णान्तधातुरेवेति जायमानेन यणा इयङो बाधनात्। लिङ्गान्तरानभिधायकत्वं नित्यस्त्रीत्वमिति कैयटमते तु प्रध्यायतीति विग्रहे प्रधीशब्दस्य लिङ्गान्तराभिधायकत्वान्न नदीसंज्ञा। प्रकृष्टा धीरिति विग्रहे तु धीशब्दस्य लिङ्गान्तरानभिधायकत्वान्नदीसंज्ञा प्रथमलिङ्गग्रहणञ्चेति प्रधीश्ब्दस्यापि भवतीति। अयमत्र निष्कर्षः । प्रकृष्टा धीरिति बहुव्रीहौ मतद्वयेऽपि प्रधीशब्दो नदीसंज्ञक एव। प्रध्यायतीति विग्रहे तु वृत्तिकारमते नदीसंज्ञकः। कैयटमते त्वनदीसंज्ञश्चेति वैकल्पिकं नदीत्वम्। अङ्यन्तत्वान्न सुलोप इति प्रधीरिति लक्ष्मीरितिवद्रूपम्, । संबुद्धौ हे प्रधीरित्येव । न च नद्यन्तत्वाद्धस्वशङ्क्यः। अङ्यन्तत्वेन सुलोपाभावे संबुद्ध्यन्तत्वेन नद्यन्तत्वाभावात्। ननु सबुद्धौ परत एव नद्यन्तानां ह्रस्वविधानेन सौ परतोऽत्र नद्यन्तत्वेन स्यादेव ह्रस्व इति चेन्मैवम्। प्रत्ययलक्षणन्ययेन संबुद्धिपरकाणामेव ह्रस्व इति न साक्षात्संबुद्धिपरकाणामिति। ननु न लुमतेति प्रत्ययलक्षणस्य निषेधेन नास्त्येव तन्नचायेन संबुद्धिपरकत्वमिति चेन्न, तस्यानित्यत्वात् सर्वोऽप्ययं पूर्व पक्षमतरीत्या। वस्तुतस्तु हे लक्ष्मि, हे प्रधि इत्येव भवति। प्रथमम्बार्थेति ह्रस्वः। पश्चादेङ्ह्रस्वादिति संबुद्धिलोपः । हे अम्ब इत्यत्रापि परत्वाद्धल्ङ्याादिलोपापेक्षया प्रथमं ह्रस्वः। पश्चात्संबुद्धिलोपः। हे बहुश्रेयसि इत्यात्रप्येवमेव। प्रध्यं, प्रध्यः, अमि पूर्वरूपं प्रथमयोः पूर्वसर्वणदीर्घञ्च प्रसक्तं बाधित्वा परत्वात् एरनेकाच इति च यण् लक्ष्मीशब्दादस्य विशेषोऽयमेव। प्रकृष्टा धीरिति विग्रहे मतद्वयेऽपि प्रध्यायतीति विग्रहे वृत्तिकारमते च प्रधीशब्दो लक्ष्मीवत्। प्रध्यायतीति विग्रहे कैयटमते तु पुंलिङ्गप्रधीशब्दवत्-

16. सुधीशब्दः विग्रहद्वयेऽपि वृत्तिकारमते सत्यपि नित्यस्त्रीत्वे नेयङुवङिति निषेधेन नदीसंज्ञाऽभावात् स्त्रीशब्दवत्। कैयटमते सुध्यायतीति विग्रहे पुंलिङ्गे सुधी (सुश्रीशब्दवत्)

३०५ **स्त्रियां च** । ।७।१।९६। स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते ।३०६ **ऋन्नेभ्यो ङीप्** । ।४।१।५। ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् स्यात् । क्रोष्ट्री, क्रोष्ट्र्यौ, क्रोष्ट्र्यः ।। इत्युदन्ताः ।। वधूर्गौरीवत् । भ्रूः श्रीवत् । हे सुभ्रूः। कथं तर्हि ' हा पितः क्वासि हे सुभ्रु' इति भट्टिः । प्रमाद एवायमिति बहवः । खलपूः पुंवत् । पुनर्भूः । 'दृन्कर–' (वा ४११८) इति यणा उवङो बाधनात् 'नेयङुवङ्–' (सू ३०३) इति निषेधो न, हे पुनर्भु । पुनर्भ्वम् । पुनर्भ्वौ । ३०७ **एकाजुत्तरपदे णः** । ।८।४।१२। एकाजुत्तरपदं यस्य तस्मिन्समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य नित्यं णत्वं स्यात् । आरम्भसामर्थ्यान्नित्यत्वे सिद्धे पुनर्णग्रहणं स्पष्टार्थम् ।यणं बाधित्वा परत्वान्नुट्, पुनर्भूणाम् । वर्षाभूः । भेकजातौ नित्यस्त्रीत्वाभावाद् हे वर्षाभूः कैयटमते ।

---

सुष्ठु धीर्यस्य इति विग्रहे श्रीवदेव। धीशब्दस्य मतद्वयेऽप्यस्ति नित्यस्त्रीत्वमिति प्रथमलिङ्गग्रहणञ्चेति सुधीशब्दस्यापि नित्यस्त्रीत्वात्। ननु कौमुद्यां सुष्ठु धीर्यस्यास्सुध्यायतीति वा विग्रह इति वाकारस्य समुच्चयार्थत्वेन विग्रहद्वयेऽपि वृत्तिमते श्रीवत्, मतान्तरे पुंवदित्युक्तत्वेन सुष्ठु धीर्यस्या इति विग्रहे कैयटमते कथं पुंवद्रूपमिति चेत् उच्यते। प्रथमलिङ्गग्रहणञ्चेति वार्तिकस्य पूर्वं भणितमर्थद्वयम्।तत्र पूर्वं स्त्र्याख्यस्य उपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थाश्रयणे धीशब्दस्य इयङ्स्थानित्वेन पूर्वमेव न नदीत्वमिति नोपसर्जनत्वे सुधीशब्दस्येति पुंवद्रूपम्। न च नदीत्वनिषेधेऽपि नित्यस्त्रीत्वमस्तीति वाच्यम् । धीशब्दस्य कैयटमते सत्यपि नित्यस्त्रीत्वे सुधीशब्दस्य नास्ति सुधीशब्दस्य लिङ्गान्तराभिधायकत्वात्। ननु प्रथमलिङ्गग्रहणञ्चेति धीशब्दगतनित्यस्त्रीत्वमत्रातिदिश्यत इति चेन्मैवम्। वार्तिकस्य एतन्मतरीत्या पूर्वोक्तार्थाश्रयणेन उक्तार्थानाश्रयणात्। नन्वेवं यदि सष्ठु धीरिति विग्रहे श्रीवदेवेति कौमुदी विरुद्ध्यते। न च वृत्तिकारमते एवमिति वाच्यम् । मतान्तरे पुंवदिति प्रक्रम्य अस्योक्तत्वेन अस्यापि मतान्तरविषयत्वौचित्यात्, वृत्तिकारमते सुष्ठु धीर्यस्य सुध्यायतीति वा विग्रहे श्रीवदिति पुरैवोक्तत्वाच्च इति चेदुच्यते। सुष्ठु धीरिति विग्रहे त्वित्यनन्तरं प्रथमलिङ्गग्रहणञ्चेति वार्तिकस्य वृत्तेः पूर्वं वर्तमानं नित्यस्त्रीत्वं पश्चाददतिदिश्यत इति अर्थाश्रयणरूपे मतान्तरे इति पूरणीयम्। अतोऽस्मिन्मते सुधीशब्दस्य नित्यस्त्रीत्वातिदेशेन श्रीवदेवेति न दोष इति। इदमत्र तत्त्वम् । सुष्ठु ध्यायतीति विग्रहे कैयटमते पुंवत्, वृत्तिमते श्रीवत्। सुष्ठु धीरिति विग्रहे वृत्तिमते श्रीवत्। कैयटमते प्रथमलिङ्गग्रहणमित्यस्य उपसर्जनवेऽपि नदीत्वं वक्तव्यमित्यर्थे पुम्वत्। नित्यस्त्रीत्वातिदेश इत्यर्थे श्रीवत् ।

17. एकाजुत्तरपदे णः। ननु अट्कुप्वाङ्नुम्व्यवायेऽपि, रषाभ्यां नोणस्समानपद इति सूत्रवशादेव नुटः अपदस्थत्वेन पुनर्भूणामित्यादौ णत्वस्य सिद्धेः किमनेनेति चेत् । विभक्तिस्थस्य नस्य तथा णत्वप्राप्तावपि प्रातिपदिकान्तनुम्वोरप्राप्तेरयमारम्भ इति। ननु तयोः प्रातिपदिकान्तनुम्विभक्तिषु चेत्यनेन प्राप्तिरस्यैवेति चेन्मैवम् । तथात्वे णत्वस्य वैकल्पिकत्वेन

मतान्तरे तु हे वर्षाभु, 'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्' इति यादवः । 'वर्षाभ्वश्च' (सू २८२) वर्षाभ्वौ वर्षाभ्वः । स्वयम्भूः पुंवत्। इत्यूदन्ताः ।। ३०८ **न षट्स्वस्रादिभ्यः** । ।४।१।१०। षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च ङीप्टापौ न स्तः ।

"स्वसा तिस्त्रश्चतस्रश्च ननान्दा दुहिता तथा ।
याता मातेति सप्तैते स्वस्रादय उदाहृताः ।।"

'अप्तृन्-' (सू २७७) इति दीर्घः-स्वसा, स्वसारौ, स्वसारः । माता पितृवत् । शसि मातॄः । इत्यृदन्ताः ।। द्यौः गोवत् ।। इत्योदन्ताः ।। राः पुंवत् ।। इत्यैदन्ताः ।। नौः ग्लौवत् ।। इत्यौदन्ताः ।।

## ।। इत्यजन्तस्त्रीलिङ्गप्रकरणम् ।।

---

पुनर्भूनामित्यपि रूपान्तरसिद्धिप्रसङ्गात्। नन्वेवं रामाणामित्यत्रापि नस्य विभक्तिस्थत्वेन णत्वं विकल्पितं स्यात्। न हि पूर्वपदस्थान्निमित्तादित्यनेन उत्तरपदस्य आक्षिप्तत्वात्। तथा च पूर्वपदस्थान्निमित्तात्परस्य उत्तरपदं यत् प्रातिपदिकं तदन्तस्य नस्य उत्तरपदे यो नुम् तस्य नस्य, उत्तरपदे या विभक्तिस्तस्थस्य नस्य च णत्वं विकल्पेन स्यादित्यर्थः। अस्य सूत्रस्यायमर्थः। पदव्यवायेऽपीति लिङ्गाच्च लभ्यते। निषेधस्य प्राप्तिपूर्वकत्वात् । ननु सर्वाङ्गीण इत्यत्र रषाभ्यामित्यनेन णत्वस्य प्राप्तौ प्रातिपदिकान्तनुम्विभक्तिस्थत्वाभावेन नस्य णत्वविकल्पाभावेऽपि पदव्यवायेपीति निषेध एवेति चेन्मैवम्। पदव्यवायेऽपीत्यस्य निमित्तनिमित्तिमत्पदयोर्मध्ये पदेन व्यवायेऽपीत्यर्थः। अन्यथा पूर्वपदस्थादिति कुमतीति च क्वापि न प्रवर्तेरन् ।अत एव माषवापेणेत्यत्र णत्वप्राप्तिः। माषकुम्भवापेनेत्यत्राप्राप्तिश्च उदाहृते ।अत्रायं निष्कर्षः। यूष्ण इत्याद्यव्यवधानस्थले णत्वसिद्ध्यर्थं रषाभ्यामिति सूत्रम्। रामाणामित्याद्यडादिव्यवधानस्थले णत्वसिद्ध्यर्थमट्कुप्वाङिति सूत्रम्। पदद्वयघटितसर्वाङ्गीण इत्यादिस्थले णत्वसिद्ध्यर्थं निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वलक्षणसमानपदत्ववपद-घटितन्त्तंतदेव सूत्रम् अस्यैकान्तिकं लक्ष्यम् । पूर्वपदनिमित्तात्परः तद्धितप्रत्ययस्थः नकार एव। पदद्वयघटिते तद्धितप्रत्ययस्थनकारवति माषवापेणेत्यादिस्थले वैकल्पिकणत्वसिद्ध्यर्थं प्रातिपदिकान्तनुम्विभक्तिस्थस्येति सूत्रम् पूर्वोक्तलक्षणे पुनर्भूणामिति एकाजुत्तरपदवत्स्थले नित्यणत्वार्थं एकाजुत्तरपद इति सूत्रम्। पदत्रयवति माषकुम्भवापेनेत्यादिस्थले णत्वाभावार्थं पदव्यवायेऽपीति सूत्रम् । आर्द्रगोमयेणेत्यादिस्थले णत्वसिध्यर्थमतद्धित इति वार्तिकम्। सर्वत्रापि व्यवहितस्थलेषु अडादिव्यवधानमेवापेक्षितम्। न तु तद्भिन्नैः इति।

18. स्वयम्भूः। पुम्वत् । वृत्तिमते पदान्तरं विनापि स्त्रियां वर्तमानत्वेन, सत्यपि नदीत्वे, नेयङुवङिति निषेधेन (न भूसुधियोरिति स्वयंभूशब्दस्य यणिणषेधेन उवङ्स्थानत्वात्) नदीत्वमिति, कैयटमते न नदीत्वप्राप्तिरेवेति च पुंलिङ्ग इव स्त्रीलिङ्गेऽपि स्वयम्भूशब्दस्य रूपाण्यूह्यानीति भावः । वर्षाभ्वावित्यत्र वर्षाभ्वश्चेति यण्-

19. न षट् स्वस्रादिभ्यः, स्वस्रादीनां ऋदन्तत्वेन षट्संज्ञकेषु (षान्ता नान्ता च सङ्ख्या षट्संज्ञा स्यादिति।) पञ्चन्नित्यादीनां नान्तत्वेन च ऋन्नेभ्यो ङीबिति ङीप् प्राप्तः। तत्रैव

## अथ अजन्तनपुंसकलिङ्गप्रकरणम् । १०।

३०९ **अतोऽम्** । ।७।१।२४। अतोऽङ्गात्क्लीबात्स्वमोरम्स्यात् । 'अमि पूर्वः' (सू १९४) ज्ञानम् । 'एङ्ह्रस्वात्-' (सू १९३) इति हल्मात्रलोपः, हे ज्ञान । ३१० **नपुंसकाच्च** । ।७।१।१९। क्लीबात्परस्यौङः शीस्यात् । भसंज्ञायाम् । ३११ **यस्येति च** । ।६।४।१४८। भस्येवर्णावर्णयोर्लोपः स्यादीकारे तद्धिते च परे । इत्यकारलोपे प्राप्ते । 'औङः श्यां प्रतिषेधो वाच्यः' (वा ४१८९) ज्ञाने । ३१२ **जश्शसोः शिः** । ।७।१।२०। क्लीबादनयोः शिः स्यात् । ३१३ **शि सर्वनामस्थानम्** । ।१।१।४२। 'शि' इत्येतदुक्तसंज्ञं स्यात् । ३१४ **नपुंसकस्य झलचः** । ।७।१।७२। झलन्तस्याजन्तस्य च क्लीबस्य नुमागमः स्यात्सर्वनामस्थाने परे । उपधादीर्घः ज्ञानानि । पुनस्तद्वत् । शेषं रामवत् । एवं धनवनफलादयः ।

---

पञ्चन्नित्यादेः नलोपः प्रातिपदिकान्तस्येति नलोपे कृते, अदन्तत्वेन अजाद्यत इति टाप् च प्राप्तः अनेन सूत्रेण निषिध्यते ।

20. माता। पितृवत्। जननीवाच्योऽयं मातृशब्दः औणादिकस्तृजन्त इति नास्योपधादीर्घः। परिच्छेतृवाची मातृशब्दस्तु पुंलिङ्गः मातरावित्यादीनि रूपाणि भजते। स्पष्टीकृतमिदमप्तृन्निति सूत्रविचारसमये प्रागिति ।

इत्यजन्ता स्त्रीलिङ्गाश्शब्दाः

अथ अजन्ताः नपुंसकलिङ्गाः

1. अतोम्, सूत्रे तत्त्वबोधिन्याम्, तथापि संयोगान्तलोपो झल इत्यभिप्रायोणेदं व्याख्यातमित्यस्यायम्भावः। संयोगान्तस्य लोप इति सूत्रस्थस्य यणः प्रतिषेधो वाच्य इति वार्तिकस्य यथाव्याख्याने संयोगान्तस्य यणो लोपप्रतिषेधो भवेत्, तथा संयोगान्तलोप इति सूत्रं वाच्यम्, व्याख्येयमित्यर्थं स्वीकृत्य झलो झलीत्यतः झल इत्यनुवृत्त्या संयोगान्तस्य झलो लोपस्स्यादिति संयोगान्तस्य लोपसूत्रार्थप्रवचनपक्षे ज्ञान अम्, अतोम् आदेः परस्य, ज्ञानम् म् संयोगान्तस्य मः अझल्त्वान्न लोप इति ज्ञानमित्येकमकारघटितरूपं न सिद्ध्यतीति।

2. हे ज्ञान एङ्ह्रस्वादिति सूत्रे वैयधिकरण्येनान्वयस्याङ्गीकृतत्वेन सिद्धमिदम् । तथा हि । ज्ञान सु, अतोम् । ज्ञान अम् ।अमि पूर्वः ज्ञानम् । अन्तादिवच्चेति अमि पूर्वस्य पूर्वान्तवद्भावेन ज्ञानेत्यस्य ह्रस्वान्ताङ्गत्वेऽपि ततः परस्यास्संबुद्धेर्लोप इति सामानाधिकरण्येनान्वये तु मकारस्य संबुद्ध्यवयवत्वेन असंबुद्धित्वाल्लोपो न स्यात्, ह्रस्वान्ताङ्गात्परस्य संबुध्यवयवहलो लोप इति वैयधिकरण्येनान्वये तु मस्य लोपस्यादिति भावः।

३१५ **अद्ड्डुतरादिभ्यः पञ्चभ्यः** । ।७।१।२५। एभ्यः क्लीबेभ्यः स्वमोरद्डादेशः स्यात् । ३१६ **टेः** । ।६।४।१४३। डिति परे भस्य टेर्लोपः स्यात् । 'वाऽवसाने (सू २०६) कतरत्-कतरद्, कतरे, कतराणि । 'भस्य' इति किम्-पञ्चमः । टेर्लुप्तत्वात् 'प्रथमयोः-' (सू १६४) इति पूर्वसवर्णदीर्घः 'एङ्ह्रस्वात्-' (सू १९३) इति संबुद्धिलेपश्च न भवति, हे कतरत् । पुनस्तद्वत् । शेषं पुंवत्। कतमत् । अन्यत् । अन्यतरत् । इतरत्। अन्यतमशब्दस्य तु अन्यतममित्येव । **एकतरात्प्रतिषेधो वक्तव्यः** ।' (वा ४२८७) एकतरम् । सोरमादेशे कृते संनिपातपरिभाषया न जरस् । अजरम् । अजरसी । अजरे । परत्वाज्जरसि कृते झलन्तत्वान्नुम् ।

---

3. औङःशयाम्प्रतिषेधो वक्तव्यः, औङःशी ईकारत्वेन (शकारस्य इत्संज्ञया लोपात्) तस्यां परतः यस्येति चेति ज्ञन ई इत्यत्र अलोपे प्राप्ते तत्प्रतिषेधार्थमयं वार्तिकारम्भः। औङश्श्यां परतः यस्येति चेति लोपस्य प्रतिषेधो वाच्य इत्यर्थः।

4. नपुंसकस्य झलचः, ज्ञान इ अजन्तक्लीबत्वाद्ज्ञानेत्यस्य नुमागमः, मित्वान्मिदचोन्त्यात्पर इति स नुम् अन्त्यादचः परस्सन् भवति। नुमि उकार उच्चारणार्थकः। ज्ञानम् इ सर्वनामस्थाने चासंबुद्धावित्युपधादीर्घः। ज्ञानानि।

5. टेः गमेर्डः गः स्त्यायतेर्ड्रट् स्त्री इत्यादिषु, डिति परे अभस्यापि टेर्लोपः कथमिति चेदुच्यते डित्वसामर्थ्यादभस्यापि टेर्लोप इति।

6. हे कतरत्, किंशब्दाड्डुतरप्रत्यये टिलोपे, कतर सु सोरद्डादेशः। कतर अद् टिलोपः। कतरद्। अत्र टिलोपात्पश्चाद्ध्रस्वान्ताङ्गाभावान्न संबुद्धिलोपः। इदमेवाद्डो डित्करणस्य प्रयोजनम् । अन्यथा अद् इत्यस्यैवादेशे कतर अद्, अतो गुणे, (प्रथमयोः पूर्वसवर्णदीर्घ बाधित्वा) कतरद्। अत्र अतो गुण इत्यस्य अन्तादिवद्भावेन कतरेत्यस्य ह्रस्वान्ताङ्गत्वेन एङ्ह्रस्वादिति सम्बुद्धिलोपे हे कतर इति स्यात् -

7. अन्यतममित्येव। डतर डतम इतर अन्य अन्यतर इत्येषां डतरादिपञ्चकत्वेन अन्यतमशब्दस्य अद् डतरादिभ्य इति न स्यादिति भावः।

8. एकतरात्प्रतिषेधो वक्तव्यः । एकतरशब्दस्य डतरत्प्रत्ययान्तत्वेन अद्ड्डुतरादिभ्य इत्यद्डादेशस्य प्रसक्तौ सत्यां तन्निषेधार्थमिदं वार्तिकम्।

9. सन्निपातपरिभाषया न जरस् गोस्त्रियोरिति ह्रस्वे, न विद्यते जरा यस्य तदजरमिति भवति। अत्र अजर अम्, एकदेशविकृतमनन्यवदिति अजरशब्दगतजरशब्दस्य जरसादेशः प्राप्तो न भवति। अदन्ताङ्गमाश्रित्य जायमानोऽमादेशः जरसादेशं सम्पाद्य

३१७ **सान्त महतः संयोगस्य** । ।६।४।१०। सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने परे । अजरांसि, अजराणि । अमि लुकोऽपवादमम्भावं बाधित्वा परत्वाज्जरस्, ततः संनिपातपरिभाषया न लुक्–अजरसम् । अजरम् । अजरसी। अजरे । अजरांसि, अजराणि । शेषं पुंवत् । 'पद्दन्–' (सू २२८) इति हृदयोदकास्यानां हृद् उदन् आसन् । हृन्दि । हृदा, हृद्भ्यामित्यादि । उदानि । उद्ना उदभ्यामित्यादि । आसानि । आस्ना । आसभ्यामित्यादि । मांसि । मांसा, मान्भ्यामित्यादि । वस्तुतस्तु प्रभृतिग्रहणं प्रकारार्थमित्युक्तम् । अत एव भाष्ये 'मांस्पचन्या उखायाः' इत्युदाहृतम् । अयस्मयादित्वेन भत्वात्संयोगान्तलोपो न । 'पद्दन्–' (सू २२८) इत्यत्र हि 'छन्दसि' इत्यनुवर्तितं वृत्तौ, तथापि 'अपो भि' (सू ४४२) इत्यत्र **'मासश्छन्दसि'** (वा ४६३४) इति वार्तिके छन्दोग्रहणसामर्थ्याल्लोकेऽपि क्वचित्–इति कैयटोक्तरीत्या प्रयोगमनुसृत्य पदादयः प्रयोक्तव्या इति बोध्यम् ।।

३१८ **ह्रस्वो नपुंसके प्रातिपदिकस्य** । ।१।२।४७। क्लीबे प्रातिपदिकस्याजन्तस्य ह्रस्वः स्यात् । श्रीपं ज्ञानवत् । श्रीपाय । अत्र संनिपातपरिभाषया 'आतो धातोः' (सू २४०) इत्याकारलोपो न ।। **इत्यादन्ताः** ।

---

अदन्ताङ्गविघाताय न भवतीति सन्निपातपरिभाषाविरोधात् ।

10. अजरसम् । ननु अजर अम् इति सोरमि यथा सन्निपातपरिभाषया न जरसादेश इति अजरमिति भवति, तथैव द्वितीयैकवचनेऽपीति चेन्मैवम्, सोरम्, अदन्ताङ्गनिमित्तकत्वेन जायमान इति हेतोरदन्ताङ्गविघाताय न शक्नुयात् । द्वितीयैकवचनमम्तु प्रातिपदिकनिमित्तकत्वेन जायमान इति हेतोः कृतेऽपि जरसादेशे, प्रातिपदिकत्वाविघातान्नात्र सन्निपातपरिभाषा प्रवर्तत इति।

11. सन्निपातपरिभाषया न लुक् । अजादिनिमित्तकत्वेन जायमानो जरसादेशः अजादिविभक्तिभूतामो विघाताय न शक्नुयादिति।

12. असानि अस्य शब्दस्य आसन्नादेशे आसन् इ सर्वनामस्थाने चासंबुद्धौ असानि । अत्र शेस्सर्वनामस्थानत्वादल्लोपोऽन इति न।

13. मासश्छन्दसीति वार्तिक इत्यादि। मास इत्युक्तावपि माद्भिरिति रूपं छन्दस्येव सिध्यति। लोकवेदयोः मासशब्दस्य पद्दन्निति सूत्रेंण मासादेशो यदि विधीयते तर्हि लोके माद्भिरिति भवेदिति तद्वारणाय छन्दोग्रहणमस्तु। न तथा पद्दन्नित्यादेशाः छन्दस्येवेति वृत्तौ छन्दोऽनुवर्तनाल्लोके मास् इति शब्द एव नास्तीति छन्दसीति व्यर्थं सत्,

३१९ स्वमोर्नपुंसकात् । ।७।१.२३। क्लीबादङ्गात्परयोः स्वमोर्लुक् स्यात् । वारि । ३२० **इकोऽचि विभक्तौ** । ।७।१।७३। इगन्तस्य क्लीबस्य नुमागमः स्यादचि विभक्तौ । वारिणी । वारीणि । 'न लुमता–' (सू २६३) इति निषेधस्यानित्यत्वात्पक्षे सम्बुद्धिनिमित्तो गुणः, हे वारे, हे वारि । 'आङो ना–' (सू २४४) वारिणा । 'घेर्ङिति' (सू २४५) इति गुणे प्राप्ते–**'वृद्ध्यौत्त्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन'** (वा ४३७३) । वारिणे । वारिणः । वारिणोः । 'नुमचिर–' (वा ४३७४) इति नुट् । 'नामि' (सू २०९) इति दीर्घः । वारीणाम् । वारिणि । वारिणोः । हलादौ हरिवत् । ३२१ **तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य** । ।७।१।७४। प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा स्याट्टादावचि । अनादये, अनादिने–इत्यादि । शेषं वारिवत् । पीलुर्वृक्षः, तत्फलं पीलु, तस्मै पीलुने । अत्र न पुंवत्, प्रवृत्तिनिमित्तभेदात् ।

---

लोकेऽपि क्वचित्पद्दन्नादयः आदेशास्युरिति कैय्यटः । नन्वेवं सर्वत्रापि पदन्नादयः प्रयुज्येरन्, तथात्वे अप्रयुक्तमपुष्टार्थमिति विद्यानाथोक्तरीत्या अप्रयुक्तत्वलक्षणदोषस्सम्भविष्यति। प्रकृतप्रयोगेष्वित्याशङ्क्य प्रयोगमनुसृत्य प्रयोक्तव्या इति कौमुदी।

14. अत्र सन्निपातपरिभाषया आतोधातोरित्याकार लोपो न । श्रीपाय । श्रीपा ङे परत्वाद्विभक्तिकार्यत्वेनान्तरङ्गत्वाच्च ह्रस्वात्प्राक् ङेर्यः पश्चाद्ध्रस्वः । श्रीपय । सुपि चेति दीर्घः। श्रीपाय । अत्राधुना अतो लोप इति आधातोः अलोपः प्राप्तो न भवति अकारान्तमङ्गमाश्रित्य जायमानो यादेशः अकारान्ताङ्गविघाताय न शक्नोतीति (यकारादौ प्रत्यये परतः पूर्वस्य भत्वादत्रातो धातोरित्यालोपप्राप्तिः)। नन्वत्र सत्यप्याकारान्तत्वे धातुत्वं नास्तीति चेन्मैवम्। पातेः क्विपि, पा क्विप्तु धातुत्वं न जहातीति श्रीपाशब्दे आकारान्तधातुत्वमस्त्येवेति ह्रस्वे कृतेऽपि तद्धातुत्वमस्त्येव। पुनर्दीर्घे कृतेऽपि धातुत्वस्य अकारान्तत्वस्य च सत्वात्। ननु अयमाकारस्सुपि चेत्याकारः न तु धात्वाकार इति आकारान्तो यो धातुरित्युक्ते प्रकृते नास्त्येवेति। न च स्थानिवद्भावेनानीयत इति वाच्यम्। अस्य अलो विधित्वेन अनल्विधाविति निषेधादिति चेन्मैवम् । ह्रस्वे कृते आकारान्तधातुत्वाभावेऽपि दीर्घे कृते तत्सद्भावात्। क्विपो धातुत्वेन आकारान्तो यो धातुरित्युक्ते आकारान्तः क्विबन्तोऽयं श्रीपाशब्दस्स्यादेवेत्यातो धातोरिति लोपप्रसक्तिरिति। ननु अदन्ताङ्गत्वनिमित्तत्वेन जायमानस्य यादेशस्य आदन्ताङ्गविघाते कस्सन्निपातपरिभाषाविरोध इति चेदुच्यते। अदन्ताङ्गनिमित्तत्वेन जायमानो यादेशः कष्टाय क्रमण इति निर्देशेन अदन्ताङ्गत्वमुत्पादयित्वापि तद्विघाताय न भवतीति तत्परत्वमविवक्षयित्वा अकारान्तमाश्रित्य जातो यः अकारान्तविघाताय न भवतीत्येतावानेवात्र स्वीकर्तव्यः। अथवा आकारान्तत्वनिमित्तभूतो यादेशः आकारान्तविघाताय न शक्नुयादिति

पोषकविघातवत्पोष्यविघातोऽप्ययुक्त इति लोकन्यायेन उपजीव्योपजीवकभावविरोधात्मिका सन्निपातपरिभाषात्र ज्ञेया।

15. न लुमतेति निषेधस्यानित्यत्वात्, न ङि सम्बुध्योरिति सूत्रे संबुद्धिग्रहणात् ज्ञापकात्तस्यानित्यत्वं बोध्यम्।

16. वृद्धचौत्वतृज्वदिति वार्तिके गुणात्पूर्व नुम उदाहरणं घेर्ङिति वारिणे इत्यादि।

17. तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य । अत्रानुगुणं शब्दस्वरूपमिति विशेष्यमध्याह्रियते। भाषितः पुमान् यस्मिन्नर्थे तद्भषितपुंस्कं। अर्थशब्दस्य सामान्ये नपुंसकमिति नपुंसकत्वम् । भाषितपुंस्कमस्यास्तीति भाषितपुंस्कम्, पुंवाचकार्थवदिति यावत्। यस्य शब्दस्य यमर्थमाश्रित्य पुंस्त्वं तस्य तमाश्रित्यैव यदि नपुंसकत्वन्तर्हि तथाविधं पदं भाषितपुंस्कं क्लीबमित्युच्यत इति भावः। अस्यैव भावार्थस्य वचनान्तरेण कथनं प्रवृत्तिनिमित्तैक्यै भाषितपुंस्कं क्लीबमिति। शब्दे पुंस्त्वस्य नपुंसकत्वस्य वा प्रवृतिं प्रति तदर्थस्यैव निमित्तत्वेन, प्रवृत्तिनिमित्तन्नाम भाषितपुंस्कमर्थ एव। तस्यैक्ये यः पुंवाचकशब्दस्स भाषितपुंस्कमित्युच्यते । एवंविधस्य भाषितपुंस्कस्य शब्दस्य पुंवाचकार्थवत्त्वमस्त्येवेति न कैमुदीविरोधः। एकस्मिन्नेवार्थे यश्शब्दः पुम्नपुंसके उभे अपि आचष्टे स भाषितपुंस्क इति फलितम्। यथा अनादिशब्दः अनादित्वरूपे एकस्मिन्नेवार्थे पुंनपुंसके हरिब्रह्माणी उभे आचक्षाणः भाषितपुंस्कस्तथान्यानपि शब्दानेवंविधान् भाषितपुंस्कत्वेन जानीथ। पीलुशब्दस्तु पुंस्त्वप्रवृत्तिं प्रति वृक्षत्वरूपस्य नपुंसकत्वप्रवृत्तिं प्रति फलत्वरूपस्य च अर्थस्य ऐक्याभावान्न भाषितपुंस्कः। केचित्तु पुंवाचकशब्दप्रवृत्तिनिमित्तस्य नपुंसकवाचकशब्दप्रवृत्तिनिमित्तस्य चार्थस्यैक्ये इति प्रवृत्तिनिमितैक्य इत्यस्यार्थमाहुः तन्मते पुंवाचकशब्दः अनादिनी इत्यत्र हरिः (प्रकृतभाषितपुंस्कशब्दादन्यो ग्राह्य इति भावात्) प्रकृतशब्दस्यार्थभूतश्शब्द इति यावत् तस्य नपुंसकशब्दः पूर्ववदेव ब्रह्म। तस्य च प्रवृत्तिं प्रति प्रकृतशब्दे अर्थरूपेण वृत्तिं प्रति हरिब्रह्मार्थबोधजननं प्रतीति यावत्। यन्निमित्तं अनादित्वरूपमर्थस्तस्यैक्ये इति क्लेशेन व्याख्येयम्। यद्वा पुंवाचकत्वे प्रवृत्तिनिमित्तस्य नपुंसकवाचकत्वे प्रवृत्तिनिमित्तस्य चैक्य इति प्रवृत्तिनिमितैक्य इत्यस्यार्थो वाच्यः। तथा च प्रकृते अनादिशब्दस्य पुंवाचकत्वे हरिरूपार्थबोधजनकत्वे प्रवृतिं प्रति यन्निमित्तमनादित्वरूपमर्थः तदेव नपुंसकब्रह्मवाचकत्वप्रवृत्तिं प्रत्यपि निमित्तमिति तथैक्यस्य सत्वादनादिशब्दो भाषितपुंस्कः। नन्वेवमपि भाषितपुंस्कमित्यपार्थमेव। कौमुदीवृत्तौ प्रवृत्तिनिमित्तैक्ये इगन्ताङ्गं क्लीबमिति व्याख्यानेनैव प्रकृतार्थसिद्धेः इति चेन्मैवम्। कयोः केषां वा प्रवृत्तिनिमितैक्य इत्याकाङ्क्षायां पुंनपुंसकयोरेवेति नियमाय तस्यावश्यकत्वात्। सति तु तस्मिन् क्लीबमित्यनेन नपुंसकस्य भाषितपुंस्कमित्यनेन पुंसश्च लाभात्। ननु भाषितपुंस्कं क्लीबमित्येतावतैव अलम्। प्रवृत्तिनिमित्तैक्य इति मास्तु इति चेत् न। पीलुन इत्यत्रातिव्याप्तेः। भाषितः पुमान् येन तद्भाषितपुंस्कं क्लीबं पीलु। अनेनैव वृक्षस्यापि भाषितत्वात्। ननु भाषितः पुमान्

३२२ **अस्थिदधिसक्थ्यक्ष्णामनङ्ङुदात्तः** । ।७।१।७५। एषामनङ् स्याट्टादावचि, स चोदात्तः । 'अल्लोपो नः' (सू २३४) । दध्ना । दध्ने । दध्नः । दध्नः, दध्नोः, दध्नाम् । दध्नि दधनि, । दध्नोः । शेषं वारिवत् । एवमस्थिसक्थ्यक्षीणि । तदन्तस्याप्यनङ् । अतिदध्ना ।। इति इदन्ताः ।। सुधि, सुधिनी, सुधीनि । हे सुधे, हे सुधि । सुधिया, सुधिना । सुधियाम्, सुधीनाम् । प्रध्या, प्रधिना ।। **इति ईदन्ताः** ।। मधु, मधुनी ।मधूनि हे मधो, हे मधु । एवमम्ब्वादयः । सानुशब्दस्य स्नुर्वा स्नूनि, सानूनि । प्रियक्रोष्टु, प्रियक्रोष्टुनी । तृज्वद्भावात्पूर्वविप्रतिषेधेन नुम् । प्रियक्रोष्टूनि । टादौ पुंवत्पक्षे–प्रियक्रोष्ट्रा, प्रियक्रोष्टुना प्रियक्रोष्ट्रे, प्रियक्रोष्टवे । अन्यत्र तृज्वद्भावात्पूर्वविप्रतिषेधेन नुमेव । प्रियक्रोष्टुना । प्रियक्रोष्टुने । **'नुम्अचिर–'** (वा ४३७४) इति नुट् । प्रियक्रोष्टूनाम् ।। **इत्यूदन्ताः** ।। सुलु, सुलुनी, सुलूनि, पुनस्तद्वत् । सुल्वा, सुलुना ।। **इत्यूदन्ताः** ।। धातृ, धातृणी धातॄणि । हेधातः, हे धातृ । धात्रा, धातृणा । एवं ज्ञातृकर्त्रादयः ।। इत्यृदन्ताः ।। ३२३ **एच इग्घ्रस्वादेशे** । ।१।१।४८। आदिश्यमानेषु ह्रस्वेषु एच इगेव स्यात् । प्रद्यु, प्रद्युनी, प्रद्यूनि । प्रद्युनेत्यादि । इह न पुंवत् यदिगन्तं प्रद्यु इति तस्य भाषितपुंस्कत्वाभावात् । एवमग्रेऽपि ।। इत्योदन्ताः ।। प्ररि, प्ररिणी, प्ररीणि । प्ररिणा । एकदेशविकृतस्यानन्यत्वाद् 'रायो हलि' (सू २८६) इत्यात्वम्, प्राराभ्याम् । प्रराभिः । **'नुमचिर–'** (वा ४३७४) इति नुटच्चात्वे प्रराणाम् इति माधवः । वस्तुतस्तु संनिपातपरिभाषया नुटच्चात्वं न । 'नामि' (सू २०९) इति दीर्घस्त्वारम्भसामर्थ्यात्संनिपातपरिभाषां बाधत इत्युक्तम् । प्ररीणाम् ।। **इत्यैदन्ताः** ।। सुनु, सुनुनी, सुनूनि । सुनुना । सुनुने इत्यादि ।। **इत्यौदन्ताः** ।।

**।। इत्यजन्तनपुंसकलिङ्गप्रकरणम् ।।**

---

यस्मिंस्तदिति पुर्वोक्तार्थाश्रयणे भाषितपुंस्कमित्यनेनैवालमुक्तदोषपरिहारादिति चेत्, तथैव। सूत्रगतभाषितपुंस्कशब्दस्य तादृशमर्थमाश्रित्यैव वृत्तौ प्रवृत्तिनिमित्तैक्त्य इत्युक्तम्। वृत्तिगतभाषितपुंस्कशब्दस्य तु भाषितः पुमान् येनेत्येवार्थः। अन्यथा पौनरुक्तयात्। अर्थैक्ये सति येन शब्देन पुमान् भाषितस्स भाषितपुंस्क इति कौमुद्यर्थः, तृतीयादिष्वर्थैक्ये पुंवद्गालवस्येत्येव सुवचम्। न च स्त्रिया सहार्थैक्यं शङ्क्यम्, पुंवदिति पुंस्त्वातिदेशेन तद्योग्यपुंसा सहैवार्थैक्यस्य लाभात्।

18. हे धातः ह्रस्वस्य गुण इति, न लुमतेति निषेधस्य अनित्यत्वेन प्रत्ययलक्षणपक्षे संबुद्धिनिमित्तो गुणः। धातर् सु सुलोपः। विसर्गः। हे धातः। प्रत्ययलक्षणाभावपक्षे संबुद्धिनिमित्तकत्वाभवेन न गुणः। एङ्ह्रस्वादिति संबुद्धिलोपः हे धातृ।

## अथ हलन्तपुँल्लिङ्गप्रकरणम् ।११।

३२४ **हो ढः** । ।८।२।३१। हस्य ढः स्याज्झलि पदन्ते च । हल्ङ्याप्–' (सू २५२) इति सुलोपः, पदान्तत्वाद्धस्य ढः, जश्त्वचर्त्वे, लिट्, लिड्। लिहौ, लिहः । लिहम्, लिहौ, लिहः । लिहा, लिड्भ्याम् इत्यादि । लिट्त्सु, लिट्सु । ३२५ **दादेर्धातोर्घः** । ।८।२।३२। उपदेशे दादेर्धातोर्हस्य घः स्याज्झलि पदान्ते च । उपदेशे किम्–अधोग् इत्यत्र यथा स्यात् , दामलिहमात्मन इच्छति दामलिह्यति, ततः क्विपि दामलिट्, अत्र मा भूत् । ३२६ **एकाचो बशो भष् झषन्तस्य स्ध्वोः** । ।८।२।३७। धातोरवयवो य एकाज् झषन्तस्तदवयवस्य बशः स्थाने भष् स्यात्सकारे ध्वशब्दे पदान्ते च । एकाचो धातोः–इति सामानाधिकरण्येनान्वये त्विह न स्याद् ।गर्दभमाचष्टे गर्दभयति । ततः क्विप्, णिलोपः, गर्धप् । झलीति निवृत्तम्, स्ध्वोर्ग्रहणसामर्थ्यात् । तेनेह न–दुग्धम्, दोग्धा व्यपदेशिवद्भावेन धात्ववयवत्वाद्भष्भावः, जश्त्वचर्त्वे धुक् , धुग् । दुहौ, दुहः । षत्वचर्त्वे धुक्षु । ३२७ **वा द्रुहमुहष्णुहष्णिहाम्** । ।८।२।३३। एषां हस्य वा घः स्याज्झलि पदान्ते च । पक्षे ढः । ध्रुक्, ध्रुग् ध्रुट्, ध्रुड् । द्रुहौ, द्रुहः ध्रुग्भ्याम्, ध्रुड्भ्याम् । ध्रुक्षु, ध्रुट्त्सु, ध्रुट्सु । एवं मुहष्णुहष्णिहाम् ।

---

वस्तुतस्तु सन्निपातपरिभाषया नुट्यात्वं न। प्ररि–आम्–एच इगितीक्, प्ररि–आम्–ह्रस्वनद्यापो नुट् । प्ररिणाम्। अत्र रायो हलीत्यात्वं न ह्रस्वान्तनिमित्तकत्वेन जायमान आमो नुट्, आमो हलादित्वमुत्पाद्य आकारादेशसंपादनद्वारा ह्रस्वान्तविघाताय न भवतीति। ननु सन्निपातपरिभाषाया अनित्यत्वाश्रयणात्पक्षे स्यादेवेति चेन्मैवम्। भाष्यकारादिप्रयोगानुसारेण यादृशस्थलेष्वनित्यत्वमाश्रितं तत्सदृशस्थलेष्वेव तस्या अनित्यत्वाश्रयणात्। तस्य अनित्यत्वं व्यवस्थितविभाषावत् क्वचिद्व्यवस्थितमिति भावः। न च रायो हलीत्यारंम्भसामर्थ्यात् परिभाषा बाध्यत इति वाच्यम्। प्राभ्यामित्यादौ तत्सामर्थ्यस्य उपक्षीणत्वात्।

इत्यजन्तनपुंसकलिङ्गाः

**अथ हलन्तपुंलिङ्गाः**

1. **अधोक्।** दुह प्रपूरण इति धातोरदादित्वेन शपो लुकि, लुङ् लङ् लृङ्क्ष्वडुदात्त इति लङि, अडागमे, अदुह् ति इति स्थिते, पुगन्तलघूपधस्य चेति लघूपधगुणे अदोह् ति, हल्ङ्याभ्य इति तिलोपः। दादेर्धातोर्घ इति घादेशः। एकाचो बश इति भष्भावः, झलाञ्जशोन्त इति जश्त्वम्। वावसान इति चर्त्वम्। अधोक् ।अत्र उपदेशे धातोर्दादित्वेऽपि घादेशकरूपसमये अदोह् इति अकारादिधातुत्वेन दादित्वाभावात्, घत्वं न स्यादिति उपदेशग्रहणम्। एवमव्याप्तिः परिहृता। अथातिव्याप्तिं परिहरति। दामलिह् घत्व, जश्त्व, चर्त्वाणि दामलिट् । अत्र उपदेशपदाभावे प्रकृतस्य क्विबन्तस्य दामलिडित्यस्य धातोः दादित्वेन घस्स्यादिति। ननु दामलेढीति दामलिडित्येव किमिति

३२८ **इग् यणः संप्रसारणम्** ।१।१।४५। यणः स्थाने प्रयुज्यमानो य इक् स संप्रसारणसंज्ञः स्यात् । ३२९ **वाह ऊठ्** (६।४।१३२) भस्य वाहः संप्रसारणमूठ् स्यात् । ३३० **संप्रसारणाच्च** ।६।१।१०८। । संप्रसारणादचि पूर्वरूपमेकादेशः स्यात् । 'एत्येधत्यूठ्सु' (सू ७३) विश्वोहः । विश्वौहेत्यादि । छन्दस्येव ण्विः इति पक्षे णिजन्ताद्विच् ।

---

न प्रत्युदाहृतं लाघवादिति चेदुच्यते। लिहधातोः क्विपि, लिह् ढत्वजश्त्वचर्त्वाणि लिट् दाम्नां लिट् दामलिट् इति विग्रहे, उपदेशे दादित्वाभावेऽपि पश्चाद्धत्वकरणसमयेऽपि दादित्वं नास्तीति उपदेशपदाभावेऽपि नात्रातिव्याप्तिरिति शङ्क्या दामलिह्यतेः क्विप् दामलिडिति प्रत्युदाहृतम्। इदानीं तु दामलिह् इति दादेरस्यैव घत्वं स्यान्न तु लिहित्यस्येति।

2. **द्रुह् सु धृट्सु**। डस्सि धुडिति धुटो वैकल्पिकत्वेन सिद्धमिदं रूपद्वयम्। डस्सि ढुडिति धुट्त्वदृष्टचा झलाञ्जशोन्त इति जश्त्वस्य नासिद्धत्वं जश्त्वाद्धुटः परत्वात् झलां जश् झशीति जश्त्वस्य हि परत्वेन धुड्दृष्टचा असिद्धत्वम्।

3. **इग्यणस्संप्रसारणम्।** यणस्थाने ष्यङादिस्थाने प्रयुज्यमानः ष्यङस्संप्रसारणमित्यादिसूत्रैः प्रयुज्यमानो य इक् स संप्रसारणं स्यात्। नन्वत्र संज्ञाविधायकेऽस्मिन् सूत्रे ष्यङस्सं प्रसारणमित्यादिविधिसूत्रार्थज्ञानमावश्यकम्। विधिसूत्रेषु तु किमिदम् संप्रसारणमित्याकांक्षायामिग्यण इत्यावश्यकम् । अतोऽन्योऽन्याश्रयदोषापत्तिरिति चेत् उच्यते। ष्यङो यण इक् स्यात्। स च इग्यण इति संप्रसारणसंज्ञक इति भाविसंज्ञामाश्रित्य तत्र संप्रसारणमित्युक्तमिति कथञ्चित्समाधेयमिति यथा सूत्रे शाटकव्यवहारः।

4. **वाह ऊठ्।** नन्वत्र संप्रसारणपदानुवृत्तिरपार्था । यणस्थाने प्रयुज्यमानस्येक– स्संप्रसारणत्वादिति चेन्मैवम्। अलोऽन्त्यस्येति अन्त्यस्यालः हकारस्य यद्यूठादेशस्यात्तर्हि तस्य ऊठ इकः यण्स्थानप्रयुज्यमानत्वाभावेन संप्रसारणत्वं न स्यादिति वाह इत्येव सूत्रमस्तु। तथात्वे भस्य वाहस्संप्रसारणं स्यादिति वाह् इत्यत्र यणो वस्य इक्, उकारस्संप्रसारणत्वेन स्यादेवम्। तथा च विश्ववाह् संप्रसारणम् विश्व उ आह्। संप्रसारणाच्च विश्व उह् । लघूपधगुणः । विश्वओह् ।वृद्धिरेचि। विश्वौह् । शस् विश्वौह इति रूपसिद्धेः। ननु वृद्धिं बाधित्वा अतो गुण इति पररूपं स्यादिति चेन्मैवम्। विश्वं वहतीति विश्वाडिति समासे सुपो लुप्तत्वेऽपि प्रत्ययलक्षणेन विश्वशब्दस्य सुबन्तत्वेन पदत्वात्पदान्तत्वेन अकारस्य नातो गुण इति प्रवर्तते। अत इदमेव ऊठ ग्रहणं व्यर्थीभूय अन्तरङ्गे कार्ये कर्तव्ये बहिरङ्गमसिद्धं स्यादिति ज्ञापयित्वा बह्वाश्रयत्वेन बहिरङ्गस्य संप्रसारणस्य ऊठोऽभावेन उ इत्येतस्य अन्तरङ्गे लघूपधगुणे कर्तव्ये असिद्धत्वेन विश्वौह इति रूपासिद्धेः। स्वांशे ऊठि सति विश्व ऊ आह्। संप्रसारणच्च ऊह्। एत्येधत्यूठ्सु विश्वौह इति रूपं साधयित्वा चरितार्थमभवदिति। ननूठो वैयर्थ्यमेव चास्ति। तथा हि – प्रवहतीति प्रवाट् प्रवाह इत्यत्र संप्रसारणे प्र उ आह्। पूर्वरूपम् प्रऊह् लघूपधगुणः प्र ओह् इत्यस्य एङादिधातुत्वात्, एङि पररूपं

३३१ **चतुरनडुहोरामुदात्तः** । ७।१।९८। अनयोराम् स्यात्सर्वनामस्थाने परे, स चोदात्तः । ३३२ **सावनडुहः** । ।७।१।८२। अस्य नुम् स्यात्सौ परे । 'आत्' इत्यधिकारादवर्णात्परोऽयं नुम् । अतो विशेषविहितेनापि नुमा आम् न बाध्यते । अमा च नुम् न बाध्यते । सोर्लोपः । नुम्विधि सामर्थ्यात् 'वसुस्रंसु–' (सू ३३४) इति दत्वं न । संयोगान्तलोपस्यासिद्धत्वान्नलोपो न । अनड्वान् । ३३३ **अम् संबुद्धौ** । ।७।१।९९। चतुरनडुहोरम् स्यात्संबुद्धौ । आमोऽपवादः । हे अनड्वन् । अनड्वाहौ । अनड्वाहः अनडुहः । अनडुहा ।

---

प्रोह इत्येव स्यात्। ऊठि सति तु एत्येधत्यूठ्सु इति वृद्धेर्जातत्वेन प्रौह इति स्यात्। किञ्च हरिं वहतीति हरिवाट् । हरिवाह इत्यत्र ऊठि कृते, हरि ऊह् अत्रोपधाया ऊकारस्य गुरुत्वेन लघूपधगुणो न। किन्तु यणेव । हर्यूह इति स्यात् । ऊठोऽभावे हरि उ आह् पूर्वरूपं हरि उह्, लघूपधगुणः हरि, ओह्, यण् हर्योहः। अतः ऊठोऽभावे सद्भावे च न रूपाणां निर्विशेषत्वमिति ऊठ्ग्रहणं न निरर्थकमिति परिभाषाज्ञापनाय नालमिति चेन्मैवम्। भाष्यकारोक्तज्ञापकबलादेव तादृशस्थलेषु ण्विप्रत्यायाभवोऽनुमीयत इति। अयं भावः वाहतेर्ण्विप्रत्यये कृते णित्वादादिवृद्धौ वाह् इति भवति। यदा तदा हि वाह ऊठिति ऊठः प्रवृत्तिः। ण्विप्रत्ययस्यैवाभावे क्विबादिप्रत्यये कृते वहि इत्येव भवति। न तु वाहिति। तत्र ऊठः प्रसक्तिरेव नास्तीति नन्वेवमनुमीयतां ण्विप्रत्ययाभावः तथापि वाहयतीति वाहिति णिजन्ताद्विचि वाह् इत्यस्य लब्धत्वेन स्यादेव। तत्र वाह ऊठिति चेत् उच्यते। तत्रोठ्ग्रहणं व्यर्थीभूय बहिरङ्गपरिभाषां ज्ञापयतीति भाष्यकारोक्तज्ञापकवचनस्य निरंकुशत्वेन तादृशस्थलेषु णित्प्रत्ययाभावोनुमीयत इति वक्तव्यत्वेन न कोपि दोष इति।

5. **अनड्वान्।** अनडुह् सु चतुरनडुहोरामुदात्त इति आम् । मित्त्वादन्त्यादचः परस्सम्भवति। अनडु आह् सु सावनडुह इत्याकारात्परस्सन् नुम्भवति। अनडु आन् ह् स्, यण् अनड्वान् ह्स्, हल्ङ्याादिलोपः। पश्चात्संयोगान्तलोपः। अनड्वान् ।न चात्र न लोपः प्रातिपदिकान्तस्येति नलोपश्शङ्क्यः, संयोगान्तलोपस्य असिद्धत्वात्.। अत्र सर्वनामस्थाने परतो विधीयमानादामः सौ परतो विधीयमानस्य नुमः विशेषविहितत्वेन नुमा नोपवाद इति परत्वेन आम् नम् बाधक इति च न शङ्क्यम्। कुतः आदित्यधिकारादवर्णात्परो ययदिति। अयं भावः। आमि कृते सत्येव अनडुच्छब्दे अवर्णस्य लब्धत्वेन ततः परस्मन् नुं स्यात्। अकृते तु नैवेति आम्नुमोरुपजीव्योपजीवकभाव एव न विरोध इति आममाश्रित्य जायमानो नुमाम्बाधनाय न शक्नुयादिति स्वमाश्रित्य जायमानं नुमं स्वयं आम् बाधत इति च पोष्यविघातवत्पोषकविघातोऽप्ययुक्त इति

३३४ **वसुस्रंसुध्वंस्वनडुहां दः** । ।८।२।७२। सान्तवस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते । अनडुद्भ्यामित्यादि । सान्त इति किम्–विद्वान् । पदान्त इति किम्–स्रस्तम् । ध्वस्तम् । ३३५ **सहेः साडः सः** । ।८।३।५६। साड्रूपस्य सहेः सस्य मूर्धन्यादेशः स्यात् । तुराषाट् तुराषाड् तुरासाहौ, तुरासाहः । तुराषाड्भ्यामित्यादि । तुरं सहत इत्यर्थे 'छन्दसि सहः' (सू ३४०९) इति ण्विः । लोके तु साहयतेः क्विप् । 'अन्येषामपि–' (सू ३५३९) इति पूर्वपदस्य दीर्घः ।। इति हान्ताः ।। ३३६ **दिव औत्** । ।७।१।८४। दिविति प्रातिपदिकस्य औत्स्यात्सौ परे । अल्विधित्वे स्थानिवत्त्वाभावाद् 'हल्ङ्याप्–' (सू २५२)इति सुलोपो न । सुद्यौः, सुदिवौ, सुदिवः । सुदिवम्, सुदिवौ । ३३७ **दिव उत्** ।६।१।१३१ दिवोऽन्तादेश उकारः स्यात्पदन्ते । सुद्युभ्याम् । सुद्युभिः– इत्यादि ।।**इति वान्ताः** ।। चत्वारः । चतुरः । चतुर्भिः। चतुर्भ्यः । चतुर्भ्यः । ३३८ **षट्चतुर्भ्यश्च** । ।७।१।५५। षट्संज्ञकेभ्यश्चतुरश्च परस्यामो नुडागमः । स्यात् । णत्वम्, द्वित्वम् । चतुर्ण्णाम् ।

---

लोकन्यायसिद्ध्या सन्निपातपरिभाषया न परस्परमाम्नुमोर्विरोध इति। वस्तुतस्तु उवर्णात्परस्सन् आम्भवति अवर्णात्परस्सन्नुम्भवतीति परस्परं विभिन्नविषयत्वेन न बाध्यबाधकभावं प्राप्नुत इति बाध्यबाधकभावशङ्कैवात्रायोग्या ।

6. **अनडुच्छब्दस्य** सप्तमीबहुवचने अनडुह् सु वसुस्रंस्विति दत्वं चर्त्वं अनडुत्सु। न चात्र सावनडुह इति नुम् शङ्क्यः। तत्र साविति प्रथमैकवचनस्यैव गृहीतत्वात्। किञ्च आदित्यधिकारादवर्णात्परस्सन् नुम्विधीयत इति सप्तमीबहुवचनस्य असर्वनामस्थानत्वेन आम एवाभावात्कथं वा नुमः प्रसक्तिरत्र। अतश्च साविति न सप्तम्येकवचनग्रहणम्।

7. सान्तेति किं विद्वान्। विदेर्वसुः विद्वन्। उगिदचामिति नुम्। हल्ङ्यादिलोपः। सर्वनामस्थाने चेत्युपधादीर्घः। विद्वान् । यद्वा–विद्वन् स् हल्ङ्यादिलोपात्परत्वेन सान्तमहतस्संयोगस्येति नोपधाया दीर्घः। विद्वान् स् । पश्चाद्धल्ङ्यादिलोपः । विद्वान्।वस्वन्तस्य दस्स्यात्पदान्त इत्युक्तौ नकारस्य दत्वं स्यात्। अतस्सान्तेति। न ह्ययं सान्तवस्वन्तः, किन्तु नान्तवस्वन्त एवेति न दोष इति सान्तमहत इति सूत्रे सान्तग्रहणन्तु विद्वानित्यत्र निरर्थकमपि अजरांसि इत्यादिसिद्ध्यर्थमावश्यकमिति वेद्यम्।

8. **सहेस्साडस्सः,** तुरासाह्। होढः जश्त्वं तुरासाड् मूर्धन्यादेशः चर्त्वम् तुराषाट्। साड्रूपस्येति किम् ? तुरासाहौ । सहेरिति किम् ? सडस्य अपत्यं साडिः । स इति किम् ? अलोन्त्यस्येत्यन्त्यस्य माभूत्।

३३९ **रोः सुपि** । ।८।३।१६। सप्तमीबहुवचने रोरेव विसर्जनीयो नान्यरेफस्य। षत्वम् । षस्य द्वित्वे प्राप्ते । ३४० **शरोऽचि** । ।८।४।४९। अचि परे शरो न द्वे स्तः । चतुर्षु । प्रियचत्वाः । हे प्रियचत्वः। प्रियचत्वारौ । प्रियचत्वारः । गौणत्वे तु नुट् नेष्यते । प्रियचतुराम् । प्राधान्ये तु स्यादेव । परमचतुर्णाम् ।। **इति रेफान्ताः** ।। कमलं कमलां वा आचक्षाणः कमल्, कमलौ, कमलः । षत्वम् कमल्षु ।। **इति लान्ताः** ।। ३४१ **मो नो धातोः** । ।८।२।६४। मान्तस्य धातोर्नः स्यात्पदान्ते । नत्वस्यासिद्धत्वान्नलोपो न । प्रशाम्यतीति प्रशान्, प्रशामौ, प्रशामः । प्रशान्भ्यामित्यादि । ३४२ **किमः कः** । ।७।२।१०३। किमः कः स्याद्विभक्तौ । अकच्सहितस्याप्ययमादेशः कः, कौ, के । कम्, कौ, कान् इत्यादि सर्ववत् । ३४३ **इदमो मः** । ।७।२।१०८। इदमो मस्य मः स्यात्सौ परे । त्यदाद्यत्वापवादः । ३४४ **इदोऽय् पुंसि** । ।७।२।१११। इदम इदोऽय् स्यात्सौ पुंसि । सोर्लोपः । अयम् । त्यदाद्यत्वं पररूपत्वं च । ३४५ **दश्च** । ।७।२।१०९। इदमो दस्य मः स्याद्विभक्तौ। इमौ, इमे । त्यदादेः संबोधनं नास्ति–इत्युत्सर्गः ३४६ **अनाप्यकः** । ।७।२।११२। अककारस्येदम इदोऽन् स्यादापि विभक्तौ । आप्–इति टा इत्यारभ्य सुपः पकारोण प्रत्याहारः । अनेन ।

---

9. गौणत्वे तु नुम् नेष्यते, चतुरर्थमात्रबोधकचतुर्शब्दात्परस्यामो नुट् स्यादिति षट्चतुर्भ्यश्चेति सूत्रे बहुवचननिर्देशादर्थप्राधान्यस्य विवक्षितत्वेन प्रियचतुर्शब्दोत्तरचतुर्शब्दस्य बहुव्रीहेरन्यपदार्थप्राधान्येन न चतुरर्थमात्रबोधकत्वमिति चतुरर्थमात्रबोधकचतुश्शब्दात्परत्वमामो नास्त्येवेति नण्नस्यादिति। परमचतुर्णामिति तत्पुरुषे तु स्यादेव । चतुर्शब्दस्य चतुरर्थमात्रबोधकत्वात्।

10. **कमल्षु,** इण्कोरित्यत्र इणः परणकारेण प्रत्याहारात्। लस्यापीण्त्वस्य सत्त्वेन ततः परस्य सस्य मूर्धन्यादेशः।

11. किमः कः। अनेकाल्त्वात्सर्वादेशः। विभक्ताविति किम्। किङ्कर इत्यादिषु नपुंसके स्वमोश्चकादेशो माभूदिति। इम इति सूत्रितेऽपि त्यदादीनाम इत्यनुवृत्तौ क इति रूपसिद्धिर्भवतीत्ययं कादेशो व्यर्थीभूय अकच्सहितस्यापि किमोऽयमादेश इति। ज्ञापयतीति मनसि कृत्वा आह अकच्सहितस्यामादेश इति। इष्यते ह्यकच्सहितस्यापि किमः क इति रूपं न तु कक इति।

12. **त्यदादीनां संबोधनं** नास्तीत्युत्सर्गः। प्रचुरप्रयोगादर्शनात्त्यदादीनां प्रायशस्संबोधनं नास्तीति भावः। उत्सर्गो नाम सामान्यवचनम्। प्रायो वचनमिति यावत्। तेन

३४७ **हलि लोपः** । ।७।२।११३। अककारस्येदम इदो लोपः स्यादापि हलादौ । **'नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे'** (वा ४९०) ३४८ **आद्यन्तवदेकस्मिन्** । ।१।१।२१। एकस्मिन्क्रियमाणं कार्यमादाविवान्त इव च स्यात् । आभ्यम् ।३४९ **नेदमदसोरकोः** । ।७।१।११। अककारयोरिदमदसोर्भिस ऐस् न स्यात् । एत्वम्, एभिः । अत्वम्, नित्यत्वाद् ङेः स्मै, पश्चाद्धलि लोपः, अस्मै, आभ्याम्, एभ्यः । अस्मात् आभ्याम्, एभ्यः । अस्य, अनयोः, एषाम् । अस्मिन्, अनयोः, एषु । ककारयोगे तु अयकम्, इमकौ, इमके । इमकम्, इमकौ, इमकान् । इमकेन, इमकाभ्याम्, इमकै इत्यादि । ३५० **इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ** । ।२।४।३२। अन्वादेशविषयस्येदमोऽनुदात्तोऽशादेशः स्यात्तृतीयादौ । अश्वचनं साकच्कार्थम् ।

---

क्वचित्संबोधनस्य सत्त्वमङ्गीक्रियते। अत एव हे स– भवन्नच्युत इति भाष्ये तद्भवच्छब्दयोः संबोधनं भणितम्।

13. **अनेन ।** इदं टा। त्यदाद्यत्वं । इद अ टा पररूपं इदटा। अनास्यकः। अन–टा।टाङसि ङसामिनात्स्याः। अन इन गुणः। अनेन आभ्याम्। इदं भ्यां । त्यदाद्यत्वं, पररूपं, हलि लोपः । आभ्यां सुपि चेति दीर्घः। आभ्याम् । नन्वत्र हलि लोप इति इदो लोपस्य अलोऽन्त्यस्येति इदो दकारमात्रस्यैव भाव्यत्वेन आभ्यामिति न रूपसिद्धिरित्याशङ्क्याह। नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकार इति। इदमोऽर्थवत्वेऽपि इदोऽनर्थकत्वेन तत्र अलोन्त्यस्येति न प्रवर्तते, किन्तु निर्दिश्यमानस्यादेशा भवन्तीति परिभाषया इदस्सर्वस्यापि लोप एव ननु एवं हलि लोपेन इदो लोपे आभ्यामिति स्थिते सुपि चेति दीर्घो न प्रवर्तत एव। अतोऽङ्गस्येत्येकस्मिन्नकारे अदन्ताङ्गत्वाभाावादित्याशङ्क्याह सूत्रकारः। आद्यन्तवदेकस्मिन्निति। ननु व्यपदेशिवद्भावेनैवैतत्सिद्धौ किमनेनेति चेन्मैवम्। व्यपदेशिवद्भावस्यापि एतत्सूत्रेणैव सिद्धेः। अतएव भाष्ये आद्यन्तवदेकस्मिन्निति सूत्रं व्यपदेशिवदेकस्मिन्निति भणितम्।

14. **नेदमदसोरकोः** आभिरिति स्थिते, बहुवचने झल्येदिति परत्वेन एत्वे प्राप्ते, अतो भिस ऐसिति अपवादत्वेन ऐस्प्राप्तस्स अनेन निषिध्यत इति बाधकबाधनार्थमिदं सूत्रम्।

15. **अस्मै।** इदं ङे त्यदाद्यत्वम्, पररूपत्वं इदं ङे, अत्र सर्वनाम्न स्मै इति स्मायादेशः प्राप्तः। अनास्यत इति अनादेशश्च प्राप्तः। परत्वादनादेशे नित्यत्वात् ङेस्मै अनादेशे कृतेऽप्यकृऽतेपि स्मायादेशस्य प्राप्तिसद्भावात्। कृताकृतप्रसङ्गित्वरूपं नित्यत्वमस्तीति इद स्मै इति स्थिते अनादेशः प्राप्तः, हलिलोपश्च प्राप्तः। परत्वादनवकाशत्वाच्च अनादेशं बाधित्वा हलि लोपः। अस्मै।

16. ककारयोगे तु अयकं सर्वनाम्नामकच्, प्राक्टेरिति ङदमष्टेरनुः, प्रागकचि प्रत्यये चकारस्य इत्संज्ञया लोपे इदक अम् पररूपः इदकं इदमोमः। इदोय् पुंसि अयकम्।

३५१ **द्वितीयाटौ स्स्वेनः** । ।२।४।३४। द्वितीयायां टौसोश्च परत इदमेतदोरेनादेशः स्यादन्वादेशे । किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः । यथा 'अनेन व्याकरणमधीतम् एनं छन्दोऽध्यापय' इति। अनयोः पवित्रं कुलम् एनयोः प्रभूतं स्वम् इति । एनम्, एनौ, एनान् । एनेन एनयोः। **इति मान्ताः ।।** गणयतेर्विच्। सुगण्, सुगणौ, सुगणः। सुगण्ठ्सु, सुगणट्सु सुगण्सु । क्विप् ' अनुनासिकस्य क्विझलोः ( सु२६६६) इति दीर्घः । सुगाण्, सुगाणौ, सुगाणः । सुगाण्ठ्सु, सुगाणट्सु, सुगाण्सु ।। **इति णान्ताः** ।। परत्वादुपधादीर्घः, हल्ङयादिलोपः ततो नलोपः, राजा । ३५२ **न ङिसंबुद्ध्योः** (८-२-८) नस्य लोपो न स्याद् ङौ संबुद्धौ च । हे राजन् । ङौ तु छन्दस्युदाहरणम्, सुपां सुलुक् (सू३५६१) इति ङेर्लुक्,

---

17. इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ अनेकाल् शित्सर्वस्येति शित्वात्। सर्वादेशोऽयमकारः। इदं भ्यामिति स्थिते अश् अभ्यां, सुपि च, आभ्यामिति रूपं । ननु किमनेन सूत्रेण त्यदाद्यत्वपररूपहलिलोपैराभ्यामिति सिद्धेरिति चेत्। सुपि चेति दीर्घात्प्राग्विद्यमानस्य अकारस्यानुदात्तत्वार्थमित्यवेहि। ननु तर्हि अश् इति मास्तु त्यदादीनामः इतीदमः प्राप्तोऽकारोऽनुदात्तस्स्यादित्यर्थेच्छिष्टस्याप्यकारस्य अनुदात्तत्वसिद्धेः, पररूपे हलि लोपे च त्यदादीनाम इत्यस्यैव शिष्टत्वात् इत्याशङ्कायामाह। अश् वचनं साकच्कार्थमिति अन्वादेशः। साकच्कस्य इदमः भ्यामादिप्रत्यये परतः इमकाभ्यामित्यादि मा भूत्, आभ्यामित्येव स्यादिति भावः।

18. **द्वितीयाटौ स्वेनः** इदं टौसोः। पूर्वसूत्रात्प्राप्तस्य अशोऽपवादार्थं सूत्रम्। द्वितीयायान्तु त्यदाद्यत्वादीनां च बाधनार्थं अनेकाल्त्वात्सर्वादेशः।

19. **अन्वादेशः** । अनुपुनरादिश्यते उपादीयत इति अन्वादेशः। कस्मैचिदर्थाय गृहीतस्य पुनरन्यस्मा अर्थाय ग्रहणमित्यर्थः। अर्थं नाम क्रियाप्रयोजनं वा प्रसक्तिर्वा वस्तुर्वा इदमोन्वादेश इति सूत्रे तृतीयादावित्यपनीय हल्यसौ इति न्यासः कर्तव्यः। तथावे सौ परतो नाश् अहमित्युक्तत्वात्। औङादिषु शस्पर्यन्तेषु परतो न हलीत्युक्तत्वात् टौसोस्तु वक्ष्यमाणसूत्रेणेणादेशः। ङे ङसि ङसां ङेश्च स्मै स्मात् स्य स्मिन्नित्यादेशानां कृतत्वेन हल्त्वात्तेषु परतोऽश् भ्यामादिषु स्वत एव हल्त्वादश् आमश्च सडागमेन हल्त्वात्तस्मिन्परतोऽप्यश्।

20. **सुगण् सु।** ननु सुगण् सु इति स्थिते, ङ्णोः कुक्टुक्शरीति णकारस्य टुगागमः। कित्वादाद्यन्तौ टकितावित्यन्त्ये भवति। सुगण् ट् सु झलाञ्जशोन्त इति स्वादिष्विति पदसंज्ञा वति सुगण् ट् इत्यत्र टकारस्य अन्त्यत्वेन पदान्तत्वाज्जश्त्वम् प्राप्तं सन्न भवति। परत्वेन कुक्टुकोरसिद्धत्वात् । अतो डस्सि धुडिति धुट्त्वन्न । सुगण् ट् सु इत्येकं रूपं सिद्ध्यत्येव। कुक्टुकोर्वैकल्पिकत्वेन सुगण् सु इत्यपरमपि

निषेधसामर्थ्यात्प्रत्ययलक्षणम्, 'परमे व्योमन्' । **'ङावुत्तरपदे प्रतिषेधो वक्तव्यः'** (वा ४७८५) ङौ विषये उत्तरपदे परे 'न ङिबुद्ध्योः' इत्यस्य निषेधो वाच्य इत्यर्थः । चर्मणि तिला अस्य चर्मतिलः, ब्रह्मनिष्ठः । राजानौ, राजानः । राजानम्, राजानौ । 'अल्लोपोऽनः' (सू २३४), श्चुत्वम्, न चाल्लोपः स्थानिवत्, पूर्वत्रासिद्धे तन्निषेधात्, नापि बहिरङ्गतया असिद्धः, यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति श्चुत्वस्यासिद्धतयान्तरङ्गाभावेन परिभाषाया अप्रवृत्तेः, जञोर्ज्ञः, राज्ञः । राज्ञा ।

---

रूपं सिद्ध्यत्येव। यत्पुनरुक्तं कैमुद्याम् सुगण् सु इति तस्य सिद्धिः कथमिति चेत् लेखकप्रामादिकमेव।

21. **सुगाण् सु** । अत्रापि टुगागमे सति सुगाण् ट् सु इत्यपि रूपमपरं सिद्ध्यति।

22. **परत्वादुपधादीर्घः।** राजन् सु इति स्थिते हल्ङ्यादिलोपः प्राप्तः। सर्वनामस्थाने चासंबुद्धाविति उपधादीर्घश्च प्राप्तः। उभयोर्मध्ये सर्वनामस्थान इत्यस्य परत्वात्प्रथमं उपधादीर्घः, पश्चात्सुलोपः। ननु उपधादीर्घेकृऽतेऽप्यकृतेऽपि सुलोपस्य प्रसंगित्वेन नित्यत्वात्प्रथममेव हल्ङ्यादिलोपस्स्यात्। कृते तु पूर्वं सुलोपे सर्वनामस्थानपरकत्वाभावेन उपधादीर्घो न स्यात्। प्रत्ययलक्षणेन सर्वनामस्थानपरकत्वं यद्यानीयते तर्हि न लुमतेति निषेधः। नङि संबुद्ध्योरिति निषेधसामर्थ्यात् यदि प्रत्ययलक्षणं तर्हि संबुद्धावेव तत्स्यात्। संबुद्धिग्रणस्य तावतैव सार्थत्वात्। तस्मात् राजन् नलोपः। राज इत्येवरूपं स्यान्न तु राजेति। न च अबह्वाश्रयत्वेन अन्तरङ्गत्वादुपधादीर्घ इति वाच्यम्। विभक्तिनिरपेक्षत्वेन विभक्तिकार्यत्वेन च सुलोपस्यैवान्तरङ्गत्वाच्चेन्मैवम्। असंबुद्धावित्येतन्निरवकाशतया अपवादत्वेन सुलोपात्प्राक् प्रसज्यते। तथा हि – नान्तस्योपधाया दीर्घस्स्यात्सर्वनामस्थान इत्यनेन सौ परतो नान्तस्योपधाया यदि दीर्घो भविष्यति, तर्हि संबुद्धिसौ परतो न स्यादिति निषेधो युज्यते। प्रकृते तु सौपरतः, सोः प्रथमत एव लुप्तत्वेन उपधादीर्घप्रसक्तिरेव नास्तीति कथन्तन्निषेधः। संबुद्धिसौ युज्यते। अतः असंबुद्धौ इत्येतद्व्यर्थतया निरवकाश सन्निरवकाश मूलकापवदतामेत्य सुलोपात्प्रवर्तते प्रागिति। अपवादत्वादुपधादीर्घ इति कौमुद्यां लेखनीयमिति। ननु नङिसंबुद्ध्योरिति सूत्रे संबुद्धिग्रहणवशाद्ज्ञापितेन न लुमतेति निषेधस्यानित्यत्वेन प्रत्ययलक्षणस्यात्रासंभवादन्तरङ्गत्वेन सत्यपि सुलोपे सावुपधादीर्घस्संभवत्येवेति असंबुद्धावित्यस्य न वैयर्थ्यम्। येन त्वदुक्तरीत्या स्यादपवादत्वमिति चेत्तर्हि विप्रतिषेधे परं कार्यमिति परत्वादित्यस्य परविप्रतिषेधादित्यर्थो वाच्यः। अत एव विप्रतिषेधसूत्रे परशब्दस्य इष्टत्वमर्थः प्रोक्तः। तथा च यत्परं (भवितुं इष्टं तत्स्यादित्यर्थात् क्वचित्पूर्वविप्रतिषेधेन नुमित्याद्युक्तयस्संगच्छन्ते।

23. **नङिसंबुद्ध्योः,** ङौ तु छन्दस्युदाहरणम् । ङौ परतः पूर्वस्य यचिभमिति भत्वेन (भत्वस्य पदत्वापवादत्वात्) न लोपः प्रातिपदिकान्तस्येत्यनेन नलोपप्रसक्तिरेव नास्ति। प्रातिपदिकसंज्ञकं यत्पदमित्युक्ते अभावात् अतो ङाविति निरर्थकमित्याशङ्क्याह–ङौ तु

३५३ **नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति** । ।८।२।२। सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धः, नान्यत्र 'राजाश्वः' इत्यादौ । इत्यसिद्धत्वादात्वमेत्त्वमैस्त्वं च न । राजभ्याम्, राजभिः । राज्ञे, राजभ्यः । राज्ञः, राज्ञोः, राज्ञाम् । राज्ञि, राजनि । प्रतिदीव्यतीति प्रतिदिवा, प्रतिदिवानौ, प्रतिदिवानः । अस्य भविषयेऽल्लोपे कृते–

---

छन्दस्युदाहरणमिति। छन्दसि तु सुपां सुलुगिति सूत्रात् ङेर्लुक्यपि निषेधसामर्थ्यात्प्रत्ययलक्षणेन ङिपरकत्वात् अयस्मयादीनि छन्दसीति अयस्मयादित्वेन व्योमन्नित्यस्य संज्ञाद्वयकार्यभाक्त्वस्यौचित्यादस्त्येव पदत्वेन नलोपप्रसक्तिरिति।

24. **ङावुत्तरपदे प्रतिषेधो वक्तव्यः।** ङौ नलोपो न स्यादित्यस्य ङेरुत्तरपदे परतः प्रतिषेधो वक्तव्य इत्यर्थः। नलोपस्स्यादिति यावत्।

25. **राज्ञः**। राजन् शस् अल्लोपो नः। राज् न् अस् ।अत्र स्तोश्चुना श्चुरिति नकारस्य जकारयोगेन श्चुत्वे कर्तव्ये अल्लोपः स्थानिवत् । न च स्थान्यवयवाल्मात्रवृत्तिर्यो धर्मः, प्रकृते अकारे विद्यमानोऽच्त्वरूपधर्मः तत्पुरस्कारको यो विधिः श्चुत्वनिषेधरूपः। तस्मिन् कर्तव्ये न स्थानिवदिति अनल्विधाविति निषेधात्। स्थानिवत्त्वाभावो न शङ्क्य इति वाच्यम् ।अचः परस्मिन्निति स्थानिवद्भावात् शस्निमित्तोऽजादेशः अल्लोपरूपस्थानिवत्। स्थानिभूतादचः पूर्वस्मान्निमित्तभूताज्जकारात्परस्य नकारस्य श्चुत्वरूपे कार्ये कर्तव्य इति। अत्र आह पूर्वत्रासिद्धे तन्निषेधादिति। पूर्वत्रासिद्धये कार्ये कर्तव्ये स्थानिवद्भावनिषेधात्। प्रकृतश्चुत्वरूपकार्यस्य त्रैपादिकत्वेन पूर्वत्रासिद्धीयत्वान्न तस्मिन् कार्ये कर्तव्ये अल्लोपस्य स्थानिवद्भाव इति भावः। ननु अल्लोपस्य बह्वाश्रयत्वेन बहिरङ्गतया अन्तरङ्गे श्चुत्वरूपे कार्ये कर्तव्ये बहिरङ्गमल्लोप इत्येतदसिद्धं स्यादिति श्चुत्वं न स्यादित्याशङ्क्याह – नापि बहिरङ्गतयाऽसिद्ध इति । यथोद्धेशपक्ष इत्यादि। यथोद्धेशं संज्ञापरिभाषम्, उद्धेशमनतिक्रम्यम्, यथोद्धेशम् उद्देश उपदेशदेशः। संज्ञापरिभाषयोस्संज्ञापरिभाषा इति परिभाषाणां यथोद्देशत्वपक्षे यत्रेयं परिभाषया उपदिष्टा वाह ऊठिति सूत्रे ज्ञापिता। अतस्तद्देशत्वमेवास्या इति इयं परिभाषा उवाह ऊठ्सूत्रवत्। षष्ठाध्यायचतुर्थपादस्थैवेति षाष्ठ्येव पूर्वत्रासिद्धमिति सपादसप्ताध्यायीं प्रति त्रिपाद्या असिद्धत्वेन षाष्ठीमेनां परिभाषाम्प्रति श्चुत्वस्यासिद्धत्वादियं श्चुत्वविषये न प्रवर्तत एवेति, कथं श्चुत्वस्यान्तरङ्गत्वेन अल्लोपस्य असिद्धत्वम्? अयम्भावः। श्चुत्वस्यान्तरङ्गत्वे सत्यपि असिद्धं बहिरङ्गमन्तरङ्गे इति परिभाषा यदि श्चुत्वं विषयीकुर्यात्तर्हि श्चुत्वदृष्ट्या अल्लोपस्यासिद्धत्वं स्यात्। परन्तु परिभाषादृष्ट्या श्चुत्वस्यैवासिद्धत्वेन श्चुत्वं कथं वा परिभाषाविषयमिति। अन्तरङ्गपरिभाषाया अविषयत्वेन श्चुत्वेन तस्मिन् कार्ये कर्तव्ये बहिरङ्गस्याल्लोपस्यासिद्धत्वमिति अन्तरङ्गे श्चुत्वे कर्तव्ये बहिरङ्गमल्लोपोऽसिद्धमिति श्चुत्वं स्वविषयीकर्तुं हि परिभाषा प्रवर्तेत। एतद्दृष्ट्या श्चुत्वस्यैवासिद्धत्वेन कथम्पुनस्तद्विषयीकरणं परिभाषया इति फलितार्थः।

26. **जञोर्ज्ञः**। जञोर्योगे ज्ञ इत्यक्षरं स्यात्। न चैतदर्थं सूत्रमस्त्विति वाच्यम्।

३५४ **हलि च** । ८।२।७७। रेफवान्तस्य धातोरुपधाया इको दीर्घः स्याद्धलि । न चाल्लोपस्य स्थानिवत्त्वम् । दीर्घविधौ तन्निषेधात् । बहिरङ्गपरिभाषा तूक्तन्यायेन न प्रवर्तते । प्रतिदीव्नः, प्रतिदीव्ने। इत्यादि । यज्वा, यज्वानौ, यज्वानः । ३५५ **न संयोगाद्वमन्तात्** । ६।४।१३७। वकारमकारान्तसंयोगात्परस्यानोऽकारस्य लोपो न स्यात् । यज्वनः । यज्वना, यज्वभ्याम्, इत्यादि । ब्रह्मणः । ब्रह्मणा, ब्रह्मभ्याम् इत्यादि । ३५६ **इन्हन्पूषार्यम्णां शौ** । ।६।४।१२। एषां शावेवोपधाया दीर्घः, नान्यत्र । इति निषेधे प्राप्ते– ३५७ **सौ च** । ।६।४।१३। इन्नादीनामुपधाया दीर्घः स्यादसंबुद्धौ सौ परे । वृत्रहा, हे वृत्रहन् । 'एकाजुत्तरपदे–' (सू ३०७) इति णत्वम्, वृत्रहणौ, वृत्रहणः । वृत्रहणम्, वृत्रहणौ ।

---

ञकारेपि जञोरक्षरयोरेवावयवत्वात्।

27. **न लोपस्सुप्स्वरेति।** ननु राजाश्व इत्यत्र राजन् अश्वः नलोपः प्रातिपदिकान्तस्य राजा अश्वः अकस्सवर्णे दीर्घः राजाश्वः। अत्र सवर्णदीर्घं प्रति त्रैपादिकत्वेन नलोपस्य पूर्वत्रासिद्धमिति असिद्धत्वान्न सवर्णदीर्घः इत्यतोऽयं सूत्रारंभः। नलोपस्य पूर्वत्रासिद्धमित्यसिद्धत्वं यदि तर्हि सुप्स्वरादिष्वेवेति। नियमेन दीर्घादिष्वसिद्धत्वाभावाद्राजाश्व इत्यादौ नलोपस्य नासिद्धत्वमिति द्वन्द्वान्ते श्रूयमाणं प्रत्येकं संबद्ध्यत इति न्यायेन विधिशब्दस्सुबादिं प्रत्येकमन्वेति। तेन सुब्विधौ स्वरविधावित्याद्यर्थो लभ्यते। सुब्विधौ स्वरविधावित्याद्यर्थो लभ्यते। सुब्विधिश्च सुपि परतः पूर्वस्य विधिः सुपो विधिश्च राजभिरित्यत्र अतो दीर्घो यञि सुपि चेति बहुवचने, झल्येदिति विधिद्वयं सुपि परत इत्यस्य उदाहरणम्। अतो भिस ऐसिति सुपो विधेरिति वेद्यम्, स्वरादिविधिषूदाहरणानि तत्त्वबोधिन्यां प्रतिपादितानीति मया विरमितम्।

28. **प्रतिदिवा।** दिवुक्रीडादिष्विति धातोः प्रतिपूर्वस्य कनिन् प्रत्ययः। कनिनः ककारेकारनकाराणां लशक्वतद्धित इति, उपदेशेऽजनुनासिक इति, हलन्त्यमिति चेत्संज्ञया लोपः। अन् इति शिष्यते। प्रतिदिवन्शब्दः। कन् इत्येवत एवोक्तौ हलन्त्यमिति नकारलोपस्स्यादतो द्वितीयनकार आवश्यक उच्चारणार्थ त्विकारः।

29. **इन्हन् पूषार्यम्णां** औ, जश्शशोश्शिरिति शौ परत एव इन्नन्तानां हनादीनाञ्च सर्वनामस्थाने चासंबुद्धाविति दीर्घः। नान्यत्रेति नियमार्थमिदं सूत्रम् औङश्शीति शौ परत इति न भ्रमितव्यम्। औङश्श्यां असर्वनामस्थानत्वेन सर्वनामस्थाने चेति दीर्घप्राप्तेरेवाभावात्। न हीदं विधिसूत्रम् । उादहरणानि तु नपुंसकेषु इन् वाग्मीनि, हन् बहुवृत्रहाणि पूषन् बहुपूषाणि अर्यमन् बह्वर्यमाणि इति ।

30. **वृत्रघ्नः** वृत्रहन् शस् । अल्लोपो नः । वृत्रह्न् । अन् नकारापरकत्वाद्धोहन्तेरिति कुत्वेन घः। वृत्रघ्नः। ननु अत्र एकाजुत्तरपद इति, कुमति चेति च णत्वं प्राप्तं

**३५८ हो हन्तेर्ञ्णिन्नेषु** । ।७।३।५४। ञिति णिति च प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वं स्यात् । ३५९ **हन्तेः** ।८।४।२२। उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णत्वं स्यात् । प्रहण्यात् । ३५९ **अत्पूर्वस्य** । ।८।४।२२। हन्तेरत्पूर्वस्यैव नस्य णत्वम्, नान्यस्य । प्रघ्नन्ति । योगविभागसामर्थ्याद् **'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा'** (प ६२) इति न्यायं बाधित्वा 'एकाजुत्तरपदे–' (सू ३०७) । इति णत्वमपि निवर्त्यते । नकारे परे कुत्वविधिसामर्थ्यादल्लोपो न स्थानिवत्, वृत्रघ्नः । वृत्रघ्ना इत्यादि । यत्तु वृत्रघ्न इत्यादौ वैकल्पिकं णत्वं माधवेनोक्तम्, तद्भाष्यवार्तिकविरुद्धम् । एवं शार्ङ्गिन्, यशस्विन्, अर्यमन्, पूषन् । यशस्विन्निति विन्प्रत्यये इनोऽनर्थकत्वेऽपि 'इन्हन्–' (सू ३५६) इत्यत्र ग्रहणं भवत्येव,

---

अनन्तरस्य विधिर्वा प्रतिषेधो वेति न्यायात्। हन्तेरत्पूर्वस्येति सूत्रं स्वसन्निहितं कुमति चेति णत्वं कर्मबाधितम्। कथम्पुनरेकाजुत्तरपद इति णत्वं बाधेत? अतस्स्यादेवात्र एकाजिति णत्वमित्याशङ्क्याह। योगविभागसामर्थ्यादिति हन्तेरत्पूर्वस्येत्येकस्यैव सूत्रस्य हन्तेः। अत्पूर्वस्य इति योगविभागकरणसामर्थ्यात्। स्यादेतत्। योगविभागाकरणे तु हन्तेरत्पूर्वस्येति सूत्रे उपसर्गादित्यस्याननुवृत्तौ अत्पूर्वस्य हन्तेर्नस्य णस्स्यादित्यर्थः सिद्ध्यति। अयं कुमति चेति एकाजुत्तरपदे ण इति च सूत्रद्वयप्राप्तस्य हन्तेर्णादेशणत्वस्य अत्पूर्वत्वे नियमनाय नालमनन्तरस्येति न्यायात् । किन्तु कुमति चेति णत्वस्यैव अस्मिन्मते प्रहण्यादिति न सिद्ध्येत् । न ह्यत्रैकाजुत्तरपद इति णत्वं भवेत्। असमासत्वात् । न वा नेर्गदनदेति प्रणिहन्तीति नेरेव तत्र णत्वविधानात्। अत उपसर्गादित्यस्यानुवृत्तिर्विधेया। तथा चायमर्थः उपसर्गस्थान्निमित्तात्परस्य हन्तेरत्पूर्वस्य नस्य णत्वं स्यादिति। अस्मिन्नर्थे तु उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य यदि णत्वं तर्ह्यत्पूर्वस्यैवेति नियमः। अयञ्च अनन्तरस्येति न्यायेन प्रघ्नन्तीत्यादौ कुमति चेति प्राप्तं णत्वमेव बाधते। न तु पुनः प्रघ्न इत्यादावेकाजुत्तरपद इति णत्वं बाधितुं शक्नोति। न च नियमस्य प्राप्तिपूर्वकतया उपसर्गस्थान्निमित्ताद्धन्तेर्नस्य णत्वप्राप्तिरेव नास्तीति कथं नियम इति वाच्यम् । नियमसूत्रमेव प्रथमं णत्वं प्रापयित्वा पश्चान्नियमयतीति। यद्वा– अप्राप्तस्य प्राप्तावप्ययं नियम इति स्वीक्रियतां प्राप्तिस्तु नियमसामर्थ्यादेव। एवं योगविभागे कृतेऽपि अकृतेऽपि प्रहण्यात्प्रघ्नन्तीत्यादिरूपसिद्धौ समायां कोऽर्थो योगविभागेतेति योगविभगस्य एकाजुत्तरपदे ण इति णत्वस्याप्यपूर्वत्वे नियमनमर्थ इति वक्तुं युक्तम् तत्तु अनन्तरस्येति न्यायबाधनं विना न घटत इति तद्बाधनमप्यर्थ एव। अयम्भावः।

**अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदान्तविधिं प्रयोजयन्ति'** (प १७) इति वचनात् । अर्यम्णि, अर्यमणि । पूष्णि पूषणि । ३६० **मघवा बहुलम्** । ।६।४।१२८। मघवन्शब्दस्य वा तृ इत्यन्तादेशः स्यात् । ऋ इत् । ३६१ **उगिदचां सर्वनामस्थानेऽधातोः** । ।७।१।७०। अधातोरुगितो नलोपिनोऽञ्चतेश्च नुमागमः स्यात्सर्वनामस्थाने परे । उपधादीर्घः, मघवान् । इह दीर्घे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वं न भवति, बहुलग्रहणात् । तथा च 'श्वन्नुक्षन्–' (उ १५७) इति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयसिद्धिमाश्रित्यैतत्सूत्रं प्रत्याख्यातमाकरे । 'हविर्जक्षिति निःशङ्को मखेषु मघवानसौ' इति भट्टिः । मघवन्तौ, मघवन्तः । हे मघवन् । मघवन्तम्, मघवन्तौ, मघवतः । मघवता, मघवद्भ्याम् इत्यादि । तृत्वाभावे मघवा । 'छन्दसीवनिपौ च ' इति वनिबन्तं मध्योदात्तं छन्दस्येव । अन्तोदात्तं तु लोकेऽपीति विशेषः । मघवानौ, मघवानः । सुटि राजवत् ।

---

31. **अनिनस्मिन्,** ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति। गृह्यन्त इति ग्रहणानि । अन् इन् अस् मस् इत्येतानि ग्रहणानि सूत्रेषु गृहीतानि प्रत्ययस्वरूपाणि प्रत्ययग्रहणे तदन्तग्रहणमिति तदन्तविधिं अर्थवता स्वस्वरूपेण च अनर्थकेन स्वस्वरूपेण च प्रयोजयन्ति। यो विधिरर्थवदन्नन्तस्य विहितस्स निरर्थकान्नन्तस्य च भवतीति यावत्।. एवमेव इनादिषु च द्रष्टव्यम्। प्रकृते इन्नन्तस्य उदाहरणं यशस्स्वि इति। इन्हन् पूषार्यम्णां शौ चेति इन्नन्तस्य शौपरतो यो दीर्घविधिर्विहितश्शार्ङ्गी इत्यत्र। तथैव विन्नंतेऽपि यशस्विन् शब्दे इन्नन्तत्वमस्तीति सौ परतस्तस्यापि दीर्घः। यशस्वी इति।

32. **मघवान्** । मघवन् स् ,मघवत् स्, मघवन् त् स् हल्ङ्यादिलोपः संयोगान्तलोपः। प्रत्ययलक्षणेन संबुद्धिपरकत्वात्सर्वनामस्थान इति नोपधाया दीर्घः। मघवान् । सर्वत्र दीर्घे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वाद्दीर्घो दुर्लभः। नान्तप्रादिपदिकत्वाभावादित्यत आह–बहुलग्रहणान्नेति । ननु बहुलग्रहणाद्वेत्यर्थस्य लाभात्कथं पुनः दीर्घे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वं न भवतीत्यन्यस्याप्यर्थस्य बहुलग्रहणाल्लाभ इति चेदुच्यते। बहूनर्थान् लातीति बहुलमिति व्युत्पत्त्या बहुलग्रहणस्य बह्वर्थबोधकत्वमुचितम् तथा च "क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेवे" ति। विकल्पार्थबोधनस्य अन्यार्थबोधनस्य च बहुलपदं शक्तमिति अत्र बहुलग्रहणस्य अर्थद्वावेति। ननु विभाषार्थकत्वेन मघवा बहुलमित्यत्र बहुलपदस्य चरितार्थत्वान्न क्वचिदन्यार्थबोधनसामर्थ्यम् अस्तु वा यथाकथञ्चिदर्थद्वयवोधकत्वं तथापि दीर्घे कर्तव्ये संयोगान्तलोपो नासिद्ध इत्यमुमेवान्यार्थ बहुलपदं नियमेन कथं बोधयेदित्याशङ्क्याह। तथा चेति भाष्यकारैस्तादृशार्थग्रहणस्य ज्ञापितत्वादित्युत्तरम् । अयम्भावः प्रत्याख्यानपक्षे फलभेदे सति प्रत्याख्यानमयुक्तमिति

३६२ **श्वयुवमघोनामतद्धिते** । ।६।४।१३३। अन्नन्तानां भसंज्ञकानामेषामतद्धिते परे संप्रसारणं स्यात् । 'संप्रसारणाच्च' (सू ३३०) 'आद् गुणः' (सू ६९) मघोनः । अन्नन्तानाम् किम्–मघवतः । मघवता । स्त्रियां मघवती । अतद्धिते किम्–माघवनम् । मघोना, मघवभ्याम् इत्यादि । शुनः । शुना, श्वभ्यामित्यादि । युवन्शब्दे वस्योत्वे कृते ।३६३ **न संप्रसारणे संप्रसारणम्** । ।६।१।३७। संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न स्यात् । इति यकारस्य नेत्वम्, अत एव ज्ञापकादन्त्यस्य यणः पूर्वं संप्रसारणम्, यूनः । यूना, युवभ्यामित्यादि । अर्वा । हे अर्वन् ।

---

अयम्भावः। अत्पूर्वस्येति योगविभक्ते सूत्रे हन्तेरत्पूर्वस्य नस्य णत्वं स्यादित्यर्थ उक्तः । उदञ्च नियमसूत्रम्। कोऽसौ नियमः ? एकाजुत्तरपद इति, कुमतीति, हन्तेरिति च । हन्तेर्नस्य यदि णत्वं तर्हि अत्पूर्वस्यैवेति । न च सन्निहितत्वेन हन्तेरिति हन्तेर्नस्य यदि णत्वं तर्ह्यत्पूर्वस्यैवेति नियमोऽस्तु इति वाच्यम्। योगविभागं विनापि तादृशनियमाभावात्। अतः अत्पूर्वस्येति नियमसूत्रस्य सूत्रत्रयबाधनात् प्रघ्नः प्रघ्नन्तिप्रहण्यादिति रूपाणि सिद्ध्यन्ति। प्रकृते वृत्रघ्न इत्यत्र हन्तेरिति प्राप्त्यभावेऽपि एकाजिति कुमति चेति च सूत्राभ्यां णत्वस्य प्राप्तावपि अत्पूर्वस्येति नियमाण्णत्वम् योगविभागेऽसति तु कुमति चेति णत्वस्य निमित्तादपि एकाजुत्तरपद इति णत्वं स्यादेवेति बोद्ध्यम्।

फलभेदाभाव आवश्यकः प्रकृते तु प्रत्याख्यानपक्षे मघशब्दान्मतुपि मस्य वत्त्वेन मघवत्। अत्वसंत्वस्य चाधातोरिति अत्वन्तत्वेन उपधादीर्घः । मघवात् उगिदचामिति नुम् संयोगान्तलोपः मघवा । अप्रत्याख्यानपक्षे तु संयोगान्तलोपस्यासिद्धत्वेन मघवन् इति फलभेदः। न च सूत्रमतेऽपि नुमः प्रागत्वसन्त्वस्येति दीर्घः कर्तव्य इति वाच्यम्। उभयथापि तृप्रत्ययस्य ऋपरस्य इत्वेन लोपे। मतुप् प्रत्ययस्य उपइत्संज्ञया लोपे च मघवत् इति शब्दरूपस्य लब्धत्वेऽपि एकंत्रन्तमन्यदत्वन्तमिति त्रन्ते अत्वन्तत्वाभावान्नात्वसन्त्वस्येति दीर्घः। अत एव अत्वन्तस्येति सोकारानुबन्धकमुक्तम् । अन्यथा तान्तस्येति अदन्तस्येति वा ब्रूयात्। अतः भाष्यकाराणां सूत्रप्रख्याने सूत्रमते च फलभेदाभावसंपादनाय कोऽपि भावो वर्णनीयः। स च दीर्घे कर्तव्ये संयोगान्तलोपो नासिद्ध इत्येवं रुपः। कथमेवं विथार्थलाभस्तेषामासीदित्युक्तौ बहुलग्रहणादिति। अतः भाष्यकारोक्तप्रत्याख्यानमतेन बहुलग्रहणस्य तादृशार्थोनुमीयत इति–

33. **मघोनः**। मघवन् शस् । अत्राल्लोपो नः, इत्यल्लोपे प्राप्ते अल्पाश्रयत्वेन

३६४ **अर्वणस्त्रसावनञः** । ।६।४।१२७। नञा रहितस्यार्वन्नन्तस्याङ्गस्य तृ इत्यन्तादेशः स्यात्, न तु सौ । उगित्त्वान्नुम् । अर्वन्तौ, अर्वन्तः । अर्वन्तम्, अर्वन्तौ, अर्वतः । अर्वता, अर्वद्भ्याम् इत्यादि । अनञः किम्–अनर्वा यज्ववत् ।

---

अन्तरङ्गत्वात् श्वयुवेति संप्रसारणम्। मघ उ अन् अत्रापि अल्लोपो नः प्राप्तः। संप्रसारणाच्चेति पूर्वरूपं प्राप्तम् परत्वादल्लोपे अन्तरङ्गत्वात्पूर्वरूपम्। यद्वा लक्ष्ये लक्षणं सकृदेव प्रवर्तते नासकृदिति सकृद्गतिन्यायादल्लोपो न इति पुनर्न प्रवर्तत एव। अत एव कौमुद्याम् संप्रसारणाच्चेति प्रक्रियागौरवमप्युररीकृतम् अन्यथा अल्लोपे कृतेऽपि मघ उन् आद्गुणः मघोन इति रूपं सिद्ध्यत्येवेति किमर्थमिदं पूर्वरूपम्?

34. **स्त्रियां** मघवती । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति उगितोऽङ्गस्य प्रातिपदिकस्य यो नुम्विहितस्सङीबन्तादप्युगितस्स्यादिति नुमि मघवन्तीति रूपं सिद्ध्यतीति न वाच्यम्। विभक्तौ लिङ्गविशिष्टाग्रहणात्–

35. **उगिदचां** । सर्वनामस्थानेऽधातोः। उगितस्सर्वनामस्थान इति सूत्रिते धातोरप्यधातोरप्युदितो नुम् स्यात्। तेन स्रंसुधातोः क्विपि स्रत् इति न सिद्ध्येत् । उगिद्धातुत्वेन नुमि संयोगान्तलोपे च स्रन् इत्येवरूपं स्यात्, तर्हि उगितोऽधातोस्सर्वनामस्थान इत्यस्तु तथात्वे अञ्चुधातोः क्विनि प्रपूर्वत्वे प्राङ् इति न सिद्ध्येत्। प्रान् च् अनिदितां हल इति नलोपः प्राच् । उगिदचामिति नुम् । प्रान् च् संयोगान्तस्य लोपः प्रान् । क्विन्प्रत्ययस्य कुरिति कुत्वेनानुनासिको ङकारः। प्राङ्। (क्विन्तु ऋत्विग्दधृगिति सूत्रात्।) अत्र अचामित्यस्याभावे नुम्नस्यादिति प्राक् इति स्यात् । इदमङ्ग्रहणं नियमार्थं कोयन्नियमः धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति । ननु अधातोरिति अकारप्रश्लेषेण किम् धातोरित्युक्तेऽपि उगितस्सर्वनामस्थान इत्यनेन धात्वधातूभयसाधारण्येन प्राप्तो नुम् अचां धातोरित्यनेन धातोरुगितश्चेत् तर्ह्यञ्चतेरेवेति नियम्यतामिति चेदुच्यते। अधातुभूतपूर्वस्यापि नुम्यथास्यात्तदर्थमधातुग्रहणम्। अद्य धातुत्वेऽपि पूर्वमधातुत्वे नुमागम इष्टः। यथा गोमानिवाचरति गोमान्। अस्य क्विबन्तत्वेनाधुना धातुत्वेऽपि पूर्वं धातुत्वन्नास्ति। गावः अस्य सन्तीति गोमानित्यत्रेति नुमासीत् अयम्भावः धातोरित्यनेनैव पूर्वोक्तनियमासिद्धेरधातोरित्यत्राकारो व्यर्थस्सन् पूर्वकालं ज्ञापयति, तेन पूर्वं धातोर्यद्युगित्कार्यं तहर्यञ्चतेरेवेति नियमो लब्धः। वस्तुतस्तु उगितस्सर्वनामस्थाने अच इति योगविभागेन न्यासः कर्तव्यः। पूर्वसूत्रात्प्राप्तस्य नियमनमच इति । अञ्चतेरेवोपदेशिकधातुत्वेन नियमस्य सजातीयविषयत्वेन च अच इत्यनेन उगित इति नुम्। यद्यौपदेशिकधातोस्स्यात्तर्ह्यञ्चतेरेवेति नियमस्य लब्धत्वात्सर्वेष्टसिद्धिरिति। नन्वेवं नुमेव यदि नियम्यते, तर्हि उगितश्चेति ङीपि उखस्रतीति स्यात्। इष्टं तूखास्रदिति इति चेत् औपदेशिकधातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियम आश्रियताम्। तेन उगित्कार्यस्य ङीपोऽपि नियमस्संभवतीति । नन्वेवं चेत् अधातोरिति पक्षेऽपि धातोरिति पक्षे न्यासपक्षेऽपि गोमानित्यस्य औपदेशिकधातुत्वाभावाद्यथा नुमिष्टं आसीत्तथा उगितश्चेत्यनिष्टो ङीप् स्त्रियां स्यात् इति चेन्मैवम् । अधातोरिति पक्षे अङ्ग्रहणादेव धातोरिति पक्ष इव धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियमस्य लब्धत्वेन अधातोरिति विध्यर्थं औपदेशिकधातोरपि नुम्स्यादिति नुम एव विधिः अत एव

३६५ **पथिमथ्यृभुक्षामात्** । ।७।१।८५। एषामाकारोऽन्तदेशः स्यात्सौ परे । आ आत् इति प्रश्लेषेण शुद्धाया एव व्यक्तेर्विधानान्नानुनासिकः । ३६६ **इतोऽत्सर्वनामस्थाने** । ।७।१।८६। पथ्यादेरिकारस्याकारः स्यात्सर्वनामस्थाने परे । ३६७ **थो न्थः** । ।७।१।८७। पथिमथोस्थस्य न्थादेशः स्यात्सर्वनामस्थाने परे पन्थाः पन्थानौ, पन्थानः । पन्थानम्, पन्थानौ । ३६८ **भस्य टेर्लोपः** ।७।१।८८। भसंज्ञकस्य पथ्यादेष्टेर्लोपः स्यात् ।पथः पथा, पथिभ्यामित्यादि । एवं मन्थाः ऋभुक्षाः । स्त्रियां नान्तलक्षणे ङीपि भत्वाट्टिलोपः । सुपथी सुमथी नगरी । अनृभुक्षी सेना । अत्त्वं नपुंसके न भवति 'न लुमती–' (सू २६३) इति प्रत्ययलक्षणनिषेधात् । सुपथि वनम् । **'संबुद्धौ नपुंसकानां नलोपो वा वाच्यः'** (वा ४७८६) हे सुपथिन्, हे सुपथि । 'नलोपः सुप्स्वर–' (सू ३५३) इति नलोपस्यासिद्धत्वाद्ध्रस्वस्य गुणो न । द्विवचने भत्वाट्टिलोपः । सुपथी । शौ सर्वनामस्थानत्वात्सुपन्थानि । पुनरपि सुपथि, सुपथी, सुपन्थानि । सुपथा । सुपथे, सुपथिभ्यामित्यादि ।

---

धातोरिति पक्षः न्यासपक्षश्च अयुक्तः। अयं निष्कर्षः। उगिदचामिति सूत्रे उगिद्ग्रहणाद्धात्वधातूभयसाधारण्येन नुमो विधिः। अचामित्यनेन धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियमः। एतेन नियमेन अञ्चतिभिन्नानामौपदेशिकधातूनां सुब्धातूनाञ्च उगित्कार्ययोर्नुम्ङीपोर्निषेधः, अधातोरिति सुब्धातुभिन्नानामौपदेशिकधातूनां नुमो विधिः पुनरिति (बाधबाधनार्थमधातोरिति भावः अतपव कौमुद्यामङ्गृहणं नियमार्थमथातोरिति विध्यर्थमिति वक्ष्यति। (गोमानिति शब्दनिरूपणावसरे)–

36. अर्वणस्त्रसावनञः, अङ्गाधिकारीयत्वात्तदन्तग्रहणम्। अस्य मुख्योदाहरणन्तु सप्तार्वा सप्तार्वन्तौ सप्तार्वन्त इति सप्तार्वन्नित्यस्यार्वन्नित्यन्ताङ्गत्वात् अर्वन्तावित्यत्र तु तस्मिन्नेव तदन्तत्वं व्यपदेशिवद्भावेन–

37. पथिमथ्यृभुक्षामात् । आदिति तपरत्वं तत्कालग्रहणार्थम् तकारस्य हलन्तमितीत्संज्ञया लोपः। अनुनासिकत्वादिगुणानां गुणा अभेदका इति पक्षे अभेदकत्वेन आदित्यनुनासिकाकारोच्चारणेऽपि पथिन्निति नकारस्यानुनासिकत्वेन, तत्स्थाने आदिश्यमान आकारोप्यान्तरतम्यादनुनासिकस्स्यादिति । अननुनासिकाकार विथानार्थ आ आदिति प्रश्लेषः कर्तयं इति भावः। ननु अनुनासिकाकारादेशेऽपि को बाध इति चेन्मैवम् । उपदेशेऽजनुनासिक इदितीत्संज्ञया लोपस्स्यात्। ननु (विधान) उच्चारणसामर्थ्यादेव लोपो न भवेदिति किमनेनाकारप्रश्लेषेणेति चेत् तर्हि, शुद्धाकारादेशस्य इष्टत्वेन अनुनासिकाकारादेशे इष्टविघातस्स्यादिति ज्ञेयम्–

38. इतोऽत्सर्वनामस्थाने । इति दचि इति न्यासः। भस्य टेर्लोप इति मास्तु, अल्लोपो न इत्यनेनैव पथ इत्यादिरूपसिद्धेः। तथा हि पथिन् शस् इतोऽदचि। पथ्यादेरिकारस्याकारस्स्यादजादौ विभक्तौ पथन् आस् अल्लोपो नः पथः। ननु थोन्थ इति सूत्रे सर्वनामस्थानपदानुवृत्तिरावश्यकेति चेत्तस्मिन्नेव सूत्रे तदस्तु । तर्हि इतोदचि

३६५ **पथिमथ्यृभुक्षामात्** । ।७।१।८५। एषामाकारोऽन्तदेशः स्यात्सौ परे । आ आत् इति प्रश्लेषेण शुद्धाया एव व्यक्तेर्विधानान्नानुनासिकः । ३६६ **इतोऽत्सर्वनामस्थाने** । ।७।१।८६। पथ्यादेरिकारस्याकारः स्यात्सर्वनामस्थाने परे । ३६७ **थो न्थः** । ।७।१।८७। पथिमथोस्थस्य न्थादेशः स्यात्सर्वनामस्थाने परे पन्थाः पन्थानौ, पन्थानः । पन्थानम्, पन्थानौ । ३६८ **भस्य टेर्लोपः** ।७।१।८८। भसंज्ञकस्य पथ्यादेष्टेर्लोपः स्यात् ।पथः पथा, पथिभ्यामित्यादि । एवं मन्थाः ऋभुक्षाः । स्त्रियां नान्तलक्षणे ङीपि भत्वाट्टिलोपः । सुपथी सुमथी नगरी । अनृभुक्षी सेना । अत्त्वं नपुंसके न भवति 'न लुमती-' (सू २६३) इति प्रत्ययलक्षणनिषेधात् । सुपथि वनम् । **'संबुद्धौ नपुंसकानां नलोपो वा वाच्यः'** (वा ४७८६) हे सुपथिन्, हे सुपथि । 'नलोपः सुप्स्वर-' (सू ३५३) इति नलोपस्यासिद्धत्वाद्ध्रस्वस्य गुणो न । द्विवचने भत्वाट्टिलोपः । सुपथी । शौ सर्वनामस्थानत्वात्सुपन्थानि । पुनरपि सुपथि, सुपथी, सुपन्थानि । सुपथा । सुपथे, सुपथिभ्यामित्यादि ।

---

धातोरिति पक्षः न्यासपक्षश्च अयुक्तः। अयं निष्कर्षः। उगिदचामिति सूत्रे उगिद्ग्रहणाद्धात्वधातूभयसाधारण्येन नुमो विधिः। अचामित्यनेन धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियमः। एतेन नियमेन अञ्चतिभिन्नानामौपदेशिकधातूनां सुब्धातूनाञ्च उगित्कार्ययोर्नुम्ङीपोर्निषेधः, अधातोरिति सुब्धातुभिन्नानामौपदेशिकधातूनां नुमो विधिः पुनरिति (बाधबाधनार्थमधातोरिति भावः अतपव कौमुद्यामङ्गृहणं नियमार्थमथातोरिति विध्यर्थीमिति वक्ष्यति। (गोमानिति शब्दनिरूपणावसरे)–

36. अर्वणस्त्रसावनञः, अङ्गाधिकारीयत्वात्तदन्तग्रहणम्। अस्य मुख्योदाहरणन्तु सप्तार्वा सप्तार्वन्तौ सप्तार्वन्त इति सप्तार्वन्नित्यस्यार्वन्नित्यन्ताङ्गत्वात् अर्वन्तावित्यत्र तु तस्मिन्नेव तदन्तत्वं व्यपदेशिवद्भावेन–

37. पथिमथ्यृभुक्षामात् । आदिति तपरत्वं तत्कालग्रहणार्थम् तकारस्य हलन्तमितीत्संज्ञया लोपः। अनुनासिकत्वादिगुणानां गुणा अभेदका इति पक्षे अभेदकत्वेन आदित्यनुनासिकाकारोच्चारणेऽपि पथिन्निति नकारस्यानुनासिकत्वेन, तत्स्थाने आदिश्यमान आकारोप्यान्तरतम्यादनुनासिकस्स्यादिति । अननुनासिकाकार विधानार्थं आ आदिति प्रश्लेषः कर्तयं इति भावः। ननु अनुनासिकाकारादेशेऽपि को बाध इति चेन्मैवम् । उपदेशेऽजनुनासिक इदितीत्संज्ञया लोपस्स्यात्। ननु (विधान) उच्चारणसामर्थ्यादेव लोपो न भवेदिति किमनेनाकारप्रश्लेषेणेति चेत् तर्हि, शुद्धाकारादेशस्य इष्टत्वेन अनुनासिकाकारादेशे इष्टविघातस्स्यादिति ज्ञेयम्–

38. इतोऽत्सर्वनामस्थाने । इति दचि इति न्यासः। भस्य टेर्लोप इति मास्तु, अल्लोपो न इत्यनेनैव पथ इत्यादिरूपसिद्धेः। तथा हि पथिन् शस् इतोऽदचि। पथ्यादेरिकारस्याकारस्स्यादजादौ विभक्तौ पथन् आस् अल्लोपो नः पथः। ननु थोन्थ इति सूत्रे सर्वनामस्थानपदानुवृत्तिरावश्यकेति चेत्तस्मिन्नेव सूत्रे तदस्तु । तर्हि इतोदचि

'अष्टभ्यः' इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति । वैकल्पिकं चेदमष्टन आत्वम् । 'अष्टनो दीर्घात्, (३७१८) इति सूत्रे दीर्घग्रहणाज्ज्ञापकात् । अष्टौ । अष्टौ । परमाष्टौ २। परमाष्टौ अष्टाभिः । अष्टाभ्यः । अष्टाभ्यः । अष्टानाम् । अष्टासु ।आत्वभावे अष्ट अष्ट इत्यादि पञ्चवत् । गौणत्वे त्वात्वाभावे राजवत् । शसि प्रियाष्ट्नः, इह पूर्वस्मादपि विधावल्लोपस्य स्थानिवद्भावान्न ष्टुत्वम् । कार्यकालपक्षे बहिरङ्गस्याल्लोपस्यासिद्धत्वाद्वा । प्रियाष्ट्ना इत्यादि । जश्शसोरनुमीयमानमात्वं प्राधान्य एव, न तु गौणतायाम् । तेन प्रियाष्ट्नो हलादावेव वैकल्पिकमात्वम् । प्रियाष्टाः। प्रियाष्टाभ्याम् ३ प्रियाष्टाभिः । प्रियाष्टाभ्यः । प्रियाष्टाभ्यः । प्रियाष्टासु । "प्रियाष्ट्नो राजवत्सर्वं हाहावच्चपरं हलि।" ।। **इति नान्ताः** ।। भष्भावः, जश्त्वचर्त्वे, भुत्, भुद् । बुधौ २ बुधः । बुधा, भुद्भ्याम् ३। भुत्सु ।। **इति धान्ताः** ।। ३७३ **ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च** ।३।२।५९। एभ्यः क्विन् स्यात् । अलाक्षणिकमपि किञ्चित्कार्यं निपातनाल्लभ्यते । निरुपपदाद्युजेः क्विन् । कनावितौ ।

---

शकारस्येत्संज्ञायाः फलाभावाच्छस्य इत्संज्ञैव माभूत्। अतः औश् इश् इत्यादिषु शित्सु सर्वत्रापि शकारश्श्रूयतामिति यदि तर्हि अनुशतिकादिगणे इहलोकघटकीभूतमिहपदं न निष्पद्यते। उक्तरीत्या इदम इशश्शस्यापि श्रोतव्यत्वात् (इश् ह इति स्यात्) अतस्स एव इहलोकनिर्देशः इशादिशकारस्येत्संज्ञां ज्ञापयतीति । ननु तर्हि इशादिषु शकारो व्यर्थ इति चेन्मैवमनेकाल्त्वसम्पादकत्वात्–

43. **अष्टाभ्य औश्** सूत्रे अष्टाभ्य इति रूपं अष्टन आ विभक्ताविति हलादिविभक्तिपरकत्वेन अष्टनो नकारस्य (अलोन्त्यस्येति परिभाषया) आत्वे कृते निष्पन्नम् इति हेतोराह–कृताकारादष्टन इति। ननु भ्यसि प्रत्यये परतः अष्टन् शब्दस्य अकृताकारत्वं नैवेति अष्टभ्य इति रूपं कदापि नैव स्यादिति अष्टाभ्य इति निर्देशेन कथं तादृशार्थलाभ इत्याशङ्क्य, वैकल्पिकञ्चेदमष्टन आत्वमित्यादिकौमुदी।आत्वस्य वैकल्पिकत्वेन लाघवादष्टभ्य औशत्येव सूत्रयितव्ये अष्टाभ्य औशिति गुरुनिर्देशकृतवतस्सूत्रकर्तुः को भाव इत्युक्ते, कृताकारादष्टनः परयोरित्यर्थबोधनाय प्रवृत्तेरेवेत्यनुमीयते इति भावः। कृताकारादष्टनः परयोरिति वचनसामर्थ्यादेव जश्शसोरजादिविभक्त्योः परतः पूर्वस्य अष्टन आत्वम्।

44. **कार्यकालपक्ष इति।** यथोद्देशपक्षे तु राज्ञ इत्यत्रोक्तरीत्या श्चुत्व इव ष्टुत्वऽप्यन्तरङ्गपरिभाषा न प्रवर्तत इति बोध्यम्। कार्यकालं संज्ञापरिभाषमिति परिभाषाणां कार्यकालपक्षे कार्यदेशीयत्वेन यत्र ष्टुत्वादिकं तत्रैव इयं परिभाषाऽपीति, न परिभाषादृष्ट्या ष्टुत्वादेरसिद्धत्वमिति । न चात्र यथोद्देशपक्ष एवाश्रियतामिति वाच्यम्। इष्टानुरोधेन

३७४ **कृदतिङ्** । ।३।१।९३। सन्निहिते धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् । ३७५ **वेरपृक्तस्य** । ।६।१।६७। अपृक्तस्य वस्य लोपः स्यात् । 'कृत्तद्धित–' (सू १७९) इति प्रातिपदिकत्वात्स्वादयः । ३७६ **युजेरसमासे** । ।७।१।७१। युजेः स्सर्वनामस्थाने नुम्स्यादसमासे । सुलोपः, संयोगान्तलोपः५४ । ३७७ **क्विन्प्रत्ययस्य कुः** । ।८।२।६२। क्विन् प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः स्यात्पदान्ते । नस्य कुत्वेनानुनासिको ङकारः, युङ् । 'नश्चापदान्तस्य–' (सू१२३) इति नुमोऽनुस्वारः परसवर्णः तस्यासिद्धत्वात् 'चोः कुः' परे (सू ३७८) इति कुत्वं न, युञ्जौ । युञ्जः । युञ्जम् । युञ्जौ । युजः । युजा । युग्भ्याम् इत्यादि । ' असमासे' किम्३७८ **चोः कुः** । ।८।२।३०। चवर्गस्य कवर्गः स्याद् झलि पदान्ते च । इति कुत्वम्, क्विन्प्रत्ययस्य–' (सू ३७७) इति कुत्वस्यासिद्धत्वात् , सुयुक्, ,सुयुग् ।सुयुजौ सुयुजः । 'युजेः' इति धातुपाठपठितेकारविशिष्टस्यानुकरणम्, न त्विका निर्देशः, तेनेह न युज्यते समाधत्त इति युक् । 'युज समाधौ' दैवादिक आत्मनेपदी संयोगान्तलोपः, खन् । खञ्जौ । खञ्जः–इत्यादि–

---

पक्षद्वयस्य व्यवस्थापितत्वात्। ष्टुत्वाभावोऽत्रेष्ट इति तदनुरोधेन कार्यकालपक्ष एव स्वीक्रियत इति।

45. **प्रियाष्टनोराजवत्सर्वं** हाहावच्चापरं हलि। प्रियाष्टन् शब्दस्य राजन्शब्दस्येव सर्वमजादिषु हलादिषु च विभक्तिषु समस्तकार्यम्भवति। सर्वाणि रूपाणि राजन्शब्दवदूह्यानीति भावः। हलि हलादिषु विभक्तिषु हाहाशब्दस्येव अपरञ्च रूपमूह्यम्। हलादौ वैकल्पिकत्वादात्वस्य आत्वपक्षे हाहावदपराण्यपि रूपाणि स्युः । आत्वाभावपक्षे तु राजवत्।

46. क्विन इकार उच्चारणार्थः। कनयोर्लशक्वतद्धित इति, हलन्त्यमिति च लोपः वेरपृक्तस्येति वलोपः। एवं क्विप इव क्विनोऽपि सर्वापहार एव।

47. **युञ्** । यु जु औ, नुम्, युन् ज् औ नश्चेति नोऽनुस्वारः। अनुस्वारस्य यय्। जकारे परतः परसवर्णः।यञ् ज् औ । अत्र चोः कुरिति ञकारस्य कुत्वं, झल्परकत्वात्प्राप्तं सत् परसवर्णस्य परत्वेन कुत्वदृष्ट्या असिद्धत्वान्नभवति ।

48. युग्भ्याम्, युङ्भ्यामिति स्थिते क्विन्प्रत्ययस्य कुरिति ( जुकारस्य स्वादिष्विति पदसंङ्कस्य युजुः अन्ते स्थितत्वात् कुत्व प्राप्तम्। चोः कुरिति च कुत्वं प्राप्तं उभयोः परत्वात् क्विन्प्रत्ययस्येति प्राप्ते असिद्धत्वाच्चोः कुरिति कुत्वमिति बोध्यम् ।

49. युजेरिति धातुपाठपठितेकारविशिष्टस्यानुकरणं युजेरसमास इति सूत्रे युजिर् योग इति रुधादिधातोरेव ग्रहणं न च युजसमाधाविति दैवादिकयुजधातोः (इक्स्तिपौ धातुनिर्देशाविति) इका निर्देशः। ननु युजेरसमास इति सूत्रं विधिर्वा, नियमो वा, अपवादो वा, यदि विधिस्तर्हि इदितोनुम्धातोरिति इदिधातुत्वेनैव यजेर्नुम् स्यादितीदं सूत्रं व्यर्थ यद्यसमास इति

'व्रश्च–' (सू २९४) इति षत्वम्, जश्त्वचर्त्वे, राट्, राड् । राजौ । राजः । राट्त्सु, राट्सु । एवं विभ्राट् । देवेट्, देवेजौ, देवेजः। विश्वसृट् विश्वसृड् । विश्वसृजौ । विश्वसृजः । इह सृजियुज्योः कुत्वं नेति क्लीबे वक्ष्यते । परिमृट् । षत्वविधौ राजिसाहचर्यात् 'टुभ्राजृ दीप्तौ' इति फणादिरेव गृह्यते । यस्तु 'एजृ भ्रेजृ भ्राजृ दीप्तौ' इति तस्य कुत्वमेव । विभ्राक्, विभ्राग् । विभ्राग्भ्याम् इत्यादि । 'परौ व्रजेः षः पदान्ते' (उ २१७) परावुपपदे व्रजेः क्विप्स्याद्दीर्घश्च पदान्तविषये षत्वं च । परित्यज्य सर्वं व्रजतीति परिव्राट् । परिव्राजौ । परिव्राजः । ३७९ **विश्वस्य वसुराटोः** । ।६।३।१२८। विश्वशब्दस्य दीर्घोऽन्तादेशः स्याद्वसौ राट्स्ब्दे च परे । विश्वं वसु यस्य स विश्वावसुः । रडिति पदान्तोपलक्षणार्थम् । चर्त्वमविवक्षितम् । विश्वाराट्, विश्वाराड् । विश्वाराजौ । विश्वराजः । विश्वाराड्भ्याम् इत्यादि ।३८० **स्कोः संयोगाद्योरन्ते च** । ।८।२।२९। पदान्ते झलि च परे यः संयोगस्तदाद्योः सकारककारयोर्लोपः स्यात् । भृट्, भृड् । सस्य श्चुत्वेन शः, तस्य जश्त्वेन जः, भृज्जौ । भृज्जः । 'ऋत्विग्–' (सू ३७३) इत्यादिना ऋतावुपपदे यजेः क्विन् । क्विन्नन्तत्वात्कुत्वम्, ऋत्विक्, ऋत्विग् । ऋत्विजौ ।

---

नियमः तर्हि युनक्तीत्यादावेव नुमं बाधित्वा रुधातुभ्यः श्नमिति श्नस्यैव प्राप्तिरिति नुमः प्राप्तिरेव नास्तीति कथमसमास इति नियमः। यद्यपवाद इति तर्हि कर्तरि शप् इति शपोऽपवादतया श्नस्य कथम्पुनर्नुमोपवादत्वं। अतः किमिद सूत्रमिति चेत् उच्यते । "कर्तरि शप् इति (तिङ्शित्सार्वधातुकमिति) सार्वधातुके शप्विहितस्तदपवादतया रुधादिषु श्नं विहित इति यत्र शपः प्राप्तिस्तत्रैव श्नम इति । न प्रकृते सर्वनामस्थाने परतश्श्नमः प्रसक्तिरिति। न च नुमोऽपि प्राप्तिस्स्यादिति वाच्यम् अस्य धातोः इदित्वाभावान्नुम्। अन्यथा च्युतिर् आसेचने च्योततीत्यत्रापि नुम्स्यात् इति तिङन्तत्वेऽपि नुमभावे कथं सुबन्तत्वे स्यात् । क्विबन्ते धातुत्वमेवतावन्नास्ति ।अतो न नियमसूत्रं नाप्यपवादः। किन्तु विधिरेव। असमास इति तु युजेरिति प्राप्तस्य नुमः समासे निषेधार्थकः –

50. खन् खजि गति वैकल्ये इति धातोः क्विप् खच् इदितो नुम्धातोरिति नुम् खन् ज् सु हल्ङ्याादिलोपः संयोगान्तलोपः खन्–

51. **विश्वस्य वसुराटोः** । राडिति किम्, पदान्तोपेलक्षणार्ध व्रश्चादिसूत्राद्राजेः पदान्त एव। षत्वे, जश्त्वे, चर्त्वे च राट् इति रूपम् पदान्त एव राज्शब्दो राडिति भवतीति विश्वस्य राज्शब्दे परतो दीर्घस्स्यात्पदान्ते इत्यर्थलाभाय राडिति कृतम्। नन्वेवं राट् इति चर्त्वान्तरूपग्रहणात्, भ्यामादौ जश्त्वान्ते राडि परे पूर्वस्य दीर्घो न स्यादित्याशङ्क्याह। चर्त्वमविवक्षितमिति। अयं भावः पदान्तोपलक्षणविवक्षया यथा राट्शब्दः प्रयुक्तस्सूत्रे तथा राट्शब्दस्य कृतषत्वजश्त्वस्य चर्त्वे सत्येव पूर्वपदस्य दीर्घो

ऋत्विजः । 'रात्सस्य' (सू २८०) इति नियमान्न संयोगान्तलोपः। ऊर्क्, ऊर्ग् ।ऊर्जौ ऊर्जः ।। **इति जान्ताः** ।। त्यदाद्यत्वं पररूपत्वं च । ३८१ **तदोः सः सावनन्त्ययोः** । ।७।२।१०६। त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ परे । स्यः त्यौ, त्ये । त्यम्, त्यौ त्यान् । सः, तौ, ते । परमसः। परमतौ, परमते । द्विपर्यन्तानामित्येव, नेह त्वम् । न च तकारोच्चारणसामर्थ्यान्नेति वाच्यम्, अतित्वमिति गौणे चरितार्थत्वात् । संज्ञायां गौणत्वे चात्वसत्वे न, त्यद्, त्यदौ, त्यदः । अतित्यद्, अतित्यदौ,, अतित्यदः । यः यौ, ये । एषः, एतौ, एते । अन्वादेशे तु एनम्, एनौ, एनान् । एनेन । एनयोः ।एनयोः । ३८२ ङे प्रथमयोरम् । ।७।१।२८। युष्मदस्मद्भ्यां परस्य ङेइत्येतस्य प्रथमाद्वितीययोश्चामादेशः स्यात् । ३८३ **मपर्यन्तस्य** । ।७।२।९१। इत्यधिकृत्य ।

---

भवत्विति विवक्षया न चर्त्वं प्रयुक्तमिति तेन विश्वाराड्भ्यामित्यादौ जश्त्वान्ते राट्शब्दे परेऽपि पूर्वस्य दीर्घः।

52. भृट्सु, भट्त्सु इति रूपद्वयम् डस्सिधुटो वैकल्पिकत्वात् ।

53. तदोस्सस्सावनन्त्ययोः। ननु तदोस्सस्सावाद्ययोरिति सूत्र्यताम्, लाघवादिति चेन्मैवम् । एष इति रूपासिद्धेः। ननु तर्हि आद्यत्वञ्च न त्यदादिपदापेक्षया। किन्तु तकारदकारापेक्षया । तेन आद्ययोः प्रथमयोस्तदोस्सस्स्यात्, न तु द्वितीययोस्तदोरित्यर्थलाभः। अतः एतच्छब्दे दकारस्य एतच्छब्दावयवत्वाभावेऽपि एतत् इति द्वयोस्तकारयोर्मध्ये प्रथमस्य तकारस्य सत्वेन एष इति रूपं सिद्ध्यत्येवेति चेत् मैवम्। असाविति रूपासिद्धेः। तथा हि– अदस् सु। अदस औ सुलोपश्च ।अदौ ।अत्र द्वयोर्दकारयोराद्यस्य सस्स्यादिति उक्तत्वात् । दकारद्वयाभावेन सत्वं न स्यादिति। ननु व्यपदेशिवद्भावेन तस्यैवाद्यत्वमिष्यत इति चेन्मैवम् । तेनैव तस्य अन्त्यत्वस्यापि सिद्धत्वेन सकाराभावप्रसङ्गात्। ननु त्यदादिचरमावयवापेक्षया आद्यत्वं तदयोरिष्यतामिति चेत्, मैवमपि त्यदादीनामाद्ययोरित्यस्य त्यदादिचरमावयवात्पूर्वयोरित्यर्थवचने प्रमाणाभावात्। प्रकरणादिभिर्लिङ्गैस्तद्वाक्यस्य तादृशार्थालाभाच्च, द्विपर्यन्तानां त्यदादित्वेन द्विशब्ददकारस्यापि सत्वं स्यादिति न भ्रमितव्यम्। तस्य नित्यद्विवचनान्ततया सुपरकत्वाभावात् । द्विरिति संज्ञायामतिद्विरिति गौणत्वे तु अत्वसत्वेनैव स्यातामन्तर्गणकार्यत्वात्–

54. **तकारोच्चारणसामर्थ्यात्** । त्वाहौ सौ इति सूत्रे तकारोच्चारणसामर्थ्यात् तस्यापि सत्वागमे इष्टे, प्रक्रियालाघवाय स्वाहौ सौ इत्येवं सूत्रयितव्यमिति भावः। अतित्वमिति गौणे चरितार्थत्वात्। युवा युवां युष्मान्वा अतिक्रान्तः अतित्वमिति विग्रहे इति बोध्यम्। अन्यथा त्वामतिक्रान्तोऽतित्वमिति विग्रहे तु, त्वमावेकवचने इति त्वादेशलाभेन त्वाहौसाविति सूत्रस्थत्वादेशस्य अचारितार्थ्यात्। अयम्भावः। अन्तर्गणकार्यत्वाददतित्वमिति गौणे तकारस्य सकारात् तकारोच्चारणसामर्थ्यं तत्रोपलक्षणम् ।

३८४ **त्वाहौ सौ** । ।७।२।९४। युष्मदस्मदोर्मपर्यन्तस्य त्व अह इत्येतावादेशौ स्तः सौ परे ।३८५ **शेषे लोपः** । ।७।२।९०। आत्वयत्वनिमित्तेतरविभक्तौ परतो युष्मदस्मदोरन्त्यस्य लोपः स्यात् । 'अतो गुणे' (सू १९१), 'अमि पूर्वः' (सू १९४) त्वम् । अहम् । ननु 'त्वम् स्त्री' 'अहम् स्त्री' इत्यत्र 'त्व अम्' 'अह अम्' इति स्थिते अमिपूर्वरूपं परमपि बाधित्वान्तरङ्गत्वाट्टाप् प्राप्नोति । सत्यम् ।

---

तकारानुच्चारणे त्वतिस्त्वमित्येव स्यान्न त्वतित्वमिति। (त्वमावेकवचन इति त्वादेशे सिद्धेऽपि गौणे त्वादेशार्थं हि त्वाहौ साविति सूत्रम्। त्वमित्यत्र तु सकारस्स्यादेव। (त्यदादीनामित्यस्य द्विपर्यन्तानामिति नियमाभावे) न च त्वमाविति सूत्रे तकारोच्चारणसामर्थ्यात्त्वमित्यत्रापि सकारो न स्यादिति, द्विपर्यन्तानामिति नियमाभावेऽपि त्वमिति सिद्ध्यत्येवेति वाच्यम् । त्वां त्वयेत्यत्र तत्सामर्थ्यस्य उपक्षीणत्वात्। स्वमावेकवचन इति सूत्रिते स्वां स्वयेति स्यात्, न तु त्वां त्वयेति। अतस्तत्रोच्चारणसामर्थ्यात् सौ परतोऽपि सत्वं नेति वक्तुं न शक्यमिति भावः।

55. त्वाहौ सौ। त्वमावेकवचन इत्यस्यापवादोयम्। विशेषविहितत्वात्। युवामावां वा युष्मानस्मान्वा अतिक्रान्तोऽतित्वमत्यहमिति विग्रहयोस्तु त्वमावित्यस्याप्राप्तेर्विधिरेव।

56. शेषे लोपः। युष्मदस्मदोरनादेशे द्वितीयायाञ्च प्रथमायाश्च द्विवचने भाषायां योऽचि शेषे लोपः इति सूत्रक्रमः। उक्तातिरिक्तश्शेष इति। युष्मदस्मदोरित्यादिना आत्वं यत्वञ्च स्वादिष्वजादि पञ्चसु विभक्तिषूक्तम् अतः यद्विभक्तिपरकत्वेन आत्वयत्वे प्रोक्ते तद्विभक्त्यतिरिक्तविभक्तिश्शेषपदार्थः न चात्वयत्वातिरिक्तं कार्यमेव शेषोऽस्तु इति वाच्यम्। शेषे इति सप्तम्या पूर्वस्य लोपकार्यविधानात्। अस्मिंस्तु पक्षे शेष इति निमित्तसप्तमी। यद्वा पृथिव्यां गन्धोऽस्तीत्यादाविव सप्तम्यधिकरणे चेति शेष इतीयमधिकरणसप्तमी मपर्यन्ताच्छेषे स्थानिनि लोपस्यादित्यर्थः। तथा च अधिकरणमप्यत्र स्थान्येवेति। तत्र लोपो नाम तस्यैव लोपः। स्थान्यधिकरणको लोपस्थानिनो लोप एवेति मपर्यन्ताच्छेषस्य लोप इत्यर्थः। इदमेव वक्ष्यति। स्थानिनोऽधिकरणत्वविषयेति। अस्मिन्पक्षे मपर्यन्तस्येत्यपकृष्टं सत् पञ्चम्यन्तत्वेन विपरिणम्यते। अन्यथा शेषस्येत्यर्थलाभेऽपि मपर्यन्ताच्छेषस्येत्यर्थालाभात्। ननु मपर्यन्तस्येत्यधिकारोऽत्रापि शेषे लोपसूत्रेऽस्त्विति वाच्यम् ।अधिकारसूत्राणाँ पश्चाद्गमनायोगात्। विभक्त्यान्तरत्वेन परिणामायोगाच्च। नन्वस्मिन्पक्षेऽपि आत्वयत्वनिमित्तेतरविभक्तौ परतश्शेषस्य लोपस्स्यादित्यर्थः आवश्यकः। अन्यथा सर्वास्वपि विभक्तिषु लोपस्स्यात्। अतश्शेष इत्यस्यावृत्तिरभ्युपेया। अङ्गीकृतौ तु गौरवं स्यादिति चेन्मैवम्। युष्मदस्मदोरित्यादिचतुस्सूत्र्या विहितयोरात्वयत्वयोः परेण शेषे लोप इत्यनेन बाधितत्वे आत्वयत्वयोरनवकाशत्वान्निरवकाशमूलकापवादतया सैव चतुस्सूत्री शेषे लोपं बाधत इति, यत्र स्वबाधकचतुस्सूत्र्या अप्रवृत्तिस्तत्र शेषे लोपप्रवृत्तिरिति अर्थादेव त्वदुक्तार्थसिद्धिरिति न शेष इत्यस्यावृत्तिरभ्युपेयेति स्पष्टार्थमङ्गीकृतावपि न गौरवम् सूत्रे अनुक्तत्वात्। नन्वेवं यदि पूर्वस्मिन्पक्षे शेष इति व्यर्थम्। लोप इति सूत्रितेऽपि त्वदुक्तरीत्या सर्वास्वपि विभक्तिषु एकतः लोपः प्राप्तस्सन् आत्वयत्वनिमित्तविभक्तिषु

अलिङ्गे युष्मदस्मदी । तेन स्त्रीत्वाभावान्न टाप् । यद्वा शेष इति सप्तमी स्थानिनोऽधिकरणत्वविवक्षया, तेन मपर्यन्ताच्छेषस्य 'अद्' इत्यस्य लोपः,स च परोऽप्यन्तरङ्गे अतो गुणे ।९। कृते प्रवर्तते, अदन्तत्वाभावान्न टाप् । परमत्वम् । परमाहम् । अतित्वम् । अत्यहम् ।

---

विशेषविहिताभ्यामात्वयत्वाभ्यां बाध्यत इति, तासु लोपो नैवेति, न शेष इति पदेन प्रयोजनम्। इदमेव तत्त्वबोधिन्यां प्रतिपादितम् यदि तु शेषविभक्तिविशेषणं स्यात्तर्हि व्यर्थमेव तदित्यादिना। नन्वेवं यदि लाघवात् लोप इत्येव असूत्रयित्वा, शेषे लोप इति गुरुनिर्देशं कृतवता पाणिनिना मपर्यन्ताच्छेषस्य लोप इति टिलोप एव विवक्षितः, नत्वन्त्यलोप इति। सः पूर्वः पक्षो निरालम्बन एवेति चेत् न तथा साम आकमिति ससुट्कनिर्देशेन सोऽपि ज्ञापित एवेति। तथा हि भाविनस्सुटो निवृत्त्यर्थं हि तत्र न सुट्कनिर्देशः। टिलोपे कृते अवर्णान्तत्वाभावेन सुटः कथं प्रसक्तिः? अतस्स एव ससुट्कनिर्देशो व्यर्थस्सन् शेषे लोपोऽन्त्यलोप इति पक्षं ज्ञापयतीति। नन्वेवं टिलोपपक्षो मास्तु, शेष इत्यपि मास्तु, लोप इत्येव सूत्र्यतां को दोष इति चेत् मैवम्। पक्षद्वयस्यापि भाष्यारूढत्वेन तद्विरोधात् । अन्त्यलोपपक्षे शेषे परतः युष्मदस्मदोर्लोपस्स्यात्। अलोऽन्त्यस्येति अन्त्यस्य लोपः युष्मदस्मदोरित्यत्रानुवृत्तिरिति बोध्यम्।

57. **अलिङ्गे युष्मदस्मदी।** पुंलिङ्गातिरिक्तलिङ्गशून्ये इत्यर्थः। अन्यथा तस्माच्छसो नः पुंसि युष्मानिति न सिद्ध्येत्। न च शसो न, नेत्यविभक्तिकं पदमिति वक्ष्यमाणात्वाच्च सो नकारस्स्यादिति किं युष्मदस्मदोः पुंलिङ्गसत्त्वाभ्युपगमेनेति चेन्मैवम्। ङेप्रथमयोरमिति सूत्रे ङेस्सुटोरमिति न्यासस्य सुवचत्वेन शसो नेति सूत्रस्यैव प्रत्याख्यानस्य सुवचत्वात्। न चैवं युष्मान् ब्राह्मणीः, युष्मान् कुलानीति न सिद्ध्येदिति वाच्यम्। "शिवस्यार्धं पार्वती"त्यादौ नित्यक्लीबस्याप्यर्धशब्दस्य यथा स्त्रीवाचकत्वं तथैव नित्यपुंलिङ्गयोरपि युष्मदस्मदोस्त्रीनपुंसकवाचकत्वं च सुघटमेव। इदमेव हि नित्यत्वं नाम लिङ्गस्य, यद्विशेष्यलिङ्गाधीनपरिणामराहित्यम्।

58. **त्वं युष्मद् सु,** ङेप्रथमयोरम्। युष्मद् अम् । त्वाहौ सौ । त्व अद् अम्। न चात्रामादेशे कृते सुपरकत्वाभावात्त्वादेशो न स्यादिति वाच्यम्। स्थानिवद्भावेन अमस्सुत्वात् न चानल्विधाविति तन्निषेधश्शङ्क्यः। सौ इति उकारानुबन्धसहितस्य सोर्गृहीतत्वेन अल्मात्रवृत्तिधर्मनिमित्तककार्यत्वाभावात्त्वादेशस्य। तथा हि। स्थान्यत्र सु। तदवयव एकाल् स्। तद्वृत्तिर्यो धर्मः सकारत्वरूपः, तन्निमित्तकं कार्यं किमत्र न किमपीति। अतएव त्वाहौ सि इत्यसूत्रयित्वा त्वाहौ सौ इति गुरुनिर्देशमेव कृतवान्पाणिनिः। प्रकृते तु स्थानी सु, तद्वृत्तिधर्मस्सुत्वरूपः। स न ह्येकाल्वृत्तिः । उकारानुबन्धसहिते सकारे सुत्वस्य वृत्तित्वात् यद्वा युष्मद् सु इत्यस्यामवस्थायां सोरमादेशः प्राप्तः। मपर्यन्तस्य त्वादेशश्च प्राप्तः। परत्वात्त्वादेशे तं बाधित्वा नित्यत्वादन्तरङ्गत्वाच्च सोरमादेशः। तमपि बाधित्वा निरवकाशमूलकापवादतया प्रथमत एव त्वादेश इति (अमादेशे कृते सोरभावेन त्वाहौ सावित्यस्य क्वापि प्रवृत्त्यभावेन वैयर्थ्यात्) त् अद् आम् । अत्र त् अद् इत्यत्र परत्वाच्छेषे लोपे विभक्त्यपेक्षकशेषे लोपादकारमात्रापेक्षकस्य अतो गुण इत्यस्य अन्तरङ्गत्वात्प्रथमत एव पररूपम्। त्वद् अम्, शेषे लोप इत्यन्त्यलोपः। त्वम् अम् अमि पूर्वरूपं त्वम्। टिलोपपक्षे तु त्व् अम्, त्वम् इति। ननु अन्त्यलोपपक्षे तु शेषे लोपस्य विभक्त्यपेक्षत्वेन बहिरङ्गत्वं मास्तु टिलोपपक्षे तु शेषे लोपस्य अपरनिमित्तकत्वेन च शेषे लोपस्यैवान्तरङ्गत्वं स्यादिति चेन्मैवम्।

३८६ **युवावौ द्विवचने** । ।७।२।९२। द्वयोरुक्तौ युष्मदस्मदोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ ।३८७ **प्रथमायाश्च द्विवचने भाषायाम्** । ।७।२।८८। इह युष्मदस्मदोराकारोऽन्तादेशः स्यात् । युवाम् । आवाम् । 'औङि' इत्येव सुवचम् । भाषायाम् किम्-युवं वस्त्राणि । मपर्यन्तस्य (सू ३८३) किम्-साकच्कस्य मा भूत्, युवकाम् । आवकाम् । 'त्वया' 'मया' इत्यत्र 'त्व्या' 'म्या' इति मा भूत् । 'युवकाभ्याम्' 'आवकाभ्याम्' इति च न सिध्येत् । ३८८ **यूयवयौ जसि** । ।७।२।९३। स्पष्टम् । यूयम् । वयम् । परमयूयम् । परमवयम् । अतियूयम् । अतिवयम् । इह शेषे लोपोऽन्त्यलोप इति पक्षे जसः शी प्राप्तः, **'अङ्गकार्ये कृते पुनर्नाङ्गकार्यम्'** (प ९३) इति न भवति । 'ङे प्रथमयोः–' (सू ३८२) इत्यत्र मकारान्तरं प्रश्लिष्य 'अम् मान्त एवावशिष्यते, न तु विक्रियते' इति व्याख्यानाद्वा ।

---

टिलोपस्याप्यर्थादात्वयत्व निमित्तेतरविभक्तिपरकत्वस्यासिद्धत्वेन बहिरङ्गत्वात्। किञ्च युष्मदस्मत्संबन्धिमपर्यन्तशेषत्वमत्र अपदान्ताकारत्वमात्रं, तत्र च कार्यभागिति शेषे लोपस्य बह्वाश्रयत्वेनापि बहिरङ्गत्वमस्ति–

59. **युवावौ** । द्विवचने यूयवयावितिवत्। युव, आव, इति आकारान्ताविमावादेशौ । युव् आव् इति वकारान्तादेशत्वेऽपि न क्षतिः, किन्तु पररूपाभावरूपप्रक्रियालाघवमेव.

60. **प्रथामायाश्च द्विवचने भाषायाम्** । शेषे लोपषष्टिलोप इति पक्षे विशेषविहितत्वेन शेषे लोपस्यापवादोयम् । औङीत्येव सुवचम्, प्रथमायाश्च द्विवचने इत्यपनीय तत्स्थाने औङीति वक्तुं शक्यमित्यर्थः । तथा च औङि भाषायामिति सूत्रम् । न च भाषायामित्यपि मास्त्विति वाच्यम् । युवं वस्त्राणीत्यसिद्धेः। ननु औङभाषायामित्युक्ते औङो मादेशे कृते औङ्परकत्वभावेन आकारो न स्यात् । न च स्थानिवद्भावः । अनल्विधाविति निषेधात्, औकारमात्रनिष्ठमेव ह्यत्र औत्वरूपो धर्मः इति चेत्, अतएव। त्वंशब्दनिरूपणावसरे मया स्थानिवद्भावपक्षे रुच्यभावे यद्वेति पक्षान्तरमुपन्यस्तं तद्वदेवात्रापि समाधानं वाच्यमिति यद्वा सौ औ ङसि इत्यादिषु स्वादेशे अमि औ ङादेशे, अमि ङसादेशे अमीत्येवं व्याख्येयम्–

61. **मपर्यन्तस्य किम्** मपर्यन्तस्येत्यधिकारो मास्तु । शेषे लोप इति सूत्रमपि मास्त्विति प्रश्नः। युष्मद् अम् युष्मदस्सर्वस्यापि त्वादेशः । त्व अम्, अमि पूर्वः त्वम् एवमेव युवां यूयमित्यादय स्सिध्यन्त्येवेति–

62. **जसश्शी प्राप्तः** । ननु जसो मादेशे कृते, जस एवाभावात्कथं शीप्राप्तिरिति चेत्, स्थानिवद्भावेन जस्त्वमानीयते जस्त्वस्य अनेकाल्वृत्तिधर्मत्वान्नानल्विधाविति निषेधः। यद्वा एकदेशविकृतमनन्यवद्भवतीति अस इव अमोऽपि शीप्राप्तिर्बोध्या–

63. **अङ्गकार्ये कृते पुनर्नाङ्गकार्यम्** । षष्ठाध्यायचतुर्थपादमारभ्य सप्तमाध्यायपरिसमाप्तपञ्चसु पादेषु अङ्गाधिकारः। तदूर्ध्वं पदाधिकारः जसश्शी इत्यस्य ङीप्रथमयोरित्यस्य च सप्ताध्यायीस्थत्वेन अङ्गत्वात् एकस्मिन्कार्ये कृते पुनर्नान्यस्य प्रसक्तिरिति, प्रथमतः परत्वात् ङेप्रथमयोरमित्यमः कृतत्वेन न पुनर्जसश्शी प्रवृत्तिरिति ।

३८९ **त्वमावेकवचने** । ।७।२।९७। एकस्योक्तौ युष्मदस्मदोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ । ३९० **द्वितीयायां च** । ।७।२।८७। युष्मदस्मदोराकारः स्यात् । त्वाम् । माम् । युवाम् । आवाम् । ३९१ **शसो न** । ।७।१।२९। नेत्यविभक्तिकं पदम् । युष्मदस्मद्भ्यां परस्य शसो नकारः स्यात् । अमोऽपवादः । 'आदेः परस्य' (सू ४४) । 'संयोगन्तस्य लोपः' (सू ५४)। युष्मान् ।अस्मान् । ३९२ **योऽचि** । ।७।२।८९। अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः । त्वया । मया ३९३ **युष्मदस्मदोरनादेशे** । ।७।२।८६। अनयोराकारः स्यादनादेशे हलादौ विभक्तौ । युवाभ्याम् । आवाभ्याम् । युष्माभिः । अस्माभिः ।।३९४ **तुभ्यमह्यौ ङयि** ।७।२।९५। अनयोर्मपर्यन्तस्य तुभ्यमह्यौ स्तो ङयि । अमादेशः 'शेषे लोपः' (सू ३८५) । तुभ्यम् । मह्यम् । परमतुभ्यम् । परममह्यम् । अतितुभ्यम् ।अतिमह्यम् । युवाभ्याम् । आवाभ्याम् । ३९५ **भ्यसो भ्यम्** । ।७।१।३०। भ्यसो भ्यम् अभ्यम् वा आदेशः स्यात् । आद्यः शेषे लोपस्यान्त्यलोपत्व एव । तत्राङ्गवृत्तपरिभाषया एत्त्वं न । अभ्यम् तु पक्षद्वयेऽपि साधुः । युष्मभ्यम् । अस्मभ्यम् ।

---

न च नित्यत्वाज्जसश्श्या एव प्रथमं प्रवृत्तिरस्तु इति वाच्यम्। विशेषविहितत्वेन ङेप्रथमयोरित्यस्य तदपवादत्वात् ।अङ्गवृत्तेः पुनर्वृत्तावविधिरिति परिभाषाया अनित्यत्वात्पक्षान्तरमुपन्यस्यति अम् मान्त एवावशिष्यत इति। इयञ्च परिभाषा ज्ञाजनोर्जा इत्यनेन ज्ञापिता। तथा हि ज्ञाजनोर्जाप्वादीनां ह्रस्व इति सप्तमाध्यायतृतीयपादस्थे सुत्रे जानातीति ज्ञाधातोः क्राचदित्वेन श्नाप्रत्यये ज्ञाजनोर्जा इति जादेशे च कृते रूपम् । अत्र प्वादीनां ह्रस्व इति ज्ञाधातोः प्वादित्वेन ह्रस्वः प्राप्तस्सन्न भवति, जा इति दीर्घनिर्देशसामर्थ्यात् अयं जा इति दीर्घनिर्देशः स्वादीनां ह्रस्व इति ह्रस्वे चिकीर्षिते व्यर्थस्सन् अङ्गवृत्तेः पुनर्नाङ्गवृत्तमिति परिभाषां ज्ञापयित्वा अङ्गकार्ये जादेशे कृते पुनरङ्गकार्यस्य ह्रस्वस्य अभावात्स्वांशे चरितार्थोऽभवदिति ह्रस्वागमस्यापीष्टत्वे जानातीति रूपसिद्धचर्थं ज्ञाजनोर्ज इत्येव सूत्रयितव्यमिति भावः–

64. **योऽचि,** युष्मदस्मदोरनादेश इति सूत्रादनादेश इत्यत्रानुवृत्त्या किम्। ङेसुडादेशे अमि यादेशो माभूदिति। न च तत्र विशेषविहितेन आत्वेन यत्वं बाध्यत एवेति किमनेनेति वाच्यम्। औ ङि तथात्वेऽपि तद्भिन्नस्थलेषु शेषे लोपं बाधित्वा यत्वमेव प्रवर्तेतेति–

३९६ **एकवचनस्य च** । ।७।१।३२। आभ्यां पञ्चम्येकवचनस्य अत् स्यात् । त्वत् । मत् । 'ङसेश्च' इति सुवचम् । युवाभ्याम् । आवाभ्याम् । ३९७ **पञ्चम्या अत्** । ।७।१।३१। आभ्यां पञ्चम्या भ्यसोऽत्स्यात् । युष्मत् । अस्मत् । ३९८ **तवममौ ङसि** । ।७।२।९६। अनयोर्मपर्यन्तस्य तवममौ स्तो ङसि । ३९९ **युष्मादस्मद्भ्यां ङसोऽश्** । ।७।१।२७। स्पष्टम् । तव । मम । युवयोः । आवयोः ४०० **साम आकम्** । ७।१।३३। आभ्यां परस्य साम आकम् स्यात् । भाविनः सुटो निवृत्त्यर्थं ससुट्कनिर्देशः । युष्माकम् । अस्माकम् । त्वयि । मयि । युवयोः । आवयोः युष्मासु । अस्मासु ।।

समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी ।
समासार्थोऽन्यसङ्ख्यश्चेत्स्तो युवावौ त्वमावपि ।।१।।
सुजस्ङेङस्सु परत आदेशाः स्युः सदैव ते ।
त्वाहौ यूयवयौ तुभ्यमह्यौ तवममाविति ।।२।।

---

65. **एकवचनस्य** च पञ्चम्या अदिति पूर्वसूत्रम् सर्वमत्रानुवर्तते। पञ्चम्या अदेकवचनस्य चेति न सूत्रितम् । भ्यसो भ्यमिति पूर्वसूत्राद्भ्यस इत्यस्य पञ्चम्या अदिति सूत्रे अनुवर्तनीयत्वात्। वस्तुतस्तु पञ्चम्या अत् एकवचनस्य चेति सूत्रद्वयमप्यपनीय ङसि भ्यसोरत् इति सुवचम्। न च चतुर्थीबहुवचने पञ्चमीबहुवचने च अव्यवस्थया भ्यां अत् च स्यातामिति वाच्यम् । सहचरितासहचरितयोस्सहचरितस्यैव ग्रहणमिति ङसीति साहचर्यात्पञ्चमी बहुवचनस्यैव ग्रहणं स्यादिति । सूत्रमते तु भ्यसो भ्यं चतुर्थ्यामिव पञ्चम्यां प्रसक्तं सत्परत्वादता बाध्यत इति बोध्यम्। न्यासमतेऽपि चतुर्थीपञ्चम्योरविशेषेण भ्यसो भ्यमः प्राप्तस्य ङसिभ्यसोरदिति पञ्चम्यामतो बाधितत्वं सममेव ।

66. सर्वपदादेशा इति तत्त्वबोधिनी। सर्वे अवयवानामादेशभूतास्सर्वेऽपि सर्वपदादेशाः। सर्वस्यापि पदस्य आदेशभूता इत्यर्थः। तद्वद्वर्तन्त इति यावत्। यथा विभक्त्यवयवादेशोऽपि ङसोऽश् विभक्त्यादेशवद्योऽचीति यत्वकार्यं निवर्तयति तथेति भावः। पदैकदेशादेशोऽपि पदादेश इत्येवाङ्गीकर्तव्यमिति निष्कर्षः। ननु तर्हि सिचि वृद्धिः परस्मैपदेषु इत्त्यादौ च्लेस्सिजिति च्लादेशेऽपि सिचि सर्वादेशत्वाङ्गीकृतौ धातोस्सर्वस्यापि सिच्त्वेन ग्रहीतव्ये कस्य वा वृद्धिस्स्यादिति चेत् तत्र वचनसामर्थ्यात्सर्वपदादेशत्वनियमो नाङ्गीक्रियत इति विद्धि ।

67. समस्यमान इत्यादिश्लोकानामयं सङ्ग्रहः। गौणे त्वाहाद्यादेशानां व्यवस्थायै श्लोकचतुष्टयमिदम्। प्रत्ययपरकत्वे ये ये आदेशा विहितास्ते सर्वे गैणेऽपि स्युः। तत्रापि

एते परत्वाद्बाधन्ते युवावौ विषये स्वके ।
त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः ।।३।।
द्व्येकसङ्ख्यः समासार्थो बह्वर्थे युष्मदस्मदी ।
तयोरद्व्येकतार्थत्वान्न युवावौ त्वमौ न च ।।४।।

त्वां मां वा अतिक्रान्त इति विग्रहे। अतित्वम्, अत्यहम् । अतित्वाम्, अतिमाम् । अतियूयम्, अतिवयम् । अतित्वाम्, अतिमाम् । अतित्वाम्, अतिमाम् । अतित्वान्, अतिमान् । अतित्वया, अतिमया । अतित्वाभ्यम्, अतिमाभ्याम् । अतित्वाभिः, अतिमाभिः । अतितुभ्यम्, अतिमह्यम् । अतित्वाभ्याम्, अतिमाभ्याम् । अतित्वभ्यम्, अतिमभ्यम् । ङसिभ्यसोः- अतित्वत्, अतित्वत् । अतिमत्, अतिमत् । भ्यामि प्राग्वत् । अतितव । अतिमम । अतित्वयोः, अतिमयोः । अतित्वाकम्, अतिमाकम् । अतित्वयि , अतिमयि । अतित्वयोः, अतिमयोः । अतित्वासु, अतिमासु ।। युवाम् आवां वा अतिक्रान्त इति विग्रहे सुजस्ङेङस्सु प्राग्वत् ।

---

प्रत्ययपरकत्वस्य सत्त्वात्। त्वाहौ सौ, यूयवयौ जसि, तुभ्यमह्यौ ङयि, तवममौ ङसि, युष्मदस्मदोर्द्वित्ववाचित्वे एकत्ववाचित्वे च ये आदेशा विहितास्ते गौणे समासावयवभूतयोर्युष्मदस्मदोर्द्वित्ववाचित्वे एकत्ववाचित्वे च स्युः। ते आदेशास्तु युवावौ त्वमौ च बहुत्ववाचित्वे तु न स्युः। युवावौ द्विवचने, त्वमावेकवचने इति वचनग्रहणात्। आत्वं यूत्वं शेषे लोपश्च सर्वदाऽपि स्युरिति न तत्र व्यवस्था कार्या श्लोकानामर्थो लिख्यते ।

1. द्व्येकत्रवाचिनी युष्मदस्मदी समस्यमाने सती समासार्थः बहुव्रीहिरन्यपदार्थः अन्यसङ्ख्यश्चेत् समस्यमानयुष्मदस्मत्संङ्ख्याव्यतिरिक्तसंङ्ख्याको यदि युष्मदस्मदोर्द्वित्ववाचित्वे समासार्थस्य एकत्ववाचित्वं बहुत्ववाचित्वं वा यदि तयोरेकत्ववाचित्वे समासार्थस्य द्वित्वबहुत्ववाचित्वं वा यदि युवावौ स्तः। त्वमौ च स्तः। युष्मदस्मदोर्द्वित्ववाचित्वे युवावौ। एकत्ववाचित्वे तु त्वमौ च स्तः ।

2. सु जस् ङे ङः सुपरतः सदैव ते आदेशास्स्युः। के ते इत्यत आह। त्वाहौ यूयवयौ तुभ्यमह्यौ तवममौ पूर्वोक्तरीत्या प्रत्ययपरकत्वेन ते सदा स्युरिति भावः।

3. ननु युवामावां वा अतिक्रान्त इति विग्रहे युष्मदस्मदोर्द्वित्ववाचित्वेन सौ परतोऽपि

औअम्औट्सु– अतियुवाम्, अतियुवाम्, अतियुवाम् । अत्यावाम्, अत्यावाम्, अत्यावाम् । अतियुवान्, अत्यावान् । अतियुवाया अत्यावया । अतियुवाभ्याम् ३, अत्यावाभ्याम् ३ । अतियुवाभिः, अत्यावाभिः । भ्यसि–अतियुवभ्यम्, अत्यावभ्यम् । ङसिभ्यसोः– अतियुवत्, अतियुवत् अत्यावत्, अत्यावत् । ओसि–अतियुवयोः, अतियुवयोः । अत्यावयोः अत्यावयोः । अतियुवाकम्, अत्यावाकम् । अतियुवयि, अत्यावयि । अतियुवासु । अत्यावासु ।। युष्मानस्मान्वा अतिक्रान्त इति विग्रहे सुजस्ङेङस्सु प्राग्वत् । औ अम्औट्सु–अतियुष्माम्, अतियुष्माम्, अतियुष्माम् । अत्यस्माम्, अत्यस्माम्, अत्यस्माम् । अतियुष्मान्, अत्यस्मान् । अतियुष्मया , अत्यस्मया । अतियुष्माभ्याम् ३। अत्यस्माभ्याम् ३ अतियुष्माभिः, अत्यस्माभिः । भ्यसि अतियुष्मभ्यम्, अत्यस्मभ्यम् । ङसिभ्यसोः– अतियुष्मत् २, अत्यस्मत् २ । ओसि–अतियुष्मयोः, अतियुष्मयोः । अत्यस्मयोः, अत्यस्मयोः । अतियुष्माकम्, अत्यस्माकम् ।अतियुष्मयि, अत्यस्मयि । अतियुष्मासु, अत्यस्मासु । ४०१ **अनुदात्तं पदस्य** । ।८।१।१६। ४०२ **पदात्** । ।८।१।१७।। ४०३ **अनुदात्तं सर्वमपादादौ** । ।८।१।१८। इत्यधिकृत्य ।

---

युवावौ प्राप्तौ त्वाहौ साविति त्वाहौ च प्राप्तौ कौ वा भवत इत्याशङ्कायां, जसि यूयवयौ भवतो वा युवावौ भवतो वा इत्याशङ्कायां ङयि तुभ्यमह्यौ भवतो वा युवावौ वा इत्याशङ्कायां ङसि तवममौ भवतो वा युवावौ वा इत्याशङ्कायां एते परत्वाद्बाधन्ते युवावौ विषये स्वके इत्युक्तं युवाभ्यां परत्वेन त्वाहादय एव स्वस्वविषये भवन्ति इति। ननु त्वां मां वा अतिक्रान्त इति विग्रहे युष्मदस्मदोरेकत्ववाचित्वेन सुजसादिषु सर्वत्रापि त्वमौ प्राप्तौ सु जस् ङे ङसु त्वाहादयः प्राप्ता अपि, के वा भवन्तीत्याशङ्कायामाह त्वमावपि प्रबाधन्त इति। ननु परत्वात्त्वमावेव तान् बाधेयातामित्यत आह पूर्वविप्रतिषेधत इति ।

4.युष्मानस्मान् वा अतिक्रान्त इति विग्रहे तु द्व्येकार्थवाचित्वाभावाद्युष्मदस्मदोर्युवावौ त्वमौ च न स्तः। सु जस् ङे ङस्सु त्वाहादयस्स्युरेव । अन्यत्र न कोऽप्यादेश इति भावः।

68. युष्मदस्मदोरेकत्ववाचित्वे रूपाणि दर्शयति।अतित्वमित्यादिना औङि अतित्वामतिमामिति द्वित्ववाचित्वाभावाद्युष्मदस्मदोर्न युवावौ इति भावः। एवं सर्वत्राप्यूह्यम् ।

४०४ **युष्मदस्मदोः षष्ठी चतुर्थीद्वितीयास्थयोर्वांनावौ** । ।८।१।२०। पदात्परयोरपदादौ स्थितयोरनयोः षष्ठ्यादिविशिष्टयोर्वा नौ इत्यादेशौ स्तः । तौ चानुदात्तौ । ४०५ **बहुवचनस्य वस्नसौ** । ।८।१।२१। उक्तविधयोरनयोः षष्ठ्यादिबहुवचनान्तयो र्वस्नसौ स्तः । वांनावोरपवादः । ४०६ **तेमयावेकवचनस्य** । ८।१।२२। उक्तविधयोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः । ४०७ **त्वामौ द्वितीयायाः** । ।८।१।२३। द्वितीयैकवचनान्तयोस्त्वा मा एतौ स्तः ।

श्रीशस्त्वावतु मापीह दत्तात्ते मेऽपि शर्म सः ।
स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः ।।१।।
सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः ।
सोऽव्याद्वो नः शिवं वो नो दद्यात्सेव्योऽत्र वः स नः ।।२।।

पदात्परयोः किम्–वाक्यादौ मा भूत्, त्वां पातु, मां पातु । अपादादौ किम्–'वेदैरशषै संवेद्योऽस्मान्कृष्णः सर्वदाऽवतु ।' स्थग्रहणाच्छ्रूयमाणविभक्तिकयोरेव । नेह–इति युष्मत्पुत्रो ब्रवीति, इत्यस्मत्पुत्रो ब्रवीति ।

---

69. बहुवचनस्य वस्नसौ। अत्र प्राक्सूत्रं सर्वमनुवर्तते। बहुवचनस्येति वचनविपरिणामेन युष्मदस्मदोर्विशेषणम्। तेन येन विधिस्तदन्तस्येति तदन्तविधिः। षष्ठ्यादिविशिष्टयोर्बहुवचनान्तयोर्युष्मदस्मदोर्वस्नसौ आदेशौ स्तः। (अनेकाल्त्वात्सर्वादेशः) षष्ठ्यादिविशिष्टयोर्बहुवचनान्तयोरित्यमुमेवार्थं फलितार्थतया कौमुदीकार आह। षष्ठ्यादिबहुवचनान्तयोरिति। एवमेव तेमयावेकवचनस्य त्वामौ द्वितीयाया इति सूत्रद्वयस्याप्यर्थ ऊह्यः। त्वामौ द्वितीयाया इत्यत्र द्वितीयापदग्रहणात् तेमयावेकवचनस्येति सूत्रे षष्ठीचतुर्थ्योरिवानुवृत्तिरिति बोध्यम्। त्वामौ द्वितीयाया इति सूत्रे तेमयाविति सूत्रादेकवचनस्येत्यस्यानुवृत्तिश्च बोध्या। त्वामाविति आकारान्तमाशब्दस्य औङि विश्वपौ इतिवद्रूपम्।

70. तेमेऽपि शर्म स इति। चतुर्थ्येकवचनान्तयोस्तेमयादेशौ स्वामी ते मेऽपीति षष्ठ्येकवचनान्तयोः पातु वामपि नौ इति द्वितीयाद्विवचनन्तयोः सुखं वां नौ ददात्विति चतुर्थीद्विचनान्तयोः, पतिर्वामपि नाविति षष्ठीद्विवचनान्तयोः, सोऽव्याद्वो न इति द्वितीयाबहुवचनान्तयोः, शिवं वो नो दद्यादिति चतुर्थीबहुवचनान्तयोः सेव्योऽत्र वस्स न इति षष्ठीबहुवचनान्तयोः।

**'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः'** (वा ४७१४) । **'एकतिङ् वाक्यम्'** (वा ११९९) तेनेह न–ओदनं पच, तव भविष्यति । इह तु स्यादेव– शालीनां ते ओदनं दास्यामि इति । **'एते वांनावादय आदेशा अनन्वादेशे वा वक्तव्याः'** (वा ४७१७) । अन्वादेशे तु नित्यं स्युः । धाता ते भक्तोऽस्ति, धाता तव भक्तोऽस्तीति वा । तस्मै ते नम इत्येव ।४०८ **न चवाहाऽहैवयुक्ते** । ।८।१।२४। चादिपञ्चकयोगे नैते आदेशाः स्युः । हरिस्त्वां मां च रक्षतु । कथं त्वां मां वा न रक्षेदित्यादि । युक्तग्रहणात्साक्षाद्योगेऽयं निषेधः । परम्परासम्बन्धे त्वादेशः स्यादेव। हरो हरिश्च मे स्वामी । ४०९ **पश्यार्थैश्चानालोचने** । ।८।१।२५। अचाक्षुषर्ज्ञानार्थैर्धातुभिर्योगे एते आदेशा न स्युः । चेतसा त्वां समीक्षते । परम्परासम्बन्धेऽप्ययं निषेधः, भक्तस्तव रूपं ध्यायति । आलोचने तु भक्तस्त्वा पश्यति चक्षुषा ।

---

71. न च वाहाहैव युक्ते। च वा–हा–है–व एतैः पञ्चभिर्योग इति।

72. पश्यार्थैश्चानालोचने। पश्यः ज्ञानमर्थः । एषां तैर्धातुभिर्योगे एते आदेशा न स्युः। (पूर्वसूत्रात् न इत्यस्य युक्त इत्यस्य च अनुवृत्त्याऽयमर्थो लब्धः) न त्वालोचने। आलोचनं नाम चक्षुरिन्द्रियतद्विषयसन्निकर्षरूपं दर्शनम्। तत्र विद्यमानैर्धातुभिः तदर्थैर्धातुभिरिति यावत् । योगे तु आदेशा न स्युरिति न स्युरेवेत्यर्थः। यद्वा नञः पर्युदासप्रतिषेधोऽत्रार्थः। तथा च अनालोचन इत्यस्य आलोचनभिन्नार्थवृत्तिभिरित्यर्थः। आलोचनभिन्नार्थवृत्तिभिर्ज्ञानार्थैर्धातुभिर्योगे आदेशा न स्युरिति वाक्यार्थः। इदमेव सङ्कलय्याह अचाक्षुषज्ञानार्थैर्धातुभि रिति कौमुदी। चाक्षुषज्ञानव्यतिरिक्तज्ञानार्थैर्धातुभिरिति तदर्थः। यथा चेतसा त्वां समीक्षत इत्यत्र ईक्षणस्य दर्शनात्मकत्वेऽपि चेतसेक्षणस्य ज्ञानात्मकत्वादयं धातुरत्र ज्ञानार्थक एवेति, न त्वादेश इति। भक्तस्त्वा पश्यति चक्षुषेत्यत्र पश्यतीत्यस्य ज्ञानार्थकत्वस्यापि सत्त्वेऽपि चक्षुषेति पदसंसर्गाद्दर्शनार्थकत्वमेवेति त्वादेश इति। एवञ्च अचाक्षुषज्ञानार्थैरित्यस्य चाक्षुषज्ञानव्यतिरिक्तज्ञानवृत्तिभिरित्यर्थो वाच्यः अन्यथा चाक्षुषज्ञानं ये धातवः कदापि न बोधयेयुस्तैर्धातुभिर्योग इत्यर्थस्स्यात्तथाविधो धातुर्न कोऽपीति सूत्रस्यैवात्र वृत्तिस्स्यात् । न च दृशिर् प्रेक्षण इति चाक्षुषज्ञानमेव तद्धातोरर्थ इति वाच्यम्। प्रकृतसूत्रे पश्यपदस्यापि ज्ञानार्थालाभप्रसङ्गात्। ननु विचारार्थकस्य आलोचनशब्दस्य कथं चाक्षुपज्ञानरूपार्थलाभ इति चेदुच्यते । लोचृ दर्शने इति कश्चिद्धातुर्भ्वादिषु वर्तते। लोकृ दर्शन इति धातोर्भिन्न एवायम्। अस्यैव लोचतेः करणे ल्युटि कृते लोचनमिति नेत्रपर्यायश्शब्दस्सम्भवति। आङ्पूर्वकादस्माल्लोचतेर्भावे युचि

४१० **सपूर्वायाः प्रथमाया विभाषा** । ।८।१।२६। विद्यमानपूर्वात् प्रथमान्तात्परयोरनयोरन्वादेशेऽप्येते आदेशा वा स्युः । भक्तस्त्वमप्यहं तेन हरिस्त्वां त्रायते स माम् । त्वा मा इति वा ।

---

कृते आलोचनमिति रूपम्। अस्य च चाक्षुषज्ञानमेव दर्शनात्मकमर्थः। विचारार्थलाभस्तु उपसर्गेण धात्वर्थो बलादन्यत्र नीयत इति न्यायादाङ्रूपोपसर्गबललब्ध एवेति ज्ञेयम्। आलोचन इति पाठस्तु सुकर एव। निध्यानमवलोकनमित्यमरकोशादेव आलोकनशब्दस्य चाक्षुषज्ञानार्थे निरूढत्वादिति दिक्। न च पश्यार्थैरिति पदस्य दृशिर् प्रेक्षण इति धातोरीक्षणार्थकत्वेन पश्यः दर्शनं चाक्षुषज्ञानमिति यावत्, अर्थः येषां तैः चाक्षुषज्ञानार्थैरित्यर्थमुक्त्वा पश्यार्थैर्धातुभिर्योगे युष्मदस्मदोरेते आदेशास्स्युः। आलोचने ज्ञानसामान्ये तु न। ज्ञानमात्रार्थवृत्तिभिर्धातुभिर्योगे तु आदेशा न स्युरित्यर्थः इति सूत्रं व्याख्येयमिति वाच्यम्। न च वाहेति पूर्वसूत्रे आदेशनिषेधमुक्त्वा अत्र च नञनुकर्षणार्थं चकारस्यापि कृतत्वेन अस्य सूत्रस्य निषेधप्रकरणस्थत्वप्राप्तेः चाक्षुषज्ञानार्थैर्धतुभिर्योगे एते आदेशा न स्युरिति विपरीतार्थस्यैव प्राप्तत्वात्। नन्वेवं त्वामौ द्वितीयाया इति सूत्रानन्तरमेव पश्यार्थैरनालोचने इति सूत्रयित्वा पश्चान्न च वाहाहैवयुक्ते इति सूत्रयितव्यं लाघवरूपगुणस्यापि सद्भावादिति चेन्मैवम्। त्वामौ द्वितीयाया इत्यादिपूर्वसूत्रवशादेव पश्यार्थैर्धातुभिस्तद्भिन्नैश्च धातुभिर्योगे ते आदेशा भवन्त्येवेति कृत्वा पुनः पश्यार्थैरित्युक्तिर्व्यर्थैव भवेत्। किञ्च सिद्धे सत्यारब्धमाणस्य नियमत्वेन पश्यार्थौरित्यस्य नियमत्वमपि स्यात्। ततश्च श्रीशस्त्वावत्वित्यत्र अवधातुयोगे सति त्वादेशो दुर्लभ एव भवेत्। ननु तर्हि न च वाहाहैवयुक्ते आलोचने पश्यार्थैः इति सूत्रयितव्यम्। आलोचने ज्ञानमात्रवृत्तिभिर्धातुभिर्योगे आदेशा न स्युः। पश्यार्थैः निषेधस्य प्रतिप्रसवोऽयम्। चाक्षुषज्ञानार्थैर्योगे तु आदेशास्स्युरेव इत्यर्थे न दोष इति चेन्मैवम्। योगविभागे प्रमाणाभावात्। आलोचने पश्यार्थैरिति सूत्रद्वयेऽपि युक्तपदाद्यनुवर्तनस्य विपरीतगौरवावहत्वाच्च। तस्माद्यथास्थितं रमणीयम् ।

73. स पूर्वायाः प्रथमाया विभाषा। एते वां नावादय इति वार्तिकादन्वादेशे तु नित्यं स्युरिति लब्धं हि । अन्वादेशेऽपि विकल्पार्थमिदं सूत्रम् सहविद्यमानं पूर्वं पदं यस्मात्स पूर्वात् इतीदं प्रथमान्तादित्यस्य विशेषणम्। युष्मदस्मदोः पूर्व प्रथमान्तशशब्दो वर्त्तेत । तस्माच्च शब्दात् यत्किञ्चित् सुप्तिङन्तं पदं वर्तेत यदि तदा अन्वादेशेऽपि युष्मदस्मदादेशा वैकल्पिकाः स्युरिति भावः। यथा भक्तस्त्वमप्यहम् । तेन हरिस्त्वामित्यत्र हरिस्त्वामिति पदात्परयोरपादादौ स्थितयोर्द्वितीयैकवचनान्तयोस्त्वामौ स्यातामिति युष्मच्छब्दस्य द्वितीयैकवचनान्तस्य हरिपदात्परस्य अपादादौ स्थितस्य त्वं हरेर्भक्तः, हरिस्त्वां त्रायत इत्यन्वादेशात् । अन्वादेशे

४११ **सामन्त्रितम्** । ।२।३।४८। सम्बोधने या प्रथमा तदन्तमामन्त्रितसंज्ञं स्यात् । ४१२ **आमन्त्रितं पूर्वमविद्यमानवत्** । ।८।१।७२। स्पष्टम् । अग्ने तव । देवास्मान्पाहि । अग्ने नय । अग्न इन्द्र वरुण । इह युष्मदस्मदोरादेशस्तिङन्तनिघात आमन्त्रितनिघातश्च न । 'सर्वदा रक्ष देव नः' इत्यत्र तु देवेत्यस्याविद्यमानवद्भावेऽपि ततः प्राचीनं रक्षेत्येतदाश्रित्यादेशः । एवम् 'इमं मे गङ्गे यमुने' इति मन्त्रे यमुन इत्यादिभ्यः प्राचीनानामामन्त्रितानामविद्यमानवद्भावेऽपि मेशब्दमेवाश्रित्य सर्वेषां निघातः । ४१३ **नामन्त्रिते समानाधिकरणे सामान्यवचनम्** । ।८।१।७३। विशेष्यं समानाधिकरणे **विशेषणे** आमन्त्रिते परे नाविद्यमानवत्स्यात् । हरे दयालो नः पाहि । अग्ने तेजस्विन् । 'विभाषितं विशेषवचने' (सू ३६५५) अत्र भाष्यम् **'बहुवचनमिति वक्ष्यामि'** इति । बहुवचनान्तं विशेष्यं समानाधिकरणे आमन्त्रिते विशेषणे परे अविद्यमानवद्वा । यूयं प्रभवः देवाः शरण्याः, युष्मान्भजे, वो भजे इति वा । इहान्वादेशेऽपि वैकल्पिका आदेशाः । सुपात्, सुपाद् । सुपादौ । सुपादः । सुपादम् । सुपादौ ।४१४ **पादः पत्** । ।६।४।१३०। पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः स्यात् । सुपदः । सुपदा । सुपाद्भ्यामित्यादि ।। **इति दान्ताः** । अग्निं मन्थतीत्यग्निमत्, अग्निमद् ।

---

तु नित्यमिति नित्ये वादेशे प्राप्ते हरिरिति प्रथमान्तस्य त्वामित्यतः पूर्वस्य तेनेति पूर्वपदसद्भावात् त्वादेशस्य वैकल्पिकत्वम्। एवमेव त्रायते स मामित्यत्रापि मादेशस्य वैकल्पिकत्वं बोध्यम्। त्वामौ द्वितीयाया इति सूत्रात् नित्यतयाऽत्र त्वामादेशे प्राप्ते स पूर्वाया इत्यनेन वैकल्पिकत्वमिति फलितम्।

74. पादः पत्। ननु किमनेन सूत्रेण? पाददन्तेति सूत्रेण शस् प्रभृतिषु पदादेशसिद्धेरिति चेन्मैवम्। तत्सूत्रेण तदन्तस्यासिद्धे न हि तत्राङ्गाधिकारः, येन तदन्तविधिस्स्यात्। वस्तुतस्तु पूर्वपक्ष एवासङ्गतस्तव। पादशब्दस्य पदादेशः पाददन्तेति सूत्राद्विहितः। प्रकृते तु पाच्छब्दस्य पदादेश इति। तत्रापि शस्प्रभृतिषु पदादेशस्तेन विहितः। शस् प्रभृतिष्वजादिष्वेव अनेन विधीयते यदङ्गं भमित्युक्तत्वात्। सूत्रार्थो लिख्यते। अङ्गस्येत्यत्राधिकारः भस्येति प्राक्सूत्रमत्रानुवर्त्यते । अङ्गाधिकारीयत्वात्तदन्तविधिः पाद इति षष्ठी अङ्गस्येत्यस्य विशेषणम् । तदन्तविधित्वात् पादन्तस्य भस्य अङ्गस्य पदादेशस्स्यादित्यर्थः। अनेकाल्त्वात् सर्वादेशः। स च निर्दिस्यमानस्यादेशा भवन्तीति जराया जरस्वत्पाद एव भवति। तदेतदाह तदवयवस्य पाच्छब्दस्येति।

75. अग्निमत् ।अग्न्युपपदकान्मन्थतेः क्विप् अग्निमन् थ् सु इति स्थिते हल्ङ्याब्भ्यो दीर्घात्... 

हल्ङ्यादिलोपः। अग्निमन् थ्। अत्र परत्वात्संयोगान्तलोपे असिद्धत्वादनिदितामिति न

अग्निमथौ । अग्निमथः । अग्निमद्भ्यामित्यादि ।। **इति थान्ताः** 'ऋत्विग्-' (सू ३७३) इत्यादिसूत्रेणाञ्चेः सुप्युपपदे क्विन् ।४१५ **अनिदितां हल उपधायाः क्ङिति** । ।६।४।२४। हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः स्यात्किति ङिति च । 'उगिदचाम्-' (सू ३६१) इति नुम्, 'संयोगान्तस्य लोपः' (सू ५४), नुमो नकारस्य 'क्विन्प्रत्ययस्य कुः' (सू ३७७) इति कुत्वेन ङकारः प्राङ् । अनुस्वारपरसवर्णौ, प्राञ्चौ। प्राञ्चः । प्राञ्चम्, प्राञ्चौ ४१६ **अचः** । ।६।४।१३८। लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः स्यात् । ४१७ **चौ** । ।६।३।१३८। लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घः स्यात् । प्राचः । प्राचा, प्राग्भ्यामित्यादि । प्रत्यङ्, प्रत्यञ्चौ, प्रत्यञ्चः । प्रत्यञ्चम् , प्रत्यञ्चौ । 'अचः' (सू ४१६) इति लोपस्य विषयेऽन्तरङ्गोऽपि यण् न प्रवर्त्तते । 'अकृतव्यूहाः-' (प ५७) इति परिभाषया । प्रतीचः । प्रतीचा । 'अमुमञ्चति इति विग्रहे 'अदस् अञ्च्' इति स्थिते ।

---

लोपः। अग्निमथ्। जश्त्वचर्त्वे अग्निमत् ।

76. प्राङ् । प्रपूर्वकस्याञ्चतेः क्विन्। अञ्च क्विन् इति स्थिते क्विनस्सर्वापहारः प्रत्ययलक्षणन्यायेन क्विन्परकत्वात्किति चेत्यनिदितामिति न लोपः। अच्। न च अञ् च् इति ञकारस्य उपधात्वेन कथमत्र नलोप इति वाच्यम्। परसवर्णस्य न श्चापदान्तस्येत्यनुस्वारस्य च त्रैपादिकत्वेन सापादिकेन अनिदितामिति सूत्रेण विधीयमाननलोपदृष्ट्या असिद्धत्वात् ।अञ्चु इत्यस्य उदित्वेन उगित्वादुगिदचामिति नुम्। अन् च् प्रा न् च् सु हल्ङ्यादिलोपः। प्रान्च् । अत्र नकारस्यानुस्वारः प्राप्तः । चकारस्य संयोगान्तलोपः प्राप्तः। परत्वादनुस्वारे असिद्धत्वात् संयोगान्तलोपः। प्रान् ।न च अञ्चु-गतिपूजनयोरित्यत्रापि कथं न संयोगान्तलोप इति वाच्यम्। तत्र सुप्तिङन्तं पदमिति स्वादिष्विति वा पदत्वाभावात्। प्रकृते तु तदुभयविधमपि पदत्वमस्तीति न दोषः। प्रानोनकारस्य क्विन्प्रत्ययस्य कुरिति कुत्वम् । स च स्थानत आन्तर्यादनुनासिको ङकार एव भवति । प्राङ् ।

77. प्राञ्चौ प्राञ्च इत्यत्र चकारस्य औङि परतः पदान्तत्वाभावात् संयोगान्तलोपो न । न च स्वादिष्विति पूर्वस्य पदत्वं वर्णयित्वा तदन्तस्य चस्य संयोगान्तलोपो वाच्य इति वाच्यम् । औङः जसश्च सर्वनामस्थानत्वेन तयोः परतः पूर्वस्य स्वादिष्वसर्वनामस्थान इत्यपि पदत्वायोगात् ।

78. प्रतीचः । ननु प्रति अञ्च् शस् अनिदितामिति क्विन्नन्तत्वात् न लोपः।

४१८ **विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये** । ।६।३।९२। अनयोः सर्वनाम्नश्च टेरद्र्यादेशः स्यादप्रत्ययान्ते अञ्चतौ परे । 'अदद्रि अञ्च्' इति स्थिते, यण् । ४१९ **अदसोऽसेर्दादु दो मः** । ।८।२।८०। अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य मश्च । उ इति ह्रस्वदीर्घयोः समाहारद्वन्द्वः । आन्तरतम्याद् ह्रस्वव्यञ्जनयोर्ह्रस्वो दीर्घस्य दीर्घः ।

---

असर्वनामस्थानत्वादुगिदचामिति न नुम् । प्रति अच् अस् इति स्थिते, अत्र अच इति सूत्रादतो लोपः प्राप्तः । इको यणचीति इकारस्य यण् प्राप्तः । उभयोर्मध्ये परत्वाल्लोपे अबह्वाश्रयत्वेन अन्तरङ्गत्वात् यण् स्यात् । ततः पश्चात् अकारलोपे पत्य्त् च् अस् प्रत् य् च इत्येवं रूपं स्यान्न तु प्रतीच इत्यत आह। अकृतव्यूहा इति परिभाषयेति कौमुदी । निमित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्यं न कुर्वन्तीति यणादेशनिमित्तस्य अचोकारस्य अच इति विनाशोन्मुखतादृशाकाररूपनिमित्तप्रयुक्तं यण्रूपकार्यं न स्यादित्यर्थः ।

79. विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये । प्रत्ययग्रहणे तदन्तग्रहणमिति अप्रत्ययशब्दोऽत्राप्रत्ययान्तपरः। यद्वा अप्रत्ययपदस्य अञ्चादिविशेषणत्वेन येन विधिरिति तदन्तविधिना अप्रत्ययान्तपरः । नञोऽत्र न पर्युदासः,किन्तु प्रसज्यप्रतिषेध एव। तत्रापि प्रत्यये परतो नेति नार्थः। प्रत्ययलक्षणन्यायेन अदसादिपूर्वकस्याञ्चतेः क्विन्नन्तस्य क्विनोऽपहारेऽपि प्रत्ययपरकत्वेन अद्र्यादेशभावप्रसङ्गात्। किन्तु अविद्यमानः प्रत्ययः अप्रत्यय इति समासः। तथा च यस्माद्विष्वगादिपूर्वादञ्चतेः परस्सन्विहितः प्रत्ययः क्विन् क्विबादिर्न विद्यते लुप्यते स क्विनादिः प्रत्यय अप्रत्यय इत्युच्यते। सः अन्ते यस्य स शब्दः विष्वगादिपूर्वकोञ्चतिर्भवति । न च अप्रत्यय इत्यत्र तदन्तविधिमनभ्युपगम्य न विद्यते प्रत्ययो यस्मात् सोऽप्रत्यय इत्यर्थो वाच्य इति वाच्यम्। क्विन्क्विबादीनामभावेऽपि स्वादिप्रत्ययानां सद्भावेन अमुमुयञ्चौ इत्यादीनामसिद्धप्रसङ्गात् तस्मादप्रत्ययपदं योगेन (अविद्यमानः प्रत्यय इत्यवयवार्थेन) क्विन्क्विबादिप्रत्ययपरमेव ।

80. अदसोसेर्दादु दो मः। अदसः असेः दात् उः दः मः इति पदविभागः। असेरित्यत्र इकार उच्चारणार्थः। अदसो विशेषणमसेरिति। तेन येन विधिस्तदन्तस्येति तदन्तविधिः। उ इति लुप्तप्रथमाकम्। द इति षष्ठी। म इति प्रथमा। अकार उच्चारणार्थः। असान्तस्य अदसो दात्परस्य उस्स्यात्। दस्य मस्स्यादित्यर्थः। उदिति तपरकरणाभावेन आन्तरतम्यात् ह्रस्वव्यञ्जनयोर्दात्परयोः स्थाने ह्रस्वोकारस्स्यात् । दीर्घस्य स्थाने तु दीर्घोकारस्स्यात्। न च अविधीयमानोऽण् सवर्णान् गृह्णातीति अणुदित्सवर्णस्येति सूत्रात् सिद्धं हि। अत्र विधीयमानस्य उकारस्य कथं सवर्णग्राहकत्वम्? येन ह्रस्वोकारोच्चारणेऽपि दीर्घोकारस्यापि ग्रहणं भवेत्। अतः दीर्घस्थानेऽपि ह्रस्व एवोकारस्स्यादिति वाच्यम्। भाव्यमानोऽप्यण् क्वचित्सवर्णान् गृह्णातीति वचनात् । अन्यथा ऋत उदित्यादौ भाव्यमानस्य उकारादेस्तपरकरणं व्यर्थं स्यात्। यद्वा उश्च ऊश्च ऊ तयोस्समाहारः उ इति नपुंसकम्। उ-उ-नी ऊनि

अमुमुयङ् अमुमुयञ्चौ अमुमुयञ्चः । अमुमुयञ्चम् अमुमुयञ्चौ, अमुमुईचः । अमुमुईचा, अमुमुयग्भ्यामित्यादि । मुत्वस्यासिद्धत्वान्न यण् । **'अन्त्यबाधेऽन्त्यसदेशस्य'** (प १०४) इति परिभाषामाश्रित्य परस्यैव मुत्वं वदतां मते 'अदमुयङ्' । 'अः सेः सकारस्य स्थाने यस्य सः असिः, तस्य असेः' इति व्याख्यानात् 'त्यदाद्यत्वविषय एव मुत्वं नान्यत्र' इति पक्षे 'अदद्र्यङ्' उक्तं च (भाष्ये)–

'अदसोऽद्रेः पृथङ्मुत्वं केचिदिच्छन्ति लत्ववत् ।
केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते ।।' इति ।

'विष्वग्देवयोः' किम्–अश्वाची । 'अञ्चतौ' किम्–विष्वग्युक् । 'अप्रत्यये' किम्–विष्वगञ्चनम् ।

---

इति शब्दः। तदेतदाह उ इति ह्रस्वदीर्घयोस्समाहारद्वन्द्व इति कौमुदी।

81. **अमुमुयङ्** । अदस् अञ्च् सु। अनिदितामिति नलोपः । अदस् अच् स् विष्वग्देवयोरिति सर्वनामत्वेन अदसः टेः अद्रि इत्यादेशः । अदद्रि अच् स् सुलोपः । अदद्रि अच् अदसोसेरिति दाभ्यां परयोः अकाररेफयोः उत्वम् । दयोर्मत्वम्। अमु मु इ अच् । इको यणचि । अमु मु यच् । उगिदचामिति नुम्। संयोगान्तलोपः। क्विन्प्रत्ययस्य कुरिति कुत्वेन अनुनासिको ङकारः अमुमुयङ् ।

82. अन्त्यबाधेऽन्त्यसदेशस्येति । ननु अदसोसेरिति सूत्रे असन्तस्य अदसोऽवयवात् दात् इत्यर्थः। पूर्वमुक्तो हि कथमधुना अन्त्यबाधप्राप्तिरिति चेदुच्यते। अदसोसेरिति सूत्रे अदश्शब्दस्य अवयवषष्ठीं केचित्, स्थाने षष्ठीं केचिच्च इच्छन्ति । स्थाने षष्ठीमिच्छतां मते तु अलोन्त्यपरिभाषोपतिष्ठते। तथा च असन्तस्य अदसोन्त्यस्य दात्परस्य उत्वमित्यर्थो लभ्यते । एतन्मते तु अद्र्यादेशे कृते अदद्रि । अत्र अदसो योऽन्त्यः इकारः स दात्परो न भवति, यो दात्परः रेफः स नान्त्यः इति अदसोन्त्यस्य इकारस्य दात्परत्वाभावेन कार्याप्राप्तिरूपे बाधे सति अन्त्यबाधेऽन्त्यसदेशस्येति परिभाषा आश्रियत इति। एवञ्च प्रकृते पूर्वोक्तरीत्या अन्त्यबाधे सति अन्त्यसदेशस्य रेफस्य दात्परत्वेन स्यादुत्वमिति। अतः परयोरेव दकाररेफयोर्मत्वोत्वे, न तु पूर्वयोर्दकारयोः अदसोन्त्यत्वाभावात्तत्रेति अदमुयङ् इत्येव रूपम् । ननु अदमुयङ् इत्यत्र दकारोपरि यकारस्य दात्परत्वे सत्यपि अन्त्यत्वाभावेन उत्वाभावेऽपि दस्य मत्वादेशं प्रति न कोऽपि बाध इति, अमुमुयङिति रूपं स्यादिति चेन्न। मत्वोत्वयोस्सन्नियोगशिष्टत्वेन यस्माद्दात्परस्य उत्वप्राप्तिस्तस्य दस्यैव मत्वमिति । अत एव मुत्वमित्युभयोर्वैशिष्ट्येन निर्देशश्च सङ्गच्छते। ननु अमुमित्यादौ अदसोन्त्यस्य दात्परस्य उत्वं, दस्य मत्वञ्च निर्बाधमेवेति, अदसोसेरिति सूत्रस्य तत्र चरितार्थत्वेन सूत्रवैयर्थ्याभावात्किमनेन

अप्रत्ययग्रहणं ज्ञापयति 'अन्यत्र धातुग्रहणे तदादिविधिः' इति। तेनायस्कारः । 'अतः कृकमि–' (सू १६०) इति सः । उदङ्, उदञ्चौ, उदञ्चः । शसादावचि **४२० उद ईत्** । ।६।४।१३९ । उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेर्भस्याकारस्य ईत्स्यात् । उदीचः । उदीचा, उदग्भ्यामित्यादि ।

---

अन्त्यबाधेऽन्त्यसदेशस्येति परिभाषाश्रयणेन इत्याशङ्क्य पक्षान्तरमवतारयति – अः सेः सकारस्य स्थाने यस्येति, इदमुपलक्षणम् । पूर्वोक्तेन अदसोन्त्यस्येति व्याख्यानेनापि पूर्वोक्तरीत्या मुत्वस्य त्यदाद्यत्वविषय एव व्यवस्थापितत्त्वात्। तथा हि। अमुम् अत्र अदस् अम् इति स्थिते त्यदाद्यत्वं पररूपत्वञ्च अद अम् अस्य अदेत्यस्य असान्तादश्शब्दत्वेन असेरदसो योऽन्त्यः दाकारोपरि अकारः। स दात्पर एवेति तस्य उत्वं, दस्य च मत्वं, अमु आम अमि पूर्वः अमुं अस्मिंस्तु पक्षे अदद्यङित्येव रूपम्। तस्मात्पक्षत्रयसम्मतं अदसोसेरिति सूत्रस्य मुख्यं लक्ष्यममुमित्येव । इदञ्च मतत्रयं न स्वकपोलकल्पितम्। किन्तु वार्तिककारप्रोक्तमित्याह । अदसोद्रेरित्यादिश्लोकेन । अदसोद्रेरिति श्लोकस्यायमर्थः। केचित् अदसः अद्रेश्च पृथग्युगपदेव मुत्वमिच्छन्ति। अत्र दृष्टान्तमाह लत्ववदिति। चलीक्लप्यत इत्यत्र कृपो रो ल इत्युभयो रेफयोर्यथैकदैव लत्वं तदेत्यर्थः। केचित्तु अन्त्यसदेशस्य मुत्वमिच्छन्ति। एके तु न। उभयोरपि मुत्वं नेच्छन्ति। कुत इत्यत आह। आसेर्हि दृश्यत इति। हि यतः अः त्यदाद्यत्वं सेस्सस्य स्थाने यस्य तस्य अदसो मुत्वं निर्बाधं दृश्यते, तस्मादित्यर्थः।

८३. अप्रत्यग्रहणं ज्ञापयतीति। ननु विष्वग्देवयोरिति सूत्रे अप्रत्ययपदाभावे क्विन् क्विबादिप्रत्ययभिन्नल्युडादिषु प्रत्ययान्तेऽञ्चते परेऽपि विष्वग्देवादेष्टेरद्र्यादेशस्स्यादिति हि दोषः। अस्य सूत्रस्य उत्तरपदाधिकारस्थत्वेन अञ्चतावुत्तरपदे परे विष्वगादेष्टेरद्र्यादेश इत्यर्थेऽपि विष्वग्द्र्यङित्यादावेव स्यात्।। न तु विष्वगञ्चनमित्यदौ । तत्र अञ्चनमिति ल्युडन्तस्य उत्तरपदत्वेन अञ्चतिमात्रस्योत्तरपदत्वाभावात् । न च विष्वद्र्यङित्यादावपि अञ्चत्युत्तरपदकत्वं नास्ति । अञ्च् इत्यस्यैव सत्वेन अञ्चतीत्यस्य असत्त्वादिति वाच्यम् । इक्स्तिपौ धातुनिर्देशाविति अञ्चुधातोस्तिपा निर्देशमात्रं सूत्रे कृतमिति स्तिपानिर्देशेनाऽपि अञ्च् इति प्रकृतिमात्रस्यैव ग्रहणम्। न तु तिङन्तस्येति। अतः किमनेनाप्रत्यय इत्यनेनेत्या–शङ्क्याऽऽह। अप्रत्ययग्रहणं ज्ञापयतीति। अयं भावः। उक्तरीत्या अप्रत्ययग्रहणं व्यर्थं सत् धातुग्रहणे तदादिविधिं ज्ञापयति तेन च अञ्चतावित्यस्य आञ्चत्यादावित्यर्थः। अञ्चतिरादौ यस्य ल्युडादिप्रत्ययस्य सः अञ्चत्यादिः अञ्चनमित्यादिषु उत्तरपदेषु विष्वगादेष्टेरद्र्यादेशःस्यादिति प्रकृते विष्वगञ्चनमित्यत्र अद्र्यादेशे प्राप्ते अप्रत्ययग्रहणं तमादेशं निवारयित्वा (अविद्यमानक्विनादिप्रत्ययान्तत्वाभावेन विद्यमानल्युट्प्रत्यन्तत्वादञ्चनमित्यस्य) स्वांशे चरितार्थमभवदिति एतत्सूत्रादन्यत्र सर्वत्रापि धातुग्रहणे तदादिविधिस्सिद्ध इति भावः ।

४२१ **समः समि** । ।६।३।९३। अप्रत्ययान्तेऽञ्चतौ परे समः समिरादेशः स्यात् । सम्यङ्, सम्यञ्चौ, सम्यञ्चः । समीचः । समीचा । ४२२ **सहस्य सध्रिः** । ६।३।९५। अप्रत्ययान्तेऽञ्चतौ परे । सध्र्यङ् । ४२३ तिरसस्तिर्य लोपे अलुप्ताकारेऽञ्चतौ वप्रत्ययान्ते परे तिरसस्तिर्यादेशः स्यात्। स्यात् । तिर्यङ् तिर्यञ्चौ, तिर्यञ्चः । तिर्यञ्चम्, तिर्यञ्चौः तिरश्चः। तिरश्चा, तिर्यग्भ्यामित्यादि ।

---

84. "समस्समि" समि इति लुप्तप्रथमाकं पदम्। समीतीकारस्य नेत्वम्, अनुनासिकत्वाभावात्। सत्यप्यनुनासिकत्वे सम्यादेशविधानारम्भसामर्थ्याद्वा। वस्तुतस्तु सम इक् इति सूत्रयितव्यम्। सम इगागमस्स्यात्। कित्त्वादन्त्यावयवः। सम्यगिति रूपं सिध्यत्येवेति।

85. "तिरसस्तिर्यलोपे"। ननु न विद्यते लोपो यस्य तस्मिन् नलोपे लोपश्चाञ्चत्यवयवस्यैव, न त्वञ्चतेरसम्भवात्। लुप्यमानश्चाञ्चत्यवयवः। अनिदितामिति सूत्रान्नकारो भवति। अच इति सूत्रादकारो भवति। संयोगान्तस्येति चकारो भवति। इति अत्र कस्यावयवस्य लोपाभावो विवक्षित इत्यत आह । लुप्ताकारेञ्चताविति । ननु सूत्रे अलोप इति सामान्यतो निर्देशेन कथं विशेषाकारेण अकारस्यैव लोप इति चेत्, व्याख्यानतो विशेषप्रतिपत्तिरिति परिभाषावशादकारस्यैव लोपो विवक्षित इति ज्ञायते। अन्यथा अस्य लोपः अलोपः। तस्मिन्निति विरुद्धार्थोऽपि सिद्ध्चेत्। यद्वा तिर्यादेशात्पश्चादेव संयोगान्तलोप इति न च लोपविवक्षावकाशः। अकारनकारयोरुभयोरपि लोपो विवक्षित एव। न च तर्हि लुप्ताकारेऽञ्चतावित्येतावदेव किमित्युक्तमिति वाच्यम् । नकारस्य लोपे सत्येव पश्चात् अच इत्यकारलोपसंभवेन अकारलोप इत्यनेनापि अलोप उपलक्षितो भवतीत्याशयेन अलुप्ताकार इत्युक्तमिति । केचित्तु अस्य लोपः अलोपः न विद्यते अलोपो यस्य तस्मिन्नलोप इति अकारोऽत्र प्रश्लिष्ट इत्याहुः। अस्मिन्मते तस्मान्नुडचीति अनलोप इति भवितव्ये नुडागमाभावस्सौत्रः। अ अ लोपे नञः अपदत्वात् अतो गुण इत्यपदान्तस्य नञोऽकारस्य पररूपत्वम्। अलोपे इत्यकारप्रश्लेषो बोध्यः। वस्तुतस्तु "तिरस इश लोपे" इति न्यासः । विष्वग्देवतयोरिति सूत्राट्टेरनुवृत्तत्वेन अन्त्यस्य टेरस इत्यस्य इशादेशः। शित्वात्सर्वादेशः । तिरि अङ् तिर्यङिति रूपं सिध्यत्येव इति।न चैवं टेरनुवृत्तौ समस्समि इति सूत्रेऽपि टेरनुवृत्तिस्स्यात्। तेन समष्टेरमस्सम्यादेशे सम्यगिति रूपं स्यादिति वाच्यम्। सम इगिति न्यासस्य कृतत्वेन समष्टेरिगागमेऽपि सम्यङिति रूपसिद्धेः। अतः समस्सम्यादेशविधानं तिरसस्तिर्यादेशविधानञ्च गौरवावहत्वेन व्यर्थमेव। किञ्च अलोप इत्यप्यपनीय अभ इति सुवचम्। तथा च "तिरस इशभे" इति न्यासः। अप्रत्ययान्ते अञ्चतौ परे तिरसः स्तिर्यादेशस्स्यात् न तु भविषये इत्यर्थः।

**४२४ नाञ्चेः पूजायाम्** । ६।४।३०। पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न स्यात् । अलुप्तनकारत्वान्न नुम् प्राङ्, प्राञ्चौ, प्राञ्चः । नलोपाभावादकारलोपो न । प्राञ्चः । प्राञ्चा, प्राङ्भ्याम् इत्यादि । प्राङ्खु, प्राङ्क्षु, प्राङ्षु । एवं पूजार्थे प्रत्यङ्ङादयः । क्रुञ्च कौटिल्याल्पीभावयोः' । अस्य 'ऋत्विग्–' (सू ३७३) आदिना नलोपाभावोऽपि निपात्यते । क्रुङ्, क्रुञ्चौ ।क्रुञ्चः क्रुङ्भ्यामित्यादि । 'चोः कुः' (सू ३७८) पयोमुक्, पयोमुग्, पयोमुचौ, पयोमुचः । 'व्रश्च–' (सू २९४) इति षत्वम् । 'स्कोः–' (सू ३८०) इति सलोपः । जश्त्वचर्त्वे । सुवृट्, सुवृड् सुवृश्चौ, सुवृश्चः । सुवृट्त्सु, सुवृट्सु ।। **इति चान्ताः** ।। वर्तमाने पृषन्महद्बृज्जगच्छतृवच्च' (उ २४१) एते निपात्यन्ते, शतृवच्चैषां कार्यं स्यात् । उगित्त्वान्नुम् । 'सान्त महतः–' (सू ३१७) इति दीर्घः । मह्यते पूज्यत इति महान्, महान्तौ, महान्तः । हे महन् । महतः महता, महद्भ्यामित्यादि ।

---

86. "नाञ्चेः पूजायाम्" सर्वनामस्थानेषु नलोपे सत्यपि उगिदचामिति नुमा रूपाणां तौल्येऽपि असर्वनामस्थानेषु गत्यर्थकस्याञ्चतेरनिदितामिति नलोपे प्राचा प्राग्भ्यामित्यादीनि रूपाणि भवन्ति। पूजार्थकस्य तु अनेन सूत्रेण नलोपनिषेधात् प्राञ्चः प्राञ्चा प्राङ्भ्यामित्यादीनि रूपाणि भवन्तीति विशेषः ।

87. क्रुङ् । क्रुञ्चधातोरनिदित्वेन नलोपे प्राप्ते ऋत्विग्दधृगिति सूत्रे क्रुञ्चामिति निर्देशान्नलोपो न स्यात्। सति तु नलोपे कृचामिति स्यात् । तस्मात् निपातनादेव नलोपाभावः । अत एव नलोपाभावोऽपि निपात्यते इति कौमुदी। अपिना क्विन्नन्तत्वञ्च निपात्यत इति बोध्यम् ।

88. शतृवच्चैषां कार्यं स्यात् शत्रन्तस्येव कार्यं स्यात्। तस्मादेव महच्छब्दस्य उगित्वाभावेऽपि शत्रन्तस्य उगित्वेन यथा नुम् तथा नुम् स्यादिति कृत्वा उगित्वान्नुमिति कौमुदी। न च महदादिषु शत्रन्तकार्यमतिदिश्यते हि । शतृवच्चैषां कार्यं स्यादिति। न पुनश्शत्रन्तत्वं महदादिष्वतिदिश्यते। अत उगित्वान्निमिति शत्रन्तत्वातिदेशो विरुद्ध इति वाच्यम्। वार्तिके शतृवदिति शत्रन्तत्वमेव तेष्वतिदिश्यत इति उगित्त्वान्नुमिति । शत्रन्तत्वाति–देशश्च शत्रन्तस्य यादृशं कार्यभावत्वं तादृशकार्यभाक्त्वमेवेति । फलितार्थकथनं शतृवच्चैषां कार्यं स्यादिति च। अतो न परस्परविरोध इति।

89. हे महन् शत्रन्तत्वातिदेशेन उगित्वान्नुमि सान्तमहत इति दीर्घो न, संबुद्धित्वात् । हे महन् त् सु। हल्ङ्यादिलोपः। संयोगान्तलोपः। हे महन्। महतः। महच्चब्दाच्छसि असर्वनामस्थानत्वात् न नुम्।

४२५ **अत्वसन्तस्य चाधातोः** । ।६।४।१४।अत्वन्तस्योपधाया दीर्घः स्याद्धातुभिन्नासन्तस्य चासम्बुद्धौ सौ परे । परं नित्यं च नुमं बाधित्वा वचनसामर्थ्यादादौ दीर्घः । ततो नुम् । धीमान्, धीमन्तौ , धीमन्तः । हे धीमन् । शसादौ महद्वत् । धातोरप्यत्वन्तस्य दीर्घः । गोमन्तमिच्छति, गोमानिवाचरतीति वा क्यजन्तादाचारक्विबन्ताद्वा कर्तरि क्विप् । 'उगिदचाम्–' (सू ३६१) इति सूत्रेऽञ्ग्रहणं नियमार्थम् । 'धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेव' इति । तेन 'स्रत्' 'ध्वत्' इत्यादौ न । 'अधातोः' इति अधातुभूतपूर्वस्यापि नुमर्थम् गोमान्, गोमन्तौ, गोमन्तः–इत्यादि । 'भातेर्डवतुः' (उ ३६३) भवान्, भवन्तौ, भवन्तः । शत्रन्तस्य त्वत्वन्तत्वाभावान्न दीर्घः । भवतीति भवन् ।४२६ **उभे अभ्यस्तम्** । ।६।१।५। षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः ।

---

90. धीमान् । धीरस्यास्तीति धीशब्दान्मतुपि उकारपकारयोरित्त्वेन लोपे धीमत् इति स्थिते अत्र उगित्वान्नुम् प्राप्तः। अत्त्वसन्त्वस्यचेत्युपधादीर्घश्च प्राप्तः। उभयोर्मध्ये परत्वात् दीर्घे कृतेऽप्यकृतेऽपि नुमागमस्य सत्त्वेन नित्यत्वाच्च नुमेव यदि स्यात् तर्हि अत्त्वसन्तस्येति सूत्रे अत्त्वन्तस्य ग्रहणं व्यर्थमेवेति तत्सामर्थ्यादादौ दीर्घ एव । अतु इत्युकारानुबन्धग्रहणफलन्तु भवतीति भवन् इति शत्रन्ते दीर्घाभाव इति वक्ष्यते ।

91. गोमन्तमिच्छतीत्यत्र गोमच्छब्दात् क्यचि गोमद्यति । ततः क्विपि गोमत् । अयं शब्दोऽपि क्विबन्तत्वेन धातुरेव, न चायमत्वन्तो न भवतीति वाच्यम् । क्यच्क्विपोर्लोपे मतुप एवान्ते श्रवणात् । अत्त्वसन्तस्येति सूत्रे अधातोरिति पर्युदासस्य अत्त्वन्तविषये अनङ्गीकृतत्वेन प्रकृते अत्त्वन्तस्य धातोरपि गोमतः उपधादीर्घः। गोमात्। उगिदचामिति नुम्। हल्ङ्यादिलोपसंयोगान्तलोपः। गोमान् इति रूपम् ।

92. स्रत्, ध्वत्, स्रंसु, ध्वंसु, भ्रंसु, अवस्रंसने इति भ्वादिः। ततः क्विप्।स्रन् स् सु इति स्थिते, अनिदितामिति नलोपः। स्रस् सु सुलोपः। वसुस्रंस्विति दत्वे स्रत् (ह्रस्वस्य पिति कृति तुगिति क्विपः) पित्कृत्त्वेन तुगागमः स्रस् त् सु हल्ङ्यादिलोपः। स्रस् त् संयोगान्तलोपं बाधित्वा स्कोस्संयोगाद्योरिति सलोपः। स्रत्। एवमेव ध्वदिति रूपमूह्यम्। अत्र स्रंसु (ध्वंसु) इति धातोरुगित्त्वेन क्विपो धातुत्वेन च स्रदित्यस्य उगिद्धातुत्वेन उगिदिति नुमि प्राप्ते अचामिति नियमेन तन्निषेधः। अधातुभूतपूर्वस्यापि नुमर्थमित्यत्र नुम्विध्यर्थमित्यर्थः। इदं सर्वञ्च उगिदचामिति सूत्रविमर्श एव स्पष्टीकृतं मया।

४२७ **नाभ्यस्ताच्छतुः** । ।७।१।७८। अभ्यस्तात्परस्य शतुर्नुम् न स्यात् । ददत्, ददद्, ददतौ, ददतः ४२८ **जक्षित्यादयः षट्** । ।६।१।६। षड् धातवोऽन्ये जक्षितिश्च सप्तम् एतेऽभ्यस्तसंज्ञाः स्युः जक्षत्, जक्षद् , जक्षतौ, जक्षतः । एवं जाग्रत्, दरिद्रत्, शासत्, चकासत् । दीधीवेव्योर्ङित्त्वेऽपि छान्दसत्वाद्व्यत्ययेन परस्मैपदम् । दीध्यत् , वेव्यत् ।। **इति तान्ताः** ।। गुप् गुब्, गुपौ, गुपः । गुब्भ्यामित्याद ।। **इति पान्ताः** ।।

---

93. शत्रादेशे लशक्वतद्धित इति शस्य "उपदेशेऽजनुनासिक इदि"ति ऋवर्णस्य च इत्वे, नलोपे, अत् इति शिष्यते । भूधातोर्लटश्शत्रादेशे भू अत् इति स्थिते, शतुश्शित्त्वेन (सार्वधातुकत्वात्) (तिङ् शित्सार्वधातुकं) सार्वधातुकार्थधातुकयोरिति गुणे भो अत्। एचोऽयवायावः भवत् । उगिदचामिति नुम्, भवन् त् संयोगान्तलोपः भवन् हल्ङ्याादिलोपस्सोः प्रथममेव कार्यः।

94. **"जक्षित्यादयष्षट्"** – ननु एषां षड्धातूनां जक्षतिराद्यन्ते जक्षित्यादय इति समासे जक्षभक्षहननयोः जागृ निद्राक्षये, दरिद्रा दुर्गतौ, चकासृ दीप्तौ, शासु अनुशिष्टौ, दीधीङ् दीप्तिदीवनयोः, वेवीङ् वेतिनातुल्ये इत्यदादीनां सप्तानामपि धातूनां अदभ्यस्तात् सिजभ्यस्तविदिभ्यश्चेत्यभ्यस्तकार्यप्राप्तेरावश्यकत्वेन षण्णामेव स्यात् । न तु वेवीङ् धातोस्सप्तमस्य। न च वेवीङ अभ्यस्तकार्याभाव इष्ट इति वाच्यम्। दीधी वेवीटाम् ईवर्णयो दीधीवेव्योरिति दीधीवेव्योस्सर्वकार्येष्वपि साहचर्यस्याभ्युपगमेन प्रकृते अभ्यस्तकार्ये वैषम्याङ्गीकृतेरप्रामाणिकत्वात्। ननु तर्हि जक्षतिरादिः पूर्वः एषान्त इत्यतद्गुण संविज्ञानबहुव्रीहिसमासोऽस्तु। तेन जक्षतिभिन्नानां षण्णां धातूनामभ्यस्तसंज्ञा स्यान्न तु जक्षतेरिति चेन्मैवम्। अदभ्यस्तात् जक्षति सिजभ्यस्तविदिभ्यश्च अजक्षुरिति रूपासिद्धेः। न च जक्षन्ति अजक्षन्निति रूपयोरेवेष्टापत्तिरस्माकमिति वाच्यम्। जक्षित्यादय इति सूत्रे जक्षतिपदग्रहणं कृतवता पाणिनिना जक्षितेरभ्यस्तकार्यागमस्य अङ्गीकृतत्वात्। अन्यथा जागर्त्यादयष्षडित्येव सूत्रयेत्पाणिनिः। तथा च नात्र अतद्गुणसंविज्ञानमपि बहुव्रीहिः। तस्मादत्र जक्षितिग्रहणमेव अभ्यस्तसंज्ञकधातुषु जक्षितिरपि वर्तत इति ज्ञापयतीति सिद्धम्। तस्मात्तद्गुणविज्ञाने वा अतद्गाणसंविज्ञाने वा बहुव्रीहौ जक्षित्यादीनां अभ्यस्तानां सप्तत्वेन जक्षित्यादयष्षडिति कथनमनुपपन्नम्, इत्यालोच्याह तत्त्वबोधिन्याम्। जक्ष् इति पृथक्पदमिति। तथा च अयमर्थस्सूत्रस्थ जक्ष्धातुरेकः इत्यादय इत्यतद्गुणसंविज्ञानबहुव्रीहिणा जक्षिति भिन्ना ष्षट्च धातवोऽभ्यस्तसंज्ञा इति। अमुमेवार्थमभिप्रेत्याह कौमुद्यां षड्धातवोऽन्ये जक्षिति श्च सप्तम इति ।

95. "ङित्वेऽपि छान्दसत्वाद्व्यत्ययेनेति।" ननु अनुदात्तङित आत्मनेपदमिति ङित्वे आत्मनेपदित्वनियमेन दीधीवेव्योः ङित्वेन कथं परस्मैपदित्वं येन शत्रादेशस्स्यात्? इत्याशङ्क्याह ङित्त्वेपि परस्मैपदित्वरूपविपर्ययस्य कारणं छान्दसत्वमेवेति भावः ।

४२९ **त्यदादिषु दृशोऽनालोचने कञ्च** । ।३।२।६०। त्यदादिषूपपदेष्वज्ञानार्थाद् दृशेर्धातोः कञ्, स्यात्, चात् क्विन् ।

---

96. "त्यदादिषु दृशोऽनालोचने कञ्च।" अत्र आलोचनमित्यविशेषेण निर्देशः। पश्यार्थैरिति सूत्रे तु विशेषाकारेण निर्देशः । अत एव तत्र चाक्षुषज्ञानमिति ज्ञानविशेषप्रतिपादिम्वम्। तत्र ज्ञानमात्रप्रतिपादकत्वमत्रेति भेदः। अर्थस्य विवक्षाधीनत्वादेकस्यापि पदस्य विवक्षया सामान्यविशेषार्थद्वयबोधकत्वं सुसङ्गतमेवेति न तत्र शङ्का कार्या। नञोऽत्र प्रसज्यप्रतिषेधोऽर्थः। तेन ज्ञानार्थे अवर्तमानाद्दृश इत्यर्थः। पर्युदासे तु ज्ञानभिन्नार्थे वर्तमानादित्यर्थस्स्यात्। सति तु तस्मिन्नर्थे तादृगित्यत्र दृक् ज्ञानभिन्ने तस्मिन्नर्थे वर्तते। न कस्मिन्नपि। तादृगित्यस्य रूढशब्दत्वेन अवयवार्थाभावात्। तस्मात् ज्ञानभिन्नार्थावृत्तित्वादत्र दृशः क्विन्न स्यात्। ज्ञानार्थावृत्तित्वन्तु अस्यैव दृशो निरर्थकत्वेन ज्ञानार्थावृत्तित्वात्। इदमेव कौमुद्यामज्ञानार्थाद् दृश इत्युक्तम्। न विद्यते ज्ञानार्थः यस्य तस्मादज्ञानार्थादित्यत्र समासः। अज्ञानमर्थो यस्य तस्मादिति तु समासो न वाच्यः। निरर्थकस्य दृशः अज्ञानरूपार्थबोधकत्वस्याप्यसंभवात्। ज्ञानार्थे तु तं पश्यतीति तद्दर्श इति स्यात्। अनालोचन इत्यस्य अचाक्षुषज्ञानार्थादित्यर्थे तु तद्ब्रह्म तं परमात्मानं वा पश्यति चेतसा साक्षात्करोतीति तद्दर्श इति न सिद्ध्येत्। दृशिर् प्रेक्षण इति दृशः प्रेक्षणार्थत्वेऽपि इदमेव ज्ञापकं ज्ञानमप्यर्थ इति। अत एव पश्यार्थैरिति सूत्रे पश्यपदस्य ज्ञानमर्थ इत्युक्तम्। ननु तमिवेमं पश्यन्ति जनास्तादृगिति तादृग्च्छब्दस्य अवयवार्थस्वीकारे दृशः ज्ञानार्थवृत्तित्वात् कथं तदा क्विन्प्रत्ययः। येन तादृगिति स्यादिति चेत्, उच्यते। यत्र दृशः ज्ञानेन विषयीकरणवृत्तित्वं तत्रैव दृशो ज्ञानार्थकत्वमभ्युपगम्यते। यथा भक्तस्त्वा पश्यति चक्षुषेत्यत्र चक्षुर्जन्यज्ञानेन त्वां विषयीकरोतीति पश्यतीत्यस्यार्थः। यत्र तु पुनर्ज्ञानविषयत्वमात्रवृत्तित्वं तत्र दृशः ज्ञानार्थकत्वं नाभ्युपगम्यते। यथा तमिवेमं पश्यन्ति जना इत्यत्र अयं जनानां तत्तुल्यत्वज्ञानविषयो भवतीत्यर्थः। ननु स इवायं पश्यतीति तादृगिति व्युत्पत्तौ अयं स इवेति तत्तुल्यत्वज्ञानविषयो भवतीत्यर्थस्सिद्ध्यति। तमिवेमं पश्यन्तीति व्युत्पत्तौ तु जनास्तत्तुल्यत्वज्ञानेन इमं विषयीकुर्वन्तीत्येवार्थ इति चेत् मैवम्। यत्र दृशः कर्त्रर्थाभिधायकत्वं तत्रैव विषयीकरणवृत्तित्वम् यथा तद्दर्श इत्यत्र दर्श इति पदं दर्शनकर्तारं भक्तमभिधत्ते, भक्तो भगवन्तं पश्यति विषयीकरोतीत्यर्थेन दृशिकर्तुर्भक्तस्य विषयीकर्तृत्वात्। यत्र तु कर्मार्थाभिधायकत्वं तत्र दृशो विषयवृत्तित्वमेव। यथा तादृगित्यत्र तमिवेमं पश्यन्तीति इममिति दर्शनक्रियायां कर्मभूतो यः देवदत्तादिः तमेव दृक्पदमभिधत्ते न तु कर्तृभूतान् जनान् इति। न तत्र विषयीकरणवृत्तित्वमिति। अपि तु तादृगित्यस्य जनकर्तृकतत्तुल्यत्वज्ञानविषयो देवदत्तादिरेवार्थः। दृशिधातोः कर्त्रभिधायकत्वेन विषयीकरणवृत्तित्वमिति यत्तदेव ज्ञानार्थवृत्तित्वं कर्माभिधायकत्वेन विषयवृत्तित्वं अवृत्तित्वं वेति यत्तद्द्वयमप्यज्ञानार्थवृत्तित्वमेवेति फलितम् ।

**४३० आ सर्वनाम्नः ।** ।६।३।९१। सर्वनाम्न आकारोऽन्तादेशः स्याद् दृग्दृशवतिषु । कुत्वस्यासिद्धत्वात् 'व्रश्च–' (सू २९४) इति षः । तस्य जश्त्वेन डः । तस्य कुत्वेन गः तस्य चर्त्वेन पक्षे कः । तादृक्, तादृग्, तादृशौ, तादृशः । षत्वापवादत्वात्कुत्वेन खकारः' इति कैयटहरदत्तादिमते तु चर्त्वाभावपक्षे ख एव श्रूयते, न तु गः, जश्त्वं प्रति कुत्वस्यासिद्धत्वात् । 'दिगादिभ्यो यत्' (सू १४२९) इति निर्देशान्नासिद्धत्वमिति वा बोध्यम् । 'व्रश्च–' (सू २९४) इति षत्वम्, जश्त्वचर्त्वे । विट्, विड्, विशौ, विशः । विशम् ।

---

97. असर्वनाम्नः । असर्वनाम्न इति सूत्रिते तु अतो गुणस्स्यात्। तेन तदृगित्येव स्यान्न तु तादृगिति। न च उच्चारणसामर्थ्यान्न तु पररूपमिति वाच्यम्। अकारादेशविधानाऽभावे तदृगित्येव स्यादिति उच्चारणसामर्थ्यस्य हल्निवारणेन चरितार्थत्वात्। न च त्यदादीनाम इति अकारादेशेनैव हल्श्रवणाभावे पुनरकारविधानम् (असर्वनाम्न इति) अकारस्य व्यर्थमेव इति वाच्यम्। त्यदादीनां विभक्तिपरकत्व एव अकारोऽन्तादेशः, न तु दृग्दृशादिष्विति। अत्र त्यदाद्यत्वाभावात्। न च तमिव पश्यन्तीति तादृगिति विग्रहे विभक्तीनां लोपात्, प्रत्ययलक्षणन्यायेन विभक्तिपरकत्वेन त्यदाद्यत्वं स्यादिति वाच्यम्, सुपो धातुप्रातिपदिकयोरिति विधीयमानस्य सुब्लुकः न लुमताङ्गस्येति प्रत्ययलक्षणनिषेधात्। तस्मादुच्चारणसामर्थ्यदिवात्र पररूपं बाधित्वा सवर्णदीर्घस्स्यादेवेति किं दीर्घादेशेनेति शङ्का निरवकाशैव।

98. तादृक्। तद् दृश् क्विन्। क्विनस्सर्वापहारः। तद् दृश् क्विनः कृत्वात्, कृत्तद्धितेति स्वादयः। तद् दृश् सु हल्ङ्यादिलोपः। क्विन्प्रत्ययस्य कुरिति कुत्वम्, तद् दृक् आसर्वनाम्नः त आ दृक्। अकस्सवर्णे दीर्घः। तादृक्। अत्र क्विन्प्रत्ययस्येति कुत्वस्यासिद्धत्वेन व्रश्चेति सूत्रात्, शान्तत्वेन तादृश् इत्यस्य षकारोन्तादेशस्स्यादिति शस्य षत्वम्। तस्य झलां जशोऽन्त इति जश्त्वम्। तस्य क्विन्प्रत्ययस्य कुरिति कुत्वम्। न च सकृद्गतिन्यायात् क्विन्प्रत्ययः पुनर्न स्यादिति वाच्यम्। पूर्वप्राप्तस्य असिद्धत्वेन अप्राप्ततुल्यत्वात्। तस्य वावसान इति चर्त्वम्। तादृक्। कैयटहरदत्तादयस्तु तादृश् इत्यत्र व्रश्चेति षत्वे प्राप्ते परस्तात्कुत्वम् तस्य च असिद्धत्वात्पुनष्षष्ठचन्तस्य अपवादत्वात्पुनः कुत्वमेव स्यात्। न च असिद्धस्य कथमपवादत्वमिति वाच्यम्। षत्वदृष्ट्या कुत्वस्यासिद्धत्वेऽपि कुत्वदृष्ट्या षत्वस्य सिद्धत्वेन कुत्वस्य षत्वापवादत्वं युक्तमेवेति। न चात्र पुनरपि पूर्ववत्कुत्वस्यापि सिद्धत्वात् षत्वं स्यादिति वाच्यम्। षत्वं बाधित्वा (अपवादत्वेन) कुत्वस्य प्रवृत्तत्वान्नास्ति तद्बाधनशक्तिः। पुनष्षत्वस्येति शकारस्थाने आन्तरतम्यात्खः। तादृख् (वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणा इति।) वावसाने इति चर्त्वम्। तादृक्। चर्त्वाभावपक्षे तु जश्त्वं न स्यात्। जश्त्वदृष्ट्या परत्वेन क्विन्प्रत्ययस्येति कुत्वस्यासिद्धत्वात् तादृख् इत्याहुः। नन्वेवं दिक् दिग् इति पक्षे गकारो न श्रूयेत। तथा हि–दिश् इत्यस्य ऋत्विगादित्वात्क्विनि क्विन्प्रत्ययस्येति षत्वापवादत्वात्कुत्वेन खेत्यस्यासिद्धत्वान्न जश्त्वमिति पक्षे दिख् इत्येव स्यादित्याशङ्क्याह–दिगादिभ्यो यदिति निर्देशादिति कौमुदी ।

४३१ **नशेर्वा** । ।८।२।६३। नशेः कवर्गोऽन्तादेशो वा स्यात्पदान्ते । नक् नग्, नट्, नड्, नशौ , नशः । नग्भ्याम्, नड्भ्यामित्यादि । ४३२ **स्पृशोऽनुदके क्विन्** । ।३।२।५८। अनुदके सुप्युपपदे स्पृशेः क्विन् । स्यात् । घृतस्पृक्, घृतस्पृग्, घृतस्पृशौ, घृतस्पृशः । क्विन् प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणात्क्विप्यपि कुत्वम् । स्पृक् । षडगकाः प्राग्वत् ।। **इति शान्ताः** ।। 'ञिधृषा प्रागल्भ्ये' अस्मात् । 'ऋत्विग्–' (सू ३७३) आदिना क्विन् । द्वित्वमन्तोदात्तत्वं च निपात्यते । कुत्वात्पूर्वं जश्त्वेन डः, गः, कः, ।

---

99. न शेर्वा। क्विन्प्रत्ययस्येति सूत्रे कुरित्यनुवृत्तन्तदेतदाह । न शेःकवर्गोऽन्तादेशस्स्यात्। इदं सूत्रमप्राप्तविभाषायाम्। कवर्गादेशाभावे तु शान्तत्वेन व्रश्चेति षत्वं तदेतदाह। नक् नग् नद् नड् इति खस्य जश्त्वे वावसान इति चर्त्वे च नक् नग् इति रूपद्वयम्। षस्य जश्त्वे वावसान इति चर्त्वे च नट् नड् इति रूपद्वयम् चेति बोध्यम्।

100. स्पृक् स्पृश् इत्यस्य शान्तत्वेन व्रश्चेति षत्वे तदपवादत्वात्क्विन्प्रत्ययस्येति कुत्वम्। तथा हि, क्विन्प्रत्ययस्य कुरिति सूत्रे क्विनः कुरिति सूत्रितेऽपि प्रत्ययग्रहणे तदन्तग्रहणमिति क्विन्नन्तस्य कुत्वं स्यादित्यर्थसिद्धौ ऋत्विगादिरूपसिद्धिर्भवत्येवेति किमनेन प्रत्ययग्रहणेनेत्याशङ्क्य क्विन्प्रत्ययो यस्मात्तस्येति बहुव्रीहिलाभायेति समाधानं मनसि कृत्वा क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशस्स्यादिति कौमुद्यामर्थः प्रोक्तः। तथा च प्रकृते स्पृशेः क्विन्प्रत्ययः स्पृशोनुदके क्विन्निति सूत्रेण विहित इति क्विन्प्रत्ययो यस्माद्विहितस्तस्य स्पृशः केवलस्यापि कुत्वं स्यादिति। ननु एवं बहुव्रीह्याश्रयणेऽपि यस्मात्क्विन्विहित इत्युक्ते घृतादिपूर्वकादेव (अनुदक इति पर्युदासात्) न तु केवलादिति कथमत्र स्पृशः कुत्वमिति चेन्मैवम्। इतः पूर्वमनुदके सुप्युपपदे यस्मात्क्विन्विहित इत्युक्ते स्पृश इत्यस्यैवेति तस्य कुत्वं स्यादेवेति। अथ यदि यस्मात्क्विन्विहित इत्युक्ते सोपपदात् स्वशेरेवेति तस्यैव कुत्वं न तु केवलस्येति दुराग्रहः तर्हि तस्य क्विनः कुरिति सूत्रितेऽपि क्विन्नन्तत्वेन कुत्वं स्यादेवेति प्रत्ययग्रहणं व्यर्थमेवेति तदेव व्यर्थीभूय (इतः पूर्वं यदा कदापि यस्मात्सोपपदत्वे निरुपपदत्वे वा क्विन्निपातः तस्य अधुना क्विन्नन्तत्वाभावेऽपि कुत्वं स्यादिति ज्ञापयतीति विद्धि। तस्मात् स्पृशः सोपपदत्वे (इतःपूर्वं) क्विन्विहित इति केवलस्य तस्य अक्विन्नन्तत्वेऽपि क्विन्प्रत्ययस्येति बहुव्रीहिवशात्तस्यापि क्विबन्तस्य ग्रहणात् कुत्वं स्यादेवेति स्पृक् इति रूपम्। क्विन्प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणादिति पठितव्यम्।

धृष्णोतीति दधृक्, दधृग्, दधृषौ दधृषः । दधृग्भ्यामित्यादि । रत्नानि मुष्णातीति रत्नमुट्, रत्नमुड्, रत्नमुषौ, रत्नमुषः । षड्भ्यो लुक्' (सू २६१) षट्, षड् । षड्भिः । षड्भ्यः 'षट्चतुर्भ्यश्च' (सू ३३८) इति नुट् । अनाम्' इति पर्युदासान्न । ष्टुत्वनिषेधः । यरोऽनुनासिके-' (सू ११६) इति विकल्पं बाधित्वा **'प्रत्यये भाषायां नित्यम्'** (वा ५०१७) इति वचनान्नित्यमनुनासिकः । षण्णाम् । षट्त्सु, षट्सु । तदन्तविधिः । परमषट् । परमषण्णाम् । गौणत्वे तु प्रियषषः । प्रियषषाम् । रुत्वं प्रति षत्वस्यासिद्धत्वात् 'ससजुषो रुः' (सू १६२) इति रुत्वम् । **४३३ र्वोरुपधाया दीर्घ इकः ।** ।८।२।७६। रेफवान्तस्य धातोरुपधाया इको दीर्घः स्यात्पदान्ते । पिपठीः पिपठिषौ, पिपठिषः । पिपठीर्भ्याम् । 'वा शरि' (सू १५१) इति वा विसर्जनीयः ।

---

101. दधृक्। ञिधृषा प्रागल्भ्ये इति धातो ऋत्विगादिसूत्रे दधृगिति निपातनवशाद्द्वित्वे धृष् धृष् उरत् धर्ष् धृष् हलादिश्शेषः दधृत्। अभ्यासे चर्च इति झशां जशः। दधृष्। क्विन्नन्तत्वेन कृत्त्वात्स्वादयः दधृष् स् हल्ङ्यादिलोपः क्विन्प्रत्ययस्य कुरिति कुत्त्वेन खकारे प्राप्ते असिद्धत्वात्तस्य जश्त्वेन शः पश्चात्कुत्वेन वावसान इति पक्षे चर्त्वेन कः। दधृक्। मुष्णातेः क्विपि मुट् । जश्त्वचर्त्वे मुट् । षष् इत्यव्युत्पन्नोऽयं षान्तश्शब्दः। तस्य जश्त्वचर्त्वे षद् षड् ।

102. षण्णां षट् आम् इति स्थिते षट्चतुर्भ्यश्चेति नुट्। षष् नाम्। स्वादिष्विति पूर्वस्य षट् इत्यस्य पदत्वेन षकारस्य पदान्तत्वात्, झलां जशोऽन्त इति जश्त्वेन डः, षड् नाम्। अत्र स्तोःष्टुना ष्टुरिति ष्टुत्वेन नकारस्य णत्वे (स्थानत आन्तर्यादनुनासिकत्वेन, प्राप्तेन पदान्ताट्टोरिति निषेधः। तस्य च निषेधस्य अनामिति पर्युदासेन पुनर्निषिधेन ष्टुत्वं स्यादेव। षड्णाम्। अत्र यरोऽनुनासिक इति विकल्पेन अनुनासिके नकारे डकारस्य प्राप्ते प्रत्यये भाषायां नित्यमिति नामः प्रत्ययत्वेन अनुनासिके तस्मिन्प्रत्यये परे, पूर्वस्य यरः नित्यमनुनासिकस्स्यादिति नित्यमेवात्र डकारस्य णत्वम्। षण्णाम्। डस्सि धुडिति धुट्त्वस्य विकल्पेन षट्सु षट्त्सु इति रूपद्वयम् ।

103. पिपठीः। पठधातोरिच्छार्थे सनि पठ् स 'अर्धधातुकस्येड्वलादेरि'ति इट्। पठिस सन्यङोरिति द्वित्वम् । एकाचो द्वे प्रथमस्य इति पस्य द्वित्वम्। पपठिस, सन्नचत इति अभ्यासस्य इत्वम्। पिपठि स, लटस्तिपि पिपठिसति इण् कोः आदेशप्रत्यययोरिति प्रत्ययावयवत्वेन सस्य षत्वम्। पिपठिषति। तस्मात् क्विपि पिपठिष क्विप् इति स्थिते, क्विपस्सर्वापहारे 'अतो लोप' इत्यलोपे पिपठिष्-सु-सोर्लोपे पिपठिष्। अत्र पदान्तस्य सस्य ससजुषोरुरिति रुत्वम्। आदेशप्रत्यययोरिति षत्वस्यासिद्धत्वेन रुत्वदृष्ट्या सन्सकारस्यैव विद्यमानत्वात् पिपठिर् क्विबन्तत्वेन अस्य धातुत्वात् 'र्वोरुपधाया दीर्घ' इक इति रेफान्तधातुत्वप्रयुक्तमुपधेकारस्य दीर्घत्वम्। पिपठीर् खरवसानयोर्विसर्जनीयः पिपठीः।

104. "र्वोरुपधाया दीर्घ इकः। सिपि धातोरुर्वेति" सूत्राद्धातोरित्यस्यानुवृत्तिः। तस्य र्वोरिति

४३४ **नुम्विसर्जनीयशर्व्यवायेऽपि** । ।८।३।५८। एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्धन्यादेशः स्यात् । ष्टुत्वेन पूर्वस्य षत्वम् । पिपठीष्षु, पिपठीःषु । 'प्रत्येकम्' इति व्याख्यानादनेकव्यवधाने षत्वं न । निंस्स्व । निंस्से । नुम्ग्रहणं नुम्स्थानिकानुस्वारोपलक्षणार्थं व्याख्यानात् । तेनेह न –सुहिन्सु । पुंसु । अत एव न शर्ग्रहणेन गतार्थता । 'रात्सस्य' (सू २८०) इति सलोपे विसर्गः चिकीः, चिकीर्षौ चिकीर्षः ।'रोः सुपि' (सू ३३९) इति नियमान्न विसर्गः । चिकीर्षु । 'दमेर्डोसि' (उ २२७) डित्त्वसामर्थ्याट्टिलोपः । षत्वस्यासिद्धत्वाद्रुत्वविसर्गौ। दोः, दोषौ, दोषः । 'पद्दन्नो–' (सु २२८) इति वा दोषन् दोष्णः । दोष्णा । दोषः । दोषा । 'विश प्रवेशने' । सन्नन्तात्क्विप् । कत्वस्यासिद्धत्वा– त्संयोगान्तलोपः । 'व्रश्च–' (सू२९४) इति षः । जश्त्वचर्त्वे । विविट् , विविड्, विविक्षौ , विविक्षः । स्कोः–' (सू ३८०) इति कलोपः । तट्, तड्, तक्षौ, तक्षः, गोरट्, गोरड्, गोरक्षौ, गोरक्षः । तक्षिरक्षिभ्यां ण्यन्ताभ्यां क्विपि तु 'स्कोः–' (सू ३८०) इति न प्रवर्तते, णिलोपस्य स्थानिवद्भावात् । **पूर्वत्रासिद्धे न स्थानिवत्** (वा ४३३) इति त्विह नास्ति, **'तस्य दोषः संयोगादिलोपलत्वणत्वेषु'** (वा४४०) इति निषेधात् , तस्मात्संयोगान्तलोप एव । तक्, तग्, गोरक्, गोरग्। स्कोः–' (सू ३८०) इति कलोपं प्रति कुत्वस्यासिद्धत्वात्संयोगान्तलोपः । पिपक्, पिपग्, । एवं विवक् । दिधक् ।। **इति षान्ताः** ।। 'पिस गतौ ' सुष्ठु पेसतीति सुपीः सुपिसौ, सुपिसः । सुपिसा, सुपीभ्याम् । सुपीःषु सुपीष्षु । एवं सुतूः । तुस खण्डने' । विद्वान्, विद्वांसौ विद्वांसः । हे विद्वन् विद्वांसम् विद्वांसौ ।

---

विशेषणे येन विधिस्तदन्तस्येति तदन्तविधिः। र् चव् चर्वौ तयोर्वोः र्वः र्वोःर्वामिति षष्ठी। एकस्य धातोः रान्तत्वं वान्तत्वञ्च असंभवीति र्वौधातुना प्रत्येकं संबद्ध्येते। तेन रश्च वश्च धातोरिति लब्धम्। तदन्तविधिना रः। रान्तस्य वः। वान्तस्य च धातोः उपधाया इको दीर्घस्स्यात्पदान्त इति तु 'झलाञ्जशोऽन्त' इति सूत्रादन्तपदानुवृत्त्या लब्धम्। न च मण्डूकप्लुत्या अन्तपदस्यात्र लाभ इति वाच्यम्। प्राक्सूत्रेषु सर्वेष्वपि तस्य क्रमेण अनुवर्त्यमानत्वात् ।

105. नुम्विसर्जनीयशर्व्यवायेऽपि पिपठीर् सु। खरवसानयोर्विसर्जनीयः। विसर्जनीयस्य सः। वा शरि इति पिपठीस् सु पिपठीः सु इति च स्थिते एकत्र शरा व्यवधानात्,

अन्यत्र च विसर्जनीयेन व्यवधानात्। इणः परत्वं सुप्सकारस्य नास्तीति इण्कोरादेशप्रत्यययोरिति सूत्रबलात्। सुप्सकारस्य षत्वाप्राप्तौ अनेन सूत्रेण षत्वं विधीयिते। पिपठीस् षु। ष्टुना ष्टुः। पिपठीष्षु। पिपठीः षु इति रूपद्वयं निष्पन्नम्। न च शर्ग्रहणेन प्रयोजनम्। पिपठीस् सु इत्यत्र आदेशप्रत्यययोरिति सन्, सकारस्य षत्वे कृते, सुप्सकारस्य ष्टुना ष्टुरिति ष्टुत्वेन, षत्वे च कृतेऽपि पिपठीष्षु इति रूपसिद्धेरिति वाच्यम्। अपदान्तस्य मूर्धन्य इत्यधिकारसूत्रेण अपदान्तस्य सस्यैव षत्वविधानात्। प्रकृते तु स्वादिष्विति पिपठीस् इत्यस्य पदत्वेन सन्सकारस्य पदान्तत्वाभावन्न षत्वमिति। ननु तर्हि अतो लोप इति लुप्तस्य सनोकारस्य स्थानिवद्भावः। न चानल्विधाविति निषेधः। अचः परस्मिन्निति स्थानिवद्भावविधानात्। अयं चाल्लोप आर्धधातुके परे इत्यपरनिमित्तः अकारस्थानिकत्वेन लोपस्य अजादेशः स्थानिभूतादचः पूर्वत्वेन दृष्टस्य सस्य षत्वविधौ कर्तव्य इति चेन्मैवम् । न पदान्तेति सूत्रेण पदान्तविधौ स्थानिवद्भावनिषेधात्। पदान्तस्य षत्वविधानेन पदान्तविधिर्ह्ययम्। नन्वेवं विसर्जनीयव्यवायेपीत्यनेनैवात्र षत्वप्राप्तौ शर्ग्रहणं पुनरपि व्यर्थमेव। तथा हि अयोगवाहानामट्सूपदेशस्योक्तत्वेन विसर्जनीयस्याच्त्वात् तत्स्थानिकस्सकारादेशः शर्निमित्तकत्वेन परनिमित्तोऽजादेश एवेति स्थानिभूतादचः विसर्जनीयात् पूर्वस्मान्निमित्तादीकारात् परस्य सुप्सकारस्य षत्वविधौ कर्तव्य इति, अचः परस्मिन्निति सस्य स्थानिवत्त्वेन विसर्जनीयत्वात्। किञ्च विसर्जनीयमपाकृत्य नुम्शर्व्यवायेऽपि इति सूत्रेऽपि अयोगवाहानामकारोपरि शर्षु च पाठस्य उपसंख्याततत्वेन शर्ग्रहणेनैव विसर्जनीयलाभात्, । तस्मात् शर्विसर्जनीयान्यतरग्रहणमवश्यमपाकर्तव्यम्। तथा च नुम्शर्व्यवायेऽपीति सुवचम्। न च शर्ग्रहणेन नुमोऽनुस्वारस्यापि ग्रहणान्नुम्ग्रहणमपि व्यर्थमेवेति वाच्यम्। नुम्स्थानिकानुस्वारोऽपि लक्षणार्थमिति वक्ष्यमाणत्वात्। ननु नुम्ग्रहणाभावे नुम्नकारव्यवधाने षत्वं न स्यात्। न हि नकारः अयोगवाहः। येन शर्ग्रहणेन गृहीतस्स्यादतो नुमो वैयर्थ्यशङ्केव नास्तीति चेन्मैवम्। तादृशलक्ष्याभावात् । न हि नुम्नकारव्यवधाने षत्वभाग्रूपं क्वापि दृश्यते। अत एव कौमुद्यां "अत एव न शर्ग्रहणेन गतार्थ"तेति वक्ष्यति। नुम्स्थानिकानुस्वारोपलक्षणार्थमित्यस्य शर्ग्रहणेन गृहीतस्य अनुस्वारस्य नुम्स्थानिकत्वोपलक्षणार्थं नुम्ग्रहणमित्यर्थः। अन्यथा यथाश्रुतार्थे नुम्नियमेन स्वस्थानिकानुस्वारमेव कथमुपलक्षयेत्। तेन नुम्स्थानिकानुस्वारेणैव व्यवाये सस्य षत्वं नान्यानुस्वारेणेति नियमार्थं नुम्ग्रहणमिति फलितम्। निंस्स्व निशि चुंबन इति धातोर्लोण्मध्यमपुरुषैकवचनम् । नोणः इति धात्वादेर्नस्य णत्वं इदितो नुम्धातोरिति नुम्। तस्य नुम्नकारस्य नश्चापदान्तस्येत्यनुस्वारः। निंस् थास्। थासस्से। निंस्से। अस्मिन् रूपद्वये नुम्स्थानिकानुस्वारेण शरा च प्रत्ययसस्य व्यवधानेऽपि अनेकव्यवधानान्न षत्वम्। धातुसस्य तु आदेशप्रत्ययावयवत्वान्न षत्वम्। (येन प्रत्ययसस्य ष्टुत्वे कृते निंष्व। निष्व इति रूपे स्याताम्। सुहिन् सु सूपपदकाद्धिनस्तेः क्विपि सुहिन् सुहिने सुहिन इति नान्तश्शब्दः। अत्र नकारस्य नुम्स्थानिकत्वेऽपि तेन व्यवायेन न षत्त्वम्। पुंसु पूञो डुम्सुन्निति

डुम्सुन्प्रत्ययावयवत्वेन अत्रानुस्वारस्य नुम्स्थानिकत्वाभावात्, न तेन व्यवाये षत्वम्। अत एव पुंस्वित्यादौ नुम्स्थानिकानुस्वारेतरानुस्वारव्यवाये षत्वाभावादेव, गतार्थतेत्यनन्तरं (सुहिन्स्वित्यादौ नुम्नकारेण व्यवायेऽपि षत्वाभावादेव) नापि विध्यर्थता इत्यपि बोध्यम्। अन्यथा नुमो गतार्थत्वशंकाया एवानुदयात् ।

106. चिकीर्षतेः क्विप्। चिकेः डुकृञ् करण इत्यस्मात्सनि कृ स इति स्थिते सन्यङोश्च कृ कृ स उरर् कृ कृ स उरर् कर् कृ स हलादिश्शेषः। ककृ स। कुहोश्चुः। चकृस सन्यतः चिकृ स। अज्झनगमां सनि–चिकृ स। ऋृत इद्धातोः चिकिर् स र्वोरुपधाया दिर्घ इकः चिकीर्स रेफस्य इण्त्वात् आदेशप्रत्यययोरिति षत्वं। चिकीर्ष क्विप्। क्विपस्सर्वापहारः। चिकीर्ष अतो लोपः चिकीर्ष सु । हल्ङ्यादिलोपः। चिकीर्ष्। षत्वस्य असिद्धत्वाद्रात्सस्येति संयोगान्तलोपः चिकीर्। खरवसानयोर्विसर्जनीयः। चिकीः । केचित्तु कृ स इति स्थिते, अज्झनगमां सनि, कृ स, ऋृत इद्धातोः किर् स – सन्यङोः किकिर् स कुहोश्चुः चिकिर् स इति वदन्ति। न च द्विर्वचनेऽचीति द्वित्वे कर्तव्ये अज्झनगमां सनीति अजादेशो दीर्घो न स्यात् इति द्वित्वात्प्राग्दीर्घो न स्यादिति वाच्यम्। अचीति द्वित्वनिमित्तेऽचि परत एव अजादेशनिषेधः। अत्र तु सनो द्वित्वनिमित्तित्वेन न दोष इति प्रक्रियालाघवादिदमेव मतं सम्यक्। चिकीर्षु अत्र रेफस्य ऋृत इदितीकारादेशावयवत्वेन ससजुषोरुरिति सादेशरुत्वाभावात् सप्तमीबहुवचने रोरेव विसर्जनीयः नान्यरेफस्येति नान्यरेफस्यास्य विसर्जनीयः।

107. दोः डित्वसामर्थ्याट्टिलोपः। टेरिति सूत्रादभत्वेन अस्य दमः। टिलोपाभावे वचनमिदम् । तथा हि। डोसित्यत्र विहितेन किमनेन डित्त्वेन प्रयोजनम्। न किमपि। न च टेरिति टिलोपः प्रयोजनमिति वाच्यम्। यचिभमिति कप्रत्ययावधीनामेव यकारादीनामजादीनाञ्च परेषां सतां पूर्वस्य भसंज्ञाविधानेन अस्य डोस्प्रत्ययस्य कप्रत्ययावधि प्रत्ययानन्तःपातित्वेन पूर्वस्य दमः भसंज्ञासंपादनाक्षमत्वेन अभस्य टिलोपाभावात्, अत इदं डित्त्वं व्यर्थं सत् अभस्यापि टेर्लोप इति ज्ञापयित्वा दमष्टिलोपयित्वा दोरिति स्वांशे चरितार्थमिति भावः । दोस् सु सुलोपः। आदेशप्रत्यययोरिति प्रत्ययावयवत्वेन सस्य षत्वं दोष्। तस्यासिद्धत्वाद्रुत्वम्, दोर् विसर्गः दोः। दोष् शस् इत्यत्र पद्दन्निति दोषन्नादेशपक्षे दोषन् अस् इति स्थिते, अल्लोपो नः। रषाभ्यां नोणः। दोष्णः ।

108. विवक्षितेः क्विप्। विविट्। विश् सन् द्वित्वं हलादिश्शेषः विविश् स। व्रश्चेति षत्वम्। षढोः कस्सि विविक् स। कवर्गात्परत्वेन सस्य आदेशप्रत्यययोरिति षत्वम्। विविक्ष। आतो लोपः। विविक् ष् सु। सुलोपः। षत्वस्यासिद्धत्वात्संयोगान्तलोप इति सस्य लोपः। विविक्। निमित्तापाये नैमित्तिकस्याप्यपाय इति सस्य लोपे, तन्निमित्तकः षढोः कस्सीति षस्य कादेशश्च अपगच्छति। विविष्। इदमेवाभिप्रेत्य कौमुद्यां व्रश्चेति ष इति शिष्यत इति शेषोऽत्र बोध्यः। कस्याप्युक्तरीत्यापायेन व्रश्चेति पूर्वं कृतं षत्वमेव

दृश्यत इत्यर्थः। व्रश्चेति षः। संयोगान्तलोपात्पश्चादधुना विधीयत इति तु न भ्रमितव्यम्। पुरैव कृतत्वात् । अन्यथा विविक्षतीति रूपासिद्धेः। विविष् जश्त्वचर्त्वे विविट् विवक्षा इत्यत्र तु अपदान्तत्वान्न संयोगान्तलोपः। षत्वस्यासिद्धत्वात्संयोगान्तलोप इति कौमुद्याम्। कत्वस्याप्यसिद्धत्वादिति पाठस्सुगमः। तथा हि। विविश् स इत्यत्र षत्वे, कत्वे च, विविक् स इति स्थिते, आतो लोपः। विविश् स् इति स्थिते षत्वे कृते, पश्चादतो लोपे, विविर् ष् इति स्थिते, वास्कोस्संयोगाद्योरिति ककारलोपः प्राप्तः। संयोगान्तस्य लोपश्च प्राप्तः। अतः केन भाव्यमित्याशंकायामाह। कत्वस्यासिद्धत्वादिति। संयोगादिलोपदृष्ट्या षढोः कस्सीत्यस्य परत्वेन असिद्धत्वात् षत्वमेव दृश्यते, न तु कत्वमिति, नात्र संयोगादिलोप इति षत्वस्य पदान्तस्य असिद्धत्वे सिद्धत्वे वा संयोगान्तलोप इत्यनेन सस्य वा षस्य वा लोपस्स्यादेवेति पूर्वस्मिन्पाठे षत्वस्यासिद्धत्वादिति हेतुरजागळस्तनवद्व्यर्थ इति बोध्यम्। तक्षीत्यत्र तु संयोगादिलोप एव ककारस्यानादेशत्वात्।

109. णिलोपस्य स्थानिवद्भावात्, स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्य इत्यत्र णेस्स्थानिवद्भावः। तस्मात् पदान्ते झलि च परे यस्संयोग इत्युक्ते तक्षीत्यत्र णिपरकत्वेन नास्तीति न संयोगादिलोपः। ननु तथैव स्थानिवद्भावेन संयोगान्तलोपोऽपि न भवेदिति चेन्मैवम्। पूर्वत्रासिद्धेन स्थानिवदिति त्रैपादिके संयोगान्तलोपे कर्तव्ये स्थानिवत्त्वाभावात्। न च तथैव संयोगादिलोपस्यापि त्रैपादिकत्वेन तस्मिन्कर्तव्येऽपि न स्थानिवदिति वाच्यम्। तस्य दोषस्संयोगादिलोप, लत्व, णत्वेष्विति वचनेन, संयोगादिलोपविषये पूर्वत्रासिद्धे न स्थानिवदित्यस्याः प्रवृत्तेः। संयोगान्तलोपविषये तु पूर्वत्रासिद्धे न स्थानिवदिति प्रवर्तत एव। तस्मिन् वचने संयोगान्तलोपस्याग्रहणात्। तस्मात् तक् ष् संयोगान्तलोपः तक् तग् इति रूपम्। तक्षौ तक्षि इत्यादीनि तु ण्यन्तत्वे अण्यन्तत्वे च तुल्यान्येव तग्भ्यां तग्भ्याम् तड्भ्याम् ।

110. पिपक्। डुपचष् पाक इति धातोसन्नन्तात्क्विप्। पच् स, पपच् स, पिपच् स, चोः कुः पिपक् सति, आदेशप्रत्यययोः। पिपक्षति। अस्मात्क्विपि क्विपो लोपे, पिपक्ष् सु, सोर्लोपे पिपक्ष्। स्कोरिति संयोगादिलोपं प्रति चोः कुरिति कुत्वस्यासिद्धत्वात्संयोगान्तलोप एव। यत्तु तत्त्वबोधिन्यां पिसगतौ पक्तुमिच्छतीति पिपक् इत्युक्तम्। तत्र पिसगताविति प्रामादिकमेव। पिसधातोस्तुमुन्प्रत्यये पक्तुमिति रूपासिद्धेः। सनि पिपक्षतीति रूपस्याप्यसिद्धेः। किन्तु पिपेषतीति रूपम्। तस्मात् क्विपि पिपेट् इति रूपं स्यान्न तु पिपगिति बोध्यम्। एवमेव विवक्षतेः क्विपि विवक्।

111. सुपीः। सुतूः । अत्र र्वोरुपधाया इत्युपधादीर्घः। सूपपदकत्वे सतेः क्विपि सुपीः। तोसतेः क्विपि सुतूरिति च। सुपिस् सु इति स्थिते, पुगन्तलघूपधस्येति गुणो

४३५ **वसोःसम्प्रसारणम्** । ।६।४।१३१।वस्वन्तस्य भस्य सम्प्रसारणं स्यात् । पूर्वरूपं षत्वम् । विदुषः । विदुषा । 'वसुस्रंसु–' (सू ३३४) इति दत्वम् । विद्वद्भ्याम् इत्यादि । सेदिवान्, सेदिवांसौ, सेदिवांसः । सेदिवांसम् । अन्तरङ्गोऽपीडागमः सम्प्रसारणविषये न प्रवर्तते, **'अकृतव्यूहाः–'** (प ५७) इति परिभाषया । सेदुषः सेदुषा , सेदिवद्भ्याम् इत्यादि । 'सान्तमहतः–' (सू ३१७) इत्यत्र सान्तसंयोगोऽपि प्रातिपदिकस्यैव गृह्यते, न तु धातोः, महच्छब्दसाहचर्यात् । सुष्ठु हिनस्तीति सुहिन्, सुहिंसौ, सुहिंसः । सुहिन्भ्याम् इत्यादि । सुहिन्त्सु, सुहिन्सु । ध्वत् ध्वद्, ध्वसौ, ध्वसः । ध्वद्भ्याम् । एवं स्रत् ।

---

न शङ्क्यः । सोरसार्वधातुकार्थधातुकत्वात्। न च क्विप आर्थधातुकत्वेन तन्निमित्तको गुणस्स्यादिति वाच्यम्। क्विपो लुप्तत्वात्प्रत्ययलक्षणस्य च न लुमतेति निषेधात्।(क्विपः कित्त्वेन क्ङितिचेति निषेधात्) णिलोपस्य स्थानिवद्भावादित्ययमेव पुनर्विचार्यते। तथा हि। ननु ण्यन्तात्तत् क्षेधातोः क्विपि तक् ष्णि अ क्वि इति स्थिते। अतो लोपः। तक्षि क्वि णेरनिटि इति क्विप आर्थधातुकत्वेन अनिडादित्वेन णिलोपः। तक्ष्। अत्र संयोगादिलोपे कर्तव्ये णिलोपस्य स्थानिवद्भाव इति ह्युक्तम्। तन्नैव क्वौ लुप्तं न स्थानिवदिति क्विनिमित्तकत्वेन जायमानोऽत्र णिलोपः स्थानिवन्नस्यादेव तस्मात्संयोगादिलोपे तडित्येवरूपं स्यान्न तु तगितिचेत्सत्यम्। तथापि क्वौ लुप्तं न स्थानिवदिति तु क्वाचित्कमित्युक्तत्वेन तद्वचनस्यानित्यत्वात्संयोगान्तलोपेन तगिति रूपं स्यादिति। न च क्विपस्सर्वापहारेण न लुमतेति प्रत्ययलक्षणनिषेधात्क्विनिमित्तको णिलोप एवात्र न स्यादिति वाच्यम्। न लुमतेति निषेधस्यानित्यत्वात्। अन्यथा क्वौ लोपाभावे क्वौ लुप्तं न स्थानिवदिति वचनारम्भस्यैव अनवकाशत्वात्।

112. विदुषः। विद्वस् शस् असर्वनामस्थानत्वान्न नुम्। वसोस्संप्रसारणमिति वस्योत्वम्। विद् उ अस् अन्। संप्रसारणाच्चेति पूर्वरूपम्। विदुस् अस् षत्वं विदुषस् रुत्वविसर्गौ विदुषः। न च विदेर्वकारस्यापि संप्रसारणं शङ्क्यम्। न संप्रसारणे संप्रसारणमिति निषेधात्। अत एव ज्ञापकात्परस्यैव संप्रसारणं न पूर्वस्येति यून इत्यत्र प्रतिपादितम् ।

113. सेदिवान् । षद् ऌ विशरणगत्यवसादनेषु इति धातोर्लिटः भाषायां सदेति क्वसुः। सद् वस् इति स्थिते, लिडादेशस्य क्वसोस्स्थानिवद्भावेन लिट्त्वात्, लिटि धातोरिति द्वित्वम् सद् सद् वस् अत एकहल्मध्य इति अकारस्यैकारः। अभ्यासलोपश्च सेद् वस् । आर्धधातुकस्येड्वलादेरिति प्राप्तस्य इटः वस्वेकाजाद्घसामिति नियमः। तेन वस्वेकाजादिति सूत्राद्वसोरस्य इट्। सेदिवस्। उगिदचामिति नुम्। सेदिवन् स् सु। सुलोपः। सान्तेति दीर्घः सेदिवान् स्। संयोगान्तलोपः। सेदिवान्। सेद् वस् शस् इत्यत्र

४३६ **पुंसोऽसुङ्** । ७।१।८९। सर्वनामस्थाने विवक्षिते पुंसोऽसुङ् स्यात् । असुङउकार उच्चारणार्थः । 'बहुपुंसी' इत्यत्र 'उगितश्च' (सू ४५५) इति ङीबर्थ कृतेन 'पूञो डुंसुन्' इति प्रत्ययस्योगित्त्वेनैव नुम्सिद्धेः। पुमान् ।

---

वसोस्संप्रसारणं प्राप्तम्। वस्वेकाजितीट् च प्राप्तः। अबह्वाश्रयत्वेन अन्तरङ्गत्वाद्बलवानपीडागमः संप्रसारणविषये न प्रवर्तते। अकृतव्यूहपरिभाषया तथा हि। इट्त्वं प्रति किं वा निमित्तमित्युक्तौ वसोर्वत्वमेव वलादेशार्थधातुकस्येट् स्यादित्युक्तत्वात्। तस्य वस्य संप्रसारणेन उत्वे सति विनाशस्स्यादिति विनाशोन्मुखमेव इडागमं प्रति निमित्तं तद्वत्त्वमिति हेतोः तद्वत्त्वप्रयुक्तं कार्यमिडागमं न कुर्वन्ति पाणिनीया इति इडागमे कृतेऽपि, वसोस्संप्रसारणस्य दुर्निवारत्वाद्विनाशोन्मुखमेव वत्वमिति न शङ्का कार्या। तस्मात् वस्य संप्रसारणे सेद् उ अस् अस् पूर्वरूपषत्वरुत्वविसर्गाः सेदुषः।

114. सुहिन् हिंसि हिंसायामिति रुधादिः। हिनस्तेः क्विपि, हिन् स् संयोगान्तलोपः। सुहिन् ।अत्र श्रूयमाणो नकारो न श्नमः, किन्तु नुम एव। शपोऽपवादत्वेन श्नमोऽपि सार्वधातुके परतो विधीयमानत्वादत्र सुप् न। सार्वधातुक इति न श्नमः प्राप्तिः। किन्तु हिस् सु इति स्थिते, इदितो नुम्धातोरिति इदित्वेन नुमेव, हिन् स्। अन्यथा श्नमि सुहिनस् इति स्यात्। श्नमोकारस्यानित्त्वात् । ननु अत्र सुहिन् स् इति स्थिते। संयोगान्तलोपे तस्यासिद्धत्वात् सान्तेति दीर्घस्स्यादित्याशङ्क्याह। सान्तसंयोगोऽपि प्रातिपदिकस्यैवेति सान्तसंयोगस्य प्रातिपदिकस्य यो रकारस्तस्योपधादीर्घस्स्यादित्यर्थः। ननु प्रातिपदिकस्यैवेति कथमिदं लब्धमित्यत आह महच्छब्दसाहचर्यात्। सहचरितासहचरितयोस्सहचरितस्यैव ग्रहणमिति परिभाषया महतः प्रातिपदिकत्वेन सान्तस्यापि प्रातिपदिकस्यैव ग्रहणमिति। तेन प्रकृते सुहिन् स् इति सान्तसंयोगस्य धात्ववयवत्वेन अर्थवदधातुरिति धातोः प्रातिपदिकसंज्ञानिषेधेन अप्रातिपदिकावयवत्वान्न सान्तेति दीर्घ इति भावः। न च सर्वनामस्थान इति नान्तत्वेन उपधादीर्घस्स्यादिति वाच्यम्। संयोगान्तलोपस्य असिद्धत्वेन अनान्तत्वात् ।

115. ध्वसौ–ध्वसः, ध्वंसोः क्विपि ध्वंस् औङ् इति स्थिते, अनिदितामिति नलोपः। ध्वसौ अपदान्तत्वाद्वसुस्रंस्विति न दत्वमिति बोध्यम्। सुपि ङौ तु ध्वत्सु स्रंत्सु इति ।

116. पुंसोसुङ पूञः पातेर्वा डुम्स्न् प्रत्यये कृते, पुंस् इति भवति। तस्य कृदन्तत्वात्स्वादयः। पुंन् सु इति स्थिते सुटस्सर्वनामस्थानत्वेन पुंसोऽसुङादेशः। स च अनेकाल्त्वात्सर्वस्य प्राप्ते ङिच्चेत्यस्य तदपवादत्वेन ङित्त्वादन्त्यस्य सस्य भवति। पुम् अस् पुमस् उगिदचामिति नुम्। पुमन् स् सान्तेति दीर्घः। पुमान् स् सु सोर्लोपः। संयोगान्तलोपः पुमान्। अत्र असुङादेशे श्रूयमाण उकारो व्यर्थ एव। न च उगित्त्वेन नुम् संपादनायेति वाच्यम्। स्थानिवद्भावेन डुम्सुन् प्रत्ययोगित्त्वस्य अस्मिन्नादेशे लाभेन तेनैव नुम्सिद्धेः। न चानल्विधाविति तन्निषेधः। उगित्त्वस्य अल्मात्रवृत्तिधर्मत्वाभावात्। इत्संज्ञाकउग्वति प्रत्यये हि उगित्त्वं वर्तते। न तु केवलोकारादाविति। न च डुम् सु न एव उकारो व्यर्थस्स्यादिति वाच्यम्। बहुपुंसीत्यत्र असर्वनामस्थानत्वेन असुङादेशाभावे डुम्सु न। उगित्त्वमाश्रित्यैव उगितश्चेति ङीप्संभवात्। तस्मात् ङीबर्थमवश्यमाश्रयणीयतया डुम्सुन उकारस्य इत्संज्ञयैव

हे पुमन् । पुमांसौ, पुमांसः । पुंसः । पुंसा, पुम्भ्याम्, पुम्भिः इत्यादि । पुंसि पुंसु। 'ऋदुशन–'(सू २७६) इत्यनङ्। उशना, उशनसौ, उशनसः । **'अस्य सम्बुद्धौ वाऽनङ् नलोपश्च वा वाच्यः'** (वा ५०३७) । हे उशनन्, हे उशन, हे उशनः । उशनोभ्यामित्यादि । अनेहा, अनेहसौ, अनेहसः । हे अनेहः । अनेहोभ्यामित्यादि । वेधाः, वेधसौ, वेधसः । हे वेधः । वेधोभ्यामित्यादि ।

---

नुमोऽपि सिद्धेः। नुम्विध्यर्थमसुङादेशोकारस्यापि इत्संज्ञावचनमनर्थकमिति तदेतत्सर्वमभिप्रेत्य उकार उच्चारणार्थ इति कौमुदी, न त्वित्संज्ञाक इत्यर्थः। पुंस् सुप् इति स्थिते, सुपि परतः पूर्वस्य स्वादिष्विति पदत्वात्संयोगान्तलोपः पुम् सु मोऽनुस्वारः पुंसु ।

117. उशना वशोः कनसिः। वशकान्ताविति धातुः। कान्तिरिच्छा। अस्यैव अटस्तिपि वष्टि इति रूपम् । वश् अनस् ग्रहिज्येति सूत्रे षष्ठीग्रहणात्संप्रसारणम्। पूर्वरूपं उशनस् स् ऋदुशनसित्यसंबुद्धौ सौ परतोऽनङ्। स चादेशः ङित्त्वादन्त्यस्य सस्य भवति। उशन अन् सु ।अतो गुणे उशनन् सु हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् इति हल्ङ्यादिलोपः। सर्वनामस्थाने चेति नोपधादीर्घः। नलोपः प्रातिपदिकान्तस्येति नलोपः। उशना इति सान्तश्शब्दः। अस्य संबुद्धावलोपस्य नङि संबुध्योरिति निषेधेन नलोपस्य च अप्राप्तौ विभाषार्थं वार्तिकम्। अस्य संबुद्धौ वानङ् नलोपश्च वा वाच्य इति। अनङि सति नलोपे चासति हे उशनस् अनङि सति नलोपे सति हे उशन असत्यनङि नलोपप्रसक्तेरभावात् रुत्वे विसर्गे च हे उशनः उशन्निति कौमुद्यां पाठः प्रामादिकः एव।

118. अनेहाः नञहन एह च इत्युणादिषु चतुर्थपादे नञुपपदे हनधातोरेहादेशस्स्यात्। चादसुन्प्रत्ययः। असुन्प्रत्यये उकार उच्चारणार्थः। नकार इत्संज्ञकः अस् इति शिष्यते । न एह अस् नञो नलोपः (नलोपो नञ इति) तस्मान्नुडचीति एहस्य नुट् अनेह अस् । अतो गुणे अनेहस् सु। अत्वसन्तस्येति दीर्घः। अनेहा स् से इति स्थिते। ऋदुशनस्पुरुदंशोऽनेहसाञ्च इत्यनङ्। सवर्णदीर्घः। अनेहान् स् । सुलोपः। नलोपः प्रातिपदिकान्तस्येति नलोपः। अनेहा। अत्र अनेहस् सु इति स्थितिसमये अनङ् प्राप्तः। अत्वसन्तस्येति दीर्घश्च प्राप्तः। उभयोर्मध्ये परत्वात् कृतप्रसङ्गित्वरूपनित्यत्वाच्च अनङेव स्यात्। तथा च अनेह अन् सु इति स्थिते, अतो गुणे, सुलोपे, सर्वनामस्थाने चेति नोपधादीर्घे, नलोपे च, अनेहा इति रूपं स्यादित्येव बोध्यम्। न च अ(त्व)सन्तस्येति दीर्घस्य अनवकाशत्वादनङ्बाधकत्वमस्तु इति वाच्यम्। वेधा इत्यादौ तस्य सावकाशत्वात्।

119. वेधाः वेधाङो वेध च इति। तत्रैवोणादिषु चादसुङ्विधाञिति विपूर्वक डुधाञ् धातुः धारणपोषणार्थकः विधाञो वेधादेशस्स्यात्। अनेकाल्त्वात्सर्वदिशः। वेध अस् अतो गुणे वेधस् सु। असन्तत्वादुपधादीर्घः। वेधास् सु सुलोपः। रुत्वविसर्गौ वेधाः ।

120. अधातोरित्युक्तेर्न दीर्घः, अत्वसन्तस्येति सूत्रे अधातोरिति पर्युदासेन धातुभिन्नासन्तस्यैव दीर्घः। तेन सूपपदकात् वसधातोः क्विपि सुवस् सु इति स्थिते अन्नन्तत्वेऽपि धातुत्वान्न दीर्घः। सुवः पिंडोपपदकाद्ग्रसतेर्ग्लसतेश्च । क्विपि पिंडग्रः

अधातोरित्युक्तेर्न दीर्घः । सुष्ठु वस्ते सुवः सुवसौ, सुवसः । पिण्डं ग्रसते पिण्डग्रः पिण्डग्लः । 'ग्रसु ग्लसु अदने'।४३७ **अदस औ सुलोपश्च** । ।७।२।१०७। अदस औकरोऽन्तादेशः स्यात्सौ परे सुलोपश्च । 'तदोः सः सौ–' (सू ३८१) इति दस्य सः । असौ । **'औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वं च'** (वा ४४८२) प्रतिषेधसंनियोगशिष्टमुत्वं तदभावे न प्रवर्तते । असकौ, असुकः । त्यदाद्यत्वम्, पररूपम्, वृद्धिः । 'अदसोसेः–' (सू ४१९) इति मत्वोत्त्वे । अमू । 'जसः शी' (सू २१४) । 'आद् गुणः' (सू ६९) ।

---

पिंडग्लः पिंडग्रसौ पिंडग्लसौ । पिंडग्रसः पिंडग्लसः इति अत्रापि धातुत्वात्सौ नोपधादीर्घः।

121. अदस औ सुलोपश्च । नन्वत्र अदस औ इत्येवालम्, हल्ङ्यादिना सुलोपात्। न च औत्वे कृते हल्परकत्वाभावेन सुलोपो न स्यादिति वाच्यम्। अपरनिमित्तकत्वेनान्तरङ्गत्वात्प्रथमतस्सुलोप एव स्यादिति।न चैवं त्यदादीनाम इत्यस्मादपि विभक्तिसापेक्षादन्तरङ्गत्वेन हल्ङ्यादिलोपे त्यः सः इत्यादिरूपासिद्धिरिति वाच्यम्। निरवकाशत्वेन त्यदादीनाम इत्यस्य हल्ङ्यादिसूत्रापवादत्वात्। न च द्विशब्दे तस्य सावकाशत्वमिति वाच्यम्। तथात्वे द्वे र इत्येव सूत्रयितव्यत्वेन त्यदादिग्रहणस्य नैरर्थक्यात्। न च हल्ङ्यादिलोपानन्तरं त्यदाद्यत्वप्रवृत्तेरवकाशोऽस्तीति चेत्तर्हि अल्पाश्रयत्वेन अन्तरङ्गत्वमदस औ इत्यस्य त्यदादीनाम इत्यस्य च अस्ति बह्वाश्रयत्वेन बहिरङ्गत्वम्। हल्ङ्यादेरस्ति यदि विभक्तिनिरपेक्षत्वेन तस्याप्यन्तरङ्गत्वमस्तीत्याग्रहस्तर्हि अन्तरङ्गत्वे समेपि नित्यत्वमनयोर्विशेष इति नित्यत्वादन्तरङ्गत्वाच्च त्यदाद्यत्वमदसधेते औत्वञ्च हल्ङ्यादिसूत्रं बाधन्त इति विद्धि। यद्वा तुल्यान्तरङ्गत्वेन तुल्यबलत्वात् विप्रतिषेधे परं कार्यमिति त्यदाद्यत्वस्य अदस औत्वस्य च हल्ङ्यादिसूत्रापेक्षया परत्वात् तदागमनस्य इष्टत्वाच्च तावेव स्यातामिति। तस्मात् अदस औ इति सूत्रिते सुलोपो नैव सिद्ध्येदिति सुलोपग्रहणमिति। सुलोपश्चेति चकारस्तु व्यर्थ एव। तं विनापि औत्वसुलोपकार्यद्वयविधानेन अर्थात्तदुभयसमुच्चयसिद्धेः। ननु अदस औ अदसः परस्य सोरौत्स्यात् । अदस्सस्य तु त्यदादीनामः अदौ तदोस्सस्सौ असौ इति रूपं सिद्ध्यत्येवेति किं सुलोपविधानेनेति चेत् मैवम् । असावेव असकौ स्त्री अत्र अदस् सुसोरौ अदन् औ अव्ययसर्वनाम्नामकच् प्राक्टेरिति असः पूर्वमकजादेशः प्राप्तो न भवति। औकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्, अन्यत्र सुपष्टेः प्रागिति व्यवस्थया औकारस्य औकारसकारभकारादित्वाभावात्तस्यैव टेः प्रागकच् व्यपदेशिवद्भावेन औकार एव टिः। तस्मात्प्रागकचि अकाविति भवति। स च प्रत्यय एवेति अदसस्सकारस्य त्यदाद्यत्वे अद इत्यस्य अजाद्यतष्टाबिति टापि अद आ –अकौ इति स्थिते प्रत्ययस्थात्कात्पूर्वस्यात

इदाप्यसुप इति आपि परतः प्रत्ययःस्थककारात्पूर्वस्येत्युक्तौ दकारस्योपरि अकार एव भवति अकावित्यत्राकारस्तु न भवति। आप्परकत्वाभावात्तस्य इत् स्यात्। अदि आ अकौ तदोस्स इति सः। असि आ अकौ सवर्णदीर्घः यण् अस्याकाविति स्यात् न च असिकाविति स्यादिति भ्रमेण वाच्यम्। आपि परतः इत्वविधानेन टापोऽवश्यकर्तव्यत्वे असि आकौ इति स्थिते टापो लोपविधानाभावात्। औकारस्य अदसोन्तादेशत्वपक्षे तु अदऔसोः सकारादिसुप्त्वात् सर्वनाम्नष्टेः प्रागकच् अदकऔ सत्वम् असकऔ टाप् असक–आ–औ सवर्णदीर्घः वृद्धिः। असकौ। अत्र प्रत्ययस्थादिति तु न। ककारस्य सर्वनाम्नष्टेः प्राक्कृतत्वेन प्रकृतिस्थत्वात्। अयमत्र सङ्ग्रहः। अदसः पञ्चम्यन्तताामाश्रित्य अदस औ इति सूत्र्यतामसाविति रूपसिद्धेः, मैवम्। स्त्रीवाचकत्वे असकावित्यसिद्धेः। न च अव्ययसर्वनाम्नामकच् प्राक्टेरिति अदसष्टेः प्रागकचादेशेन प्रत्ययस्थत्वाभावात्कस्य प्रत्ययस्थादितीत्वप्रसक्तिर्नैवेति असकाविति सिद्ध्यत्येवेति वाच्यम् । ओकारसकारभकारादाविति वार्तिकेन सुप औकारस्य टेरेव प्राक्कृतत्वेन अकचः कस्य प्रत्ययस्थत्वात्। तस्माददस इति न पञ्चमी किन्तु षष्ठ्येव। न च षष्ठीत्वेऽपि सुलोपनैरर्थक्यं शङ्क्यम्। विप्रतिषेधे परं कार्यमिति अदस औत्वस्य हल्ङ्यादिलोपात्प्राक्प्रवृत्तेः। अतो यथास्थितमेव सूत्रं निर्दोषमिति। ननु पञ्चम्यन्तपक्षस्सूपपाद एव। प्रत्ययस्थात्कादपि परत एव पूर्वस्यात इत्त्ववचनेन अद आ अकौ इति स्थिते आप्परकत्वं कस्य नैवेति प्रत्ययस्थसूत्रस्यैव तत्राप्रवृत्तेः। न चैवमप्यसाकौ इत्येव स्यान्न त्वसकौ इतीति वाच्यम्। ङ्यापोस्संज्ञा छन्दसोर्बहुलमिति ह्रस्वविधानेन असकाविति रूपसिद्धेः। अत एव तत्त्वबोधिन्यां प्रत्ययस्थादितीत्वं शङ्कितम्। आप एवाभावात् कथमित्वशङ्केति न वाच्यम् । स्थानिवद्भावे नाप्परकत्वस्य सत्वात्। तथा हि–अद आ अकौ इति स्थिते सवर्णदीर्घे अदाकौ ह्रस्वः अदकौ सत्वमसकौ। अत्र कात्पूर्वस्य अतः स्थानिवद्भावेन आप्परकत्वमिति । ननु स्वविधौ स्वस्य स्थानिवद्भावायोग इति चेत्तर्हि व्यपदेशिवद्भावेन आप्परकत्वमभ्युपगम्यतामिति चेन्मैवम्। अत्वमाप्त्वञ्च व्यपदेशिवद्भावेन लभ्येत आप्परकत्वन्तु कथं वा लभ्येत? अतस्तत्रेत्वशङ्का न सुसङ्गता। तत्तथास्ताम् प्रकृते न च संज्ञाछन्दसोरेव। ह्रस्वविधानेन असाकौ इत्यत्र ह्रस्वो दुर्लभ एवेति वाच्यम्। बहुलग्रहणात् अत्रापीति यद्यत्र तवानङ्गीकृतिः तर्हि सर्विकेति न स्यात्। तथा हि सर्वशब्दादकचि सर्वक टाप्–सर्वका। अत्र कात्पूर्वस्येत्वसिद्धावपि औङि सर्वशब्दादौ ङ एव अकज्विधानेन (ओकारसकारभकारादाविति वचनात्) सर्व अकौ टाप् सर्वा । अकौ सवर्णदीर्घः सर्वाकौ । ङ्यापोरिति ह्रस्वः सर्वकौ। औङश्शी सर्वके इति न सिद्ध्येत्। न च सर्विकेति रूपे इष्टापत्तिर्न सर्विके इति वाच्यम्। कस्य आप्परकत्वाभावात् । वस्तुतस्तु कादपि परत इत्यस्य अविवक्षितत्वेन सर्विके इत्येव शिष्टं रूपम्। अत एव कादपीति न वक्तव्यमिति असकावित्यत्र

प्रत्ययस्थसूत्रप्रवृत्तिरस्यैवेति न पञ्चम्यन्तपक्षो युक्त इति भावः। अत्रेदं तत्त्वम्। सर्वनाम्न ष्टेः प्राग्वा सुपष्टेः प्राग्वा अकच् क्रियेत न तत्र विशेषोऽस्ति । न च प्रकृतिस्थत्वप्रत्ययस्थत्वविशेषः कस्य स्यादिति वाच्यम्। अकचः प्रत्ययत्वेन तदवयवस्य कस्य सर्वदापि प्रत्ययस्थानपायात्। एवं स्थिते अदस् सु त्यदाद्यत्वम्। अद असु पररूपे अदसु सोरौ अद अकच् औकारात्प्राक्कृतत्वेऽपि सर्वनाम्नः प्राक्कृतत्वेऽपि अदक औ इत्येव भवति। न हि प्राक्क्रियत इत्येतन्मात्रमुक्तत्वेन तदवयवत्वेन ग्रहीतुं शक्यते। येन अद अकौ इति स्यात् टाप् अदका औ वृद्धिः अदकौ सत्वमसकौ । अत्र अदक आऔ इति स्थितिसमये प्रत्ययस्थादितीत्वं स्यादेव। वृद्ध्यनन्तर असकऔ इति स्थितेऽपि एकादेशस्य पूर्वान्तवद्भावेन औकारस्याप्त्वात् इत्वं स्यादेवेति असिकाविति स्यादिति शङ्का शोभनैव। अदसस्सकारस्यैव औकारविधाने तु अदन्तत्वाभावान्न टाबिति नेत्वशङ्केति । ननु तन्मध्यपठितस्तद्ग्रहणेन गृह्यत इति न्यायमवलम्ब्य औकारात्प्रागकचि कृतेऽपि अदक औ इत्येव स्थीयत इति टाबुत्पादिता हि। त्वयेतःपूर्वं तथैवाधुनापि असौ इत्याकारात्प्राक्कृतत्वेऽपि असक औ इति स्थीयत इति टाप् कथं नोत्पद्यते इति चेदुच्यते। एकाच्त्वेन औकारस्य टेरेवाभावात्। कथन्तत्र तन्मध्यपतितत्वमिति। न तत्र तन्न्यायः स्वीक्रियते। असौ इत्यत्र तु बह्वच्त्वेन टेस्संभवात्तन्मध्यपतितत्वस्य सत्त्वात्। स न्यायः स्वीक्रियत इति यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गमिति असौ इत्यस्मात्सोर्विहितत्वेन असौ इत्येतदङ्गमेवेति असकौ इत्येतदप्यङ्गमेव। तच्च औकारान्तमेव । अतः अदन्तं यदङ्गमित्युक्ते प्रकृते नास्तीति नात्र टापः प्रसक्तिः ।

122. अदस् सु अकच् अदकस् सु अत्र वार्तिकम् औत्वप्रतिषेध इत्यादि अयमर्थः। साकच्कस्य अदस औकारोऽन्तादेशो न स्यात् इति प्रतिषेधोऽप्यस्मादेव वार्तिकात् यदा औत्वप्रतिषेधस्तदा सादुत्वञ्च स्यात्। अत एव औत्वं साकच्कस्य वा सादुत्वञ्चेति न भणितम्। तथात्वे यदा औत्वं तदा सादुत्वं स्यादिति असुकौ इति रूपापत्तेः। सादुत्वञ्च वैकल्पिकमेव। तच्च वैकल्पिकत्वं व्यवस्थया यदा औत्वप्रतिषेधस्तदा उत्वं यदा औत्वप्रतिषेधो न तदा न सादुत्वंमपीति इयं व्यवस्था चकाराल्लब्दा(ब्धं) औत्वप्रतिषेधेन सादुत्वस्य समुच्चयनात्। तथा च साकच्कस्य अदसः औत्वप्रतिषेधस्स्यात्। सादुत्वञ्च स्यात् उभयमपि विल्पेनैव तेन साकच्कस्य अदसः औत्वप्रतिषेधाभावः स्यात् सादुत्वाभावश्च स्यादिति वाक्यद्वयमर्थतया लब्धम्। इदमेव प्रतिषेधसन्नियोगशिष्टत्वं। नाम उत्वस्य प्रतिषेधेन सह समुच्चयेन विहितत्वमित्यर्थः। औत्वमेव विकल्पतः अविधाय तत्प्रतिषेधस्य विकल्पतो विधानेन लब्धं फलमिदमेव । असकौ असुक इति रूपद्वयमदसोकजादेशे स्यादेव सादुत्वं नाम सात्परस्य उत्वम्।

४३८ **एत ईद्बहुवचने** । ।८।२।८१। अदसो दात्परस्य एत ईत्स्याद् दस्य च मो बह्वर्थोक्तौ । अमी । पूर्वत्रासिद्धम्' (सू १२) इति विभक्तिकार्यं प्राक्, पश्चादुत्वमत्वे । अमुम्, अमू, अमून् । मुत्वे कृते घिसंज्ञायां नाभावः । ४३९ **न मु ने** । ।८।२।३। नाभावे कर्तव्ये कृते च मुभावो नासिद्धः स्यात् । अमुना, अमूभ्याम् ।अमूभ्याम् । अमूभ्याम् अमीभिः । अमुष्मै । अमीभ्यः २। अमुष्मात् । अमुष्य, अमुयोः, अमीषाम् । अमुष्मिन्, अमुयोः, अमीषु ।। **इति सान्ताः** ।।

**इति हलन्तपुँलिङ्गप्रकरणम्** ।

---

123. अमू अदस् औ त्यदाद्यत्वं पररूपं अद औ वृद्धिः। अदौ अदसोसेरिति दात्परस्य औकारस्य आन्तरतम्यादूत्वं दस्य मत्वममू ।

124. एत ईद्बहुवचने अदस् जस् त्यदादीनामः पररूपम्, अद जस् जसश्शी आद्गुणः अदे अस्मात्सूत्रात् ईकारएकारस्य दस्य च मः अमी। अदसोसेरिति सूत्राद्दोम इत्यनुवर्त्यतेऽत्र। ननु अत्र दोम इत्यनुवृत्त्या किम्? अदस इत्यनेनैव दस्य मत्वसिद्धेरिति चेन्मैवम्। दात्परस्योत्वं दस्य मत्वञ्च सन्नियोगशिष्टमिति। यद्यदस इति सूत्राद्दस्य मत्वं स्यात्तर्हि दादुत्वमपीति । ननु दादुत्वस्य विशेषविहितेनेत्वेन बाधाददादुत्वं न स्यात्। दस्य मत्वादेशे को बाध इति चेन्मैवम्। दात्परस्योत्वे सत्येव दस्य मत्वं स्यात्। न त्वन्यथेति दादुत्वसन्नियोगशिष्टं दस्य मत्वं दादुत्वाभावेन प्रवर्तत एव। नन्वेवं चेत् ऊत ईद्बहुवचने इति सूत्र्यताम्। अदस इति सूत्रादेव दादुत्वे दस्य मत्वे च कृते अमू इति स्थिते अनेन ऊकारस्य ईत्वं विधीयत इति अमी इति स्यादेवेति दोम इत्यनुवृत्त्या किमिति चेन्मैवम्। सन्नियोगशिष्टस्य सह वा प्रवृत्तिस्सह वा निवृत्तिरिति दादुत्वस्य निवृत्तौ दस्य मत्वमपि निवर्तत इतीति।

125. नमुने न नाशब्दस्य सप्तम्यां ने इति रूपम्। हा हे इतिवत्। सा च विषयसप्तमी। नाविषये इत्यर्थः। मु इति लुप्तविभक्तिकं पदम्। नेति पूर्वत्रासिद्धमिति पूर्वसूत्रादनुवृत्त्या प्राप्तेन असिद्धपदेन संबध्यते। ने नाविषये–मुमुत्व नासिद्धमिति सूत्रार्थः। अदस् टा इति स्थिते त्यदाद्यत्वम्मुत्वञ्च। अमु आ शेषोध्यसखीति उकारान्तत्वेन अमु इत्यस्य घिसंज्ञायां आङो नास्त्रियामिति आङो नादेशः। मुत्वस्य त्रैपादिकत्वेन नाभावस्य सपादिकत्वेन च अत्र नाभावे कर्तव्ये मुत्वस्य पूर्वत्रासिद्धमिति असिद्धत्वे प्राप्ते नमुन

इत्यनेन निषेधः अमुना इति रूपम्। यद्यप्याङो नास्त्रियामिति सूत्रात्पश्चात्। आदस इति सूत्रिते अदसः परस्य आङो नास्त्रियामित्यर्थादमुनेति रूपसिद्धिस्तथापि नातीव लाघवमिति तदुपेक्षितम्। अत एव अमुना इत्यपि न सूत्रितम्। अस्यार्थस्तु अदस आङि परे अमुना इति निपात्यत इति। किञ्च अदस इति अमुना इति च न सूत्रयित्वा नमुने इति सूत्रितवता पाणिनिना अयमर्थस्सूचितो भवति। तथा हि – न मु ने इति योगविभागः कर्तव्यः। कृते तु न पूर्वत्रासिद्धं त्र इत्यसिद्धत्वनिषेधः। तेन च पूर्वत्रत्वासिद्धमिति विधिना नेति निषेधेन च विकल्पः फलति। स च इष्टानुरोधेन व्यवस्थित एव। अस्य लक्ष्यन्तु रामः अत्र राम सु ससजुषोरुः रामरु। उपदेशेऽजनुनासिक इति रोरुत इत्संज्ञायां कर्तव्यायां पूर्वत्रासिद्धत्वं तेन रेफस्य उकारपरकत्वेन खरवसानयोरिति विसर्गो न स्यादिति नात्र पूर्वत्रासिद्धत्वमाश्रियत इति उत इत्संज्ञया लोपे रेफस्य विसर्गेन राम इति सिद्ध्यतीति मुनेति इति सूत्रस्य न स्यानुवृत्त्या मुत्वे कर्तव्ये नाभावो नासिद्ध इत्येवार्थः । अस्य लक्ष्यममुनेत्येव इति। अत्र विचार्यते, ननु रुरिति अनुनासिकनिर्देशसामर्थ्यादेव नासिद्धत्वमिति वक्तुं शक्यत एवेति किमनेनेति योगविभागेन इति चेन्मैवम्। तरुमूलमित्यत्र हशि चेति रोरुत्वम्माभूदिति । अतो रोरित्यत्र रोरनुनासिकत्वस्य तद्व्यावृत्तौ चरितार्थत्वात् तरु इत्यत्र रोरनुनासिकत्वान्नोत्वमिति भावः। नन्वेवञ्चेत् ससजुषोरुः इति निर्देशसामर्थ्यादेव रोरुकारस्य इत्संज्ञा सिद्ध्यत्येव। अन्यथा रुशब्दस्य सौ रुस् इति स्थिते। ससजुषोरुः रुरु इति स्थिते अत्र विसर्गो न स्यादेवेति रुः इति कथं रूपं स्यात्? इदमेव ज्ञापयति रोरुत्वमित्संज्ञाविधायकसूत्रम्प्रति नासिद्धमिति किञ्च त्वदुक्तरीत्या नेत्यनेनैव व्यवस्थितविभाषासिद्धौ मुन इति सूत्रं व्यर्थमेव। इत्संज्ञां प्रति यथा रुत्वं नासिद्धं तथा नाभावं प्रति मुत्वं नासिद्धमिति। तस्मात् रुरिति सविसर्गनिर्देश एव पूर्वत्रासिद्धमित्यस्य वैकल्पिकत्वं ज्ञापयतीति नेति मुने इति नमुन इति च व्यर्थमिति चेदुच्यते, ज्ञापनस्य सामान्यापेक्षत्वे व्यर्थं भवतु। विशेषापेक्षत्वे तु सविसर्गनिर्देशः रोरुत्वस्यैव इत्संज्ञां प्रत्यसिद्धत्वं निवारयति न तु मुत्वस्येति मुन इति सूत्रमावश्यकम्। अस्मिन्ननुवृत्त्यर्थं नेति सूत्रमावश्यकम्। न च नमुन इत्येव तर्हि वक्तव्यम्। किं योगविभागेनेति वाच्यम्। ज्ञापनक्लेशो नास्ति योगविभाग इति । न च वर्णगौरवमिति वाच्यम्। नमुन इत्यक्षरत्रयातिरिक्ताक्षरानभ्युपगमात्। ननु तर्हि नेति सूत्रेणैव सर्वेष्टसिद्धौ मुन इति व्यर्थम् ।

**इति हलन्तपुल्लिङ्गप्रकरणम्।**

## अथ हलन्तस्त्रीलिङ्गप्रकरणम् ।१२।

४४० **नहो धः** । ।८।२।३४। नहो हस्य धः स्याज्झलि पदान्ते च । उपानत्, उपानद्, उपानहौ, उपानहः । उपानद्भ्याम्। उपानत्सु । उत्पूर्वात् । 'ष्णिह प्रीतौ' (धा १२०१) इत्यस्माद् 'ऋत्विग्–' (सू ३७३) आदिना क्विन्, निपातनाद् दलोपषत्वे, क्विन्नन्तत्वात्कुत्वेन हस्य घः जश्त्वचर्त्वे । उष्णिक् उष्णिग्, उष्णिहौ, उष्णिहः । उष्णिग्भ्याम् । उष्णिक्षु ।। **इति हान्ताः**।। द्यौः, दिवौ, दिवः । द्युभ्याम् । द्युषु ।। **इति वान्ताः** ।। गीः गिरौ, गिरः । एवं पूः । चतुरश्चतस्रादेशः । चतस्रः । चतस्रः । चतसृणाम् ।। **इति रेफान्ताः** ।। किमः कादेशे टाप् । का, के, काः । सर्ववत् ।

---

## अथ हलन्ताः त्रीलिङ्गाः

1. उष्णिक् उत्पूर्वात् ष्णिह प्रीतौ इति धातोः क्विन्। धात्वादेष्षस्स इति सत्वं उत् स्निह् सु इति स्थिते। तलोप षत्वविधायकप्रकृतोपयोगिशास्त्राभावात्। उष्णिगिति ऋत्विगादिसूत्रे निपातनादेव तलोपषत्वे उष्णिह् सु। न च तलोपे सति इण्कोरिति षत्वं स्यादिति वाच्यम्। सस्य धात्ववयवत्वेन आदेशप्रत्ययावयवत्वाभावात् ततस्सुलोपघत्वजश्त्वचर्त्वाणि उष्णिक् ।

2. द्यौः सुपरकत्वाद्दिव् शब्दस्य दिव औ दित्यौकारान्तोऽदेशः। द्युषु पदान्तत्वाद्दिव उदिति उकारोऽन्तादेशः द्युभ्यामित्यादौ च तदुभयाभावात्। दिवौ दिव इत्यादीनि रूपाणि ।

3. पूः पृ पालनपूरणयोरिति धातोः क्विप्, उदोष्ठ्यपूर्वस्येति। ऋृत उत्, उरण्रपर इति रपरत्वं पुर् सु हल्ङ्यादिलोपः । र्वोरुपधाया दीर्घ इक इति दीर्घः। पूर् विसर्गः पूः पुरौ पुर इत्यत्र अपदान्तत्वावाद्दीर्घो न पूर्षु रोस्सुपीति नियमान्न विसर्गः । एवमेव गीर्शब्दोप्यूह्यः प्रपञ्चितश्च तत्त्वबोधिन्याम्।

4. चतस्रः त्रिचतुरोस्तिसृचतसृ इति चतुरश्च तिस्रादेशः। स्वभावतो बह्वर्थवाचित्वाच्चतुरो नैकवचनद्विवचनपरकत्वमस्ति । तस्मात् जश्शसोर्यणि चतस्रः । भिस्भ्यस्सु चतसृभिः चतसृभ्यः चतसृभ्यः । आमि षट्चतुर्भ्यश्चेति नुटि न तिसृ चतसृ इति निषेधान्नामीति न दीर्घः चतसृणाम्। आदेशप्रत्यययोरिति षत्वं चतसृपु ।

5. का । किमः क इति कादेशे अदन्ताङ्गत्वेन अजाद्यतष्टाबिति टाप् ।

४४१ **यः सौ** ।७।२।११०। इदमो दस्य यः स्यात्सौ । 'इदमो मः' (सू ३४३) । इयम् । त्यदाद्यत्वम्, टाप्, 'दश्च' (सू ३४५) इति मः । इमे, इमाः । इमाम्, इमे ,इमाः । अनया । 'हलि लोपः' (सू ३४७) आभ्याम् । आभ्याम् । आभ्याम् । आभिः । अस्यै । अस्याः२, अनयोः२ आसाम्, अस्याम्, अनयोः, आसु । अन्वादेशे तु एनाम्, एने, एनाः एनया । एनयोः २ । एनयोः ।। **इति मान्ताः** ।।

---

6. यस्सौ यः सौ इति न्या(व्या) सः। इदमोम इति सूत्रादिदम इति 'दश्चेति' सूत्राद्द इति चात्रानुवर्त्यते । अनेकाल्त्वात्सर्वादेशः। तेन दकाराकारयोः स्थाने यकाराकारौ स्यातामिति। न चेदं सम्यक् । अकारस्य आकारदेशविधानवैयर्थ्यात्। किन्तु दकारस्थाने यकारस्स्यादिति। अत एव दः इति दशब्दस्य षष्ठी सूत्रे निर्दिष्टा। न तु स्येति दशब्दस्य तेन यादेशेऽपि अकार उच्चारणार्थ इति बोध्यम्। अय यादेशस्स्त्रियामेवेति इदोय् पुंसीति सूत्रे पुंसिग्रहणेन परिशेषाल्लभ्यते। न च नपुंसकेऽपि स्यादिति शङ्क्यम् । तत्र सोर्लुका लुप्तत्वेन न लुमतेति प्रत्ययलक्षणनिषेधेन च सुपरकत्वाभावेन सूत्राप्रवृत्तेः। इदोय् पुंसीति सूत्रे एरपुंसि इति न्यासः। यस्सावित्यनेन इदमो दस्य पुंस्त्रियोर्यादिशे कृते अनेन पुंसि इदमेकारस्याकारो विधीयते तेन अयमिति पुंसि इयमिति स्त्रियाञ्च रूपं सिद्ध्यत्येव। एः अ पुंसि इति न्यासः अ इति लुप्तप्रथमाकं पदम्। अर्धमात्रालाघवमस्ति तदपि लुप्तविभक्तिकत्वेन निर्देशात्। एरः पुसीति सूत्रिते तु समसेवोभयमपीति। न च अ पुंसीत्यत्र न तु पुंसीत्यर्थस्स्यादिति वाच्यम्। व्याख्यानतो विशेषप्रतिपत्तिरिति परिभाषाया जागरूकत्वात् ।

7. अनया अनाप्यक इत्यनादेशः। आङि चाप इति आप एकारः अने आ अयादेशः त्यदाद्यत्वे कृते अदन्तत्वेन टापि आबन्ताङ्गत्वात्सर्वनाम्नस्स्याड्ढ्स्वश्चेति। अस्या इत्यादि । न चात्र ह्रस्वविधानं व्यर्थमिति वाच्यम्। अदन्तत्वेन टापि दीर्घस्यैव सत्त्वात्। एकस्यैव अवर्णस्य व्यपदेशिवद्भावेन अदन्ताङ्गत्वं बोध्यम्। यदि व्यपदेशिवद्भावेन अदन्ताङ्गत्वमत्र नाश्रीयते तर्हि आभिरित्यत्र बहुवचने झल्येदिति एत्वं स्यात्। पुंसीव टापोऽभावेन अदन्ताङ्गत्वात्। न च टाबुत्पत्तिं प्रति यथा अदन्ताङ्गत्वं व्यपदेशिवद्भावेनावर्णस्य नाश्रियते तथा एत्वं प्रत्यपीति वाच्यम्। एभिरिति पुंसि रूपसिद्ध्यर्थमवश्यमङ्गीकर्तव्यत्वात्। तस्मात् आभ्यामित्यादावयं रूपनिष्पत्तिक्रमः। इदं भ्याम् त्यदाद्यत्वं पररूपत्वं इदभ्यां हलि लोपः अभ्यां अदन्तत्वाट्टाप्। आभ्याम् । न चात्र सुपि चेति दीर्घश्शङ्क्यः। तत्र अत इति तपररकरणात्। टापि कृते अस्य आदन्ताङ्गत्वात् इदं ङे त्यदाद्यत्वं पररूपत्वं टाप् च इदा ङे सर्वनाम्नस्स्याड्ढ्स्वश्च। इदस्या एवृद्धेः। इदस्यै हलि लोपः। अस्यै ङेराम्नद्याम्नीभ्य इत्याबन्तत्वेन ङेरामि स्याटि च अस्याम् ।

'ऋत्विग्–' (सू ३७३) आदिना सृजेः क्विन् अमागमश्च निपातितः । स्रक्, स्रग्, स्रजौ, स्रजः । स्रग्भ्याम् । स्रक्षु ।। **इति जान्ताः** ।। त्यदाद्यत्वम् टाप् । स्या, त्ये, त्याः । एवं तद्, यद्, एतद् ।। **इति दान्ताः** ।। वाक्, वाग्, वाचौ, वाचः । वाग्भ्याम् । वाक्षु ।।**इति चान्ताः** ।। अप्शब्दो नित्यं बहुवचनान्तः । 'अप्तृन्–' (सू २७७) इति दीर्घः । आपः । अपः । ४४२ **अपो भि** । ।७।४।४८। अपस्तकारः स्याद्भादौ प्रत्यये परे अद्भिः । अद्भ्यः । अपाम् । अप्सु । ।। इति पान्ताः ।। दिक्, दिग्, दिशौ, दिशः । दिग्भ्याम् । दिक्षु । 'त्यदादिषु–' (सू ४२९) इति दृशेः क्विन्विधानादन्यत्रापि कुत्वम् । दृक्, दृग्, दृशौ, दृशः ।। **इति शान्ताः** ।।

---

8. स्रक् ऋत्विगादिना सृजेः। क्विन्प्रत्यये कृते सृगिति भवितव्ये कथं स्रगिति स्यादत आह । अमागमश्च निपातित इति। अमो मित्त्वादन्त्यादच परस्सन् भवतीति सृ अङ् यण् स्रज् कुत्वं स्रक् सृजेरमागमविधायकसूत्रान्तराभावात्। अमागमाभावे स्रगिति रूपं न स्यादिति ऋत्विगादिसूत्रे स्रगिति निर्देश एव अमागमं विधत्त इति भावः।

9. स्या–तदोस्ससाविति सः त्यां त्यया त्यस्यै त्यस्याः त्यासाम् त्यास्वित्यादीनि रूपाणि । त्यच्छब्दस्य स्त्रीवाचकत्वे ऊह्यानि। सर्वावत्। एतच्छब्दस्य सौ एषा एतद् सु इति स्थिते त्यदाद्यत्वं एत सु तदोस्सस्सौ एस सु, टाप्, एसा सु सुलोपः आदेशप्रत्यययोरिति आदेशत्वेन सस्य षत्वमेषा । वाक् वाक्षु वाच् सु । चोः कुः कवर्गात्परत्वेन प्रत्यववयवत्वातस्य षत्वम्। कषयोर्योगे क्ष इति भवतीति क्षकारो न वर्णान्तरं जञोर्योगे ज्ञ इतिवत् ।

10. आपः अप् शब्दाज्जसि अप्तृन्निति दीर्घः। अप्तृन्निति सूत्रे असंबुद्धावित्येतदबंशे निरर्थकमेव। अप्शब्दस्य नित्यबहुवचनान्ततया एकवचनं संबुद्धिरिति संबुद्धिपरकत्वाभावात्। सर्वनामस्थान इति त्वावश्यकमेव। अत एव शसि असर्वनामस्थापरकत्वेन दीर्घाभावात्। अप इति रूपम्। सुडनपुंसकस्येति स्त्रियामपि सुटस्सर्वनामस्थानत्वात्।

11. अपोभिः पूर्वसूत्रात्त इत्यनुवर्तते। यस्मिन्विधिस्तदादावल्ग्रहणादिति भीत्यस्य भादावित्यर्थः । अङ्गाधिकारीयत्वादपोङ्गत्वे भादिरप्रत्यय एव भवति। प्रत्यये परतः पूर्वस्य अङ्गसंज्ञाविधानात्। अतः प्रत्यय इत्याक्षेपाल्लभ्यते। अपोऽङ्गस्य भादौ प्रत्यये परे तकारस्स्यात्। अलोन्त्यस्येत्यन्त्यस्य स्यात्। स च तः जश्त्वमद्भिः अङ्गाधिकारीयत्वेन तदन्तविधित्वात् बहुळाद्भिरित्यत्रापि तस्स्यादिति बोध्यम्। न तु बहुळाब्भिरिति स्यात्।

12. दृक् क्विन्प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणेन दृशस्त्यदादिषूपपदेषु क्विन्विहित इति केवलस्यापि दृशः क्विबन्तत्वेऽपि किन्प्रत्ययस्येति कुत्वं स्यात् स्पृगितिवत् ।

त्विट् त्विड्, त्विषौ, त्विषः । त्विड्भ्याम् । त्विट्त्सु, त्विट्सु । सह जुषत इति सजूः, सजुषौ, सजुषः । सजूर्भ्याम् सजूष्षु सजूःषु । षत्वस्यासिद्धत्वाद्रुत्वम् । आशीः, आशिषौ, आशिषः । आशीर्भ्याम् । आशीर्भिः ।। **इति षान्ताः** ।। असौ । त्यदाद्यत्वम्, टाप् । औङः शी । उत्वमत्वे । अमू, अमूः । अमूम्, अमू, अमूः । अमुया, अमूभ्याम्, अमूभिः । अमुष्यै, अमूभ्याम् अमूभ्यः । अमुष्याः२। अमुयोः२ अमूषाम् । अमुष्याम्, अमुयोः, अमूषु । ।।**इति सान्ताः**।।

## इति हलन्तस्त्रीलिङ्गप्रकरणम् ।

---

13. त्विट्त्सु। डस्सि धुडिति धुट्त्वस्य वैकल्पिकत्वात्।

14. ससजुषो रुरिति, सजुषोरुत्वविधानात् सजूरिति रूपम्। अन्यथा जश्त्वचर्त्वयोः सजुट् सजुड् इति स्यात्। सजूष्षु सजूः सु । वा शरीति विसर्जनीयसस्य वैकल्पिकत्वात् । षत्वन्तु नुम्विसर्जनीयशर्व्यवायेपीति सूत्रात्। एवमेव आशीष्षु आशीः षु इति स्यात् ।

15. असौ पुंवद्रूपम्। परत्वादौत्वे अदन्तत्वाभावेन टापोऽप्रसक्तेः। अमू अदा ई आद्गुणः अदे अदसोरिति मुत्वम्। एकारस्थाने दीर्घ एव। ऊदित्यादेशो भवति। आन्तरतम्यात्। अमू। न च एत ईच्छङ्क्यः। बहुवचन इत्युक्तत्वात्। अमूः । अद जस् सवर्णदीर्घे अदास् मुत्वे अमूस् रुत्वविसर्गौ अमूः । नात्र जसश्शी शङ्क्या । टापि कृते आदन्तत्वात् तस्माच्छसो न इति नत्वम् न शङ्क्यम्। पुंसीत्युक्तत्वात् । अमूम् । अद अम् अमि पूर्वः अदाम्। मुत्वमसूं । न च मुत्वे कृत एव अमि पूर्वो वाच्य इति वाच्यम् । अमि पूर्वदृष्ट्या मुत्वस्यासिद्धत्वात् अमू । अदा औट् औङश्शी । न च प्रथमाद्विवचनमेव औङित्यनेन गृह्यत इति वाच्यम्। रमां रमे रमा इत्यत्र रमे इत्यस्यासिद्धिप्रसङ्गात्। तस्मादौङिति औ औटोरुभयोर्ग्रहणम्। न च औकारविभक्तेस्संज्ञा प्राचामिति प्रथमाद्विवचनस्यैव औङिति संज्ञा इति वाच्यम्। इत्संज्ञया टस्य लोपे औटोप्यौकारविभक्तित्वात् । औङित्यौ औटोस्संज्ञा प्राचामिति तु कौमुदीपाठस्सुवचः । अदा ई गुणमुत्वे अमू अमूः जसिवत्। अमुया अदा टा, आङि चापः अदे आ अयादेशः। अदया मुत्वममुया। न च आङि चाप इत्यतः पूर्वमेव मुत्वं स्यादिति वाच्यम्। मुत्वस्य असिद्धत्वात् प्रवृत्तिरेव नास्तीति । अत एव शास्त्रासिद्धिमतं सङ्गच्छते। कार्यासिद्धिमते तु कृते मुत्वे तस्यासिद्धवद्भावेन स्वदृष्ट्या आबन्तत्वस्यैव दृश्यमानत्वादाङि चापप्रवृत्तौ अमू इत्यूकारस्य एकारः । अमे आ अयादेशः अमया इति स्यादिति वोध्यम्। किञ्च यदा उत्वमुपयाति तदा सन्नियोगशिष्टं मुत्वमपीति अदयेत्येव स्यात्। न च पुनर्मुत्वप्रवृत्तिः। सकृदिति न्यायविरोधात्। अमुष्यै षत्वं प्रति तु न मुत्वमसिद्धम्। आदेशप्रत्यययोरित्यस्यैव परत्वेनासिद्धत्वात् अदङे स्याडागमः । आपो ह्रस्वः वृद्धिः मुत्वं अमुष्यै अमुयोः ङोसि आङि चाप इति मुत्वात्प्रागेवैकारः अयादेशः पश्चान्मुत्वम्। अमुयेत्यत्रेव।

इति हलन्ताः स्त्रीलिङ्गाः

## अथ हलन्तनपुंसकलिङ्गप्रकरणम् ।१३।

स्वमोर्लुक् । दत्वम् । स्वनडुत् , स्वनडुद्, स्वनडुही । 'चतुरनडुहोः–' (सू ३३१) इत्याम् । स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् ।। **इति हान्ताः** ।। 'दिव उत्' (सू ३३७) अहर्विमलद्यु । अन्तर्वर्तिनी विभक्तिमाश्रित्य पूर्वपदस्येवोत्तरखण्डस्यापि पदसंज्ञयां प्राप्तायाम् **'उत्तरपदत्वे चापदादिविधौ प्रतिषेधः'** (वा ४८०) इति प्रत्यलक्षणं न । विमलदिवी, विमलदिवि । 'अपदादिविधौ' किम् –दधि–सेचौ । इह षत्वनिषेधे कर्तव्ये पदत्वमस्त्येव । चकारस्य कुत्वे तु न । **इति वान्ताः** ।। वाः, वारी । अथ अझलन्तत्वान्न नुम्, वारि । चत्वारि ।। **इति रेफान्ताः** ।। 'न लुमता–' (सू २६३) इति कादेशो न । किम् , के कानि । इदम् इमे, इमानि । **'अन्वादेशे नपुंसके एतद्वक्तव्यः'** (वा१५६९) एनत्, एने, एनानि । एनेन । एनयोः । एनयोः ।। **इति मान्ताः** ।। ब्रह्म, ब्रह्माणि ब्रह्मणी 'सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः' । हे ब्रह्मन्, हे ब्रह्म ।

---

श्रीहयग्रीवाय नमः

### अथ हलन्ता नपुंसकलिङ्गाः

1. स्वनडुत् । शोभना अनड्वाहो यस्य तत्स्वनडुत् । अनः । स्वनडुह् सु इति स्थिते सोर्लुक् । वसुस्रंस्विति दत्वम् चर्त्वम् स्वनडुत् । औ ङि नपुंसकाच्चेत्यौङश्श्याम्, कृतायां स्वनडुह् शी इति स्थिते, अपदान्तत्वान्न वसुस्रंस्विति दत्वम् । स्वनडुही जसि स्वनडुह् जस् इति स्थिते जश्शसोः शिः शिसर्वनामस्थानमिति शेःसर्वनामस्थानत्वेन चतुरनडुहोरित्याम्। यण् अनड्वाह् इ नपुंसकस्य झलच इति नुम्। नश्चापदान्तस्येत्यनुस्वारः स्वनड्वांहि ।

2. विमलद्यु विमलाद्यौः यस्मिन्नहनि तद्विमलद्यु विमलदिव्शब्दः। विमलदिव् सु इति स्थिते स्वमोर्लुक् । न लुमतेति प्रत्ययलक्षणनिषेधेन सुपरकत्वाभावात् दिवऔदिति न । किन्तु पदान्तत्वाद्दिव उत् । विमलद्यु । विमलदिव् शि इति स्थिते यचि भमिति अजादिस्वादिप्रत्ययपरकत्वेन पूर्वस्य विमल दिवित्यस्य भत्वेन पदत्वाभावाद्दिव उन्न। विमलदिवि। अत्र अलौकिकप्रक्रियावाक्ये विमला सु दिव् सु इति स्थिते सुपो धातुप्रातिपदिकयोरिति स्वोर्लुकि विमलदिव् इति भवति। ततः कृत्तद्धितसमासाश्चेति समासत्वात्स्वादयः। एवं स्थिते सुपो धात्विति लुप्ता या विभक्तिस्सा अन्तर्वर्तिनी विभक्तिरित्युच्यते, समासान्तर्वर्तित्वात्। तामाश्रित्य यथा विमलेत्यस्य पदसंज्ञा तथा दिवित्यस्यापि पदसंज्ञास्तीति पदान्तत्वाद्दिव उत्स्यादिति शङ्कते। अन्तर्वर्तिनीमित्यादिना कौमुदीकारः। न च न लुमतेति प्रत्ययलक्षणनिषेधात्पूर्वपदस्यापि न पदत्वमिति,

कथमुत्तरपदस्य पदत्वंशङ्केति वाच्यम्। तन्निषेधस्यानित्यत्वात्। अन्यथा राजन् अस् पुरुष सु इत्यत्र असो लोपे न लुमतेति प्रत्ययलक्षणनिषेधेन–पूर्वस्य राजन्नित्यस्य अपदत्वे नलोपः प्रातिपदिकान्तस्येति नलोपो न स्यात्। तस्मात्पूर्वपदस्य प्रत्ययलोपे प्रत्ययलक्षणन्यायेन पदत्वस्यावश्याङ्गीकर्तव्यत्वात्। तथैवोत्तरपदस्यापीति शङ्का सुशङ्कैव। न च बहिर्वर्तिनीं विभक्तिमाश्रित्याप्युत्तरखण्डस्य पदत्वं स्यादिति वाच्यम्। अजादिविभक्तिमाश्रित्य भत्वेन पदत्वापवादात्। न च सावपि सुलोपेन पदत्वाभावाद्विमलद्यु इति न स्यादिति वाच्यम्। स्वादिष्विति पदत्वाभावेऽपि सुप्तिङन्तमिति पदत्वस्य सत्वात्। न च सुपो लुकि यथा स्वादिष्विति पदत्वाभावस्तथैव सुप्तिङन्तमित्यपि पदत्वन्नास्तीति वाच्यम्। स्थानिवद्भावेन सुबन्तत्वात्। न च अनल्विधाविति निषेधः। लुप्तस्य सोद्र्चल्त्वात्। अन्यथा वारीत्यादीनि न पदानि स्युः। न च न पदान्तेति पदान्तविधौ स्थानिवद्भावनिषेधो वाच्य इति वाच्यम्। अचः परस्मिन्निति स्थानिवद्भावस्यैव न पदान्तेति निषेधात्। तस्मात् विमलदिव् शि इत्यत्रैव अन्तर्वर्तिनीं विभक्तिमाश्रित्यैव पदसंज्ञायां प्राप्तायां उत्तरपदत्वे चापदादिविधौ प्रतिषेध इति वार्तिकम्। न लुमतेति निषेधस्यानित्यत्वेन नित्यत्वार्थं पुनरयं प्रतिषेधारम्भ इति भावः। ननु विमलदिव् शि इत्यत्र पदत्वसंज्ञावारणार्थं वार्तिकस्योपक्रान्तत्वेन कथं नित्यत्वार्थमित्युक्तमिति चेदुच्यते। भत्वस्य पदापवादत्वेन भत्वान्नोत्वमित्युक्तञ्चैव अत्रोत्वनिरासे सति किमनेन इति । किञ्च प्रत्ययलक्षणन्नेति प्रत्ययलक्षणनिषेधस्यैवोक्तत्वात् वार्तिकस्यायमर्थः । उत्तरपदत्वे चापदादिविधौ प्रतिषेधः उत्तरेति लुप्तषष्ठीकं पदम्–उत्तरस्य पदत्वे कर्तव्ये च प्रत्ययलक्षणप्रतिषेधो वाच्यः। न तु पदादिविधाविति वार्तिकस्यार्थतः पठनमिदम् । वस्तुतो वार्तिकन्तु न लुमताङ्गस्येति सूत्रे उत्तरपदत्वे चापदादिविधौ लुमता लुप्ते प्रत्ययलक्षणन्न इति। अर्थस्तु उत्तरउत्तरखण्डस्य पदत्वे कर्तव्ये च लुमताशब्देन लुप्ते सति प्रत्यये प्रत्ययलक्षणं न इति । वार्तिककर्तुरयमाशयः। न लुमताङ्गस्येति सूत्रं लुमच्छब्दलुप्तप्रत्ययनिमित्तकमङ्गकार्यं निषेधयति न त्वङ्गस्य भपदादिसंज्ञामिति अङ्गस्य पदत्वसंज्ञां निषेधयितुमन्यत्सूत्रमावश्यकन्तदभावान्मया वार्तिकं निबद्धव्यमिति। वस्तुतस्तु कार्यस्यैव निषेधे केवलसंज्ञायास्सत्त्वे वा असत्वे वा न किमपि प्रयोजनमिति प्रकृते न लुमतेत्यनेनैव पदकार्यस्य उत्वस्य निषेधे सति किं पदसंज्ञायां सत्यामपीति नेदं वार्तिकमारब्धव्यम् । अत एव स्थितस्य गतिश्चिन्तनीयेति न्यायेन न लुमतेति निषेधस्यानित्यत्वेन नित्यत्वार्थमयं प्रतिषेधारंभ इति मया पूर्वमुक्तम् न च पदादिविधाविति । पदादिविधौ प्रत्ययलक्षणार्थं वार्तिकमावश्यकमिति वाच्यम्। तर्हि तावदेव वाच्यमिति किं (कृतं) वार्तिकेन इति सर्वोप्ययं पूर्वपक्ष एव, उत्तरपक्षस्तु प्रत्ययलोपे प्रत्यलक्षणमिति सूत्रप्रत्यये लुप्तेपि तदाश्रितं कार्यं स्यादिति सामान्यतः लुप्तप्रत्ययाश्रयकार्यं विधत्ते। एतेन लुप्तप्रत्ययनिमित्तकमाङ्गमनाङ्गं वा सर्वमपि कार्यं कर्तव्यमेवेति लुमच्छब्दलुप्तप्रत्ययनिमित्तकमाङ्गं कार्यंनिषेद्धुं न लुमताङ्गस्येति सूत्रम्।

एवञ्च लुमच्छब्दलुप्तप्रत्यनिमित्तके अनाङ्गे कार्ये कर्तव्ये लुमच्छब्दलुप्तप्रत्ययनिमित्तके आङ्गे कार्ये कर्तव्ये च प्रत्ययलक्षणमस्तीति फलितम् । ततश्च लुमच्छब्दलुप्तप्रत्ययनिमित्तके आङ्गे कार्ये प्रत्ययलक्षणाभावेऽपि अनाङ्गे तादृशे कार्ये प्रत्ययलक्षणसद्भावेन पदकार्यस्य तादृशस्य अनाङ्गत्वेन तस्मिन्कर्तव्ये प्रत्ययलक्षणे प्राप्ते तन्निषेधार्थं वार्तिकम्। अनेन वार्तिकेन लुमच्छब्दलुप्तप्रत्ययनिमित्तकेषु अनाङ्गेषु कार्येषु मध्ये पदकार्ये तत्राप्युत्तरपदकार्ये कर्तव्ये प्रत्ययलक्षणं नेति फलितम्। एवं वार्तिकेन सामान्यतः पदकार्ये प्रत्ययलक्षणे निषिद्धे सति पदाद्यवयवकार्ये प्रत्ययलक्षणविधानार्थमपदादिविधाविति । प्रत्ययलोप इत्यस्य न लुमतेत्यस्य उत्तरपदेत्यस्य च क्रोडीकारेणायमर्थो लभ्यते। लुमच्छब्दलुप्तप्रत्ययनिमित्तके अङ्गकार्ये पदकार्ये च कर्तव्ये लुमदलुमच्छब्दान्यतरलुप्तप्रत्ययनिमित्तके पदादिकार्ये च पदाङ्गकार्येतरकार्ये कर्तव्ये सति प्रत्यये लुप्ते (स)ति तदाश्रितं कार्यं स्यादिति। तस्मात् न लुमतेत्यनेन न गतार्थता वार्तिकस्य । सूत्रेण अङ्गकार्ये प्रत्ययलक्षणनिषेधात् वार्तिकेन पदकार्ये प्रत्ययलक्षणंनिषेधाच्च इदंञ्च वार्तिकं सामान्यतः पदकार्ये प्रत्ययलक्षणं न निषेधति। राजपुरुष इत्यत्र पूर्वपदकार्ये न लोपे कर्तव्येपि प्रत्ययलक्षणाभावेन लोपाभावप्रसङ्गात् । किन्तु उत्तरपदकार्य एव। तत्राप्युत्तरपदकार्ये उत्तरपदाद्यवयवकार्ये न निषेधति। अन्यथा सात्पदाद्योरिति दधिसेचावित्यत्र पदादित्वेन सस्य षत्वनिषेधो न स्यात्। अत एव अपदादिविधौ किम्। दधिसेचौ इति कौमुदी। अत्र उत्तरपदाद्यवयवस्य सस्य सात्पदाद्योरिति षत्वनिषेधरूपे कार्ये कर्तव्ये प्रत्ययलक्षणमस्तीति प्रत्ययलक्षणेन सेच उत्तरखण्डस्य पदत्वं तेनैव सेचस्सस्य पदादित्वेन षत्वनिषेधः। अपदादि विधा वित्यस्याभावे तु उत्तरपदकार्ये प्रत्ययलक्षणनिषेधेन सेचः अपदत्वात्। सस्य षत्वं स्यादिति बोध्यम्। न च दध्नस्सेचौ दधिसेचाविति सेच्पदात्परस्य प्रत्ययस्य लोपो नैवेति कथमत्र प्रत्ययलक्षणमिति चेन्नैवम्। दधि ङस् सेच् सु इति प्रक्रियादशायाम् स्थिते, सुपो धात्विति सुपो लोपे दधिसेच् इति समासो निष्पद्यते। तस्मात्स्वादय इति दधिसेच् शब्दात्सौपरतः सोर्लुकि, सुप्तिङन्तमिति पदत्वाच्चोः कुरिति दधिसेगिति रूपं भवति। औङि परतस्तु पूर्वस्य भत्वमेव न पदत्वमिति न कुत्वप्रसङ्ग इति आन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वं शङ्कितम् । समासे सेचः सुपरकत्वात्। पदादिविधौ तु अन्तर्वर्तिनीं विभक्तिमाश्रित्यापि प्रत्ययलक्षणन्यायेन सेच इत्यस्य पदत्वमस्तीति सात्पदाद्योरिति षत्वनिषेधः। पदान्तविधौ तु प्रत्यलक्षणाभावाच्चोः कुरिति कुत्वं नेति यदुक्तं भत्वस्य पदत्वापवादेन भत्वान्नोत्वमिति वक्तुं शक्यमिति तन्न सार्वत्रिकम्। प्रकृते दधिसेचौ इत्यत्र पुंलिङ्गे औङस्सर्वनामस्थानत्वेन अभत्वात् । ननु वार्तिके उत्तरस्य पदव्यपदेशे कर्तव्य एव प्रत्ययलक्षणनिषेधः । न तु पदकार्ये कर्तव्ये इति कथमत्र उत्तरपदाधिकार्ये प्रत्ययलक्षणप्रसक्तिरपदादिविधाविति निषेद्धुमिति चेदुच्यते । केवलव्यपदेशस्य निरर्थकतया कर्तव्यताया एवाभावात्। तत्प्रयुक्तकार्ये इत्यर्थात्फलतीति अपदादिविधाविति निषेध एवात्र ज्ञापकमिति। किञ्च पदकार्यस्य कर्तव्यताम्प्रति पदव्यपदेश एव मूलमिति वार्तिके मूलभूते पदव्यपदेश

एव प्रत्ययलक्षणाभाव उक्तः। दधिसेच इत्यत्र सेच इत्यस्य प्रत्ययलक्षणेन पदत्वे सति हि पदादिसस्य षत्वनिषेधकार्यं सङ्गच्छते। तेन उत्तरस्य पदत्वे कर्तव्ये इत्यस्य पदकार्यं विधातुं पदव्यपदेशे कर्तव्ये इति निष्कृष्टार्थः। अपदादिविधावित्यस्य तूक्त एव। अत्र पदत्वव्यपदेशस्य प्रयोजनं वक्तुं पदकार्यं विधातुमिति न लुमताङ्गस्येत्यनेन आगतार्थत्वाय पदत्वव्यपदेश इति। पूर्वस्य पदत्वव्यपदेशे कर्तव्ये प्रत्ययलक्षणस्वीकाराय उत्तरखण्डस्येति । अलुमच्छब्देन प्रत्यये लुप्ते प्रत्ययलक्षणाय लुमच्छब्देन प्रत्यये लुप्ते सति उत्तरपदादिविधौ प्रत्ययलक्षणाय अपदादिविधाविति । एतेन विमलदिवी दधिसेचौ इत्यादीनि सिध्यन्तीति । नन्वेवमपि दधि सिञ्चत इति दधिसेचौ इति समासे सिञ्चतेः परत्वेन न काप्यन्तर्वर्तिनी विभक्तिर्लुप्तास्तीति तत्र प्रत्ययलोपाभावेन प्रत्ययलक्षणाभावात्। सेचः पदत्वमेव न प्रसज्यत इति सात्पदाद्योरिति षत्वम्। दुष्परिहारमेवेति चेत् मैवम्। एतादृशसमासाश्रयणेन दधिसेचावित्यस्य प्रयोगाभावत्। सात्पदाद्योरिति सूत्रे पदादादिः पदादिरिति पूर्वपदादव्यवहितस्य सस्य षत्वं न स्यादित्यर्थाश्रयणाद्वा षत्वं सुपरिहारमिति अलं विस्तरेण । अयमपि पक्षः अस्मिन्नेव पत्रे पूर्वपक्षी करिष्यते ।

3. किम्, किमः क इति नात्र कादेशः विभक्तावित्युक्तत्वात्। न च प्रत्ययलक्षणेन विभक्तिपरकत्वमानीयतामिति वाच्यम्। स्वमोर्लुका लुप्तत्वेन न लुमतेति निषेधात् – न च कादेशो नाङ्गकार्यमिति वाच्यम् । किमः क इति सूत्रस्य सप्तमाध्यायस्थत्वेन आङ्गत्वात्। न च निषेधस्य अनित्यत्वेन पक्षे कादेशस्स्यादिति वाच्यम्। न ङि संबुद्ध्योरिति ज्ञापनस्य विशेषापेक्षत्वेन संबुद्धिविषय एव तस्यानित्यत्वाश्रयणात्। अत एव वारि, हे वारे इत्यादौ पक्षे संबुद्धिनिमित्तो गुण इत्युक्तम्। अन्यथा लुमताङ्गस्य वा इत्येव सूत्रयेत्पाणिनिः। न च गौरवात्तथोक्तमिति वाच्यम्। ज्ञापनक्लेशगौरवराहित्यात्। किञ्च वारि अम् इत्यत्र पक्षे यणादेशेन वार् य् इति रूपञ्च स्यात् । तस्मात् न लुमतेति निषेधस्य संबुद्धिविषय एवानित्यत्वं न त्वन्यत्रेति नङिसंबुध्योरिति संबुद्धिग्रहणं ज्ञापयतीति सुस्थम् ।

4. इदम् यस्साविति सुपरकत्वाभावान्न यत्वम्। इदोय् पुंसीति अपुंस्त्वान्नाय्। किन्तु त्यदादीनाम इत्यत्वे प्राप्ते इदमोम इति मत्वमेवावतिष्ठते। (इदन्तु चिन्त्यम्) अत्वस्यापि विभक्तिनिमित्तकत्वेन नलुमतेति निषेधात् मत्वस्यपि सुपरकत्वं निमित्तमिति मत्वमपि न । इदं इमानि इदम्। जश्शसोश्शिः। त्यदाद्यत्वं पररूपत्वं इद-शि-शेस्सर्वनामस्थानत्वेन नपुंसकस्य झलच इत्यजन्तलक्षणो नुम्। इदं न् शि सर्वनामस्थाने चेति दीर्घः इदानि दश्चेति मत्वम्।

इमानि । ननु संबुद्धौ न लुमतेति निषेधस्य अनित्यत्वेन पक्षे हे इदम् इत्यपि रूपं स्यादिति चेन्मैवम्। त्यदादीनां संबोधनं नास्तीत्युत्सर्ग इत्युक्तत्वात्। न च उत्सर्गग्रहणेन इदमोऽपि क्वचित् संबुद्धिरस्ति हे स इतिवदिति वाच्यम्। उत्सर्गत्वस्य (प्रायिकत्वस्य) प्रयोगापेक्षत्वात् न हि क्वापि हे इदम् इति प्रयोगोऽस्ति ।

5. अन्वादेशे नपुंसके एनद्वक्तव्य इति द्वितीयाटौ स्वेनएनदादेशः। तत्राप्यम्येव एतद्वचनस्य प्रवृत्तिस्सार्थकी । अन्यत्र तु कृतेप्येनदादेशे त्यदाद्यत्वेन एनेत्यस्यैव शिष्टत्वादेनादेशेनैव कृतमिति। न चाम्यपि त्यदाद्यत्वेन एन इत्येव रूपं स्यान्न त्वेनदिति। वार्तिकमनर्थकमिति वाच्यम्। अत एव वार्तिकारम्भसामर्थ्यादमि एनदः त्यदाद्यत्वं नेति अमो लुका लुप्तत्वेपि न लुमतेति निषेधं बाधित्वा प्रत्ययलक्षणमिति च बोध्यम्। वस्तुतस्तु मास्त्विदं वार्तिकम्। द्वितीयाटौ स्स्वेनदिति सूत्र्यताम् । न च अमि नपुंसके एनदिति न स्यात्यदाद्यत्वादिति वाच्यम्। एनादेशेनैव सर्वेष्टसिद्धौ एनदित्यत्र तपरकरणं व्यर्थं सत् अमि त्यदाद्यत्वं बाधित्वा श्रूयत इति । न च पुंस्यप्यमि एनमिति स्यादिति वाच्यम्। क्लीबे अमि लुका लुप्तत्वेन प्रत्ययलक्षणाभावादेनदो प्रवृत्तौ तकारोच्चारणसामर्थ्यादिव एनदादेश इत्यङ्गीकृतत्वेन तस्यैव तकारः श्रूयेत न तु पुंसीति। ननु तकारोच्चारणसामर्थ्यस्य त्यदाद्यत्वबाध नैवोपक्षीणत्वमिति । द्वितीयाटौस्सु यत्र क्वापि यद्येनदस्तकारश्श्रूयेत तर्हि तदितरविभक्तिषु त्यदाद्यत्वं स्यादेव इति अम्येव तकारश्श्रूयेत तदपि क्लीब एवेति कथं निर्धार्येत इति चेदुच्यते । त्यदादीनामत्वं हि विभक्तिपरत्वेन क्रियते । सा च विभक्तिरं क्लीबे लुप्तेति त्यदाद्यत्वाप्रवृत्तिस्थले एनदस्तकारस्य श्रवणसंभवात् क्लीबे अम्येव चारितार्थ्यमिति। अत एव विभक्तिपरकत्वेन विधीयमानस्याप्येनदादेशस्य लुका लुप्तत्वेप्यमि प्रत्ययलक्षणेन प्रवृत्त्यङ्गीकारः तत्राप्यप्रवृत्तौ तदितरविभक्तिषु पुंसि वा क्लीबे वा स्त्रियां वा एनदन्तस्य त्यदाद्यत्वेन अश्रवणाद्वैयर्थ्यमेवेति इदमेव ज्ञापकं क्लीबे अम्यपि एनदादेश इति ।

6. संबुद्धौ नपुंसकानां न लोपो वा वाच्यः ननु ब्रह्मन् सु इति स्थिते हल्ङ्यादिलोपः। अत्र स्थानिवद्भावेन सुप्तिङन्तलक्षणपदत्वस्य सत्त्वेपि प्रातिपदिकत्वन्नास्ति अप्रत्यय इत्युक्तत्वात्। प्रातिपदिकसंज्ञकं यत्पदमित्युक्ते स्वादिष्विति लक्षितं पदमेव भवति। वस्तुतो वा स्थाविद्भावेन वा सुप्तिङन्ते पदे तु प्रत्ययान्तपर्युदासान्न प्रातिपदिकमिति निष्कर्षः । स्वादिष्विति पदत्वन्तु नास्त्येवात्र सोर्लोपात्। न च प्रत्ययलोपे प्रत्ययलक्षणम्। न लुमताङ्गस्येति निषेधात्। तस्मात् नलोपस्य प्राप्तिरेव नास्तीति नङि संबुध्योरिति सूत्रे संबुद्धिग्रहणं व्यर्थं सत् संबुद्धिविषये न लुमतेत्यस्य अनित्यत्वं ज्ञापयतीति सिद्धम्। अनित्यत्वादेव नलोपस्य पक्षे प्राप्तौ पक्षेऽप्राप्तौ च सिद्धायां व्यर्थमिदं वार्तिकम् इति चेन्मैवम्। नलोपस्य पदकार्यत्वेन तस्मिन् कर्तव्ये प्रत्ययलक्षणं स्यादेव। न लुमताङ्गस्येति निषेधस्य अङ्गकार्यविषयत्वात् तेन संबुद्धिग्रहणस्य वैयर्थ्यशङ्कैव नास्तीति नेदं ज्ञापकं

सम्यक् । नापि ज्ञापितेन तेनानित्यत्वेन फलमत्रेति सार्थकमेव वार्तिकमिति । ननु न लुमताङ्गस्येत्यत्र अङ्गपदस्य अङ्गसंज्ञकस्येत्यर्थः तथा च यस्मात्प्रत्ययविधि स्तदादि प्रत्ययेऽङ्गसञ्ज्ञमिति प्रत्ययपरकत्वे पूर्वमङ्गमेव। तस्य विधीयमानं कार्यमङ्गाधिकारीयमेवेति न नियमः। तेन लुमच्छब्दलुप्तप्रत्ययनिमित्तकमङ्गसंज्ञकस्य यत्कार्यमङ्गाधिकारीयं वा पदाधिकारीयं वा प्रसज्यते तस्मिन्कर्तव्ये प्रत्यलक्षणं नेत्यर्थः। ततश्च उक्तज्ञापकं सम्यगेवेति चेन्मैवम्। उत्तरपदत्व इति वार्तिकस्य आनर्थक्यात्। प्रपञ्चितं चैतन्मयैवेतः पूर्वं विमलदिवीत्यत्र। किञ्च एतादृशार्थाश्रयणे अङ्गस्येत्यपि व्यर्थम्। व्यावर्त्याभावात्। अपि च अङ्गाधिकारीये कार्ये कर्तव्ये एव प्रत्यये परतः पूर्वमङ्गं भवति। पदाधिकारीये तु पदसंज्ञकमेव न त्वङ्गमिति । अत एव एङ्ह्रस्वादिति सूत्रे अङ्गस्याक्षेप इत्युक्तम् । ननु एङ्ह्रस्वादिति सूत्रे अनाङ्गेऽपि कार्ये संबुद्धेरिति पदेन अङ्गमाक्षिप्तं हि, एवमेव नङि संबुद्ध्योरिति सूत्रेपि संबुद्धिग्रहणेन अङ्गस्याक्षेपः तेन नलोपनिषेधः अङ्गकार्यमेवेति चेन्मैवम्। पदाधिकारीयत्वेन संबुद्ध्यानाङ्गाक्षेपः । किञ्च नलोपः प्रातिपदिकान्तस्येति सूत्रे न ह्याक्षेपोऽङ्गस्य यदि तत्र स्यात्तर्हि नलोपोऽङ्गकार्यमेवेति तस्मिन्विषये न लुमतेति निषेधात् संबुद्धाविति व्यर्थं भवेत्। तस्मात्संबुद्धौ नपुंसकानामिति वार्तिकं सार्थकमेव। प्रत्ययलोपे प्रत्ययलक्षणेन नलोपः प्रातिपदिकान्तस्येति नलोपे नित्यतया प्राप्ते एतस्य विभाषार्थकत्वात् नङिसंबुध्योरिति सूत्रे निषेधसामर्थ्यात्प्रत्ययलक्षणमिति यदुक्तं तदसत् । प्रत्ययलोपे प्रत्ययलक्षणेन निषेधस्य सार्थक्येन सामर्थ्यस्य वैयर्थ्यप्रयुक्तत्वात्। यच्च नलुमतेति निषेधस्य अनित्यत्वात्पक्षे संबुद्धिनिमित्तो गुणः हे वारि , हे वारे इत्युक्तं तदप्यसत्। अनित्यत्वज्ञापने मानाभावात् इति पूर्वः पक्षः। सिद्धान्तस्तु न लुमताङ्गस्येति सूत्रस्य अङ्गसंज्ञकस्य अङ्गाधिकारीये वा अनङ्गाधिकारीये वा कार्ये कर्तव्य इत्येवार्थः । यच्चोक्तं व्यावर्त्याभावादङ्गसंज्ञकस्येत्यपि व्यर्थमिति तच्च सम्यक् । अत एव न लुमता तस्मिन्निति सिद्धान्ततया न्यासः कृतः। तस्मादेव मनोरमायामपि प्रत्यये परतः पूर्वस्य यत्कार्यमाङ्गमनाङ्गं वा तत्सर्वं न लुमतेत्यनेन निषिध्यत इत्युक्तम्। अङ्गं कार्यमित्यनेन अङ्गसंज्ञाऽपि गृह्यते अनाङ्गं कार्यमित्यनेन पदसंज्ञादयोपि गृह्यन्ते। अङ्गपदादिसंज्ञानामपि प्रत्यये परतः पूर्वस्य कार्यत्वात् न च उत्तरपदत्व इति वार्तिकस्यानर्थक्यम् नियमार्थत्वात् कोयं नियमः। न लुमताङ्गस्येति प्रत्यये परतः पूर्वस्य यदि पदकार्य निषिध्यते तर्ह्युत्तरपदकार्यमेव न तु पूर्वपदकार्यमिति। तेन उत्तरपदकार्ये सर्वे हि निषिद्धे सति विध्यर्थमपदादिविधाविति। उत्तरपदादिविधौ प्रत्ययलक्षणं स्यादिति, न च नञः कथं विध्यर्थतेति वाच्यम् । नञोऽत्र निषेधार्थकत्वेन विध्यर्थकत्वे अविवादात्। पदसंज्ञापदकार्यमेवेति बोद्धव्यम्। एतेन समासे उत्तरखण्डस्यैव पदकार्याभाव इति नियमेन राजपुरुष इत्यादौ पूर्वखण्डस्य राजन्नित्यस्य नलोपस्सिद्ध्यति। अर्वप्रिय इत्यत्र अर्वणस्त्रसाविति तृत्वाभावोऽपि सिद्ध्यत्येव। पदकार्यविषय एवायं नियमः, न त्वङ्गकार्यविषय इति। त्रादेशस्याङ्गकार्यत्वेन

'रोऽसुपि' (सू १७२) अहर्भाति । 'विभाषा ङिश्योः' (सू २३७) अह्नी, अहनी, अहानि । ४४३ **अहन्** । ।८।२।६८। अहन्, इत्यस्य. रुः स्यात्पदान्ते । अहोभ्याम् अहोभिः

---

अर्वेत्यस्य पूर्वखण्डत्वेऽपि न लुमतेति प्रत्ययलक्षणनिषेध एव। तस्मात् ब्रह्मन् सु इत्यत्र सोर्लोपे प्रत्यलक्षणाभावेन अपदत्वान्नलोपो न स्यादेवेति नङिसंबुध्योरिति सूत्रे संबुद्धिग्रहणं व्यर्थ सत् न लुमतेत्यस्य अनित्यतां ज्ञापयतीति सुस्थम्। ननु ब्रह्म इति न सिद्ध्यति सोर्लुका लुप्तत्वेन प्रत्ययलक्षणाभावात् न स्वादिष्विति पदत्वं स्यात्, येन नलोपः प्रातिपदिकान्तस्येति नलोपः प्रवर्तेत। नापि सुप्तिङन्तलक्षणं पदत्वं वर्तत इति नलोपप्राप्तिर्वाच्या । तस्य प्रातिपदिकसंज्ञाभावात्। न च न लुमतेत्यस्यानित्यत्वेन स्वादिष्विति पदत्वं स्यादिति वाच्यम्। संबुद्धिविषय एव तस्यानित्यत्वात् । किञ्च राजा इत्यपि न सिद्ध्यति। पुंसि सोस्सर्वनामस्थानत्वेन स्वादिष्विति पदत्वस्य प्रत्ययलक्षणेनाऽपि तत्राभावात् इति चेदुच्यते । अप्रत्ययान्तत्वेन प्रातिपदिकसंज्ञा स्थानिवद्भावेन सुबन्तत्वात्पदसंज्ञा चेति नलोपेन काप्यनुपपत्तिरिति। एवञ्च नङि संबुद्ध्योरिति नलोपनिषेधे प्राप्ते, विभाषार्थं संबुद्धौ नपुंसकानामिति वचनमावश्यकमिति फलितम्। न च न लुमतेत्यस्यानित्यत्ववचनेन विभाषासिद्धिर्वाच्या, नङि संबुद्ध्योरित्यस्य अवैकल्पिकत्वात्। न च प्रत्ययलक्षणेन संबुद्धिपरकत्वस्य कादाचित्कत्वेन यदा संबुद्धिपरकत्वं तदा नित्य एव नलोपनिषेधः यदा तु संबुद्धिपरकत्वं न तदा नलोपस्स्यादेवेति किमनेन वार्तिकेनेति वाच्यम्। सन्निपातपरिभाषाविरोधात्। नङि संबुद्ध्योरिति सूत्राश्रयं न लुमतेत्यस्यानित्यत्वं कर्तृ नङि संबुद्ध्योरिति सूत्रं पक्षे कथं बाधयेत् ? बाधश्चात्र अप्रवर्तनरूपो बोध्यः ।

7. अहर्भाति। अहन् शब्दस्य सौ सोर्लुकि सुप्परकत्वाभावात् रोस्सुपीति रेफादेशः अहर् विसर्गः अहः । ननु अहन्नित्यनेन रुत्वमत्र स्यादेव । न च प्रत्ययलक्षणाभावेन पदान्तत्वं नास्तीति वाच्यम्। सुप्तिङन्तलक्षणपदान्तत्वस्य सत्त्वात्। किं रोस्सुपीत्यनेन इत्याशङ्कायामाह। अहर्भातीति हशि चेदुत्वं नेति भावः। रोरित्युकारानुबंधाश्रयणेन रस्योत्वाभावात् स्पष्टं चेदं स्वादिसन्धौ।

8. अहोभ्याम्। अहन् भ्याम् अहन्निति रुत्वम्। तस्यासिद्धत्वात् नलोपः प्रातिपदिकान्तस्येति नलोपः। अहभ्यामिति स्यात् । न च नलोपानन्तरं रुत्वं वाच्यम् सकृदिति न्यायविरोधात् इत्यत आह। अहन्नित्यावर्त्येत्यादि अहन्निति सूत्रस्य अहन्नित्यस्य नलोपो न स्यादित्यन्योऽप्यर्थो वाच्य इति भावः। न च रुत्वविधिसामर्थ्यादेव नासिद्धत्वमिति वाच्यम्। अहो रूपमित्यादिषु रुत्वस्य सावकाशत्वात् । ननु रूपरात्रिरथन्तरेषु रुत्वं वाच्यमिति वार्तिकस्य तत्र चारितार्थ्यमस्तु अहन्निति रुत्वस्य तु नेति चेन्मैवम् । अहन्नित्यनेनैव अहो रूपमित्यादौ रुत्वे प्राप्ते रोःसुपीति तदपवादतया रेफः। तद्बाधनाय

इह अहः अहोभ्याम् इत्यादौ रत्वरुत्वयोरसिद्धत्वान्नलोपे प्राप्ते 'अहन्' इत्यावर्त्य एकेन नलोपाभावं निपात्य द्वितीयेन रुर्विधेयः । तदन्तस्यापि रत्वरुत्वे दीर्घाण्यहानि यस्मिन् स दीर्घाहा निदाघः। इह हल्ङ्यादिलोपे प्रत्ययलक्षणेन 'असुपि' इति निषेधाद्रत्वाभावे रुः, तस्याद्धित्वान्नान्तलक्षण उपधादीर्घः । सम्बुद्धौ तु हे दीर्घाहो निदाघ। दीर्घाहानौ , दीर्घाहानः । दीर्घाह्ना , दीर्घाहोभ्याम् . । दण्डि, दण्डिनी, दण्डीनि ।स्रग्वि, स्रग्विणी, स्रग्वीणि । वाग्मि, वाग्मिनी, वाग्मीनि । बहुवृत्रह बहु वृत्रघ्नी, बहुवृत्रहणी, बहुवृत्रहाणि । बहुपूष, बहुपूष्णी, बहुपूषणी बहुपूषाणि । बह्वर्यम, बह्वर्यम्णी, बह्वर्यमणी, बह्वर्यमाणि ।। **इति नान्ताः** ।।

---

पुनर्वार्तिकमिति अहन्निति रुत्वमेव तत्रेति। न चाहो रूपमित्यत्र प्रत्ययलक्षणाभावेन अपदान्तत्वादहन्नित्यस्य प्रवृत्तिर्नेति वाच्या । उत्तरपदत्व इति वार्तिकेन पूर्वस्य पदकार्ये प्रत्ययलक्षणासद्भावात्।

9. हल्ङ्यादिलोपे प्रत्ययलक्षणेनासुपीति निषेधात्। हल्ङ्यादिलोपे न लुमतेति प्रत्ययलक्षणनिषेधो नेति बोध्यम्। लुक् श्लुप् एते लुमन्त इति परिगणनेन लुप्यते लोपः इत्यादीनामलुमत्त्वात् । अत एव क्विन् किबादिषु प्रत्ययलक्षणेन कुत्वादिकं सङ्गच्छते । दीर्घाहाः दीर्घाहन् सु सुलोपः। अहन्निति रुत्वम् । तस्यासिद्धत्वान्नोपधादीर्घः। दीर्घाहार् विसर्गः । दीर्घाहाः। शास्त्रसिद्धिमते तु रुत्वात्प्रागेव नोपधादीर्घः दीर्घाहान् इदानीमहन्निति रुत्वन्न । अदुपधस्यैव नकारस्य अहन्निति रुत्वविधानात् । किन्तु नलोपः दीर्घाहा इत्येव रूपम्। इदमेव सम्यगित्यमुयेत्यत्र प्रपञ्चितम्। न चैकदेशविकृतमनन्यवद्भवतीति अहानित्यस्यापि रुत्वं स्यादिति वाच्यम् । सकृद्गतिन्यायविरोधाद्रुत्वस्य पुनरप्रवृत्तेः ।

10. दन्डि सु । सुडनपुंसकस्येति सोरत्र असर्वनामस्थानत्वा(न्न) नोपधादीर्घः किन्तु नलोप एव दण्डि। वारि शब्दवत्। एवं स्रग्विन् वाग्मिन् शब्दावपि संबुद्धौ तु हे दण्डिन् हे दण्डि इत्यादि । न तु पक्षे गुणस्स्यादिति भ्रमितव्यम्। नलोपस्यासिद्धत्वात्।

11. बहुवृत्रह । बहु वृत्रहन् शब्दः सौ चेति नात्रोपधादीर्घः, सोर्लुकालुप्तत्वात्। किन्तु नलोप एव। बहुवृत्रह । औ ङि औङश्श्याम्। बहुवृत्रहन् ई इति स्थिते । अल्लोपो नः हो हन्तेर्ञ्णिन्नेषु इति हस्य कुत्वेन घः । बहुवृत्रघ्नी । अट्कुप्वाङ्नुम्व्यवायेऽपि एकाजुत्तरपद इति नात्र णत्वम् अत्पूर्वस्येति नियमात् । बहुवृत्रहन् जश्शसोश्शिः इन्हन्पूषार्यम्णां शावित्युपधादीर्घः। शाविति सर्वनामस्थानसंज्ञकह्रस्वान्तस्यैव ग्रहणात् । न तु नपुंसकाच्चेति औङश्श्यां दीर्घश्शङ्क्यः। अपदान्तत्वान्न नलोपः । बहुवृत्रहाणि । द्वितीयायामप्येवमेव। टादौ तु बहुवृत्रघ्ना बहुवृत्रहाभ्यां बहुवृत्रहभिः बहुवृत्रहसु इन्हन्पूषार्यम्नामिति सूत्रे पूषार्यमन्ग्रहणात् बहुपूषाणि बह्वर्यमाणीति।

असृजः पदान्ते कुत्वम् । सृजेः क्विनो विधानात् । विश्वसृडादौ तु न । 'सृजिदृशोः–' (सू २४०५) इति सूत्रे 'रज्जुसृड्भ्याम्' इति भाष्यप्रयोगात् । यद्वा 'व्रश्च–' (सू २९४) आदि सूत्रे सृजियज्योः पदान्ते षत्वं कुत्वापवादः । स्रग्गृत्विक्छब्दयोस्तु निपातनादेव कुत्वम् । असृक्छब्दस्तु अस्यतेरौणादिके ऋज्प्रत्यये बोध्यः । असृक्, असृग् , असृजी, असृञ्जि। 'पद्दन्–' (सू २२८) इति वा असन्, असानि । असृजा, अस्ना। असृग्भ्याम्, असृग्भ्यामित्यादि ।

---

12. असृक् । न सृजतीत्यसृगिति व्युत्पत्तौ ऋत्विगादिसूत्रे सृजेः क्विन् विधानेन नञुपपदत्वेपि क्विन्प्रत्ययस्येति कुत्वम् । असृक् इति क्विबन्तोयं शब्दः। नन्वेवं विश्वाद्युपपदकस्यापि सृजेः कुत्वं स्यादत आह–विश्वस्य डादौ नेति । कुत इत्यत आह–रज्जुसृड्भ्यामिति भाष्यप्रयोगादिति कुत्वाभावे व्रश्चेति षत्वं जश्त्वचर्त्वे च विश्वसृट् रज्जुसृट् इत्यादि। ननु रज्जु सृड्भ्यामिति प्रयोक्तुर्भाष्यकारस्य मते कथं कुत्वाभाव इत्यत आह । व्रश्चादिसूत्र इत्यादि। क्विन्प्रत्ययस्येति कुत्वं बाधित्वा विशेषविहितत्वेन षत्वमेवेति । ननु तर्हि सृजियजेति व्रश्चादिसूत्रे ग्रहणेन सृट् ऋत्विट् इत्येव भवितव्यम् । कथं स्रक् ऋत्विगित्यत आह निपातनादेव कुत्वमिति। नन्वेनमसृडित्येव स्यात् न त्वसृगित्यत आह । अस्यतेः ऋङ्प्रत्यये रूपमसृगितीति। असु गतिक्षेपणयोरिति धातोः ऋङ्प्रत्यये असृङ् चोः कुः असृक् । यद्वा इति पक्षान्तरमुपक्रान्तवतः कौमुदीकारस्य त्वयं भावः। रज्जुसृड्भ्यामिति भाष्यप्रयोगात् सोपपदात्सृजेः कुत्वाभाव इत्येव गम्यते न तु विश्वाद्युपपदात्सृजेः कुत्वाभावः। नञुपपदात्तु कुत्वमिति विशेषाकारेण गम्यत इति। यत्स्वेनोक्त मसृक्छब्दस्य क्विन्प्रत्ययस्येति कुत्वं । तन्नातीव सम्यगिति। यद्वेति पक्षान्तरम्। पक्षान्तरे तु नायं नञुपपदात्सृजे रूपमसृगिति–किन्तु अस्यतेरुजित्युक्तत्वात्सोपपदात्सृजेः न क्वापि कुत्वं, किन्तु षत्वमेवेति। रज्जुसृड्भ्यामिति प्रयोगस्संगच्छते। नञुपपदत्वे सृजेरपि षत्वेन असृडित्येव रूपमिति नञुपपदात्सृजेः क्विन्प्रत्ययस्येति कुत्वेन असृक् स्यादित्येकः पक्षः। पदान्ते षत्वस्य कुत्वापवादत्वेन तत्र कुत्वं न सेत्स्यत्येवेति। अस्मिन्पक्षे अस्वरसत्वादस्यते ऋज्यसृगिति द्वितीयः पक्ष इति बोद्धव्यम्। यद्वा रज्जुसृड्भ्यामिति भाष्यप्रयोगाद्विश्वसृडादौ कुत्वम् नेत्येकः पक्षः । पदान्ते षत्वस्य कुत्वापवादात्कुत्वम् नेत्यन्यः पक्षः। पूर्वस्मिन्पक्षे न सृजत् त्यसृक् उत्तरस्मिन्पक्षे तु अस्यतीत्यसृक् पूर्वस्मिन्पक्षे अस्वारस्यन्तु विश्वाद्युपपदत्वे सृजेर्न कुत्वं नञुपपदत्वे तु कुत्वमिति विशेषगमकाभाव इत्येव ।

13. असृञ्जि असृङ् शि नपुंसकस्य झलच इति नुम्। तस्य नश्चापदान्तस्येत्यनुस्वारः। तस्यानुस्वारस्य ययीति परसवर्णः असृञ्जि असृजे अस्ने असृक्षु अससु ।

ऊर्क् । ऊर्ग् , ऊर्जी, ऊर्न्र्जि, नरजानां संयोगः । **बहूर्जि नुम्प्रतिषेधः, अन्त्यात्पूर्वो वा नुम्** । बहूर्जि, बहूञ्र्जि वा कुलानि ।। **इति जान्ताः** ।। त्यत्, त्यद्, त्ये त्यानि । तत् तद्, ते, तानि । यत्, यद्, ये यानि । एतत्, एतद्, एते , एतानि । अन्वादेशे तु एनत् । बेभिद्यतेः क्विप् । बेभित्, बेभिद्, बेभिदी ।

---

14. ऊर्जबलप्राणनयोरिति धातोः क्विप् । चोः कुः । ऊर्क् ऊर्जि जसश्शौ नुमि ऊन्र् जि इदमेवाह नरजानां संयोग इति।नस्य अनुस्वारपरसवर्णौ ऊञ्र् जि । भाष्यमते तु अचः परो यो झल् तदन्तस्य नुम्स्यादिति ऊकारादचः परो यो झल् रेफः न हि तदन्तोयं शब्द ऊर्क् योऽचः परो रेफस्स नान्त्यः। योऽन्त्यो झल् ककारस्स नाचः पर इति नात्र नुम्। ऊर्ज् इत्येव रूपम्।अत एव बहूर्जि नुम्प्रतिषेधः। इति वार्तिकं प्रत्याख्यातं भाष्ये ।

15. बहूर्जि नुम्प्रतिषेधः । अन्त्यात्पूर्वो वा नुम्। बहूर्जीति नुम्प्रतिषेधपक्षे अन्त्यात्पूर्वस्सन् नुमागमपक्षे बहूर् ञ् जि । ननु कथं बहूञ्र् जि इति कौमुद्यां तृतीयरूपमुक्तमिति चेदुच्यते प्रामादिकमेवेति । यदि नुम्प्रतिषेधोऽपि विकल्पस्स्यात्तर्हि कदाचिन्मिदचोन्त्यात्पर इति अन्त्यादचः परस्सन् भवेत्। कदाचित् अन्त्यात्पूर्वो वा नुमिति अन्त्यवर्णात्पूर्वस्सन्भवति। कदाचित्प्रतिषेधान्न भवतीति रूपत्रयं सिद्ध्येत्। तथा वार्तिके प्रतिषेधस्य विकल्पो दृश्येत। यद्वा अन्त्यात्पूर्वो वा नुमित्यस्य नुम्वा स्यात्। अन्त्यात्पूर्वस्सन् नुम्वास्यादिति अन्त्यात्पूर्वः वा नुम् इति योगविभागेन व्याख्येयम्। तथा च नुम् वा स्यादित्यनेन बहूर्जि बहूर्ञ्जि इति रूपद्वयसिद्धिः, अन्त्यात्पूर्वस्सन् वा स्यादित्यनेन बहूर्ञ्जि इति रूपस्यापि सिद्धिरिति। यथाकथञ्चित्समाधेयमिति। न च मिदचोन्त्यादिति नुमागमेऽपि बहूर्ञ्जि रित्यत्र पक्षे अन्त्यात्पूर्वस्सन् नुम्स्यादिति बहून्र्ञ्जिइति चतुर्थरूपं स्यादिति वाच्यम्। अन्त्यादचः परत्वेन नुमागमाभावपक्षे एव अन्त्यात्पूर्वत्वेन नुमः प्रवृत्तेः। नपुंसकस्य झलच इति नुमत्रैक एव हि विधीयते। तस्मात् नुम् कदाचिन्न स्यात् कदाचित्स्यात् कदाजिदन्त्यात्पूर्वस्सन् स्यादिति न चतुर्थरूपसिद्धिरिति। अस्मिंस्तु पक्षे बहूर्जेर्नुम्प्रतिषेध इति वार्तिकं व्यर्थमेव। निष्कर्षस्तु अन्त्यात्पूर्वः वा नुम् इति वार्तिकम् योगेन विभक्तव्यम्। वा नुम्। बहूर्जेर्नुम्वा स्यात्। अन्त्यात्पूर्वः अत्र वा नुमनुवर्तनीयम्। अन्त्यात्पूर्वस्सन् नुम्वा स्यादिति। योगविभागसामर्थ्यात् नुमभावपक्षे एव अन्त्यात्पूर्वस्सन् वा स्यादिति न तु पुनः नुमागमपक्षे एव अन्त्यात्पूर्वस्सन् वा स्यादिति वाच्यम्। प्रथमतः प्रदर्शितरीत्या तृतीयरूपासिद्धेः। तस्माद्रूपत्रयमपि सिद्धान्तितमेव ।

शावल्लोपस्य स्थानिवत्त्वादझलन्तात्वान्न नुम् । अजन्तलक्षणस्तु नुम् न। स्वविधौ स्थानिवत्त्वाभावात् । बेभिदि ब्राह्मणकुलानि । चेच्छिदि ।। **इति दान्ताः** ।।

गवाक्छब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः ।
असन्ध्यवङ्पूर्वरूपैर्नवाधिकशतं मतम् ।।
स्वम्सुप्सु नव षड् भादौ षट्के स्युस्त्रीणि जश्शसोः ।
चत्वारि शेषे दशके रूपाणीति विभावय ।।

तथा हि । गामञ्चतीति विग्रहे 'ऋत्विग्–' (सू ३७३) आदिना क्विन् । गतौ नलोपः । 'अवङ् स्फोटायनस्य' (सू ८८) इत्यवङ् । गवाक्, गवाग् । सर्वत्र विभाषा–' (सू ८७) इति प्रकृतिभावे, गोअक्, गोअग् । पूर्वरूपे, गोऽक्, गोऽग् । पूजायाम्, नस्य कुत्वेन ङः । गवाङ् गोऽङ् गोअङ्। अम्यप्येतान्येव नव ।

---

16. शावल्लोपस्य स्थानिवत्त्वात् अचः परस्मिन्निति स्थानिवद्भावः–स्थानिभूतादचःपूर्वत्वेन दुष्टस्य नुम्विधेः कर्तव्यत्वात् । तर्हि स्थानिवद्भावत्वेन अझलन्तत्वाज्झलन्तलक्षणनुमभावेऽपि अजन्तत्वान्नपुंसकस्य झलच इति अजन्तलक्षणनुम्स्यादित्यत आह स्वविधौ स्थानिवद्भावाभावादिति। अयं भावः स्थानिभूताजपेक्षया पूर्वत्वेन दृष्टस्य विधौ हि अचः परस्मिन्निति स्थानिवद्भाव उक्तः । प्रकृते तु स्थानिभूतस्य अच एव नुम्विधेः कर्तव्यत्वान्नाचःपरस्मिन्निति स्थानिवद्भाव इति नापि स्थानिवदादेश इति स्थानिवद्भावः । तत्र स्वविधावपि स्थानिवद्भावाभ्युपगमात्। अन्यथा अलो विधिरल्विधिरिति षष्ठीसमासः। कथमुपपद्येत? अयं भावः । स्वविधौ स्थानिवद्भावाभावादेव। अलो विधौ स्थानिवत्त्वाभावे अलो विधिरिति षष्ठीसमासाश्रयस्थानिवत्त्वनिषेधो व्यर्थ इति स्थानिभूतानां द्वितीयादीनमलां विधौ स्थानिवद्भवाभ्युपगमाच्चेति वाच्यम्। अनल्विधाविति निषेधात् । बेभिदि बेभिद्यन्त इति बेभिदिपरैर्व्याहन्यमानानीत्यर्थः। एवंविधानि बाहुल्यतो ब्राह्मणकुलान्येवेत्याह। ब्राह्मणकुलानीति नपुंसकबहुत्वद्योतनाय विशेष्यपदम्। एवमेव चेच्छिदि चेच्छिद्यतेः क्विप् चेच्छिद् इति चेच्छिद्य क्विप् क्विलोपः चेच्छिद्य सु अतो लोपः । चेच्छिद् य् सु । लोपो व्योर्वलि चेच्छिद् सु । सुलोपः चर्त्वम् चेच्छित् ।

17. गवाक्छब्दस्य सौ गोपूर्वकस्य अञ्चतेः गतिपूजार्थाभ्यां द्वैविध्येन नलोपतदभावाभ्यामादौ रूपद्वयम्। अवङ्पूर्वरूपप्रकृतिभावैरेवैकस्य त्रैविध्यात् षड्रूपाणि । गतौ पदान्तस्य जश्त्वचर्त्वाभ्यां द्वैविध्यम्। एवं चत्वारि रूपाणि । तथाहि अवङि जश्त्वचर्त्वाभ्यां विकल्पेन गतौ गवाक् गवाग् । पूजायां गवाङ्। पूर्वरूपे गोक् गोग् गोङ् प्रकृतिभावे गो अक् गोअग् गोअङ् इति पूजायां त्रीणि गतौ षट् च मिळित्वा नव।

औङः शी । भत्वाद् 'अचः' (सू ४१६) इत्यल्लोपः । गोची । पूजायां तु, गवाञ्ची गोअञ्ची, गोऽञ्ची । 'जश्शसोः शिः' (सू ३१२) शेस्सर्वनामस्थानत्वान्नुम्, गवाञ्चि, गोअञ्चि । गोऽञ्चि ।

गतिपूजनयोस्त्रीण्येव । गोचा, गवाञ्चा । गोअञ्चा, गोऽञ्चा । गवाग्भ्याम्, गोअग्भ्याम्, गोऽग्भ्याम्, गवाङ्भ्याम्, गोअङ्भ्याम्, गोऽङ्भ्याम् इत्यादि । सुपि तु ङान्तानां पक्षे 'ङ्णोः कुक्-' (सू १३०) इति कुक् । गवाङ्क्षु , गोअङ्क्षु, गोऽङ्क्षु गवाङ्षु, गोअङ्षु, गोङ्षु, गवाक्षु, गोअक्षु गोऽक्षु ।

---

रूपनिष्पत्तिस्तु अञ्चतेः क्विनि अनिदितामिति नलोपः। क्विन्प्रत्ययस्येति कुत्वम् । अक्पूजायान्तु नाञ्चेः पूजायामिति नलोपाभावस्संयोगान्तलोपः क्विन्प्रत्ययस्येति कुत्वेन ङकारः अङ् इति औङि औङश्शी । गो अञ्च् ई नलोपः । अच इत्यलोपः । गोची इत्येकमेव रूपम्। अलोपेन अपरकत्वाभावादवङादेरप्रवृत्तेः । पूजायान्तु नलोपाभावेन अच इत्यलोपो न । तेन अच्परकत्वेन अवङादयः । गवाञ्ची, गोअञ्ची गोञ्ची इति चत्वारि । जसि जसश्शी । तस्य सर्वनामस्थानत्वेन नुम्। गतौ नलोपेऽपि नपुंसकस्य झलच इति नुमागमेन पूजार्थायां नलोपाभावेन च गति पूजार्थद्वयप्रयुक्तरूपभेदो नास्ति । किन्तु अवङादिप्रयुक्त एवेति गवाञ्चि गोअञ्चि, गोञ्चि इति त्रीणि अम्औट्शस्सु प्रथमायामिव क्रमेण नव चत्वारि त्रीणि साविव अमि औ ङीव औटि जशीव शशीति भावः। टायां गतौ नलोपे अच इत्यल्लोपे च गोचा इत्येकमेव। पूजायान्तु औङीव रूपत्रयमूह्यम्। गवाञ्चा गोअञ्चा गोञ्चेति। भ्यामि अवङादिभिस्त्रैविध्यं नलोपतदभावाभ्यामेकैकस्य पुनर्द्वैविध्यमिति षड्रूपाणि। गवाग्भ्यां गोअग्भ्यां गोग्भ्यां गवाङ्भ्यां गोअङ्भ्यां गोङ्भ्यामिति। भिसि तथैव षट् । गवाग्भिः गोअग्भिः गोग्भिः गवाङ्भिः गोअङ्भिः गोङ्भिः इति । ङयि टायामिव गतावेकमेव गोचे इति । पूजायान्तु गवाञ्चे गोअञ्चे गोञ्चे इति त्रीणि विशिष्य चत्वारि। भ्यामि भ्यामीव षट् । भ्यसि भिसीव षट् । गवाग्भ्यः गोअग्भ्यः गोग्भ्यः गवाङ्भ्यः गोअङ्भ्यः गोङ्भ्यः इति। ङसौ टायामिव गतावेकं पूजायां त्रीणि । गोचः गवाञ्चः गोअञ्चः गोञ्चः इति चत्वारि। भ्यां भ्यसोर्भ्यां भ्यसोरिव षट् षट् । ङसि ङसाविव चत्वारि । ओसि गतावेकं पूजायान्त्रीणि गोचोः गवाञ्चोः गोअञ्चोः गोञ्चोः इति चत्वारि आम्यपि तथैव। गोचामिति गतौ गवाञ्चाम् गोअञ्चाम् गोञ्चामिति पूजायाम् । ङौ गोचि इति गतौ । गवाञ्चि गो अञ्चि गोञ्चीति। पूजायाम्। औसि ओसीव चत्वारि। सुपि गतौ। गोअक्षु गवाक्षु गोक्षु इति त्रीणि। पूजायां कुग्विकल्पेन षट्। गवाङ्क्षु गोअङ्क्षु गोङ्क्षु गवाङ्षु गोअङ्षु गोङ्षु इति नव । एवं स्वं सुप्सु प्रत्येकं नव। भकारादौ प्रत्ययषट्के षट् प्रत्येकं षट् । जश्शसोस्त्रीणि त्रीणि, शेषे दशके ङे ङसि ङस ओस् आम् ङि औस् औ औट् टा एतासु चत्वारि चत्वारि । वैशिष्ट्येन नवाधिकशतं रूपाणीति मतम् ।

न चेह **चयो द्वितीयाः-'** (वा ५०२३) इति पक्षे ककारस्य खकारेण षण्णामाधिक्यं शङ्क्यम्। चर्त्वस्यासिद्धत्वात् । कुक्पक्षे तु तस्यासिद्धत्वाज्जश्त्वाभावे पक्षे चयो द्वितीयादेशात्त्रीणि रूपाणि वर्धन्त एव । ऊह्यमेषां द्विर्वचनानुनासिकविकल्पनात् ।

रूपाण्यश्वाक्षिभूतानि (५२७) भवन्तीति मनीषिभिः ।

तिर्यक्, तिरश्ची, तिर्यञ्चि । पूजायां तु, तिर्यङ्, तिर्यञ्ची,तिर्यञ्चि ।। **इति चान्ताः** ।। यकृत्, यकृती, यकृन्ति । 'पद्दन्-' (सू २२८) इति वा यकन् । यकानि । यक्ना, यकृता । शकृत् , शकृती, शकृन्ति । शकानि । शक्ना, शकृता । ददत्, ददती ।४४४ **वा नपुंसकस्य** ।७।१।७९। अभ्यस्तात्परो यः शता तदन्तस्य क्लीबस्य नुम् वा स्यात्परेत्सर्वनामस्थाने । ददन्ति, ददति । तुदत् ।

---

18. तिर्यक् तिरसस्तिर्यलोप इति तिर्यादेशः। अनिदितामिति न लोपः कुत्वं तिर्यक्। औङश्श्यां । भत्वादल्लोपेन न तियदिश इति तिरश्चि । पूजायान्तु नलोपाभावेन अच इत्यल्लोपाभावात् तिर्यादेशः। तिर्यञ्चि। शौ सर्वनामस्थानत्वेन नुमि अभत्वादल्लोपाभावे च तिर्यादेश इति। तिर्यञ्चि इति गत्यर्थे पूजायाञ्चैकमेव रूपम्। द्वितीयायामप्येवमेव। टायां तिरश्चा तिर्यञ्चा । भ्यामि तिर्यग्भ्याम्। तिर्यङ्भ्यामित्यादि। सुपि तिर्यक्षु तिर्यङ्क्षु तिर्यङ्षु इति कुग्विकल्पात्पूजायाम् रूपद्वयम्। यकृन्ति । शौ सर्वनामस्थानत्वान्नपुंसकस्य झलच इति नुम्। यकन्नादेशे तु सर्वनामस्थानत्वे नोपधादीर्घे यकानि इति। एवं शकृच्छब्दोऽपि । सुपि तु नलोपः। प्रातिपदिकान्तस्येति नलोपे यकसु शकसु । यकन्नादेशाभावे यकृत्सु शकृत्सु इति।

19. वा नपुंसकस्य अच्छीनद्योर्नुमिति समनन्तरसूत्रात् नुमत्रापकृष्यते । नाभ्यस्ताच्छतुरित्युत्तरसूत्रादभ्यस्ताच्छतुरिति उगिदचामित्यतस्सर्वनामस्थान इति तदेतदाह, अभ्यस्तात्परो यश्शतेत्यादि । शतेति शतृशब्दस्य सौ रूपं धातेतिवत्, शतृप्रत्यय इत्यर्थः, शतुरिति नपुंसकस्य विशेषणम्, तेन तदन्तविधिः। उभेऽभ्यस्तमित्यभ्यस्तसंज्ञाविधायकसूत्रम्। पुंलिङ्गेषु गतम्, प्रकृते दद इत्यभ्यस्तं तस्मात्परो यश्शतो अत् तदन्तं यत्क्लीबं ददत् तस्य औ परतस्सर्वनामस्थानत्वाच्छेः नुम्वा । ददन्ती ददती इति नपुंसकस्य झलच इति नित्यतया नुमि विभाषार्थमिदं सूत्रम्। नपुंसकस्येति किम् ? पुंसि ददत् । सति तु नुमि ददन्निति पक्षान्तरे स्यात्। अभ्यस्तात्किम्। नपुंसके शौ भवन्ती भवती इति तु न स्यादिति।

४४५ **आच्छीनद्योर्नुम्** ।७।१।८०। अवर्णान्तादङ्गात्परो यः शतुरवयवस्तदन्तस्याङ्गस्य नुम् वा स्याच्छीनद्योः परतः । तुदन्ती, तुदती । तुदन्ति । भात् । भान्ती, भाती । भान्ति । पचत् ।।

---

20. अच्छीनद्योर्नुम् । आत् शी नद्योरिति न्यासः। शश्छोटीति छत्वम्। अङ्गस्येत्यधिकारस्य पञ्चम्यन्तत्वेन विपरिणम्यते, आवर्त्यते च, शतुरित्यनुवृत्तिः। आदित्यस्य अङ्गविशेषणत्वेन तदन्तविधिः शतुरित्यङ्गविशेषणम् । तेन शतुरवयवस्याक्षेपः । अवर्णान्तादङ्गात्परस्य शत्रन्तस्याङ्गस्येत्यर्थाश्रयणे तु तुदादिभ्यश्शः तस्माच्छत्ता तुद् अ अत्। अतो गुणे । तुद् अत् तुदत्। एकादेशस्य परादिवद्भावेन यदङ्गं तुदिति तन्नावर्णान्तम्। पूर्वान्तवद्भावेन यदङ्गमदन्तं तुद तस्मात्परो यश्शतेत्युक्तौ तकारमात्रस्य शतृत्वं न्नास्तीति शतुरवयव इत्युक्तम्। न च पूर्वान्तवद्भावेन अदन्ताङ्गत्वं परादिवद्भावेन शत्रन्तत्वं चानीयतामिति वाच्यम्। उभयत आश्रयणे नान्तादिवदिति निषेधात्। अवर्णान्तादङ्गादिति किम् ? ददती अत्र अलोपे कृते, दद् अत् ददत्। अवर्णान्तात्परो यश्शतुरवयव इत्युक्तौ ददेत्यस्यावर्णान्तत्वात्। तस्मात्परस्य शतुरवयवस्य तकारस्य सत्त्वान्नुम्स्यादिति । नन्वेवं मास्त्वङ्गादिति । मास्तु च अवयव इति । तथात्वे अवर्णान्तात्परश्शतेत्युक्तौ प्रकृते अभावान्न दोष इति चेन्मैवम्। प्राग्दर्शितरीत्या तुदन्तीति न सिद्ध्येत्। ननु तदन्तस्याङ्गस्य नुम्स्यादिति तत्राङ्गपदेन किम्। मैवम्। अङ्गस्येत्यङ्गाभावे तदन्तविध्यभावेन यश्शतुरवयवस्तस्य नुम्स्यादिति अर्थस्स्यात्। तथात्वे तुदन्ती इत्यत्र शतुरवयवात्तकारात्परस्सन् नुम्स्यात्। तुदत्नी इति रूपापत्तेः। शी इति दीर्घान्तग्रहणं किम्। शौ तुदती इति वैकल्पिकं रूपं स्यादिति। नपुंसकाच्चेति शीरेवायं न त्वौङश्शी शत्रन्तस्याङ्गस्यादन्तत्वासम्भवात्। नद्यामुदाहरणन्तु तुदन्ती तुदन्त्यौ तुदन्त्यः। गच्छन्ती इत्यादयः। ननु यूस्त्र्याख्यौ नदीति नित्यस्त्रीलिङ्गयोरीदूदन्तयोर्नदीसंज्ञा विहिता। न तु नित्यस्त्रीलिङ्गात्परतोरीदूतोरिति कथं नदीपरकत्वमङ्गस्य नदीसंज्ञकस्येति चेत्सत्यम्, तथाऽपि ह्रस्वनद्यापो नुट् आण्नद्या इत्यादिषु नद्यन्तादिति व्याख्यनात्। ईदूदन्तयोर्विहिता संज्ञा ईदूतोरेव। विश्याम्यति। न च तर्हि यूस्त्र्याख्यावित्यस्य ईदूतोरेव नदीत्वमित्यर्थो वाच्यः। किमिति तदन्तग्रहणमिति वाच्यम्। केवलयोस्तयोर्नित्यस्त्रीत्वाभावात्। धी इति समुदाये स्त्रीत्वं वर्तते हि। न तु धकारोपरि श्रूयमाणे केवलईकारे इति तदन्तयोरेव संज्ञाविधानमुचितम्। कृतायाश्च संज्ञायास्तयोरेव विश्राम उचित इति च न काप्यनुपपत्तिरिति। अस्मिन्सूत्रे नुम्ग्रहणमनर्थकम्। इदितो नुम्धातोरित्यतो नुम् लाभात्। न च वा नपुंसकस्येति सूत्रे अस्मादेव सूत्रान्नुमोपकर्षस्त्वयोक्तः कथं सिद्ध्यत इति वाच्यम्। नुमोऽत्र सत्त्वात्। सन्निहितत्वेन अस्मादपकर्षः। असत्वे तु इदितो नुम् सूत्रादेवेति न दोष इति। अवर्णान्तादिति ह्रस्वदीर्घयोरुभयोरप्यकारयोर्ग्रहणसंभवात्। भान्ती भाती इति भातेरदादित्वाच्छुब्लुकि भा अत् सवर्णदीर्घः। भात् शि नुम्। भान् त् ई भान्ती, नुमभावे भाती इति ।

४४६ **शप्श्यनोर्नित्यम्** ।७।१।८१। शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नित्यं नुम् स्याच्छीनद्योः परतः । पचन्ती । पचन्ति । दीव्यत् । दीव्यन्ती । दीव्यन्ति ।। **इति तान्ताः** ।। स्वप्, स्वब् । स्वपी । नित्यात्परादपि नुमः प्राक् 'अप्तृन्–' (सू २७७) इति दीर्घः, प्रतिपदोक्तत्वाद् नुम्, स्वाम्पि । 'निरवकाशत्वं प्रतिपदोक्तत्वम् ' इति पक्षे तु प्रकृते तद्विरहान्नुमेव । स्वम्पि । स्वपा । अपो भि' (सू ४४२) स्वद्भ्याम् । स्वद्भिः ।। **इति पान्ताः**।। 'अर्तिपृवपि–' (उ २८२) इत्यादिना धनेरुस् । षत्वस्यासिद्धत्वाद्रुत्वम् । धनुः । धनुषी । 'सान्त–' (सू ३१७) इति दीर्घः । 'नुम्विसर्जनीय–' (सू ४३४) इति षत्वम् । धनूंषि । धनुषा । धनुर्भ्याम् । एवं चक्षुर्हविरादयः । पिपठिषतेः क्विप्, 'र्वोः–' (सू ४३३) इति दीर्घः । पिपठीः पिपठिषी । अल्लोपस्य स्थानिवत्त्वाज्झलन्तलक्षणो नुम् न । स्वविधौ स्थानिवत्त्वाभावादजन्तलक्षणोऽपि नुम् न । पिपठिषि । पिपठीर्भ्यामित्यादि पुंवत् ।। **इति षान्ताः** ।। पयः । पयसी । पयांसि । पयसा । पयोभ्याम् इत्यादि ।

---

21. शप्श्यनोर्नित्यम्, अत्र आच्छीनद्योर्नुमिति सर्वं सूत्रम् नाभ्यस्तादित्यतश्शतुरिति चानुवर्त्यते । श्यप्श्यनोरित्यवयवषष्ठी। तदेतदभिप्रेत्याह श्यप्श्यनोरित्यादिप्राक्सूत्रेण नुम्विकल्पे सिद्धे नित्यार्थमिदं सूत्रम्। तस्मादारम्भसामर्थ्यादेव नित्यत्वे सिद्धे नित्यग्रहणं किं? वेत्यधिकारनिवृत्त्यर्थम् शप उदाहरणम् पचन्ती । श्यनस्तु दीव्यन्ती इति।

22. स्वाम्पि । स्वप् शि इति स्थिते नपुंसकस्य झलच इति नुम्प्राप्तः। अप्तृन्निति दीर्घश्च । उभयोः परत्वात्। कृताकृतप्रसङ्गित्वरूपनित्यत्वाच्च नुमि प्राप्ते अप्तृन्नित्यत्र अप् इति प्रतिपदोक्तत्वाद्दीर्घः । पश्चान्नुम् । स्वाम्पि । लक्षणप्रतिपदोक्तयोः प्रतिपदेक्तस्यैव ग्रहणमिति। स्वप्शब्दस्य झलन्तलक्षणो नुम्। लक्षणोक्तः अब्रूपत्वाद्दीर्घः। प्रतिपदोक्त इति दीर्घ एव बलीयानिति । ननु प्रतिपदोक्तत्वन्नाम निरवकाशत्वमिति सिद्धान्तितत्वात् प्रकृते अप्ग्रहणस्य आप इत्यत्र सावकाशत्वान्नास्ति प्रतिपदोक्तत्वमिति शङ्कयाऽह। निरवकाशत्वम्प्रति पदोक्तत्वपक्षे त्विति युज्यते चेदं। पूर्वोक्तरीत्यापि । अत एव प्रतिपदोक्तत्वम्। न तु स्वप इति । आप इत्यत्र प्रतिपदोक्तत्वाद्दीर्घस्स्यात् स्वप्शब्दस्य तु अबन्तत्वेन अब्रूपत्वं । लाक्षणिकमेवेति। वस्तुतस्तु अजन्तस्य नुम्विहितअपः (अबन्तस्यः) दीर्घविहित इति। अप्तृन्नित्यस्य विशेषविहितत्वेन अपवादत्वात्प्रथमं दीर्घ इत्येकः पक्षः। यद्यपवादोऽन्यत्र चरितार्थस्तर्हि उत्सर्गसमानबल इति अपवादस्य दीर्घस्य अप इत्यत्र चरितार्थत्वादुत्सर्गतुल्यत्वमेवेति परो नित्यश्च नुम्। उत्सर्गतुल्यं दीर्घं बाधित्वा प्रथमं प्रवर्तत इति द्वितीयः पक्षः । अस्यैव पक्षस्य न्याय्यत्वात्स्वंपीति रूपमेव प्रामाणिकमिति।

सुपुम् । सुपुंसी । सुपुमांसि । अदः विभक्तिकार्यम्, उत्वमत्वे- अमू । अमूनि । शेषं पुंवत् ।। **इति सान्ताः** ।।

इति हलन्तनपुंसकलिङ्गप्रकरणम् ।।

## अथाव्ययप्रकरणम् ।१४।

४४७ **स्वरादिनिपातमव्ययम्** । ।१।१।३७। स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः । स्वर् । अन्तर् । प्रातर्

---

23. सुपुम्। शोभनाः पुमांसो यस्मिंस्तत् सुपुं पत्तनं गृहं वा। सुपुंसु (हल्ङ्यादिलोपः) संयोगान्तलोपश्च सुपुं, श्याम् सुपुंसि शौ सर्वनामस्थानत्वात्पुंसोऽसुङ् उगिदचामिति नुम् । सान्तमहत इति दीर्घः । नश्चापदान्तस्येत्यनुस्वारः। सुपुमांसि पुनस्तद्वत्, शेषं पुंवत्।

24. अदः, विभक्तिपरतो विधीयमानत्वान्न त्यदाद्यत्वम्। सौ परतो विधीयमानत्वात् नादस औत्वम्। तस्मादेव न तदोस्स इति सत्वम्। किन्तु अदस् सु हल्ङ्यादिलोपः रुत्वविसर्गौ अदः अमू स्त्रियाम्। औ ङीव। जसि अदस् शि त्यदाद्यत्वपररूपत्वे अद इति अजन्तलक्षणो नुम्। सर्वनामस्थाने चासंबुद्धाविति दीर्घः। अदानि । मुत्वममूनि । पुनस्तद्वत् शेषं पुंवत्- **इति हलन्ता नपुंसकलिङ्गाः। इति शरद्रात्रौ शब्दाधिकारः।**

### अथ अव्ययानि

1. स्वरादिनिपातमव्ययम्, स्वरादयो निपाताश्च तेषां समाहारः स्वरादिनिपातम्, स्वरादिगणस्तु अस्मिन्सूत्र एव पठ्यते। प्राग्रीश्वरान्निपाता इति। इत ऊर्ध्वमधिरीश्वर इत्यतः प्राङ्निपाताधिकार इति संज्ञा प्रकरण एवोक्तम्। तत्र चादयोऽसत्त्वे प्रादयः इत्यादयो निपाताः पठिताः । स्वरादीनां निपातानाच्च अव्ययसंज्ञासिद्ध्यर्थमिदं सूत्रम्। फलन्तु अव्ययादाप् सुप इति वक्ष्यते। अत्र यदि स्वरादिषु चादीन् प्रादीन् निपातान् पठित्वा स्वराद्यव्ययमिति सूत्र्येत। तर्हि निपात एकाजनाङिति न सिद्ध्येत्। यदि तत्राप्यव्ययमेकाजनाङिति सूत्र्येत, तर्हि मेदं कुर्विति न सिद्ध्येत् । मा इत्यस्य स्वरादिपठितस्य एकाचोऽव्ययस्य प्रगृह्यत्वेन प्रकृतिभावे मा इदं कुर्विति स्यात्। नास्तीति च न सिद्ध्येत् इति । अथ यदि स्वरादीन् चादिषु पठित्वा निपातमव्ययमिति सूत्र्येत, तत्राप्युक्तदोषानपगमात् या तु निपातएकाजनाङ्नमा इति सूत्रयित्वा उक्तदोषो निवार्यते, तर्हि स्वरादिषु चादिपाठे अद्रव्यार्थानामेव चादीनामव्ययत्वम् । न तु द्रव्यवाचकानामिति व्यवस्था न सिद्ध्येत्। यदि तु चादिष्वेव स्वरादिपाठोऽभ्युपगम्यते तर्हि स्वरादीनामपि द्रव्यवाचिनामव्ययत्वं न घटेत। यदि तु प्राग्रीश्वरान्निपाताः चादयोऽस्सत्त्वे प्रादय स्वरादय इति सूत्रयित्वा असत्त्व इति स्वरादिष्वननुवृत्त्य स्वरादीनां निपातसंज्ञां विधाय नमयोरचि प्रकृतिभावनिवृत्यर्थं निपात एकाजनाङ्न मा इति सूत्रयित्वा निपातमव्ययमिति सूत्र्यताम् । तर्हि हे है अ कम् इत्येषामप्येकाचां स्वरादिपाठस्य दृश्यमानत्वात्तेषामप्यचि

पुनर् । सनुतर् । उच्चैस् । नीचैस् । शनैस् । ऋधक् । ऋते । युगपत् । आरात् । पृथक् । ह्यस्, श्वस् । दिवा । रात्रौ । सायम् । चिरम् । मनाक् । ईषत् । जोषम् । तूष्णीम् । बहिस् । अवस् । समया । निकषा । स्वयम् । वृथा । नक्तम् । नञ् । हेतौ । इद्धा । अद्धा । सामि ।'वत्' (ग४) ब्राह्मणवत् । क्षत्रियवत् । सना सनत् । सनात् । उपधा। तिरस्। अन्तरा अन्तरेण ज्योक् । कम्। शम् । सहसा । विना । नाना । स्वस्ति । स्वधा । अलम् । वषट् । श्रौषट् । वौषट्। अन्यत् । अस्ति । उपांशु । क्षमा । विहायसा । दोषा । मृषा । मिथ्या । मुधा । पुरा । मिथो । मिथस्। प्रायस् । मुहुस् । प्रबाहुकम् । (प्रवाहिका) आर्यहलम् । अभीक्ष्णम् । साकम् । सार्धम् । नमस् । हिरुक् । धिक् । 'अथ' । अम् । आम्। प्रताम् । प्रशाम् । प्रतान् । मा । माङ् । आकृतिगणोऽयम् ।। इति स्वरादयः।। च । वा । ह । अह । एव । एवम् । नूनम् । शश्वत्। युगपत्। भूयस् । कूपत् । सूपत् । कुवित् । नेत् । चेत् । चण् । कच्चित् । किंचित्। यत्र। नह। हन्त । माकिः । माकिम् । नकिः । (आकिम् । नकिम्) । माङ् । नञ् । यावत् । तावत् । त्वै । द्वै । (न्वै)। है । श्रौषट् । वौषट् । स्वाहा । स्वधा । वषट् (ओम्) । तुम् । तथाहि । खलु । किल । अथो । अथ । सुष्ठु। स्म । आदह । **'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च'(ग** १६) अवदत्तम् । अहंयुः। अस्तिक्षीरा । अ । आ । इ । ई । उ । ऊ । ए । ऐ । ओ । औ । पशु । शुकम् । यथाकथाच । पाट् । प्याट् । अङ्ग। है। हे । भोः । अये । द्य । विषु । एकपदे । युत् । आतः । चादिरप्याकृतिगणः ।। इति चादयः।

---

प्रकृतिभावस्स्यात्। यदि तु हे है एतयोः प्लुतत्वेन प्रकृतिभाव इष्ट एवेति। तर्हि अकं अनयोर्नेष्ट इति अथ यदि मा इत्यत्र अकारं प्रश्लिष्य अनाङ्कनमा इति सूत्र्येत तर्हि विपरीतगौरवात् । तथाहि, स्वरादिनिपातमिति सूत्रे स्वरादि इत्येषामपगमेन लाघवमिति हि निपातमव्ययमिति सूत्र्यतामिति वादः। एतद्वाददृढीकरणार्थं स्वरादय इत्यपरं सूत्रं कृतम्। निपात एकाजिति सूत्रे कंनमा इत्यक्षरत्रयमपि कृतम्। मिळित्वा चतुरक्षराधिक्यं न्यासमते संपन्नमिति। अथ यदि स्वरादिनिपातमव्ययमिति सूत्रमेव मास्तु। अव्ययादाप्सुप इत्यत्र निपातादाप्सुप इति वक्तव्यमतो न्यासमते लाघवमेव इति चेत्तर्हि अव्ययीभावो न सिद्ध्येत्। अथ यदि निपाते भाव इत्येव सूत्र्यतामित्युच्येत तर्हि यन्नव्येति तदव्ययमिति अव्ययसंज्ञाविधायकश्रुतिविरोधः। यदि तु निपातसंज्ञामेवापनीय प्राग्रीश्वरादव्ययम्। अव्ययमेकाजनाङनमा इत्यव्ययसंज्ञैवाभ्युपगम्येत। तर्हि छंदसि निपातस्य च मन्त्रे

४४८ **तद्धितश्चासर्वविभक्तिः** । ।१।१।३८। यस्मात्सर्वा विभक्तिर्नोत्पद्यते स तद्धितान्तोऽव्ययं स्यात् । परिगणनं कर्तव्यम् । तसिलादयः प्राक्पाशपः । शस्प्रभृतयः । प्राक्समासान्तेभ्यः। अम्, आम्, कृत्वोऽर्थाः, तसिवती, नानाञाविति। तेनेह न–पचतिकल्पम्।पचतिरूपम् ।। ४४९ **कृन्मेजन्तः** । ।१।१।३९। कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात् । स्मारंस्मारम् । जीवसे । पिबध्यै

---

दीर्घस्स्यात्। एवाहिते इति निपातैर्यद्यदीति सूत्राद्यद्यतीत्यादि निपातैर्युक्तस्य निघाताभावः। यदग्नस्यामहं सत्त्वम् इति च न सिद्ध्येत् । अथ यदि निपातैरिति सूत्रे अव्ययैरिति पठिते समीहितसिद्धिर्भवतीति, तथाऽपि निपातस्य चेति न सिध्यति। एवादिनिपातभिन्नानां स्वरादिपठितानामथ इत्याद्यव्ययानां योगेऽपि दीर्घापत्तेः। तस्मात् निपातसंज्ञा अव्ययसंज्ञाप्युभे आवश्यके निपातकार्यस्य अव्ययकार्यस्य च भेदानुभवात् इति हेतोः यथाश्रुतं सूत्रमेव रमणीयम् ।

2. पचीति कल्पम् पचीति रूपम्। ईषदसमाप्तौ कल्पप् प्रशंसायाम्। रूपप् परिगणनाभावे अव्ययत्वादमो लुकि पचतिकल्प पचतिरूप इति स्यादिति भावः। युज्यते चेदं यस्मात्सर्वाविभक्तिर्नोत्पद्यते इत्यनेन एकवचनविभक्तिपरकत्वमात्रं तद्धितान्तस्य अङ्गीकृतम्। प्रकृते च कल्पप्रूपपोरेकवचनविभक्तिपरकत्वेन कल्पं रूपमित्येव रूपं भवति। न तु कल्पे कल्पानि रूपे रूपाणीत्यादय इति। अस्ति च तद्धितत्वं तयोः प्रत्यययोरिति परिगणने कल्पप्रूपपोरग्रहणात्तद्धितश्चेति सूत्रादव्ययत्वप्राप्तौ परिगणनेन निषिध्यते तदव्ययत्वमिति ।

3. कृन्मेजन्तः। म् च एच्च मेचौ अन्ते यस्य सः। मेजन्तः। कृत् अव्ययम् स्यात् । कृन्मेजिति सूत्रितेऽपि विशेषणत्वादेव येन विधिरिति तदन्तविधौ मेजन्त इत्यर्थलाभे अन्तग्रहणम् किम्, औपदेशिकमेजन्तत्वलाभार्थं। तेन आधये चिकीर्षवे इत्यादौ सत्यप्येजन्तत्वे तदजन्तत्वमौपदेशिकन्नेति नाव्ययत्वम्। ननु सत्यव्ययत्वे आधय इत्यादौ को वा बाध इति चेत् अव्ययादाप्सुप इति सुपो लुक्स्यादिति । ननु एजन्तकृदन्तमव्ययमिति एकारान्तस्य आधये इत्यस्य अव्ययत्वेऽपि तस्मात्परो यो सुप् तस्य लोप इत्युक्तत्वेन नात्र एकारात्परस्सुप् लोपं प्राप्तुमिति चेत् मैवम्। एजन्तकृदन्तस्यैवाव्ययत्वमिति आधय इति एजन्तं सुबन्तमेव न तु कृदन्तमिति । ननु एच एव सुप्त्वात्तदन्तसुबन्तत्वं वा कथम् ? मैवम् एजन्तं यत्सुबन्तमिति । अस्ति तत्र एजन्तसुबन्तत्वमिति । किञ्च एजन्तो यः कृत् इत्युक्ते आधये इति भवत्येव कृत्प्रत्ययस्य एचि परकत्वात् । तदन्तमित्युक्ते तु न हि कृत्प्रत्ययोऽन्ते वर्तते । किन्तु सुबेवेति नास्त्याधय इत्यादौ कृन्मेजन्त इत्यव्ययत्वमपीति। ननु आधि

४५० **क्त्वातोऽसुन्कसुनः** । ।१।१।४०। एतदन्तमव्ययं स्यात् । कृत्वा । उदेतोः । विसृपः । ४५१ **अव्ययीभावश्च** । ।१।१।४१। अधिहरि । ४५२ **अव्ययादाप्सुपः** । ।२।४।८२। अव्ययाद्विहितस्यापः सुपश्च लुक् स्यात् । तत्र शालायाम् ।

---

ङे घे र्ङितीति गुणः । आधे ए । अधुना एजन्तकृदन्तत्वमाधे इत्यस्य वर्तत इति। तरस्मात्परस्य सुपो ङयः लोपस्स्यादिति चेन्मैवम्। एच् अन्ते यस्य तस्य आध् इत्यस्य अकृत्वात्। स्यादेतत् एजन्त इत्यत्र षष्ठीबहुव्रीह्याश्रयणे यद्यपि आधे इत्येतदेव एजन्तम्भवति, तथाऽपि एजन्तन्तत्कृदन्तमेव। न तु कृदिति नास्ति आधे इत्यस्य अव्ययत्वम्। यदि तु एच् अन्ते यस्मात्स इति पञ्चमीबहुव्रीहिस्तर्हि एच् अन्ते यस्मत्सः आध् इत्येव भवतीति न तस्य कृत्तत्त्वम् इति नैवमप्यव्यत्वमिति। ननु व्यपदेशिवद्भावेन एच् अन्ते यस्य स कृदेजेव भवतीति चेत्तर्हि आधे इत्यस्य एजन्तकृदन्तत्वेन अव्ययत्वेऽपि तस्माद्विहितस्सुप् ङे इत्येतन्न भवतीति। अव्ययादाबिति सूत्रस्य अव्ययाद्विहितस्येति व्याख्यानेन नात्र ङयो लोपप्रसक्तिः। इकारान्तकृदन्तादाधि इत्यस्माद्धि ङे विहितः। तस्मात् औपदेशिकग्रहणार्थमन्तग्रहणं मित्येतत्फलाभावादुपेक्ष्यमिति सूत्रे अन्तग्रहणं व्यर्थमेव इत्याशङ्कायामाह। तत्त्वबोधिन्यामनिष्टान्तरमूह्यमिति । अव्ययं विभक्तीत्यादिना अव्ययीभावसमासे आधये इत्यस्य अव्ययत्वेन पूर्वनिपातः । नाव्ययीभावादित्यादिना अमादेशादयश्च स्युः । तेन अधिहरि अपदिशमित्यादिवत् आधये डित्थ डवित्थ माधये डित्थडवित्थम् आधये कपि इत्याद्यनिष्टानि स्युरिति भावः ।

4. तत्र शालायां, तच्छब्दात्सप्तम्यास्त्रल्। तत्र अदन्तत्वाट्टाप् कृत्तद्धितसमासाश्चेति तद्धितान्तत्वात्स्वादयः इति टाप्सुपोः प्राप्तयोः अव्ययादाप्सुप इति लुक्। ननु अव्ययाद्विहितष्टाप् तस्माद्विहितस्सुबिति कथमनव्ययविहितस्य सुपो लुगिति चेन्मैवम्। अकृतव्यूहपरिभाषया स्वयं लोपं प्राप्तुमुन्मुखोऽयं टाप् सुबुत्पत्तिम्प्रति न हेतुतां प्राप्नुयादिति । ननु निमित्तं विनाशोन्मुखं दृष्ट्वा इति सप्तम्यन्तस्य हि निमित्तत्वम्।तेन सुबुत्पत्तिं प्रति टापो न निमित्तत्वमिति नाकृतव्यूहपरिभाषात्र प्रवर्तते इति चेत्तर्हि एकदेशविकृतमनन्यवदिति तत्र इत्यप्यव्ययमेवेति। स्वमोरम्। ज्ञानम् । सुबुत्पत्तेः प्रागङ्गे यत्क्लीबत्वं वर्तते तदेव सुबन्तेऽपि वर्तते । यथा टापः। प्राक्प्रत्यये यदव्ययत्वं तट्टाबुत्पत्त्यनन्तरं तदन्तेऽपीति वा टाबन्तस्याप्यव्यत्वात्तस्माद्विहितस्यापि सुपो लुक्स्यादिति । वस्तुतस्तु अत्र टाबुत्पत्तिरेव नास्ति अव्ययस्य अलिङ्गत्वात्। किन्तु सुबुत्पत्तिरेव।

विहितविशेषणान्नेह –अत्युच्चैसौ । अव्ययसंज्ञायां यद्यपि तदन्तविधिरस्ति, तथापि न गौणे । **आबग्रहणं व्यर्थमलिङ्गत्वात्** ' (वा १६३३) ।

'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ।।
इति (भाष्योक्ता) श्रुतिर्लिङ्गकराकसंख्याभावपरा ।।
'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपं चैव हलन्तानां यथा वाचा निशा दिशा ।।
वगाहः–अवगाहः । पिधानम् –अपिधानम् ।।

**इत्यव्ययप्रकरणम् ।।**

---

तथा च तत्र इत्यस्मात् ङेर्लुगिति बोद्धव्यम्। ननु अव्ययसंज्ञायां त्रतसिलोः परिगणनं व्यर्थम्। न च तत्र शब्दाट्टाबुत्पद्येतेति वाच्यम्। सप्तम्यादेशस्य त्रलः स्त्रीत्व वाचकत्वाभावात्। सप्तम्यादिविभक्तीनामधिकरणादिवाचकत्वस्य च वक्ष्यमाणत्वात्। न च विभक्तयन्तादपि टाबुत्पत्तिरिति वाच्यम्। रमाशब्दाद्विहितस्य सोरुगित्वात् ङीप् स्यादिति। नापि सुबुत्पद्येतेति वच्यम्। सुबादेशात्त्रलस्सुब्विधाने सुबन्तादपि पुनस्सुप्प्रसङ्गात्। न च कृत्तद्धितसमासाश्चेति त्रलः तद्धितत्वेन तस्मात्सुबुत्पत्तिः सुपोऽतद्धितत्वेन तस्मात्र सुबुत्पत्तिरिति वाच्यम्। अनर्थकत्वादेव तद्धिताभ्यामपि तत्र– सिल्भ्याम् सुबुत्पत्तेरनङ्गीकृतत्वात्। तच्छब्दादधिकरणार्थे हि ङ्यादेशस्त्रल्प्रत्ययः कृतः। तस्मात्प्रत्ययात्पुनः कस्मिन्नर्थे सप्तमी विभक्तिस्स्यात् ? अतो निरर्थकत्वमेव–कृतस्यापि तस्येति न सुबादेशात्तद्धितात्पुनस्सबुत्पत्तिरिति। न च त्रल् त्रलौ त्रल इति सुबुत्पत्तिरस्तीति वाच्यम्। त्रलित्यस्य प्रत्ययानुकरणशब्द स्वरूपत्वात्तस्मात्स्वाद्युत्पत्तिरिष्टैवेति। किञ्च यथाकथञ्चिद्यदि सुबुत्पत्तिस्सुबादेशादपीष्यते तद्धितात्। तर्हि तत्र शालया तत्र शालामिति तृतीयादिवभक्तिष्वपि तत्रेपिति दृश्येत। न हि तथा प्रतीयते तस्मात्त्रतसिलोरव्ययसंज्ञा व्यर्था इति पूर्वपक्षः उत्तरस्तु (उत्तरपक्षो नैव लिखितः।) ग्रन्थशैथिल्यात् नैव प्रतीयते ।

5. वष्टिभागुरिरित्यादि। अव, अपि इत्येतयोरव्यययोरुपसर्गत्वे अल्लोपस्स्यादिति अव्ययकार्यत्वादव्ययेष्वस्य श्लोकस्य पठनम् । **इत्यव्ययानि** ।

## अथ स्त्रीप्रत्ययप्रकरणम् ।१५।

४५३ **स्त्रियाम्** । ।४।१।३। अधिकारोऽयम् । समर्थानामिति यावत् ।

४५४ **अजाद्यतष्टाप्** ।४।१।४। अजादीनामकारान्तस्य च वाच्यं यत्स्त्रीत्वं तत्र द्योत्ये टाप् स्यात् । अजाद्युक्तिर्ङीषो ङीपश्च बाधनाय । अजा । अतः, खट्वा । अजादिभिः स्त्रीत्वस्य विशेषणान्नेह–पञ्चाजी । 'द्विगोः' (सू ४७९) इति ङीप् । अत्र हि समासार्थसमाहारनिष्ठं स्त्रीत्वम् । अजा । एडका । अश्वा । चटका । मूषिका । एषु जातिलक्षणो ङीष् प्राप्तः । बाला । वत्सा । होढा । मन्दा । बिलता । एषु 'वयसि प्रथमे' (सू ४७८) इति ङीप् प्राप्तः । '**सम्भस्त्राजिनशणपिण्डेभ्यः फलात्** (वा २४९९) सम्फला । भस्त्रफला 'ङ्यापोः–' (सू १००१) इति ह्रस्वः ।

---

### अथ स्त्रीप्रत्यया व्याक्रियन्ते ।

1. अधिकारोऽयम्। समर्थानामिति यावत्। समर्थानां प्रथमाद्वा इति सूत्रपर्यन्तमिति सूत्रादारभ्य स्त्रियामिति पदं सर्वत्रानुषज्यत इत्यर्थः।

2. अजाद्यतष्टाप्– अजादि इति लुप्तषष्ठीकम् पदम्। अत इति विशेषणं तस्यानुगुणं विशेष्यं शब्दस्वरूपमिति पदमध्याह्रियते । तेन तदन्तविधिः स्त्रियामित्यधिकारः।अजादीनामकारान्तशब्दस्वरूपस्य च स्त्रीत्वे टाप् स्यात्। अजाद्यत इत्यस्य स्त्रियामित्यस्य च वाच्यवाचकभावसंबन्धः। इदमेवाभिप्रेत्य–वाच्यं यत् स्त्रीत्वमिति स्त्रीवाचकानामजादीनामकारान्तानाञ्च टाप्स्यादिति। समुदायार्थः । टाप् । कुत्र स्यादित्याकाङ्क्षायामजाद्यतः परस्सन्नित्येव। सन्निपातत्वादजादिश्च अच्च अजाद्यतौ तयोस्समाहारः अजाद्यत् । सौत्रस्समासान्ताभावः। तस्य अजाद्यत इति वा समासः। अत्र विचार्यते अजाद्यत इति पञ्चम्येवास्तु । तथा च स्त्रीवाचकेभ्यः अजादिभ्यः अकारान्तेभ्यश्च टाप्स्यादित्यर्थस्सुगमः। षष्ठी पक्षेऽपि स टाप् अजाद्यतः परत्रैव स्यादिति पञ्चम्यर्थस्यापि स्वीकर्तव्यत्वात्। तस्मात् किमत्र षष्ठ्या इति प्रश्नः। तर्हि पुंस्यपि अजादीनां स्त्रीवाचकत्वेन टाबेव स्यादिति अज इति न सिद्ध्येत्। न च अजादेः प्रकृतिमात्रस्य लिङ्गत्रयवाचकत्वेन स्त्रीवाचकादजादेरेव टाब्विधीयत इति न दोष इति वाच्यम्। लिङ्गत्रयवाचकत्वस्य सत्त्वादेव अजादेः स्त्रीवाचकत्वं वर्तत इति। स्त्रीवाचकेभ्यः अजादिभ्य इत्यत्र न विप्रतिपत्तिः । तस्मात् टाब्विधेः न कोऽपि बाध इति। षष्ठीसमासे तु अजादीनां स्त्रीवाचकत्वे टाप्स्यादित्यर्थात्पुंसि अजादेस्त्रीवाचकत्वं नास्ति । किन्तु पुंवाचकत्वमेवेति न दोषः। ननु तर्हि स्त्रियां वर्तमानेभ्योऽजादिभ्यष्टाप्स्यादित्यर्थ उच्यते।

तथात्वे टाप्प्रत्ययविधानकाले स्त्रीवाचकत्वे सत्येव अजादेष्टाप् स्यात् इति षष्ठीसमासपक्ष इव पञ्चमीपक्षोऽपि निर्दोष एवेति। एवं पक्षद्वये विप्रतिपद्यमाने कश्चिदन्य श्शङ्कते। ननु प्रातिपदिकस्य लिङ्गं प्रातिपदिकार्थ इति पक्षे लिङ्गमर्थ एव तच्च न विशेषाकारेणेति। प्रातिपदिकसूत्रस्य अजादेर्विशेषतः स्त्रीलिङ्गवाचकत्वं कथमिति चेन्मैवम्। विशेषविवक्षाधीनत्वेन अजादेः स्त्रीलिङ्गवाचकत्वे विवक्षिते इत्यर्थान्न दोष इति। अत एव षष्ठीपक्षो युज्यते। अजादेस्त्रीवाचकत्वे विवक्षिते टाप्स्यादिति कौमुद्यामिदमेवाभिप्रेत्य वाच्यम् यत् स्त्रीत्वं तत्र द्योत्य इत्युक्तम्। द्योत्ये नाम विवक्षिते इत्यर्थः। अन्यथा वाच्यमिति प्रातिपदिकस्य स्त्रीवाचकत्वमुक्त्वा द्योत्य इति स्त्रीद्योतकत्वोक्तिर्विरुध्येत कौमुद्यामयमन्वयक्रमः। अजाद्यतो वाच्यम्। यत् स्त्रीत्वम्। ननु स्त्रीत्वमेव वाच्यमिति किम्। लिङ्गं प्रातिपदिकार्थ इति वाच्यम्। यल्लिङ्गमित्युक्ते स्त्र्याद्यन्यतममेव स्यादित्यत आह । तत्र द्योत्य इति वाच्ये स्त्रीत्वे विवक्षिते सतीत्यर्थः । स्त्रीवाचकत्वेन विवक्षित इति भाव इति। तस्मान्न पञ्चमीपक्षो युज्यते तत्रैवंविधार्थालाभात्। ननु अतष्टाबित्यनेनैव अजादीनां टापि सिद्धे किमजादिग्रहणेन इति चेत् नियमार्थम्। कोऽसौ नियमः अदन्ताङ्गस्य टापि अजादीनामेवेति तेन अजादिभिन्नादन्तस्य टाप् नैव भवेदिति चेन्मैवम्। अतो ग्रहणवैयर्थ्यात्। अजादेष्टाबिति सूत्रित एव अदन्तानां टापो भावात् अजादिरेव टाप्संभवाच्च नियमार्थमजादिमित्युक्तिरयुक्ता। किन्तु विध्यर्थमेव। नन्वेवमत इत्यनेनैव अजादेष्टाब्विधिसम्भवादजादिग्रहणं व्यर्थमित्यत आह अजाद्युक्तिर्ङीषो ङीपश्चबाधनायेति। अयं भावः अजादिग्रहणान्नियमार्थमेव। कोऽसौ नियमः? अजादेष्टाबेव स्यादिति अतोम् । इदमो म इत्यादौ यथा अमोम्विधानम्मस्य मविधानञ्च स्वमोर्लुग्बाधनार्थं त्यदाद्यत्वबाधनार्थं चेत्युक्तं तदेव। सिद्धे सत्यारंभो हि नियमः। विपरीतनियमस्तु प्रागुक्तो न शङ्क्यः। अतो ग्रहणवैयर्थ्यात् ज्ञापकात्। अजादिभिस्स्त्रीत्वस्य विशेषणात् अजादीनां स्त्रीवचाकत्वे विवक्षिते सतीत्यर्थवचनादित्यर्थः । नेह पञ्चाजी–पञ्चानामजानां समाहार इति अजशब्दस्य स्त्रीत्वं न विवक्षितं किन्तु पुंस्त्वमेव । स्त्रीत्वन्तु समाहारस्यैवेति न टाप्। ननु टाबन्तेनैव अजाशब्देन पञ्चन् शब्दस्य समासे पञ्चानामजानां समाहारः पञ्चाजा इत्येव स्यात्। अजशब्दस्य स्त्रीवाचकत्वादिति चेन्मैवम्। समाहारे तस्योपसर्जनत्वेन गोस्त्रियोरिति ह्रस्वात्। पञ्चाजशब्दस्य एव न तु पञ्चाजा शब्द इति समाहारे ङिबेव न वा समाहारे ङीप्रत्यये कर्तव्ये अजशब्दस्य स्त्रीत्वं विवक्षितं येन पुनष्टाबुत्पद्येत। किन्तु पञ्चाजशब्दस्य समाहारे स्त्रीत्वं विवक्षितमिति द्विगोरिति ङीप् स्यादिति। वस्तुतस्तु अजादिग्रहणस्य मुख्ये चरितार्थत्वान्न गौणे सामर्थ्यमिति पञ्चाजीत्यत्र अजादित्व (प्रयुक्तष्टाप् नैव भवेत्) न च अत्यजा निरजा इति न सिद्ध्येदिति वाच्यम्। अदन्तत्वेन तत्र टाप्संभवात्। न च तथैव पञ्चाजीत्यत्रापि अदन्तत्वप्रयुक्तः टाप्स्यादिति वाच्यम्। द्विगोरिति ङीपा टापो बाधात्।

**सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्'** (वा १४९६) सत्पुष्पा । प्रक्पुष्पा । प्रत्यक्पुष्पा । **'शूद्रा चामहत्पूर्वा जातिः'** (वा २४००–२४०१) पुंयोगे तु शूद्री । 'अमहत्पूर्वा ' किम्–महाशूद्री । क्रुञ्चा । उष्णिहा । देवविशा । ज्येष्ठा, कनिष्ठा, मध्यमेति पुंयोगेऽपि । कोकिला जातावपि । **'मूलान्नञः'** (वा २५००) । अमूला । 'ऋन्नेभ्यो ङीप् (सू ३०६) कर्त्री । दण्डिनी ।

---

3. ''सदच् काण्डप्रान्तशतैकेभ्यः पुष्पात्'' एतेभ्यः परस्मात्पुष्पशब्दात् स्त्रियां टाप् स्यात्। अञ्चेर्नलोपेन विन्यासः अच् इति। स्त्रीप्रत्ययेषु तदन्तविधेरभ्युपगमात्। प्रत्यक्पुष्पा । प्रतिपूर्वादञ्चेः क्विन्नन्तत्वेन न कुत्वमनिदितामिति नलोपात्पश्चात् एकमेव प्राक्पुष्पा इत्यपि अस्यापि वार्तिकस्य सदादिपूर्वस्य पुष्पशब्दस्य वाच्यं यत् स्त्रीत्वं तत्र द्योत्ये टाप् स्यादित्येवार्थो वाच्यः। अन्यथा अजादिसूत्र इव पञ्चमीपक्षे दोषदर्शनात्। अदन्तत्वेनैव सिद्धे संभस्त्राजिनेति सदच्काण्डेति च वार्तिकद्वयनियमार्थम्। अदन्तत्वप्रयुक्तष्टाप् यदि पुष्पशब्दात् स्यात्तर्हि सदच्काण्डादिपूर्वादेवेति, यदि फलशब्दाद्भवति तर्हि संभस्त्रादि पूर्वादेवेति च। तेनेह न दुष्पली द्विपुष्पी लता ।

4. शूद्रा चामहत्पूर्वा जातिः । शूद्रा च अमहत्पूर्वा जातिः। जातिर्वाच्या चेच्छूद्रशब्दष्टापमुत्पादयति स्त्रियां न तु महत्पूर्वा इति यद्यर्थस्तर्हि सूत्रे शूद्रा इति न सिद्ध्यति । न च अमहत्पूर्वेत्यत्र नञो न पर्युदासोर्थः। तेन महच्छब्दभिन्नशब्दपूर्वा इति नैवार्थः। तस्मात्केवलशूद्रशब्दादपि टाप्स्यादिति न दोष इति चेत्तर्हि महती च सा शूद्रा च महाशूद्रा इति न सिद्ध्येत्। शूद्रशब्दस्यात्र सत्यपि जातिवाचकत्वे सत्यपि स्त्रीत्वे महत्पूर्वकत्वेन टाबनुत्पत्तिप्रसङ्गात् । यदि तु शूद्रा जातिः इत्येतावदेव सूत्रमुच्येत तर्हि तदन्तविधिना महाशूद्रा इत्यस्य सिद्धावपि महाशूद्री इति न सिद्ध्येत्। अस्ति हि आभीरी तु महाशूद्री इति नैघंटुकं पदम्। यदि तु शूद्रेत्यावर्त्य शूद्रशब्दष्टापं लभते शूद्राजातिर्वाच्या चेदित्यर्थः। तर्हि महाशूद्रीत्यत्र न शूद्रजातिर्वाच्या। किन्तु आभीरत्वापरपर्यायमहाशूद्रत्वजातिरेवेति न दोषः। शूद्रेत्यावृत्तिं विनापि महाशूद्रीति सिद्ध्यत्येव। महाशूद्रशब्दगतशूद्रशब्दस्य जातिवाचकत्वाभावान्महत्समवेतशूद्रशब्दस्य हि आभीरत्वजातिवाचकत्वं महती च सा शूद्रा महाशूद्रा इत्यत्र तु शूद्रशब्दस्य जातिवाचकत्वमस्त्येवेति टाप्स्यादेव। तस्माच्छूद्रा जातिरिति न्यासस्सुवच एव। तत्तथाऽस्ताम्। प्रकृते यथास्थितसूत्रमते महाशूद्रा इति न सिद्ध्यति, अमहत्पूर्वा इति निषेधात् इति चेत्तर्हि योगविभागेन सूत्रं व्याख्येयम्। तथा हि–शूद्रा च अमहत्पूर्वाजातिरिति श्रूद्राचेति सूत्रे जातिरित्यपकृष्यते । शूद्रशब्दष्टापं लभते जातिर्वाच्या चेदित्यर्थः। एतेन शूद्रा इति

तदन्तविधिना महाशूद्रा अशूद्रा परमशूद्रा इत्यादयश्च सिद्ध्यन्ति। अमहत्पूर्वाजातिः। अत्र शूद्रेत्यनुवर्तते महच्छब्दपूर्वश्शूद्रशब्दः जातिर्वाच्या चेत् टाप न लभते। एतेन महाशूद्री इति सिद्ध्यति । महच्छब्दसमवेते शूद्रशब्दे या जातिश्श्रूयते तज्जातिवाचकत्वे महत्पूर्वशूद्रशब्दमहत्पूर्वष्टापं न लभत इत्यर्थात् जातिवाचकशूद्रशब्दष्टापं लभत इति जातिवाचकशूद्रशब्दष्टापं न लभत इति च उभयोर्निष्कृष्टोऽर्थः । अजाद्यत इति अदन्तत्वादेव शूद्रशब्दस्य टापि सिद्धे नियमार्थं शूद्रा चेति सूत्रम्। कोऽसौ नियमः? शूद्रशब्दस्य यद्यदन्तत्वप्रयुक्तष्टाप् स्यात्तर्हि जातिवाचकस्यैवेति तेन पुंयोगे ङीष्। शूद्रस्य स्त्री शूद्री इति। यद्वा जातेरस्त्रीविषयादिति जातिवाचकत्वे शूद्रशब्दस्य ङीषि प्राप्ते तद्बाधनार्थं शूद्राचेति । तेन जातिविषय एव ङीषो बाधनात् पुंयोगे ङीषेव स्यादिति शूद्रीति सिद्ध्यतीति । नन्वेवं योगविभागेऽपि अमहत्पूर्वेति व्यर्थम्। जातिवाचको यश्शूद्रशब्दस्तदन्तस्य टाप्स्यादिति शूद्राचेत्येतावतैव महाशूद्रेति सिद्ध्यति। जातिवाचको यश्शूद्रशब्दान्तो महाशूद्रशब्दस्तस्य अजाद्यतष्टापि प्राप्ते तं बाधित्वा जातेरस्त्रीविषयादिति ङीष्। तं बाधित्वा तु शूद्राचेति टाप् न प्रवर्तते। शूद्रशब्दान्तस्य जातिवाचकत्वेन महाशूद्रीत्यत्र शूद्रशब्दस्य जातिवाचकत्वाभावात्। तस्मात् महाशूद्रशब्दस्य जातिवाचकस्य टाप्निषेधो व्यर्थ एव इति चेत्सत्यमेव । स्थितस्य गतिश्चिन्तनीयेति न्यायेन समाधेयमिति। अयमत्र पूर्वपक्षसङ्ग्रहः। अदन्तत्वेन शूद्रशब्दस्य टापि सिद्धे शूद्रा चेति व्यर्थम्। यदि तु जातिवाचकत्वे ङीष् स्यादिति तद्बाधनाय शूद्राजातिरिति , तर्हि अमहत्पूर्वेति व्यर्थम्। यदि तु तदन्तविधिना जातिवाचकशूद्रशब्दान्तष्टापं लभत इति महत्पूर्वकशूद्रशब्दस्य टापि प्राप्ते तन्निषेधः फलमिति तर्हि महाशूद्रेति न सिद्ध्येत्। यदि तु तत्सिद्ध्यर्थं जातिवाचको यश्शूद्रशब्दान्तष्टापं लभत इत्युच्येत तर्हि महाशूद्री इति अशूद्रा इति च न सिद्ध्येत्। यदि तु योगविभागेन जातिवाचकशब्दस्तदन्तश्च टापं लभत इत्यर्थस्तर्हि जातिवाचको यश्शूद्रशब्दस्तदन्तस्य महाशूद्रा शूद्रादेष्टाप् स्यादिति महाशूद्रा अशूद्रा इति सिद्ध्यति। तथाऽपि जातिवाचको यश्शूद्रशब्दान्तस्स टापं न लभत एवेति अमहत्पूर्वेति सूत्रं व्यर्थम्। तस्मात् अमहत्पूर्वा किम् ? महाशूद्री इति कौमुदी न संगच्छत एवेति । उत्तरस्तु जातिवाचको यो महत्पूर्वशूद्रशब्दः (महाशूद्रशब्द इति यावत्) स टापं न लभत इति किमिति (अरारे गुणवृद्धी इति भाष्यात् ऋवर्णस्थाने गुणोऽर् शर् वन् वन्नन्तस्य ङीप् रश्च शर्वरी इति ।) अमहत्पूर्वा किमिति प्रश्नस्यार्थः इति कौमुदी संगमनीयेति जातिवाचको यो महत्पूर्वश्च शूद्रशब्दस्स टापं न लभत इति किमिति तु तत्प्रश्नस्य अर्थो न वाच्यः महाशूद्री इत्युत्तरस्य अनन्वयात् । न हि महाशूद्रीशब्दगतः शूद्रशब्दो जातिवाचकः। येन टापं न लभत इति वक्तुम् । तथाविधस्तु महाशूद्रा इति भवत्येवेति। वस्तुतस्तु शूद्राजातिः इति न्यासस्सिद्धान्तः ।

४५५ **उगितश्च** । ।४।१।६। उगिदन्तात्प्रातिपदिकात्स्त्रियां ङीप्स्यात् । भवती । पचन्ती । दीव्यन्ती 'शप्श्यनोः–' (सू ४४६) इति नुम् । 'उगिदचाम्–' (सू ३६१) इति सूत्रेऽञ्ग्रहणेन 'धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेव ' इति नियम्यते । तेनेह न । उखास्रत् क्विप् । अनिदिताम्–' (सू ४१५) इति नलोपः । पर्णध्वत् । अञ्चतेस्तु स्यादेव –प्राची, प्रतीची । ४५६ **वनो र च** । ।४।१।७। वन्नन्तात्तदन्ताच्च प्रातितपदिकात्स्त्रियां ङीप्स्यात्, रश्चान्तादेशः । वन्निति ङ्वनिप्क्वनिब्वनिपां सामान्यग्रहणम् । ' **प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्'** (प २४) । तेन प्रातिपदिक–विशेषणात्तदन्तान्तमपि लभ्यते । सुत्वानमतिक्रान्ता, अतिसुत्वरी । अतिधीवरी । शर्वरी ।

---

5. उगितश्च ङ्याप्प्रातिपदिकादितिप्रातिपदिकाधिकारः तेन उगितश्चेति तस्य विशेषणम्। येन विधिरिति तदन्तविधिः । न च समासप्रत्ययविधौ प्रतिषेध इति वाच्यम्। उगिद्वर्णग्रहणवर्जमिति प्रतिषेधनिषेधात् ।

6. वनो र च–वनः र च इति लुप्तप्रथमाकम्। चकारस्सन्नियोगशिष्टत्वज्ञापनार्थम्। वन इति प्रत्ययग्रहणेन तदन्तग्रहणमिति तदन्तविधिः। तस्य च वन्नन्तस्य पदस्य प्रातिपदिकविशेषणाद्येन विधिरिति तदन्तविधिः । तेन वन्नन्तान्तादित्यपि चार्थः। वन्नन्तात्प्रातिपदिकात् वन्नन्तान्ताच्च प्रातिपदिकात् स्त्रियां ङीप् स्यात् । ऋन्नेभ्य इति सूत्रात् ङीप् इत्यनुवर्त्यते, रश्च स्यात् । अलोन्त्यस्येत्यन्त्यस्य स्यात् । निरनुबन्धकग्रहणे सर्वानुबन्धकग्रहणमिति वन्नित्यनेन ङ्वनिप् क्वनिन् वनिपां ग्रहणम्। वन्नन्तत्वात्प्रातिपदिकादित्यर्थलाभः। वन इत्यस्य कथमित्यत आह। प्रत्ययग्रहणं इत्यादि अयं भावः। यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गमिति सूत्रे योगविभागात्प्रत्ययग्रहणपरिभाषोपस्थिता। विवृतञ्चेदं मयाऽत्रैव ग्रन्थे स्त्रीलिङ्गेषु । तेन वन इति प्रत्ययग्रहणे तदन्तग्रहणम्। वन्नन्तमिति तस्य वन्नन्तमित्यस्य प्रातिपदिकविशेषणाद्येन विधिरिति तदन्तविधिः तेन वन्नन्तान्तात्प्रातिपदिकादिति चार्थ इति। नन्वस्मिन्पक्षे वन्नन्तान्तप्रातिपदिकादेव ङीप् स्यात् न तु वन्नन्तात् इति चेन्नैवम्। येन विधिरित्यत्र स्वस्य च रूपस्येति उक्तत्वात्।

7. सुत्वानम्–सुयजोर्ङ्वनिप् इति षुञ् अभिषव इति धातोः ङ्वनिप् ङपावित्संज्ञौ इकार उच्चारणार्थः । धात्वादेवः षस्स इति सत्वम्। सु वन् ह्रस्वस्य पिति कृति तुक् । सुत्वन् । अम् सर्वनामस्थाने चेति नोपधादीर्घः सुत्वानम्। तमतिक्रान्ता अतिसुत्वरी । सुत्वन्निति वन्नन्तम् अतिसुत्वन्निति वन्नन्तान्तं प्रातिपदिकम्। तस्मात् ङीप् रश्च अतिसुत्वरी इति ङ्वनिबन्तान्तस्य उदाहरणम्। क्वनिबन्तान्तस्य तु अतिधीवरी इति

**' वनो न हश इति वक्तव्यम् '** (वा २४०५) हशन्ताद्धातोर्विहितो यो वन् तदन्तात्तदन्तान्ताच्च प्रातिपदिकान्ङीप् रश्च नेत्यर्थः । 'ओणृ अपनयने' विड्वनोः-' (सू २९८२) इत्यात्त्वम् । अवावा ब्राह्मणी। राजयुध्वा। बहुव्रीहौ (वा २४०७)। बहुधीवरी । बहुधीवा । पक्षे डाब्वक्ष्यते । ४५७ **पादोऽन्यतरस्याम्** । ।४।१।८। पाच्छब्दः कृतसमासान्तस्तदन्तात्प्रातिपदिकाद् ङीब्वा स्यात् । द्विपदी, द्विपाद् ।

---

वनिबन्तस्य शर्वरी इति श्रृधातोः वनिप् श्रृवन्निति स्थिते वनिपः धातोरिति विहितत्वेन आर्धधातुकत्वात्पुगन्तेति गुणः। न च ॠृत इद्धातोरिति इत्वं शङ्क्यम्। वनिबन्तस्य ॠृदन्तधातुत्वाभावात्। अरारे गुणवृद्धी इति भाष्यात् ॠवर्णस्थाने गुणोऽअर् शर् वन् वन्नन्तस्य ङीप् रश्च शर्वरी इति।

8. अवावा-ओणृ अपनयन इति धातोर्वनिप् । ओण् वन् विड्वनोरनुनासिकस्स्यात् इति वनि परतः अनुनासिकान्तस्य आकारोऽन्तादेशः ओ आवन् । एचोऽयवायावः अवावन् । वनो न हश इति हशन्तत्वादोणः तस्माद्विहिते वनिपि वन्नन्तत्वेऽपि न ङीप् रत्वे, अन्नन्तत्वेऽप्यबहुव्रीहित्वान्न डाबुभाभ्यामिति डाप् अदन्तत्वाभावादजाद्यत इति न टाप् । अजातित्वाज्जातेरस्त्रीति न ङीष् । प्रयोगाभावात् पुंयोगादाख्यायामित्यपि न ङीष् । वनो न हश इति निषेधात् ॠन्नेभ्य इति च न ङीप् । तस्मात्स्त्रियां न कोऽपि प्रत्ययो विधीयते । किन्तु अवावन् सु इति स्थिते, सर्वनामस्थाने चेति नोपधादीर्घः । हल्ङ्यादिलोपः नलोपश्च । अवावा अवावानौ अवावानः इति पुंसीव स्त्रियामपि रूपाणि। अत एव स्त्रीत्वद्योतनार्थं ब्राह्मणी इति विशेष्यपदं विहितं कौमुद्याम्। एवमेव राजयुध्वा राजुयुध्वानौ राजयुध्वान इति स्त्रियामपि ।

9. बहुव्रीहौ वा-वनोरचेति नित्यतया ङीप्रत्वयोः प्राप्तयोर्विकल्पार्थमिदम्। बहवो धीवानो यस्यां सा बहुधीवरी। नगरी ध्याप्योस्सम्प्रसारणं चेत्यौणादिकोऽयं धीवन्शब्दः धीवानः कर्मकराः। न च 'अन उपधालोपिन ' इति बहुधीव्नीत्यपि स्यात् बहुराज्ञीवदिति वाच्यम्। वनोरचेति ङीब्रत्वयोस्सन्नियोगशिष्टत्वेन रत्वे कृते अन्नन्तत्वाभावात्।

10. पादोन्यतरस्याम्। पादशब्दस्य सङ्ख्यासुपूर्वस्येति बहुव्रीहौ सङ्ख्यासुपूर्वत्वे अन्तलोपे सति द्विपात् सुपात् इति भवति रूपम् । न तु केवलः पादशब्दः पादिति भवतीति कृत्वा इदमेव पाद्ग्रहणम् तदन्तं लक्षयति "पादः पदि'ति सूत्र इव । इदमेव पाच्छब्दः कृतसमासान्तस्तदन्तादिति कौमुद्याम्। समासान्तकार्यं चात्र अन्तलोप इति बोध्यम् । पाच्छब्दान्तस्य स्त्रियां ङीप् वा स्यादिति अप्राप्तविभाषेयम्। द्विपात् ई । पादः पत् द्विपदी । ङीपोभावे भत्वाभावात् द्विपात्। पाद इति किम्। अपादा । अकृत-समासान्तान्तलोपकार्यस्य पादशब्दस्य अदन्तत्वेन टाबुत्पत्तेः ।

४५८ **टाबृचि** ।४।१।९ ऋचि वाच्यायां पादन्ताट्टाप् स्यात् । द्विपदा ऋक् । एकपदा । 'न षट्स्वस्रादिभ्यः' (सू ३०८) पञ्च चतस्रः । 'पञ्च' इत्यत्र नलोपे कृतेऽपि ष्णान्ता षट्' (सू ३६९) इति षट्संज्ञां प्रति नलोपः सुप्स्वर–' (सू ३५३) इति नलोपस्यासिद्धत्वाद् 'न षट्स्वस्रादिभ्यः' (सू ३०८) इति न टाप् । ४५९ **मनः** । ।४।१।११। मन्नन्तान्न ङीप् । सीमा, सीमानौ ।४६० **अनो बहुव्रीहेः** । ४।१।१२। अन्नन्ताद्बहुव्रीहेर्न ङीप् । बहुयज्वा, बहुयज्वानौ । ४६१ **डाबुभाभ्यामन्यतरस्याम्** । ४।१।१३। सूत्रद्वयोपात्ताभ्यां डाब्वा स्यात् । सीमा, सीमे, सीमानौ । दामा, दामे, दामानौ । 'न पुंसि दाम ' इत्यमरः । बहुयज्वा, बहुयज्वे, बहुयज्वानौ । ४६२ **अन उपधालोपिनोऽन्यतरस्याम्** । ।४।१।२८। अन्नन्ताद्बहुव्रीहेरुपधालोपिनो वा ङीप्स्यात् । पक्षे डाब्ङीब्निषेधौ । बहुराज्ञी, बहुराजा । बहुराज्ञ्यौ, बहुराजे, बहुराजानौ ।

---

11. टाबृचि अत्र पूर्वसूत्रात्पाद इत्यनुवर्त्यते । स्त्रियामित्यधिकारः । पादन्ताट्टाप् स्यात् ऋचि वाच्यायाम् । ऋक् मन्त्रः । पादन्तशब्दो ऋचमभिधत्ते यदि टाप् स्यादित्यर्थः । द्विपदा । टापि भत्वात्पादः पदादेशः।

12. पञ्च चतस्रः– अत्र पञ्चन् जस् षड्भ्यो लुक् । "नलोपः प्रातिपदिकान्तस्य" पञ्च । अधुना अदन्तत्वाट्टापि प्राप्ते "न षट् स्वस्रादिभ्य" इति निषेधः । न चात्र टाप् दृष्टया नलोपस्य असिद्धत्वेन अदन्तत्वाभावान्न टाप् । किन्तु ऋन्नेभ्य इति नान्तलक्षणो ङीबेव प्राप्नोतीति वाच्यम् । नलोपस्सुप्स्वरेति नियमेन टाब्विधौ नलोपस्य सिद्धत्वात् । षट् संज्ञां प्रति तु नलोपोऽसिद्ध एव । नलोपस्सुप्स्वरसंज्ञेति संज्ञाविधावसिद्धत्वस्य नियमितत्वात् चतस्र इत्यत्र तु चतसृ जस् इति स्थिते, ऋन्नेभ्यो ङीपिति ऋदन्तलक्षणो ङीप् प्राप्तः, स्वस्रादित्वेन न षट् स्वस्रादिभ्य इति निषिद्ध इति बोध्यम्।

13. मनः 'नान्तत्वेन ऋन्नेभ्य इति ङीपि प्राप्ते निषेधार्थमिदम्'। सीमा नामन् सीमन् व्योमन् रोमन् लोमन् पाप्मन् ध्यायन् सप्त अमी उणादिषु निपातिताः। सिनोतेर्दीर्घो मनिन् प्रत्ययश्च निपातनात्। सीमन् सु ङीपोऽभावेन डाबभावपक्षे नोपधादीर्घः। सीमा।

14. बहुयज्वा यजधातोर्हशन्तत्वान्नावनो र च नोपधादीर्घसुलोपनलोपाः। डाप् पक्षे तु बहुयज्वन् डाप् डित्वाट्टिलोपः । बहुयज्वा । सौ रूपद्वयस्य तुल्यत्वेऽपि औङादिषु नान्तकार्याबन्तकार्ययोर्भेदात् रूपाणां भेदः । बहुयज्वानौ बहुयज्वे इत्यादि।

15. अन उपधालोपिनोऽन्यतरस्याम् । अनो बहुव्रीहेरित्यतो बहुव्रीहेरिति ऋन्नेभ्य इत्यतो ङीबिति च संबध्यते, अन इति बहुव्रीहेर्विशेषणम्। तेन तदन्तविधिः । तदेतदाह – अन्नन्तादित्यादिना । ननु ङीपि कृते भत्वादल्लोपो न इत्युपधालोपो भवति । उपधालोपे सत्येव ङीप् स्यादिति अन्योन्याश्रयदोषः इति चेन्मैवम् । उपधालोपिन इत्यस्य

४६३ **प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः** ।७।३।४४। प्रत्ययस्थात्ककारात्पूर्वस्याकारस्येकारः स्यादापि परे, स आप् सुपः परोः न चेत् । सर्विका । कारिका । अतः किम्–नौका । प्रत्ययस्थात् किम्–शक्नोतीति शका । असुपः किम् । बहुपरिव्राजका नगरी । कात् किम्–नन्दना । पूर्वस्य किम्–परस्य मा भूत् । कटुका । अत इति तपरः किम्–राका । आपि किम् कारक ।

---

उपधालोपप्राप्तियोग्यस्येत्यर्थात् । न च तथाऽपि ङीपि कृत एव उपधालोपप्राप्तियोग्यत्वमिति वाच्यम् । भत्वे सत्युपधालोपप्राप्तियोग्यस्येत्यर्थात् । यद्वा ङीपि कृते यस्योपधालोपो भविष्यति तस्यान्नन्तस्य ङीप् स्यादित्यिर्थात् नान्योन्याश्रयः । उपधालोपिन इति किम् ? बहुयज्वा । न संयेगाद्वमन्तादिति उपधालोपनिषेधात् अल्लोपप्राप्तियोग्यत्वं नास्त्यत्रेति न ङीप् । बहुराज्ञीत्यत्र ङीप्, स्त्रीप्रत्ययाभावेऽपि डाप्प्रत्ययेऽपि, बहुराजा बहुराजानौ इति स्त्रीप्रत्ययाभावे (ङीप् निषेध इति यावत्) बहुराजे इति डाप्प्रत्यये। अत्रायं क्रमः। बहुराजन्नित्यत्र नान्तत्वेन ऋन्नेभ्य इति ङीप् प्राप्तः । अनो बहुव्रीहेरिति निषिद्धः । डाबुभाभ्यामिति पक्षे डाप् । अन उपधालोपिन इति डापं बाधित्वा पक्षे ङीप् इति तेन ङीप् पक्ष एकः। ङीबभावपक्षे डाप्पक्ष एकः । डाबभावपक्ष एकः इति पक्षत्रयमत्र प्राप्तम् । इदमेव भङ्ग्यन्तरेणाह ङीप्पक्षे डाप् ङीप् निषेधाविति । युज्यते चेदं प्रथमतो ङीप् निषेधः । पश्चात् डापो वैकल्पिकत्वेन डाबागमः । डापं बाधित्वा पक्षे ङीप् इति ।

16. प्रत्ययास्थात्कात्पूर्वस्यात इदाप्यसुपः, पूर्वस्य अतः इति छेदः । प्रत्ययस्थात्कादापि परतः पूर्वस्य अकारस्य इकारस्स्यात् । न तु सुपः । सुप इति पञ्चमी। सुप आपि परतः कात्पूर्वस्यात इन्नेति । नन्वत्रासुप इति निषेधो व्यर्थः। कादापि परतः पूर्वस्येत्वविधानेन सुप अपि परतः पूर्वस्य अत इत्वप्राप्त्यभावात् इति चेन्मैवम् । बहुपरिव्राजिका नगरीत्यत्र आपः कात्परत्वम्, बहुव्रीहौ सुपो लुप्यपि उत्तरपदस्य प्रत्ययलक्षणेन सुबन्तत्वात्सुप्परकत्वञ्च वर्तत इति कादापि परतः पूर्वस्येत्वं स्यादित्यत्र इत्वप्राप्तिसद्धावादिति । नचक् इति व्यंजनादापि परत इत्यर्थो विवक्षितः । तथा च प्रकृते बहुपरिव्राजकशब्दादाप् पर इति नेत्वप्रसक्तिरिति वाच्यम्। व्यञ्जनमात्रस्याप्परकत्वमसंभवीति कारिकेत्याद्यसिध्देश्च। न चैवं सर्विकेति रूपासिध्दिरिति वाच्यम् (सर्वशब्दस्य टिना सह) अकच्प्रत्यये कृतेऽपि सर्वकशब्दस्य अदन्तत्वात् टाप् स्यादिति । अकच्प्रत्यये अकार उच्चारणार्थः । अक् इत्येव शिष्यत इति हेतोः प्रश्नोपपत्तिरिति वेद्यम् । न चैवं अकारसहितस्य ककारस्य प्रत्ययस्थत्वे

विवक्षिते अकच्ककारस्य अतथात्वात्सर्विकेति रूपं पुनरपि न सिद्ध्यतीति वाच्यम् । प्रत्ययस्थत्वविषये तावत् क् इति व्यञ्जनमेव विवक्षितम् । अप्परकत्वे तु असंभवात्मक इति विवक्षितमिति भेदात्। वस्तुतस्तु व्यञ्जनमात्रविवक्षयैवालम्। टापा सह सवर्णदीर्घे एकादेशस्य परादिवद्भावेन व्यञ्जनस्यापि आप्परकत्वसम्भवात् । व्यञ्जनादापो विहितत्वम्मास्तु । एवंरीत्या परकत्वे, न कोऽपि बाध इति । न चैवं पुत्रकाम्या रधकट्या इत्यादौ ककारस्य काम्यजादिप्रत्ययस्थत्वादाप्परकत्वाच्च पूर्वस्याकारस्य इत्स्यादिति पुत्रिकाम्या इत्याद्यनिष्टरूपापत्तिरिति वाच्यम् । तस्मादित्युत्तरस्येत्यव्यवहितपरत्वस्वीकारात् । नन्वेवं तस्मादित्युत्तरस्येति परिभाषापरस्य कार्यकरणविषये अव्यवहितपरत्वं बोधयति न त्वन्यत्रेति प्रकृते परस्य न किञ्चित्कार्यम् । किन्तु पूर्वस्यैवेति नात्र तत्परिभाषोपस्थितिरिति चेत्तर्हि आपः कात्परत्वं मास्तु । किन्तु अतः परत्वमेव । प्रत्ययस्थकपूर्वस्य अत इत्स्यादापि परत इत्यर्थः । न चैवमपि पुत्रकाम्येत्यादौ व्यवहितेऽपि पूर्वत्वानपायात् दोषस्स्यादिति वाच्यम् । इको यणचि इत्यादाविव आत इदापि इत्यत्रापि तस्मिन्निति निर्दिष्टे पूर्वस्य इति परिभाषोपस्थित्या आपि परतः पुत्रकाम्येत्यत्र ककारपूर्वस्याकारस्य अव्यवहितपूर्वत्वं नास्तीति नेत्वमिति । न च सर्विकेत्यादावपि आबपेक्षया अव्यवहितपूर्वत्वमतो नेति नेत्वं स्यादिति वाच्यम् । वचनसामर्थ्यादेव ककाराकाराभ्यां व्यवधानस्य स्वीकर्तव्यत्वात् । तथाहि आपो यदव्यवहितपूर्वन्तन्न कात्पूर्वं स्यात्। यत्कात्पूर्वं तन्नापोऽव्यवहितपूर्वं स्यादिति । एकस्मिन्नवर्णे कात्पूर्वत्वमापोऽव्यवहितपूर्वत्वञ्च असंभवीति लक्षणमसंभवरूपदोषग्रस्तमित्यत एव अदापोर्मध्ये क व्यवधानम् । सूत्रगौरवात्परिभाषाङ्गीकरोतीति। नन्वेवं कात्पूर्वस्येत्युक्तत्वात्ककारेण व्यवधानं स्वीकर्तव्यं भवतु नाम । कथमकारेणापि व्यवधानमिति चेत् उच्यते । न हि ककारान्ताच्छब्दादाबुत्पद्यते । किन्तु अदन्तादेवेति तस्मादापि परत इत्युक्तचैव अकारेण व्यवधानं सिद्धमिति तदपि स्वीकर्तव्यमेवेति सवर्णदीर्घे कृते एकादेशस्य परादिवद्भावेन तु अकारेण व्यवधानमेव नाप इति नैव दोषप्रसक्तिरिति । ननु कादापि परत इति पूर्वस्मिन्नप्यर्थे तस्मिन्निर्दिष्टे पूर्वस्येति निर्दिष्टपरिभाषया दर्शितरीत्या पुत्रकाम्येत्यत्र नेत्वमिति चेत्तत्त्वबोधिन्यामयमंशो विचारित इति मया तावदुपरम्यते । न च आपि परतः अव्यवहितपूर्वस्य ककारोपरि अकारस्य इत्वं किमिति न स्यादिति वाच्यम् । कात्पूर्वस्यात इत्युक्तत्वात् । इदमेव वक्ष्यति पूर्वस्य किम् परस्य माभूदिति । किञ्च पूर्वस्येत्यस्याभावे उभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति कादव्यवहितस्य परस्य अत एव इत्स्यादापीत्यर्थात्। रधकट्चेत्यादावपि ककारोपरि अकारस्य इत्स्यात् । न च पुत्रकाम्येत्यत्रापि ककारोपर्यवर्णस्य इत्वं स्यादिति शङ्क्यम् अत इति तपरकरणात् । न च कात् आपि परतः पूर्वस्य अत इत्स्यादित्यर्थात्पूर्वस्येति पदसद्भावेऽपि ककारात्परस्य आपः पूर्वस्य अत इत्स्यादिति वाच्यम् । आपीति सप्तम्यैव पूर्वस्येति लाभात् । न च निर्दिष्टपरिभाषया

अव्यवहितपूर्वस्य लाभेऽपि व्यवहितपूर्वस्याप्यत इत्वार्थं पूर्वस्येति ग्रहणमिति वाच्यम् । कादिति पञ्चम्या अव्यवहितोत्तरस्य लाभेन तस्यैव आब्दृष्ट्या व्यवहितपूर्वत्वादेवमपि पूर्वस्येति व्यर्थत्वात् । तस्मात् पूर्वस्येति निर्देशसामर्थ्यादपि कादित्यत्र न पञ्चमीपरिभाषोपतिष्ठते – इत्यनवद्यम् । ननु प्रत्ययस्थात्कादिति (स्थग्रहणेन) किम् प्रत्ययकादित्येवालम् । न च प्रत्ययो यः कः तस्मादित्यर्थस्स्यात् तेन कप्रत्ययादेव सूत्रोक्तकार्यं स्यान्न त्वकजादेरिति वाच्यम् । तथात्वेकप्रत्ययादित्येव सूत्रयितव्यं स्यात् । किन्तु प्रत्ययस्य क इति प्रत्ययावयवककारादित्यर्थबोधनाय प्रत्ययकादिति सूत्रितमिति न दोषः इति । न च कप्रत्यये प्रत्ययावयवककारो नोपलभ्यते। किन्तु क इति प्रत्यय एवेति वाच्यम् । अकारसहितस्य ककारस्य कप्रत्ययत्वेन ककारस्य प्रत्ययावयवत्वसिद्धेः इति चेत् आपि च असुप इत्यपि व्यर्थम् । न च प्रत्ययलक्षणेनोत्तरपदस्य सुबन्तत्वाद्बहुपरिव्राजकेत्यादावित्वं स्यादिति वाच्यम् । उत्तरपदत्वे चापदादिविधौ प्रतिषेध इति परिव्राजकेत्युत्तरस्य खंडस्य पदत्वे कर्तव्ये प्रत्ययलक्षणन्नेति प्रत्ययलक्षणाभावेन तस्य असुबन्तत्वात्। सत्यप्यसुप इति विशेषणे बहुपरिव्राजकेत्यत्रेत्वापत्तिदोषस्तदवस्थ एवेति। न च वैयर्थ्यादिवात्र प्रत्ययलक्षणमभ्युपगम्यतामिति वाच्यम् । निर्दिष्टपरिभाषया आबपेक्षया अतः अव्यवहितपूर्वत्वे अवश्यस्वीकर्तव्ये कात्पूर्वस्येति वचनसामर्थ्यात् । ककाराकाराभ्यामेव व्यवधानमुररीकृतमिति प्रागेवोक्तं हि। ततश्च प्रत्ययलक्षणेन यदि सुबन्तत्वमानीयते तर्हि सुपा व्यवधानेनैव नेत्वं स्यादिति असुप इत्यनेन प्रत्ययलक्षणमत्राभ्युपेयमिति ज्ञापनमात्रमेव लभ्यते । स्वांशे चारितार्थ्यन्तु न, सुपा व्यवधानाभ्युपगमे इत्वप्राप्तिरेव नास्तीति ज्ञापितेनापि प्रत्ययलक्षणेन असुप इत्यस्य वैयर्थ्यानपगमान्नेदं ज्ञापनं युज्यत इति । ननु स्थानिवद्भावेनेव प्रत्ययलक्षणेन प्रत्ययपरकत्वं यद्यानीयते तर्हि सुपा व्यवधानमत्र भवतु । नैवं दृश्यते। किन्तु प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यादिति कार्यमात्रस्यैवातिदेश इति असुप इत्यस्य स्वांशे चारितार्थ्यमस्त्येवेति चेत्तर्हि अनुपसर्जन एवेदं सूत्रं प्रवर्तते न तूपसर्जन इति ब्रूमः । तेन असुप इति पदं मास्तु । न च अनुपसर्जनादित्यधिकाराज्ज्ञापनात् स्त्रीप्रत्यये तदन्तविधिरस्तीति उपसर्जनेपीदं प्रवर्तत एवेति वाच्यम् । ङीप्टाबादि स्त्रीप्रत्ययविधानेन तदन्तविधिः, न हि प्रत्ययविधिः अयं (प्रत्ययस्थादितीत्वविधिः) किन्तु प्रत्यये परतः पूर्वस्य विधिरिति अजाद्यतष्टाबिति यत्र टाबिति स्त्रीप्रत्ययोऽजादेर्विहितस्तत्र तदन्तविधिना अजाद्यन्तस्यापि टाप् स्यादित्येवंरीत्या टाबादिस्त्रीप्रत्ययो यत्र विधीयते तत्रैव तदन्तविधिरिति । सति तु तदन्तविधौ समासे सुब्लुकि प्रत्ययलक्षणेन सुबन्तत्वे तेन इत्वं स्यादिति परिव्राजकशब्दस्य अदन्तत्वेन यष्टाप् स तदन्तस्य बहुपरिव्राजकशब्दस्य स्यात् । स्त्रीप्रत्ययेषु तदन्तविधेः सत्त्वात् । परिव्राजकशब्दस्य टापि प्रत्ययस्थादितीत्वं

**'मामकनरकयोरुपसंख्यानम्'** (वा ४५२४) मामिका । नरान्कायतीति नरिका । **'त्यक्त्यपोश्च'** (वा ४५२५)। दाक्षिणात्यिका । इहत्यिका

---

यत्स्यात् तत्तु बहुपरिव्राजकशब्दस्य टापि परे न स्यात् । प्रत्ययविधिविषय एव तदन्तविध्यभ्युपगमात् । तस्मात् गौणे वा मुख्ये च तदन्ते वा प्रत्ययस्थादिति न प्रवर्तत एवेति असुप इति व्यर्थमिति प्रश्ननिष्कर्षः । उत्तरस्तु "उत्तरपदलोपेन" इति वक्ष्यमाण वार्तिकेन तदन्ते च प्रत्ययस्थादितीत्वप्रवृत्तेरभ्युपगतत्वात्। यदि तु भस्त्राग्रहणादुपसर्जने प्रवृत्तिर्नेत्यप्यवगम्यते, तथाऽपि तदन्ते वर्तत इति तत्र सुब्लुक् सम्भवात् । असुपः किम् ? बहुपरिव्राजका । भस्त्राग्रहणात् ज्ञापकादुपसर्जने इत्वाप्रवृत्तेः नैवात्र दोष इति चेत्तर्हि देवदत्तका इति प्रत्युदाहरणं स्यात् । अतः असुप इत्यावश्यकमेव । स्थग्रहणं तु चिन्त्यम् । सर्विका । सर्वशब्दादकचि सर्वक टाप् सर्वका इत्वम् । सर्विका कारिका कृञो ण्वुल्, अचो ञ्णितीति वृद्धि रार् "युवोरनाकौ" कारक, अदन्तत्वेन टाप् अत्र कस्य ण्वुल् प्रत्ययस्थत्वात्, आपि परत्वकात्पूर्वस्य इत्वं कारिका । अतः किम्। अवर्णग्रहणेन किमिति प्रश्नः । न च ह्रस्वावर्णग्रहणेन किमिति प्रश्नार्थो वाच्यः । तपरः किमित्युत्तरत्र वक्ष्यमाणत्वात् । वस्तुतस्तु न कर्तव्येयमाशङ्का। तपरः किम् राकेत्यनेनैव नौकेत्यत्र इत्वप्राप्तेर्निषिद्धत्वात् । ह्रस्वाकारस्य स्यादित्यनेनैव दीर्घाकारस्य उकारादेश्च इत्वनिषेधात्। शका। अत्र ककारस्य धात्ववयवत्वात् न पूर्वस्येत्वम् । नन्दना । नन्देर्ल्युट् युवोरनाकाविति यु इत्यस्य अनादेशः । ततष्टाप् । नन्दना । नात्पूर्वत्वादत्रास्य इत्वं नासीदिति । कटुका । कटुरेव कटुकेति स्वार्थे कप् । पूर्वस्येत्यस्याभावे तस्मादित्युत्तरस्येति पञ्चमीपरिभाषोपस्थित्या परस्यास्य इत्वं स्यात् । तेन कटुक्या इति स्यात् । कटुक् इ आ इको यण् कटुक्या । राका कात्पूर्वस्य आत्वादत्र नेत्वम् । कारकः अत्र पुंसि स्त्रीप्रत्ययस्य टापोऽभावेन न कात्पूर्वस्येत्वम् अन्यथा कारिक इति स्यात् ।

17. त्यक्त्यपोश्च इति वार्तिकम् । सुबन्तादापःपरत्वेऽपि कात्पूर्वस्येत्वविधानार्थं , दक्षिणादाजिति सप्तम्याद्यन्ताद्दक्षिणशब्दात् आच् प्रत्ययः । तेन दक्षिणा इति सुबन्तमेव । व्यवहितत्वेऽपि तस्मात्पर एव कात्परत्वेन श्रूयमाणष्टाबिति असुप इति निषेधे प्राप्ते विध्यर्थमिदं त्यग्रहणम् । इदमो ह इति इदं शब्दात्सप्तम्यन्तात् ह इति इहेति सुबन्तमेवेति । ततः परत्वे आपो विध्यर्थ त्यब्ग्रहणम् । अर्थस्तु त्यक्त्यपोरतः कात्पूर्वस्य इत्स्यादापीति प्रत्ययस्थसूत्रे मामकनरकयोरिव त्यक्त्यपोरपि उपसंख्यानं कर्तव्यमित्यर्थः-

४६४ **न यासयोः** । ।७।३।४५। यत्तदरस्येन्न स्यात् । यका । सका । यकाम् । तकाम् । ' **त्यकनश्च निषेधः** ' (वा ४५२६) उपत्यका । अधित्यका । **'आशिषि वुनश्च न'** (वा ४५२८) जीवका । भवका । ' **उत्तरपदलोपे न** ' (वा ४५२९) देवदत्तिका, देवका । ' **क्षिपकादीनां च न** ' (वा ४५३०) क्षिपका । ध्रुवका । कन्यका । चटका । **'तारका ज्योतिषि'** (वा ४५३१) अन्यत्र तारिका । **'वर्णका तान्तवे'** (वा ४५३२) अन्यत्र वर्णिका । ' **वर्तका शकुनौ प्राचाम्** ' (वा ४५३३) उदीचां तु वर्तिका । **'अष्टका पितृदेवत्ये** ' (वा ४५३४) अष्टिकान्या । ' **सूतकापुत्रिकावृन्दारकाणां वेति वक्तव्यम्** ' (वा ४५३५) इह वा अ इति छेदः । कात्पूर्वस्याकारादेशो वेत्यर्थः । तेन पुत्रिकाशब्दे ङीनः इवर्णस्य पक्षेऽकारः । अन्यत्रेत्त्वबाधानार्थमकारस्यैव पक्षेऽकारः । सूतिका, सूतका इत्यादि ।

---

18. न यासयोः । यत्तदोः प्रथमान्तयोरनुकरणशब्दाविमौ या च सा च यासे । तयोः यासयोः । विभक्तिपरकत्वेन जायमानं त्यदाद्यत्वमदन्तत्वेन टापमुत्पाद्य हल्ङयाभ्य इति विभक्तिविघाताय न भवतीति या सा इति टाबन्तरूपयोरसिद्धिप्रसङ्गे तत्परिभाषाया अनित्यतां ज्ञापयित्वा, यासयोरिति निर्देश स्स्वांशे चरितार्थ इति पुरैव प्रतिपादितम्। पूर्वसूत्रात्प्राप्ते अनेन निषेधः। अत्र पूर्वसूत्रं सर्वमनुवर्तते प्रत्ययस्थात्कात्पूर्वस्य यत्तदोरत इन्न स्यादापि परे स आप् सुपः परो न चेदिति सूत्रार्थः। ननु असुप इत्यस्याप्यनुवृत्तौ इन्निषेधस्सुपि न स्यादित्यर्थस्स्यात् तेन सुबन्तादापि परे यत्तदोरत इत्स्यादिति लभ्यते। अतः परमयिका परमसिका इति स्यादिति चेत् तर्हि असुप इत्यनुवृत्तिर्मास्तु। ननु या सा इति प्रथमान्तयोर्यत्तदोस्स्वरूपनिर्देशेन तत्रैवायं निषेधः। तेन द्वितीयादिषु स्यादेव कात्वूर्वस्येत्वमित्याशङ्क्य उपलक्षणमयं यासेति निर्देशात् द्वितीयाद्यन्तयोरपीति समाधानं मनसि कृत्वा रूपान्तरे दर्शयति यकांतकामिति ।

19. सूतका पुत्रिका बृन्दारकाणां वा–एषां कात्पूर्वस्यात इद्वास्यादित्यर्थे पुत्रशब्दात् ङीन् पुत्री तस्मात् कप्रत्ययः पुत्री – क केण इति ह्रस्वः–पुत्रिक टाप् पुत्रिका । अत्र कात्पूर्वस्य इत्वात् नात्वमिति पुत्रिकाग्रहणम्वार्तिकस्याव्याप्तिदोषमुद्धोषयतीत्यत आह। इह वा अ इति छेदः। अ इति लुप्त प्रथमाकम् । एषां कात्पूर्वस्य अलः अत्स्यादित्यर्थः। ननु पुत्रिकाशब्दे इवर्णस्यावर्णविधानेन वार्तिकस्य सार्थक्यमस्तु। सूतकाबृन्दारकयोः कात्पूर्वस्य अत्वेन पुनरत्वविधानं व्यर्थमित्यत आह। इत्वबाधनार्थमिति अकारस्यापि प्रत्ययस्थादिति यदित्वं प्राप्स्यते तस्य बाधनार्थमिति भावः।

४६५ **उदीचामातः स्थाने यक्पूर्वायाः** । ।७।३।४६। यकपूर्वस्य स्त्रीप्रत्ययाकारस्य स्थाने योऽकारस्तस्य कात्पूर्वस्येद्वा स्यादापि परे । केणः (सू ८३४) इति ह्रस्वः । आर्यका, आर्यिका । चटकका, चटकिका । आतः किम्–साङ्काश्ये भवा साङ्काश्यिका । यक इति किम् अश्विका । स्त्रीप्रत्यय इति किम्–शुभं यातीति शुभंया । अज्ञाता शुभंयाः शुभंयिका । **'धात्वन्तयकोस्तु नित्यम्'** (वा ४५३६) सुनयिका । सुपाकिका ।

---

20. उदीचामातःस्थाने यकपूर्वायाः प्रत्ययादित्यनेनैव सिद्धे विकल्पार्थमिदम्। अत एव उदीचां ग्रहणम्। तदभावे तु सिद्धे सत्यारभ्यमाणत्वेन नियमस्स्यात्। तेन आश्विकेत्यादिरूपासिद्धस्स्यादिति वेद्यम्। यकयोरकारउच्चारणार्थः। य् क् च यस्य स्त्रीप्रत्ययाकारस्य पूर्व वर्तते स यकपूर्वाकारः। ननु अत एव इत्वं विधीयताम् किमिति तत्स्थाने योत्तस्येत्वविधानेन इति चेन्मैवम्, केण इति ह्रस्वे आकारस्याभावादित्वं न स्यादिति। ननु परत्वात्केण इति ह्रस्वे प्राप्तेऽपि निरवकाशत्वात्प्रथमत एव आत इत्वमिति चेन्मैवम्। साङ्काश्यिकेति न सिद्ध्चेत्। यकारात्परत्र स्त्रीप्रत्ययाकाराभावात्। ननु प्रत्ययस्थादिति तत्रेत्वमत एव नित्यमन्यथा अनेन सूत्रेण इत्वविकल्पापत्तेः। तस्मात् अत इत्यनुवृत्तिर्मास्तु, स्थाने ग्रहणञ्च मास्तु आत इत्येवालमिति चेत्तदा आत इत्यपि मास्तु आत इत्यनुवृत्त्यैव अभीष्टसिद्धेः। न च आर्यिकेति न सिद्ध्चेत् स्त्रीप्रत्ययाकारस्य श्रूयमाणत्वादिति वाच्यम्। केण इति ह्रस्वे कृते ह्रस्वस्यैव श्रवणात्। न च केण इति विधीयमानह्रस्वस्य अवर्णस्य स्त्रीप्यत्ययत्वं नास्तीति वाच्यम्, स्त्रीप्रत्ययस्यातस्स्थाने जातत्वेन स्थानिवद्भावेन ह्रस्वस्यापि स्त्रीप्रत्ययत्वात्। न चानल्विधाविति निषेधः। अचः परस्मिन्निति पूर्वस्मिन् विधौ स्थानिवद्भावात्। न च साङ्काश्यिकेत्यत्र वुञादेशस्य अकः स्त्रीप्रत्ययत्वेन यपूर्वत्वेन च वैकल्पिकमित्वं स्यादिति वाच्यम्। तत्र शूयमाणस्य अवर्णस्य स्त्रीप्रत्ययावयवत्वेन स्त्रीप्रत्ययत्वाभावात्। तस्मात् उदीचामयकपूर्वाया इति न्यासस्सुवचः। न च उदीचामित्यप्यपनीय न वा इति वक्तव्यं लाघवादिति वाच्यम्। पर्यायेषु अर्थमात्रालाघवमपि पुत्रोत्सवं मन्यन्ते वैयाकरणाः इति परिभाषा नाश्रीयते अन्यतरस्यां ग्रहणादज्ज्ञापकात्।

21. सुनायिका दुन्योरनुपसर्गे इति णीञ् प्रापण इति धातोर्णप्रत्ययः नी अ अचो ञ्णितीति वृद्धिः आयादेशः नायः शोभनो नायो नेता यस्यास्सा सुनाया। ततः केण इति ह्रस्वः सुनायक ततष्टाप् सुनायका अत्र नय् इति नीञः ईकारस्य वृद्धे कृते अभवदिति ईकारो यथा धात्वन्तस्तदादेश ऐकारोऽपि तद्वदेव तदादेश आयपि स्थानिवद्भावेन धात्वन्त एवेति नित्यमेव इत्वम् सुनायिका। तत्त्वबोधिन्यान्तु दुन्योरनुपसर्ग इति उपसर्गे तु नीञः

४६६ **भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणमपि**।।७.३।४७। स्वेत्यन्तं लुप्तषष्ठीकं पदम् । एषामत इद्वा स्यात् । तदन्तविधिनैव सिद्धे नञ्पूर्वाणमपीति स्पष्टार्थम् । भस्त्राग्रहणमुपसर्जनार्थम्, अन्यस्य तूत्तरसूत्रेण सिद्धम् । एषा द्वा एतयोस्तु सपूर्वयोर्नेत्त्वम् । अन्तर्वर्तिनीं विभक्तिमाश्रित्य 'असुपः' इति प्रतिषेधात् । अनेषका। परमैषका। अद्वके। परमद्वके। स्वशब्दग्रहणं संज्ञोपसर्जनार्थम् । इह हि 'आतः स्थाने' इत्यनुवृत्तं स्वशब्दस्यातो विशेषणम् । न तु द्वैषयोसम्भवात् । नाप्यन्येषाम्, अव्यभिचारात् । स्वशब्दस्त्वनुपसर्जनमात्मीयवाची अकजर्हः । अर्थान्तरे तु न स्त्री । संज्ञोपसर्जनीभूतस्तु कप्रत्ययान्तत्वाद्भवत्युदाहरणम् । एवं चात्मीयायां स्विका । परमस्विकेति नित्यमेवेत्वम्, निर्भस्त्रका, निर्भस्त्रिका, । एषका, एषिका, कृतषत्वनिर्देशान्नेह विकल्पः एतिके, एतिकाः । अजका । अजिका । ज्ञका, ज्ञिका । द्वके, द्विके । निःस्वका, निःस्विका ।

---

पचाद्यच् स्यादिति सोरुपसर्गत्वेन ततः परस्य नीञः अचि गुणे अयादेशे सुनय इति स्यादिति सुनयिका इत्युदाहृतम्। अस्मिंस्तु पक्षे पूर्वं धातुरुपसर्गेण युज्यत इति सुनीञः अच् प्रत्ययः कर्तव्यः। तथा च सुनयतीति सुनयः इति रूपम् सुनयोस्याः अस्तीति सुनया, ततः कः ह्रस्वः इत्वं सुनयिका इति बोध्यम्। यत्तु सुष्ठु नयो प्रत्ययः यस्या इति तत्त्वबोधिन्याम् विग्रह उक्तः। तत्तु केवलादपि नीञो न णप्रत्ययः नित्यः किन्तु वैकल्पिक एव । अन्यथा नीत्यर्थको नयशब्दो न सिद्धयेदिति मत्वेति समाधेयम्।

22. भस्त्रैषा जाज्ञाद्वास्वानञ्पूर्वाणामपि प्रत्ययस्थात् इतीत्वसिद्धेः भस्त्राग्रहणं व्यर्थमत आह उपसर्जनार्थमिति। उपसर्जनेषु सुब्लुकि आपस्सुपः परत्वेन असुप इति निषेधे निर्भस्त्रिकेत्याद्यसिद्धेस्तदर्थमिति भावः। ननु भस्त्राग्रहणेनैव उपसर्जनेष्वप्रवृत्तेः। असुप इति किम् बहुपरिव्राजकेति प्रत्युदाहरणमयुक्तम्। किन्तुदेवदत्तिका इति प्रत्यादाहर्तव्यमिति प्रत्ययस्थादिति सूत्रे प्रतिपादितं हि, अत्र कथमसुप इति निषेधेन उपसर्जनेष्वप्रवृत्तेस्तत्प्रवृत्यर्थं भस्त्राग्रहणमिति प्रतिपाद्यते इति चेदुच्यते उपसर्जनविषये यद्यपि प्रत्ययस्थादितीत्वस्याप्रवृत्तिर्भस्त्राग्रहणेन ज्ञाप्यते तथाऽपि तदन्तविषये तदप्रवृत्त्यर्थमसुप इत्यस्यावश्यकत्वेन तेनैव तदन्तेषूपसर्जनेषु च इत्वप्रवृत्तेर्निषिद्धत्वादुपसर्जनभस्त्राशब्दे इत्वप्राप्त्यर्थं भस्त्राग्रहणमिति, असुप इत्यस्य अभावे भस्त्राग्रहणं व्यर्थीभूय उपसर्जनेनेत्वमिति, ज्ञाप्यता नाम तत्सद्भावे तु तत एव उपसर्जने इत्वाभावस्य सिद्धत्वेन भस्त्राग्रहणस्य न तद्ज्ञापनमुचितं, किन्तु भस्त्राविषये उपसर्जनेपीत्वं प्रवर्तत इति ज्ञापयतीति । अन्यथा अनुपसर्जनस्य भस्त्राशब्दस्य पूर्वेणैव

सिद्धे किमनेन भस्त्राग्रहणेनेति भावः। वस्तुतस्तु असुप इति किम् बहुपरिव्राजका इति युज्यत एव। न च भस्त्राग्रहणेनैव उपसर्जने अप्रवृत्तिर्ज्ञाप्यत इति वाच्यम्। असुप इति सद्भावे हि उपसर्जने इत्वा प्रवृत्तौ सिद्धायां केवलभस्त्राशब्दस्य प्रत्ययस्थादित्यनेनैव इत्वं स्यादेवेति भस्त्राग्रहणं व्यर्थं सत् उपसर्जनभस्त्राशब्दस्यापि स्यादित्वमिति ज्ञापयति। तदभावे तु भस्त्राग्रहणस्य नियमार्थता स्यात् । कोऽसौ नियमः? प्रत्ययस्थादितीत्वं भस्त्राशब्दस्य यदि स्यात्तर्हि भस्त्रा इति मुख्यस्यैव न तु निर्भस्त्रिकेत्यादौ गौणभस्त्राशब्दस्येति। अनेन नियमेन प्रत्ययस्थादितीत्वं गौणेऽपि प्रवर्तत एवेति। बहुपरिव्राजकेत्यत्र इत्वं स्यादेवेति तद्वारणार्थमसुप इत्यावश्यकम्–तस्मात् असुप इति निषेधबाधनार्थं भस्त्राग्रहणमिति सिद्धम्। ननु अन्यस्य तूत्तरसूत्रेण सिद्धमिति भस्त्राशब्दस्य अनुपसर्जनस्य अभाषितपुंस्काच्चेत्युत्तरसूत्रेण इत्वं अनुपतीति हि वक्ष्यति। कथं त्वया प्रत्ययस्थादिति सूत्रेणैवात्रसिद्धौ भस्त्राग्रहणमुपसर्जनार्थमित्यन्यथा व्याख्यातं विरोधादिति चेन्मैवम्। प्रत्ययस्थादिति प्राप्तस्य हि अभाषितपुंस्काच्चेति विकल्पो विधीयते। न च अत एव तत्रेत्वविधानम्। अत्र तु आत इति अप्राप्तविकल्प एवेति वाच्यम्। सिद्धान्ते उदीचामिति सूत्र एव आत इत्यस्य प्रत्याख्याततत्वेन नात्राऽत इत्यस्यानुवृत्तिश्शक्यते वक्तुमिति। ननु प्रत्याख्यानपक्षे तथास्ताम्। अस्तित्वपक्षे तु नात्र प्रत्ययस्थादितीत्वप्रसक्तिः किन्त्वभाषितपुंस्काच्चेति सूत्रादेवेति चेत् मैवम्। आकारस्य ह्रस्वे कृते प्रत्ययस्थादितीत्वस्यापि प्रवृत्तिसंभवात्। उदीचामिति सूत्रमत एव प्राप्तविभाषेत्युक्तम्। तद्वदभाषितपुंस्काच्चेत्यपि प्राप्तविभाषैवेति न विरोध इति। अन्यस्यतूत्तरसूत्रेण सिद्धं वैकल्पिकत्वेनानुपसर्जनभस्त्राशब्दस्य इत्वमभाषितपुंस्कादिति सूत्रेण सिद्धमित्यर्थः। प्राप्तिस्तु प्रत्ययस्थादिति पूर्वसूत्रेणैव प्राप्तस्य वैकल्पिकत्वं तूत्तरसूत्रेणेति भावः। भस्त्राग्रहणमुपसर्जनार्थमित्यत्रेदं तत्त्वम् प्रत्ययस्थादिति नित्यतया इत्वे सिद्धे विकल्पार्थं हि भस्त्रेति सूत्रम्। भस्त्राशब्दस्य अभाषितपुंस्कत्वेन अभाषितपुंस्काच्चेति विकल्पेऽपि सिद्धे भस्त्राग्रहणं व्यर्थं सत्, असुप इति निषेधं बाधित्वा उपसर्जनत्वेऽपि इत्वं प्राप्नोतीति। अत एव अन्यस्य तूत्तरसूत्रेण सिद्धमिति संगच्छते। अनुपसर्जनभस्त्राशब्दस्य इत्वविकल्पः अभाषितपुंस्कादिति सूत्रेण सिद्ध्यतीति, अर्थात्। एषा द्वाग्रहणन्तु विकल्पार्थमेव। तयोर्भाषितपुंस्कत्वेन उत्तरसूत्रेण विकल्पाप्राप्तेः।अतस्तद्ग्रहणस्य अवैयर्थ्यात् उपसर्जनार्थमिति वक्तुं न शक्यते। असुप इति निषेधान्नोपसर्जनयोस्तयोरित्वम्। ननु नञ्पूर्वाणामपीत्युक्तत्वेन उपसर्जनेऽपि तयोर्विकल्पस्स्यादेवेति चेत् मैवम्– भस्त्राज्ञास्वाइत्येतेष्वेव नञ्पूर्वत्वस्यान्वयाभ्युपगमात् कुतस्तथैकदेशान्वय इति चेत्, अत्र तत्त्वबोधिनी। एषा द्वा एतयोरसुप इति निषेधोऽस्ति सपूर्वत्वे, भस्त्राज्ञास्वानान्तु सपूर्वत्वेपि अनुप इति

निषेधो नास्तीति कुत एवं वैषम्यम् ? एषाद्वा एतयोस्सपूर्वत्वे आप् सुपः पर इति । भस्त्रा ज्ञास्वानान्तु कात्पर इति अत्र विचार्यते निष्क्रान्ता भस्त्राया निर्भस्त्रा इति गतिसमासे निर्भस्त्रा ङसि इति प्रक्रियायां स्थिते सुब्लुकि निर्भस्त्रा ततः कप्रत्ययः केण इति ह्रस्वः निर्भस्त्रक ततष्टाप् निर्भस्त्रका भस्त्रेतीत्वं निर्भस्त्रिका। अत्र द्वितीयष्टाप् सुपः पर एव । आङ्ञका न ज्ञासु नञो नलोपः सामासिकस्सुब्लोपः अज्ञा ततः कः केण इति ह्रस्वस्ततः पुनष्टाप्। अत्रापि द्वितीयष्टाप् सुपः पर एव। अस्वकेत्यत्राप्येवमेव, तस्मात्कथमेष्वसुप इति निषेधाप्रवृत्तिः इति चेन्मैवम्–सुपः परत्वं नाम सुबव्यवहितपरत्वमापो यदि तत्रैवासुप इति निषेधः। अत्र तु मध्ये केन व्यवायादापः कात्परत्वमेव न सुपः परत्वमिति। न च एषा द्वा इत्यनयोरपि तथैव क व्यवायेन सुपः परत्वं नास्तीति वाच्यम्। तयोस्सर्वनामत्वेन अकचि कृते टापः प्रागेव ककारश्श्रूयते। तथा हि नञ् एषासु नलोपसुब्लुकौ तस्मान्नुडचीति नुडागमः। अनेषा अकच् प्राक्टेः अनेषक् आ अनेषका पुनस्सुप्। अत्र सुपः परो य आप् इत्युक्ते नास्त्येव। सुबन्तात्पूनरापोऽनुत्पत्तेः, किन्तु आपः परस्यैव सुपः प्रथमं सामासिके लुकि पुनस्सुबेवेति। अयं भावः कप्रत्ययस्य टापो बहिर्जातत्वेन सुबन्तात्परत्वं अकच्प्रत्ययस्य टापः प्राग्जातत्वेन सुबन्तात्पूर्वत्वमिति वैषम्यात् कप्रत्ययान्तात्पुनरप्याबुत्पद्यत इति सुबन्तात्परत्वमापः, अकचि तु न पुनराबुत्पत्तिरिति न सुबन्तात्परत्वमापस्तदेति। तस्मात् एषाद्वा एतयोरसुप इति निषेध एव न प्रवर्तत इति कथं तत्त्वबोधिनी संगच्छते इति चेन्मैवम्–नञ् एतद् स् इति स्थिते नञो नलोपे नुडागमे सुब्लुकि च अनेतत् तस्मात्पुनस्सुप् ततस्त्यदाद्यत्वम् ततष्टाप् तदोस्सस्सौ इति सत्वम् षत्वम् अनेषा, ततोऽकच् अनेषका। अयमाप्सुपः पर एवेति सुपोव्यवहितपरत्वञ्च वर्तत एव अकचष्टेः प्राक्कृतत्वादिति न दोषः, कप्रत्ययस्य सुबन्ताद्बहिः कृतत्वेन आपो व्यवधायको भवति। अकच्प्रत्ययस्तु सुबन्तस्य टेः प्राक्कृतत्वेन आपो न व्यवधायको भवतीति तत्त्ववोधिनी संगच्छत एवेति। एतेन उपसर्जनेष्वपि आपस्सुबव्यवहितपरत्व एव असुप इति निषेध इति सिद्धम्। बहुपरिव्राजकाशब्दस्तु तथाविध एव। बहुपरिव्राजकशब्दात्प्रत्ययलक्षणेन सुबन्ताट्टापः कृतत्वेन सुबव्यवहितपरत्वस्य आपि विद्यमानत्वात् । अतः प्रत्ययस्थादितीति सूत्रे आपीत्यत्र सप्तमीपरिभाषावत् असुप इत्यत्र पञ्चमीपरिभाषाऽपि उपस्थापनीयेति बोध्यम्। अन्यथा निर्भस्त्रिकेद्याद्यसिद्धेः। स्वशब्दग्रहणन्तु संज्ञोपसर्जनार्थम् संज्ञोपसर्जनीभूतस्य स्वशब्दस्य विकल्पेनेत्वार्थमित्यर्थः। ननु कथमिदं ज्ञायते, वैकल्पिकत्वमात्रेण स्वग्रहणस्य चरितार्थत्वादिति चेदुच्यते – संज्ञोपसर्जनीभूतास्तु न सर्वादय इति संज्ञोपसर्जनस्य स्वशब्दस्य असर्वादित्वेन सर्वादिगणकार्यस्य सर्वनाम्नष्टेः प्रागकजित्यकच् न भावति। तथाविधस्य असर्वनामत्वात्। किन्तु कप्रत्यय एव इति सिद्धे यद्यकजर्हस्य स्वशब्दस्यात्र ग्रहणं स्यात्तर्हि अनेषकेत्यादाविव अस्वकेत्यत्र आपस्सुबव्यवहितपरत्वेन सपूर्वस्य स्वशब्दस्य असुप इतीत्वनिषेधस्संभवतीति न विकल्पसिद्धिः। यदि तु नञ्पूर्वाणामपीत्येतत्स्वशब्देप्यननुवर्त्य व्याख्यायते, तर्हि सर्वनाम्नस्स्वशब्दस्य स्विका स्वका

इति वैकल्पिकमित्वं स्यात्। तत्तु नेष्यते। अतः नञ् पूर्वत्वान्वयः स्वशब्देऽप्यावश्यक एव। कृते तु तदन्वये अकजर्हस्वशब्दस्य इत्वविकल्पो न सिद्ध्यत्येवेति सपूर्वत्वे यस्य वैकल्पिकमित्वं लभ्येत तस्यैव स्वस्यात्र ग्रहणं तथाविधश्च असर्वनामसंज्ञ एव। स्वशब्दः स्वस्य असर्वनामत्वञ्च संज्ञोपसर्जनीभूतत्व एवेति संज्ञोपसर्जनार्थं स्वग्रहणमिति युक्तम्। आत इति विशेषणं स्वशब्दस्यैवेति कप्रत्यये स्वाक केणः स्वक टाप् स्वका। कात्पूर्वस्य आत इत्युक्तौ प्रकृते स्वशब्दात्कृतस्य टापः कात्पूर्वस्य लाभात् न तु द्वैषयोरसंभावात्। अकचि कृते द्वका एषका इति जातत्वेन कात्पूर्वतया स् नास्तीति कात्पूर्वस्य अत्वमेवेति आत्वमसंभवमेवेति भावः। नाप्यन्येषामव्यभिचारात् भस्त्रा अजाज्ञा इत्येतेषां टाबन्तानां कप्रत्यये कृते कात्पूर्वस्य आत्वं न कदापि व्यभिचरतीति फलाभावात् तेष्वात्वानुवृत्तिर्व्यर्थैति भावः। (एतेष्वात इत्यनुवृत्त्या किमित्युक्ते प्रत्युदाहरणं नास्ति केण इति ह्रस्वविधानात् प्रात्क्वापिटाबन्तानामेषां कात्पूर्वत्र ह्रस्वाकाराश्रवणात् इति गूढाभिसंधिः) अनुपसर्जनमात्मीयवाची अकजर्हस्वशब्दस्त्वत्र प्रत्युदाहरणमिति शेषः। आत्मीयवाच्ये वेति किम् ज्ञातिधनान्यवाचिनः स्वस्य सर्वनामत्वादित्याशङ्‌क्याह अर्थान्तरे स न स्त्री, "स्वोज्ञातावात्मनि स्वम् त्रिष्वात्मीये" इति कोशात्। ज्ञातिधनभिन्नार्थेषु मध्ये आत्मीय वाचिन एव स्वस्य स्त्रीलिङ्गत्वेन स्त्रीप्रत्ययान्तत्वात्स एवेह प्रत्युदाहरणमिति भावः। आत्मीयायान्तु प्रत्ययस्थादिति नित्यमेवेत्वं स्विका, तदन्तविधेः परमस्विकेति। ननु परमस्विकेत्यत्र असुप इति निषेधस्तदवस्थ एव। परमासु स्वासु सुब्लुक् गोस्त्रियोरिति परमशब्दस्य उपसर्जनत्वेन ह्रस्वः परमस्वा समासत्वात्पुनस्सुबुत्पत्तिः। सर्वादिषु तदन्तविधेः सत्वात् सर्वनाम्नष्टेः प्रागकच् परमस्वका इति रूपे सुपः परत्वादाप इति चेत् मैवम्- सामासिके सुब्लुकि सति पुनस्सुबुत्पत्तावपि। आपः पर एव स लुप्तोऽपि सुप् न तु लुप्तादपि सुपः पर आबिति अनेषकेत्यत्रेव बोध्यम्।

अथ उदाहरणान्याह-निर्भस्त्रकेत्यादि। कृतषत्वनिर्देशान्नेह विकल्पः। तदोस्सस्साविति सत्वं तस्य षत्वं त्यदाद्यत्वं टापञ्च कृत्वा प्रथमैकवचनान्तस्य एतच्छब्दस्य एषा इत्यस्य सूत्रे ग्रहणात् तस्यैव विकल्पः, न तु द्विवचनाद्यन्तस्येति एतिके एतिका इत्येव रूपम्। न यासयोरित्यत्र तु यासा इत्युपलक्षणम् । द्वितीयाद्यन्तयोर्यत्तदोरित्युक्तत्वेन यकान्तकामिति रूपसिद्धिः। अत्र एषेति निर्देशो न तथोपलक्षणमौङाद्यन्तानामिति भावः। भाषितपुंस्कत्वादजाज्ञाशब्दयो रुत्तरसूत्रेण विकल्पासिद्धौ तदर्थमिह ग्रहणम्। अजाज्ञा इति स्त्रीप्रत्ययान्तत्वेन निर्देशस्तु सपूर्वत्वे टाबन्त एवानयोरुपसर्जनत्वे विकल्पः। न त्वन्ययोरिति। तथा च अजा न भवतीति नाजा ततः कप्रत्यये नाजका नाजिका इति भवति। न विद्यते अजो यस्यास्सा नाजा ततः कपि नाजिका

४६७ **अभाषितपुंस्काच्च** । ।७।३।४८। एतस्माद्विहितस्य आतः स्थाने अत इद्वा स्यात् । गङ्गका । गङ्गिका । बहुव्रीहेर्भाषितपुंस्कत्वात्ततो विहितस्य नित्यम् । अज्ञाता अखट्वा अखट्विका । शैषिके कपि तु विकल्प एव। ४६८ **आदाचार्याणम्** । ।७।३।४९। **पूर्वसूत्रविषये** आद्वा स्यात् । गङ्गाका। उक्तपुंस्कात्तु शुभ्रिका ।। ४६९ **अनुपसर्जनात्** । ।४।१।१४। अधिकारोऽयम् 'यूनस्तिः' (सू ५३१) इत्यभिव्याप्य । अयमेव स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयति ।

---

इत्येकमेव रूपमिति। न चासुप इति निषेधःशङ्क्यः, कप्रत्ययेन व्यवधानात्। ननु भस्त्राज्ञा स्वानान्तु सपूर्वाणामपीत्वमिति तत्त्वबोधिन्यामुक्तत्वात्कथ मजाशब्दस्यापि स पूर्वत्वं त्वयोदाहृतमिति चेत्, तत्र भस्त्राज्ञास्वानामिति पठनीयमेव। अजापरित्यागः प्रामादिक एवेति बोध्यम्। एवमेव ज्ञाशब्देऽपि न विद्यते ज्ञो यस्या इति पञ्चमी। सा अज्ञा अज्ञिका इत्येकमेव रूपम् ज्ञा न भवतीत्यज्ञा अज्ञका अज्ञिका इति रूपद्वयम्।

संज्ञोपसर्जनीभूतास्तु न सर्वादय इति यथा स्वशब्दस्य उपसर्जनस्य नाकजर्हत्वं तथैव एतच्छब्दस्याप्युपसर्जनत्वे असर्वनामत्वेन नाकजति अनेषकेत्यत्र कप्रत्ययेन व्ययधानादसुप इति निषेधो न संभवतीति अनेषिकेत्यपि स्यादिति चेत् मैवम्। त्यदादिषु विषये उपसर्जनत्वेऽपि सर्वनामसंज्ञाभ्युपगमात् अन्यथा त्यदाद्यत्वस्यापि सर्वनामकार्यत्वेन तस्याप्यप्रवृत्तौ अनेषा इति रूपासिद्धेः। स न भवतीत्यस इत्यादिरूपाणामप्यसिद्धिप्रसङ्गात्। त्यदारभ्य द्विपर्यन्तानामुपसर्जनत्वेऽपि सर्वनामत्वमस्तीति भावः ।

23. अभाषितपुंस्काच्च–प्राप्तविभाषेयम् आदाचार्याणामिति आत्वविकल्पार्थं पृथक्सूत्रं निर्दिष्टम्। भाषितः पुमान्येन तद्भाषितपुंस्कं तन्न भवतीत्यभाषितपुंस्कं तस्मात् विहितस्य प्रत्ययस्थात्कात्पूर्वस्य आतः स्थाने योऽत् तस्य इद्वास्यादित्यर्थः। गङ्गा शब्दस्य नित्यस्त्रीलिङ्गत्वादिहोदाहरणम् गङ्गका गङ्गिका इति। ननु अभाषितपुंस्कात् परस्येत्युक्तावपि उक्तेष्टसिद्धेः विहितस्येति किम्। निष्क्रान्ता गङ्गायाः निर्गङ्गा। गोस्त्रियोरिति ह्रस्वे पुनष्टाप्, अत्र श्रूयमाण आप् निर्गङ्गेति प्रातिपदिकाद्विहित एव गङ्गेत्यस्मात्तु परः। अयं हि निर्गङ्गाशब्दः भाषितपुंस्कः निष्क्रान्तो गङ्गाया निर्गङ्ग इति पुंस्यपि प्रवृत्तेः। अत्र प्रत्ययस्थादिति तु नित्यमेवेत्वं विकल्पस्तु न। अत्राभाषितपुंस्कात्परस्यात इत्युक्ते निर्गङ्गाशब्दगतगङ्गापदस्य अभाषितपुंस्कत्वात् निर्गङ्गेति प्रातिपदिकाद्विहितस्यापः गङ्गापदात्परत्वाच्च विकल्पस्स्यादिति दोषः। विहित इत्युक्ते तु न ह्ययमभाषितपुंस्कात् निर्गङ्गाद्विहित इति न दोष इति।

24. अनुपसर्जनात्। अयमेव स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयति। उपसर्जनात्स्त्रीप्रत्ययाऽभावे अनुपसर्जनादिति निषेधो व्यर्थस्सन् उपसर्जनाच्च स्त्रीप्रत्ययादिति ज्ञापयति, तदन्तविधिं विना उपसर्जनत्वं न घटते, इति हेतोस्तदन्तविधिं ज्ञापयतीत्युक्तम्। यद्वा टिड्ढाणञित्यादिना अनुपसर्जनात् अदन्तात् ङीप् विहितः अजाद्यत इति टाप्च विहितः, अनुपसर्जनाधिकारोऽजाद्यत इत्यत्र नास्ति। तेन टापं बाधित्वा अनुपसर्जनेषु ङीप् स्यात्। टाप्तु उपसर्जनेषु टिदादिभिन्नेष्वनुपसर्जनेषु च स्यादिति सिद्धम्। तदन्तविधिं विना तु नैतत्सिद्ध्यतीति भावः ।

४७० **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** । ।४।१।१५।
अनुपसर्जनं यट्टिदादि तदन्तं यददन्तं प्रातिपदिकं ततः स्त्रियां ङीप् स्यात् । कुरुचरी । नदट्–नदी । उसर्जनत्वान्नेह । बहुकुरुचरा । वक्ष्यमाणेत्यत्र टित्त्वादुगित्त्वाच्च ङीप्प्राप्तः । यासुटो ङित्त्वेन ' **लाश्रयमनुबन्धकार्यं नादेशानाम्** ' (प ७०) इति ज्ञापनान्न भवति । श्नः शानचः शित्त्वेन क्वचिदनुबन्धकार्येऽप्यनल्विधाविति निषेधज्ञापनाद्वा । सौपर्णेयी । ऐन्द्री । औत्सी ।ऊरुद्वयसी, ऊरुदघ्नी, ऊरुमात्री । पञ्चतयी । आक्षिकी । लावणिकी । यादृशी । इत्वरी ।

---

25. वक्ष्यमाणा–ब्रूञः कर्मणि लृडन्ताच्छानच् (कर्मणि धातूनामात्मनेपदित्वात्। शकारचकारयोरित्वेन लोपः। वक्ष्य आन आने मुक् क्षवर्णस्य ककारषकारात्मकत्वेन षात्परत्वान्नस्य अट्कुप्वाङिति णत्वं **वक्ष्यमाणततष्टाप्वक्ष्यमाणा।** अत्र शानचो लुडादेशत्वात् टित्त्वेन उगित्वेन च टिड्ढाणञिति उगितश्चेति च (टापं बाधित्वा) ङीप् प्राप्तः न भवति । ननु, लृडादेशे शानचि स्थानिवद्भावेन हि टित्वमानीयते अनल्विधाविति निषेधान्न भवति स्थानिवद्भाव इति चेत् मैवम्। अनुबन्धकार्येष्वनल्विधाविति निषेधस्याप्रवृत्तेः कथमिदम्? नल्यपीति ज्ञापनात्। तथा हि प्रपूर्वकधेट्पान इति धातोः क्त्वाप्रत्यये कृते तस्य क्त्वः "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति ल्यबादेशः उपदेशेऽ शितीत्यात्वं प्रधाय इति स्थिते ल्यबादेशस्य स्थानिवद्भावेन कित्त्वात् घुमास्थागापाजहातिसां हलीति दाधाघ्वदाबिति घुसंज्ञकस्यास्य धेटः हलादौ कित्यार्थधातुके ल्यपि परतः ईति प्राप्ते नल्यपीति निषेधः प्रधाय, अत्र अनुबन्धकार्येष्वनल्विधाविति निषेधस्य प्रवृत्तौ, ल्यपि स्थानिवद्भावेन कित्त्वं नैवेति न ल्यपीति निषेधो व्यर्थः सन् अनुबन्धाकार्येष्वनल्विधाविति निषेधो नास्तीति ज्ञापयतीति भावः ।

श्नश्शानचश्शित्वेन हलश्नश्शानज्झौ इति श्नाप्रत्ययस्य आनजादेशे कृतेऽपि स्थानिवद्भावेन शित्त्वलाभे शानजादेशविधाने शित्त्वं व्यर्थं सत् अनुबन्धकार्येप्यनल्विधाविति निषेधोऽस्तीति ज्ञापयित्वा स्थानिवद्भावाभावेन आनच्प्रत्यये शित्त्वं दुर्लभमिति शानजादेशोवश्यं कर्तव्य इति स्वांशे चरितार्थोऽभवदिति भावः। ननु न ल्यपीत्यनेन नास्तीति, अनेन अस्तीति च ज्ञापिते विरोधस्स्यादत आह, क्वचिदिति– निषेधस्य क्वाचित्कत्वमनिषेधस्य सार्वत्रिकत्वञ्चेति न विरोध इति भावः। ननु आने मुगिति मुगागमे वक्ष्यमित्यस्य उगिदन्तत्वात्प्रातिपदिकत्वाच्च ङीप् स्यादिति चेन्मैवम्। वक्ष्यमाणेत्यस्य प्रातिपदिकत्वेन उगिदन्तत्वाभावात्। अन्यथा अदन्तात्प्रातिपदिकाट्टाप् स्यादिति अत्र अदन्तत्वप्रयुक्तष्टाबपि न घटेत इत्यलम्।

‘ **ताच्छीलिके णेऽपि** ’ (प ६८) चौरी । **‘नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्’** (वा २४२५)। स्त्रैणी । पौस्नी । **शाक्तीकी** । आढ्यङ्करणी । तरुणी, तलुनी ।४७१ **यञश्च** । ।४।१।१६। यञन्तात्स्त्रियां ङीप्स्यात् । अकारलोपे कृते । ४७२ **हलस्तद्धितस्य** ।६।४।१५०। हलः परस्य तद्धितयकारस्योपधाभूतस्य लोपः स्यादीति परे । गार्गी । **‘अनपत्याधिकारस्थान्न ङीप्’** (वा २४२६) द्वीपे भवा द्वैप्या । अधिकारग्रहणाद् नेह–देवस्यापत्यं दैव्या । ‘ देवाद्यञञौ ’ इति हि यञ् प्राग्दीव्यतीयः, न त्वपत्याधिकारपठितः ४७३ **प्राचां ष्फ तद्धितः** । ४।१।१७। यञन्तात्ष्फो वा स्यात्स्त्रियाम् स च तद्धितः ।

---

टित उदाहरणं कुरुचरीति, ढस्य सौपर्णेयी, अणः ऐन्द्री इति। ननु, कृञोऽण्प्रत्यये कार ङीप् कारी इति स्यात्, कुंभोपपदकात्तु कृञोऽणि ङीप् न स्यात् तदन्तविध्यभावात् इति चेन्मैवम्। अणिति प्रत्ययग्रहणेन तदन्तग्रहणात् अणन्तमिति लब्धं तस्य अधिकृतप्रातिपदिकविशेषणात्येन विधिरिति तदन्तविधिना अणन्तान्तात्प्रातिपदिकात् ङीप् स्यादेवेति कुंभकारशब्दादपि ङीपि कुंभकारी इति रूपमिति। न च कारशब्दात् ङीपि कृतेऽपि कारी इति भवति, कुंभस्य कारी कुंभकारी इति रूपं स्यादिति किमनेन अणन्तान्तग्रहणेनेति वाच्यम्। तस्मात् ‘स्त्रीभ्योढक्’ इति ढकि कुंभस्य कारेयः कुंभकारेय इति स्यात्। इष्यते तु कुभकारीशब्दाड्ढकि कौम्भकारेय इति । ननु, समर्थपरिभाषया असमर्थात्कुंभकारीशब्दगतकारीशब्दाड्ढक् नोत्पद्यत एवेति न तादृगनिष्टरूपसिद्धिरिति चेत्तर्हि अणन्तान्तमिति स्पष्टार्थम्। न च केवलात् कृञः अणपि न स्यादिति वच्यम्। तत्र समर्तपरिभाषाऽप्रवृत्तेः। कार इत्यस्य कृदन्तत्वात्। ननु कुंभस्यकारः कुंभकार इति न वक्तव्यम्, किन्तु कुंभं करोतीति कुंभकार इत्येव समास इति कैश्चिदुच्यते तत्कथमिति चेदुच्यते, उपपदमतिङिति सूत्रे (तत्परुषेषु) गतिकारकोपपदानां कृद्भिस्सह समासवचनं प्राक्सुबुत्पत्तेरिति वक्ष्यमाणत्वात् तत्तत्रैव विचार्यते ।

26. गार्गी–गर्गस्यापत्यं गार्ग्य गर्गादिभ्यो यञ्, यञन्ताद्गार्ग्येति प्रातिपदिकात्, स्त्रियां ङीप्, गार्ग्य ई अतो लोपः गार्ग्य् ई हलस्तद्धितस्य गार्गी। गर्गस्यापत्यं स्त्री गार्गी इति तद्धितप्रत्ययान्तोऽयम्।

27. प्राचां ष्फतद्धितः–विकल्पाय प्राचां ग्रहणम्। अर्थवत्सूत्रे प्रातिपदिकसंज्ञायां प्रत्ययान्तभिन्नपर्युदासात्। ष्फप्रत्ययान्तस्य प्रातिपदिकसंज्ञा नास्तीति षिद्गौरादिभ्यश्चेति ङीष् न स्यात् (स्त्रीप्रत्ययेषु प्रातिपदिकाधिकारात्) तस्मात्तद्धितग्रहणम्। ष्फस्य तद्धितत्वे तु कृत्तद्धितसमासाश्चेति प्रातिपदिकत्वम्। ष्फस्य षित्वं तु षिद्गौरादिभ्यश्चेति ङीषर्थम्। ननु ङीषतिरिक्तप्रयोजनशून्येन षित्करणेनैव अप्रातिपदिकादपि ष्फप्रत्ययान्तात् ङीष् स्यादेवेति

४७४ **षः प्रत्ययस्य** । ।१।३।६। प्रत्ययस्यादिः ष इत्स्यात् ४७५ **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** ।७।१।२। प्रत्ययादिभूतानां फादीनां क्रमादायन्नादय आदेशा स्युः। तद्धितान्तत्वात्प्रातिपदिकत्वम् । षित्त्वसामर्थ्यात्ष्फेणोक्तेऽपि स्त्रीत्वे 'षिद्गौरा–' (सू ४९८) इति वक्ष्यमाणो ङीष्। गार्ग्यायणी ।।

---

तद्धितग्रहणमपार्थमिति चेत् मैवम्, यस्येति च भस्येवर्णावर्णयोर्लोपस्स्यादीकारे तद्धिते च परे इति, गार्ग्य फ फस्यायन् गार्ग्य आयन्, ष्फस्य तद्धितत्वाभावे तदादेशस्यायनोप्यतद्धितत्वात् तद्धिपरकत्वेन जायमानः भस्य अल्लोपः न स्यात् इति। ननु अल्लोपाभावेऽपि सवर्णदीर्घेणाऽपि गार्ग्यायन्निति रूपं सिद्ध्यत्येवेत्यतोऽपि व्यर्थं तद्धितपदमिति चेत् तर्हि इञन्तादपि क्वचित् ष्फो भवतीति ज्ञापनार्थं तद्धितग्रहणमितीष्यताम्। तथाहि, आसुरेरुपसंख्यानमिति वार्तिकेन इञ्न्तादासुरि शब्दात् ष्फो विधीयते, अत इञिति । असुरस्यापत्यमासुरिः ततः स्त्रियां ष्फः तस्यायन्नादेशः। आसुरि आयन् इति स्थिते यस्येति चेति इलोपः आसुरायन्। अत्र ष्फस्य तद्धितत्वाभावे इलोपो न स्यात्, किन्तु यणि आसुर्यायन् इति स्यादतस्तत्र तद्धितग्रहणमावश्यकमिति यञन्ताद्विहिते ष्फप्रत्ययेऽतिदिश्यमानं तद्धितत्वं व्यर्थीभूय इञन्तादपि ष्फप्रत्ययो विधेय इति ज्ञापयित्वा तत्र चरितार्थमभवदिति । नन्वेवमासुरेरिति वार्तिकं व्यर्थमिति चेत्तथैव। तद्धितग्रहणात् ज्ञापकात्सिद्धं नापूर्ववचनमिति ज्ञेयम्। नन्वेवमपि षित्करणं व्यर्थम्। ननु गार्ग्यायणीति रूपसिद्ध्यर्थं तदिति वाच्यम्। फस्य आयन्नादेशे नान्तत्वात् ऋन्नेभ्य इति ङीपि तत्सिद्धेः इति चेन्मैवम्। स्त्रियां ष्फ इति प्रत्ययस्य कृतत्वेन पुनः स्त्रीप्रत्ययानुदयात् ङीप् न स्यादिति। वस्तुतस्तु ष्फप्रत्ययोपर्यकारो नोच्चारणार्थक इति फ् इति व्यञ्जनस्य आयन्नदेशे आयन् अ आयन इति अदन्तत्वान्न ङीप्। ननु षित्त्वे कृतेऽपि ष्फप्रत्ययात्पुनर्ङीष्प्रत्ययः कथमुत्पद्येतेति चेत् षित्वसामर्थ्यादेव। अत एव वक्ष्यति ष्फेणोक्तेऽपि स्त्रीत्वेषित्त्वसामर्थ्यात् षिद्गौरेति ङीषिति। तस्मात् प्राचां ष्प इति वा प्राचां फ तद्धित इति वा न न्यासः कर्तव्यः ।

28. षः प्रत्ययस्य–अत्र उपदेशेऽ जनुनासिक इदित्यतो इदिति आदिर्ञिटुडव इत्यतः आदिरिति च संबध्येते। तदेतदाह ष इति व्यञ्जनस्यैव ग्रहणम् ।

29. गर्गस्य गोत्रापत्यं स्त्री गार्ग्यायणी गर्गादिभ्यो यञ् तद्धितेष्वचामादेरिति ञिन्निमित्तिका आदिवृद्धिः गार्ग्यस्त्रियां ष्फः फस्यायन् गार्ग्यायन षिद्गौरादिभ्यश्चेति ङीष् यस्येति चेतीकारनिमित्तकोऽल्लोपः अट्कुप्वाङिति णत्वं गार्ग्यायणी ।

४७६ **सर्वत्रलोहितादिकतन्तेभ्यः** । ।४।१।१८। लोहितादिभ्यः कतशब्दान्तेभ्यो यञन्तेभ्यो नित्यं ष्फः स्यात् । लौहित्यायनी । कात्यायनी ४७७ **कौरव्यमाण्डूकाभ्यां च** । ।४।१।१९। आभ्यां ष्फः स्यात् । क्रमेण टाब्ङीषोरपवादः । 'कुर्वादिभ्यो ण्यः'(सू ११७५) कौरव्यायणी । 'ढक्च मण्डूकात्' (सू ११२२) इत्यण् । माण्डूकायनी । **आसुरेरुपसंख्यानम्'** (वा २४३३) आसुरायणी । ४७८ **वयसि प्रथमे** । ।४।१।२०। प्रथमवयोवाचिनोऽदन्तात्स्त्रियां ङीप्स्यात् । कुमारी ।' **वयस्यचरम इति वाच्यम्'** (वा २४३५) वधूटी । चिरण्टी ।' वधूटचिरण्टशब्दौ यौवनवाचिनौ । अतः किम् – शिशुः । कन्याया न, 'कन्ययाः कनीन च' (सू १११९) इति निर्देशात् । ४७९ **द्विगोः** । ।४।१।२१। अदन्ताद् द्विगोर्ङीप्स्यात् । त्रिलोकी । अजादित्वात् त्रिफला । त्र्यनीका (सेना)४८० **अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि** । ।४।१।२२। अपरिमाणान्ताद्बिस्ताद्यन्ताच्च द्विगोर्ङीप् न स्यात्तद्धितलुकि सति । पञ्चभिरश्वैः क्रीता पञ्चाश्वा । आर्हीयष्ठक् । तस्य 'अध्यर्ध–' (सू १६९३) इति लुक् । द्वौ बिस्तौ पचति द्विबिस्ता । द्व्याचिता । द्विकम्बल्या । परिमाणन्तात्तु द्व्याढकी । तद्धितलुकि किम् समाहारे पञ्चाश्वी ।

---

30. सर्वत्र लोहितादिकतन्तेभ्यः– गर्गादिगणे लोहितमारभ्य कतशब्दपर्यन्तं ये ये शब्दा वर्तन्ते तेभ्यो यञन्तेभ्यो नित्यं ष्फः स्यात् । कतन्त इत्यत्र अतो गुण आर्षः। कात्यायनी। कत इति कश्चन। तस्य गोत्रापत्ये यञ् कात्य, स्त्रियां ष्फः फस्यायन् कात्यायन ङीप् अल्लोपे कात्यायनी। कैश्चित्तु कति अयनानि यस्य सः कत्ययनः। तस्य गोत्रापत्यं स्त्री गोत्रत्वेन जातित्वात् ङीषि कात्यायनीति व्युत्पाद्यते, तन्मते तु अनुशतिकादेराकृतिगणत्वात् कत्ययनशब्दस्य उभयपदवृद्धिर्बोध्या ।

31. कौरव्यमाण्डूकाभ्यां च –यञन्तत्वाभावादप्राप्ते विधिरयम्, कुर्वादिभ्योण्यः णिन्निमित्तिकआदिवृद्धिः ओर्गुणः अवादेशः कौरव्य अदन्तत्वाट्टापि प्राप्ते अनेन ष्फः, मण्डूकशब्दात्तस्येदमित्यणि स्त्रियां टिड्ढाणञिति ङीपि प्राप्ते अनेन ष्फः। आसुरेरुपसंख्यानम् कौरव्यमाण्डूकशब्दयोस्समीपे आसुरिशब्दस्यापि पठनं कर्तव्यमित्यर्थः। कौरव्यमण्डूकासुरिभ्यश्चेति सूत्रयितव्यमिति यावत्। इदञ्च वार्तिकमकर्तव्यम् तद्धितग्रहणात् ज्ञापनादेव क्वचिदिञन्तात् ष्फस्य सिद्धत्वात् ।

32. वयसि प्रथमे– अत्रात इत्यस्येति मण्डूकप्लुत्या स्त्रियामिति प्रातिपदिकादिति चाधिकारः। ऋन्नेभ्य इत्यतो ङीबिति। प्रथमे वयसि वर्तमानाददन्तात्प्रातिपदिकात् स्त्रियां ङीप् स्यादिति। शब्दस्य वयसि वृत्तिर्वाच्यवाचकभावसंबन्धेन। तेन प्रथमवयोवाचिन इति सिद्धम्। अतः किं? शिशुः स्त्रीशिशुरिह प्रत्युदाहरणमिति बोध्यम्।

४८१ **काण्डान्तात् क्षेत्रे** । ।४।१।२३। क्षेत्रे यः काण्डान्तो द्विगुस्ततो न ङीप् तद्धितलुकि । द्वे काण्डे प्रमाणमस्या सा द्विकाण्डा क्षेत्रभक्तिः । ' प्रमाणे द्वयसच्–' (सू १८३८) इति विहितस्य मात्रचः 'प्रमाणे लः द्विगोर्नित्यम् (वा ३१२९–३०) इति लुक् । क्षेत्रे किम्–द्विकाण्डी रज्जुः ।

---

33. तद्धितलुकि किम्। समाहारे पञ्चाश्वी तद्धितार्थोत्तरपदसमाहारे चेति समाहारे वाच्ये द्विगुः। पञ्चानामश्वानां समाहारः पञ्चाश्वी, अत्र न कोऽपि तद्धितप्रत्ययो विहितः नापि लुप्त इति तद्धितलुगभावान्न ङीप्निषेधः॥ न च तद्धितलुकीत्यस्य तद्धिताभावे इति ह्यर्थः। तथा च समाहारेऽपि तद्धिताभाव इति ङीप्निषेधः स्यादिति वाच्यम् । अदर्शनं लोप इति प्रसक्तस्यादर्शनस्य लोपसंज्ञाविधानेन यत्र तद्धितः प्रसक्तस्सन् पश्चाल्लुप्यते तत्रैव तद्धितलुग्व्यवहारः न तु तद्धिताप्रसक्ताविति । ननु लोपस्य तथात्वेऽपि लुकस्तथाविधसूत्राभावान्न तथात्वमिति चेन्मैवम्, लुगादीनामपि तथात्वाङ्गीकारात्। अन्यथा अप्रसक्तस्यापि लुगापत्तिस्स्यात्। तस्माद्यत्र तद्धितः प्राप्तः पश्चाल्लुप्यते तत्रैव तद्धितलुग्व्यवहारः। न तु तद्धिताप्रसक्तिस्थल इति पञ्चाश्वीत्यत्र तद्धितप्रसक्त्यभावान्न ङीप्निषेध इति निरवद्यम्।

34. प्रमाणे द्वयसजिति विहितस्य मात्रचः–प्रमाणे द्वयसज्दघ्नञ्मात्र च् इति सूत्रात् प्रमाणे विहितो यो मात्रच् प्रत्ययस्तस्येत्यर्थः। ननु प्रमाणे त्रयाणां विहितत्वेन मात्रच् इति निर्धारणं कथमत आह तत्त्वबोधिन्याम्। प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ ममेति द्वयसज्दघ्नञोरुन्मानप्रमाणे विहितत्वं मन्यते कारिकाकार इति भावः ।

35. तत्त्वबोधिन्याम् । अत एव द्विभिस्ताभित्तिरित्यत्र ङीप् न भवति। अस्यायम्भावः। अपरिमाणेति सूत्रे बिस्तादीनामुन्मानत्वेपि परिमाणत्वाभावेन अपरिमाणान्तादित्यनेनैव बिस्ताद्यन्तादपि ङीप्निषेधसम्भवे सति बिस्तादिग्रहणं व्यर्थमिति कृत्वा उन्मानस्य निषेधे बिस्तादीनामेव निषेध इति नियमितम्। तथा च उन्मानवाचकबिस्तद्यन्तात्तु बिस्ताचितेत्यनेन ङीप्निषिध्यते। आयामवाचकबिस्ताद्यन्तात् अपरिमाणेत्यनेनैव उन्मानायामयोस्सत्यपि परिच्छेदमात्रत्वे, परिमाणत्वाभावादेव (बिस्तादिग्रहणस्य उन्माननियमार्थत्वेऽपि) अपरिमाणेत्यनेन द्विबिस्ता भित्तिरित्यत्र आयामवाचकबिस्तान्तात् ङीप्निषेध इति भावः। ननु किमनेन क्लेशेन? आयामोन्मानवाचकान्तानां यदि ङीप्निषेधः(अपरिमाणेत्यनेन) तर्हि बिस्ताद्यन्तानामेव इति कल्प्यतां नियमः। किम् केवलोन्माननियमेन इति चेन्मैवम्। द्विकाण्डी रज्जुरित्यत्र बिस्तादिभिन्नायामवाचककाण्डान्तात् ङीप्निषेधाभावेन काण्डान्तात् क्षेत्र इति सूत्रे क्षेत्रपदस्य वैयर्ध्यात्। ननु उक्तरीत्या द्विकाण्डी रज्जुरित्यत्र ङीप्निषेधाभावेऽपि काण्डान्तादित्येतावता सूत्रेण ङीप्निषेधसंभवात्, तदभावाय क्षेत्रपदस्य सार्थक्यात् इति चेन्मैवम्। द्वौ हस्तौ प्रमाणमस्याः द्विहस्ता रज्जुरित्यत्र आयामप्रमाणबिस्तादिभिन्नहस्तान्तात् ङीप्निषेधाभावप्रसङ्गात् ।

४८२ **पुरुषात्प्रमाणेऽन्यतरस्याम्** ।४।१।२४। प्रमाणे यः पुरुषस्तदन्ताद् । द्विगोर्ङीब्वा स्यात्तद्धितलुकि । द्वौ पुरुषौ प्रमाणमस्याः सा द्विपुरुषी, द्विपुरुषा वा परिखा । ४८३ **ऊधसोऽनङ्** । ।५।४।१३१। ऊधोऽन्तस्य बहुव्रीहेरनङादेशः स्यात् स्त्रियाम् । इत्यनङि कृते डाब्ङीब्निषेधेषु प्राप्तेषु।। ४८४ **बहुव्रीहेरूधसो ङीष्** । ।४।१।२५। ऊधोऽन्ताद्बहुव्रीहेर्ङीष् स्यात्स्त्रियाम् । कुण्डोध्नी । स्त्रियाम् किम् कुण्डोधो धैनुकम् । इहानङपि न । **तद्विधौ 'स्त्रियाम्'** (वा ३३६७) **इत्युपसंख्यानात्** । ४८५ **सङ्ख्याऽव्ययादेर्ङीप्**। ।४।१।२६। ङीषोऽपवादः ।। द्व्यूध्नी। अत्यूध्नी । बहुव्रीहेरित्येव । ऊधोऽतिक्रान्ता अत्यूधाः । ४८६ **दामहायनान्ताच्च** । ।४।१।२७। संख्यादेर्बहुव्रीहेर्दामान्ताद्धायनान्ताच्च ङीप्स्यात् । दामान्ते डाप्प्रतिषेधयोः प्राप्तयोर्हायनान्ते टापि प्राप्ते वचनम् । दिदाम्नी । अव्ययग्रहणाननुवृत्तेरुद्दामा बडवेत्यत्र डाब्निषेधावपि पक्षे स्तः। द्विहायनी बाला । **' त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम्'** (वा ५०३८) **'वयोवाचकस्यैव हायनस्य ङीब्णत्वं चेष्यते'** (वा २४४१) त्रिहायणी । चतुर्हायणी । वयसोऽन्यत्र द्विहायना, त्रिहायना, चतुर्हायना शाला । ५८७ **नित्यं संज्ञाछन्दसोः** । ।४।१।२९। अन्नन्ताद्बहुव्रीहेरुपधालोपिनो ङीप्स्यात्संज्ञाछन्दसोः । सुराज्ञी नाम नगरी । अन्यत्र पूर्वेण विकल्प एव । वेदे तु शतमूर्ध्नी ४८८ **केवलमामक-भागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च** । ।४।१।३०। एभ्यो नवभ्यो नित्यं ङीप्स्यात्संज्ञाछन्दसोः । ' अथो त इन्द्रः केवलीर्विशः' 'मामकी तनूः' । भागधेयी । पापी । अपरी । समानी । आर्यकृती । सुमङ्गली । भेषजी । अन्यत्र केवला इत्यादि ।। मामकग्रहणं नियमार्थम् अणन्तत्वादेव सिद्धेः । तेन लोकेऽसंज्ञायां मामिका ।

---

36. कुण्डोध्नी–कुण्डोधश्शब्दादूधसोऽनङित्यनङ्। ङित्वादन्त्यस्य सस्य कुण्डोध अन्, अतो गुणे कुण्डोधन् ततो ङीष् कुण्डोधन् ई यचिभमिति ईकारप्रत्ययपरकत्वेन पूर्वस्य भत्वात् अल्लोपो न इति अल्लोपःकुण्डोध्न् ई कुण्डोध्नी इति रूपम् ।

37. सुमङ्गली–ङ्यन्तत्वाद्धल्ङ्याबिति सुलोपः। सुमङ्गलीरित्यत्र तु ई प्रत्ययान्तत्वेन न सुलोपः। अतः लक्ष्मीरितिवद्रूपम्। केवलीर्विश इत्यत्र तु केवलीरिति द्वितीयाबहुवचनं बोध्यम्।

38. मामकग्रहणं नियमार्थम्। तवकममकावेकवचन इति ममेदमित्यणि ममकादेशे आदिवृद्धौ मामक टिड्ढाणञिति ङीप् मामक ई यस्येति च मामकी इति रूपसिद्धेः। किमस्मिन्केवलेति सूत्रे मामकग्रहणेन फलमित्यत आह नियमार्थमिति। कोऽसौ नियमः मामकशब्दाद्यदि ङीप् स्यात्तर्हि संज्ञाछंदसोरेवेति।

४८९ **अन्तर्वत्पतिवतोर्नुक्** । ।४।१।३२। एतयोः स्त्रियां नुक्स्यात् । 'ऋन्नेभ्यो ङीप् (सू ३०६) गार्भिण्यां जीवद्भर्तृकायां च प्रकृतिभागौ निपात्येते । तत्रान्तरस्त्यस्यां गर्भ इति विग्रहे अन्तश्शब्दस्याधिकरणशक्तिप्रधान तयाऽस्तिसामानाधिकरण्याभावादप्राप्तो मतुब्निपात्यते । ' पतिवत्नी ' इत्यत्र तु वत्वं निपात्यते । अन्तर्वन्ती । पतिवत्नी। प्रत्युदाहरणं तु अन्तरस्त्यस्यां शालायां घटः । पतिमती पृथिवी । ४९० **पत्युर्नो यज्ञसंयोगे** । ।४।१।३३। पतिशब्दस्य नकारादेशः स्याद्यज्ञेन सम्बन्धे । वसिष्ठस्य पत्नी । तत्कर्तृकस्य यज्ञस्य फलभोक्त्रीत्यर्थः । दम्पत्योः । सहाधिकारात् ४९१ **विभाषा सपूर्वस्य** । ।४।१।३४। पतिशब्दान्तस्य सपूर्वस्य प्रातिपदिकस्य नो वा स्यात् । गृहस्य पतिः गृहपतिः ।

---

39. प्रकृतिभावौ निपात्येते- अन्तर्वत्पतिवदिति। गर्भभर्तृसंयोगे इति वार्तिकादिति भावः।

40. अप्राप्तो मतुप् निपात्यते – तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रादस्ति समानाधिकरणात्प्रथमान्तादेव मतुब्विहितः। अस्यास्मिन्वा तदस्तीति तदिति सर्वनाम्ना परामृष्टात्प्रथमान्तान्मतुब्विधानात्, यथा–गुणवतीत्यादि। प्रकृते अन्तर्वच्छब्दे तु अस्ति समानाधिकरणो यो गर्भशब्दस्स न प्रयुक्त एवेति अन्तश्शब्दस्य गर्भार्थकत्वाभावात्। अस्मिन्नित्यधिकरणशक्तिप्रधानात्सप्तम्यन्तान्मतुपः (पो) प्राप्तौ निपातनवशादन्तश्शब्दादपि मतुबिति भावः। ननु भवतु अन्तर्वदिति निपातनमप्राप्तविधानार्थकम् । पतिवदिति निपातने किम् ? पतिरस्या अस्तीति अस्ति समानाधिकरणात्पतिशब्दान्मतुपस्सम्भवादित्यत आह–वत्त्वं निपात्यत इति। मादुपधायाश्च मतोर्वोऽयवादिभ्य इति झय इति च सूत्राभ्यां हि असंज्ञायां मस्य वत्त्वं विधीयते, तदुभयसूत्रलक्ष्यत्वं प्रकृते मतुपो मस्य इवर्णान्तत्वेन नास्तीति वत्त्वादेशाभावात्। पतिवदिति निपातनवशाद्वत्वमिति भावः।

41. " पत्युर्नो यज्ञ संयोगे – यज्ञसंयोगे गम्यमाने पति शब्दस्य स्त्रियां नकारादेश स्स्यात् । अलोन्त्यस्येत्यन्त्यस्य इवर्णस्य नत्वं नान्तत्वात् ङीप् पत्नी, यस्याः पतिर्यज्ञकर्ता सेव भार्या पत्नीपदाभिधेया नान्याः स्त्रियस्स्वतो यज्ञविध्यभावात् । पुरुषस्य च केवलस्य यज्ञविध्यभावात् । अस्ति स्त्रियाः भर्तृकृतयज्ञेन संबन्ध इति भावः ।

42. विभाषा स पूर्वस्य- अत्र प्राक्सूत्रात् पत्युरिति न इति च अनुवर्त्यते। प्रातिपदिकस्येत्यधिकारः तम्प्रति पत्युरिति विशेषणं तेन येन विधिरिति तदन्तविधिः, तदेतदालोच्याह–पतिशब्दान्तस्य सपूर्वस्य प्रातिपदिकस्येति। नन्विह सपूर्वस्येति व्यर्थम्। पतिशब्दान्तं सपूर्वमेव भवति। न त्वपूर्वमिति चेन्मैवम्। सपूर्वस्येत्यस्याभावे पतिशब्दान्तस्येत्यर्थालाभात्। न च दर्शितरीत्या विशेषणत्वात्तदन्तलाभ इति वाच्यम्।

गृहपत्नी अनुपसर्जनस्य इतीहोत्तरार्थमनुवृत्तमपि न पत्युर्विशेषणम्, किन्तु तदन्तस्य । तेन बहुव्रीहावपि । दृढपत्नी दृढपतिः । वृषलपत्नी वृषलपतिः । अथ वृषलस्य पत्नी, इति व्यस्ते कथमिति चेन्न । पत्नीव पत्नीत्युपचारात् । यद्वा, आचारक्विबन्तात्कर्तरि क्विप् । अस्मिंश्च पक्षे, पत्नियौ, पत्नियः, इतीयङ्विषये विशेषः । सपूर्वस्य किम्–गवां पतिः स्त्री । ४९२ **नित्यं सपत्न्यादिषु** । ।४।१।३५। पूर्वविकल्पापवादः । समानस्य सभावोऽपि निपात्यते । समानः पतिर्यस्याः सा सपत्नी । एकपत्नी । वीरपत्नी ।

---

सपूर्वस्याभावे पत्युर्न इति सूत्रे इव पतिशब्दस्येत्येवार्थस्यौचित्यात्। ननु पूर्वसूत्रेपि प्रातिपदिकस्येत्यस्याधिकृतत्वेन कथन्तत्र न तदन्तविधिरिति चेदुच्यते। तदन्तविधिमविवक्ष्य पतिशब्दस्वरूपं यत्प्रातिपदिकन्तस्येत्यर्थात्। प्रातिपदिकाधिकारस्यास्मिन्सूत्रे अविवक्षाया वा। अथवा सत्यपि तदन्तविधौ न क्षतिः। व्यपदेशिवद्भावेन पतिशब्दस्यापि पति शब्दान्तत्वाभ्युपगमात्। तस्मात्, विभाषासूत्रे अनुवृत्तस्य पत्युरित्यस्य प्रातिपदिकविशेषणत्वेन तदन्तविधिरस्तीति सूचनाय सपूर्वग्रहणम्। सत्यपि तदन्तविधौ व्यपदेशिवद्भावेन केवलस्यापि पतिशब्दस्य विभाषा न स्यादिति तद्वारणाय वा इति सिद्धम् ।

ननु विभाषासूत्रेऽपि मास्तु पतिशब्दे तदन्तविधिः, सपूर्वस्य पतिशब्दस्येत्येतावतोक्तौ पतिशब्दान्तस्य लाभात्, किञ्च पतिशब्दान्तस्य सपूर्वस्येत्युक्तौ यः पतिशब्दान्तः तस्मादपि कश्चन पूर्वोऽवश्यं वर्तेत, तथा च गृहपत्नीति न सिद्ध्येत्, रम्यगृहपत्नीति तु सिद्ध्येत्। एतद्दोषवारणाय पूर्वशब्दस्य पूर्वावयवे लक्षणा कल्पनीया स्यात् । तथा च लक्षणाकल्पनक्लेशोप्यस्मिन्नर्थेऽधिक इति बोध्यम् इति चेन्मैवम्। गवां पतिः स्त्री इत्यत्रापि पतिशब्दस्य सपूर्वत्वात्। गवां पत्नी स्त्री इत्यपि पक्षे रूपापत्तेः। यथा सपूर्वायाः प्रथमाया विभाषेति "भक्तस्त्ववमप्यहन्तेन हरिस्त्वां त्रायते स मां" इत्यत्र युष्मदस्मदोस्सपूर्वत्वेन हरिस्त्वा त्रायते स मा इत्यपि पाक्षिकं रूपं भवति, तस्मात्पतिशब्दान्तस्य समासस्यैवेत्यर्थसिद्ध्यर्थं सपूर्वशब्दगतपूर्वपदस्य पूर्वावयवे लक्षणा कल्पनीयैव ।

43. आचारक्विबन्ताद्वा कर्तरि क्विप्,–पत्नीवाचरति पत्नीयति श्रीरिव श्रयतीतिवत्। पत्नी क्वि इति स्थिते क्वेस्सर्वापहारे क्विबन्तस्य धातुत्वात्तिङि पत्नीति इति स्थिते कर्तरि शप् पत्नी अति सार्वधातुकार्धधातुकयोरिति गुणः। पत्ने अ ति अयादेशः पत्नयतीति आचारक्विबन्तस्य रूपम्, तस्मात् पुनः कर्तरि क्विपि पत्नी इति रूपम्। तस्य नान्तलक्षणो ङीप् पत्नी। अस्य क्विबन्तत्वेन धातुत्वादचि श्नुधात्वितीयङ् पत्नियौ पत्नियः ।

४९३ **पूतक्रतोरै च** । ।४।१।३६। अस्य स्त्रियामै आदेशो ङीप् च । **इयं त्रिसूत्री पुंयोगे एवेष्यते** (वा२४४९) पूतक्रतोः स्त्री पूतक्रतायी । यया तु क्रतवः पूताः स्यात्पूतक्रतुरेव सा' ४९४ **वृषाकप्यग्निकुसितकुसिदानामुदात्तः**। ४।१।३७। एषामुदात्त ऐ आदेशः स्यान्ङीप् च । वृषाकपेः स्त्री वृषाकपायी । 'हरविष्णू वृषाकपी ' इत्यमरः । ' वृषाकपायी श्रीगौर्योः' इति च । अग्नायी । कुसितायी, कुसिदायी । कुसिदशब्दो ह्रस्वमध्यो न तु दीर्घमध्यः ।४९५ **मनोरौ वा** । ।४।१।३८। मनुशब्दस्यौकारादेशः स्यादुदात्तैकारश्च वा, ताभ्यां सन्नियोगाशिष्टो ङीप्च । मनोः स्त्री मनायी, मनावी, मनुः । ४९६ **वर्णादनुदात्तात्तोपधात्तो नः** । ।४।१।३९। वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात्प्रातिपदिकाद्वा ङीप्स्यात् तकारस्य नकारादेशश्च । एनी, एता । रोहिणी, रोहिता ।

---

44. इदन्त्रिसूत्री – पूतक्रतोरैच वृषाकपीति मनो रौवा इति सूत्रत्रयमित्यर्थः।

45. ताभ्यां सन्नियोगशिष्टो ङीप् च–वेति शेषः। यदा तु ऐत्वमौत्वं वा स्यात्तदैव तत्सन्नियोगशिष्टो ङीप् स्यात्, यदा तु न तदुभयान्यतरं स्यात् तदा ङीबपि नैवेति भावः। अत एव मनुरिति एत्वौत्वाभावपक्षे एकमेव रूपम्। अन्यथा पक्षे मन्वी इत्यपि रूपं स्यादिति बोध्यम् ।

46. वर्णादनुदात्तात्तोपधात्तो नः–अत्र संख्याव्ययादेरिति सूत्रात् ङीप्, अजाद्यत इति सूत्रादतः इति पदद्वयम्मण्डूकप्लुत्या संबध्यते। मनो रौवेत्यतो वेति पदस्यात्रानुवृत्तिः। अनुपसर्जनात्प्रातिपदिकादिति चाधिकारः। अनुदात्तादिति तोपधविशेषणम्। तोपधादिति तु प्रातिपदिकविशेषणम्। तेन तदन्तविधिः। तदेतत्सर्वमभिप्रेत्याह कौमुदीकारः–वर्णवाची योऽनुदात्त इत्यादि। तस्य नादेशो ङीप् सन्नियोगशिष्टः। तेन यदा ङीप् तदा तस्य नः यदा तु न ङीप् तदा नतो नः। अतः एती इति रूपमसाधु। ननु वर्णवाची योऽनुदात्तादन्तस्तोपधश्शब्दः एत इत्ययम्। तदन्तं यदनुपसर्जनं प्रातिपदिकमित्युक्ते परमैतशब्द एव भवेत्। न त्वेतशब्द इति एनीति रूपमप्यसाध्वेवेति चेन्मैवम्। व्यपदेशिवद्भावेन तस्मिंस्तदन्तत्वाभ्युपगमात्। नन्वेवं तोपधात्प्रातिपदिकादित्युक्तेपि स्त्रीप्रत्ययेषु तदन्तविध्यभ्युपगमेन एनीति परमैणीत्यपि रूपद्वयं सिद्ध्यत्येवेति। तोपधान्तादिति किम्? इति चेत्सत्यम्। त्वदुक्तरीत्या यथा सूत्रोक्तात्तोपधादित्यस्मात्तोपधान्तादपि ङीप् सिद्ध्येत्, तद्विवरणार्थमेव कौमुद्यां तथोक्तमिति। वस्तुतस्तु लाघवात् कौमुद्यामपि तोपधात्प्रातिपदिकादित्येव वृत्तिस्सुवचा। अनुपसर्जनात्किम्? अन्यतो ङीष् कल्माषी, वर्णात्किम्? अजाद्यतष्टाप्, गता तस्य उपधात्वेन किम्? ताम्रा। गृह्यं गृह्यसूत्रं पुनरपि।

वर्णानां तणतिनितान्तानाम् ' (फि ३३) इति फिट्सूत्रेणाद्युदात्तः । 'त्र्येण्या शलल्या' इति गृह्यम् । त्रीण्ययेतान्यस्या इति बहुव्रीहिः । अनुदात्तात् किम्-श्वेता । घृतादीनां च (फि २१) इत्यन्तोदात्तोऽयम् । अत इत्येव । शितिः स्त्री । **'पिशङ्गादुपसंख्यानम्'** (वा २४५५) । पिशङ्गी , पिशङ्गा । **'असितपलितयोर्न'** (वा २४५३) । असिता । पलिता । **'छन्दसि क्नमेके'** (वा २४५४) असिक्नी । पलिक्नी । अवदातशब्दस्तु न वर्णवाची, किन्तु विशुद्धवाची । तेन अवदाता इत्येव । ४९७ **अन्यतो ङीष्** । ।४।१।४०। तोपधभिन्नाद्वर्णवाचिनोऽनुदात्तान्तात्प्रातिपदिकात्स्त्रियां ङीष् स्यात् । कल्माषी । सारङ्गी । 'लघावन्ते द्वयोश्च बह्वषो गुरुः' (फि ४२) इति मध्योदात्तावेतौ । अनुदात्तान्तात् किम्-कृष्णा, कपिला । ४९८ **षिद्गौरादिभ्यश्च** । ।४।१।४१। षिद्भ्यो गौरादिभ्यश्च ङीष् स्यात् । नर्तकी । गौरी । 'अनडुहः स्त्रियाम् आम् वा' (वा ४३७८) अनड्वाही, अनडुही । 'पिप्पल्यादयश्च' (ग ४७) आकृतिगणोऽयम् । ४९९ **सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः** । ।६।४।१४९। अङ्गस्योपधाया यस्य लोपः स्यात्स चेद्यः सूर्याद्यवयवः । **'मत्स्यस्य ङ्याम्'** ( वा ४१६८) । **'सूर्यागस्त्ययोश्छे च ङ्यां च'** (वा ४१९९) । **'तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्'** (वा ४२००) । मत्सी । **' मातरि षिच्च '** (वा २७१०) इति षित्त्वादेव सिद्धे गौरादिषु मातामहीशब्दपाठादनित्यः षितां ङीष् । दंष्ट्रा ।

---

तोपधविचार एवावशिष्टः क्रियते तोपधान्तादनुपसर्जनादित्यनुक्तौ त्र्येणीति न सिद्ध्येत् तोपधस्य उपसर्जनत्वादत्र। तस्मादत्येनीत्यपि पाक्षिकं रूपं स्यात्। किन्तु बहुळात्येनी अतित्र्येणीत्यादीनि तु रूपाण्यप्रामाणिकानि तोपधान्तस्याप्युपसर्जनत्वात् ।अतो यथास्थिता कौमुदी रमणीया इति बोध्यम्, न चैवं तोपधात् प्रातिपदिकादिति वस्तुतो मतम् न संगच्छत इति वाच्यम्। प्रातिपदिकविशेषणत्वेन स्त्रीप्रत्ययेषु तदन्तविधिना वा तोपधादित्युक्तावपि तोपधान्तादनुपसर्जनादित्यर्थलाभेन त्र्येणीत्यादिरूपं सिद्ध्यत्येव। यथा तदन्तविधेः प्राक् तोपधस्यानुपसर्जनत्वेन एणीत्यादिरूपं सिद्ध्यति इत्यलं विस्तरेण ।

47. नर्तकी-नृती गात्रविक्षेपे इति धातोश्शिल्पिनि ष्वुनि नृत् ष्वुन् षकारनकारयोरित्वम्। युवोरनाकाविति अकादेशः नृत् अक लघूपधगुणः नर्तक ङीष् नर्तकी ।

48. सू. सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः-सूर्यादीनामुपधाया यस्य लोपस्स्यादित्युक्तौ सूर्याच्छे ङीषि च सूर्यीयः सूर्यी इति स्थिते सूर्यी इत्यत्र यस्य उपधात्वेपि सूर्यीय इत्यत्र यस्य उपधात्वं न स्यादिति लोपो नैवेति सूरीय इति न सद्ध्येत्। अतः अङ्गस्येति पदस्य ग्रहणम्। तथा च छे परे यदङ्गं सूर्य इत्याकारकं तस्य उपधा तु य एवेति, यस्य

५०० जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु । ।४।१।४२।

एभ्य एकादशभ्यः प्रातिपदिकेभ्यः क्रमाद् वृत्त्यादिष्वर्थेषु ङीष् स्यात् । जानपदी वृत्तिश्चेत्, अन्या तु जानपदी । उत्सादित्वादञन्तत्वेन 'टिड्ढाणय्–' (सू ४७०) इति ङीप्स्याद्युदात्तः । कुण्डी अमत्रं चेत्, कुण्डान्या । ' कुडि दाहे ' । ' गुरोश्च हलः (सू ३२८०) इत्यप्रत्ययः । यस्तु 'अमृते जारजः कुण्डः' इति मनुष्यजातिवचनस्ततो जातिलक्षणो ङीष् भवत्येव । अमत्रे हि स्त्रीविषयत्वादप्राप्तो ङीष् विधीयते, न तु नियम्यते । गोणी आवपनं चेत् । गोणान्या । स्थली अकृत्रिमा चेत्, स्थलाऽन्या । भाजी श्राणा चेत्, भाजान्या। नागी स्थूला चेत्, नागाऽन्या । गजवाची नागशब्दः स्थौल्यगुणयोगादन्यत्र प्रयुक्त उदाहरणम् । सर्पवाची तु दैर्घ्यगुणयोगादन्यत्र प्रयुक्तः प्रत्युदाहरणम् ।। काली वर्णश्चेत्, कालाऽन्या । नीली अनाच्छादनं चेत् , नीलाऽन्या, नील्या रक्ता शाटीत्यर्थः ।

---

लोपे सूरीय इति सिद्ध्यत्येवेति। सूर्यात् पुंयोगे ङीषि सूर्याच्छे च ङ्यां चेति ङ्यां (ङीप् प्रत्यये) यलोपेन सूर्यस्य स्त्री सूरी इति रूपम्। तिष्यादणि टिड्ढाणञिति ङीपि तिष्ये भवा तैषी, अगस्त्यात्पुंयोगे ङीषि अगस्त्यस्य स्त्री आगस्त्यी मत्स्यात् गौरादिपाठेन ङीषि मत्सी इति मत्स्यस्य ङ्यामिति सूर्यागस्त्ययोश्छे च ङ्यां चेति च वार्तिकद्वयं नियमार्थम्। कोऽसौ नियमः? सूर्याद्यङ्गावयवस्य यस्य उपधाभूतस्य लोपे ङ्यां परतश्चैवेति ङ्यामिति निरनुबन्धक ङीग्रहणेन ङीप्ङीषोरविशेषेण ग्रहणम् ।

49. मातरि षिच्च–पितृव्यमातुलेति सूत्रे वार्तिकमिदम्। अर्थस्तु पितृमातृभ्यां पितरि डामहच् इति पूर्ववार्तिकात्पितृमातृभ्यामिति डामहजिति चानुवर्त्येते। पितृमातृभ्याम्मातरि डामहच् स्यात्, स च षित्स्यादिति। षित्वातिदेशफलन्तु षिद्गौरादिभ्यश्चेति ङीष्, एतेन गैरादिषु मातामहशब्दपाठोऽपार्थक इति फलितम्। अतस्तत्सार्थक्याय कश्चिदुपायोऽन्वेषणीयः। स च उपायः षिद्गौरादिभ्यश्चेति सूत्रस्य षिद्भ्यो ङीष् विकल्पेन स्यात्, गौरादिभ्यस्तु नित्यं स्यादित्यर्थाश्रयणरूपः। एवञ्च मातामहशब्दात् षित्वेन ङीष्विकल्पे प्राप्ते नित्यार्थको गौरादिषु मातामहीपाठ इति लब्धम् ।

50. अन्या तु जानपदी–जनपदशब्दस्य उत्सादिगणपठितत्वेन उत्सादिभ्योऽञ् इति प्राग्दीव्यतीयेष्वर्थेषु जनपदशब्दादञि कृते अञन्तस्य टिड्ढाणञिति ङीपि जानपदी इत्येव वृत्तीतरार्थवोधकत्वेपि रूपम्। किन्त्वयमाद्युदात्त इति विवेकः।

'**नील्या अन् वक्तव्यः**' (वा २६८०) इत्यन् । अनाच्छादनेऽपि न सर्वत्र, किन्तु '**नीलोदोषधौ**' (वा २४५६) नीली । '**प्राणिनि च**' (वा २४५८) । नीली गौः । '**संज्ञायां वा**' (वा २४५७) । नीली, नीला । कुशी अयोविकारश्चेत् , कुशाऽन्या । कामुकी मैथुनेच्छा चेत् , कामुकाऽन्या । कबरी केशानां सन्निवेशश्चेत्, कबराऽन्या-चित्रेत्येर्थः ।५०१ **शोणात्प्राचाम्** । ।४।१।४३। शोणी, शोणा । ५०२ **वोतो गुणवचनात्** । ।४।१।४४। उदन्ताद् गुणवाचिनो वा ङीप् स्यात् । मृद्वी, मृदुः । उतः किम्-शुचिः । गुण इति किम्-आखुः । '**खरुसंयोगोपधान्न**' (वा २४६०) 'खरुः पतिंवरा कन्या' । पाण्डुः । ५०३ **बह्वादिभ्यश्च** । ।४।१।४५। एभ्यो वा ङीष्स्यात् । बह्वी, बहुः । '**कृदिकारादक्तिनः**' (ग ५०) रात्रिः, रात्री । '**सर्वतोऽक्तिन्नर्थादित्येके**' (ग ५१) शकटिः, शकटी । अक्तिन्नर्थात् किम्-अजननिः । क्तिन्नन्तत्वादप्राप्ते विध्यर्थं पद्धतिशब्दो गणे पठ्यते । 'हिमकाषिहतिषु च' (सू ९९२) इति पद्भावः । पद्धतिः, पद्धती ।५०४ **पुंयोगादाख्यायाम्** । ।४।१।४८। या पुमाख्या पुंयोगात्स्त्रियां वर्तते, ततो ङीष् स्यात् । गोपस्य स्त्री गोपी । '**पालकान्तान्न**' (वा २४६१) गोपालिका । अश्वपालिका । '**सूर्याद्देवतायां चाब्वाच्यः**' (वा २४७१) । सूर्यस्य स्त्री देवता सूर्या । देवतायां किम्-सूरी कुन्ती, मानुषीयम् ।

---

51. श्रीभाष्यकारसिद्धान्तरीत्या गुणस्येदमनुगतं लक्षणं जातिक्रियाद्रव्यभिन्नत्वे सति द्रव्यवृत्तिर्धर्मो गुणः ।

52. खरुसंयोगोपधान्न-खरुसंयोगोपधयोस्समावोंतोगुणवचनादिति प्राप्तोङीष् निषिध्यते। संयोगोपधस्य तु संयोगोपधं यदुदन्तं गुणवचनन्तस्मात् ङीष् नेति उतो गुणवचनादिति पदद्वयमनुवर्त्य व्याख्यानेन ङीष् निषिध्यत इति बोध्यम्। पाण्डुः स्त्री, संयोगोपधस्योदाहरणम्दम्। गुणवचनत्वद्योतनाय पतिं वरेति विशेषणं खरुशब्दस्य। वस्तुतस्तु पाण्डुवर्णा स्त्री पाण्डुरिति पाण्डुवर्णगुणवचनत्वं पाण्डुशब्दे स्वत एव वर्तत इति पतिंवरेति विशेषणं चिन्त्यफलम्।

53. कृदिकारादक्तिनः-क्तिन्भिन्नकृदिकारान्तात् स्त्रियां ङीष् वा स्यादित्यर्थः। सर्वतोक्तिन्नर्थादित्येके, क्तिन्नर्थप्रत्ययभिन्नेकारान्तात् स्त्रियां ङीष् वेति मतान्तरम्। अत एव आळिः आळी कालिः काळी काशिः काशी इत्यादिरूपाणां प्रामाणिकत्वम्। स्त्रियां क्तिन्निति येषु भावादिष्वर्थेषु क्तिन्प्रत्ययस्स्यात्तेष्वर्थेषु ये ये प्रत्ययाः स्युः तत्प्रत्ययभिन्नप्रत्ययान्तात्। क्तिन्भिन्नप्रत्ययान्ताच्च ङीष्वास्यादिति मतान्तरस्य यावदर्थः।

५०५ **इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्** । ।४।१।४९। एषामानुगागमः स्यान्ङीष् च । इन्दादीनां षण्णां मातुलाचार्ययोश्च पुंयोग एवेष्यते, तत्र ङीषि सिद्धे आनुगागममात्रं विधीयते । इतरेषां चतुर्णामुभयम् । इन्द्राणी । '**हिमारण्ययोर्महत्त्वे**' (वा २४७२) महद्धिमं हिमानी । महदरण्यम् अरण्यानी । '**यवाद्दोषे**' (वा २४७३) दुष्टो यवो यवानी। '**यवनाल्लिप्याम्**' (वा २४७४) यवनानां लिपिर्यवनानी । **मातुलोपाध्याययोरानुग्वा** । मातुलानी, मातुली । उपाध्यायानी, उपाध्यायी । **'या तु स्वयमेवाध्यापिका तत्र वा ङीष् वाच्यः'** । उपाध्यायी, उपाध्याया । **'आचार्यादणत्वं च'** (वा २४७७) । आचार्यस्य स्त्री आचार्यानी पुंयोग इत्येव, आचार्या, स्वयं व्याख्यात्री । '**अर्यक्षत्त्रियाभ्यां वा स्वार्थे** (वा २४७८) । अर्याणी, अर्या । स्वामिनी वैश्या वेत्यर्थः । क्षत्त्रियाणी, क्षत्त्रिया । पुंयोगे तु अर्यी । क्षत्त्रियी । कथं 'ब्रह्माणी' इति । ब्रह्माणमानयति जीवयतीति 'कर्मण्यण्' (सू २९१३) । ५०६ **क्रीतात्करणपूर्वात्** । ।४।१।५०। क्रीतान्ताददन्तात्करणादेः स्त्रियां ङीप्स्यात् । वस्त्रक्रीती । क्वचिन्न, धनक्रीता । ५०७ **क्तादल्पाख्यायाम्** । ।४।१।५१। करणादेः क्तान्ताददन्तात्स्त्रियां ङीष् स्यादल्पत्वे द्योत्ये । अभ्रलिप्ती द्यौः । अल्पाख्यायाम् किम्–चन्दनलिप्ता अङ्गना । ५०८ **बहुव्रीहेश्चान्तोदात्तात्** । ।४।१।५२। बहुव्रीहेः क्तान्तादन्तोदात्താददन्तात्स्त्रियां ङीप्स्यात्। '**जातिपूर्वादिति वक्तव्यम्**' (वा २४८४) । तेन 'बहुनञ्सुकालसुखादिपूर्वान्न'। ऊरूभिन्नी । नेह – बहुक्रीता । **'जातान्तान्न**' (वा २४७९) । दन्तजाता । '**पाणिगृहीती भार्यायाम्**' (वा २४८०) । पाणिगृहीता अन्या ।

---

54. जातिपूर्वादिति वक्तव्यम्। जातिपूर्वाद्बहुव्रीहेश्चान्तोदात्तादिति सूत्रयितव्यमित्यर्थः, जातिर्नाम नित्यमेकमनेकानुगतं सामान्यमिति तर्कसङ्ग्रहे भणितम् । अत्र तु अन्यथा भण्यते। तच्च जातेरस्त्रीविषयादिति सूत्रव्याख्यानावसरे कैमुद्यामेव स्फुटीकृतम्। ऊरुदन्तसुरावस्त्रादीनामाकृतिग्रहणा जातिरिति जातित्वम्, बह्वल्पादीनां गुणत्वमेव न जातित्वमाकृतिग्रहणाभावात् ।

55. वस्त्रच्छन्ना–वस्त्रस्य जातित्वेपि जातिकालसुखादिभ्यो नाच्छादनादित्याच्छादनवाचित्वेन उदात्तत्वनिषेधात्। अन्तोदात्तत्वराहित्येन न ङीष्, अत एवेत्यस्य अन्तोदात्तत्वाभावेनैवेत्यर्थः। पूर्वेणापि पूर्वसूत्रेणापि अत एव पूर्वेणापि न ङीष्। इति कथनन्तु वस्तुकथनमात्रमेव, तदपि मन्दानुजिघृक्षार्थम्। न तु पुनश्शङ्कागर्भितम्। बहुव्रीहेश्चान्तोदान्तादिति सूत्रानुवर्तनेनैव अस्वाङ्गपूर्वपदाद्वेति सूत्रात्प्रसक्तस्य वस्त्रच्छन्नेत्यत्र ङीषः निषिद्धत्वात् ।

५०९ **अस्वाङ्गपूर्वपदाद्वा** । ।४।१।५३। पूर्वेण नित्ये प्राप्ते विकल्पोऽयम् । सुरापीती, सुरापीता । 'अन्तोदात्तात्' किम्–वस्त्रच्छन्ना । 'अनाच्छादनात्' इत्युदात्तनिषेधः, अत एव पूर्वेणापि न ङीष् । ५१० **स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्** । ।४।१।५४। असंयोगोपधमुपसर्जनं यत्स्वाङ्गं तदन्ताददन्तात्प्रातिपदिकाद्वा ङीष् । केशानतिक्रान्ता अतिकेशी, अतिकेशा । चन्द्रमुखी, चन्द्रमुखा । संयोगोपधात्तु सुगुल्फा । उपसर्जनात् किम्–शिखा । स्वाङ्गं त्रिधा –

**' अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् ।'**

सुस्वेदा, द्रवत्वात् । सुज्ञाना, अमूर्तत्वात् । सुमुखा शाला, अप्राणिस्थत्वात् । सुशोफा, विकारजत्वात् ।

**'अतत्स्थं तत्र दृष्टं च'**

सुकेशी सुकेशा वा रथ्या, अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात् ।

**'तेन चेत्तत्तथा युतम् ।।'**

सुस्तनी, सुस्तना वा प्रतिमा, प्राणिवत्प्राणिसदृशे स्थितत्वात् ।

---

56. शिखा–शोभना शिखा सुशिखा। ननु अत्र उपसर्जनात्किमित्यस्य शिखेत्येतद्वा सुशिखेत्येतद्वा प्रत्युदाहरणं स्यात् न ह्युभयमपि घटते, शिखेत्यस्य असंयोगोपधत्वादन्तत्वयोस्सतोरपि तदन्तत्वाभावेनैव ङीषः प्राप्त्यभावात् । सुशिखेत्यस्य तु असंयोगोपधत्वतदन्तत्वयोस्सतोरपि अदन्तत्वाभावेनैव ङीषभावात्। शोभना च सा शिखा च सुशिखा इति आदन्तत्वात् इति चेदुच्यते, शिखेत्येतदेव स्यात्। व्यपदेशिवद्भावेन तस्यैव तदन्तत्वाभ्युपगमात्। शोभना शिखा यस्यास्सा इति समासे तु सुशिखी सुशिखेत्यपि स्यात्। तदत्रोदाहरणमेव। गोस्त्रियोरुपसर्जनस्येति समासात्प्रागुत्पन्नायाष्टापो ह्रस्वादेशेन सुशिखशब्दस्य अदन्तत्वात् स्वाङ्गस्य शिखाया उपसर्जनत्वाच्च। नन्वेवं चेत् शोभना शिखा सुशिखा इति किमर्थं वचनमिति चेदुच्यते, उपसर्जनात्किम् शिखा। उपसर्जनात् अदन्ताच्चेति किम्? शोभना शिखा सुशिखा इति स्थितस्य गतिः कल्पनीया ।

57. स्वाङ्गं–स्वपदेन कृत्रिमाकृत्रिमदेहयोरन्यतरल्लक्ष्यते, तदेकदेशोऽङ्गं प्रसिद्धं करचरणादिकम्। तेन न स्वेदशोफादीनामङ्गत्वं प्रसिद्ध्यभावात् स्वस्याङ्गं स्वाङ्गम्। कृत्रिमा कृत्रिम देहान्यतर सम्बन्धि प्रसिद्धाङ्गम् स्वाङ्गमित्यर्थः। एतेन ज्ञानस्य देहाङ्गत्वाभावात् सुज्ञाना। स्वेदशोफादीनामङ्गत्वाप्रसिद्धेः सुस्वेदा सुशोफा रथ्यायां वर्तमानानामपि केशानामकृत्रिमदेहाङ्गत्वात् सुकेशी रथ्या प्रतिमास्तनस्य कृत्रिमदेहाङ्गत्वेन सुस्तनी प्रतिमा इत्यादीनि रूपाणि यथातथं सिद्ध्यन्ति ।

५११ **नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च** । ।४।१।५५। एभ्यो वा ङीष् स्यात् । आद्ययोर्बह्वज्लक्षणो निषेधो बाध्यते, पुरस्तादपवादन्यायात् । ओष्ठादीनां पञ्चानां तु 'असंयोगोपधात्' इति पर्युदासे प्राप्ते वचनम्, मध्येऽपवादन्यायात् । सहनञ् लक्षणस्तु प्रतिषेधः परत्वादस्य बाधकः । तुङ्गनासिकी-तुङ्गनासिकेत्यादि । नेह । सहनासिका, अनासिका । अत्र वृत्तिः-'**अङ्गगात्रकण्ठेभ्यो वक्तव्यम्** । स्वङ्गी, स्वङ्गेत्यादि । एतच्चानुक्तसमुच्चयार्थेन चकारेण संग्राह्यमिति केचित् । 'भाष्याद्यनुक्तत्वादप्रमाणम्'। इति प्रामाणिकाः ।

---

58. नासिकोदरौष्ठजंघादन्तकर्णशृङ्गाच्च-स्वाङ्गाच्चोपसर्जनादिति सूत्रादेव नासिकोदरयो ङीषि प्राप्ते सति किमित्यत्र तयोर्ग्रहणम् । यदि नियमार्थं स्यात्तर्हि नासिकोदरान्तयोरेव ङीष् स्यात् न तु केशाद्यन्तयोरिति अतिकेशी चन्द्रमुखी इत्यादिरूपाणामसिद्धिः। अत आह आद्ययोर्बह्वज्लक्षणो निषेधो बाध्यते पुरस्तादपवादन्यायादिति कौमुदी। नासिकोदरयोस्स्वाङ्गाच्चेति प्राप्तस्य ङीषः न क्रोडादिबह्वच इत्यनेन परेण बाधे प्राप्ते, नासिकोदरेति सूत्रस्य अपवादत्वेन परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयस्त्वात्परमपि न क्रोडादिबाधित्वा नासिकोदरेति ङीषः प्रवृत्तिरिति भावः। एतेन अपवदार्थ नासिकोदरग्रहणमिति फलितम्। ननु नासिकोदरग्रहणस्य अपवादत्वेन क्रोडादि सूत्रमिव स्वाङ्गाच्चेति सूत्रमपि कर्म नासिकोदरग्रहणं बाधताम्। किञ्च ततोऽपि परं सह नञ् सूत्रञ्च बाधतामिति चेन्मैवम्-पुरस्तादपवादन्यायात्। पुररस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरानिति न्यायात् स्वाङ्गाच्चेति विधिशास्त्रम् ततः पुरस्तात् नासिकोदरेत्यपवादशास्त्रम् तदनन्तरं न क्रोडादीति निषेधशास्त्रम् तदुत्तरत्र सह नञिति सूत्रम्। अत्र पुरस्तादपवादशास्त्रं नासिकोदरेति कर्तृ अनन्तरं विधिं न क्रोडादीति निषेधं बाधते(विधिमात्रसामान्यम्, न तु पुनः संज्ञा च परिभाषा च विधिर्नियम एव चेत्युक्तविशेषवाचकविधिशास्त्रम्। (तथात्वे प्रकृतस्य न क्रोडादिसूत्रस्य निषेधशास्त्रत्वेन अविधित्वप्रसङ्गात्। उत्तरन्तु सह नञ् सूत्रं कर्म न बाधते इति। ओष्ठादीनां ग्रहणमपि अपवादार्थमेव। स्वाङ्गाच्चेति प्राप्तस्य ङीषः असंयोगोपधादिति निषिद्धत्वात्। अत्र न पुरस्तादपवादः। किन्तु मध्येऽपवादन्याय एव, स्वाङ्गाच्चेति विधिसूत्रस्य न क्रोडादीति निषेधशास्त्रस्य च मध्ये वर्तते ह्योष्ठादीनां ग्रहणम्। तस्मात् मध्येऽपवादभूतमोष्ठादिग्रहणं पूर्वमेव स्वाङ्गाच्चेति सूत्रं कर्म बाधते। नासिकोदरग्रहणं पुरस्तादपवादन्यायात् न क्रोडादिसूत्रं कर्म बाधते । ओष्ठादिग्रहणन्तु मध्येपवादन्यायात् स्वाङ्गाच्चेति सूत्रं कर्म बाधते । अतस्तदुभयबाधनार्थकमिदमपवादशास्त्रमिति यावत्। परत्वादस्य बाधकः अस्य नासिकोदरेति सूत्रस्य अपवादत्वेपि न क्रोडादिबाधने चरितार्थत्वेन दुर्बलत्वात् सह नञ्, सूत्रं परत्वादमुं बाधत इति भावः ।

59 कबरमणिविषशरेभ्यो नित्यम्-एतेभ्यः परस्मात्पुच्छात् ङीष् स्यादित्यर्थः।

अत्र वार्तिकानि । **'पुच्छाच्च** ( वा २४८६) । सुपुच्छी, सुपुच्छा । **कबरमणिविषशरेभ्यो नित्यम्** ' ( वा २४६०) । कबरं चित्रं पुच्छं यस्याः सा कबरपुच्छी मयूरीत्यादि । **उपमानात्पक्षाच्च पुच्छाच्च'** ( वा २४६१) नित्यमित्येव । उलूकपक्षी शाला । उलूकपुच्छी सेना । ५१२ **न क्रोडादिबह्वचः।** ।४।१।५६। क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष् । कल्याणक्रोडा । अश्वानामुरः क्रोडा । आकृतिगणोऽयम् । सुजघना । ५१३ **सहनञ्विद्यमानपूर्वाच्च** । ।४।१।५७ सहेत्यादित्रिकपूर्वान्न ङीष् । सकेशा । अकेशा । विद्यमाननासिका । ५१४ **नखमुखात्संज्ञायाम्** । ।४।१।५८। ङीष् न स्यात् । शूर्पणखा । गौरमुखा । संज्ञायाम् किम् –ताम्रमुखी कन्या । ५१५ **दिक्पूर्वपदान्ङीप्** । ।४.१।६०। दिक्पूर्वपदात्स्वाङ्गान्तात्प्रातिपदिकात्परस्य ङीषो ङीबादेशः स्यात् । प्राङ्मुखी । आद्युदात्तं पदम् । ५१६ **वाहः** । ।४।१।६१।वाहन्तात् प्रातिपदिकान्ङीष् स्यात् । ङीषेवानुवर्तते न ङीप् । 'दित्यावाट् च मे दित्यौही च मे' ।

---

उपमानात्पक्षाच्च पुच्छाच्च–उपमानवाचकशब्दात्परो यः पक्षशब्दः पुच्छशब्दश्च तस्मान्नित्यम् ङीष् स्यात्। उलूकस्येव पक्षौ पुच्छं च यस्यास्सा उलूकपक्षी उलूकपुच्छी च ।

60. न क्रोडादिबह्वचः–क्रोडः आदिर्यस्मिन्गणे स क्रोडादिः, बहवोऽचः यस्मिन्शब्दे स बह्वच्, उभयोरऽपि समाहारद्वन्द्वैक्यम्, टजभावस्सौत्रः, तस्मात् ङीष् न स्यात्, सुजघना इदं बह्वच उदाहरणम्।

61. भुजान्तरवाचिक्रोडशब्दस्य स्वाङ्गत्वात् ङीष्, विकल्प इति तत्वबोधिनी। ननु अश्वोरोवचनस्यापि क्रोडशब्दस्य कथमस्वाङ्गत्वमिति चेत् अजातित्वादिति विद्धि । ननु मनुष्यत्वब्राह्मणत्वयोर्यथा जातित्वं तथा उरस्त्वअश्वोरस्त्वयोरपि जातित्वमस्त्येव सन्ति ह्यश्वा बहवस्तेषामुरांस्यपि अनेकानि तेष्वनुगतं हि अश्वोरस्त्वं सामान्यमिति चेद्भवतु जातित्वस्वाङ्गत्वयोस्सतोरपि ङीष्विकल्पः तत्र न भवति कुतः? गणे क्रोडाशब्दपाठात्। अयं भावः, टाबन्तः क्रोडाशब्दः अश्वोरोवचनः क्रोडादिगणे पठितः न तु अदन्तः क्रोडशब्दः भुजान्तरवचनः, तेन क्रोडस्य निषेधाभावात् ङीष् विकल्प इतीदं सर्वं माधवमतमुपेक्ष्यमेव गणे क्रोडेति प्रातिपदिकमात्रस्यैव ग्रहणात् ।

62. नखमुखात्संज्ञायाम् । नखमखान्तात् प्रातिपदिकात् स्त्रियां ङीष् न स्यात् संज्ञायाम् वाच्यायाम् । ङीषः प्राप्तिस्तु स्वाङ्गाच्चोपसर्जनादिति सूत्रात् ।

63. ङीषो ङीबादेशः । फलन्तु स्वरे विशेषः। तदेवाह आद्युदात्तं पदमिति ।

५१७ **सख्यशिश्वीति** भाषायाम् । ।४।१।६२। इति शब्दः प्रकारे भाषायाम् इत्यस्यानन्तरं द्रष्टव्यः । तेन छन्दस्यपि क्वचित् । सखी । अशिश्वी । 'आ धेनवो धुनयन्तामशिश्वीः ।' ५१८ **जातेरस्त्रीविषयादयोपधात्** । ।४।१।६३। जातिवाचि यन्न च स्त्रिया नियतमयोपधं ततः स्त्रियां ङीष्स्यात् ।

**'आकृतिग्रहणा जातिः–**

अनुगतसंस्थानव्यङ्ग्चेत्यर्थः । तटी ।।

**–लिङ्गनां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या–'**

'असर्वलिङ्गत्वेन सत्येकस्यां व्यक्तौ कथनाद्व्यक्त्यन्तरे कथनं विनापि सुग्रहा जातिः' इति लक्षणान्तरम् । वृषली । सत्यन्तं किम्–शुक्ला । सकृदित्यादि किम्–देवदत्ता ।।

**–'गोत्रं च चरणैः सह ।'**

अपत्यप्रत्ययान्तः शाखाध्येतृवाची च शब्दो जातिकार्यं लभत इत्यर्थः । औपगवी । कठी । कलापी । बह्वृची । ब्राह्मणीत्यत्र तु शार्ङ्गरवादिपाठान्ङीना ङीष् बाध्यते । जातेः किम्–मुण्डा । अस्त्रीविषयात् किम्–बलाका । अयोपधात् किम् –क्षत्त्रिया । ' **योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः** ' (वा २४९५) । हयी । गवयी । मुकयी । ' हलस्तद्धितस्य ' (सू ४७२) इति यलोपः । (मनोर्जातावञ्यतौ षुक्च' (सू ११८५) । मनुषी । **'मत्स्यस्य ङ्याम्** ' (वा ४१९८) मत्सी ।

---

64. सख्यशिश्वीति भाषायाम् । भाषायां सखी अशिश्वी, निपात्येते । ननु सख्यशिश्विभाषायामित्येवालम् । किमितिना इति शङ्कायामाह । इति शब्दः प्रकारे इति कौमुदी । प्रकारो नाम सादृश्यम् । इदञ्च सादृश्यं किमपेक्षमित्यत आह । भाषायामित्यस्यानन्तरमिति कौमुदी । भाषायां तत्सादृश्ये च सख्यशिश्वी निपात्येत इत्यर्थः । भाषासादृश्यञ्च छन्दस्येव लोकवेदव्यतिरेकेणान्यस्य शब्दस्याभावादितिना छन्दोग्रहणात् । छन्दसि क्वचिदित्यर्थलाभः। तत्रादिनियतत्वे सख्यशिश्वी इत्येतावदेव सूत्रयितव्यमिति भावः ।

65. जातेरस्त्रीविषयादयोपधात् । एतत्सूत्रव्याख्याने तत्त्वबोधिन्यां स्वरूपन्तु न गृह्यते, अस्त्रीविषयत्वादेर्वैयर्थ्यादित्यस्यायं भावः। स्वं रूपं जातिरित्याकारकम् । तथा चास्त्रीविषयादयोपधाज्जातिशब्दात् स्त्रियां ङीष् स्यादित्यर्थः स्यात्। एवं सति जातिशब्दो न च स्त्रियां न नियतो नाप्ययोपधभिन्न इति व्यावर्त्याभावात्सूत्रे अस्त्रीविषयत्वा–योपधत्वविशेषणयोरानर्थक्यमिति, अनुगतसंस्थानव्यंग्या अनुगतं गवादिष्वनुवृत्तं यत्संस्थानं

५१९ **पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च** । ।४।१।६४। पाकाद्युत्तरपदाज्जातिवाचिनः स्त्रीविषयादपि ङीष् स्यात् । ओदनपाकी । शङ्कुकर्णी । शालपर्णी । शङ्खपुष्पी । दासीफली । दर्भमूली । गोवाली । ओषधिविशेषे रूढा एते । ५२० **इतो मनुष्यजातेः** । ।४।१।६५। ङीष्स्यात् । दाक्षी । योपधादपि, उदमेयस्यापत्यं स्त्री औदमैयी । मनुष्येति किम्–तित्तिरिः । ५२१ **ऊङुतः** । ।४।१।६६। उकारान्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात् । कुरूः ।

---

सास्नादिरूपावयवसन्निवेशः, तेन व्यङ्ग्या गोत्वादिर्जातिरित्यर्थः। सत्यन्तं किं शुक्ला, गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वतीत्यमरानुसारेण शुक्लशब्दस्य गुणवद्वाचकत्वे विशेष्यनिघ्नत्वेन त्रिलिङ्गत्वात् शुक्ला गौरित्येव न तु शुक्ली गौरिति भवेदिति भावः। वृषलीत्येष शब्दस्तु वृषलः वृषली इति लिङ्गद्वयभागेव, न तु त्रिलिङ्गभागिति जातिवाचक एव । बलाका, एतन्नामकेषु पक्षिषु पुंव्यक्तेरभावात् नियतस्त्रीलिङ्गोऽयं शब्दः। एतासां गर्भधारणन्तु अब्दयोगादेव, गर्भं बलाका दधतेऽब्दयोगान्नामके निबद्धावळयस्समन्तादित्युक्तत्वात्, मनुषी, मनोर्यत्प्रत्यये तस्य षुगागमे मनुशब्दात्परस्य तद्धितस्य यतः यो यः तस्य हलस्तद्धितस्येत्यनेन लोपः ।

66. इतो मनुष्यजातेः–मनुष्यजातिवाचको य इदन्तश्शब्दस्तस्मात् स्त्रियां ङीष् स्यात्। दाक्षी । दक्षशब्दादत इञ् । दक्षस्यापत्यं दाक्षिः तस्मात् स्त्रियां ङीषि दाक्षी ।

67. कुरूः–ननु अर्थवदधातुरप्रत्ययः प्रातिपदिकमिति अजादाक्षीत्यादीनां प्रत्ययान्तत्वेन स्वाद्युत्पत्त्यभावेऽपि ङ्याप्प्रातिपदिकादिति ङ्याबन्तत्वेन स्वाद्युत्पत्तिर्भवति हि, कथं पुनः कुरूशब्दादूङ्प्रत्ययान्तात्स्वाद्युत्पत्तिरिति शङ्कायामाह । लिङ्गविशिष्ट-परिभाषया स्वादय इति तत्वबोधिनी। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषा। ङ्याप्प्रातिपदिकादिति सूत्रे यत्प्रातिपदिकग्रहणं कृतं। तेन लिङ्गविशिष्टस्यापि ग्रहणं भवत्येवेत्यर्थः। डचन्तादाबन्तात्प्रातिपदिकात् लिङ्गविशिष्टाच्च स्वादयस्स्युरिति ङ्याप्प्रातिपदिकादिति सूत्रस्यार्थो वाच्य इति भावः। प्रकृते ऊङ्प्रत्ययस्य स्त्रियां जातत्वेन स्त्रीलिङ्गत्वाल्लिङ्गविशिष्टोयं कुरूशब्दः, तस्मात्स्वाद्युत्पत्तिरिति। ननु, कुरु ऊ अकस्सवर्णे दीर्घः, अस्य एकादेशस्य ऊ इत्यस्य आद्यन्तवदेकस्मिन्निति पूर्वान्तवद्भावेन ग्रहणे सति कुरू इत्येतत् प्रातिपदिकमेव भवति न तु प्रत्ययान्तमिति भवन्त्येव स्वादय इति किमनया लिङ्गविशिष्टपरिभषया इति चेन्मैवम्, काण्डाशीकाण्डे अत्रापि एकादेशस्य पूर्वान्तवद्भावेन काण्डे इत्यस्य प्रातिपदिकत्वादेकवचनमुत्सर्गतः करिष्यत इति सिद्धान्ता त्सोरुत्पत्तिस्स्यादिति। ननु एकादेशस्य पूर्वान्तवद्भावेन यथा प्रातिपदिकत्वं तथा परादिवद्भावेन प्रत्ययत्वमपीति भवत्येवाप्रत्यय इत्यनेनात्र प्रातिपदिकसंज्ञानिषेध इति चेन्मैवम्। उभयत आश्रयणे

'कुरूनादिभ्यो ण्यः' (सू ११९०) । तस्य ' स्त्रियामवन्ति–' (सू ११९५) इत्यादिना लुक् । अयोपधात् किम्–अध्वर्युः । **'अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम्'** (वा २५०२) रज्ज्वादिपर्युदासादुवर्णान्तेभ्य एव । अलाब्वा । कर्कन्ध्वा । अनयोर्दीर्घान्तत्वेऽपि 'नोङ्धात्वोः (सू ३७२१) इति विभक्त्युदात्तत्वप्रतिषेध ऊङः फलम् । प्राणिजातेस्तु कृकवाकुः । रज्ज्वादेस्तु रज्जुः, हनुः । ५२२ **बाह्वन्तात्संज्ञायाम्** । ।४।१।६७। स्त्रियामूङ् स्यात् । भद्रबाहूः । संज्ञाया किम्–वृत्तबाहुः । ५२३ **पङ्गोश्च** । ।४।१।६८। पङ्गूः । **'श्वशुरस्योकाराकारलोपश्च'** (वा ५०३९) चादूङ् । पुंयोगलक्षणस्य ङीषोऽपवादः । लिङ्गविशिष्टपरिभाषया स्वादयः । श्वश्रूः ।५२४ **ऊरूत्तरपदादौपम्ये** । ।५।१।६९। उपमानवाचिपूर्वपदमूरूत्तपदं यत्प्रातिपदिकं तस्मादूङ् स्यात् । करभोरूः ।

---

नान्तादिवत् इति निषेधात्। ननु काण्डे इत्यत्र प्रकृतिप्रत्यययोराकारेकारयोस्स्थाने जातो य एकादेश एकारः स न प्रकृतिर्न च प्रत्ययः। किन्तु तदुभयात्मकत्वेन प्रत्ययसदृश एवेति काण्डे इत्येतत्प्रत्ययान्तसदृशत्वेन प्रत्ययान्तभिन्नमेवेति अप्रत्यय इत्यस्य पर्युदासत्वेन व्यवहारपक्षे काण्डे इत्यस्यास्त्येव प्रातिपदिकत्वमिति भवन्त्येव स्वादय इति चेन्मैवम्। प्रसज्यप्रतिषेधाश्रयणपक्षे प्रातिपदिकत्वाभावात् (अप्रत्यय इत्यस्य प्रत्ययान्तं वर्जयित्वेत्यर्थाश्रयणपक्षे एकादेशस्य परादिवद्भावेन काण्डे इत्यस्य प्रत्ययान्तत्वादिति भावः। एवं कुरू इत्यत्रापि एकादेशस्य परादिवद्भावेन प्रत्ययान्तत्वान्न स्वादय इति हेतोर्लिंगविशिष्टपरिभाषावश्यमत्राभ्युपेया।

68. अलाब्वा, कर्कन्ध्वा इति तृतीयान्ते रूपे अलाबूः कर्कन्धूः इति प्रथमान्ते। ननु अनयोरूकारान्तत्वादुक्तरूपसिद्धिर्भवत्येवेति किं पुनिरूङ्विधानेनेत्यत आह अनयोरित्यादिकम्।

69. ऊरूत्तरपदादौपम्ये। औपम्ये सादृश्ये गम्यमाने सति ऊरूत्तरपदादूङ स्यादिति उत्तरपदेन पूर्वपदस्याक्षेपः। तच्च पूर्वपदमौपम्यगमकं भवेत्। अन्यथा उपमानोपमेयाभ्यां विना सादृश्यगमकत्वायोगात्। तदेतदभिलक्ष्याह उपमानवाचीत्यादि। ऊरोरुपमानादेः इति न्यासस्तु सुवचः। उपमानमाद्यवयवो यस्य तस्मात् ऊरोरू(दू)र्वन्तात् (येन विधिस्तदन्तस्येति परिभाषया इति भावः)(प्रतिपदिकात् स्त्रियामूङ् स्यादित्यर्थः)। न च हस्तिस्वाम्यूरुरित्यत्रातिव्याप्तिर्वाच्या। हस्तिपदस्य पूर्वपदत्वेपि ऊर्वौपम्यवाचकत्वायोगात्। हस्तिन इव स्वाम्यूरू अस्या इति विग्रहे हस्तिन इति षष्ठ्या न हि स्वाम्यूरूपमानत्वम्। यदि तु हस्तिनाविव स्वाम्यूरू अस्या इति विग्रहः। तर्हि न सामर्थ्य तत्रेति समासानुपपत्तिरेव हस्तिनः स्वाम्यूर्वोश्च उपमानोपमेयभावाभावात्।

५२५ **संहितशफलक्षणवामादेश्च** । ।४।१।७०। अनौपम्यार्थे सूत्रम् । संहितोरूः । सैव शफोरूः, शफौ खुरौ ताविव संश्लिष्टत्वादुपचारात् । लक्षणशब्दादर्श आद्यच् लक्षणोरूः । वामोरूः । '**सहितसहाभ्यां चेति वक्तव्यम्** ' (वा २५०३) । हितेन सह सहितौ ऊरू यस्याः सा सहितोरूः। सहेते इति सहौ उरूयस्याः सा सहोरूः । यद्वा विद्यमानवचनस्य सहशब्दस्य ऊर्वीतिशयप्रतिपादनाय प्रयोगः । ५२६ **संज्ञायाम्** । ।४।१।७२। कद्रुकमण्डल्वोः संज्ञायां स्त्रियामूङ् स्यात् ।कद्रूः । कमण्डलूः । संज्ञायां किम्–कद्रुः । कमण्डलुः । अच्छंन्दोर्थं वचनम् ।५२७ **शार्ङ्गरवाद्यञो ङीन्** । ।४।१।७३। शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन् स्यात् । शार्ङ्गरवी । बैदी । ' जातेः' इत्यनुवृत्तेः पुंयोगे ङीषेव । **नृनरयोर्वृद्धिश्च'** (ग ५४) इति गणसूत्रम् । नारी ।

---

नन्वेवं करभोपमोरुरित्यत्रातिव्याप्तिरितिचेत् मैवम्। उपमानादेरित्यत्रादिर्नामाद्यवयव इति हि व्याख्यातम्। तच्चाद्यवयवत्वं पूर्वावयवत्वमेव। पूर्वत्वञ्च ऊरोरित्युक्तत्वेन ऊर्वपेक्षयैव न त्वन्यापेक्षया। एवञ्च प्रकृते न केवलमूर्वपेक्षया पूर्वत्वं करभस्य उपमानवाचिनः शब्दस्य किन्तु उपमपदापेक्षयाऽपीति नोक्तातिव्याप्तिरित्यलं विस्तरेण ।

70. शफोरूः, शफाविव ऊरू यस्या इति विग्रहे प्राक्सूत्रादेव ऊङ्सद्धिः। शफौ ऊरू अस्या इति विग्रहे तु औपम्याभावादस्मात्सूत्रादूङ्सिद्धिरिति विवेकः। अर्थस्त्वस्मिन्विग्रहे शफौ संश्लिष्टौ ऊरू अस्या इति अस्य शफशब्दस्य संश्लिष्टत्वरूपार्थस्तु गौणः। तदेतदाह उपचारादिति, लक्षणोरूः। लक्षणमनयोरस्तीतिलक्षणौ ऊरू अस्या इति विग्रहः।

71. संज्ञायाम्, अत्र कद्रुकमण्डल्वोश्छन्दसीति प्राक्सूत्रात्कद्रुकमण्डल्वोरनुवृत्तिः। योगविभागस्य फलमाह, अच्छन्दोर्थवचनमिति। अयम्भावः, छन्दसि संज्ञायामिति नियमाभावाय पृथक्सूत्रकरणमिति। यद्वा अच्छन्दोर्थ नाम लोकार्थमित्यर्थः। एकसूत्रत्वे छन्दस्येव स्यादूङ्। योगविभागे तु लोकेऽपीति भावः। छन्दसि संज्ञासंज्ञोभयसाधारण्येन, लोके संज्ञायामेव कद्रुकमण्डल्वोरूङ्यथास्यात्तदर्थं पृथक्सूत्रकरणमिति फलितम्।

72. शार्ङरवाद्यञो ङीन्–अजाद्यत इति सूत्रादत इत्यस्य मण्डूकप्लुत्याऽत्र संबन्धः, शार्ङरवादिश्च अञ् च तयोः समाहारः शार्ङरवाद्यङ्। सौत्रस्समासान्ताभावः। तस्य स्त्रियां ङीन् स्यात्। अत इत्यस्य तु अञि संबन्धः। तदाह अञोऽकारस्तदन्तादिति, अञ उदाहरणन्तु न प्राच्यभर्गादियौधेयादिभ्य इति सूत्रे यौधेयी शौक्रेयीति प्रदर्शितं

५२८ **यङश्चाप्** । ।४।१।७४। यङन्तात्स्त्रियां चाप्स्यात् । यङिति ञ्यङ्ष्यङोः सामान्यग्रहणम् । आम्बष्ठ्या । कारीषगन्ध्या । ‘ **षाद्यञश्चाब्वाच्यः** ’ (वा २५०५) शार्कराक्ष्या । पौतिमाष्या ५२९ **आवट्याच्च** । ।४।१।७५। अस्माच्चाप्स्यात् । ‘यञश्च’ (सू ४७१) इति ङीपोऽपवादः । अवटशब्दो गर्गादिः, आवट्या । ५३० **तद्धिताः** । ।४।१।७६। आ पञ्चमसमाप्तेरधिकारोऽयम् । ५३१ **यूनस्तिः** । ।४।१।७७। युवन्शब्दात्तिप्रत्ययः स्यात्, स च तद्धितः । लिङ्गविशिष्टपरिभाषया सिद्धे तद्धिताधिकार उत्तरार्थः । युवतिः । अनुपसर्जनादित्येव । बहवो युवानो यस्यां सा बहुयुवा । युवतीति तु यौतेः शत्रन्तान्ङीपि बोध्यम् ।

**।। इति स्त्रीप्रत्ययप्रकरणम् ।।**

---

कौमुद्यामेव, शार्ङरवादित्वात् बैदीति ।

73. यङश्चाप् यङिति यङ्ष्यङोस्सामान्यग्रहणम् निरनुबन्धकग्रहणात्। केवलस्य यङस्तु न ग्रहणं षाद्यञश्चाप् वाच्य इति वक्ष्यमाणवार्तिकानुरोधात् आवट्याच्चेति सूत्रानुसाराच्च वार्तिकस्यायमर्थः। षात्परो योयञ् तदन्ताच्चाप् वाच्य इति। अत एव गार्गी इति रूपम्। अन्यथा गार्ग्या इति स्यात्, गर्गादिभ्यो यञ् इति गा र्ग्यस्य यञन्तत्वात् ।

74. अवट्याच्च, चस्त्वविवक्षितः। यद्वा षाद्यञ इति वार्तिकं व्यर्थम्, आवट्यशब्दात् चात् पौतिमाष्यशब्दादपि चाप् स्यादित्यर्थीविवक्षातः।

75. तद्धिताः। इदमधिकारसूत्रमजाद्यत इति सूत्रात्प्राक्तु न कृतं कृते तु, प्राचां ष्फ इति सूत्रे तद्धितग्रहणं व्यर्थं ष्फस्य तद्धितत्वात्। किञ्च यस्येति चेति सूत्रे ईतीति व्यर्थम्। शार्ङरव ङीन् इति स्थिते यस्येति चेति ईत्परकत्वेन ह्यलोपः कृतः। स च ङीनस्तद्धितत्वेन तद्धितपरकत्वेनैव स्यादिति। यदि तु व्यर्थत्व एव लाघवरूपो महान् गुण इति तर्हि कुरूरित्यत्र ओर्गुणः प्रसज्येत, तथा हि–ऊङस्तद्धितत्वेन कुरु ऊ इति स्थिते सवर्णदीर्घं बाधित्वा उवर्णान्तस्य भस्य गुणस्स्यात्तद्धित इति ऊङ अजादिप्रत्ययत्वेन यचि भमिति पूर्वस्य भत्वादुवर्णान्तत्वाच्च गुणस्स्यादिति ।

76. यूनस्तिः। युवन्शब्दात्तिप्रत्ययः स्यात् स्त्रियामित्यर्थः। युवतिशब्दस्य कृत्तद्धितसमासाश्चेति तद्धितान्तत्वेन प्रातिपदिकत्वात्स्वाद्युत्पत्तिः। ननु श्वश्रूरित्यादाविव लिङ्गविशिष्टपरिभाषया स्वाद्युत्पत्तिर्भवत्येवेति किमत्रानेन तद्धिताधिकारेणेत्यत आह–उत्तरार्थ इति। उत्तरत्र सूत्रेषु तद्धिताधिकारस्य फलमित्यर्थः। वस्तुतस्तु यूनस्तिः तद्धिताः इति व्यत्ययेन सूत्रणमुचितम्।

युवन् ति रिति स्थिते नलोपः प्रातिपदिकान्तस्येति न लोपः। न च नस्य अपदान्तत्वाल्लोपासंभवः शङ्क्यः। स्वादिष्वसर्वनामस्थान इति तौ परतः पूर्वस्य युवन्नित्यस्य पदत्वेन नकारस्य पदान्तत्वात् ।

**इति शरद्रात्रौ स्त्रीप्रत्ययाः**

## अथ कारकप्रकरणम् ।१६।

**५३२ प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा । ।२।३।४६।** नियतोपस्थितिकः प्रातिपदिकार्थः । मात्रशब्दस्य प्रत्येकं योगः । प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये संख्यामात्रे च प्रथमा स्यात् । उच्चैः । नीचैः । कृष्णः। श्रीः । ज्ञानम् । अलिङ्गा नियतलिङ्गाश्च प्रातिपदिकार्थमात्र इत्यस्योदाहरणम् ।

---

### ओं नमो भगवते हयग्रीवाय।

### अथ शरद्रात्रौ कारकारम्भः।

1. किं नाम तावत्कारकम्। उच्यते–कर्तुरीप्सिततमत्वादिविशेषणविशिष्टं प्रातिपदिकमेव। न च तथा कारकसंज्ञाविधायकं सूत्रमस्तीति वाच्यम्। कर्तुरीप्सिततमं कर्मेत्यादिसूत्राणां कर्तुरीप्सिततमं प्रातिपदिकं कारकसंज्ञं स्यात्तादृशञ्च कारकं कर्म संज्ञं स्यादित्यर्थाश्रयणात्। यत्कर्मादिसंज्ञं तदेव कारकसंज्ञमिति भावः। सामान्यतः कारकसंज्ञाविशेषतः कर्मादिसंज्ञा इति यावत्। एतेन प्रातिपदिकस्य प्रथमाविभक्तौ न कारकसंज्ञा। तत्र कर्मादिविशेषसंज्ञाऽभावात् इति फलितम्। तस्मात् प्रथमाकारकमिति न व्यवहरः। किन्तु द्वितीयामारभ्यैव द्वितीयाकारकं तृतीयाकारकमित्यादिर्व्यवहारो भवति। अकारकत्वेऽपि प्रथमायाः कारकेषु वचनन्तु ङ्याप्प्रातिपदिकात्। सप्तविभक्तयः स्वौजसमौडित्यादयः कदा स्युरित्याकांक्षापरिपूर्तिः प्रथमाऽवचने, न स्यादिति हेतोः ।

2. प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा–मात्रपदस्यात्रावधारणार्थत्वेन प्रातिपदिकार्थमात्रे प्रथमेत्येतावदुक्तौ लिङ्गाद्याधिक्ये न स्यात्। प्रातिपदिकार्थाल्लिङ्गपरिमाणयोरतिरिक्तत्वात्। लिङ्गमात्रे परिमाणमात्रे इति यथासूत्रार्थकथने तु प्रातिपदिकार्थं विना लिङ्गादिप्रतीतेरसम्भवात्तत्र प्रथमाया अप्यसंभव एव। यद्यत्प्रातिपदिकं नियमेन यद्यल्लिङ्गकं तत्तत्प्रातिपदिकं स्वार्थमभिधत्ते सहैव लिङ्गेन, न तु लिङ्गं विना। तद्यथा कृष्णेति प्रातिपदिकं नियमेन पुंलिङ्गमेवेति स्वार्थं वासुदेवरूपं पुंलिङ्गमेवाभिधत्ते। न तु केवलं वासुदेवं वासुदेवस्य पुंस्त्वेन कदाप्यलिङ्गत्वाभावात्। यत्प्रातिपदिकन्तु अलिङ्गं तत्स्वार्थमेव केवलमभिधत्ते, न तु लिङ्गं तत्र लिङ्गाभावात् तस्मादलिङ्गा नियतलिङ्गाश्च प्रातिपदिकार्थमात्र इत्यस्योदाहरणम् ।

यत्तु प्रातिपदिकं त्रिलिङ्गं तत्प्रातिपदिकं केवलं स्वार्थमेवाभिधत्ते। न तु लिङ्गं

लिङ्गबाहुळ्यात् त्रयाणां लिङ्गानामेकदाभिधानासम्भवात्। न ह्येकः प्रातिपदिकार्थ एकदा लिङ्गत्रयभाग्भवति। यदि त्रयाणाम्मध्ये एकमेव लिङ्गमभिदध्यादिति, तदप्यनुपपन्नम्। कस्य लिङ्गस्याभिधानं कस्य नाभिधानमिति निश्चयाभावात्। यदि तु एतल्लिङ्गेन सहितं स्वार्थमितत्प्रातिपदिक मभिदध्यादिति प्रयोक्तृविवक्षाधीनो लिङ्गनिश्चयस्तर्हि लिङ्गविवक्षासहितस्सस्वार्थः न केवलं प्रातिपदिकार्थः किन्तु लिङ्गाधिक्यभावयुक्तः प्रातिपदिकार्थ इति। अनियतलिङ्ग न प्रातिपदिकार्थ इत्यस्योदाहरणम्। किन्तु लिङ्गमात्राधिक्य इत्यस्य विवक्षाधीनः यत्र लिङ्गभावः स लिङ्गाधिक्यवान् प्रातिपदिकार्थः। यत्र तु निर्विवक्षस्सलिङ्गोऽलिङ्गो वा प्रातिपदिकार्थस्स केवलं प्रातिपदिकार्थ एवेति विवेकः।

एवमेव परिमाणमात्राधिक्य इत्यत्रापि बोध्यम्। यथा केवलद्रोणशब्दात्प्रातिपदिकार्थमात्र इत्येव प्रथमा। व्रीह्यादिसंसर्गशालिनो द्रोणशब्दात्तु प्रातिपदिकार्थेन सह परिमाणस्याधिकस्य भानात्परिमाणमात्राधिक्य इति प्रथमा। ननु द्रोणो व्रीहिरित्यत्र द्रोणशब्दात् तदस्य परिमाणमिति ठञि द्रौणिको व्रीहिरिति भवितव्यम्। कथं द्रोणो व्रीहिरिति चेत्सत्यम्। अयं द्रोणशब्दो द्रोणपरिमितव्रीह्यादौ लाक्षणिक एव। उक्तं चैतत्तत्वबोधिन्यां तत्पचतीति द्रोणादण् चेति वार्तिकविचारावसरे ४२४ पत्रे। अयम्भावः अध्यर्थद्विगुपूर्वात्तु ठञो लुगध्यर्थेति सूत्राद्विहित एव। अत्र तु परिमाणार्थे प्राप्तस्य ठञो लुग्विधायकशास्त्राभावात् अयं दृश्यमानठञो लुक् लाक्षणिक इति। ठञ उत्पत्त्यभाव एवात्र लाक्षणिक इति व्याख्याने तु प्रत्ययार्थे परिमाणे इत्यादिकौमुदीग्रन्थो विरुध्येत प्रत्ययस्यैवानुत्पत्तेः। लुक्पक्षे तु प्रत्ययलोपे प्रत्ययलक्षणन्यायेन तत्र प्रत्ययार्थभानमविरुद्धमेव। द्रोणरूपं यत्परिमाणन्नाम द्रोणाभिन्नं यत्परिणाममित्यर्थः। अभेदेन संसर्गेण विशेषणमिति वक्ष्यमाणत्वात्।

वस्तुतस्तु ठञ उत्पत्यभाव एवात्र लाक्षणिक इति बोध्यम्। तथा हि तदस्य परिमाणमिति ठञ् न परिमाणार्थे विहितः। किन्तु परिमाणोपाधिकात् प्रथमान्तात्षष्ठ्यर्थे विहितः। अन्यथा द्रौणिक इत्यस्य द्रोणपरिमाणमित्येवार्थस्यान्न तु द्रोणपरिमाणपरिच्छिन्न इति। नन्वेवं द्रोणशब्दो लक्षणया यदि द्रोणपरिमाणपरिच्छिन्नवाची, तर्हि द्रोणो व्रीहिरित्यत्र द्रोणपरिमाणपरिच्छिन्नाभिन्नो व्रीहिरित्येव शाब्दबोधः स्यात्। तथा च प्रत्ययार्थो भेदेनसंसर्गेणैव व्रीहौ विशेषणं स्यात्। न तु परिच्छेद्यपरिच्छेदकभावेनेति कृत्वा वक्ष्यमाणो मूलग्रन्थो विरुध्येतेति चेन्मैवम्। द्रोणशब्दोऽभिधया द्रोणपरिमाणार्थमेवाभिधत्त इति कृत्वा कौमुदीग्रन्थप्रवृत्तेः। सर्वमपीदं तत्त्वबोधिन्यनुसारेण लिखितम्। वस्तुतस्तु द्रोणो व्रीहिरित्यत्र द्रोणशब्दात्परिमाणपार्थे सु प्रत्ययो विहितः तथा च द्रोणेति प्रकृते द्रोणत्वमर्थः प्रत्ययस्य सुपः परिमाणमर्थः इति बोध्यम्।

**प्रत्ययार्थे सुप्रत्ययस्यार्थभूते परिमाणे प्रकृत्यर्थः। प्रकृतेः द्रोणेति प्रातिपदिकस्यार्थः अभिधेयः, द्रोणत्वरूपः शक्य इति यावत्। अभेदेन संसर्गेण, विशेषणं भवतीति शेषः। (द्रोणाभिन्नं परिमाणमिति शाब्दबोधे परिमाणस्य विशेष्यत्वात् द्रोणस्य विशेषणत्वाच्च) यथा नीलमुत्पलमित्यत्र नीलाभिन्नमुत्पलमिति शाब्दबोधे नीलस्य विशेषणत्वमुत्पलस्य विशेष्यत्वञ्च**

अनियतलिङ्गास्तु लिङ्गमात्राधिक्यस्य । तटः, तटी, तटम् । परिमाणमात्रे द्रोणो व्रीहिः । द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरित्यर्थः । प्रत्ययार्थे परिमाणे प्रकृत्यर्थोऽभेदेन संसर्गेण विशेषणम्, प्रत्ययार्थस्तु परिच्छेद्य– परिच्छेदकभावेन व्रीहौ विशेषणमिति विवेकः । वचनं संख्या । एकः । द्वौ । बहवः । इहोक्तार्थत्वाद्विभक्तेरप्राप्तौ वचनम् ।५३३ **संबोधने च** । ।२।३।४७। इह प्रथमा स्यात् । हे राम ।। ५३४ **कारके** । ।१।४।२३। इत्यधिकृत्य । ५३५ **कर्तुरीप्सिततमं कर्म** । ।१।४।४९। कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् । कर्तुः किम्–माषेष्वश्वं बध्नाति । कर्मण ईप्सिता माषाः, न तु कर्तुः । तमब्ग्रहणं किम् । पयसा ओदनं भुङ्क्ते। ' कर्म ' इत्यनुवृत्तौ पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम् । अन्यथा गेहं प्रविशतीत्यत्रैव स्यात् । ५३६ **अनभिहिते** । ।२।३।१। इत्यधिकृत्य ५३७ **कर्मणि द्वितीया** ।२।३।२। अनुक्ते कर्मणि द्वितीया स्यात् । हरिं भजति । अभिहिते तु कर्मणि ' प्रातिपदिकार्थमात्रे ' इति प्रथमैव । अभिधानं च प्रायेण तिङ्कृत्तद्धितसमासैः । तिङ्, हरिः सेव्यते । कृत् , लक्ष्म्या सेवितः । तद्धितः: शतेन क्रीतः शत्यः । समासः प्राप्त आनन्दो यं स प्राप्तानन्दः । क्वचिन्निपातेनाभिधानम्, यथा–'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ।' साम्प्रतमित्यस्य हि युज्यत इत्यर्थः ।

---

प्रसिद्धं तथेति बोध्यम्। प्रत्ययार्थस्तु तुशब्दो वैलक्षण्यार्थकः। वैलक्षण्यमेवाह परिच्छेद्यपरिच्छेदकभावेनेति। पूर्वन्तु विशेषणविशेष्ययोर्द्रोणतत्परिमाणयोरभेदः संसर्गः कथितः। अत्र तु विशेषणविशेष्ययोः परिमाणव्रीह्योः परिच्छेद्यपरिच्छेदकभावरूपः संसर्ग इति विवेकः। न हि परिमाणाभिन्नं परिमेयं भवितुमर्हति। किन्तु परिमाणपरिच्छिन्नं परिमेयं भवतीति परिच्छेदकं परिमाणं परिच्छेद्यन्तु परिमेयमित्यर्थः। तयोर्भावस्तत्वं परिच्छेद्यः व्रीहिः परिच्चेदकं द्रोण परिमाणं परिच्छेदकद्रोणपरिमाणपरिच्छेद्यो व्रीहिरिति तयोस्संबन्धः परिच्छेद्यपरिच्छेदकत्वात्मक एवेति वेद्यम्। इहोक्तार्थत्वाद्विभक्तेरप्राप्तौ वचनमित्यस्यायमर्थः। ननु प्रातिपदिकार्थमात्र इत्यनेनैव एकद्विबहुशब्देभ्यः प्रथमा स्यादेव (एकद्विबहुप्रातिपदिकानाम् एकत्वद्वित्वबहुत्वरूपशक्यार्थमात्राभिधायकत्वात्) इति कृत्वा किमनेन सूत्रे वचनग्रहणेन इति शंङ्कायामाह, उक्तार्थत्वाद्विभक्तेरप्राप्ताविति। प्रथमादयस्सप्तापि विभक्तयः एकद्विबहुवचनानि स्वौजसादिभिरभिदधते हि स्वौजस्भिरभिधेया नामेकत्वद्वित्वबहुत्वानां प्रातिपदिकैरेवाभिहितत्वे सति निराकांक्षत्वेन प्रथमाविभक्तेरेवानुदय इति तेभ्योऽपि वचनवाचकेभ्यः प्रातिपदिकेभ्यः प्रथमोदयार्थं वचनग्रहणमिति। वस्तुतस्तु प्रातिपदिकार्थे प्रथमेति न्यासः सुवचः। मात्रपदाभावेन लिङ्गाद्याधिक्येऽपि प्रथमोत्पत्तिसम्भवात्।

५३८ **तथायुक्तं चानीप्सितम्** । ।१।४।५०। ईप्सिततमवत्क्रियया युक्तमनीप्सितमपि कारकं कर्मसंज्ञं स्यात् । ग्रामं गच्छंस्तृणं स्पृशति । विषं भुङ्क्ते । ५३९ **अकथितं च** । ।१।४।५१। अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात् ।।

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ।
कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ।।

'दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां कर्मणा यद्युज्यते तदेवाकथितं कर्म ' इति परिगणनं कर्तव्यमित्यर्थः । गां दोग्धि पयः । बलिं याचते वसुधाम् । अविनीतं विनयं याचते । तण्डुलानोदनं पचति । गर्गाञ्छतं दण्डयति । व्रजमवरुणद्धि गाम् । माणवकं पन्थानं पृच्छति । वृक्षमवचिनोति फलानि । माणवकं धर्मं शास्ति वा । शतं जयति देवदत्तम् । सुधां क्षीरनिधिं मथ्नाति । देवदत्तं शतं मुष्णाति । ग्राममजां नयति हरति कर्षति वहति वा । अर्थनिबन्धनेयं संज्ञा । बलिं भिक्षते वसुधाम् । माणवकं धर्मं भाषते अभिधत्ते वक्तीत्यादि । कारकं किम् – माणवकस्य पितरं पन्थानं पृच्छति । **'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम् '** । (वा ११०३–११०४) । कुरून् स्वपिति । मासमास्ते । गोदोहमास्ते । क्रोशमास्ते ।।

---

कर्माद्याधिक्ये तु विशेषविहितैः कर्मणि द्वितीयेत्यादिभिः प्रथमाया बाधात्। केवलाप्रकृतिर्न प्रयोक्तव्येति वचनादपि प्रथमोत्पत्तिसम्भवात्। विस्तरस्तु तत्त्वबोधिन्यां द्रष्टव्यः।

2. संबोधने च, संबोधनाधिक्येऽपीत्यर्थः। प्रातिपदिकार्थापेक्षयेति शेषः ।

3. माणवकं पन्थानं पृच्छति अत्र प्रच्छिक्रियायाः प्रधानं कर्म माणवक एव। पन्थास्तु निमित्तं देवदत्तकर्तृको माणवककर्मकः पथिनिमित्तकः प्रश्न इति शाब्दबोधात् तस्मात् तादर्थ्ये चतुर्थी वाच्या इति वार्तिकात्। मुक्तये हरिं भजतीतिवत्पथे माणवकं पृच्छतीति पथिन्शब्दाच्चतुर्थ्यां भवितव्यायां तादर्थ्यस्य अविविक्षातः अकथितं चेति पथोऽत्र कर्मत्वं मुख्यकर्म तु माणवक एव। प्रष्टुं प्रश्नक्रियया तस्याप्तुमिष्यमाणत्वात्। न च पन्था एवाप्तुमिष्यमाण इति मुख्यं कर्मेति वाच्यम्। गमनक्रियया तस्याप्तुमिष्यमाणतमत्वेऽपि प्राग्दर्शितशाब्दबोधरीत्या प्रच्छिक्रियया आप्तुमनिष्यमाणत्वात्। दोहनेन यथा पयो लभ्यते न हि तथा प्रश्नेन मार्गो लभ्यते गमनं विना, अतोऽत्र सम्प्रदानरूपविशेषेण अविवक्षितत्वात्पन्था अकथितं कर्मेति सिद्धम् ।

4. वृक्षमपचिनोति फलानि, ध्रुवमपायोऽपादानमिति फलापाये वृक्षस्यावधित्वेन

**५४० गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ ।** ।१।४।५२। गत्याद्यर्थानां शब्दकर्मणामकर्मकाणां चाणौ यः कर्ता स णौ कर्म स्यात् ।

---

अपादानत्वे सति वृक्षादपचिनोति फलानीति भवितव्यमेव। तथाऽपि अपादानस्याविवक्षायां प्रकृते अकथितञ्चेति वृक्षस्य कर्मत्वं, प्रधानं कर्म तु फलान्येव। अपचयक्रियया आप्तुमिष्यमाणतमत्वात्फलानम्।

5. माणवकं धर्मं ब्रूते शास्ति वा । ब्रूञश्शासोश्चोदाहरणमिदम् । धर्मोत्र मुख्यं कर्म। वचनेन शासनेन वा आप्तुमिष्यमाणतमत्वात्। तादर्थ्याविवक्षायां माणवकोऽकथितं कर्म ।

6. शतञ्जयति देवदत्तम्। देवदत्तोत्रापादानस्याविवक्षितत्वेन अकथितं कर्म। शतं नाम तत्परिमितं द्रव्यं जयक्रियया आप्तुमिष्यमाणतमत्वात् मुख्यं कर्म। द्यूतादिना देवदत्ताद्यज्ञदत्तश्शतं जयतीत्यर्थः।

7. सुधां क्षीरनिधिं मध्नाति। क्षीरनिधिरकथितं कर्म। अपादानस्याविवक्षितत्वात्। सुधाया अवधिभूतो हि क्षीरनिधिः। मथनक्रियया आप्तुमिष्यमाणतमत्वेन सुधामुख्यं कर्म। क्षीरनिधेस्सकाशात्सुधां प्राप्नोतीत्यर्थः। धातूनामनेकार्थत्वात्। यद्वा मथनक्रियायां मुख्यं कर्म क्षीरनिधिरेव। निमित्तन्तु सुधा। देवासुरकर्तृकं समुद्रकर्मकं सुधानिमित्तकं मथनमिति शाब्दबोधात्। तस्मात्तादर्थ्याविवक्षायां सुधैवाकथितं कर्म। सुधायै क्षीरनिधिं मध्नातीत्यर्थः।

8. देवदत्तं शतं मुष्णाति– अपादानाविवक्षातः देवदत्तोऽकथितं कर्म। शतन्तु मुषस्तेय इति स्तेयक्रियया आप्तुमिष्यमाणतममिति मुख्यं कर्म। देवदत्ताच्छतद्रव्यम्मुष्णातीत्यर्थः।

9. ग्राममजान्नयति– हरति कर्षति वहति वा। नी हृ कृष् वहामी दमुदाहरणम्। नयनादिक्रियया आप्तमिष्यमाणतमत्वादजामुख्यं कर्म, ग्रामस्तु तादर्थ्याविवक्षायामकथितं कर्म। अजां ग्रामाय(ग्रामं प्रति) नयतीत्यर्थः।

10. माणवकस्य पितरं पन्थानं पृच्छति, क्रियानन्वयित्वात् माणवकस्येति शेषे षष्ठी ।

11. गोदोहमास्ते–यावता कालेन गोर्दोहो भवेत्स कालो गोदोह इत्युपचर्यते। इदमुदाहरणं भावस्य कर्मत्वे। अयमेव भावो नाम यत्रोपचारतः काल(त्व)व्यवहारः।

12. गतिबुद्धीति। गतिर्गमनं बुद्धिर्ज्ञानं प्रत्यवसानं भक्षणं, तान्यर्थो येषां तेषां गम्लादीनां धातूनां शब्दो वेदादिः कर्मकारकं येषान्तेषां धातूनाञ्च अकर्मकाणामस्त्यादिधातूनाञ्च योगे सतीति शेषः। अणौ अण्यन्तावस्थायां यः कर्ता सः णौ ण्यन्तावस्थायां कर्म स्यात्। कर्तुरीप्सिततममिति सूत्रात्कर्म पदस्यात्र संबन्धः। स्यादेतत्, किमिदं सूत्रमपूर्वो विधिरुत प्राप्तस्य संकोचको नियमः इति चेत्, कर्तुः प्रयोजको हेतुश्च हेतुमति चेति णिजविधानात्, अण्यन्तकर्तुः प्रयोजको ण्यन्तकर्ता भवति। तस्मात्। प्रयोज्यकर्ता

शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत् । आशयच्चामृतं देवान्वेदमध्यापयद्विधिम् ।। आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः । गतीत्यादि किम्–पाचयत्योदनं देवदत्तेन ।

अण्यन्तानां किम् – गमयति देवदत्तो यज्ञदत्तम् , तमपरः प्रयुङ्क्ते, गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्रः । ' **नीवह्योर्न** ' (वा ११०९) । नाययति वाहयति वा भारं भृत्येन ' **नियन्तृकर्तृकस्य वहेरनिषेधः'** (वा १११०) वाहयति रथं वाहान् सूतः । **आदिखाद्योर्न** ' (वा ११०९) आदयति खादयति वान्नं वटुना । **'भक्षेरहिंसार्थस्य न'** (वा ११११) भक्षयत्यन्नं वटुना । अहिंसार्थस्य किम्–भक्षयति बलीवर्दान् सस्यम् । ' **जल्पतिप्रभृतीनामुपसंख्यानम्'** (वा ११०७) । जल्पयति भाषयति वा धर्मं पुत्रं देवदत्तः । ' **दृशेश्च** ' (वा ११०८) । दर्शयति हरिं भक्तान् । सूत्रे ज्ञानसामान्यार्थानामेव ग्रहणम् , न तु तद्विशेषार्थानामित्यनेन ज्ञाप्यते । तेन स्मरति जिघ्रतीत्यादीनां न । स्मारयति घ्रापयति वा देवदत्तेन । ' **शब्दायतेर्न** ' (वा ११०५)। शब्दाययति देवदत्तेन । धात्वर्थसंगृहीतकर्मत्वेनाकर्मकत्वात्प्राप्तिः । येषां देशकालादिभिन्नं कर्म न संभवति तेऽत्राकर्मकाः, न त्वविवक्षितकर्मणोऽपि । तेन ' मासमासयति देवदत्तम् ' इत्यादौ कर्मत्वं भवति, ' देवदत्तेन पाचयति ' इत्यादौ तु न ।

---

अण्यन्तकर्ता भवति। प्रयोजककर्ता तु ण्यन्ते कर्ता भवति। उभयत्रापि कर्तृकरणयोस्तृतीयेति तृतीयया भवितव्ये अनभिहिताधिकारेण प्रयोजककर्तुराख्यातेन तिङा उक्तत्वात्। तत्र न तृतीया। किन्तु प्रातिपदिकार्थमात्र इति प्रथमैव। प्रयोज्यकर्तरि तु अनभिहितत्वात्तृतीयैव। तथा च पाचयत्योदनं देवदत्तेन यज्ञदत्त इति सिद्धम्। देवदत्तस्य प्रयोज्यकर्तृत्वाद्यज्ञदत्तस्य प्रयोजककर्तृत्वाच्च यज्ञदत्तप्रेरितो देवदत्त ओदनं पचतीति, ओदनं पचन्तं देवदत्तं यज्ञदत्तः प्रेरयतीति वा शाब्दबोधः। उक्तरीत्या प्रयोज्यकर्तुः कर्मत्वाप्राप्तौ तत्प्राप्त्यर्थमिदं सूत्रमिति विधिरेवायं न तु नियम इति नव्याः ।

पचन्तं प्रेरयति पाचयतीति, ओदनं पचन्तं देवदत्तं यज्ञदत्तः प्रेरयतीति शाब्दबोधानुसारेण प्रयोज्यकर्तुरपि देवदत्तस्य कर्मत्वमेव, प्राधान्येन स्यादिति प्रयोज्यकर्तृषु सर्वत्रापि कर्मसंज्ञा प्राप्तौ गत्यादिसूत्रेण तद्विधेस्संकोच एव विधीयत इति नियमार्थमिदं सूत्रमिति प्राञ्चः। वेदार्थं स्वानवेदयत् विदधातोर्बुध्यर्थकस्य अण्यन्तावस्थायां ये कर्तारः (स्वे वेदार्थमविदन्नित्यत्र) स्वे ते ण्यन्तावस्थायां कर्मसंज्ञकाः तान् स्वान् श्रीहरिर्वेदार्थमवेदयदिति वेदार्थं विदतस्स्वान् श्रीहरिः प्रैरयदित्यर्थः। आशयच्चामृतं देवान् प्रत्यवसानार्थकस्याश्नातेरणौ कर्तारः देवाः। देवा अमृतमाशुः(आश्नन्)ते णौकर्माख्याः तान् देवान् श्रीहरिरमृतमाशयदिति)। अमृतमश्नतो देवान् श्रीहरिः प्रैरयदित्यर्थः। शाब्दबोधस्तु देवकर्तृकममृतकर्मकं यदशनं तदनुकूलप्रेरणात्मकव्यापारवान्

५४१ **हृक्रोरन्यतरस्याम्** । ।१।४।५३। हृक्रोरणौ यः कर्ता स णौ वा कर्मसंज्ञा स्यात् । हारयति कारयति वा भृत्यं भृत्येन वा कटम् । **'अभिवादिदृशोरात्मनेपदे वेति वाच्यम्'** (वा ११११४) अभिवादयते दर्शयते देवं भक्तं भक्तेन वा ।

---

श्रीहरिरिति। वेदमध्यापयद्विधिम्–इङ्, अध्ययने, अयं नित्यमधिपूर्वः, अध्ययनक्रियां प्रति शब्दस्य कर्मत्वाच्छब्दकर्मकोऽयं धातुः। स च शब्दोऽत्र वेदात्मकः। अधिपूर्वस्येङः अणौ यः कर्ता विधिर्वेदमध्यैत। विधिः स णौ कर्म, तं विधिं श्रीहरिर्वेदमध्यापयदिति वेदमधीयानं विधिं श्रीहरिरध्यापयदिति ।

आसयत्सलिले पृथ्वीम्। आस उपवेशन इत्यकर्मकोऽयं धातुः। अणौ कर्ता (पृथ्वी (पृथ्वी सलिले आस्त) णौ कर्म तां पृथ्वीं श्रीहरिस्सलिले आसयदिति।

अण्यन्तानां किम्? अणौ यः कर्तेति देवदत्तादिनिष्ठकर्तृत्वं प्रति गत्याद्यर्थादीनां धातूनामण्यन्तत्वरूपं विशेषणं किमर्थकमिति प्रश्नार्थः। गमयतीत्याद्युदाहरणम्। अयमर्थः यज्ञदत्तो गच्छति, गच्छन्तं यज्ञदत्तं देवदत्तः प्रेरयतीति। गमयति देवदत्तो यज्ञदत्तं, तञ्च देवदत्तं विष्णुमित्रः प्रैरयतीत्यर्थे गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्र इति भवति। अणौ यज्ञदत्तस्य कर्तृत्वेन णौ तस्य कर्मत्वं णौ देवदत्तस्य कर्तृत्वेन न कर्मत्वमिति कर्तरीति तृतीयैव। विष्णुमित्रेण राज्ञा प्रेरितो, देवत्ताभिधो मन्त्री यज्ञदत्तं भृत्यं गमनाय प्रेरयतीत्यर्थः।

नाययति वाहयति वा भारं भृत्येन–अणौ भृत्यो भारं वहति नयतीति वा भृत्यस्य कर्तृत्वेन ण्यन्तावस्थायां कर्मसंज्ञायां प्राप्तायाँ नीवह्योर्नेति निषेधः, प्राप्तेरपि गत्यर्थत्वेन गत्यर्थेति सूत्रान्नीवह्योः प्राप्तिरिति बोध्यम् ।

जल्पति प्रभृतीनामुपसंख्यानम्। प्रभृतिशब्दः प्रकारार्थकः तेन जल्पत्यर्थानां धातूनाञ्च गतिबुद्धीति सूत्रे उपसंख्यानं कर्तव्यमित्यर्थः। ज्ञानसामान्यार्थानामेव ग्रहणम्।बुद्ध्यर्थशब्दादिति भावः। हेतुस्तु ज्ञानविशेषार्थकस्य दृशेः गतिबुद्धिसूत्रादप्राप्तौ दृशेश्चेति वार्तिकारम्भः। न च दृशेश्चेति वार्तिकं प्रत्याख्याय, ज्ञानविशेषार्थकानामपि बुद्ध्यर्थग्रहणात्स्यादिति वाच्यम्। स्मरत्यादीनामपि कर्मत्वप्रसक्तेः, धात्वर्थसंगृहीतकर्मत्वेन धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात्। प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रियेति वचनादिति भावः। शब्दं कुर्वन्तं प्रेरयति शब्दाययतीति धात्वर्थेनैव कर्मणः (शब्दस्य) संगृहीतत्वादित्यर्थः। शब्दं करोति शब्दायते शब्दायमानं प्रेरयति शब्दाययतीति क्यङन्ताद्धेतुमण्णिचि रूपम्। देशकालादिभिन्न–कर्म–देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वार्तिककृतकर्मसंज्ञका ये देशकालभावगन्तव्याध्वानः तद्भिन्नं कर्म इत्यर्थः। तेन मासमासयतीत्यत्र–तेनेत्यस्यामर्थः। देशकालादिभिन्नकर्मरहितानां देशकालादिभिन्नकर्मसाहित्येऽपि अविवक्षिततथाविधकर्मकाणाञ्च धातूनामकर्मकाणामिति गतिबुद्धीति सूत्रस्थपदार्थत्वेन ग्रहणादिति। गतिबुद्धिसूत्रस्थेन

५४२ **अधिशीङ्स्थाऽऽसां कर्म** । ।१।४।४६। अधिपूर्वाणामेषामाधारः कर्म स्यात् । अधिशेते । अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः । ५४३ **अभिनिविशश्च** । ।१।४।४७। अभिनीत्येतत्सङ्घातपूर्वस्य विशतेराधारः कर्म स्यात् । अभिनिविशते सन्मार्गम् । 'परिक्रयणे संप्रदानम्–' (सू ५८०) इति सूत्रादिह मण्डूकप्लुत्या अन्यतरस्यां ग्रहणमनुवर्त्य **व्यवस्थितविभाषा–श्रयणात्क्वचिन्न । पापेऽभिनिवेशः ।** ५४४ **उपान्वध्याङ्वसः** । ।१।४।४८। उपादिपूर्वस्य वसतेराधारः कर्म स्यात् । उपवसति अनुवसति अधिवसति आवसति वा हैसुण्ठं हरिः ' **अभुक्त्यर्थस्य न** ' (वा १०८७) । वने उपवसति ।

**'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।**
**द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ।।'** (वा १४४४)

उभयतः कृष्णं गोपाः । सर्वतः कृष्णम् । धिक्, कृष्णाभक्तम् । उपर्युपरि लोकं हरिः । अध्यधि लोकम् । अधोऽधो लोकम् । '**अभितः परितः समया निकषा हा प्रति योगेऽपि** ' (वा १४४२–१४४३) अभितः कृष्णम् । परितः कृष्णम् । ग्रामं समया । निकषा लङ्काम् । हा कृष्णाभक्तम्, तस्य शोच्यत इत्यर्थः । बुभुक्षितं न प्रतिभाति किञ्चित् ५४५ **अन्तराऽन्तरेण युक्ते** । ।२।३।४। आभ्यां योगे द्वितीया स्यात् । अन्तरा त्वां मां हरिः । अन्तरेण हरिं न सुखम्।५४६ **कर्मप्रवचनीयाः**।।१।४।८३। इत्यधिकृत्य ।

---

अकर्मकाणामिति पदेन तदुभयविधधातुग्रहणादिति भावः। देशादिभिन्नकर्माभावेन मासकर्मकस्यास्तेरत्राकर्मकत्वेन ग्रहणात्, मासमासयति देवदत्तमित्यत्र अणौ कर्तुर्देवदत्तस्य णौ कर्मत्वं सिद्धम्।

13. अधिशीङ्स्थासां कर्म–आधारोऽधिकरणमिति प्राक्सूत्रादाधारस्यात्रानुवृत्तिः। शीङ्–स्वप्ने ष्ठा–गतिनिवृत्तौ आस–उपवेशने एषां धातूनां अधेरुपसर्गत्वादुपसर्गाः पूर्वं प्रयोक्तव्या इति न्यायमनुसृत्य अधिपूर्वाणामेषामित्यर्थकथनम्।

14. उपर्यादिषु त्रिषु–उपर्यध्यधसस्सामीप्य इति सूत्रोक्ता ये उपर्यध्यधसः, तेष्वित्यर्थः। आम्रेडितान्तेष्वित्येतदस्यैव विशेषणम्। आम्रेडितान्तेषु उपर्यादिषु त्रिषु द्वितीया स्यादित्यन्वयः। ततोऽन्यत्रापि तेभ्यो भिन्नेष्वपि। अत एव अभितः परितस्समया निकषा हा प्रतियोगेऽपीति वार्तिकस्यावकाशः तेषामेतेभ्योन्यत्वात् तस्य शोच्यत इत्यर्थः। तस्य शोच्यतेत्यर्थ इति पाठः प्रामाणिकः। तस्य कृष्णाभक्तस्य शोच्यता इत्यर्थः। कृष्णाभक्तश्शोच्य इति यावत्। शोचितुं योग्यश्शोच्यः। शोकविषय इति यावत्। तथा च गीतायां।

५४७ **अनुर्लक्षणे** । ।१।४।८४। लक्षणे द्योत्येऽनुरुक्तसंज्ञः स्यात् । गत्युपसर्गसंज्ञापवादः । ५४८ **कर्मप्रवचनीययुक्ते द्वितीया** । ।२।३।८। एतेन योगे द्वितीया स्यात् । पर्जन्यो जपमनु प्रावर्षत् । हेतुभूतजपोलक्षितं वर्षणमित्यर्थः । परापि हेतौ तृतीया अनेन बाध्यते ।' लक्षणेत्थंभूत'(सू ५५२)इत्यादिना सिद्धे पुनः संज्ञाविधानसामर्थ्यात् । ५४९ **तृतीयार्थे** । ।१।४।८५। अस्मिन्द्योत्येऽनुरुक्तसंज्ञः स्यात् । नदीमन्ववसिता सेना । नद्या सह संबद्धेत्यर्थः । षिञ् बन्धने' क्तः। ५५० **हीने**। ।१।४।८६। हीने द्योत्येऽनुः प्राग्वत् । अनु हरिं सुराः । हरेर्हीना इत्यर्थ ८। ५५१ **उपोऽधिके च** । ।१।४।८७। अधिके हीने च द्योत्ये उपेत्यव्ययं प्राक्संज्ञं स्यात् । अधिके सप्तमी वक्ष्यते । हीने – उप हरिं सुराः ।

---

"अशोच्यानन्वशोच्यस्त्वं" इति कृपाळुत्वात्कृष्णाभक्तमभिलक्ष्य साधूनां शोक इति ज्ञेयम्। यथास्थितपाठे तु शोच्यते इति विभागो भवति। तथा च तस्येत्यस्य शोच्यते इति क्रियायाश्च अनन्वय एवेति वेद्यम् ।

15. अनुर्लक्षणे, लक्षयतीति लक्षणं संबन्धिद्रव्यम्। तच्च संबन्धद्वारैव लक्षयतीति संबन्धोऽपि लक्षणमेव। तस्मात् लक्षणे द्योत्ये इत्यस्य लक्ष्यलक्षणभावरूपे संबन्धे द्योत्ये इत्यर्थः। लक्षणद्रव्यस्य लक्ष्यद्रव्यस्य च यस्संबन्धस्स लक्ष्यलक्षणभावरूप एवेति नार्थासामंजस्यम्। अयञ्च संबन्धस्सामान्यरूपः। विशेषरूपस्तु कार्यकारणभावादिरूप इति बोध्यम्। तथा हि हेतुः कार्यं लक्षयतीति लक्षणं, कार्यं लक्ष्यं तयोस्संबन्धसामान्यं लक्ष्यलक्षणभावात्मकं संबन्धविशेषस्तु कार्यकारणभावात्मकः। यथा पितृपुत्रयोर्मृद्घटयोः प्रकृते जपवर्षयोः राजा प्रजानां लक्षणं संबन्धविशेषस्तु पाल्यपालकत्वरूपः। यथा राजानमनुप्रजाः प्रसिद्धाप्रसिद्धस्य लक्षणं संबन्धविशेषस्तु सामीप्यात्मकः। यथा वसिष्ठमन्वरुन्धती। पुरमनुग्रामः। प्रकृते च वृक्षमनुविद्युत् । विद्योतत इत्यादि क्रियापदसाहचर्य विवक्षायान्तु द्योत्यद्योतकत्वादिसंबन्धविशेष इत्यूह्यम्। लक्षणेत्थंभूतेति सूत्रादेव लक्षणविषयस्यानोः कर्मप्रवचनीयसंज्ञा सिद्धौ किमनेनानुर्लक्षण इति सूत्रेणेत्याशंकां हेतुतृतीयाबाधनार्थमिति "परापि हेता"वित्यादिग्रन्थेन परिहरिष्यति ।

16. तृतीयार्थे–तृतीयाया अर्थस्तृतीयार्थः। यस्मिन्नर्थे तृतीया स्यात्तस्मिन्नर्थ इत्यर्थः। स चार्थोत्र "सहयुक्तेऽप्रधान इत्ययमेव, न तु हेताविति। तृतीयार्थ इत्यस्य पुरस्तादपवादसूत्रस्य उत्तरत्र हेतावित्यस्य बाधने सामर्थ्याभावात्। ननु कर्तृकरणयोस्तृतीयेत्यादिना तृतीयायाः कर्तृत्वादिकमप्यर्थ एवेति चेन्नैवम्। कर्तृकरणयोस्संज्ञाविशेषत्वेन अर्थविशेषत्वाभावात्। न च अपवर्गे तृतीयेति तृतीयार्थेऽपवर्गेप्यनुरुक्तसंज्ञः स्यादिति वाच्यम्। अपवर्गस्य तृतीयया द्योत्यत्वेन नार्थत्वम्। किञ्च कालाध्वनोरत्यन्तसंयोगे द्वितीयेति द्वितीयाया अपवादकत्वेन

५५२ **लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः** । ।१।४।९०। एष्वर्थेषु विषयभूतेषु प्रत्यादय उक्तसंज्ञाः स्युः । लक्षणे वृक्षं प्रति परि अनु वा विद्योतते विद्युत् । इत्थंभूताख्याने भक्तो विष्णुं प्रति परि अनु वा । भागे–लक्ष्मीर्हरिं प्रति परि अनु वा । हरेर्भाग इत्यर्थः । वीप्सायाम्, वृक्षं वृक्षं प्रति परि अनु वा सिञ्चति । अत्रोपसर्गत्वाभावान्न षत्वम् । एषु किम्–परिषिञ्चति । ५५३ **अभिरभागे** । ।१।४।९१। भागवर्जे लक्षणादावभिरुक्तसंज्ञः स्यात् । हरिमभि वर्तते । भक्तो हरिमभि । देवं देवमभिसिञ्चति । अभागे किम् – यदत्र ममाभिष्यात्तद्दीयताम् । ५५४ **अधिपरी अनर्थकौ** । ।१।४।९३।उक्तसंज्ञौ स्तः । कुतोऽध्यागच्छति । कुतः पर्यागच्छति । गतिसंज्ञाबाधाद् 'गतिर्गतौ' (सू ३९७७) इति निघातो न । ५५५ **सुः पूजायाम्** । ।१।४।९४। सुसिक्तम्, सुस्तुतम् । अनुपसर्गत्वान्न षः । पूजायाम् किम्–सुषिक्तं किं स्यात् तवात्र । क्षेपोऽयम् । ५५६ अतिरतिक्रमणे च । ।१।४।९५। अतिक्रमणे पूजायां च अतिः कर्मप्रवचनीयसंज्ञः स्यात् । अति देवान् कृष्णः ।

---

अपवर्गे तृतीयाया विहितत्वात्। येनाङ्गविकार इत्यादींस्तु नेदं बाधते तृतीयार्थ इति सूत्रम्। पुरस्तादपवादन्यायेन सहयुक्त इत्यस्यैव बाधकत्वाभ्युपगमात्, तस्मात् परिशेषादत्र तृतीयार्थः सहार्थ एव इति सिद्धम् ।

17. इत्थं भूताख्याने– एवं भूत इत्थंभूतः। तस्याख्यानं वचनं इत्थंभूत इत्यर्थ इति यावत्। भक्तो विष्णुं प्रति संबन्धसामान्ये षष्ठ्यां प्राप्तायामनेन द्वितीया। भक्तो विष्णोरित्थंभूतः कञ्चित्प्रकारं प्राप्त इत्यर्थः।

ननु एष्वर्थेपु विपयभूतेष्विति लक्षणादीनां विपयतयोपादानं किमर्थमिति चेदुच्यते। वृक्षं वृक्षम्प्रति सिञ्चतीत्यादौ प्रत्यादीनामर्थान्तरविवक्षया क्रियायोगे सति उपसर्गाः क्रियायोग इत्युपसर्गसंज्ञा सिद्धौ उपसर्गात्सुनोतीत्यादिना पत्वे प्रतिषिञ्चतीति भवेत्। उपसर्गाणां धात्वर्थभिन्नार्थबोधकत्वमुक्तं हि। "उपसर्गेण धात्वर्थो बलादन्यत्र नीयते" प्रहाराहारसंहारविहारपरिहारवत्" इति ।

18. अधिपरीअनर्थकौ, अनर्थकत्वेनैव संबन्धविशेषद्योतकत्वाभावात्। नाभ्यां योगे द्वितीया। संबन्धसामान्ये षष्ठ्यां प्राप्तायां हि तदपवादतया (संबन्धविशेषद्योतकतायां) अन्वादियोगे द्वितीया विहिता। नचैवं कर्मप्रवचनीयसंज्ञाप्यनयोरनर्थकैवेति वाच्यम्। निघातस्वराभावरूपस्य (अर्थस्य) (फलस्य) वक्ष्यमाणत्वात् ।

19. अतिदेवान् कृष्णः। देवेभ्योऽधिकः देवानां पूज्य इति चार्थद्वयेऽप्यत्रातिर्वर्तते। तद्योगे द्वितीया, पञ्चमीषष्ठ्यौ बाधित्वा भवति। न्यूनाधिकभावः पूज्यपूजकभावश्चात्र

५५७ **अपिः पदार्थसंभावनाऽन्ववसर्गगर्हासमुच्चयेषु** । ।१।४।९६। एषु द्योत्येष्वपिरुक्तसंज्ञः स्यात् । सर्पिषोऽपि स्यात् । अनुपसर्गत्वान्न षः । संभावनायां लिङ् । तस्या एव विषयभूते भवने कर्तृदौर्लभ्यप्रयुक्तं दौर्लभ्यं द्योतयन्नपिशब्दः स्यादित्यनेन संबध्यते । सर्पिष इति षष्ठी त्वपिशब्दबलेन गम्यमानस्य बिन्दोरवयवावयविभावसंबन्धे । इयमेव ह्यपिशब्दस्य पदार्थद्योतकता नाम । द्वितीया तु नेह प्रवर्तते , सर्पिषो बिन्दुना योगो न त्वपिनेत्युक्तत्वात्। अपि स्तुयाद्विष्णुम् , संभावनं शक्त्युत्कर्षमाविष्कर्तुमत्युक्तिः । अपि स्तुहि, अन्ववसर्गः कामचारानुज्ञा । धिग्देवत्तम्, अपि स्तुयाद् वृषलम्, गर्हा । अपि सिञ्च, अपि स्तुहि, समुच्चये । ५५८ **कालाध्वनोरत्यन्तसंयोगे** । ।२।३।५। इह द्वितीया स्यात् । मासं कल्याणी । मासमधीते । मासं गुडधानाः । क्रोशं कुटिला नदी । क्रोशमधीते । क्रोशं गिरिः । अत्यन्तसंयोगे किम्–मासस्य द्विरधीते, क्रोशस्यैकदेशे पर्वतः । **इति द्वितीया** ।

---

संबन्धविशेषोतिना द्योत्यते। सुसिक्तमित्यत्र तु पूजायां गम्यमानायामपि सुष्ठु सिक्तं सुसिक्तमिति एकस्यैवाभिधानेन द्वयोर्द्योत्यः संबन्धविशेषो न सुना द्योत्यत इति न तत्र द्वितीयादिसंभवः।

20. सर्पिषोऽपि स्यात्। असभुवीति भवनक्रियावाचिनोऽस्तेस्संभावनायां लिङ् स्यादिति। अपिना तु स्यादित्यस्याः भवनसंभावनायाः (भवनविषयकसंभावनायाः) दौर्लभ्यं द्योत्यते। एवञ्च अपि स्यादित्यस्य भवनसंभावनादुर्लभेत्यर्थ इति फलितम्। अपेर्दुर्लभार्थकत्वात्। असधातुप्रकृतेर्भवनार्थकत्वात्, तदुत्तरवर्तिलिङस्संभावनार्थकत्वाच्च। वस्तुदौर्लभ्यं विना तदस्तित्वसंभावनादौर्लभ्यं न स्यादिति, तच्च भवनसंभावनादौर्लभ्यं कर्तृभूतवस्तुदौर्लभ्याधीनं भवितुमर्हति। कर्ता तु न सर्पिः सर्पिष इति सर्पिरुत्तरवर्ति षष्ठ्या कर्तृत्वाप्रतीतेः। किन्तु सर्पिस्संबन्धि यत्किञ्चिद्वस्तु कर्तृ भवितुमर्हति, संबन्धसामान्ये षष्ठीविधानात्। अपेर्दौर्लभ्यद्योतकत्वेन तच्च सर्पिस्सबन्धिद्रव्य सर्पिरपेक्षया न्यूनपरिमाणमेव भवितुमर्हति। न्यूनाधिकयोरेव संबन्धस्य योग्यत्वात्। यथा राज्ञः पुरुष इत्यत्र राजसंबन्धी पुरुष इत्यर्थः। राजापेक्षया पुरुषस्य न्यूनत्वात्। तच्च संबन्धिद्रव्यं षष्ठ्यन्तमेवाधिकं भवितुमर्हति, न प्रथमान्तं योग्यत्वात्। अत एव न पुरुषराजेति प्रयोगः। एवं सर्पिरपेक्षया न्यूनं तत्संबन्धि च वस्तुतद्बिन्दुरेव भवति। तस्य सर्पिषश्च संबन्धः। अवयवावयवविभावरूपः। बिन्दोस्सर्पिरवयवत्वात्। सर्पिर्बिन्ददौर्लभ्याधीनं तद्भवनसम्भावनादौर्लभ्यरूपं पदार्थमपि द्योतयतीति पदार्थ इत्यस्येदमुदाहरणं सर्पिषोऽपि स्यादिति। यद्वा भवनक्रिया–संभावनादौर्लभ्यहेतुसर्पिर्बिन्दुदौर्लभ्यरूपं पदार्थ द्योतयत्यपिरिति वक्तव्यम् ।

अपि स्तुहि–यथेच्छं स्तुहीति कामचारानुज्ञा। वृषलमिति देवदत्तस्य स्तुतिकर्मत्वानौचित्यप्रदर्शनाय

५५९ **स्वतन्त्रः कर्ता** । ।१।४।५४। क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् । ५६० **साधकतमं करणम्** । ।१।४।४२। क्रियासिद्धौ प्रकृष्टोपकारकं कारकं करणसंज्ञं स्यात् । तमब्ग्रहणं किम् । गङ्गायां घोषः । ५६१ **कर्तृकरणयोस्तृतीया** । ।२।३।१८। अनभिहिते कर्तरि करणे च तृतीया स्यात् । रामेण बाणेन हतो वाली । '**प्रकृत्यादिभ्य उपसंख्यानम्**' (वा १४६६) । प्रकृत्या चारुः । प्रायेण याज्ञिकः । गोत्रेण गार्ग्यः । समेनैति । विषमेणैति । द्विद्रोणेन धान्यं क्रीणाति । सुखेन दुःखेन वा यातीत्यादि । ५६२ **दिवः कर्म च** । ।१।४।४३। दिवः साधकतमं कारकं कर्मसंज्ञं स्यात् । चात्करणसंज्ञम् । अक्षैरक्षान्वा दीव्यति । ५६३ **अपवर्गे तृतीया** । ।२।३।६। अपवर्गः फलप्राप्तिः, तस्यां द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात् । अह्ना क्रोशेन वा अनुवाकोऽधीतः । अपवर्गे किम् – मासमधीतो नायातः ।

---

वृषलविशेषणम् शूद्रस्य स्तुत्यविषयत्वात्।

21. "कालाध्वनोरत्यन्तसंयोगे" द्वितीया। कालाध्वनोस्संबन्धिनि अत्यन्तसन्निकर्षे गम्यमाने द्वितीया स्यात्, संबन्धषष्ठ्या अधिकरणे सप्तम्याः वा अपवादोयम् ।

22. गङ्गयां घोषः–वसतीति शेषः। वसधातूपात्तव्यापाराश्रयत्वेन विवक्षितो घोषः कर्ता–तस्य च कर्तृत्वस्य वसतीति तिङाभिहितत्वात्। अनभिहिते कर्तरीति न तृतीया किन्तु प्रातिपदिकार्थमात्र इति प्रथमैव। घोषाधारत्वेन गङ्गात्र न मख्यमुपकारकं तीरस्यैव घोषाधारत्वात्। "गौणमख्ययोर्मुख्ये कार्यसंप्रत्यय" इति न्यायेन तिलेषु तैलं क्षीरे सर्पिरित्यादौ यत्र सर्पिस्तैलादेर्मुख्यो य आधारः तिलादिः तस्यैव आधारोधिकरणमित्यधिकरणसंज्ञा सिध्यति। न तु प्रकृते गंगायां घोषाधारत्वस्य उपचरितत्वेन गौणत्वात्। एव मधिकरणसंज्ञऽभावेन गंगेति प्रकृतेरधिकरणे सप्तमीति सप्तमी न स्यात्। अतः गौणेऽप्याधारे यथाधिकरणसंज्ञा सिध्येत्तदर्थमत्र तमग्रहणमिति। अयं भावः। साधकमित्यस्य कारकपर्यायत्वेन आधारापादानादीनां कारकत्वाविशेषेऽपि कारकतमत्वविशेषः स्यादेव। गौणमुख्यन्यायात्तेन फलभेदोऽपीति करणसंज्ञाव्यतिरिक्तअधिकरणादिकारकसंज्ञाविशेषे न तन्नयायेन फलभेद इति ज्ञापनार्थं करणसंज्ञाविधायकसूत्रे कारकस्य तमब्विशेषणं कृतमिति। तथा च कारकसंज्ञाविशेषभूतानामधिकरणादिसंज्ञानाम्मध्ये करणसंज्ञायामेव गौणमुख्यन्याय प्रवृत्तिर्नेतरत्रेति, अधिकरणसंज्ञायां तन्नायप्रवृत्त्यभावेन गंगेति प्रकृतेरधिकरणे सप्तमी सिद्धातेन गङ्गायां घोष इति निर्विवादम्।

कारकसंज्ञाविशेषाणां करणादिसंज्ञानाम्मध्ये करणसंज्ञायामेव गौणमुख्यन्यायप्रवृत्तिर्नेतरत्रेति ज्ञापनार्थं तमब्ग्रहणम्। तेन च तमब्ग्रहणेन तथा ज्ञापितत्वादधिकरणसंज्ञायां न गौणमुख्यन्यायप्रवृत्तिः। अत एव गङ्गायां घोष इत्यत्र गौणाधारस्यापि गङ्गायाः

५६४ **सहयुक्तेऽप्राधाने** । ।२।३।१९। सहार्थेन युक्तेऽप्रधाने तृतीया स्यात् । पुत्रेण सहागतः पिता। एवं साकंसार्धसमंयोगेऽपि । विनापि तद्योगं तृतीया । 'वृद्धो यूना–' (सू ९३१) इत्यादिनिर्देशात् । ५६५ **येनाङ्गविकारः** । ।२।३।२०। येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततः तृतीया स्यात् । अक्ष्णा काणः । अक्षिसम्बन्धिकाणत्वविशिष्ट इत्यर्थः । अङ्गविकारः किम् – अक्षि काणमस्य । ५६६ **इत्थंभूतलक्षणे** । ।२।३।२१। कञ्चित्प्रकारं प्राप्तस्य लक्षणे तृतीया स्यात् । जटाभिस्तापसः । जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः । ५६७ **संज्ञोऽन्यतरस्यां कर्मणि** । ।२।३।२२। संपूर्वस्य जानातेः कर्मणि तृतीया वा स्यात् । पित्रा पितरं वा संजानीते ।५६८ **हेतौ** । ।२।३।२३। हेत्वर्थे तृतीया स्यात् । द्रव्यादिसाधारणं निर्व्यापारसाधारणं च हेतुत्वम् । करणत्वं तु क्रियामात्रविषयं व्यापारनियतं च । दण्डेन घटः । पुण्येन दृष्टो हरिः । फलमपीह हेतुः । अध्ययनेन वसति । ' गम्यमानाऽपि क्रियाकारकविभक्तौ प्रयोजिका ' ।

---

अधिकरणसंज्ञावत्त्वेन सप्तमी सिद्ध्यतीति यावत् ।

23. मासमधीतो नायातः–अनुवाक इति कर्तृपदम् नायात इत्यनेन अध्ययनक्रियाफलभूतविद्यालाभाभावः प्रोक्त इति अपवर्गाभावान्मासमित्यत्र कालाध्वनोरिति द्वितीयैव न त्वपवर्ग इति तृतीयेति भावः ।

24. योनाङ्गविकारः अङ्गमस्यास्तीत्यंगः। अंगी। तस्य विकारः अङ्गविकारः। येन लक्ष्यते, अङ्गिनो विकारः अङ्गविकाराधीन इति। अङ्गिविकारलक्षकमङ्गं विकार्येव भवितुं युक्तम्। तस्मात् येनेत्यस्य विकृतेनाङ्गेनेत्यर्थः। अक्षिकाणमस्य पुरुषसंबन्धिकाणत्वविशिष्टमक्षीत्यङ्गविकार एवात्र प्राधान्येन विवक्षितः। न त्वङ्गिविकार इति नात्र अङ्गिविकारलक्षकत्वं विकृताङ्गस्येति बोध्यम् ।

25. इत्थं भूतलक्षणे। इत्थंभूतेति लुप्तषष्ठीकं पदम्। लक्षणे लक्ष्यलक्षणभावसंबन्धे द्योत्ये सति इत्थंभूतस्य तृतीया स्यात्। इत्थंभूत इत्यस्य कञ्चित्प्रकारं प्राप्त इत्यर्थः। यथा जटाभिस्तापसः केशा एव निरन्तराभिषवणेन कञ्चित्प्रकारं प्राप्य जटात्वेन कथ्यन्ते इति जटा इत्थंभूताः तासां तापसस्य च लक्ष्यलक्षणभावः संबन्धः। तदेव दर्शयति जटाज्ञाप्यतापसत्वविशिष्ट इति ।

26. संज्ञोऽन्यतरस्यां कर्मणि–ज्ञा–अवबोधन इति धातोर्ङसि आतो धातोरित्यालोपे ज्ञ इति रूपम्। ज्ञाधातोरित्यर्थः। जनीप्रादुर्भाव इति धातोरपि ङसि जन् ङस् इति स्थिते अल्लोपो नः जन् ङस् श्चुत्वं, ज् ञ् अस् जञोर्ज्ञः, ज्ञ इति रुपं यद्यपि सिध्यति, तथाऽपि श्चुत्वादिलक्षणवशात्सिद्धमिदं ज्ञ इति रूपं लाक्षणिकं जनीधातोः ज्ञाधातोस्तु, ज्ञ इति प्रतिपदोक्तमेव अलाक्षणिकत्वात्। तस्मान्न जनेरिहग्रहणम्। संजानीते अपेक्षत इत्यर्थः ।

अलं श्रमेण । श्रमेण साध्यं नास्तीत्यर्थः । इह साधानक्रियां प्रति श्रमः करणम् । शतेन शतेन वत्सान् पाययति पयः । शतेन परिच्छिद्येत्यर्थः । **'अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया '** (वा ५०४०) । दास्या संयच्छते कामुकः। धर्म्ये तु भार्यायै संयच्छति ।**इति तृतीया।** ५६९ **कर्मणा यमभिप्रैति स संप्रदाम्** । ।१।४।३२। दानस्य कर्मणा यमभिप्रैति स संप्रदान संज्ञः स्यात् । ५७० **चतर्थी संप्रदाने** । ।२।३।१३। विप्राय गां ददाति । अनभिहित इत्येव । दीयतेऽस्मै दानीयो विप्रः । ' **क्रियया यमभिप्रैति सोऽपि संप्रदानम्** (वा १०८५) । पत्ये शेते । यज्ञेः **कर्मणः करणसंज्ञा संप्रदानस्य च कर्मसंज्ञा** (वा १०८६) पशुना रुद्रं यजते । पशुं रुद्राय ददातीत्यर्थः । ५७१ **रुच्यर्थानां प्रीयमाणः** । ।१।४।३३। रुच्यर्थानां धातूना प्रयोगे प्रीयमाणोऽर्थः संप्रदानं स्यात् । हरये रोचते भक्तिः । अन्यकर्तृकोऽभिलाषो रुचिः । हरिनिष्ठप्रीतेर्भक्तिः कर्त्री । प्रीयमाणः किम् – देवदत्ताय रोचते मोदकः पथि । ५७२ **श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः** । ।१।४।३४। एषां प्रयोगे बोधयितुमिष्टः संप्रदानं स्यात् । गोपी स्मरात्कृष्णाय श्लाघते ह्नुते तिष्ठते शपते वा । ज्ञीप्स्यमानः किम्–देवदत्ताय श्लाघते पथि । ५७३ **धारेरुत्तमर्णः** । ।१।४।३५। धारयतेः प्रयोगे उत्तमर्ण उक्तसंज्ञः स्यात् । भक्ताय धारयति मोक्षं हरिः । उत्तमर्णः किम्–देवदत्ताय शतं धारयति ग्रामे । ५७४ **स्पृहेरीप्सितः** । ।१।४।३६। स्पृहयतेः प्रयोगे इष्टः संप्रदानं स्यात् । पुष्पेभ्यः स्पृहयति । ईप्सितः किम् – पुष्पेभ्यो वने स्पृहयति । ईप्सितमात्रे इयं संज्ञा । प्रकर्षविवक्षायां तु परत्वात्कर्म संज्ञा, पुष्पाणि स्पृहयति ।

---

27. गम्यमानापि क्रियेत्यादि अध्ययनेन वसतीत्यादौ यथा वसनक्रियादिः श्रूयमाणाअध्ययनादेः फलभूतस्य हेतुत्वसंपदनद्वारा कारकविभक्तौ प्रयोजिका एव। एवं गम्यमानापि क्रिया अलं (श्र)मेणेत्यादौ साधनक्रिया, श्रमेणेति कारकविभक्तिप्रयोगं प्रति हेतुर्भवत्येवेति। दाणः प्रयोगेऽपि दाण् दान इति धातोः प्रयोगे ।

28. गोपी स्मरात्कृष्णाय श्लाघते–गोपी कृष्णाय श्लाघत इतीदमेवोदाहरणम्, स्मरादिति श्लाघ्यहेतुत्वेनोपादानम्। स्मराद्धेतोरित्यर्थः। स्मरपीडितेति भावः।

29. तयोः कारकम्। एतत्क्रियान्वयीत्यर्थः।

30. तादर्थ्ये चतुर्थी वच्या। तस्मा इदं तदर्थं तस्य भावस्तादर्थ्यं तत्पदेन गृहीतस्य, इदम्पदेन गृहीतस्य च वस्तुनः परस्परं यस्संबन्धः कार्यकारणभावाद्यात्मकस्तस्मिन् द्योत्ये

५७५ **क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः**।।१।४।३७। क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपः स उक्तसंज्ञः स्यात् । हरये क्रुध्यति, द्रुह्यति, ईर्ष्यति, असूयति वा । यं प्रति कोपः किम्–भार्यामीर्ष्यति । मैनामन्योऽद्राक्षीदिति । क्रोधोऽमर्षः। द्रोहोऽपकारः। ईर्ष्या अक्षमा । असूया गुणेषु दोषाविष्करणम् । द्रुहादयोऽपि कोपप्रभवा एव गृह्यन्ते । अतो विशेषणं सामान्येन ' यं प्रति कोपः' इति । ५७६ **क्रुधद्रुहोरुपसृष्टयोः कर्म** । ।१।४।३८। सोपसर्गयोरनयोर्योगे यं प्रति कोपः तत्कारकं कर्मसंज्ञं स्यात् । क्रूरमभिक्रुध्यति अभिद्रुह्यति । ५७७ **राधीक्ष्योर्यस्य विप्रश्नः** । १।४।३९। एतयोः कारकं संप्रादनं स्यात् , यदीयो विविधः प्रश्नः क्रियते । कृष्णाय राध्यति ईक्षते वा । पृष्टो गर्गः शुभाशुभं पर्यालोचयतीत्यर्थः । ५७८ **प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता** । ।१।४।४०। आभ्यां परस्य शृणोतेर्योगे पूर्वस्य प्रवर्तनारूपस्य व्यापारस्य कर्ता संप्रदानं स्यात् । विप्राय गां प्रतिशृणोति आशृणोति वा । विप्रेण मह्यं देहीति प्रवर्तितस्त्वं प्रतिजानीत इत्यर्थः । ५७९ **अनुप्रतिगृणश्च** । ।१।४।४१। आभ्यां गृणातेः कारकं पूर्वव्यापारस्य कर्तृभूतमुक्तसंज्ञं स्यात् । होत्रेऽनुगृणाति प्रतिगृणाति वा । होता प्रथमं शंसति, तमध्वर्युः प्रोत्साहयतीत्यर्थः । ५८० **परिक्रयणे संप्रदानमन्यतरस्याम्** । ।१।४।४४। नियतकालं भृत्या स्वीकरणं परिक्रयणं तस्मिन्साधकतम कारकं संप्रदानसंज्ञं वा स्यात् । शतेन शताय वा परिक्रीतः । **'तादर्थ्ये चतुर्थी वाच्या'** (वा १४५८) मुक्तये हरिं भजति । **'क्लृपि संपद्यमाने च '** (वा १४५९) भक्तिर्ज्ञानाय कल्पते संपद्यते जायते इत्यादि । **' उत्पातेन ज्ञापिते च '** (वा १४६०) वाताय कपिला विद्युत् । **' हितयोगे च '** (वा १४६१) ब्राह्मणाय हितम् । ५८१ **क्रियार्थोपपदस्य च कर्मणि स्थानिनः** । ।२।३।१४। क्रियार्था क्रिया उपपदं यस्य तस्य स्थानिनोऽप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थी स्यात् ।

---

चतुर्थी वाच्या। सा च चतुर्थी तत्पदगृहीतादेव। यथा मुक्तये हरिं भजति। अत्र इदं हरिभजनवं तस्यै मुक्तय इति तत्पदेन गृहीता मुक्तिः इदम्पदेन गृहीतवं हरिं भजतीत्येतत्। तयोर्मुक्तिहरिभजनयोर्यस्संबन्धः कार्यकारणभावात्मकः (हरिभजनान्मुक्तेरुत्पद्यमानत्वात्) तस्मिन् संबन्धे द्योत्ये सति तस्मात्कार्यभूतान्मुक्तिशब्दाच्चतुर्थी। मुक्तचर्थं हरिं भजतीत्यर्थः।

31. उत्पातेन, ज्ञापिते च, उत्पातेन यद्ज्ञापितं तत्र चतुर्थी स्यात्। यथा वाताय कपिला विद्युत्, विद्युतः कपिलत्वमौत्पातिकम्। अतः कपिला विद्युदित्युत्पातः। तेन ज्ञापितः

फलेभ्यो याति । फलान्याहर्तुं यातीत्यर्थः । नमस्कुर्मो नृसिंहाय । नृसिंहमनुकूलयितुमित्यर्थः । एवं , स्वयंभुवे नमस्कृत्य ' इत्यादावपि ।

---

तत्फलभूत इत्यर्थः वातः। तत्र चतुर्थी वातायेति। यद्यपि तादर्थ्य इत्यनेनैव अत्र चतुर्थी प्राप्नोति, तथाऽपि ज्ञाप्यज्ञापकभावात्मकसंबन्धविशेषद्योतनार्थमिदमिति ।

32. क्रियार्थोपपदस्य च कर्मणि स्थानिनः–क्रिया अर्थः प्रयोजनम् यस्यास्सा क्रिया क्रियार्था उपपदं उपोच्चरितं पदं समीपवर्तिपदमित्यर्थः यस्य तत् क्रियार्थोपपदम्, क्रियाया उपपदत्वासम्भवात् क्रियया तद्वाचकं पदं लक्ष्यते, तथा च क्रियाफलकक्रियावाचकोपपदस्येत्यर्थो लब्धः। तथाविधस्य स्थानिनः अप्रयुज्यमानस्य स्थानिपदस्याप्रयुज्यमानत्वरूपो योऽर्थो भाक्तः "तुमुन्ण्वुलौ क्रियायां क्रियार्थाया"मिति क्रियाफलकक्रियावाचकपदे उपपदे सति तुमुण्वुलौ विधीयेत इति, तयोर्मध्ये प्रकृते तुमुन्नेव गृह्यते। विधीयमानस्य तस्य तुमुनः अप्रयुज्यमानत्वमस्मिन् सूत्रे स्थानिन इति वचनादेवेति बोध्यम्। तस्य तुमुनः तुमुन्नन्तस्य यत्कर्मभूतं तत्र चतुर्थी स्यात्। क्रियाफलकक्रियावाचके पदे उपपदे सति धातोः यो विहितस्तुमुन् तदन्तस्याप्रयोगे सति तुमुन्कर्मणि चतुर्थी स्यादिति फलितार्थः। यथा "फलेभ्यो याति" अत्र तुमुन्वुलाविति आहरणक्रियाफलकयानक्रियावाचिनि यातीति पदे उपपदे आहरणक्रियावचिधातोर्यो विहितस्तुमुन् आहर्तुमिति, तस्याप्रयोगे सति आहर्तुमित्याहरणक्रियायां यत्कर्मभूतं (फलान्याहर्तुं यातीत्यत्र) फलानीति तत्र चतुर्थी स्यात्। ननु तुमुनः कर्मणि स्थानिन इत्येव न्यासोऽस्तु इति चेन्मैवम् तुमुनः क्रियार्थोपपदत्वा व्यभिचारे सति भवत्विदम्। न तु तद्दृश्यते। समानकर्तृकेषु तुमुन्नित्यादिना अक्रियार्थोपपदेऽपि तुमुनः विधानात्। अत एव इच्छति भोक्तुमित्यादिप्रयोगसिद्धिः। तस्मात् क्रियार्थोपपदस्येति किम्। फलानीच्छति भोक्तुमिति प्रत्युदाहरणं द्रष्टव्यम्। न चात्र तुमुनस्स्थानित्वमेव नास्तीति प्रत्युदाहरणम् न सङ्गच्छत इति वाच्यंम्। स्थानित्वेऽपि तुमुनः फलानां भोगायेच्छतीति फलानि भोगायेच्छतीति वा तुमुनः कर्मणि षष्ठी, द्वितीयान्यतरविभक्त्या एवावकाशेन फलेभ्ये भोगायेच्छतीति चतुर्थ्या अनन्वितत्वात्। तत्त्वबोधिन्यान्तु प्रविश पिण्डमिति प्रत्युदाहृतम्। तस्यायमभिप्रायः। क्रियार्थोपपदस्येत्यस्याभावे तुमुन इत्यर्थबोधकपदाभावात् तुमुनः प्रसक्तिरेव न स्यादिति। मया तु तुमुन इति सूत्रे पदं न्निक्षिप्यतां लाघवात्। किं क्रियार्थोपपदस्येति शङ्कोत्तरत्वेन फलानीच्छति भोक्तुमिति प्रत्युदाहृतमिति वेद्यम्। अन्यथा चेदं व्याख्यायते। क्रियाया अर्थः फलं क्रियार्थः तच्च फलं क्रियैव। एवं क्रियार्थो नाम क्रियाफलभूतक्रिया। तद्वाचकञ्च पदं लक्षणया क्रियार्थमेव। एवञ्च क्रियार्थ क्रियाफलभूतक्रियावाचकं पदं उपपदं यस्य तस्य स्थानिन इति। यथा फलान्याहर्तुं यातीत्यत्र क्रियायानं, तस्य फलभूता क्रिया आहरणं तद्वाचकं पदम्। आहृ इत्येतत्, तदुपपादकस्तुमुन्नाहर्तुमिति। अमुमर्थमाश्रित्यैव (आहृ इत्यस्यो) पपदस्य सुप्तिङन्त लक्षणपदत्वाभावमाशङ्क्य प्रकृतिमात्रमेव विवक्षितमिति तत्त्वबोधिन्यां समाधापितम्। ।

५८२ **तुमार्थाच्च भाववचनात्** । ।२।३।१५।' भाववचनाश्च ' (सू ३१८०) इति सूत्रेण यो विहितस्तदन्ताच्चतुर्थी स्यात्। यागाय याति यष्टुं यातीत्यर्थः ।

---

क्रियायै इयं क्रियार्था, क्रिया उपपदं यस्य तस्येति व्याख्याने तु क्रियाफलकक्रियेति प्रथमोक्तार्थ एव लभ्यत इति न विशेषः ।

33. तुमर्थाच्च भाववचनात्। तुमः तुमुनः अर्थ इव अर्थो यस्य सः तुमर्थः। यस्मिन्नर्थे तुमुन्विहितस्तस्मिन्नर्थे विहितो घञादिरन्यः प्रत्ययस्तुमर्थ इत्युच्यते । भाववचनाश्चेति सूत्रेण विहितो भाववचनः लाक्षणिकोऽयं शब्दः। तस्मात्प्रत्ययात् चतुर्थी स्यात्, केवलात्प्रत्ययाद्विभक्त्युदयस्य असंभवत्वेन प्रत्ययान्तात् चतुर्थी स्यादिति "भाववचनाश्चेति" सूत्रेण विहितो यस्तुमर्थः प्रत्ययो घञादिस्तदन्तात् चतुर्थी स्यादित्यर्थः। ननु भाववचनाश्चेति सूत्रेण विहितो यः प्रत्ययः स तुमर्थ एव भवति (क्रियार्थायां क्रियायां भविष्यत्यर्थे तुमुनः भावे इत्यधिकृत्य वक्ष्यमाणानां घञादीनाञ्च विधानात्) इति हेतोः किं तुमर्थादिति चेन्मैवम्। तुमर्थादित्यस्याभावे "भाववचनाच्चे"ति पदात् भाववचनाश्चेति सूत्रेण विहितात्प्रत्ययादित्यर्थालाभात्। भावे उच्यत इति भाववचन इत्येतावन्मात्रार्थलाभात् । ननु यो भाववचनः स एव "भाववचनाश्चे"ति सूत्रेण विहितः, स एव तुमर्थश्चेति किम्पुनः भावनाश्चेति सूत्रपरामर्शेनेति चेन्मैवम् न केवलं भावार्थकप्रत्ययान्तादनेन चतुर्थी विधीयते। किन्तु क्रियार्थायां क्रियायां भविष्यत्यर्थे वर्तमानो यो भावार्थकप्रत्ययस्तदन्तादिति। अत एव यागं करोतीत्यत्र भावप्रत्ययान्तादपि न चतुर्थी। क्रियार्थोपपदत्वभविष्यदर्थबोधकत्वरूपविशेषार्थाभावात्। तस्मात् "भाववचनाश्चेति" सूत्रपरामर्शाय तुमर्थादिति विशेषणमित्यविवादम्। अत एव कौमुद्यां तुमर्थादित्यस्य न ह्यभिहितोऽर्थः। किन्तु भाववचनादित्यस्यैव "भावचनाश्चे"ति सूत्रेण विहितो यस्तदन्तादित्यर्थः प्रोक्तः। तुमर्थाद्भाववचनादिति पदद्वयसमभिव्याहारबलात् भावचनाश्चेति सूत्रेण विहितो यस्तदन्तादित्यर्थसिद्धिरिति फलितार्थकथनम् ।

34. उपपदविभक्तेः कारकविभक्तिर्बलीयसी उपपदनिमित्तकत्वेन जायमाना विभक्तिरुपपदविभक्तिः। उभयतः कृष्णं गोपाः इत्यादौ यथा उभाद्युपपदं निमित्तीकृत्य द्वितीया प्रवृत्ता तथेति। कारकसंज्ञाविशेषभूतकर्मादिषु यो विभक्तिर्विहिता सा कारकविभक्तिः। यथा हरिं भजति, विप्राय गां ददातीत्यादि उभयोः प्राप्तौ कारकविभक्तिर्बलीयसी–यथा–नमस्करोति देवान्। अत्र नम इत्युपपदवं निमत्तीकृत्य उपपदविभक्तिश्चतुर्थी प्राप्ता, नमस्कारक्रियया देवानामाप्तुमिष्टतमत्वेन कर्मणि द्वितीयेति कारकविभक्तिर्द्वितीया प्राप्ता बलीयस्त्वाद्द्वितीया देवानिति। करोतिपदाभावे तु नमो देवेभ्य

५८३ **नमः स्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च** । ।२।३।१६। एभिर्योगे चतुर्थी स्यात् । हरये नमः । ‘ **उपपदविभक्तेः कारकविभक्तिर्बलीयसी**’ (प १०३) नमस्करोति देवान् । प्रजाभ्यः स्वस्ति ।अग्नये स्वाहा । पितृभ्यः स्वधा । ‘**अलमिति पर्याप्त्यर्थग्रहणम्** ’ (वा १४६२) तेन दैत्येभ्यो हरिरलं – प्रभुः – समर्थः– शक्त इत्यादि । प्रभ्वादियोगे षष्ठ्यपि साधुः । ‘तस्मै प्रभवति–’ (सू १७६५) ‘स एषां ग्रामणीः’ (सू १८७८) इति निर्देशात् । तेन ‘ प्रभुर्बुभूषुर्भुवनत्रयस्य ’ इति सिद्धम् । वषडिन्द्राय । चकारः पुनर्विधानार्थः, तेनाशीर्विवक्षायां परामपि ‘ चतुर्थी चाशिषि–’ (सू ६३१) इति षष्ठीं बाधित्वा चतुर्थ्येव भवति । स्वस्ति गोभ्यो भूयात् । ५८४ **मन्यकर्मण्यनादरे विभाषाऽप्राणिषु** । ।२।३।१७। प्राणिवर्जे मन्यतेः कर्मणि चतुर्थी वा स्यात्तिरस्कारे । न त्वां तृणं मन्ये तृणाय वा । श्यना निर्देशात्तानादिकयोगे न । न त्वां तृणं मन्वे । ‘**अप्राणिष्वित्यपनीय।। नौकाकान्नशुकसृगालवर्जेष्विति वाच्यम्** (वा १४६४) तेन ‘न त्वां नाव मन्नं वा मन्ये’ इत्यत्राऽप्राणित्वेऽपि चतुर्थी न । ‘न त्वां शुने मन्ये’ इत्यत्र प्राणित्वेऽपि भवत्येव। ५८५ **गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि** । ।२।३।१२। अध्वभिन्ने गत्यर्थानां कर्मण्येते स्तश्चेष्टायाम् । ग्रामं ग्रामाय वा गच्छति । चेष्टायाम् किम् – मनसा हरिं व्रजति । अनध्वनि इति किम् – पन्थानं गच्छति । गन्त्राऽधिष्ठितेऽध्वन्येवायं निषेधः । यदा तूत्पथात्पन्था एवाक्रमितुमिष्यते तदा चतुर्थी भवत्येव, उत्पथेन पथे गच्छति इति चतुर्थी । ५८६ **ध्रुवमपायेऽपादानम्** । ।१।४।२४ अपायो विश्लेषः, तस्मिन्साध्ये ध्रुवमवधिभूतं कारकमपादानं स्यात् ।

---

इत्युपपदविभक्तिरेव कर्तुः क्रियया आप्तुमिष्यमाणतमं कर्मेति द्वितीयाकारके [illegible]। न कारकविभक्तिप्रसक्तिः क्रियाया अनिबन्धनात् ।

35. [illegible] स्यात्। अत एवालं प्रभुरशक्त इत्यादिकौमुदी। चात् चतुर्थी पुनरपि स्यात्। पुनर्विधानफलन्तु मूल एव स्फुटीभविष्यति ।

36. मन्यकर्मणीत्यादि। अप्राणिष्विति पर्युदासः। तेन प्राणिवर्जे प्राणिभिन्ने इत्यर्थो लभ्यते। तानादिकयोगेन तनादिषु मनु–अवबोधने इति यः पठितो धातुः तद्योगे तु न चतुर्थी मन्यतेरेवेह ग्रहणान्न तु मनुतेरिति भावः।

37. **ध्रुवमपायेऽपादानम्। धात्वर्थानाश्रयस्य धात्वर्थाश्रयस्य च वस्तुनः वियोगे साध्ये सति साधनन्तु धात्वर्थ एव। धात्वर्थानाश्रयत्वे सति वियोगाश्रयं यद्वस्तु तत्**

५८७ **अपादाने पञ्चमी** । ।२।३।२८। ग्रामादायाति । धावतोऽश्वात्पतति । कारकं किम् – वृक्षस्य पर्णं पततिं । ‘ **'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्'** (वा १०७९) पापाज्जुगुप्सते, विरमति । धर्मात्प्रमाद्यति । ५८८ **भीत्रार्थानां भयहेतुः** । १।४।२५। भायार्थानां त्राणार्थानां च प्रयोगे भयहेतुरपादानं स्यात् । चोराद्बिभेति । चोरात्त्रायते । भयहेतुः किम्–अरण्ये बिभेति, त्रायते वा । ५८९ **पराजेरसोढः** । ।१।४।२६। पराजेः प्रयोगेऽसह्योऽर्थोऽपादानं स्यात् । अध्ययनात्पराजयते । ग्लायतीत्यर्थः । असोढः किम्–शत्रून्पराजयते । अभिभवतीत्यर्थः । ५९० **वारणार्थानामीप्सितः** । ।१।४।२७। प्रवृत्तिविघातो वारणम्, वारणार्थानां धातूनां प्रयोगे ईप्सितोऽर्थोऽपादानं स्यात् । यवेभ्यो गां वारयति । ईप्सितः किम्– यवेभ्यो गां वारयति क्षेत्रे ।

---

अविधिभूतं कारकमपादानं स्यादित्यर्थः। यथा ग्रामादायाति पुरुषः आयानमागमनं धात्वर्थसाधनं, तेन साध्यो विश्लेषः। ग्रामपुरुषयोः धात्वर्थानाश्रयत्वेन वियोगाश्रयो ग्रामोऽवधिः अपादानसंज्ञः। धात्वर्थाश्रयस्तु पुरुषः। धावतोऽश्वात्पतति। पुरुषस्य पतनक्रियाश्रयत्वयोग्यतासूचनाय धावत इत्यश्वविशेषणम्। न हि निश्चलादश्वात्पुरुषः पतेदिति। अश्वात्पततीत्येतावन्मात्रमेवोदाहरणम्। कारकं किं? वृक्षस्य पर्णं पतति। वृक्षस्येति षष्ठी शेष इति संबन्धषष्ठी। वृक्षसंबन्धिपर्णं पततीत्यर्थः। अत्र वृक्षो यद्यपि प्रकृतधात्वार्थपतनजन्यविभागाश्रयधात्वर्थानाश्रयत्वेन च ध्रुवत्वेन अपादानसंज्ञकस्तथाऽपि तस्य अकारकत्वेन नापादानत्वम्। अयं भावः। वृक्षपर्णयोरवयवावयविभावसंबन्ध–विवक्षायां वृक्षपदं पर्णान्वय्येव न तु पतनक्रियान्वयि। पतनक्रियाजन्यविभागाश्रयत्वस्याविवक्षात इति वृक्षस्य पर्णं पतति शाखाग्रादित्यपि प्रत्यदाहरणं द्रष्टव्यम्। पतनक्रियाजन्यविभागाश्रयत्वेन पतनक्रियान्वयित्वात् शाखाग्रं कारकम्। अवधित्वात् ध्रुवं चेति तत्र पञ्चमी। तादृशविभागानाश्रयत्वेन क्रियानन्वयित्वात् ध्रुवमप्यकारकमिति वृक्षान्नपञ्चमी इति। विभागा [illegible] विवक्षायां वृक्षात्पर्णं पततीत्यपि प्रयोगः साधुरेव। वृक्षात्पततः शाखाग्रात्पर्णं पततीत्यपि प्रयोगः साधुरेव। वृक्षावधिकं शाखाग्रपतनं, शाखाग्रावधिकं पर्णपतनञ्चेत्युभयत्रापि कारकध्रुवत्वेन पञ्चमीलाभात् ।

38. "यवेभ्यो गां वारयति क्षेत्रे" यवानामीप्सितत्वेन गोकर्तृक भक्षणेन यवानां नाशो माभूदिति यवेभ्यस्सकाशाद्गां वारयति कृषीवलः, क्षेत्रं त्वनीप्सितमेवेति न तत्र पञ्चमी। ईप्सितग्रहणाभावे तु ईप्सितवदनीप्सितेऽपि पञ्चमी स्यात्। तथा च यवेभ्यो गां वारयति क्षेत्रादिति प्रयोगः स्यादिति बोध्यम्। यदा तु क्षेत्रमेव गोभिर्दूषितं माभूदितीप्सितत्वेन

५९१ **अन्तर्धौ येनादर्शनमिच्छति** । ।१।४।२८। व्यवधाने सति यत्कर्तृकस्यात्मनो दर्शनस्याभावमिच्छति तदपादानं स्यात् । मातुर्निलीयते कृष्णः । अन्तर्धौ किम्– चौरान् न दिदृक्षते । इच्छतिग्रहणं किम् अदर्शनिच्छायां सत्यां सत्यपि दर्शने यथा स्यात् । (देवदत्ताद्यज्ञदत्तो निलीयते) । ५९२ **आख्यातोपयोगे**। ।१।४।२९। नियमपूर्वकविद्यास्वीकारे वक्ता प्राक्संज्ञः स्यात् । उपाध्यायादधीते । उपयोगे किम्– नटस्य गाथां शृणोति ।

---

गृह्यते। तदा गां वारयति क्षेत्रादित्यपि प्रयोग इष्ट एवेति ज्ञेयम्। वारणक्रियया गोराप्तुमीप्सिततमत्वाद्गामिति द्वितीया। वृञ् वरण इति चुरादिः। वारयति वरति वरते इति च रूपत्रयम् ।

39. अन्तर्धौ योनादर्शनमिच्छति। अन्तर्धिर्व्यवधानं तच्च दर्शनक्रियायां कर्तुः कर्मणश्चेति बोध्यम्। द्रष्टृदृश्ययोरितः प्राक्सिद्धस्य दर्शनस्य येनकेनापि हेतुना इदानीं विश्लेषे सतीत्यर्थः। येनादर्शनं यत्कर्तृकस्य स्वकर्मकस्य दर्शनस्याभावः वाञ्छति तत् दर्शनक्रियायां कर्तृवस्तु अपादानं स्यात्। यथा मातुर्निलीयते कृष्णः। माता मामाद्राक्षीदिति कृष्णः कुत्र चिन्निलीय वर्तत इत्यर्थः। इतःपूर्व माता कृष्णं पश्यत्येव, इदानीं व्यापारान्तरप्रसक्तिरूपव्यवधानेन मातुः कृष्णदर्शनविश्लेषे सति पुनः मातृकर्तृकमात्मनोदर्शनं मास्त्विति मातृकर्तृकस्वकर्मकदर्शनाभावं कृष्णो वाञ्छतीति मातुरपादानत्वेन पञ्चमी–चोरान्न दिदृक्षत इत्यत्र तु व्यवधानापरपर्यायस्य विश्लेषस्य संयोगपूर्वकत्वेन चोराणामात्मनश्च इतः प्राग्दर्शनक्रियासंबन्ध एव नास्तीति कुतस्तद्विश्लेष इति व्यवधानाभावात्। सत्यपि चोरकर्तृकस्य स्वकर्मकस्य दर्शनस्याभावाभिलाषे, न चोराणामपादानत्वम्।

40. "नटस्य गाथां शृणोति सभ्य" इति श्रवणक्रियाश्रयः कर्ता। गाथा तु पुरातनराजसंबन्धिनी नटस्तस्या गाथाया वक्ता। नटस्येति षष्ठी वक्तृत्वरूपसंबन्धेन गाथायामन्वेति। तथा च नटवक्तृकगाथाकर्मकश्रवणाश्रयस्सभ्य इति शाब्दबोधः। इदञ्च गाथाश्रवणं यादृच्छिकमेव न तु नियमपूर्वकमिति गाथाऽऽख्यातुर्नटस्य नापादानत्वम्। किन्तु कारकप्रातिपदिकार्थव्यतिरिक्ता षष्ठ्येव। उपयोगपदाभावे तु नटस्यापि कारकत्वेन तद्व्यतिरिक्तत्वाभावात्षष्ठी न स्यात्किन्तु पञ्चम्येवेति भावः। अत्र तत्त्वबोधिन्यां नटसंबन्धि गाथाकर्मक श्रवणमित्यर्थोऽभाणि। न तन्मह्यं रोचते। तथात्वे श्रवणाश्रयो नटस्स्यादिति प्रातिपदिकार्थमात्र इति नटे प्रथमयैव भाव्यं नटो गाथां शृणोतीति। कारकेभ्यः प्रातिपदिकार्थमात्राच्च व्यतिरिक्तत्वे सति हि शेषषष्ठीप्रसङ्गः। न प्रातिपादिकार्थमात्रव्यतिरिक्तत्वमत्र नट इति कथमत्र षष्ठी स्यात्। अपि च उपयोगो मास्तु। आख्यातृत्वमेव नटस्य नास्ति नटसंबन्धि श्रवणमिव तस्य श्रोतृत्वादिति नैतत्प्रत्युदाहरणाय सङ्गच्छते। यच्च तत्रोक्तं नटस्य गाथान्वये तु कारकत्वाभावादेवाप्राप्तौ उपयोगग्रहणमसमर्थितं स्यादिति, तदपि प्रत्युक्तमेव मया। उपयोगपदाभावे तु नटस्यापि कारकत्वेनेत्यादिना। (पुरातनराजसंबन्धिनी गाथा न तु नटसंबन्धिनी किन्तु नटवक्तृकैवेति

५९३ **जनिकर्तुः प्रकृतिः** । ।१।४।३०। जायमानस्य हेतुरपादानं स्यात् । ब्रह्मणः प्रजाः प्रजायन्ते । ५९४ **भुवः प्रभवः** । ।१।४।३१। भवनं भूः । भूकर्तुः प्रभवस्तथा, हिमवतो गङ्गा प्रभवति । तत्र प्रकाशत इत्यर्थः । ' **ल्यब्लोपे कर्मण्यधिकरणे च** ' (वा १४७४–१४७५) प्रासादात्प्रेक्षते, आसनात्प्रेक्षते । प्रासादमारुह्य, आसने उपविश्य, प्रेक्षत इत्यर्थः । श्वशुराज्जिह्रेति । श्वशुरं वीक्ष्येत्यर्थः । ' **गम्यमानापि क्रिया कारकविभक्तीनां निमित्तम्** ' (वा ५०४१) कस्मात्त्वम् , नद्याः । ' **यतश्चाध्वकालनिर्माणं ततः पञ्चमी ' (वा १४७७) । तद्युक्तादध्वनः प्रथमासप्तम्यौ' (वा १४७९)। 'कालात्सप्तमी च वक्तव्या**(वा १४७८) । वनाद् ग्रामो योजनं योजने वा । कार्तिक्या आग्रहायणी मासे ।

---

न दोष इति भावः।) किञ्च नटश्शृणोतीति वक्तव्ये नटस्य शृणोतीति क्वापि प्रयोगो न दृश्यते। अतः अनभिधानरूपः (अप्रयुक्तत्वरूपदोषोऽत्र ब्रह्मास्त्रमेव)।

41. जनिकर्तुः प्रकृतिः–"जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भव" इति अमरकोशाज्जनिरुत्पत्तिः। तस्यामुत्पत्तिक्रियायां यः कर्ता, तस्य जनिकर्तुः। उत्पत्त्याश्रयस्येत्यर्थः। प्रकृतिः कारणं तच्चोपादानं वा निमित्तं वा भवतु। अपादानं स्यात्। यथा ब्रह्मणः प्रजाः प्रजायन्ते प्रपूर्वकजनीप्रादुर्भाव इति धातोः ज्ञाजनोर्जेति जादेशे सति प्रजायन्त इति रूपम्। प्रकृतेरुत्पत्तिरर्थः तदुत्तरत्र तिङः आश्रयत्वमर्थः। प्रजननक्रियायां कर्त्र्यः प्रजाः ता एव प्रजायन्त इति प्रजननक्रियाश्रयत्वेन प्रतिपादिताः। प्रजाः प्रजायन्त इत्यत्र शाब्दबोधस्तु(अभेदसंबन्धेन) प्रजननक्रियाश्रयाभिन्नाः प्रजा इति, एतासामुत्पत्त्याश्रयानां प्रजानां ब्रह्मा चतुर्मुखो निमित्तमिति, तस्मात्पञ्चमी। ब्रह्म मायोपहितं चैतन्यमुपादानमिति तस्माद्वा पञ्चमी ब्रह्मण इति। अस्मादेव हि सूत्रात् प्रकृतिर्नामोपादानमेव, न तत्त्वान्तरमिति शाङ्करब्रह्मसूत्रभाष्ये सिद्धान्तितम् ।

42. ल्यब्लोपे कर्मण्यधिकरणे च–ल्यपो ल्यबन्तस्य लोपः अप्रयोगः (अप्रयोगे हेतुर्गम्यमानार्थत्वादित्येव) तस्मिन् सति गम्यमानस्य ल्यबन्तस्य (ल्यबन्तेनोक्तक्रियाया इत्यर्थः) यत्कर्मभूतं यच्चाधिकरणभूतं, तत्र पञ्चमी स्यात्। यथा प्रासादात्प्रेक्षते गम्यमानं ल्यबन्तमारुह्येति। तदुक्ता या क्रिया आरोहणक्रिया, तत्र यत्कर्मप्रासादः तत्र पञ्चमी। इदम् कर्मणीत्यस्योदाहरणम्। यथा च आसनात्प्रेक्षते। अत्र गम्यमानं ल्यबन्तमुपविश्येति। तदुक्ताक्रिया उपवेशनक्रिया। तत्र अधिकरणभूतमासनं तत्र पञ्चमी। इदमधिकरण इत्यस्योदाहरणम्। कर्मणीत्यस्य द्वितीयमुदाहरणमाह "श्वशुराज्जिह्रे"तीति।

43. "कस्मात्त्वं नद्याः"। अत्र कस्मात्त्वमिति केनचित्पृष्टः, कश्चिन्नद्या इत्युत्तरयाञ्चकार। प्रश्नोत्तरयोस्साधारणीभूता आगमनक्रिया तु गम्यते। कस्मात्त्वमागतः? नद्या आगत इति इयं क्रिया गम्यमानापि कारकविभक्तेः प्रयोजिका। यथा श्रूयमाणा आगमनक्रिया

५९५ **अन्यारादितरर्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते ।** ।२।३।२९।
एतैर्योगे पञ्चमी स्यात् । अन्येत्यर्थग्रहणम् । इतरग्रहणं प्रपञ्चार्थम् । अन्यो भिन्न इतरो वा कृष्णात् । आराद्वनात् । ऋते । कृष्णात् । पूर्वो ग्रामात् । दिशि दृष्टः शब्दो दिक्शब्दः । तेन सप्रति देशकालवृत्तिना योगेऽपि भवति । चैत्रात्पूर्वः फाल्गुनः । अवयववाचियोगे तु न । 'तस्य परमाम्रेडितम्' (सू ८३) इति निर्देशात् । पूर्वं कायस्य। अञ्चूत्तरपदस्य तु दिक्शब्दत्वेऽपि षष्ठ्यतसर्थ-' (सू ६०९) इति षष्ठीं बाधितुं पृथग्ग्रहणम् । प्राक् प्रत्यग् वा ग्रामात् । आच् दक्षिणा ग्रामात् । आहि-दक्षिणाहि ग्रामात् । 'अपादाने पञ्चमी' (सू ५८७) इति सूत्रे 'कार्तिक्याः प्रभृति' इति भाष्यप्रयोगात्प्रभृत्यर्थयोगे पञ्चमी । भवात् प्रभृति आरभ्य वा सेव्यो हरिः । 'अपपरिबहिः-' (सू ६६६) इति समासविधानाद् ज्ञापकाद्बहिर्योगे पञ्चमी । ग्रामाद्बहिः ।

---

ध्रुवमपायेपादानमिति सूत्रात्, ग्रमादायातीत्यत्र ग्रामे पञ्चमीकारकविभक्तिं प्रयोजयति तद्वदिति भावः ।

44. इतरग्रहणं प्रपञ्चार्थम्। अन्यार्थबोधकानामन्येतरादिशब्दानां योगे सतीति विस्तारबोधनार्थमित्यर्थः। वस्तुतस्तु इतरग्रहणं सुत्रे अकर्तुं शक्यम्। अन्यार्थबोधनामित्यनेनैव अन्येतरादिशब्दानामिति विशेष्यलाभात्। ऋत इत्यत्र तु नार्थग्रहणं, पृथग्विनानानेति वक्ष्यमाणत्वात्। ऋते योगे द्वितीयाऽपि स्यात् द्वितीयाम्रेडितान्तेषु ततोन्यत्रापि दृश्यत इति वार्तिकात्। तस्य परमाम्रेडितमिति निर्देशात्। पूर्वशब्दः प्राचीनदिशि, परशब्दः प्रतीची दिशि दृष्ट इति तेन परशब्देन अधुना अवयववाचिना योगे तच्छब्दात्पञ्चमी प्राप्ता। तथात्वे तस्मात्परमाम्रेडितमिति वक्तव्ये, तस्य परमिति पाणिनिनिर्देशोऽसंगच्छमानस्सन् अवयववाचि दिक्छब्दयोगे पञ्चमी नेति ज्ञपयतीति भावः। अवयवावयविभावरूपसंबन्धप्रतिपादनात् तस्येति शेषषष्ठी बोध्या। तस्य परमित्यस्य द्विरुक्तावयवपररूपमित्यर्थः। पूर्वं कायस्य, पूर्वपदस्य पूर्वावयववाचित्वात्पूर्वं कायादिति न भवतीति भावः। अञ्चूत्तरपद इत्यस्य साहचर्याद्दिक्छब्दो विशेष्यम्। अञ्चु-गतिपूजनयोरिति धातुः, उत्तरपदं यस्य सः अञ्चूत्तरपदः। यद्यपि प्रागिति दिक्छब्दे अञ्चुधातुर्नोत्तरपदम्। तथापि क्विप्तु धातुत्वं न जहातीति क्विबन्तोऽपि धातुरेवेति न दोषः। यस्य पदद्वयसमुदायात्मकस्य प्रागित्यादिशब्दस्य अञ्चुः उत्तरावयवः सः अञ्चूत्तरपदो दिक्छब्दः प्रागित्यादिः। तेन योगे पञ्चमी स्यात्। ननु इदञ्चाकर्तुं शक्यम्। प्रागित्यञ्चूत्तरपदस्यैव दिक्छब्दत्वात्। दिक्छब्द इत्यनेनैव प्रागादिदिक्छब्दयोगे पञ्चमीलाभादित्याशङ्कायामाह, षष्ठीं साधितुं पृथग्ग्रहणमिति। अयं भावः। "षष्ठ्यतसर्थप्रत्यये"नेति सूत्रे दिक्छब्द इति पञ्चम्या अपवाद

५९६ **अपपरी वर्जने** । ।१।४।८८। एतौ वर्जने कर्मप्रवचनीयौ स्तः । ५९७ **आङ्मर्यादावचने** । ।१।४।८९। आङ्मर्यादायामुक्तसंज्ञः स्यात् वचनग्रहणादभिविधावपि । ५९८ **पञ्चम्यपाङ्परिभिः** । ।२।३।१०। एतैः कर्मप्रवचनीयैर्योगे पञ्चमी स्यात् । अप हरेः, परि हरेः संसारः । परिरत्र वर्जने । लक्षणादौ तु हरिं परि । आ मुक्तेः संसारः । आ सकलाद् ब्रह्म । ५९९ **प्रतिः प्रतिनिधिप्रतिदानयोः** । ।१।४।९२। एतयोरर्थयोः प्रतिरुक्तसंज्ञः स्यात् ।

---

इति वक्ष्यमाणत्वेन, अपवादत्वात्पञ्चमीं बाधित्वा षष्ठ्यां प्राप्तायां, तद्बाधनार्थमञ्चूत्तरपद इति पृथग्ग्रहणमिति। ननु अतसर्थप्रत्ययान्तेन दिक्छब्देन योगे हि षष्ठी विहिता। तस्मात् प्रागित्यत्र अप्रत्ययान्तत्वात्षष्ठ्याः प्राप्तिरेव नास्तीति कृत्वा किमञ्चूत्तरपदग्रहणेन इति चेदुच्यते- अञ्चेर्लुगिति प्राच्यामित्यत्र अतसर्थप्रत्ययस्यास्तातेर्लुप्तत्वेन प्रत्ययलोपे प्रत्ययलक्षणमिति प्रत्ययान्तत्वप्रयुक्ता षष्ठी प्रसक्तेति। तद्बाधनाय अञ्चूत्तरपदग्रहणमिति। वस्तुतस्तु अतसर्थः प्रत्यय एव नियमेन भवतीति षष्ठ्यतसर्थेति सूत्रे प्रत्ययग्रहणं व्यर्थीभूय श्रूयमाणप्रत्ययान्तेन योगे सत्येव षष्ठीत्यर्थं बोधयतीत्याश्रयणात्। लुप्तप्रत्ययान्तेन प्राच्यामित्यादिना योगे षष्ठ्याः प्राप्तिरेव नास्तीति दिक्छब्दादित्यनेनैव पञ्चमीलाभे अञ्चूत्तरपदग्रहणमकर्तुं शक्यमेव। आच् दक्षिणादाच् इति सूत्रेण विधीयमानः प्रत्ययः, आहि आहि च दूर इति सूत्रेण विधीयमानः प्रत्ययः। आजन्तेन आह्यन्तेन च योग इत्यर्थः। इमे चाकर्तुं शक्ये, तदन्तयोर्दिक्छब्दत्वानपायात्। तयोः प्रत्यययोरतसर्थत्वाभावेन षष्ठ्या अपि प्राप्तेरभावाच्च। तस्मात् अन्यारादृते दिक्छब्दयुक्ते इति न्यासस्सुवचः। समासविधानाद्ज्ज्ञापकात्। "अप परि बहिरञ्चवः पञ्चम्या" इति पञ्चम्यन्तेन सह बहिस्समस्यते इत्युक्तत्वेन बहिर्योगे पञ्चम्यभावे कथं पञ्चम्यन्तेन बहिस्समस्यत इति वक्तुं शक्यत इति बहिर्योगे पञ्चमीलाभ इति भावः।

45. पञ्चम्यपाङ्परिभिः-कर्मप्रवचनीययुक्ते द्वितीयेति सूत्रात् कर्मप्रवचनीययुक्त इति पदमत्रान्वेति। कर्मप्रवचनीयेति लुप्ततृतीयाकं पदम्। तदेतदाह एभिः कर्मप्रवचनीयैर्योग इति कौमुदी ।

46. "प्रतिनिधि प्रतिदाने च यस्मात्।"-प्रतिनिधिप्रतिदानयोस्समाहारः प्रतिनिधिप्रतिदानम्। तत्र वर्तमानैः तदर्थबोधकैरित्यर्थः कर्मप्रवचनीययुक्त इत्यत्राप्यन्वेति। कर्मप्रवचनीयैः अर्थात् प्रतिपादनात् योगे सति प्रतिनिधित्वं वा प्रतिदानं वा यस्मात् यदवधिकं तत्र पञ्चमी स्यात्। पञ्चम्यनुकर्षणार्थकश्चकारः। यस्मादिति किम्। अवधिभूतस्य निधेर्दत्तस्य वा वस्तुनोऽग्रहणे माभूत्। ग्रहणेऽपि प्रतिनिधेः प्रतिदत्तस्य वा माभूच्चेति। तेन प्रद्युम्नः प्रतीति, प्रद्युम्नात्कृष्णः प्रतीति वा न प्रयोगः। प्रतिनिधिभूतस्य वस्तुनोऽवधिर्निधिभूतः

६०० **प्रतिनिधिप्रतिदाने च यस्मात्** । ।२।३।११। अत्र कर्मप्रवचनीयैर्योगे पञ्चमी स्यात् । प्रद्युम्नः कृष्णात् प्रति । तिलेभ्यः प्रतियच्छति माषान् । ६०१ **अकर्तर्यृणे पञ्चमी** । ।२।३।२४। कर्तृवजितं यदृणं हेतुभूतं ततः पञ्चमी स्यात् । शताद्बद्धः । अकर्तरि किम्-शतेन बन्धितः । ६०२ **विभाषा गुणेऽस्त्रियाम्** । ।२।३।२५। गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यात् । जाडयाद् जाडयेन वा बद्धः । गुणे किम्-धनेन कुलम् । अस्त्रियां किम्-बुद्धया मुक्तः ' विभाषा ' इति योगाविभागाद् अगुणे स्त्रियां च क्वचित् । धूमादग्निमान् । नास्ति घटोऽनुपलब्धेः । ६०३ **पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्** । २।३।३२। एभिर्योगे तृतीया स्यात् पञ्चमीद्वितीये च । अन्यतरस्यां ग्रहणं समुच्चयार्थम् , पञ्चमीद्वितीये चानुवर्तेते । पृथग् रामेण रामाद् रामं वा । एवं विना, नाना ।

---

प्रतिदत्तस्यावधिर्दत्तश्चेति बोध्यम्। प्रद्युम्नस्य प्रतिनिधेः कृष्णोनिधिः, प्रतिदत्तानां माषाणां तिलादत्तभूताश्चेति ज्ञेयम्। प्रतियच्छति, प्रतिददाति प्रतिगृह्णातीति यावत्, मूल्यभूतां स्तिलान् दत्वा माषान् प्रतिगृह्णातीत्यर्थः ।

47. "अकर्तर्यृणे पञ्चमी" कर्तृकरणयोस्तृतीयेति सूत्रादनुवर्तमानायास्तृतीयाया अपवादाय पञ्चमीग्रहणम्। अकर्तरीत्यत्र नञः प्रतिषेधः। पर्युदासरूपोर्थः। कर्तृ न भवतीत्यकर्तु। तस्मिन् कर्तृभिन्ने कर्तृसदृशे इत्यर्थः हेतुभूत इति यावत्। (तत्प्रयोजको हेतुश्चेति कर्तुः प्रयोजको हेतु संज्ञः कर्तृसंज्ञश्च स्यादिति) शतमुत्तमर्णेनाधमर्ण बन्धयतीत्यत्र प्रयोज्यकर्तुरुत्तमर्णस्य प्रयोजककर्तृसंज्ञं। अधमर्णमुत्तमर्णश्शताद्बध्नाति बन्धयतीति वा। अत्र शतं हेतुसंज्ञं। एवंस्थिते कर्तृसंज्ञकाद्भिन्नं हेतुसंज्ञकमेवेति। अकर्तरीत्यस्य हेतुभूत इति तावदर्थः कर्तृवर्जितं यदृणं हेतुभूतमिति कौमुदीवाक्यस्य कर्तृभिन्नं यदृणं अर्थाद्धेतुभूतमित्यर्थो द्रष्टव्यः। यथा-शताद्बद्धः। उत्तमर्णेनाधमर्णश्शताद्बद्ध इति कर्मणि प्रयोगः। कर्तरि प्रयोगस्तु मया दर्शित एव। प्रत्युदाहरणं शतेन बन्धितः। शतेनोत्तमर्णेनाधमर्णो बन्धितः। नन्वेवं हेतौ ऋणे पञ्चमीत्येव सूत्रमस्त्विति चेत् मैवम्। यो हेतुभूतः प्रयोजककर्ता, स एव कर्तृभूतोऽपीति (तत्प्रयोजको हेतुश्चेति सूत्रादेकस्मिन्नेव प्रयोजके संज्ञाद्वयसमावेशात्) हेतावित्युक्ते कर्तर्यपि स्यादिति। अकर्तरीति कृते तु कर्तृहेतुसंज्ञाशालिनः प्रयोजकस्य यदा हेतुत्वं विवक्ष्यते तदा पञ्चमी, यदा कर्तृत्वं विवक्ष्यते तदा तृतीयेति विशेषो लभ्यते गुरु निर्देशादिति तोष्टव्यं यथासूत्रम् ।

48. विभाषागुणेऽस्त्रियाम्। अकर्तरीति पूर्वसूत्रादत्रान्वेति। आस्त्रियां स्त्रीलिङ्गभिन्ने, अकर्तरि हेतुभूते गुणे गुणवचने पञ्चमी वा स्यात्। अत्र विभाषेतियोगो विभज्यते। तथा च विभाषा गुणेऽस्त्रियामिति सूत्रद्वयम्। गुणेऽस्त्रियामिति सूत्रे विभाषेत्यनुवर्तते।

६०४ **करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य** । ।२।३।३३। एभ्योऽद्रव्यवचनेभ्यः करणे तृतीयापञ्चम्यौ स्तः । स्तोकेन स्तोकाद्वा मुक्तः । द्रव्ये तु स्तोकेन विषेण हतः । ६०५ **दूरान्तिकार्थेभ्यो द्वितीया च** । ।२।३।३५। एभ्यो द्वितीया स्यात् , चात् पञ्चमीतृतीये च । प्रातिपादिकार्थमात्रे विधिरयम् । ग्रामस्य दूरं दूराद् दूरेण वा, अन्तिकम् अन्तिकाद् अन्तिकेन वा । असत्त्ववचनस्य इत्यनुवृत्तेर्नेह–दूरः पन्थाः । इति पञ्चमी। ६०६ **षष्ठी शेषे** । ।२।३।५०। कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसंबन्धः शेषः, तत्र षष्ठी स्यात् । राज्ञः पुरुषः । कर्मादीनामपि संबन्धमात्रविवक्षायां षष्ठ्येव । सतां गतम् । सर्पिषो जानीते । मातुः स्मरति । एधोदकस्योपस्कुरुते । भजे शंभोश्चरणयोः । फलानां तृप्तः । ६०७ **षष्ठी हेतुप्रयोगे** । ।२।३।२६। हेतुशब्दप्रयोगे हेतौ द्योत्ये षष्ठी स्यात् । अन्नस्य हेतोर्वसति । ६०८ **सर्वनाम्नस्तृतीया च** । ।२।३।२७। सर्वनाम्न ो हेतुशब्दस्य च प्रयोगे हेतौ द्योत्ये तृतीया स्यात् षष्ठी च । केन हेतुना वसति । कस्य हेतोः । ' **निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्** ' (वा १४७३) किं निमित्तं वसति, केन निमित्तेन, कस्मै निमित्ताय इत्यादि । एवं किं कारणम्, को हेतुः किं प्रयोजनम् इत्यादि । प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये न स्तः । ज्ञानेन निमित्तेन हरिः सेव्यः, ज्ञानाय निमित्ताय इत्यादि ।

---

तेन यथोक्त एव तस्यार्थः। विभाषासूत्रस्य तु गुणे अस्त्रियामिति योगविशेष उक्तस्य वैकल्पिक इत्यर्थः, वस्तुतस्तु अगुणे स्त्रियामिति, गुणे अस्त्रियामिति च पदच्छेद द्वैविध्येन अर्थद्वयसिद्धिर्भवेदिति, किमनेन योगविभागेनेति बोध्यम् ।

49. करणे च स्तोकाल्प। करणभूतेभ्य एभ्य इत्यर्थः। लिङ्गसङ्ख्यान्वितं द्रव्यम्। सत्त्वं द्रव्यमुच्यते येन तत्सत्ववचनं तद्भिन्नमसत्त्ववचनं तस्य स्तोकाल्पकृच्छ्रकतिपयाना समाहारः। स्तोकाल्पकृच्छ्रकतिपयान्तस्य शेषे षष्ठी, करणे करणत्वविवक्षायां करणार्थवृत्तेरिति वा ।

50. सतां गतम्। सत्कर्तृकं गमनमर्थः। कर्तरि षष्ठी। संबन्धविशेषविवक्षायां प्रथमया भाव्यम्। सर्पिषो जानीते सर्पिष्करणकं प्रवर्तनमर्थः। करणे षष्ठी। करणत्वविवक्षायां तृतीयया भाव्यम्। मातुः स्मरति। मातृकर्मकस्मरणमर्थः। कर्मणि षष्ठी। स्मरणक्रियया मातुराप्तुमिष्यमाणत्वात् कर्मत्वं तद्विवक्षायां द्वितीयया भाव्यम्। एधोदकस्योपस्कुरुते। अधिकरणे षष्ठी। "एधोदकाधिकरणकं" गुणाधानकरणमर्थः। कर्तृत्वविवक्षायां तृतीयया

६०९ **षष्ठ्यतसर्थप्रत्ययेन** । ।२।३।३०। एतद्योगे षष्ठी स्यात् । '-दिक्शब्द-' (सू ५९५) इति पञ्चम्या अपवादः । ग्रामस्य दक्षिणतः पुरः पुरस्ताद् उपरि उपरिष्टात् । ६१० **एनपा द्वितीया** । २।३।३१। एनबन्तेन योगे द्वितीया स्यात् । ' एनपा ' इति योगविभागात्षष्ठ्यपि । दक्षिणेन ग्रामं ग्रामस्य वा । एवमुत्तरेण ६११ **दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्** । २।३।३४। एतैर्योगे षष्ठी स्यात्पञ्चमी च । दूरं निकटं ग्रामस्य ग्रामाद्वा। ६१२ **ज्ञोऽविदर्थस्य करणे** । २।३।५१। जानातेरज्ञानार्थस्य करणे शेषत्वेन विवक्षिते षष्ठी स्यात् । सर्पिषो ज्ञानम् ।६१३ **अधीगर्थदयेशां कर्मणि** २।३।५२। एषां कर्मणि शेषे षष्ठी स्यात् । मातुः स्मरणम् । सर्पिषो दयनम् ईशनं वा । ६१४ **कृञः प्रतियत्ने** । २।३।५३। प्रतियत्नो गुणाधानम् । कृञः कर्मणि शेषे षष्ठी स्याद् गुणाधाने । एधोदकस्योपस्करणम् । ६१५ **रुजार्थानां भाववचनानामज्वरेः** । ।२।३।५४। भावकर्तृकाणां ज्वरिवर्जितानां रूजार्थानां कर्मणि शेषे षष्ठी स्यात् । चौरस्य रोगस्य रुजा । **'अज्वरिसन्ताप्योरिति वाच्यम्'** (वा १५०७) । रोगस्य चौरज्वरः । चौरसन्तापो वा । रोगकर्तृकं चौरसंबन्धि ज्वरादिकमित्यर्थः ।

---

भाव्यम्। "भजे शम्भोश्चरणयोः" शम्भ्ववयवचरणकर्मकं भजनमर्थः। चरणयोरिति कर्मणि षष्ठी। कर्मत्वविवक्षायां द्वितीयया भाव्यम्। फलानां तृप्तः फलजन्या तृप्तिरर्थः। अपादाने षष्ठी। अपादानत्वविवक्षायां जनिकर्तुः प्रकृतिरिति पञ्चम्या भाव्यम्।

51. एनपा द्वितीया। एनबन्यतरस्यामदूरेऽपञ्चम्याः इति सूत्राद्य एनबन्तः दक्षिणाधरोत्तराणामन्यतमः, तेन योगे द्वितीया स्यात्। षष्ठ्या अपवादोऽयम्। योगविभागे तु एनपेति सूत्रे षष्ठीति प्राक्सूत्रादनुवर्तते। एनबन्तेन योगे षष्ठी स्यादिति तदर्थः। द्वितीयेति सूत्रे तु एनपेत्यनुवर्तते अर्थो यथोक्त एव ।

52. शेषत्वेन विवक्षिते। संबन्धमात्रविवक्षायां करणस्येति यावदर्थः।

53. अधीगर्थदयेशां कर्मणि। इक्स्मरणे इति आदादिकः। अयं धातुर्नित्यमधिपूर्वः। अस्मादेवाधिपूर्वनिर्देशाल्लिङ्गात्। अन्यथा लाघवात् इगर्थदयेशां कर्मणीत्येव ब्रूयात्। वक्ष्यति चेदं मूलकार एव। इक्स्मरण इति धातुरूपप्रदर्शनसमये। एवम् अधीकः अर्थ इव अर्थो एषान्ते अधीगर्थाः। स्मरणार्था इत्यर्थः। दयदाना गतिरक्षणहिंसादानेषु इति भ्वादिः। ईश ऐश्वर्ये ईष्टे इति अदादिः। एषां कर्मणि शेषत्वेन विवक्षत षष्ठी स्यात् ।

६१६ **आशिषि नाथः** । २।३।५५। आशीरर्थस्य नाथतेः शेषे कर्मणि षष्ठी स्यात् । सर्पिषो नाथनम् । आशिषि इति किम्–माणवकनाथनम् । तत्संबन्धिनी याच्ञेत्यर्थः ।

---

54. रुजार्थानां भाववचनानामज्वरेः। भाववचनानां भावकर्तृकाणाम्। प्रकृत–धात्वर्थक्रियां प्रति तदाश्रयत्वेन कर्ता भवति। भावे विहितो घञादिः। यथा पाकः पचिक्रियाश्रयः। पच् इति प्रकृतिनाऽभिहितो यः पचिक्रिया, तत्कर्ताऽत्र विहितो घञ्, जनः करोतीत्यत्र करणक्रियाश्रयो जनः, यथा करणक्रियायां कर्तृत्वेनाभिधीयते, तथा सर्वत्रापि क्रियाश्रयः क्रियाकर्तृत्वेन व्यवह्रियते इति वेद्यम्। चौरस्य रोगस्य रुजा रुजोभंग इति धातोः पदरुजविशस्पृशोघञ् इति घञाः रोगशब्दो निष्पद्यते। रुजाश्रयो रोग इति रुजायां रोगः कर्ता तस्येति कर्तरि षष्ठी "छत्रादिभ्यो ण" इति चुरा शीलमस्य चौरः चुरेति तु भिदादिपाठादङि अजाद्यत इति टाप्। न च टिड्ढाणेति ङीप् शङ्क्यः। अञि ङीपो विधानत्। अयन्तु अङ् इति भेदात्। तस्य चौरस्येति कर्मणि षष्ठी। चौरकर्मिका रोगकर्तृका रुजेत्यर्थः। ननु चौरस्य रोग इत्येवोदाहरणमस्तु चौरकर्तृकस्य रुजार्थकस्य रोग इत्यस्य यत्कर्म चौरस्तस्य शेषत्वविवक्षया षष्ठी लाभात्। किमिति चौरस्य रोगस्य रुजेत्युदाहृतम् इति चेत्–उच्यते। रुजार्थकधातुवाच्यक्रियायां यद्यपि भावे विहितो घञादिराश्रयत्वेन कर्ता। तथाऽपि न केवलं प्रत्ययस्य कर्तृत्वं किन्तु प्रत्ययान्तस्यैवेति रोग इति भावप्रत्ययान्तो रुजिक्रियायां कर्ता। एवंभूतोऽप्ययं पदान्तरसमभिव्याहारबलात्। स्वनिष्ठं स्वप्रकृतिवाच्यक्रियाकर्तृत्वमजहदेव पदान्तरवाच्यक्रिया कर्ताऽपि भवति। यथा रोगस्य सन्तापः रोगकर्तृकसन्ताप इत्यर्थः। सन्तापक्रिया कर्तारोग इति यावत्। तच्च पदान्तरं रुजार्थकमेव स्यान्न तु ज्वरसन्तापार्थकमित्येतदर्थं चौरस्य रोगस्य रुजेत्युदाहृतम्। तथैव प्रत्युदाहरणमपि "रोगस्य चौरज्वर" इति। चौरस्य ज्वरः चौरज्वर इति शेषषष्ठी। अत एव समासः। रुजार्थानामिति यद्यत्र षष्ठी स्यात्तर्हि रोगस्य चौरस्य ज्वर इत्येव स्यादिति भावः ।

अन्यथा चेदं व्याख्यायते। भावकर्तृकाणां भावो भावप्रत्ययान्तः कर्ता येषान्तेषां रुजा व्याधिरर्थो येषान्तेषां रुजार्थानां। रुजादीनां पदानां यत्कर्म तस्य शेषषष्ठी स्यात्। यथा चौरस्य रोगस्य रुजा। अत्र रुजार्थकं पदं रुजेति। तस्य यः कर्ता भावान्तो रोगः (रोगस्य रुजेत्यत्र रोगकर्तृका रुजेत्यर्थात्) तस्य भावकर्तृकस्य रुजार्थकस्य (रोगस्य रुजेत्यस्य) यत्कर्म चौरः तस्य शेषत्वविवक्षया षष्ठी। रोगकर्तृका चौरकर्मिका रुजेत्यर्थः। अयमेवार्थः साधुः। न तु अज्वरीतीति निषेधानुगुण्येन भावप्रत्ययप्रकृतिभिन्नानामेव

६१७ **जासिनिप्रहणनाटक्राथपिषां हिंसायाम्** । २।३।५६। हिंसार्थानामेषां शेषे कर्मणि षष्ठी स्यात् । चौरस्योज्जासनम् । निप्रौ संहतौ विपर्यस्तौ व्यस्तौ वा । चौरस्य निप्रहणनम् प्रणिहननम् निहननम् प्रहणनं वा । 'नट अवस्कन्दने' चुरादिः । चौरस्योन्नाटनम् । चौरस्य क्राथनम् । वृषलस्य पेषणम् । हिंसायाम् किम्–धानापेषणम् । ६१८ **व्यवहृपणोः समर्थयोः** । २।३।५७। शेषे कर्मणि षष्ठी स्यात् । द्यूते क्रयविक्रयव्यवहारे चानयोस्तुल्यार्थता । शतस्य व्यवहरणं पणनं वा । समर्थयोः किम् । शलाकाव्यवहारः गणनेत्यर्थः । ब्राह्मणपणनं स्तुतिरित्यर्थः। ६१९ **दिवस्तदर्थस्य** । ।२।३।५८। द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी स्यात्। शतस्य दीव्यति। तदर्थस्य किम्–ब्राह्मणं दीव्यति। स्तौतीत्यर्थः। ६२० **विभाषोपसर्गे**। २।३।५९। पूर्वयोगापवादः । शतस्य शतं वा प्रतिदीव्यति ।

---

रुजार्थकानां ग्रहणस्यैचित्यात्। (भावप्रत्ययो यस्माद्विहितः स धातुर्भावप्रत्ययप्रकृतिः। यथा रोग इत्यत्र रुज्।) भाववचनानामित्यस्य भावस्सिद्धावस्थापन्नो धात्वर्थ उच्यते। यैर्घञाद्यन्तैस्तेषामित्यर्थाश्रयणेन भावप्रत्ययान्तानामित्येव प्रतिपदं ब्रूयात्, न तु भावकर्तृकाणामिति। प्राग्दर्शित व्याख्यानरीत्या भावकर्तृकाणामिति पदस्य भावप्रत्ययान्तत्व एव पर्यवसानात्।

55. नि–निरिति प्रेति चोपसर्गौ। निश्च प्रश्च निप्रौ ताभ्यां युक्तो हनः। निप्रहणः। द्वंद्वान्ते श्रूयमाणं प्रत्येकं संबद्ध्यत इति न्यायेन निहनः प्रहण इति च हनस्य निप्रेत्युपसर्गद्वययोगे। क्रमो न विक्षित इति प्रणिहन इति च। इदमेवाभिप्रेत्याह निप्रौ संहतौ विपर्यस्तौ व्यस्तौ वेति। धाना पेषणम्। धानानामचेतनत्वेन तत्पेषणस्याहिंसात्वात्षष्ठीशेष इति षष्ठी। धानानां पेषणं धानापेषणमिति। अत एव समासः। जासिनि प्रहणेति सूत्रात्कर्मणि षष्ठ्यान्तु न समासः। प्रतिपदविधाना षष्ठी न समस्यत इति वार्तिकात् ।

56. व्यवहृपणोस्समर्थयोः। समर्थयोरिति वक्तव्ये समर्थयोरिति अकस्सवर्णे दीर्घाभावस्सौत्रः। समः अभिन्नः अर्थः ययोस्तयोस्समर्थयोः। व्यवाभ्यामुपसृष्टो हृञ् हरण इति धातुः। पणव्यवहारे स्तुतौ चेति भ्वादिः। व्यवपूर्वकस्य हृञस्तु व्यवहारोऽर्थः। (व्यवहृञो घञि व्यवहार इति रुपसिद्धेः।) तस्मात् व्यवहरतेः पणतेश्च व्यवहारार्थकस्य समार्थत्वं सिद्धम्। न च पणतेरर्थभूतो व्यवहारः द्यूतात्मकः क्रयविक्रयात्मकश्च न तु गणनाद्यात्मकः। व्यवहृत्यर्थभूतो व्यवहारस्तु गणनाद्यात्मकोपीति वाच्यम्। उभयोरभिन्नोर्थः। द्यूतात्मकः क्रयविक्रयात्मकश्च व्यवहारः। तद्रूप इति यावत्। ययोस्तयोस्मर्थयोरिति फलितम्। ननु

व्यवहृपणोस्समार्थत्वमस्त्येवेति समर्थयोरिति किम्? अत आह –शलाकाव्यवहार इत्यादि। अयं भावः। व्यवहृपणोः भिन्नार्थबोधकत्वे मास्त्विति समर्थयोरिति ग्रहणमिति व्यवहृपणोः द्यूतक्रियविक्रयात्मकव्यवहारवाचकत्वे अनयोः कर्मणि षष्ठी स्यान्न त्वन्यार्थवाचकत्वे इति निष्कृष्टार्थः ।

57. विभाषोपसर्गे– अत्र दिव् धातोरेवानुवृत्तिः। न तु तस्मात्पूर्वयोर्व्यवहृपणोः, योगविभागत्। त्रयाणामपि धातूनां यद्युपसृष्टत्वे विभाषा विवक्षिता, तर्हि व्यवहृपणदिवां समर्थानामित्येकमेव सूत्रयितव्यं स्यात्। तथात्वे तदर्थस्येति पदस्याभावेन, महान् लाघवरूपो गुणश्चेति। तस्माद्दिवस्तदर्थस्येति पृथक्सूत्रकरणं विभाषोपसर्ग इत्येतद्दिव एव यथा स्यात्, यथा च व्यवहृपणोर्न स्यात्तदर्थमिति सिद्धम्। इदमेवाभिसंधायाह। पूर्वयोगापवाद इति। पूर्वाभ्यां दिवपेक्षया पूर्वाभ्यां व्यवहृपणाभ्यां योगस्संबन्धः। पूर्वयोगस्तस्यापवादः। अत्राप्राप्तिरेवेति तदर्थः।

ननु, दिव इत्येव सूत्रमस्तु। समर्थयोरिति पदस्य प्राक्सूत्राद्वचन परिणामे नात्रानुवृत्तिः समर्थस्येति। व्यवहृपणाभ्यां तुल्यार्थस्येत्यर्थः। (केन समर्थस्येत्याकांक्षायां सान्निध्याद्व्यवहृपणाभ्यामित्येव लभ्यते।) अतः किमनेन तदर्थस्य ग्रहणेनेति चेत् उच्यते –सोपसर्गस्य तदर्थस्य अतदर्थस्य च दिवः कर्मणि षष्ठी। विभाषा यथा स्यात् (तदर्थस्येति विशेषणस्य विभाषासूत्रे अनन्वयादिति भावः।) इदमेवाभिसन्धायाह पूर्वयोगापवाद इति। पूर्वस्य तदर्थस्येति दिवो विशेषणस्य अत्र संबन्धाभाव इत्यर्थः।

ननु दिव इति सूत्रे समर्थपदानुवृत्तिरस्तु विभाषासूत्रे मास्तु, किन्तु दिव इत्येतावत एवानुवृत्तिरस्तु। तथा च तदर्थातदर्थ साधारण्येन सोपसर्गस्य दिवो विभाषार्थं सिध्यत्येवेति किमनेन तदर्थग्रहणेनेति चेत्। सत्यम्। तथात्वे योगविभागोऽपि व्यर्थ एव। व्यवहृपणदिवां समर्थानामिति सूत्रितेऽपि स्वरितत्वप्रतिज्ञया दिव इत्येकस्यैव विभाषासूत्रे अनुवृत्तिसंभवेन, अभीष्टसिद्धेः। तस्मात्किमनेन दिव इति पृथक्सूत्रकरणेनेत्याशङ्कायामाह। पूर्वयोगापवाद इति। पूर्वस्य शेष इति पदस्य अनुवर्तमानस्यात्रानुवृत्तिस्संबन्धो नास्तीति भावः। अयं भावः। व्यवहृपणोरिति सूत्रे शेषे कर्मणि षष्ठीति।शेषेत्यस्य संबन्धोऽस्ति। अत एव ब्राह्मण पणन मित्यादौ शेषषष्ठ्या समासः। दिव इत्यारभ्य सूत्रषट्के तु न शेषषष्ठी संबन्धः। अत एव प्रतिपदषष्ठ्यभावेऽपि शेषषष्ठ्यभवेन समासोऽपि न स्यादिति मत्वा ब्राह्मणं दीव्यतीत्याद्युदाहृतम्।

पूर्वयोगापवाद इत्यस्य अयमेव साम्प्रदायिकोऽर्थः। वस्तुतस्तु दिवस्तदर्थस्येति सूत्रव्याख्यानावसर एव पूर्वयोगापवाद इति वाक्यं लिखितव्यम्। तदारभ्यैव शेष इत्यस्य

६२१ **प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने**।।२।३।६१। देवतासंप्रदानकेऽर्थे वर्तमानयोः प्रेष्यब्रुवोः कर्मणो हविर्विशेषस्य वाचकाच्छब्दात्षष्ठी स्यात् । अग्नये छागस्य हविषो वपाया मेदसः प्रेष्य अनुब्रूहि वा । ६२२ **कृत्वोऽर्थप्रयोगे कालेऽधिकरणे** । २।३।६४। कृत्वोऽर्थानां प्रयोगे कालवाचिन्यधिकरणे शेषे षष्ठी स्यात् । पञ्चकृत्वोऽह्नो भोजनम् । द्विरह्नो भोजनम् । शेषे किम्–द्विरहन्यध्ययनम् ।

---

निवृत्तत्त्वात्। दिवस्तदर्थस्येति सूत्रे तदर्थस्येति तु व्यर्थमेव। विभाषोपसर्ग इत्यत्रानुवृत्तस्य दिवः समर्थविशेषणवत्त्वमस्ति वा नवेति तु प्राचीनप्रयोगानुसारेण निर्णेयम्। अस्य सूत्रस्य प्राप्तविभाषात्वेन समर्थस्य दिव एवात्रानुवृत्तिरिति मे मतम्। पूर्वस्य योगस्य दिवस्तदर्थस्येति पूर्वसूत्रस्याय३ विभाषाऽपवादभूतेति पूर्वयोगापवाद इत्यस्यार्थोऽन्यश्च ।

58. प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने। कर्मणा यमभिप्रैति स सम्प्रदानं देवतासम्प्रदानं यस्मिंस्तस्मिन्नर्थे देवतासम्प्रदाने वर्तमानयोः प्रेष्यब्रुवोः क्रिययोर्यत्कर्म हविः तस्य षष्ठी स्यात्। हविरिति नात्र शब्दो गृह्यते। किन्तु होतव्यं द्रव्यं हविरिति तदर्थः। इदमेवाह हविर्विशेषस्य वाचकादिति। यथा अग्नये छागस्य हविषो वपाया मेदसः प्रेष्य–प्रेष्येत्यस्य देहीत्यर्थः। तथा च दानक्रियया अभिप्रीयमाणोग्निः संप्रदानमिति संप्रदाने तत्र चतुर्थी अग्नये इति। स चाग्नि र्देवतैवेति देवतासंप्रदानकार्थवृत्तित्वं प्रेष्यस्य सिद्धं। तस्याः प्रेषणक्रियायाः यत्कर्मीभूतं वपा च मेदश्च इत्येतत् द्वयं तस्य हविर्विशेषत्वद्योतनाय हविष इति तयोर्विशेषणम्। तस्मात्प्रेष्यकर्मभूताद्धविर्विशेषवाचका द्वपा शब्दान्मेदश्शब्दाच्च षष्ठी। वपाया इति मेदस इति च। छाग शब्दात्तु षष्ठीशेष इति षष्ठी।छाग संबन्धिन इत्यर्थात्। स च संबन्धोऽत्र अवयवावयविभावरूपः। एवञ्च अग्निदेवता संप्रदानकं छागसंबन्धि हविर्विशेषवपामेदःकर्मकं प्रेषणमर्थः। एवमेवानुब्रूहीति ब्रुवो योगेऽपि द्रष्टव्यम् ।

प्रेष्यब्रुवोः कर्मणो र्हविर्विशेषस्य ब्रुवश्च यः कर्मीभूतो हविर्विशेषः तस्येत्यर्थः। प्रेष्यकर्मणो हविर्विशषस्य ब्रुवः कर्मणो हविर्विशेषस्य चेति धातुद्वयं प्रति कर्मद्वयविवक्षया कर्मणोरिति द्विवचनम्। वपेति मेद इति च उभयमपि प्रेष्यब्रुवोः कर्मीभूतं हविर्विशेषवाचकं चेति उभयत्राप्यनेन षष्ठी विहिता। हविश्शब्दात्षष्ठी तु विशेष्यभूत वपामेदःपदषष्ठ्यधीना–विशेषणविशेष्ययोरेकविभक्तिकत्वनियमात्। न च वपेत्यस्य स्त्रीलिङ्गत्वाद्धविरित्यस्य नपुंसकत्वाच्च। विभिन्नलिङ्गत्वेन कथमत्र विशेषणविशेष्यभाव इति वाच्यम्। लिङ्गसंख्या विभेदेऽपि विशेषणविशेष्योः विभक्तिः पुनरेका चेद्विशेषणविशेष्यता इति

६२३ **कर्तृकर्मणोः कृति**। २।३।६५। कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात् । कृष्णस्य कृतिः । जगतः कर्ता कृष्णः । **'गुणकर्मणि वेष्यते'** (वा ५०४२) । नेता अश्वस्य स्नुघ्नस्य स्नुघ्नं वा । कृति किम्–तद्धिते मा भूत् , कृतपूर्वी कटम् । ६२४ **उभयप्राप्तौ कर्मणि** । २।३।६६। उभयोः प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठी स्यात् । आश्चर्यो गवां दोहोऽगोपेन । **'स्त्रीप्रत्यययोरकाकारयोर्नायं नियमः'** (वा १५१३) भेदिका बिभित्सा वा रुद्रस्य जगतः । ' **शेषे विभाषा** (वा १५१३) स्त्रीप्रत्यय इत्येके । विचित्राः जगतः कृतिर्हरेर्हरिणा वा । केचिदविशेषेण विभाषामिच्छन्ति । शब्दानामनुशासनमाचार्येण आचार्यस्य वा ।

---

न्यायात्। अत एव हि वेदाः प्रमाणमित्यादीनां प्रयोगानां निर्दोषत्वसिद्धिः। प्रेष्यब्रुवोः कर्मणो हविर्विशेषस्येति तु पाठस्सुगमः ।

59. शेषे किम्? द्विरहन्यध्ययनम्। अधिकरणस्य शेषत्वविवक्षाऽभावादत्र सप्तम्यधिकरणे चेति सप्तमी। अधिकरणेशेषे इत्यस्य अधिकरणे शेषत्वेन विवक्षिते इत्यर्थः ।

60. कर्तृकर्मणोः कृति। कृति कृदन्तस्य यः कर्ता यच्च कर्म तत्र षष्ठी स्यात्। यथा कृष्णस्य कृतिः। कृतिरिति कृदन्तं कृतेः कर्ता कृष्णः तत्र षष्ठी। कृष्णकर्तृका कृतिरित्यर्थः। कर्तरि तृतीयाया अपवादोऽयम्। यथा वा जगतः कर्ता कृष्णः। कर्तेति कृदन्तम्। तस्य कर्मजगत्तत्र षष्ठी कृष्णो यद्यपि कृदन्तं प्रतिकर्ता। तथापि नात्र कर्तरि तृतीया कर्तृस्तृचाभिहितत्वात्। अत एव न कर्तरि षष्ठ्योऽपि। अस्यास्तृतीयापवादत्वेन तृतीयाप्राप्तिस्थल एव षष्ठी विधानात्। जगत इति कर्मणि षष्ठी, द्वितीयापवादोऽयम्। जगत्कर्मककृतिमान् कृष्ण इत्यर्थः। कृदन्तेन योगे सति अनभिहिते कर्तरि कर्मणि च षष्ठी स्यादिति सूत्रस्य निष्कृष्टार्थः। अनभिहिते कर्तरीत्यस्य फलं दर्शितम्। अनभिहिते कर्मणीति किम्? जगत्कृतम्। अत्र कृतमिति कृदन्तेन योगे कर्मत्वस्य क्तान्ते–नाभिहितत्वाज्जगदित्यत्र प्रथमा ।

61. गुणकर्मणि वेष्यते। अत्रापि कृतीति संबध्यते। कृद्योगे गुणेऽप्रधाने कर्मणि षष्ठी वा विकल्पेनेष्यते। यथा अश्वस्य स्रुघ्नं स्रुघ्नस्य वा अश्नोतीत्यश्वः। अशु प्रुषि लटि कणि खटि विशिभ्यः क्वन् इत्युणादौ प्रथमपादे, (नयनमिति) नेतेति वा। कृदन्तमत्राध्याहार्यम् । स्रुघ्नो देशविशेषः। अश्वस्य स्रुघ्नं नेता (नयनं) अत्र नयनक्रियायां मुख्यं कर्म अश्वः। अकथितत्वेनप्रधानं कर्म स्रुघ्नः। अश्वशब्दात्कर्तृकर्मणोः कृतीति कर्मणि षष्ठी नित्या। स्रुघ्नशब्दात्तु गुणकर्मणि वेति वैकल्पिकी । तथा च अश्वस्य स्रुघ्नस्य नेतेति? (नयनमिति च) प्रयोगः।

६२५ **क्तस्य च वर्तमाने** । २।३।६७। वर्तमानार्थस्य क्तस्य योगे षष्ठी स्यात् । ' न लोक-' (सू ६२७) इति निषेधस्यापवादः । राज्ञां मतो बुद्धः पूजितो वा । ६२६ **अधिकरणवाचिनश्च।** २।३।६८। क्तस्य योगे षष्ठी स्यात् । इदमेषामासितं शयितं गतं भुक्तं वा ।

---

गुणकर्मणीति वार्तिके, कृद्ग्रहणानुवृत्त्या किम्। अश्वं स्रुघ्नं नयति। अजां ग्रामं नयतीतिवत्। तथा स्यान्नीह्वकृष्वहाम् इति वचनात्। नयतेर्द्विकर्मकत्वम्। विकल्पेनात्र अश्वं स्रुघ्नस्य नयतीति प्रयोगो माभूदिति कृद्ग्रहणमिति भावः। तेनाश्वस्य स्रुघ्नमित्यत्र तेनेत्यपनीय नेताश्वस्य स्रुघ्नमिति पठिते तु सर्वं सम्पद्यते। अध्याहारक्लेशाभावात् ।

62. आश्चर्यो गवां दोहेऽगोपेन। अगोपकर्तृको गोपकर्मको दोह अश्चर्य इत्यर्थः। आश्चर्य इत्यस्य प्रयोगो वाक्यस्यार्थवत्त्वाय। गवां दोहोऽगोपेनेत्येतावदेवोदाहरणम्। अत्र दोहः कृदन्तः, तं प्रति यः कर्ता अगोपः यच्च कर्म गावः उभयत्रापि कर्तृकर्मणोः कृतीति षष्ठ्यां प्राप्तायां कर्मणि गोष्वेव षष्ठी। न तु कर्तरि। अपवादभूतया षष्ठ्या मुक्ते तु कर्तरि, कर्तृकरणयोरिति तृतीया भवति। तेन गवां दोहोऽगोपेनेति सिद्धम्। यदा तु नोभयोः प्राप्तिः, किंत्वेकस्यैव तदा कर्तरि षष्ठी भवत्येव। अगोपस्य दोह इति। उभयोः प्राप्ति र्यस्मिन्कृति तत्र यस्यैकस्य कृतो योगे निमित्तभूते कर्तृकर्मणो रुभयत्रापि षष्ठ्यौ स्याताम्। तत्र कर्मणि षष्ठ्येव। तत्र तस्यैकस्य कृतो योगे निमित्तभूते कर्मण्येव षष्ठी स्यात् न तु कर्तरीत्यर्थः। यद्वा यस्मिन्कृति कृद्घटिते वाक्ये उभयोः कर्तृकर्मणोः प्राप्तिः स्थितिरस्ति तत्र तस्मिन्वाक्ये इत्यर्थः। "भेदिका बिभित्सा वा रुद्रस्य जगतः" रुद्रकर्तृकं जगत्कर्मकं भेदनं भेदनेच्छावेत्यर्थः । कर्तर्यपि रुद्रे षष्ठी भवतीति भावः।

63. "क्तस्य च वर्तमाने-तृतीयाया अपवादोयम्। न च द्वितीयाया अप्यपवाद इति शङ्क्यं क्तेन कर्मणोऽभिहितत्वात्।तेन राज्ञां मत इत्यादौ राजाभिर्मत इत्यादिरर्थः। क्तक्तवतू निष्ठा इति क्तस्य निष्ठात्वेन न लोकेति सूत्रे निष्ठाप्रयोगे षष्ठी निषेधेन च परत्वान्नलोकेति सूत्रेण क्तस्य चेति सूत्रस्य बाधस्स्यादत आह नलोकेति निषेधस्यापवाद इति। अयम्भावः भूतवर्तमानोभयसाधारण्येन निष्ठान्तस्य नलोकसूत्रेण षष्ठीनिषेधः। केवलस्य वर्तमानार्थकस्य क्तान्तस्यैव निष्ठान्तस्यानेन षष्ठी विहितेति नलोकसूत्रापेक्षया क्तस्य च सूत्रं विशेषशास्त्रत्वेन अपवादभूतं तस्येति ।

64. इदमेषां शयितम् इत्यत्र। इदमेतेषामासितं गतं भुक्तं वेति पाठस्साम्प्रदायिकः। क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः इति आसन गमन भक्षणरूपार्थत्रयवाचिभ्यः अधिकरणे क्तस्य विधानात्। उदाहरणत्रयस्य सुसंगतत्वात्। मुकुन्दस्यासित मिदमिदं यातं

६२७ **न लोकाव्ययनिष्ठाखलर्थतृणाम्** । २।३।६९। एषां प्रयोगे षष्ठी न स्यात् । लादेशाः–कुर्वन् कुर्वाणो वा सृष्टिं हरिः । उः दिदृक्षुः–अलङ्करिष्णुर्वा । हरिं उक–दैत्यान्घातुको हरिः । '**कमेरनिषेधः**' (वा १५१९) लक्ष्म्याः कामुको हरिः ।अव्ययम् –जगत्सृष्ट्वा , सुखं कर्तुम् । विष्णुना हता दैत्याः। दैत्यान्हतवान्विष्णुः । खलर्थः–ईषत्करः प्रपञ्चो हरिणा । तृन् इति प्रत्याहारः शतृशानचौ इति तृशब्दादारभ्य आ तृनो नकारात् । शानन्। सोमं पवमानः। चानश्–आत्मानं मण्डयमानः । शतृ–वेदमधीयन् । तृन् –कर्ता लोकान् । **द्विषः शतुर्वा** (वा १५२२) मुरस्य मुरं वा द्विषन् । सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः । शेषे षष्ठी तु स्यादेव । ब्राह्मणस्य कुर्वन् । नरकस्य जिष्णुः ।

---

रमापतेः भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः इति तत्सूत्रे उदाहरणाच्च। आसनं नाम ध्रुवा स्थितिः इदमेषामासितम्। एतत्कर्तृक ध्रुवस्थित्यधिकरणमिदमित्यर्थः। इदमेषां गतम्। एतत्कर्तृक गमनाधिकरणमिदम्। इदमेषां भुक्तं। एतत्कर्तृक भक्षणाधिकरणमिदम् उदाहरणत्रयेऽपि कर्तर्येव षष्ठी। प्रकृतिभूतानां धातूनां ध्रौव्याद्यर्थकत्वं, क्तस्य तु अधिकरणार्थकत्वमिति बोध्यम्।

65. न लोकाव्यय निष्ठा खलर्थतृणाम्। कर्तृकर्मणोः कृतीति प्राप्तायाः षष्ठ्या अनेन निषेधः क्रियते। निषेधस्य प्राप्तिपूर्वकत्वात्। तेन लादेशास्तिबादयो न गृह्यन्ते। हरिस्सृष्टिं करोतीत्यादौ द्वितीयामपवाद्य षष्ठ्या अविधानात्। न च कृञः प्रतियत्ने दिवस्तदर्थस्येत्यादिभि स्तिङन्तयोगेऽपि षष्ठी विधीयते, द्वितीयामपवाद्येति वाच्यम्। तस्य इष्टत्वात्। एतत्सूत्रस्य तत्सूत्रबाधनसामर्थ्याभावाच्च। बाधितत्वकल्पनायान्तु तेषां सूत्राणां नैरर्थक्यात्। तस्माल्लादेशा अत्र शतृशानजादय एव न गृह्यन्ते। लटश्शतृशानचावप्रथमा समानाधिकरणे। "लिटः कानज्वा," "लृटस्सद्वा" इत्यादि सूत्रैर्विहिता इति भावः। "कृदतिङ्" इति तिङ्भिन्नस्य सर्वस्यापि प्रत्ययस्य कृत्संज्ञत्वेन अव्ययानामपि कृत्त्वात्तद्योगे षष्ठी प्राप्तेति तदपवादाय नलोकसूत्रे अव्ययग्रहणम्। कुर्वन् कुर्वाणः–परस्मैपदिनः कृञो लटश्शत्रादेशे कृ अत् इति स्थिते तनादि कृञ्भ्य उः। कृ उ अत्। पुगन्तलघूपधस्य चेति ऋकारस्थाने गुणोऽर् कर् उ अत् इति स्थिते तिङ्शित्सार्वधातुकमिति शतुश्शित्त्वेन सार्वधातुकत्वात् अत उत्सार्वधातुके इति सार्वधातुकस्य शतुरपित्त्वेन सार्वधातुकमपिदिति ङित्त्वात्। सार्वधातुके ङिति शतरि परे उप्प्रत्ययान्तस्य कृञो कारस्य उत्स्यात्। कुर्। उ। अत् कुरु अत् इको यणचि कुर्वत्। उगिदचामिति नुम्। कुर्वन् त्। संयोगान्तलोपः कुर्वन् । कृञ उभयपदित्वादात्मनेपदेषु शानच् इति लटश्शानजादेशः। शचयोरित्वम्। कुरु आन यण् कुर्वान णत्वम्। कुर्वाण ततस्सुबुत्पत्तौ कुर्वाणः। कमेरनिषेधः उकान्तकस्य

६२८ **अकेनोर्भविष्यदाधमर्ण्ययोः** । ।२।३।७०। भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यात् । सतः पालकोऽवतरति । व्रजं गामी । शतं दायी । ६२९ कृत्यानां कर्तरि वा । ।२।३।७१। षष्ठी वा स्यात् । मया मम वा सेव्यो हरिः । कर्तरि इति किम्–गेयो माणवकः साम्नाम् । 'भव्यगेय –' (सू २८९४) इति कर्तरि यद्विधानादनभिहितं कर्म । अत्र योगो विभज्यते । **कृत्यानाम्** । उभयप्राप्तौ इति न इति चानुवर्तते । तेन नेतव्या व्रजं गावः कृष्णेन । ततः।। **कर्तरि वा** । उक्तोऽर्थः ।

---

कमेर्योगेन षष्ठ्याः निषेध इत्यर्थः। सृष्ट्वा क्त्वातो सुन् कसुन इति कत्वान्तत्वादव्ययमिदम्। कर्तुं "कृन्मेजन्त" इति मान्तत्वादव्ययसंज्ञास्य। हताः हतवान् क्तक्तवतू निष्ठा इति निष्ठात्वाद्विष्णुना हता दैत्या इत्यत्र दैत्यशब्दान्न द्वितीया। क्तवतुना कर्तुरुक्तत्वाद्विष्णुर्दैत्यान् हतवानित्यत्र विष्णुशब्दान्न कर्तरि तृतीयेति बोध्यम्। तृन्निति प्रत्याहारः। पूङ्यजोश्शानन् ताच्छील्यवयोवचनशक्तिषु चानश्। इङ्धार्योश्शत्रकृच्छिणि इत्यलादेशानाम्। शानन् चानश् शतृप्रत्ययानां योगे षष्ठी निषेधाप्राप्तौ तदर्थं तृन्निति प्रत्याहार इत्युक्तम्। यद्यप्यादिरन्त्येन सहेति आदित एव प्रत्याहारो विहितः। न मध्यत इति शन्नित्येव प्रत्याहारो भवति। न तु तृन्निति। तथाऽपि सौत्रोऽयं प्रत्याहारस्सङ्गच्छत इति बोध्यम्। न च चानशादिष्वपि लटमनुवर्त्य लादेशत्वं व्याख्येयमिति वाच्यम्। इङ्धार्योरिति सूत्रे पुनश्शतृग्रहणात् ज्ञापकाच्छानशादिषु लडनुवृत्त्यभावात्। पवमानः मण्डयमानः इत्यत्र शानिनि चानशि च आने मुगिति मुगागमो द्रष्टव्यः।

66. भविष्यत्यकस्य योगे उदाहरणम्। सतः पालकोऽवतरति तुमुन्ण्वुलौ क्रियायां क्रियार्थायामिति पालयतेः तत्र भविष्यत्यर्थे ण्वुल्णलोरित्वं युवोरनाकौ इति वोरकः पालकः, सतः पालयिष्यन्नवतरतीत्यर्थः। भविष्यदर्थेनायोगे व्रजंगामी भविष्यति गम्यादयः। "आवश्यकाधमर्ण्ययोर्णिनि"रिति गमेर्भविष्यत्यर्थे आवश्यके णिनिः। णिनेरित्त्वेन नकारस्य, नकारस्योपरीकारस्य च लोपः। इन्शिष्यते। तस्मात् गामीत्येतत् भविष्यदर्थेऽन्नन्तमिति तद्योगे षष्ठी निषेधः। गम् इन् गमिन् इति स्थिते तद्धितेष्वचामादेरिति आदिवृद्धिः गामिन् सर्वनामस्थाने चासंबुद्धावित्युपधादीर्घः। नलोपः प्रादिपदिकान्तस्येति नलोपः; गामी इति रूपम्। आधमर्ण्यार्थेनोयोगे शतन्दायी। आवश्यकाधमर्ण्ययो रित्याधमर्ण्यार्थे णिनिः। शतं ऋणं तद्दानन्तु आधमण्यम्। अधमर्णस्येद माधमर्ण्यमिति ।

67. मया मम वा सेव्यो हरिः। सेव्य इति कर्मणि ण्यत्। ण्यता कर्मत्वस्योक्तत्वाद्धरि रित्यत्र न द्वितीया। कृत्य प्रत्ययान्तस्य सेव्यस्य योगे कर्तृभूतादस्मच्छब्दात्षष्ठी। षष्ठ्यभावपक्षे तु कर्तरि तृतीया। मत्कर्तृक सेवनक्रिया योग्यो हरिरिति। मत्कर्तृका

६३० **तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्** । ।२।३।७२। तुल्यार्थैर्योगे तृतीया वा स्यात्पक्षे षष्ठी । तुल्यः सदृशः समो वा कृष्णस्य कृष्णेन वा। अतुलोपमाभ्यां किम्–तुला उपमा वा कृष्णस्य नास्ति ।

---

हरिकर्मका सेवेति वार्थः। कृत्यानां कर्तरि वेति सूत्रमिदमप्राप्तविभाषा। उभयप्राप्तौ कर्मणीत्यनेन कर्तरि षष्ठ्या निषिद्धत्वेनाप्राप्तेः। कृद्योग एव तेन कर्तरि षष्ठी निषिद्धा। न तु कृत्ययोग इति न च वाच्यम्। कृदतिङ् इति तिङ्भिन्नस्य सर्वस्यापि कृत्त्वात्। कृदिति सामान्यसंज्ञा। कृत्यादयस्तु तद्विशेषसंज्ञा इति भावः। कर्तरीति किम्? कर्मणि तु उभयप्राप्ताविति षष्ठी नित्यैव। यथा गेयो माणवकस्साम्नाम्। गायतीति गेयः कर्तरि यत् यता कर्तृत्वस्याभिहितत्वान्माणवके न कर्तरि तृतीया। कर्मत्वस्य केनाप्यनुक्तत्वात्साम्न ामिति कर्मणि षष्ठी। माणवककर्तृकं सामकर्मकं गानमर्थः।

योगविभागे कृत्यानामिति सूत्रस्यायमर्थः। कृत्यानामिति सप्तम्यर्थे षष्ठी। बहुत्वमतन्त्रं। उभयप्राप्तौ कर्तृकर्मणोरुभयोः प्राप्तिर्यस्मिंस्तस्मिन् कृत्ये कर्तृकर्मणोरुभयोरपि षष्ठी न। उभयप्राप्तौ कर्मणीत्यनेन कर्तरि षष्ठी निषेधे सिद्धेऽपि कर्मणि तत्सिध्यर्थमिदम्। अविशेषेण द्वयोरपि निषेधः कृतोऽनेनेति भावः। नेति चानुवर्तते, नलोकेतिसूत्रादिति भावः। नेतव्या व्रजं गावः कृष्णेन नयतेर्द्विकर्मकत्वेन प्रधानं कर्म गावः। नेतव्या इति कर्मणि तव्यप्रत्ययः। तेन कर्मण उक्तत्वाद्गाव इत्यत्र न द्वितीया व्रजस्त्वकथितं कर्म तन्न केनाप्यभिहितमिति। तत्र द्वितीयायां प्राप्तायां तदपवादत्वेन कर्तृकर्मणोरिति षष्ठी। तस्याः पुनरनेन कृत्यानामिति सूत्रेण निषेधः, तेन अपवादे निषिद्धे उत्सर्गो द्वितीया प्रवर्तते व्रजमिति। कर्तुरनभिहितत्वात् कृष्णेनेत्यत्र कर्तरि तृतीयायां प्राप्तायां कर्तृकर्मणोरिति तदपवादत्वेन षष्ठी, तस्या अनेनापि निषेधः। तेन तृतीयैव कृष्णेनेति। न च गेयो माणवकस्साम्नामित्यत्र साम्नामिति कथं षष्ठी? अनेन करणे षष्ठ्या निषेधादिति वाच्यम्। उभयप्राप्तावेवानेन षष्ठीनिषेधात्। गेयो माणवकस्साम्नामित्यत्र तु कर्तुरभिहितत्वेन तृतीयायाः प्राप्तिरेव नास्तीति कथं तदपवादभूत षष्ठीप्रसक्तिः? अतस्तत्र नोभयप्राप्तिः, कृत्ये इति ज्ञेयम्। कृष्णकर्तृकं व्रजाधिकरणकं गोकर्मकं नयनमर्थः। व्रजमित्यत्र अधिकरणविवक्षया अकथितकर्मत्वेन दितीया विधानात्। कर्तरि वेति सूत्रस्य तु कृत्यानां योगे कर्तरि षष्ठी वा स्यादिति यथोक्त एवार्थः। कृत्यानामित्यस्यैवात्रानुवृत्तिः। नतूभयप्राप्तावित्यस्य नापि नेत्यस्य। अन्यथा मया मम वा सेव्यो हरिरित्यत्र कर्मणोभिहितत्वेन कर्तृमात्र प्राप्तिस्थले अनुभयप्राप्तिकत्वेन विकल्पायोगात् ।

64. तुल्यार्थैरतुलोपमाभ्याम्। तुलोपमाभिन्नैः तुल्यस्यार्थ इवार्थो येषां तैस्तुल्यार्थैश्शब्दैरित्यर्थः।

६३१ **चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः** । ।२।३।७३। एतदर्थैर्योगे चतुर्थी वा स्यात्पक्षे षष्ठी आशिषि। अयुष्यं चिरञ्जीवितं कृष्णाय कृष्णस्य वा भूयात् । एवं मद्रं भद्रं कुशलं निरामयं सुखं शम् अर्थः प्रयोजनं हितं पथ्यं वा भूयात् । आशिषि किम् । देवदत्तस्यायुष्यमस्ति । व्याख्यानात्सर्वत्रार्थग्रहणम् । मद्रभद्रयोः पर्यायत्वादन्यतरो न पठनीयः। **इति षष्ठी।** ६३२ **आधारोऽधिकरणम्** । १।४।४५। कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसँज्ञः स्यात् ।

---

तुल्यः कृष्णस्य कृष्णसंबन्धि तौल्यमर्थः शेषे षष्ठी विधानात्। तुल्यः कृष्णेन अत्रापि स एवार्थः। शेषषष्ठ्यपवादत्वेन तृतीयाविधानात्। तृतीययापि संबन्धसामान्यं द्योत्यत इति भावः ।

69. चतुर्थी चाशिषि–आशीः आशासनम्। तस्मिन्वाच्ये सति आयुष्यार्थैः। मन्द्रार्था र्भद्रार्थैर्वा कुशलार्थैः सुखार्थैः अर्थार्थैः हितार्थैश्च योगे चतुर्थी वा। आयुष्यं कृष्णाय भूयात्। कृष्णसंबन्धिचिरंजीविताशासनमर्थः। चतुर्थ्या चात्र संबन्धसामान्यं द्योत्यते । अस्या अपि शेषषष्ठ्यपवादत्वात्।

70. "आधारोऽधिकरणम्"–क्रिया हि कर्तृनिष्ठा कर्मनिष्ठा वा भवति। यथा घटोऽस्ति घटेन अस्यते इत्यादौ अस्तिक्रिया कर्तृभूतघटनिष्ठा, यत्क्रियाश्रयो यस्सा तन्निष्ठेति न्यायात्। घटकर्तृका स्थितिरिति वा स्थित्याश्रयो घट इति वा शाब्दबोधः। यथा घटं स्थापयति। अत्र स्थितिक्रिया कर्मनिष्ठा। घटनिष्ठस्थित्यनुकूलव्यापार इति तदर्थात्। करणन्तु क्रियाया उपकारकमेव नत्वाश्रयः। एवं कर्तृनिष्ठायाः कर्मनिष्ठाया वा क्रियाया आधारः अधिकरणसंज्ञः स्यादिति सूत्रार्थः। ननु या क्रिया यन्निष्ठा तस्या– स्स एवाश्रयत्वेनाधारो भवतीति कर्मकर्त्रन्यतरस्यैवाधारोधिकरणसंज्ञा स्यादिति चेन्मैवम्। क्रिया स्वाश्रयकर्तृकर्मान्यतरवस्तुद्वारा कस्मिंश्चिदाधारे वर्तत इति तस्याधारस्याधिकरणसंज्ञेति विवक्षितत्वात्। प्रकृतक्रियाश्रयस्य वस्तुन आधारोऽधिकरणसंज्ञ इति निष्कृष्टार्थः। नन्वेवं कर्त्राधारः कर्माधारश्च अधिकरणमिति वक्तव्यम्। कर्तृकर्मणोः क्रियाश्रयत्वानपायात्। क्रियां प्रति हि कर्तृत्वं कर्मत्वञ्च विधीयते। अतः किमनेन कर्तृकर्मद्वारा क्रियाया आधार इति विवक्षितत्वेनेति चेत् उच्यते। घटोऽस्तीत्युक्ते क्वास्तीत्याकांक्षायां भूतल इति वदति। क्वास्तीत्यस्य किमाधारका अस्तिक्रियेति हि तदर्थः। भूतलेऽस्तीत्यस्यापि भूतलाधारकास्तिक्रियेत्यर्थो हि, अतः क्रियाधारत्वस्यैव प्राधान्येन शाब्दबोधे भानसम्भवात् क्रियाधार इत्युक्तम्। भूतलमस्तीत्यत्र सा क्रिया साक्षाद्भूतले वर्तते। भूतलेऽस्तीत्यत्र तु कर्तृद्वारा वर्तते। भूतले घटस्तन्निष्ठा क्रियेति आश्रयाधारयोरयमेव भेदः। या यत्र साक्षाद्वर्तते तस्यास्स आश्रयः, यत्र परंपरया वर्तते स आधार इति। भूतले घटोऽस्तीत्यत्र भूतलाधिकरणको घटः तन्निष्ठा स्थितिक्रियेति शाब्दबोधाङ्गीकारे गौरवात्। भूतलाधिकरणका घटनिष्ठा स्थितिक्रियेति शाब्दबोधोऽङ्गीक्रियते। अस्मिन्नपि शाब्दबोधे घटनिष्ठत्वरूपेणैव

६३३ **सप्तम्यधिकरणे च** । २।३।३६। अधिकरणे सप्तमी स्यात् । चकाराद् दूरान्तिकार्थेभ्यः । औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा । कटे आस्ते । स्थाल्यां पचति । मोक्षे इच्छाऽस्ति । सर्वस्मिन्नात्माऽस्ति । वनस्य दूरे अन्तिके वा । 'दूरान्तिकार्थेभ्यः–' (सू ६०५) इति विभक्तित्रयेण सह चतस्रोऽत्र विभक्तयः फलिताः । **क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्** ' (वा १४८५) अधीती व्याकरणे अधीतमनेनेति विग्रहे ' इष्टादिभ्यश्च ' (सू १८८८) इति कर्तरीनिः । **'साध्वसाधुप्रयोगे च** ' (वा १४८६) । साधुः कृष्णो मातरि, असाधुर्मातुले ।

---

स्थितिक्रियाया भूतलाधिकरणत्वमिति कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारोऽधिकरणमिति मूलोक्तं सङ्गच्छते।

71. सप्तम्यधिकरणे च– दूरान्तिकार्थेभ्यो द्वितीया चेति प्राक्सूत्राद्दूरान्तिकार्थेभ्य इत्यस्यानुकर्षणार्थश्चकारः। औपश्लेषिकम्। उपश्लेषस्संयोगः। तेन संबन्धेन कर्तृकर्मद्वारा क्रियाया य अधारस्स औपश्लेषिकः। विषयविषयिभावसंबन्धेन क्रियाधारो वैषयिकः। व्याप्य व्यापकत्व संबन्धेन क्रियाधारोऽभिव्यापकः। यथा कटे आस्ते पुमानिति शेषः। संयोगसंबन्धेन कटाधारकः पुमान् तन्निष्ठोपवेशनक्रिया उपवेशनक्रियाश्रयः पुमान् कर्ता। अतः कर्तृद्वारा क्रियाया अयमौपश्लेषिक आधारः। स्थाल्यां पचति ओदनमिति शेषः। संयोगेन स्थाल्याधारकमोदनं कर्म, तन्निष्ठा पचनक्रियेति कर्मद्वारा क्रियाया अयमौपश्लेषिक आधारः। यद्यप्यत्र स्थाल्यां पचत्योदनं देवदत्त इति स्थाल्यधिकरणकाया ओदनकर्मकायाः पचनक्रियायाः कर्तृत्वेन आश्रयो देवदत्त एवेति कर्तृ–निष्ठत्वेन पचनक्रिया प्रतीयते। तथाऽपि पचनक्रियानुकूलव्यापाराश्रय एव देवदत्तः पचनन्तु ओदननिष्ठमेव। देवदत्तेन ओदनस्य पच्यमानत्वात्। तस्मात् स्थाल्यधिकरणकौदनिष्ठपचनक्रियानुकूलव्यापाराश्रयो देवदत्त इति शाब्दबोध इति न दोषः। मोक्षे इच्छास्ति। मोक्षविषयकेच्छानिष्ठस्थितिरर्थः। वैषयिकाधारोयम्। सर्वस्मिन्नात्मास्ति सर्वमभिव्याप्यात्मा स्थित इति सर्वाभिव्यापिका आत्मनस्स्थितिरर्थः। व्यापकत्वसबन्धेन सर्वाधिकरणकात्मनिष्ठा स्थितिरिति शाब्दबोधः। अभिव्यापकाधारोयम्।

72. क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्। इन्विषयस्य क्तस्य यत्कर्तृभूतं तत्र सप्तम्या उपसंख्यानं कर्तव्यम्। अधीती व्याकरणे अधीतमिति क्तस्य भावे विधानात्। तत उत्तरस्येनः कर्तरि विधानाच्च। कर्मत्वं केनाप्यनभिहितमिति, व्याकरणे कर्मणि द्वितीया प्राप्तौ तदपवादत्वेन अनेन सप्तमी ।

**निमित्तात्कर्मयोगे** (वा १४९०) निमित्तमिह फलम्। योगः संयोगसमवायात्मकः ।
'चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ।। (इति भाष्यम्)
हेतौ तृतीयाऽत्र प्राप्ता तन्निवारणार्थमिदम् । सीमा अण्डकोशः। पुष्कलको गन्धमृगः । योगविशेषे किम्-वेतनेन धान्यं लुनाति । ६३४ **यस्य च भावेन भावलक्षणम्** । ।२।३।३७। यस्य क्रिया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यात्। गोषु दुह्यमानासु गतः । **अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च** । सत्सु तरत्सु असन्त आसते । असत्सु तिष्ठत्सु सन्तस्तरन्ति । सत्सु तिष्ठत्सु असन्तस्तरन्ति ।असत्सु तरत्सु सन्तस्तिष्ठन्ति ।

---

73. साध्वसाधुप्रयोगे च इदञ्च वार्तिकं कर्मणि सप्तमीविधानार्थम्। एतद्वार्तिकाभावे साधुः कृष्णो मातुरिति कृद्योगे कर्मणि षष्ठी स्यादिति भावः।

74. निमित्तात्कर्मयोगे – निमित्तात्फलभूतात् सप्तमी स्यात् कर्मयोगे कर्मणा सह संयोग समवायात्मक संबन्धे निमित्तस्य द्योते सति यथा च 'चर्मणि द्वीपिनं हन्ति द्वीपि कर्मकहननक्रियायाः फलभूतं (चर्म) तत्र सप्तमी चर्मद्वीपिनोस्समवायसंबन्धस्य गम्यमानत्वात्। एवं त्रिष्वप्यूह्यम्। सीमा अण्डकोशः मृगनाभि निवास स्थलमिति भावः। एतद्वार्तिकाभावे हेताविति तृतीया स्यात्। फलमपीह हेतुः। अध्ययनेन वसतीत्युदाहृतत्वात्। यद्वा-तादर्थ्ये चतुर्थी स्यात्। मुक्तये हरिं भजतीतिवत्। चर्माद्यर्थं द्वीप्यादि हननम्। ननु विषयविषयिभावसंबन्धेन फलस्यापि वैषयिकाधारत्वात्। चर्मणि चर्मविषये इति अधिकरणे सप्तमीस्यादेवेति किमनेन वार्तिकेनेति चेन्मैवम्। चर्मफलकं द्वीपिकर्मकं हननमिति शाब्दबोधे विषयविषयिभावसंबन्धस्याभानात्। भाने वा चर्मफलविषयकमिति गौरवात्। फलफलिभावरूपस्संबन्ध एवात्र विवक्षितो न तु विषयविषयिभावरूप इति भावः। अन्यथा अध्ययनेन वसति, मुक्तये हरिं भजतीत्यादावपि परत्वादाधारसंज्ञया सप्तमी स्यात्। नन्वेवं फलफलिभावरूपसंबन्धविवक्षायामपि परत्वादध्ययनेन वसतीत्यादावनेन वार्तिकेन सप्तम्येव स्यान्न तु तृतीयादिकमित्यत आह योगविशेषे किं? वेतनेन धान्यं लुनातीति। अयं भावः। कर्मफलयोर्यत्र संयोगसमवायान्यतररूपस्संबन्धस्तत्रैवेदं वार्तिकं प्रवर्तते, नत्वन्यत्रेति वेतनधान्ययोः फलकर्मणोस्तादृशसंबन्धाभावेन सप्तमीप्रसक्तिर्नास्ति, किन्तु तृतीयैवेति। अध्ययनेन वसतीत्यत्र तु कर्मण एवाभावान्न सप्तमी। वेतनेन धान्यं लुनाति। वेतनं भृतिः फले तृतीया। वेतनफलकं धान्यकर्मकं लवनमर्थः।

75. यस्य च भानेन भावलक्षणम्। भावशब्दोऽत्र क्रियावाचकः यस्येत्यधिकरणाविवक्षया

६३५ **षष्ठी चानादरे** । ।२।३।३८। अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्तः । रुदति रुदतो वा प्राव्राजीत् । रुदन्तं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः । ६३६ **स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च** । ।२।३।३९। एतैः सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः । षष्ठ्यामेव प्राप्तायां पाक्षिकसप्तम्यर्थे वचनम् । गवां गोषु वा स्वामी । गवां गोषु वा प्रसूतः गां एवानुभवितुं जात इत्यर्थः ।

---

शेषे षष्ठी चस्तु निरर्थकः। यस्य भावेन यन्निष्ठया क्रियया भावस्य स्वस्यां स्वलक्षणयोगःदन्यक्रियाया लक्षणं ज्ञानं भवति। ततस्सप्तमी स्यात्। क्रियालक्षक क्रियाश्रयाच्छब्दात्सप्तमी स्यादिति निष्कृष्टोर्थः। क्रिया कर्तृनिष्ठा कर्मनिष्ठा वा भवतीत्युक्तम्। तेन क्रियालक्षकक्रियाश्रयशब्दः। कर्ता च कर्म च भवेत्। तत्र कर्मण्युदाहरणम्। गोषु दुह्यमानासु गत इति। अत्र गावः कर्मीभूताः स्वनिष्ठया दोहन क्रियया गमनक्रियां लक्षयन्तीति गोशब्दात्सप्तमी। दुह प्रपूरण इति धातोः कर्मणि यगन्तादात्मनेपदि नश्शानच्। दुह्यमानासु। तेन गावोऽत्र अभिहितं कर्म। दुह्यमाना इति यका कर्मणोभिहितत्वात्। न हि दोहनं गोकर्तृकं भवति। किन्तु गोकर्मकमेवेति गावोऽत्र कर्म। कर्तर्युदाहरणन्तु ब्राह्मणेष्वधीयानेषु गत इति द्रष्टव्यम्। अध्ययनक्रिया ब्राह्मणकर्तृकेति, ब्राह्मणनिष्ठयाऽध्ययनक्रियया गमनक्रिया लक्ष्यत इत्यत्र ब्राह्मणशब्दात्सप्तमी।

76. षष्ठी चानादरे– भावलक्षणे षष्ठीविधानार्थमिदम्। चात्सप्तमी विधानन्तु अनादरांशाधिकभाने सप्तमीं षष्ठी परत्वाद्बाधेत। अपवादत्वाच्चेति यन्निष्ठा क्रिया अनादरद्योतनपूर्वकं क्रियान्तरं लक्षयति। तत्र षष्ठीसप्तम्यौ स्तः–लक्षकत्वं नाम लक्षणया बोधकत्वं न , किन्तु कालतः परिच्छेदकत्वम्। गत इत्यादिभिर्धात्वर्थस्य गमनादे र्वाक्यत्वेन अलक्ष्यत्वात्।

77. स्वामीश्वरेति। नन्विह षष्ठीविधानं व्यर्थम्। राज्ञः पुरुष इत्यादाविव स्वस्वामिभावादिसंबन्धे गम्यमाने शेषषष्ठीलाभात् इत्याशंक्याह, पाक्षिकसप्तम्यर्थमिति। अयं भावः। विकल्पाधिकाराभावेन केवलसप्तमीविधाने षष्ठीं बाधित्वा सप्तम्यैव स्यान्न तु षष्ठीत्यत्र षष्ठीविधानमिति। गवां गोषु वा स्वामी। स्वामिनो गवाञ्च पाल्यपालकत्वरूपसंबन्धः। तेन शेषे षष्ठी, पक्षेऽनेन सप्तमी। एवमेवेश्वराधिपतियोगेऽपि द्रष्टव्यम्। गवां गोषु वा दायादः गवां दायादस्य च अङ्गाङ्गीभावरुपसंबन्धः। गवां गोषु वा साक्षी, साक्षाद्द्रष्टरि संज्ञायां साक्षी। तस्य दर्शनक्रियया आप्तुमीप्सिततमत्वेन गवां कर्मत्वं, तदविवक्षायां शेषे षष्ठी। तद्विवक्षायां वा तद्योगे षष्ठी। अनेन सप्तमी

६३७ **आयुक्तकुशलाभ्यां चासेवायाम्** । ।२।३।४०। आभ्यां योगे षष्ठीसप्तम्यौ स्तः तात्पर्येऽर्थे। आयुक्तो व्यापारितः । आयुक्तो कुशलो वा हरिपूजने हरिपूजनस्य वा । आसेवायां किम् –आयुक्तो गौः शकटे । ईषद्युक्त इत्यर्थः । ६३८ **यतश्च निर्धारणम्** । २।३।४१। जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणं यतस्ततः षष्ठीसप्तम्यौ स्तः । नृणां नृषु वा ब्राह्मणः श्रेष्ठः । गवां गोषु वा कृष्णा बहुक्षीरा । गच्छतां गच्छत्सु वा धावञ्छीघ्रः । छात्राणां छात्रेषु वा मैत्रः पटुः । ६३९ **पञ्चमी विभक्ते** । ।२।३।४२। विभागो विभक्तम्। निर्धार्यमाणस्य यत्र भेद एव तत्र पञ्चमी स्यात् । माथुराः पाटलिपुत्रकेभ्य आढ्यतराः ।

---

च, गवां गोषु वा प्रतिभूः, "प्रतिभूर्लग्नकः पुमानित्यमरः। उत्तमाधमर्णयोः सन्धाता प्रतिभूरित्युच्यते। उपचाराद्वयोः कयोश्चित्सन्धाताऽपि कर्मत्वाविवक्षायाम्। विवक्षायामप्यत्र षष्ठीसप्तम्यौ गवां गोषु वा प्रसूतः, गवार्थं प्रसूत इति तादर्थ्याविवक्षायां शेषे षष्ठी। अनेन सप्तमी च। तादर्थ्यविवक्षायामप्यनेन षष्ठीसप्तम्यौ अस्य शास्त्रस्य परत्वात् ।

78. "आयुक्तकुशलाभ्याञ्चासेवायाम्।" आसेवातात्पर्यमुद्देशमिति यावत्। तस्मिन्नर्थे गम्यमाने आयुक्तकुशलाभ्यां योगे षष्ठीसप्तम्यौ स्तः। आयुक्तस्य कुशलस्य वा पुंसः हरिपूजने तात्पर्यमस्तीति हरिपूजनशब्दात्षष्ठीसप्तम्यौ। आयुक्तो गौश्शकटे गौर्बलाच्छकटे नियुक्तः न तु तस्य शकटवहने तात्पर्यमिति। शकटान्न षष्ठीसप्तम्यौ, किन्तु औपश्लेषिकाधारत्वादधिकरणे चेति सप्तमी ।

79. यतश्च निर्धारणम्। निर्धारणं यदवधिकमित्यर्थः। निर्धारणपदार्थमाह। समुदायादेकदेशस्य पृथक्करणमिति। समुदायस्समूहः तस्मादपादानादवधिभूतादेकदेशभूतस्य वस्तुनः अपकर्षणमित्यर्थः। तत्र पृथक्करणे निमित्तान्याह। जातिगुणक्रियासंज्ञाभिरिति। जात्या यथा नृणां नृषु वा ब्राह्मणश्रेष्ठः। नृस्मुदायादेकदेशस्य ब्राह्मणस्य श्रेष्ठत्व प्रतिपादनरूपं पृथक्करणं प्रति निमित्तं ब्राह्मणत्वजातिः। अत्र निर्धारणस्यावधिभूतानां नृणां षष्ठीसप्तम्यौ । कृष्णत्वं गुणः भावनं क्रिया, मैत्र इति संज्ञा। श्रेष्ठादि पदप्रयोगाभावेऽपि जातिगुणक्रियासंज्ञाश्रयस्य वस्तुनः एकदेशस्य समुदायात्पृथग्ग्रहणमिति यत्तच्च निर्धारणम्। तेन पुरुषेषु उत्तमः पुरुषोत्तम इति सिद्धम्, उत्तमत्वं गुणः।

80. "पञ्चमी विभक्ते–" यतश्च निर्धारणमिति सूत्रस्य अत्रानुवृत्तिः। निर्धार्यमाणं यदवधिकं तत्र पञ्चमी स्यात्। अवधिनिर्धार्यमाणयोस्सति भेदे, भेद एवेति कौमुद्युक्तेनैवकारेण अभेदेऽसतीत्यप्यर्थः। नृणां ब्राह्मण इत्यादौ समान्यविशेषभावेन यद्यपि

६४० **साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः** । ।२।३।४३। आभ्यां योगे सप्तमी स्यादर्चायाम्, न तु प्रतेः प्रयोगे । मातरि साधुर्निपुणो वा । अर्चायां किम् –निपुणो राज्ञो भृत्यः । इर तत्त्वकथने तात्पर्यम् । **'अप्रत्यादिभिरिति वक्तव्यम्'** (वा १४९३) साधुर्निपुणो वा मातरं प्रति परि अनु वा । ६४१ **प्रसितोत्सुकाभ्यां तृतीया च** । ।२।३।४४। आभ्यां योगे तृतीया स्यात् चात्सप्तमी । प्रसित उत्सुको वा हरिणा हरौ वा।

---

भोदोऽस्ति तथापि नरत्व जात्याक्रान्तयोस्तयोरभेद एवेति तत्रातिव्याप्ति निरासायाभेदेऽसतीति। निर्धारणञ्चात्र न समुदायादेकदेशस्य पृथक्करणं सामान्यविशेष्यभावाभावात्। किन्तु समुदायिनोरेवोभयोरन्यतरस्यान्यतरस्मात्पृथक्करणं उभयत्राप्यनुगतो, निर्धारणपदार्थस्तु पृथक्करणमित्येतावानेव। ननु समुदायादेकदेशस्य पृथक्करणं युज्यत एव। समुदाये घटकतया एकदेशस्याभेदेन स्थितत्वात्। समुदायिनोस्तु स्वत एव पृथग्भूतयोः कथम्पुनः पृथक्करणमिति चेदुच्यते। पृथक्त्वं हि वस्तुद्वयनिष्ठो धर्मः, न त्वेकवस्तुनिष्ठः। एकस्मिन्पृथक्त्वस्थित्यनौचित्यात्। घटप्रतियोगिको भेदः पटे, पट प्रतियोगिको भेदो घटे इति समुदायिनोरपि परस्परप्रतियोगिक एव भेदः। प्रतियोगी चात्र अवधिशब्देनोच्यते। तेन यदवधिको यस्य भेदस्तस्यावधिभूतस्य पञ्चमी स्यादित्यर्थः। निर्धारणपदार्थस्तु न केवलं भेदः, किन्तु समुदायावधिक एव देशस्य भेद इति। निर्धारणभेदयोरस्ति सामान्यविशेषाभावात्मकोभेदः। तस्मात् पञ्चमीविभक्त इति सूत्रेण निर्धारणपदानुवृत्तिः किन्तु यत इत्यस्यैव । इदं सामान्यशास्त्रं, यतश्च निर्धारणमिति तु विशेषशास्त्रम्। अत्रापि जातिगुणक्रियासंज्ञाभिरेव भेदप्रतिपादनम्। संज्ञाया उदाहरणम्। माथुराः पाटलिपुत्रकेभ्य इति। जातेस्तु महिषेभ्योऽश्वाः इति। गुणस्य तु नीलाच्छ्वेतमिति। क्रियायाः गमनाद्धावनमिति द्रष्टव्यम्। आढचतरत्वादि कथनन्तु भेदोद्बृंहणायेति बोध्यम्।

81. " निपुणो राज्ञो भृत्यः"। राज्ञ इत्यस्य न भृत्यपदेन योगः, किन्तु निपुणपदेन, कर्तृकर्मणोरिति षष्ठी। राजानं प्रति भृत्यो निपुण इत्यर्थः।

82. प्रसितः तत्परः आसक्त इत्यर्थः। प्रसित उत्सुको वा। हरिणा हरौ विष्णुमित्रः। ननु प्रसितोत्सुकाभ्यां योगो विष्णुमित्रस्याप्यस्त्येवेति तत्रापि तृतीयासप्तम्यौ स्यातामिति चेन्मैवम्। हरेरत्र वैषयिकाधारत्वेन अधिकरणे चेति सप्तमी प्राप्नोत्येव। यत्र सप्तमीप्राप्ति स्तत्रैव पाक्षिकी तृतीयाऽनेन विधीयत इति तृतीयायाः पाक्षिकत्वं चात्सप्तमी विधानेनैव सिद्धम्। न च क्रियाया एवाऽधारोऽधिकरणसंज्ञक इति प्रसितोत्सुकयोर्गुणत्वेन तदाधारस्य चाधिकरणत्वमिति सप्तमीप्राप्तिर्नास्त्यत्रेति वाच्यम्। भवतीति क्रियाया अत्रावश्याध्याहर्तव्यत्वात्। विष्णुमित्रनिष्ठा प्रसिती भवनक्रिया उत्सुकी भवनक्रिया च विष्णुमित्रद्वारा हर्याधारकमिति न सप्तम्याः कापि क्षतिः।

६४२ **नक्षत्रे च लुपि** । ।२।३।४५। नक्षत्रे प्रकृत्यर्थे यो लुप्संज्ञया लुप्यमानस्य प्रत्ययस्यार्थस्तत्र वर्तमानात्तृतीयासप्तम्यौ स्तोऽधिकरणे । 'मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत् । मूले श्रवणे इति वा । लुपि किम्–पुष्ये शनिः । ६४३ **सप्तमीपञ्चम्यौ कारकमध्ये** । ।२।३।७। शक्तिद्वयमध्ये यौ कालाध्वानौ ताभ्यामेते स्तः । अद्य भुक्त्वाऽयं द्व्यहे द्व्यहाद्वा भोक्ता। कर्तृशक्त्योर्मध्येऽयं कालः ।

---

83. " नक्षत्रे च लुपि" प्रत्ययस्य लुक् श्लु लुप इति लुप्शब्देन कृतं प्रत्ययादर्शनं लुपसंज्ञकम्। लुपि सति नक्षत्रवाचकाच्छब्दात्तृतीया सप्तम्यौ स्तः। यस्माद्यः प्रत्ययो लुप्तस्स लुप्यमानार्थाभिधायीति नक्षत्रवाचकात्प्रकृतेः विहितस्य लुप्तस्य प्रत्ययस्य योऽर्थस्तञ्च नक्षत्रवाचकप्रकृतिरभिधत्ते। तस्मात् लुपि सति नक्षत्रवाचकात् लुप्यमान प्रत्ययार्थाभिधायकाच्च शब्दात्तृतीयासप्तम्यौ स्त इति विस्तृतोऽर्थः। इदं सर्वमभिप्रेत्याह, नक्षत्रे प्रकृत्यर्थ इत्यादिकम्। श्रवणेन युक्तः काल इत्यर्थे श्रवणेति प्रकृतिः अणप्रत्ययः । श्रवणेति प्रकृतिर्नक्षत्रवाचिकेति श्रवणस्य प्रकृते र्नक्षत्रमर्थः। तथा च नक्षत्रे प्रकृत्यर्थे श्रवणे लुबविशेष इति लुप्संज्ञया लुप्यमानस्य प्रत्ययस्याणो योऽर्थः, तेन युक्तः काल इति प्रकृतेः लुप्यमानार्थाभिधायकत्वन्यायेन तमर्थं प्रकृतिरभिधत्ते इति प्रकृतावस्ति सोऽर्थः। प्रकृतिश्च अभिधायकत्वसंबन्धेन तस्मिन्नर्थेऽस्तीति हेतोस्तत्र वर्तमानादिति लुप्यमान प्रत्ययार्थाभिधायकादित्यर्थः। तच्चाभिधायकं प्रकृत्यर्थो नक्षत्रमेव। नक्षत्रवाचिका प्रकृतिरिति तु न अस्याः लुब्विविशिष्टायाः प्रकृतेः केवलनक्षत्रवाचकत्वाभावात्। यद्वा शब्दादित्यनुगुणविशेष्यमध्याहार्यम्। स च शब्दोऽत्राधिकरणभूत एव गृह्यत इत्याह। अधिकरण इति। यथा मूलेनावाहयेद्देवीं मूलानक्षत्रेण युक्तः कालो मूलः। स च कर्मभूत देवीनिष्ठाऽवाहनक्रियया औपश्लेषिक आधारः, आभिव्यापको वा, तस्मात्तृतीया। मूलानक्षत्रयुक्तकालाधिकरणकं देवीकर्मकमावाहनमर्थः। लुपि किम्? पुष्ये शनिः। प्रकृतेः परत्र प्रत्ययाभावो यद्यप्युभयत्र समः, तथापि विहितस्य प्रत्ययस्य तत्र लुप्। अत्र तु प्रत्ययस्यैवाविधानमिति भेदः। विहितप्रत्ययलोपं हि लुबभिधत्ते। नक्षत्रे चेत्येतावदुक्तौ पुष्ये शनिरित्यत्र शनिनिष्ठाऽस्ति क्रियाधारत्वेन अधिकरणभूते पुष्यशब्दे यथा अधिकरणे चेति सप्तमी, तथा तृतीयाऽपि स्यादिति ।

84. "सप्तमीपञ्चम्यौ कारकमध्ये।" कारकयोर्मध्ये, कारकञ्चात्र उपचारात्कारकशक्तौ वर्तते। तदेतदाह – शक्तिद्वयमध्य इति। कालाध्वानौ। कालाध्व वाचिशब्दौ, 'अद्य भुक्त्वाऽयं द्व्यहे द्व्यहाद्वा भोक्ता द्वयोरह्नोस्समाहारो द्व्यहम्। कालवाच्ययं शब्दः।

इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत् । कर्तृकर्मशक्त्योर्मध्येऽयं देशः । अधिकशब्देन योगे सप्तमीपञ्चम्याविष्येते । 'तदस्मिन्नधिकम् –' (सू १८४६) इति 'यस्मदधिकम् (सू ६४५) इति च सूत्रनिर्देशात् । लोके लेकाद्वाधिको हरिः । ६४४ **अधिरीश्वरे** । ।१।४।९७। स्वस्वामिभावसंबन्धे अधिः कर्मप्रवचनीयसंज्ञः स्यात् ।६४५ **यस्मादधिकम् यस्य चेश्वरवचनम् तत्र सप्तमी** ।२।३।९।

---

भुक्त्वेति भोक्तेति च भोक्तृनिष्ठा एकापि भुजक्रिया साधनभूता शक्तिः भूतभविष्यत्कालभेदेन द्वेधा भिन्ना–भुक्त्वेति भूते क्त्वाप्रत्ययान्तत्वात्। भोक्तेति भविष्यति लुडन्तत्वात्। एवञ्च कर्तृनिष्ठयोर्भूतभविष्यद्भोजनसाधन शक्त्योर्मध्ये कालपरिच्छेदको द्व्यहमिति शब्दः। ततस्सप्तमीपञ्चम्यौ। कर्तृनिष्ठभुजिक्रियाधारत्वेन सप्तमी यद्यप्यधिकरणे चेति सिद्ध्यति तथाऽपि पञ्चमीविधानार्थमिदम्। शक्तिद्वयमध्ये किम्? अस्मिन्नहनि भुक्त्वाऽयं द्व्यहे द्व्यहाद्वा भोक्ता । अत्र अस्मादह्न इति पाक्षिकप्रयोगो माभूत्। भूत भोजनशक्ति कालपरिच्छेदकमेवाहन् शब्दः। न तु भूतभविष्यद्भोजनशक्तिद्वयमध्य कालपरिच्छेदकमिति हेतोरहन् शब्दादत्र न पञ्चमीति भावः। इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत्। अध्वन इदमुदाहरणम्। किञ्च उपचारतः कारकद्वयमध्य इत्यस्य पूर्वमुदाहरणम्। तत्र कारकपदस्य उपचारेण शक्त्यर्थमङ्गीकृत्य शक्तिद्वयमध्य इति कल्पनात्। साक्षात्कारकद्वयमध्य इत्यस्येदमुदाहरणम्। अयमित्यस्य लक्ष्यस्य च कर्तृकरणोः कारकयोर्मध्ये अध्ववाचिनः क्रोशशब्दस्य सत्वात्। अत्र शक्त्याश्रयद्रव्यमध्यलाभे सति शक्तिद्वयमध्यलाभोऽपि जात एव। कर्तृनिष्ठावेधन शक्तिः कर्मनिष्ठा वेध्यशक्तिरिति शक्तिद्वयमध्ये क्रोशः परिच्छेदकत्वेन वर्तत इति देशतः कालतो वस्तुतश्च परिच्छेदस्य त्रिविधत्वेन कालो यथा परिच्छेदकः तथा देशोऽपि परिच्छेदक एवेति बोध्यम्।

85. सूत्रनिर्देशात्– यद्यपि पञ्चमीविभक्त इत्यनेन लोकादधिको हरिरिति सिद्ध्यति। तथाऽपि सप्तमीसिद्ध्यर्थं सूत्रनिर्देशो ज्ञापकत्वेनाश्रयणीयः। न च अभिव्यापकाधारत्वेन लोके हरिरस्तीत्यपि सिद्ध्यत्येवेति किं ज्ञापकाश्रयणेनेति वाच्यम्। हरिनिष्ठास्ति क्रियाया एव तत्र लोकस्याधारत्वमिति तत्र सप्तमी युज्यत एव। अत्र तु लोके हरिरधिक इति हरिनिष्ठाधिक्यरूपगुणस्य लोक आधारत्वेनाभासत नास्याधारस्याधिकरणसंज्ञेति सप्तम्यप्राप्तेः।

86. यस्मादधिकं यदवधिकमाधिक्यं यदपेक्षया आधिक्यमित्यर्थः अभिधीयते तत्र सप्तमी कर्मप्रवचनीय योगे सति, यथा उपपरार्धे हरेर्गुणाः। उपेति कर्मप्रवचनीयम्।

अत्र कर्मप्रवचनीययुक्ते सप्तमी स्यात् । उप परार्धे हरेर्गुणाः । परार्धादधिका इत्यर्थः । ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी । अधि भुवि रामः । अधि रामे भूः । 'सप्तमी शौण्डैः (सू ७१७) इति समासपक्षे तु रामाधीना । 'अषडक्ष-' (सू २०७९) इत्यादिना खः । ६४६ **विभाषा कृञि** । ।१।४।९८। अधिः करोतौ प्राक्सञ्ज्ञो वा स्यादीश्वरेऽर्थे । यदत्र मामधिकरिष्यति । विनियोक्ष्यत इत्यर्थः । इह विनियोक्तुरीश्वरत्वं गम्यते । अगतित्वात् 'तिङि चोदात्तवति' (सू ३९८७ इति निघातो न ।। **इति सप्तमी विभक्तिः ।।**

## ।। इति कारकप्रकरणम् ।।

---

आधिक्यवचनञ्च हरिगुणानां परार्थापेक्षया आधिक्यमत्र उपेनाभिधीयत इति परार्थात्सप्तमी। अधिभुवि रामः अधिना स्वस्वामिसंबन्ध उच्यते। भुवः स्वामी राम इत्यर्थः। इदं स्ववाचकात्सप्तम्या उदाहरणम्। अधिरामे भूः रामस्य स्वं भूमिरिति रामस्वामिका भूरिति वा अर्थः। स्वामिवाचकात्सप्तमी। कर्मप्रवचनीययुक्त इति किम्? परार्थावधिका हरेर्गुणा इत्यादौ माभूत्। रामाधीना। रामे-अधि-रामाधीना शौण्डादित्वादधेः सप्तमी शौण्डैरित्यधिना सह समासः । अषडक्षेति सूत्रे अध्युत्तरपदग्रहणादध्युत्तरपदात्खः खस्यायनेयीती नादेशः रामस्वामिकेत्यर्थः ।

87. "विभाषा कृञि" अधिरीश्वर इति सूत्रस्यात्रानुवृत्तिः। तदेतदाह अधिः करोताविति करोतौ करोतिना योगे इत्यर्थः। करोतौ परत इति वा। तेन कर्मप्रवचनीय युक्ते द्वितीया मा मधिकरिष्यतीति। इह विनियोगद्वारा ईश्वरत्वं गम्यते न तु साक्षादुच्यत इति यस्य चेश्वरवचनमिति मय्यधिकरिष्यतीति न स्यात् ।

88. ननु कर्मणि द्वितीयेति मच्छब्दात् द्वितीया सिद्धौ किमनेन विभाषा कृञीति अधेः कर्मप्रवचनीयसंज्ञाविधानेनेत्यत आह निघातो नेति। अनुदात्तस्वरो नेत्यर्थः । कर्मप्रवचनीयसंज्ञया गतिसंज्ञाया बाधादिति भावः **इति कारकाणि।**

# अव्ययीभावप्रकरणम् १७।

६४७ । **समर्थः पदविधिः** ।२ ।१ ।१ । पदसंबन्धी यो विधिः स समर्थाश्रितो बोध्यः॥ ६४८ ।**प्राक्कडारात्समासः** ।२ ।१ ।३ ।'कडाराः कर्मधारये ७५१ ' इत्यतः प्राक् समास इत्यधिक्रियते॥

---

**श्री हयग्रीवाय नमः**

## अथ शरद्रात्रौ समासव्याख्या प्रारभ्यते

## अव्ययीभाव प्रकरणम्

समर्थः पदविधिः पदविधिरिति षष्ठीतत्पुरुषः पदस्य पदयोः पदानां वा विधिः पदविधिः पदविधिरिति पदशब्दात्संबन्धसामान्ये शेषे षष्ठी तस्यास्सुपोधातुप्रातिपदिकयोरिति लुक्यस्याद्यः प्रत्ययो विहितः स लुप्यमानार्थाभिधायीति पदात्प्रकृतेर्विहितस्य लुप्यमानस्य षष्ठीप्रत्ययस्य सोत्र संबन्धोर्थः। संबन्धसामान्ये षष्ठीविधानात्। तमर्थं स्वार्थञ्च पदशब्दोऽत्राभित्ते तेन पदशब्दस्य पदसंबन्धीत्यर्थः विधिर्विधानम् पदविधिस्सुप्त्वतद्व्याप्य-न्यत्तरधर्मपुरस्कारेण विधीयमानं कार्यमिति यावत् तच्च समासैरशेषतद्धिताद्यत्मकम् । समर्थ पदस्य समर्थाश्रिते लक्षणा समर्थाख्यपदाश्रितं बोध्यमित्यर्थः समासशास्त्रे तद्धिता दिषु च समर्थ इति पदमुपतिष्ठते इति यावत् । इको गुणवृद्धी इतिवत्परिभाषा सूत्रमिदम् । न च पुनरधिकारसूत्रमिति भ्रमितव्यम् तथात्वे पदविधिरित्यस्य वैयर्थ्यात् समर्थ इत्यस्यैव उत्तरत्राधिक्रियमाणत्वात् ननु पदविधिरिति मास्तु समर्थ इत्येव सूत्रवस्तु अधिकारोऽयम् इति चेन्मैवम् । वर्णविधावपि समर्थोपस्थित्या तिष्ठतु दध्यानय तक्रमिति वाक्ये दध्यानय इत्यत्र यन्ण स्यात् समर्थो नाम समर्थवान् सामर्थञ्च द्विविधं व्यपेक्षारूपम्, एकार्थीभावात्मकञ्चेति। विविधानामाकां क्षायोग्यता सन्निधीनपेक्षते पदानां परस्परसंबन्धप्रतीत्यर्थमिति व्यपेक्षा इयं वाक्ये विद्यते अनेकाः पदार्था यस्मादेकार्थीभवन्ति निरपेक्षाद्यस्मात्सामर्थाद्धेतोरेकपदार्थत्वेन भान्ति स एकार्थीभावात्मकः समासेत्वयम् राज्ञः पुरुष इति वाक्ये राजपुरुष इति च समासे च राजपदार्थस्य पुरुषपदार्थस्य च द्वयोः राजसंबन्धिपुरुष इत्येकपदार्थतया भानं यद्यपि समं तथाऽपि राज्ञः पुरुषो गच्छतीति वाक्ये राज्ञः क इति कस्य पुरुष इति चाकांक्षाबलादेव

**६४९। सह सुपा** ।२।१।४। सह इति योगो विभज्यते। सुबन्तं समर्थेन सह समस्यते। योगविभागस्येष्टसिद्ध्यर्थत्वात्कतिपयतिङन्तोत्तरपदोऽयं समासः। स च छन्दस्येव। पर्यभूषत्। अनुव्यचलत्। 'सुपा' सुप्सुपा सह समस्यते। समासत्वात्प्रातिपदिकत्वम्॥ **६५०। सुपो धातुप्रातिपदिकयोः** ।२।४।७१। एतयोरवयवस्य सुपो लुक् स्यात्। 'भूतपूर्वे चरट् १९९९' इति निर्देशाद्भूतशब्दस्य पूर्वनिपातः। पूर्वं भूतो भूतपूर्वः। इवेन समासो विभक्त्यलोपश्च॥ जीमूतस्येव॥

---

राजपुरुषयोः परस्परसंबन्धप्रतीतिरिति। ननु इदञ्च सामर्थ्य समासे वर्तत इत्युक्तम्। समासघटकीभूतेषु पदेषु वर्तते वा उत विशेष्टे समासे। नाद्यः पदेषु प्रत्येकं तादृशसामर्थ्यस्थित्यसंभवात्। अनेकपदार्थान्न ह्येकं पदं बोधयितुं क्षमते। न द्वितीयः। समर्थेन सह समस्यत इति पदगतं सामर्थ्यं विना समासानुदयादिति चेत्, उच्यते आद्य पक्ष एवाङ्गीक्रियते। राजपुरुष इति समासघटकीभूतात्। राजपदाद्वा पुरुषपदाद्वा राजसंबन्धिपुरुष इत्यर्थः प्रतीयत इत्यभ्युपगमात्। इतरपदस्य तु द्योतकत्वमेव। अयमेव ह्येकार्थीभावो नाम एकपदादनेकपदार्थप्रतीतिरिति यत् इदमनेकपदार्थप्रतीतिसामर्थ्य समासात्प्राक्केवलस्य पदस्य तादृशसामर्थ्यं नास्त्येवेति समर्थेन समस्यत इति कथं वक्ष्यत इतिचेत्, उच्यते–भाविनीं समासघटनामाश्रित्य पदे सामर्थ्यं समासात्प्रागेव विवक्षितमिति व्यवह्रियत इति । ननु समर्थ इति किम्? त्वदुक्तरीत्या भाविनीं समासघटनामाश्रित्य सर्वत्रापि समर्थपदत्वव्यवहारेणाभीष्टसिद्धेः। समासोदयानन्तरं तद्घटकीभूते पदे सामर्थ्यस्याव्यभिचाराच्च इति चेन्मैवम्। पश्यति कृष्णं श्रितो देवदत्तमित्यादौ कृष्णश्रित इत्यादिसमासो मा भूत्। अयं भावः। अत्र कृष्णमिति पदं पश्यति नान्वेति न तु श्रितेन तेन समासात्प्राग्वास्येऽपि कृष्णश्रित पदयोरत्र न व्यपेक्षारूप सामर्थ्यमिति। समासो न भावी इति। समर्थेन समस्यत इत्यस्य व्यपेक्षावता समस्यत इति तत्कालस्थितिमादाय एकार्थीभाववतेति भाविनीं स्थितिमादाय वा अर्थो वाच्यः। योषां पदानां व्यपेक्षारूपसामर्थ्यमस्ति। तेषामेवात्र समासविधानम्। विहिते च समासे तेषामेवैकार्थीभावसामर्थ्य चेति बोद्धव्यम्। ।

2. सुपा अधिकृतं समासपदं धातुत्वेन योजयति समस्यत इति। समर्थ इति तु विभक्तिविपरिणामेन सुपेत्यस्य विशेषणम्। विनाऽपि तद्योगं तृतीयेति सह योगाभावेऽपि सुप्शब्दात्तृतीया, समर्थेनेत्यस्यार्थस्तूक्त एव। कृत्तद्धितसमासाश्चेति समस्तपदस्य प्रातिपदिकत्वात्स्वाद्युत्पत्तिः।

3. सुपोधातुःप्रातिपदिकयोः– न्यक्षत्रियार्षञितो यूनि लुगणि ञोः इति सूत्रादत्र लुगन्वयः। धात्ववयवस्य प्रातिपदिकावयवस्य च सुपो लुक्स्यात्। यथा पूर्व अम् भूत सु इति स्थिते समासस्य प्रातिपदिकत्वेन तदवयवस्य सुपः अम् सु इत्यनयोरुभयोरपि

**६५१। अव्ययीभावः** ।२।१।५। अधिकारोऽयम्। **६५२। अव्ययविभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु** ।२।१।६। अव्ययमिति योगो विभज्यते। अव्ययं समर्थेन सह समस्यते सोऽव्ययीभावः॥ **६५३ । प्रथमानिर्दिष्टं समास उपसर्जनम्** ।१।२।४३। समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात्॥**६५४। उपसर्जनं पूर्वम्** ।२।२।३०। समासे उपसर्जनं प्राक्प्रयोज्यम्॥

---

तदवयवसुप्त्वाद्युगपल्लोपः पूर्व–भूत भूतशब्दस्य पूर्वनिपातः। भूतपूर्वप्रातिपदिकत्वात्पुनस्स्वाद्युत्पत्तिः। भूतपूर्वः न च पुनरपि सुपोधात्विति लोपश्शङ्क्यः लक्ष्ये लक्षणन्यायविरोधात्। ननु सुपेति सूत्रात्। सुबन्तं समर्थेन सुबन्तेन समस्यते इत्युक्तम्। इवस्याव्ययत्वेन असुप्त्वत्तेन सह समासो न स्यादित्याशङ्क्याह वृत्तिकारः। इवेन समासो विभक्त्यलोपश्च इति। ननु अव्ययादाप्सुप इति अव्ययादपि सुब्विहितो लुप्यत इति। प्रत्ययलोपे प्रत्ययलक्षणन्यायेन अव्ययस्यापि सुबन्तत्वादिवेन सह समासःसुपीति सूत्रादेव स्यादिति किमनेन वार्तिकेनेति चेत्सत्यं । तथाऽपि अव्ययविभक्तीत्यादिना इवस्याव्ययत्वात्समासस्स्यात्। सति च तस्मिन् समासे अव्ययमिति प्रथिमानिर्दिष्टत्वादिदस्य पूर्वनिपातस्स्यादिति परनिपातार्थमिदं वार्तिकमिति सुपोधात्विति समासावयवस्य ङसोविभक्तेरत्र लोपे प्राप्ते तद्वारणाय विभक्त्यलोपश्चेति जीमूतस्येव।

4. प्रथमानिर्दिष्टं– प्रथमाविभक्त्या निर्दिष्टं समासविधायकशास्त्रगत प्रथमान्तपदवाच्यमिति यावत्। यथा अव्ययमिति प्रथमान्तं तद्वाच्यन्तु स्वरादिनिपातादिकम्।

5. उपसर्जनं पूर्वम्। समास इत्यस्यात्राधिकृतस्य सप्तम्यन्तेन विपरिणामः। समासे समासघटकीभूतानां पदानां मध्ये उपसर्जनसंज्ञकं पदं प्राक्प्रयोज्यम्। यथा श्रुतार्थे तु समासे कृते वा क्रियमाणे वा चिकीर्षिते वा उपसर्जनं प्राक्प्रयोज्यमिति त्रेधार्थो विकल्पितः स्यात्। आद्ये पूर्व भूतः पूर्वभूत इति समासो भूत्वा पश्चात्पूर्वनिपातेन भूतपूर्व इति स्यात्। इदंञ्च विरुद्धं यत्परिनिष्ठितेऽपि समस्ते पदे पुनः प्रक्रियाविधिरिति द्वितीये तु पूर्व अम् भूत सु इति विग्रहवाक्य एव पूर्वनिपातः स्यात्। तथा च पूर्व अम्। भूत सु पूर्वनिपातः। भूत अम। पूर्व सु पश्चात्समासः। भूतपूर्वः भूतं पूर्वो भूतपूर्व इति विग्रहवाक्यं वक्तव्य स्यात्। तृतीयेऽपि तथैव वस्तुतस्तु पूर्वमिति पदस्य भूतपदेन सह समासे चिकीर्षिते सति– पूर्व अम् भूत सु इति विग्रहो भवति। अस्यापि विग्रहवाक्यस्य समाससंज्ञास्ति। सुबन्तं सुबन्तेन सह समस्यत इति शास्त्रबलादेव समासचिकिर्षानन्तरं पूर्वभूतपदयोरेकत्र समावेशस्य लाभात्। अन्यथा सुपोधात्वेति विग्रहस्याप्रातिपदिकत्वादसमासत्वेन

**६५५। एकविभक्ति चापूर्वनिपाते** ।१।२।४४। विग्रहे यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यात् न तु तस्य पूर्वनिपातः॥

---

स्वमोः कथं लुक्स्यात्? तस्मात् समासस्य प्रक्रियादशैव विग्रह इति सिद्धम्। सुब्लुगनन्तरं पूर्वभूत इति स्थिते पूर्वनिपातः भूतपूर्व पश्चात्सुबुत्पत्तिः भूतपूर्वः। इदं समासस्य परिनिष्ठितं रूपम्। तस्मात् समासे क्रियमाणे उपसर्जनं पूर्वमित्यर्थस्साधुः। समास प्रक्रिया दशायामिति यावत् उपसर्जनं पदं समासे पूर्वम् परिनिष्ठितसमासाधिकरणकः पूर्वावयवो भवति भवेदिति वा अर्थः ।

6. एकविभक्ति चा पूर्वनिपाते अधिकृतस्य समासपदस्यात्र क्रियमाणत्वदशा (प्रक्रियदशा) विवक्षितेति समासस्य विग्रह इत्यर्थः। एका नित्यता विभक्तिर्यस्य तदेकविभक्ति–विभक्तिमतः पदत्वाव्यभिचारादर्थात्पदमिति विशेष्यमस्य, विग्रहाधिकरणकं यन्नियतविभक्तिपदं तच्चोपसर्जनम् अपूर्वनिपाते नञः प्रसज्यप्रतिषेधोऽर्थः सप्तमीत्वतन्त्रा तदेतदाह पूर्वनिपातो नेति अर्थात्तस्यैकविभक्तिकपरस्यैव सन्निहितत्वात् उपसर्जनसंज्ञा विधानफलन्तु गोस्त्रियोरूपसर्जनस्येति ह्रस्वो वक्ष्यते। एकविभक्तीति किम् ? कुमारी वाचरन् ब्रह्मणः कुमारी। अत्र उपसर्जनह्रस्वो मा भूत्। अयं भावः यस्मादुत्पन्ना विभक्तिर्न लुप्यते तन्नियतविभक्तिकं श्रुयमाणविभक्तिकमिति यावत्। कुमारीशब्दादुत्पन्ना तु विभक्तिर्हल्दिना लुप्ता इति कुमारी पदं न नियतविभक्तिकम्। विग्रहे इति किम् ? ग्लौःअस्य ह्रस्वो माभूत्। यद्यपीदं गैरिति पदं नियतविभक्तिकम् तथापि विग्रहगतं न भवतीति न ह्रस्व उपसर्जनसंज्ञाऽभावादिति भावः। नन्वेवं रतिद्वितीये मदने प्रपन्ने इत्यत्र रतिद्वितीयो यस्य सः रतिद्वितीय इति अश्रूयमाणविभक्तिकद्वितीयापदान्तादुपसर्जनह्रस्वः इतिचेत् तर्हि नियतविभक्तिकं नाम प्रत्ययभिन्नमित्यर्थः। अव्ययस्यानियतविभक्तिकत्वात् सदृशस्त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु वचनेषु च सर्वेषु यन्नव्येति तदव्ययमिति श्रुत्या अव्ययस्य लिङ्गकारकसंङ्ख्याभावप्रतीतेः कारकं विभक्तिः यद्यपि अव्ययादपि चिराच्चिरेण चिरायेत्येवं रूपेण विभक्त्युत्पत्तिरस्ति तथाऽपि अपादाने पञ्चमीत्यादिना यस्मिन् यस्मिन् अर्थे या या विभक्तिर्विहिता तत्तदर्थबोधकत्वेन सा सा विभक्तिर्नाव्ययादुत्पद्यत इति न तत्र विभक्तिनियम इति बोध्यते। नन्वेवं कुमारीवाचरन् कुमारी हरीतक्याः फलानि हरीतक्यः इत्यादौ कुमार्यादिपदानामनव्ययत्वेन नियतविभक्तिकत्वमस्तीति ह्रस्वः स्यादेवेति चेन्मैवम्। विग्रह इति नियतविभक्तिकस्यापि विग्रहाधिकरणकस्यैव उपपसर्जन संज्ञाविधानात् समासेष्वेव विग्रहः न तु तद्धितादिष्विति भावः। एकविभक्ति चापूर्वनिपात इति सूत्रं मास्तु गोस्त्रियोरुपसर्जनस्येति सूत्रे समासपदानुवृत्तेः उपसर्जनमप्रधानं योगो शब्दः स्त्री

**६५६। गोस्त्रियोरुपसर्जनस्य** ।१।२।४८। उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात्। अव्ययीभावश्च ४५१ इत्यव्ययत्वम्॥

---

प्रत्ययान्तं च तदन्तस्य समासस्य ह्रस्वः स्यादित्यर्थः । तेन समास एव उपसर्जनह्रस्वः नेतरत्रेति कुमारीब्रह्मणः हारीतक्यः फलानीत्यादै न ह्रस्वः उपसर्जनत्वेप्यसमासत्वात् । न च पूर्वनिपातश्शंक्यः। शास्त्रीयस्य प्रथमानिर्दिष्टमित्युपसर्जनस्यैव पूर्वनिपातः। न त्वस्य कृत्रिमाकृत्रिमन्यायविरोधात्। न च गोस्त्रियोरिति सूत्रे उपसर्जनस्येत्यपि मास्तु समास इत्यनेनैव समासघटकीभूतस्य गोशब्दस्य वा स्त्रीप्रत्ययान्तस्य वा उपसर्जनत्वसंभवादिति वाच्यम्। रामस्य भार्या रामभार्या इति समासे अनुपसर्जनादपि भार्याशब्दाद्धस्वः स्यादिति। ननु ह्रस्वे जातेऽपि पुनरजाद्यतष्टापि दीर्घस्सिद्ध्यत्येवेति न दोष इति चेत्तर्हि सीतायाः पतिः सीतापतिरित्यत्र सीतापदस्य ह्रस्वः स्यात्। ननु तदन्तस्य ह्रस्वो विधीयते। न हीदं सीतापदं समासान्तावयवमिति न दोष इति चेत् तर्हि रामपत्नी इत्यत्र ह्रस्वः स्यात्। अमनुष्यजातित्वान्न पत्नीशब्दादितो मनुष्यजातेरिति दीर्घो न स्यात्। न च सर्वतोऽक्तिन्नर्थीदिति कालिः काली इतिवत् पत्नीति स्यादिति वाच्यम्। ङीपा स्त्रीत्वस्योक्तत्वेन पुनस्त्रीप्यव्ययोत्पत्त्यसंभवात्। तस्मात्- किमनेन एकविभक्ति चापूर्वनिपात इति सूत्रेण इति चेदुच्यते। विग्रहे नियतविभक्तिकत्वं नाम विग्रहवाक्ये यस्मिन् यत्पदं यद्विभक्त्यन्तं प्रयुज्यते तत्पदस्य तद्भिन्नविभक्त्यन्तत्वेन तस्मिन् विग्रहे प्रयोगाभावः। यथा अपदिशमुपगङ्गमित्यादौ दिशयोर्मध्यं गङ्गायास्समीपमित्येव वक्तव्यम्। न तु दिशाभ्यां मध्यं गङ्गायां समीपमित्यादि इति दिशापदं गङ्गापदञ्च विग्रहे नियतविभक्तिकम्। अनियत विभक्तिकत्वन्तु पूर्वशालाप्रिय इत्यादौ द्रष्टव्यम्। पूर्वाशालाप्रिया यस्येति पूर्वस्याश्शालायाः प्रिय इति च द्वेधा विग्रहः स्यात्। तेन शालापदस्य प्रथमाविभक्त्यन्तत्वं षष्ठ्यन्तत्वञ्चेत्यनियत विभक्तिकत्वेन न ह्रस्वः। प्रियशब्दस्तु अनियतलिङ्गमेव न त्वनियतविभक्तिकमिति प्रिया शब्देन विग्रहे ह्रस्वस्स्यादेव। न ह्यत्र शालापदस्य अप्रधान लक्षणमुपसर्जनत्वमस्ति बहुव्रीहौ शालाया एव प्राधान्येन भानसम्भवात् (शालाप्रिया यस्येति शालाया एव विशेष्यत्वात्)। नन्वेवमपि रामपत्नी अखट्वा इत्यादौ ह्रस्वो दुर्वार इति चेत् ।

7. गोस्त्रियोः। ह्रस्वस्स्यात्। अलोन्त्यस्येति अन्त्यस्यालो ह्रस्वादेशस्स्यात्। अव्ययीभावादिकारादव्ययमित्यादिभिः कृतास्समासा अव्ययीभावा इति व्यवह्रियन्ते। तस्य चाव्ययीभावसमासस्य अव्ययीभावश्चेत्यव्ययसंज्ञा। अव्ययादाप्सुप इति अव्ययीभावाद्विहितस्य सुपो लुकि प्राप्ते नाव्ययीभावादिति सुब्लुक्निषेधः।

**६५७ । नाव्ययीभावादतोऽम् त्वपञ्चम्याः** ।२ ।४ ।८३ । अदन्तादव्ययीभावात्सुपो न लुक् किंतु तस्य पञ्चमीं विना अमादेशः । दिशयोर्मध्ये अपदिशम् । 'क्लीबाऽव्ययं त्वपदिशं दिशोर्मध्ये विदिक्स्त्रिया' मित्यमरः ॥**६५८ । तृतीयासप्तम्योर्बहुलम्** ।२ ।४ । ८४ । अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात् । अपदिशम् । अपदिशेन । अपदिशम् । अपदिशे । बहुलग्रहणात्समुद्रमुन्मत्तगङ्गमित्यादौ सप्तम्या नित्यमम्भावः । विभक्तीत्यादेरयमर्थः ।

---

8. अत इति विशेषणम्। तेन तदन्तविधिः। तस्य तु सुपः अमादेशः स्यात्। न तु पञ्चम्या विभक्तेः यथा दिशयोर्मध्यमपदिशम्। अस्य नित्यसमासत्वेन अस्वपदविग्रहः अपेत्यव्ययम्। स्वपदं तस्य विग्रहवाक्ये प्रवेशो नेत्यर्थः। उत्तरत्र विभाषाधिकारादस्य नित्यत्वेन नित्यसमासोयमिति भावः। दिशाशब्दस्तु स्त्र्यधिकारोक्तटाबन्तः विग्रहे नियतविभक्तिकश्चेति। उपसर्जनस्त्रीप्रत्ययान्तः। अव्ययमिति सूत्रे अव्ययस्य प्रथमा-निर्दिष्टत्वेन अपेत्यव्ययस्यात्र उपसर्जनत्वेन पूर्वनिपातः। अप-दिशा। ङोस् इति स्थिते सुपोधात्विति समासावयवस्य ङोसो लुक्-अपदिशा गोस्त्रियोरिति उपसर्जनस्त्रीप्रत्ययान्तं यद्दिशापदं तदन्तं यत्प्रातिपदिकम् अपदिशा तस्यान्त्यस्यातः आकारस्य ह्रस्वः आन्तरतम्यादकारः अपदिश। पश्चात्समासत्वात्सुबुत्पत्तिः। अपदिश सु तस्य सोरव्ययादिति लुकि प्राप्ते नाव्ययीभावादिति लुगभावः। अम् च। अपदिश अम्। अमि पूर्वः अपदिशम्। ङौङसादिष्वप्यपदिशमित्येव रूपम्। पञ्चम्यान्तु अपदिशादपदिशाभ्यामपदिशेभ्य इति। तृतीयासप्तम्योस्तु विशेषो वक्ष्यते। तृतीयासप्तम्योर्बहुलमिति ।

9. बहुलग्रहणात्। क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः । क्वचिद्विभाषा क्वचिदन्यदेवेति बाहुळकस्य चतुर्विधत्वेन क्वचित्प्रवृत्तिर्नित्यैवेति। उन्मत्तगङ्गम्। देशविशेषोऽयं शब्दः पा । अन्यपदार्थे च संज्ञायामिति अव्ययीभावसमासो वक्ष्यते सोऽव्ययीभावः। स समासोव्ययीभावसंज्ञकः स्यात्। हरौ इति लौकिक विग्रहवाक्यमिदम्। लौकिक-विग्रहवाक्ये एव नित्यसमासानामस्वपदविग्रहन्यायः। स्वपदन्नाम समसनक्रियायां कर्तृ यथा अव्ययं समस्यते समसनक्रियां प्रत्यव्ययं कर्तृ अधीत्यत्राव्ययं सुबन्तेन हरिणा सह समस्यमानं सत् स्वपदेन अधीतिपदेन विग्रहं न सहते। किन्तु तदर्थबोधकेनान्येनेतीत्यादिना। अलौकिकविग्रहवाक्ये तु स्वपदस्यैव प्रवेशः। पूर्वनिपाताद्यर्थं तस्य प्रक्रियाकाले अवश्यस्थातव्यत्वात्। ननु हरि ङि अधि इत्यलौकिकविग्रहवाक्ये हरिनिष्ठाधिकरणत्वस्य अधीति निपातेनाभिहितत्वादधिकरणे चेति सप्तमी न स्यादेवेति हरि अधि इत्येतावदेव अलौकिकविग्रहवाक्यं न तु तत्र ङेः प्रवेशः स्यात्। अविधानादित्यत आह

विभक्त्यर्थादिषु वर्तमानमव्ययं सुबन्तेन सह समस्यते सोऽव्ययीभावः। विभक्तौ तावत्। हरौ इत्यधिहरि। सप्तम्यर्थस्यैवात्र द्योतकोऽधिः। हरि ङि अधि इत्यलौकिकं विग्रहवाक्यम्। अत्र निपातेनाभिहितेऽप्यधिकरणे वचनसामर्थ्यात्सप्तमी॥६५९। **अव्ययीभावश्च** ।२।४।१८। अयं नपुंसकं स्यात्॥ 'ह्रस्वो नपुंसके प्रातिपदिकस्य ३१८'॥ गोपायतीति गाः पातीति वा गोपाः। तस्मिन्नित्यधिगोपम्। समीपे। कृष्णस्य समीपमुपकृष्णम्। समया ग्रामम्, निकषा लङ्काम्, आराद्वनादित्यत्र तु नाव्ययीभावः। 'अभितःपरितः'-'अन्यारात्-५९५' इति द्वितीयापञ्चम्योर्विधानसामर्थ्यात्। मद्राणां समृद्धिः सुमद्रम्। यवानानां व्यृद्धिर्दुर्यवनम्। विगता ऋद्धिर्व्यृद्धिः। मक्षिकाणामभावो निर्मक्षिकम्। हिमस्यात्ययोऽतिहिमम्। अत्ययो ध्वंसः। निद्रा संप्रति न युज्यत इत्यतिनिद्रम्। हरिशब्दस्य प्रकाश इतिहरि। विष्णोः पश्चादनुविष्णु। पश्चाच्छब्दस्य तु नायं समासः। ततः पश्चात्स्रंस्यते ध्वंस्यत इति भाष्यप्रयोगात्। योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः।अनुरूपम्।रूपस्य योग्यमित्यर्थः। अर्थमर्थं प्रति प्रत्यर्थम्। प्रतिशब्दस्य वीप्सायां कर्मप्रवचनीय-संज्ञाविधानसामर्थ्यात्तद्योगे द्वितीयागर्भं वाक्यमपि! शक्तिमनतिक्रम्य यथाशक्ति। हरेः सादृश्यं सहरि। वक्ष्यमाणेन सहस्य सः। ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम्। चक्रेण युगपदिति विग्रहे॥

---

वचनसामर्थ्यादिति। अयं भावः सुबन्तेन सह समस्यत इत्युक्तत्वेन हरिपदात्सुबवश्यं स्थातव्यः। अन्यथा असुबन्तत्वे समासाभावप्रसङ्गात्। सा च सुब्विभक्तिरत्र अधिना सप्तम्यर्थेन सह एकार्थीभावाय सप्तम्यैव ग्राह्येति ।

10. अव्ययीभावश्च, द्वितीयाध्याये चतुर्थपादे अष्टादशसूत्रमिदम्। २-४-१८. इत्यङ्केन कौमुद्यां लिखितव्ये प्रामादिकमलेखनं सनपुसकमिति पूर्वसूत्रान्नपुंसकपदानुवृत्तिः। तदेतदाह। अयं नपुंसकं स्यादिति। अव्ययीभावश्चेति प्रथमाध्याये प्रथमपादे एकचत्वारिंशत्सूत्रं चास्ति। तदव्ययेषु व्याख्यातमिति बोध्यम्। अधिगोपं गुपू रक्षण इति धातो र्गुपूधूपेत्यायप्रत्यये गोपायतीति रूपं तस्य गवोपपदकात्पातेर्वा क्विपि गोपाः इति विश्वपा वद्रूपं । गोप इति कौमुदी पाठस्तु प्रामादिकः। ह्रस्वो नपुंसक इति ह्रस्वविधानवैयर्थ्यात्। गोपायतेः क्विपि गोप इति ह्रस्वान्तरूपासिद्धेश्च। गोपाशब्दात् ङौ अतोधातोरित्यालोपे गोपी इति अधिगोपं लौकिक विग्रहवाक्यं गोपि इति। अलोकिके विग्रहवाक्ये गोपा ङि अधि इति स्थिते सुब्लुक्पूर्वनिपातः। अधिगोपा ह्रस्वो नपुंसके अधिगोप-सु-नाव्ययीभावादित्यम्। अमिपूर्वः, अधिगोपं समयग्रामं निकषा लंकां। अभितः परितः समया, निकषा हा प्रतियोगेपीति द्वितीया। ग्रामं समया, लंकां निकषेति। नन्वेवं समयानिकषा आरात् इति

समीपार्थबोधकमव्ययत्रयमपि उपवत्सुबन्तेन सह समस्यत्वित्यत आह। नाव्ययीभव इति न च समस्तत्वे आराद्वनमिति स्यादित्यमादेशाभाव एव पृथक्पदत्वे ज्ञापकमिति वाच्यम्। नाव्ययीभावादतोम्त्वपञ्चम्या इति पञ्चमीविभक्तेरमादेशाभावेन आराद्वनादिति पञ्चम्यन्तमव्ययीभावसमासः स्यादेवेति तस्य च शङ्का सुसंगतैव। अव्ययीभावेनेत्युक्तं तत्र हेतुमाह विधान सामर्थ्यादिति। अभितः, परितः, समया, निकषा हा प्रतियोगेपीति वार्तिकेन द्वितीया विधानं अन्यारादिति पञ्चमीविधानञ्च व्यर्थ स्यादित्यर्थः। अयम्भावः। समीपार्थवृत्त्यव्ययानां समया निकषा आरादित्येषां योगे यद्यव्ययीभावस्स्यात्तर्हि तस्य नित्यत्वेन न कदाऽपि तद्योगे समासभावः। तथा सति तु समासे सुपो धात्विति समासावयवस्य सुपः द्वितीयायाः पञ्चम्याश्च लुक्स्यादिति किमर्थ द्वितीयापञ्चमीविधानम्। एवं व्यर्थं सत्तेषां योगे न समास इति ज्ञापयतीति ऋद्धिः समृद्धिः विगता ऋद्धिः व्यृद्धिः समृद्धेरिति भाव इत्यर्थः। दुर्यवनं यवनानां ऋद्धिर्नास्तीत्यर्थः फलितः। यवनानां ऋद्ध्यभाव इति तु वाच्योत्थः अर्थाभाव इत्यस्योदाहरणं निर्मक्षिकमिति। ननु अभाव इत्यनेनैव निर्मक्षिकेत्यव्ययीभाव सिद्धौ। अर्थाभाव इति किम्। अर्थस्य संसर्गस्य अभावः अर्थाभावः इत्यर्थसिद्ध्यर्थमर्थग्रहणम्। तस्मान्निर्मक्षिकमित्यस्य मक्षिकाणां संसर्गाभावोऽर्थः। अत्ययस्य नार्थाभावेन गतार्थता। अर्थाभावस्य संसर्गविरोधित्वादत्ययस्य वस्तुविरोधित्वाच्च। अर्थाभावस्संसर्गाभावः अत्ययः प्रध्वंसाभाव इति भेद इति भावः। असंप्रत्यर्थे संप्रति न युज्यते इत्यस्मिन्नर्थे विद्यमानमव्ययं सुपा समस्यते, असंप्रति इति सौत्रपदस्य तु, न संप्रति असंप्रति। नञोऽत्र न केवलं प्रतिषेधः, किन्तु युजक्रियाप्रतिषेधोर्थः। संप्रतिशब्दस्य अधिकरणवाचकत्वेन निषेधप्रतियोगिकान्वयासम्भवात् । अयम्भावः न घटःअघट इत्यत्र घट प्रतियोगिको भाव इति यथार्थः तथा न भूतले घट इत्यत्र भूतलाधिकरणको घटाभाव इत्येवार्थः न तु पुनः भूतलप्रतियोगिकाभावो न भूतले तदभिन्नो घटः न भूतले घट इत्यर्थ प्रतीतिर्भवेत् यत्प्रतियोगिकाभावो नञा विवक्ष्यते तेनैव प्रतियोगिनो नञ् समस्यते, न तु यदधिकरणकाभावस्तेनाधिकरणेन इति संप्रति प्रतियोगिको नायं निषेधः । किन्तु सम्प्रत्यधिकरणक एव, सम्प्रतेस्सप्तम्यर्थान्वयत्वात् । तथा च संप्रत्यधिकरणकोऽयं निषेधः यत्किञ्चित्प्रतियोगिको भवितुमर्हति, निषेधस्य प्रतियोगिपूर्वकत्वात् न च प्रतियोगी, अत्र अधिकरणस्य क्रियाधारत्वेन योग्यत्वात्क्रियैव भवितुमर्हति। सा च क्रियात्र युजिक्रिया विवक्षिता। सांप्रतमित्यादौ संप्रतिना सह युजिक्रियान्वयस्यैव दृष्टत्वात्। तस्मात्संप्रत्यधिकरण युजिक्रिया प्रतियोगिकप्रतिषेधोर्थः, असंप्रतिपदस्य यद्यपि असांप्रतेति सूत्रिते अक्लेशेनैव यथोक्तार्थसिद्धिः तथापि लाघवादसम्प्रतीत्युक्तम्। अतिनिद्रम् अतिरित्यस्यां प्रतार्थकमव्यं निद्रापदेन समासः। सूत्रे शब्दप्रादुर्भाव इत्यस्य

शब्दप्रकाशोऽर्थः । शब्दप्रकाशेऽर्थे विद्यमानमव्ययमिति यावत् । यद्यपि इतेरव्ययस्य प्रकाश एवार्थः तथाऽपि प्रकाशार्थकमव्यं येन समस्यते स शब्दपरशब्द एव ग्रह्यः न त्वर्थपर इति द्योतनाय शब्दप्रकाश इति । एतदर्थमेव प्रदुर्भाव इत्यनुक्त्वा सूत्रे शब्दप्रादुर्भाव इत्युक्तम्। यथा हरेः प्रकाशः इति हरि, हरेरित्यस्य विष्णोरिति नार्थः किन्तु हरि शब्दस्येति। अत एव हरिशब्दस्य प्रकाश इति हरीत्युक्तम् अत्र सुपो धात्विति समासावयवसुब्लुगनन्तरं समासादुत्पन्नस्य सुपःअव्ययादिति लुक् । नाव्ययीभावादिति तु न तस्य लुको निषेधश्शङ्क्यः। अत इत्यदन्तस्यैव लुङ्गिनषेधामादेशयोरुक्तत्वात्, वीप्साया अपि यथार्थत्वेन वीप्सार्थक मव्ययं समस्यते। सुपेत्यस्योदाहरणमाह (वृक्षं वृक्षं प्रति प्रतिवृक्षम्) अर्थमर्थं प्रति प्रत्यर्थमिति। अत्र लौकिकविग्रहवाक्ये प्रतिग्रहणं प्रामादिकम्। अर्थमर्थं प्रत्यर्थ मित्येव पाठः, नित्यसमासे- ष्वस्वपदविग्रहात् । न च अर्थमर्थं परि प्रत्यर्थमिति पठितव्यमिति वाच्यम्, नित्यवीप्सयोरिति वीप्सायां द्योत्ये (अर्थ) पदस्य यद्विर्वचनं विहितं तस्यैव वीप्सार्थकप्रतिपदस्य पर्यायत्वेन लौकिकविग्रहवाक्ये पठितत्वात् अन्यथा विग्रहवाक्यत्तस्यार्थमर्थप्रतीति द्वितीयार्थपदस्य लोपो नास्त्येवेति प्रत्यर्थार्थमिति स्यात्। ननु प्रत्यर्थमिति समासे वीप्सायां द्विर्भावः कुतो न स्यादिति चेत् उच्यते वीप्सायां द्योत्येऽपि द्विर्वचनं विहितम्। प्रत्यर्थमित्यत्र वीप्सायाः प्रतिना उक्तत्वेन अद्योत्यत्वान्न द्वित्वमिति। ननु विग्रहवाक्ये प्रतियोगाभावे अर्थमर्थमिति द्वितीया न स्यात्। लक्षणेत्थंभूतेति वीप्साविषये प्रतिपद्यमानां कर्मप्रवचनीयसंज्ञाविधानेन कर्मप्रवचनीययुक्त इति अर्थपदयोर्द्वितीयाविधानात्। तस्मात् अर्थमर्थम्प्रति प्रत्यर्थमिति पाठ एव निर्दोष इति चेन्मैवम्। वृक्षं वृक्षं सिञ्चतीति कर्मप्रवचनीयायोगेऽपि द्वितीयाया श्रुतत्वात्। ननु तत्र प्रत्याद्ययोगेऽपि सेचनक्रियया आप्तमिष्यमाणतमत्वेन कर्मत्वात् वृक्षे द्वितीया सिद्धैव। अर्थमर्थमित्यत्र तु क्रियायोगाभावान्न स्यादिति चेत् तर्हि ग्रामो ग्रामो रमणीय इतिवदर्थमर्थमिति प्रथमान्तमिति वेद्यम्। अर्थस्य धनवाचकत्वे नपुंसकत्वात्सोरम्। तथा श्रुतपाठे तु अस्वपदविग्रह न्यायव्याघातः। अर्थपदलोपाभावश्चेति दोषद्वयं बोध्यम्। यद्वा गम्यमानया गृह्णत्याद्यया क्रियया ईप्स्यमानत्वादर्थस्य कर्मत्वेन द्वितीया संपाद्या प्रत्यर्थ गृह्णतीत्यादिस्थले अर्थमर्थम्प्रति गृह्णातीत्यादि वाक्यमपि साध्वेव वक्तव्यम्। इत्याह तद्योगे द्वितीया गर्भ वाक्यमपि इति। तस्य प्रत्यादेर्योग इत्यर्थः। तत्र हेतुः। विधानसामर्थ्यादिति। प्रतियोगे द्वितीयार्थ हि प्रतेः कर्मप्रवचनीयसंज्ञा विहिता। सति तु समासे समासावयवस्य सुपः (प्रकृते द्वितीयायाः लुक्स्यादिति। द्वितीयाविधानं व्यर्थमिति भावः। वस्तुतस्तु अर्थमर्थं प्रति प्रत्यर्थमित्येव

**६६०। अव्ययीभावे चाकाले** ।६।३।८१। सहस्य सः स्यादव्ययीभावे न तु काले। सचक्रम्। काले तु सहपूर्वाह्णम्। सदृशः सख्या ससखि। यथार्थत्वेनैव सिद्धे पुनः सादृश्यग्रहणं गुणभूतेऽपि सादृश्ये यथा स्यादित्येवमर्थम्। क्षत्राणां संपत्तिः सक्षत्रम्। ऋद्धेराधिक्यं समृद्धिः। अनुरूप आत्मभावः संपत्तिरिति भेदः। तृणमप्यपरित्यज्य सतृणमत्ति। साकल्येनेत्यर्थः। न त्वत्र तृणभक्षणे तात्पर्यम्। अन्ते। अग्निग्रन्थपर्यन्तमधीते साग्नि॥

---

साधुः पाठः। (परिप्रत्यर्थमिति पठितव्यम्।) न चात्रास्वपदविग्रहव्याघातः। पक्षे प्रतियोगे द्वितीयागतवाक्यस्यैवेति नित्यसमासत्वात् (प्रतेरग्रहणात्।) न चार्थपदस्य द्वितीयस्य लोपो न स्यादिति वाच्यम्। अस्य लौकिकविग्रहवाक्यत्वात्। लौकिकविग्रहे प्रतिप्रमुखयोगे एव पूर्वस्य द्वितीयाविभक्त्यन्तस्य द्वित्वाङ्गीकारात् वीप्साविषये हि प्रतियोगे पूर्वस्य द्वित्वं विहितं। लक्ष्यमित्थं भूतेति सूत्रात्। अलौकिकविग्रहवाक्यन्तु अर्थ अम् प्रति इत्येव। न चात्र द्विर्वचनं स्यादिति शङ्क्यम्। प्रतिनैतवीप्साया उक्तत्वेन अद्योत्यत्वात् पदार्थानतिवृत्तिः पदार्थस्य शक्त्यादेरनतिवृत्तिरनतिप्रपणं तस्मिन्नर्थे विद्यमानमित्यर्थः। अनतिवृत्तिरित्यनेनैवालं पदार्थग्रहणन्तु स्पष्टार्थम्। यौगपद्यतैककालः।

11. अव्ययीभावे चाकाले, सहस्य सस्संज्ञायामिति सूत्रात्सहस्य स इत्यस्यात्रान्वयः। न तु काले कालार्थबोधके त्वव्ययीभावे न स्यात्। न कालः अकालः तस्मिन्नकाले प्रसज्यप्रतिषेधोर्थः। सदृशस्सख्या ससखि। अत्र सादृश्यस्य न प्राधान्यं, किन्तु सादृश्यवतस्सख्युरेव। हरेस्सादृश्यं सहरि इत्यत्र तु सादृश्यस्यैव प्राधान्यम्। अव्ययीभावे अव्ययार्थप्राधान्यस्य सहजत्वात्। अव्ययस्य सहेत्यादेर्योर्थस्सादृश्यं तस्य प्राधान्य एव अव्ययीभावस्यात्र त्वप्राधान्य इति गुणभूते सादृश्येऽपि समासार्थं पुनस्सादृश्यग्रहणम्। सिद्धस्य पुनर्विधाने विशेषस्यावश्यद्योत्यत्वात्स च विशेषोऽत्र एवं रूप इति भावः। सक्षत्रम् ननु समृद्धीत्यनेनैव सिद्धे सम्पत्तेर्ग्रहणं व्यर्थं। समृद्धिसंपत्त्योरेकार्थकत्वादित्याशङ्कायां हेतोरसिद्धिमाह भेद इति आत्मभावस्स्वभावः। सक्षत्रमित्यस्य क्षत्राणामनुरूपस्त्वभावोर्थः। साकल्यस्योदाहण्। सतृणम्। साकल्यार्थकमव्ययं सहेति तस्य स भावः। तृणमप्यपरित्यज्येति विग्रहवाक्यम्। अप्यपरित्यज्येत्यस्य साकल्येनेत्यर्थः। अन्ते सूत्रस्थान्तग्रहणस्येदमुदाहरणमित्यर्थः। साग्नि अधीत इति क्रियापदन्तु विग्रहवाक्ये अर्थयोग्यतासिद्ध्यर्थमुपनिबद्धम्। अग्निग्रन्थपर्यन्तं साग्नि इत्येव प्रकृतोपयोगि वचनम्। एतावता अव्ययं विभक्तीति सूत्रव्याख्यानग्रन्थो विवृतः। अत्रेदं बोध्यम्। अव्ययमिति योगविभागाकरणे समीहितभिन्नार्थवृत्तीन्यव्ययानि न समस्यन्त इति अपरिशमित्याद्यव्ययी-भावासिद्धिरिति। ननु अव्ययमित्येव सूत्रमस्तु भक्त्यादिग्रहणं मास्तु तेन अविशेषात्

**६६१। यथाऽसादृश्ये** ।२।१।७। असादृश्ये एव यथाशब्दः समस्यते। तेनेह न। यथा हरिस्तथा हरः। हरेरुपमानत्वं यथाशब्दो द्योतयति। तेन सादृश्य इति वा यथार्थ इति वा प्राप्तं निषिध्यते॥**६६२ यावदवधारणे २।१।८।** यावन्तश्श्लोकास्तावन्तोऽच्युतप्रणामा यावच्छ्लोकम्। **६६३। सुप्प्रतिना मात्रार्थे** ।२।१।९। शाकस्य लेशः शाकप्रति। मात्रार्थे किम्। वृक्षं वृक्षं प्रति विद्योतते विद्युत्॥

---

मध्याद्यर्थबोधकमप्यव्ययं समस्यत एवेति चेत्सत्यम्। विभक्त्यर्थादिषु विद्यमानमव्ययं समस्यतां तद्भिन्नं क्वचित्समस्यतामिति, योगाविभक्ति इति विद्धि। योगविभागाभावे अपदिशमिति न स्यात्। अव्ययमित्येतावन्मात्रं सूत्रिते तु दिशोर्मध्यमिति समासस्य वैकल्पिकत्वेन वाक्यं न सिद्ध्चेत्। नित्यसमासत्वात्।

12. यथा, सादृश्ये अत्र नञ् प्रश्लेषाभावे योग्यताद्यर्थाभिधायकत्वे यथेत्यव्ययं न समस्येत, अस्य सूत्रस्य नियमार्थत्वात्। सादृश्य एव समस्यते। न त्वन्यत्रेति अत आह असादृश्य इति। ननु योग्यतावीप्सापदार्थानतिव्यतिरिक्तसादृश्यासादृश्यानि यथार्था इत्यसादृश्यस्यापि यथार्थत्वमभ्युपगम्य सूत्रमिदं त्यज्यतामत आह एवेति। अस्य सूत्रस्य नियमार्थकत्वादिति भावः। कोऽसौ नियमः यथेत्यव्ययम् यदि समस्यते तर्हि असादृश्यार्थकमेवेति नियमस्य फलमाह। तेन सादृश्य इत्यादिना सादृश्यार्थकत्वेन योग्यतादि यथार्थकत्वेन च यथेत्यव्ययस्य सादृश्ये समानप्राप्ता निषेध इति भावः। ननु यथाशब्दस्य असादृश्यार्थकत्वं क्वापि न श्रुतं न वा कौमुद्यामुदाहृतमिति चेत्। तर्हि अन्यथा व्यख्यायते सूत्रमिदम्। न सादृश्यमसादृश्यं नञः पर्युदासोर्थः। सादृश्यभिन्नमित्यर्थः। असादृश्ये सादृशयभिन्नेऽर्थे अर्थाद्योग्यता वीप्सापदार्थानतिवृत्तिष्वर्थेषु सिद्धस्य पुनर्विधानान्नियमसूत्रमिदमिति ज्ञापनाय एवेति। नियमस्तु योग्यताद्यर्थचतुष्टये यदि यथाशब्दस्य समासस्तर्हि योग्यतादि त्रिक एव न तु सादृश्य इति। न चैवं यथाशब्दस्य सादृश्यमप्यर्थ इति यथार्था इत्यत्र वचनं व्यर्थमिति वाच्यम्। सादृश्यार्थकस्याव्ययस्य यथाभिन्नस्य समाससम्भवात्। वस्तुतस्तु असादृश्य इति प्रसज्यप्रतिषेधः। यथाशब्दः सादृश्येन समस्यत इत्यर्थः। निषेधसूत्रमिदम् इति सुष्ठु। सादृश्यार्थकस्य यथाशब्दस्य समासाभावे उदाहरणं यथा हरिरिति सति तु समासे यथाहरि इति स्यात् । उपमानत्वम् सादृश्यम्। ननु निषेधस्य प्राप्तिपूर्वकत्वात्कथमत्र प्राप्तिस्समासस्येत्यत आह सादृश्य इति वा यथार्थ इति वा प्राप्तमिति।

13. यावदवधारण समस्यत इत्यर्थः। यावन्तः श्लोका यावच्छ्लोकम्। यावन्तोच्युतप्रणामा इति तु अवधारणद्योतनाय कौमुद्यामुपनिबद्धं न तु विग्रहवाक्ये तत्प्रवेशः।

**६६४। अक्षशलाकासंख्याः परिणा** ।२।१।१०। द्यूतव्यवहारे पराजय एवायं समासः। अक्षेण विपरीतं वृत्तम् अक्षपरि। शलाकापरि। एकपरि॥**६६५। विभाषा** ।२।१।११। अधिकारोऽयम्। एतत्सामर्थ्यादेव प्राचीनानां नित्यसमासत्वम्। सुप्सुपेति तु न नित्यसमासः। अव्ययमित्यादिसमासविधानाज्ज्ञापकात्॥**६६६। अपपरिबहिरञ्चवः पञ्चम्या** ।२।१।१२। अपविष्णु संसारः अप विष्णोः। परिविष्णु परि विष्णोः। बहिर्वनम् बहिर्वनात्। प्राग्वनम् प्राग्वनात्॥**६६७। आङ्मर्यादाभिविध्योः** ।२।१।१३। एतयोराङ् पञ्चम्यन्तेन वा समस्यते सोऽव्ययीभावः। आमुक्तिसंसारः आ मुक्तेः। आबालं हरिभक्तिः आ बालेभ्यः॥ **६६८। लक्षणेनाभिप्रती आभिमुख्ये** ।२।१।१४। आभिमुख्यद्योतकावभिप्रती चिह्नवाचिना सह प्राग्वत्। अभ्यग्नि शलभाः पतन्ति अग्निमभि। प्रत्यग्नि अग्निं प्रति॥

---

14. सुप्रतिना मात्रार्थे। मात्रार्थे वर्तमानेन प्रतिना सह सुप्समस्यते शाकस्य लेशःशकप्रति प्रथमानिर्दिष्टत्वात्सुबुपसर्जनत्वेन पूर्वं प्रयुक्तम्।

15. लक्षशलाका सङ्ख्याः, परिणां लक्षपदं शलाकापदं सङ्ख्यावाचकं पदञ्च परिणा समस्यते द्यूतव्यवहारे पराजय एवायं समासः। अयं नियमो न मूलाल्लब्धः। किन्तु भाष्यादेरिति बोध्यम्। अक्षेण विपरीतं वृत्तमक्षपरि अक्षं यथा जयकाले प्रवृत्तमासीत्तथाद्य नेति पराजये चिह्नमिदम्।

16. अप परि बहिरञ्चवः पञ्चम्या । एते पञ्चम्यन्तेन वा समस्यन्ते।

17. आङ् मर्यादाभिविध्योः। एतयोरर्थयोर्वर्तमान आङ् पञ्चम्यन्तेन वा समस्यते। पञ्चम्या इति प्राक्सूत्रादत्रानुवृत्तिः। विभाषा समास इति अधिकारौ अव्ययीभाव इत्यप्यधिकारः। तेन सोऽव्ययीभाव इति सिद्धम्। सः समासः। पूर्वसूत्रेष्वपि सोऽव्ययीभाव इति वक्तव्यमेव। समासपक्षे आमुक्ति। समासाभावपक्षे आमुक्तेरिति पदद्वयं मुक्तिं मर्यादीकृत्येत्यर्थः। आबालं बालानभिव्याप्येत्यर्थः। ईषदर्थे क्रियायोगे तु आङो न समासः ।

18. लक्षणेनाभिप्रती आभिमुख्ये। अत्र पञ्चम्या इति न संबध्यते समासाभावपक्षे समासपक्षेऽपि विग्रहवाक्ये अभिरभागे लक्षणेत्थंभूतेति च कर्मप्रवचनीयसंज्ञकयोरभिप्रत्योर्योगे द्वितीयाविधानात् अभ्यग्नि अग्निशलभयोर्लक्ष्यलक्षणभावसंबन्धः स्वस्मिन्पतन्तः पक्षिणश्शलभा इत्यग्निर्लक्षयतीत्यग्निरत्र लक्षणम्। एते शलभा भवन्ति । अग्निमभिपतत्त्वाद्व्यतिरेकेण यथा भृङ्गादय इति प्रयोगे च अग्न्यभिपतनस्य शलभत्वं प्रति हेतुत्वादग्निशलभानां लक्षणमिति बोध्यम्।

**६६९। अनुर्यत्समया** ।२।१।१५। यं पदार्थं समया द्योत्यते तेन लक्षणभूतेनानुः समस्यते सोऽव्ययीभावः। अनुवनमशनिर्गतः। वनस्य समीपं गत इत्यर्थः॥

**६७०। यस्य चायामः** ।२।१।१६। यस्य दैर्ध्यमनुना द्योत्यते तेन लक्षणभूतेनानुः समस्यते। अनुगङ्गं वाराणसी गङ्गाया अनु। गङ्गादैर्घ्यसदृशदैर्घ्योपलक्षितेत्यर्थः॥

**६७१। तिष्ठद्गुप्रभृतीनि च** ।२।१।१७। एतानि निपात्यन्ते। तिष्ठन्त्यो गावो यस्मिन्काले स तिष्टद्गुः दोहनकालः। आयतीगवम्। इत्यादि। इह शत्रादेशः पुंवद्भावविरहः समासान्तश्च निपात्यते॥

---

19. अनुर्यत्समया, यदिति नपुंसकम्। द्वितीयाविभक्त्यन्तम्। समयेति समीपार्थेऽव्ययम्। समया निकषा हा प्रतियोगेपीति यच्छब्दस्य द्वितीया। यदिति नपुंसकन्तु वस्तुविवक्षया यत्समया यद्वस्तु निकषा यद्वस्तुनस्समीपमिति यावत्। प्रथमान्तमिदं द्योत्यते। अर्थादनुनैवम्। तेन लक्षणेन वस्तुना अनुस्समस्यते, यथा अनुवनं समीपद्योतकमव्ययमिदमनुरिति (मन्विति) वनन्तु अशनेर्लक्षणं वनमशनं लक्षयतीति हेतोः वनस्य समीपमिति विग्रहवाक्यम्। तेन लक्षणभूतस्य वनस्य समीपमेवानुर्द्योतयतीति वनेन सह अनोस्समासः।

20. अनुगङ्गम्, गङ्गामनु इति विग्रहवाक्यम्। समासाभावपक्षे वाक्यञ्च लक्षणेत्थंभूतेति अनोः कर्मप्रवचनीयत्वात्तद्योगे द्वितीया। अनुगङ्गमित्यस्य गङ्गादैर्घ्यमर्थः। आयामोऽनुना द्योत्यत इत्यर्थः। तस्य वाराणस्या सह समानाधिकरण्यासम्भवात्। तत्सदृशदैर्घ्योपलक्षिते लक्षणा। इदमेवाभिसन्धायाह। गङ्गादैर्घ्यसदृशदैर्घ्योपलक्षितेत्यर्थ इति। वाराणसीति कर्तृपदं शेषः ।

21. आयतीगवम्। आयन्ति गावो यस्मिन्काले स आयतीगवम्। लटश्शतृशानचावप्रथमा। समानाधिकरण इति शत्रादेशः। प्रथमा समानाधिकरणे तु अत्र तिष्ठद्गु इत्यत्र च निपातनादेव प्राप्नोति शत्रन्तादुन्नेभ्य इति ङीपि आच्छीनद्योरिति नुम्विकल्पः। तिष्ठती आयती तिष्ठत्यो गावो यस्मिन् स तिष्ठद्गु। अत्र पुंवत्कर्मधारयजातीयदेशीयेष्विति पुंवद्भावः। यथाप्राप्तः एवं आयत्यो गावो यस्मिन् स आयतीगवमित्यत्रापि पुंवद्भावे प्राप्ते निपातनात्तन्निषेधः। अन्यथा आयद्गवमिति वदेदिति भावः। गोस्त्रियोरिति ह्रस्वे यथा तिष्ठद्गु इति तथा आयद्गु इति भवितव्ये अनुगवमायाम इतिवन्निपातनात्समासान्ताच्प्रत्ययः। आयतीगवम्। इदमेवाह । इह शत्रादेश इत्यादिना तिष्ठद्गु आयतीगवमित्युभयत्रापि शत्रादेशो निपात्यते। आयतीगवमित्यत्र पुंवद्भावविरहसमासान्तश्च निपात्यत इत्यर्थः यद्वा इह सूत्रे इत्यर्थः।

**६७२। पारे मध्ये षष्ठ्या वा** ।२।१।१८। पारमध्यशब्दौ पष्ठ्यन्तेन सह वा समस्येते। एदन्तत्वं चानयोर्निपात्यते। पक्षे षष्ठीतत्पुरुषः। पारेगङ्गादानय गङ्गापारात्। मध्येगङ्गात् गङ्गामध्यात्। महाविभाषया वाक्यमपि। गङ्गायाः पारात्। गङ्गाया मध्यात्॥**६७३। संख्या वंश्येन** ।२।१।१९। वंशो द्विधा विद्यया जन्मना च। तत्र भवो वंश्यः। तद्वाचिना सह संख्या वा समस्यते।

---

22. पारे गङ्गात् गङ्गायाः पारे गङ्गमिति न स्यात्। सुपो धात्विति सुब्लुकि, पारगङ्गमित्येव स्यादित्येतदर्थमेदन्तत्वमनयोर्निपातितमिति कल्पयितुं न शक्यते। तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक्संभवेन निपातनस्य वैयर्थ्यात्। तस्मात् गङ्गायाः पारं पारे गङ्गमित्येतदर्थमेदन्तत्वनिपातनम्। पारेगङ्गशब्दाद्विहितायाः पञ्चम्यास्तु नाव्ययीभावादिति न लुगवकाशः अपञ्चम्या इति निषेधात्। तेन पारेगङ्गादित्येव पञ्चमीतरविभक्तिषु पारेगङ्गमिति तृतीयासप्तम्योस्तु पारेगङ्गेन पारेगङ्गे चेत्यपि विकल्पेन रूपद्वयम्। एवमेव मध्येगङ्गात् आनेयमित्यस्यावधिभूतत्वेन नापादानत्वात्पञ्चमी। महाविकल्पेन विभाषासूत्रेणेत्यर्थः। अत्रेदं बोध्यम्। विभाषेति महाविकल्पेन समासस्तदभावश्च प्राप्तः। समासाभाव एव हि वाक्यम्। एवं पारेगङ्गात् गङ्गायाः पारादिति रूपद्वयं सिद्धम्।

अत्र सूत्रे वा ग्रहणन्तु अधिकृतस्य अव्ययीभावस्य समासस्य विकल्पं ब्रूते। विकल्पेनाव्ययीभावसमासस्स्यादित्यर्थः। तेन अव्ययीभावसमासाभावपक्षे उत्सर्गस्तत्पुरुषः प्रवर्तते। तस्मात् अव्ययीभावः षष्ठीतत्पुरुषः वाक्यं चेति त्रेधा विकल्पः फलित इति। पारमध्यशब्दौ षष्ठयन्तेन सह विभाषा समस्यते सोऽव्ययीभावो वा स्यादिति निष्कृष्टार्थः। अव्ययीभावाभावपक्षे तत्पुरुषसमासस्त्वत्र नास्मात्सूत्राद्विधीयते। पारमध्ययोस्तत्पुरुषेऽपि पूर्वनिपातप्रसङ्गात्। किन्तु षष्ठी इति सूत्रं वक्ष्यते तस्मादेवेति बोध्यम्। सर्वेषामप्यव्ययीभावतत्पुरुषादीनां विकल्पं ब्रूते अधिकारत्वादिति विभाषासूत्रं महाविभाषेति महाविकल्प इति च व्यवह्रियते। तेन विभाषासूत्रात्समाससूत्रस्य विकल्पः फलति । इदन्तु वाग्ग्रहणमत्रैव विकल्पं ब्रूत इति समासविशेषस्य अव्ययीभावस्यैव विकल्पं ब्रुत इति भावः। ननु विभाषासूत्रादव्ययीभावस्तत्पुरुषश्चोभावपि विकल्पितावेवेति अव्ययीभावः। तदभावपक्षे उत्सर्गस्तत्पुरुषः। तदभावपक्षे वाक्यञ्चेति विकल्पत्रयं फलत्येवेति वाग्ग्रहणेन किम् इति चेद्द्रष्टव्यमस्योत्तरं तत्त्वबोधिन्याम्। गङ्गायाः पारादिति विग्रहे प्रथमतः षष्ठीतत्पुरुषः प्राप्तः । तदपवादतया अनेन अव्ययीभावः। तस्य विकल्पेन पुनस्तत्पुरुषः तस्य विकल्पेन वाक्यञ्चेति अत्र क्रमो द्रष्टव्यः।

द्वौ मुनी वंश्यौ द्विमुनि। व्याकरणस्य त्रिमुनि। विद्यातद्वतामभेदविवक्षायां त्रिमुनि व्याकरणम्। एकविंशति भारद्वाजम्॥**६७४। नदीभिश्च** ।२।१।२०। नदीभिः सह संख्या प्राग्वत्॥ **समाहारे चायमिष्यते॥** सप्तगङ्गम्। द्वियमुनम्॥ **६७५। अन्यपदार्थे च संज्ञायाम्** ।२।१।२१। अन्यपदार्थे विद्यमानं सुबन्तं नदीभिः सह नित्यं समस्यते संज्ञायाम्। विभाषाधिकारेऽपि वाक्येन संज्ञानवगमादिह नित्यसमासः। उन्मत्तगङ्गं नाम देशः। लोहितगङ्गम्॥ **६७६। समासान्ताः** ।५।४।६८। इत्यधिकृत्य॥**६७७। अव्ययीभावे शरत्प्रभृतिभ्यः** ।५।४।१०७। शरदादिभ्यष्टच् स्यात्समासान्तोऽव्ययीभावे। शरदः समीपमुपशरदम्, प्रतिविपाशम्। शरद्। विपाश्। अनस्। मनस्। उपानह्। दिव्। हिमवत्। अनडुह्। दिश्। दृश्। विश्। चेतस्। चतुर्। त्यद्। तद्। यद्। कियत्। (ग) **जराया जरस् च**। उपजरसम्। (ग) **प्रतिपरसमनुभ्योऽक्ष्णः॥** 'यस्येति च ३११'॥ प्रत्यक्षम्। अक्ष्णः परमिति विग्रहे समासान्तविधानसामर्थ्यादव्ययीभावः। 'परोक्षे लिट् २१७१' इति निपातनात्परस्यौकारादेशः। परोक्षम्। परोक्षा क्रियेत्यादि तु अर्शआद्यचि। समक्षम्। अन्वक्षम्॥

---

23. द्विमुनि, द्वौ मुनी इति विग्रहवाक्यम्। वंश्यानीति तु मुनिपदस्य वंश्यवाचित्वद्योतनाय कस्य वंश्यादित्यत आह। व्याकरणस्येति। विद्यावंश्यस्योदाहरणमिदम्। व्याकरणविद्यासम्प्रदायप्रवर्तकत्वात्पाणिनिकात्यायनयोर्मुन्योस्तद्वंश्यत्वम्। त्रिमुनि व्याकरणम्। व्याकरणमेव त्रयो मुनयो वंश्या इति व्याकरणस्य तद्वंश्यानाञ्च अभेदविवक्षायामुदाहरणम्।

24. नदीभिश्च। संख्येति पूर्वसूत्रादनुवर्तते। नदीवाचकैस्सह संख्यावाचकं वा समस्यत इत्यर्थः। सप्तगङ्गाः सप्तगङ्गम्। द्वे यमुने द्वियमुनम्। समाहारेप्ययमव्ययीभाव इष्यते सप्तानां गङ्गानां समाहारस्सप्तगङ्गमित्यादि।

25. अन्यपदार्थे च संज्ञायाम्। अन्यपदार्थः नदीभिन्न पदार्थः। तत्र वर्तमानं तत्पदार्थवाचकम्। सुबन्तम्। (सुप्सुपेत्यतस्सुबनुवृत्तिरत्र मण्डूकप्लुत्या) नदीभिरिति प्राक्सूत्रादनुवर्तते। संज्ञायां नाम्नीत्यर्थः। यद्वा– उन्मत्तगङ्गम्। कस्यचिद्देशस्य नामेदम्। उन्मत्त इति सुबन्तन्तु उन्मत्ताद्यन्यपदार्थवाचकम्। न तु नदीवाचकम्। उन्मत्ता गङ्गा उन्मत्तगङ्गम्। एवमेव लोहितगङ्गम्। अयन्तु इत्यसमास एव। उन्मत्ता गङ्गा इति पठिते, उन्मत्तगङ्गाख्यदेशविशेषालाभात् इत्याह विभाषाधिकारेऽपीत्यादि।

26. त्यद् तद् यद् प्रतित्यदम् प्रतितदम् प्रतियदमित्यादीनि रूपाण्यूह्यानि। नात्र तदोस्सस्सावविति सत्वं शंक्यम्। सुपो लुकि सुपरकत्वाभावात्। न च प्रत्ययलोपे प्रत्ययलक्षणं न लुमताङ्गस्येति तन्निषेधात्। न च टजनन्तरं सुपि कृते, सत्वं शङ्क्यं,

**६७८। अनश्च** ।५।४।१०८। अन्नन्तादव्ययीभावाट्टच् स्यात्॥ **६७९। नस्तद्धिते** ।६।४।१४४। नान्तस्य भस्य टेर्लोपः स्यात्तद्धिते। उपराजम्। अध्यात्मम्॥। **६८०। नपुंसकादन्यतरस्याम्** ।५।४।१०९। अन्नन्तं यत्क्लीबं तदन्तादव्ययीभावाट्टच् वा स्यात्। उपचर्मम्। उपचर्म॥ **६८१। नदीपौर्णमास्याग्रहायणीभ्यः** ।५।४।११०। वा टच् स्यात्। उपनदम्। उपनदि। उपपौर्णमासम्। उपपौर्णमासि। उपाग्रहायणम्। उपाग्रहायणि॥ **६८२। झयः** ।५।४।१११। झयन्तादव्ययीभावाट्टज्वा। उपसमिधम्। उपसमित्॥ **६८३। गिरेश्च सेनकस्य** ।५।४।११२। गिर्यन्तादव्ययीभावाट्टच् वा स्यात्। सेनकग्रहणं पूजार्थम्। उपगिरम्। उपगिरि॥

**इत्यव्ययीभावः।**

---

टजा व्यवधानात्। एवं त्यदादीनम इत्यपि नेति बोध्यम्। अक्ष्णः परमिति विग्रहे परमित्यनव्ययं हि तद्योगेऽव्ययीभावसमास इत्यत आह विधानसामर्थ्यादिति ।

27. अनश्च अधिकृतस्याव्ययीभाव इत्यस्य विभक्तिविपरिणामेनात्र संबन्धः। अन इति विशेषणं तस्य। तेन तदन्तविधिः । राजाहस्सखिभ्य इति सूत्राट्टजित्यस्यात्रान्वयः।

28. नस्तद्धिते भस्य टेर्लोप इति पूर्वसूत्रं सर्वमत्रान्वेति । न इति न् शब्दषष्ठी, भस्य विशेषणं तदन्तविधः नान्तस्य भस्येति। उपराजम् । राज्ञः समीपमुपराजम्, ङसो लोपे उपराजन् इति स्थिते अन्नन्तत्वाट्टच्, तद्धितः, उपराजन् अ– टिलोपः। यचिभमिति नान्तस्य भत्वात् उपराज्–अ–उपराज–सु। नाव्ययीभावादित्यम्। उपराजम्। आत्मन्यध्यात्मम्।

29. उपचर्मम्। चर्मणस्समीपमुचर्मम्। चर्मन्शब्दो नान्तः क्लीबश्च तदन्तं तु उपचर्मन्नित्यव्ययीभावः। ततष्टचि नस्तद्धित इति टिलोपे, सोरमादेशे च उपचर्मम्। टजभावपक्षे नलोपः प्रातिपदिकान्तस्येति नलोपः उपचर्म।

30. नदीपौर्णमास्याग्रहायणीभ्यः। नदीत्यत्र नदिशब्दस्वरूपस्यैव ग्रहणम् न तु नदीवाचकानाम्। शरदादिषु विपाक् इति नदीविशेषवाचकस्य शब्दस्य पाठात् नदीवाचकानामित्यनेनैव विपाशष्टच्सिद्धेस्तत्र पाठो व्यर्थस्स्यादिति भावः। ननु विकल्पेन टजत्र विधीयते नित्यार्थम् शरदादिषु विपाशः पाठ इति नदीशब्दान्नदीवाचकग्रहणमेव युक्तमिति चेत् मैवम्। भाष्यानुरोधेन अस्मिन् सूत्रे पूर्वसुत्रादन्यतरस्यां ग्रहणस्य अप्रामाणिकत्वात्।

इत्यव्ययीभावः

## तत्पुरुषप्रकरणम् २८।

**६८४। तत्पुरुषः** ।२।१।२२। अधिकारोऽयं प्राग्बहुव्रीहेः॥

**६८५। द्विगुश्च** ।२।१।२३। द्विगुरपि तत्पुरुषसंज्ञः स्यात्। इदं सूत्रं त्यक्तुं शक्यम्। संख्यापूर्वो द्विगुश्चेति पठित्वा चकारबलेन संज्ञाद्वयसमावेशस्य सुवचत्वात्। समासान्तः प्रयोजनम्। पञ्चराजम्॥

**६८६। द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः** ।२।१।२४। द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते स तत्पुरुषः कृष्णं श्रितः कृष्णश्रितः। दुःखमतीतो दुःखातीतः॥ **गम्यादीनामुपसंख्यानम्॥** ग्रामं गमी ग्रामगमी। अन्नं बुभुक्षुः अन्नबुभुक्षुः॥

---

## अथ तत्पुरुषप्रकरणम्

31. तत्पुरुषः। अव्ययीभावाधिकारो निवृत्त इत्यथ तत्पुरुषाधिकारः। अस्याधिकारस्यावधिमाह प्राग्बहुव्रीहेरिति। शेषो बहुव्रीहिरित्यतः प्रागित्यर्थः। ननु संख्या पूर्वो द्विगुरिति तत्पुरुषापवादेन द्विगुसंज्ञा तत्र स्यादित्यत आह।

32. द्विगुश्चेति। एतेन द्विगुसंज्ञकस्यापि तत्पुरुषसंज्ञाविधानान्न तत्पुरुषापवादता। द्विगोरिति समाधापितम्। इदं सूत्रम् त्यक्तुं शक्यमित्यत्रोपपत्तिमाह संख्यापूर्वो द्विगुश्चेत्यदिना। संख्यापूर्वो द्विगुसंज्ञकस्स्याच्चात्तत्पुरुषसंज्ञक इति तदर्थः। ननु द्विगोस्तत्पुरुषसंज्ञाविधानेन किं फलमत आह–समासान्त इति। राजाहस्सयखिभ्यष्टजिति तत्पुरुषाद्विहितष्टच् द्विगोर्यथा स्यादिति तत्रोदाहरणम्। पञ्चराजम् पञ्चानाम् राज्ञां समाहारः पञ्चराजम्। संख्यापूर्वोऽयम् द्विगुः। राजान्तात्तत्पुरुषाट्टचि, नस्तद्धित इति टिलोपे पञ्चराज सु नपुंसकत्वत् सोरमि अमि पूर्वे च पञ्चराजम्। द्विगोस्तत्पुरुषसंज्ञाभावे टजत्र न स्यादिति भावः।

33. द्वितिया श्रितेति। प्रथमातत्पुरुषस्तु समानाधिकरणेनेत्यधिकारे वक्ष्यति। अत्रापि सुपेत्यस्य संबन्धः। संबद्धे च तस्मिन् प्रत्ययग्रहणेन तदन्तग्रहणमिति तदन्तविधिः। आपन्नैरिति बहुवचनसामानधिकरणाय बहुवचनेन विपरिणामः। तदेतदाह सुबन्तैरिति। समास इत्यधिकारात् समस्यत इति विभाषाधिकारस्थत्वाद्वेति। तत्पुरुषाधिकारात् स तत्पुरुष इति। द्वितीयान्तम्। श्रिताभिस्सुबन्तैस्सह समस्यते वा–स तत्पुरुष इति सूत्रार्थः। एवं श्रितादिभिरित्युक्ते, श्रितादीनां क्तांतत्वेन न सुबन्तत्वमिति श्रितादि प्रकृतिकैरित्युक्तम्। येषु सुबन्तेषु श्रितादिः प्रकृतित्वेन वर्तते तैः श्रितादिप्रकृतिकैरित्यर्थः। ननु सुप् अन्ते एभ्यस्तैस्सुबन्तैरिति श्रितादिविशेषणम् । तेन सुबन्तैश्श्रितादिभिरित्युक्तिस्सङ्गच्छत एवेति

**६८७। स्वयं क्तेन** ।२।१।२५। द्वितीया ६८६ इति न सम्बध्यते अयोग्यत्वात् स्वयंकृतस्यापत्यं स्वायंकृतिः।

---

चेत्-मैवम्। संबोधने सुलोपेन सुबन्तत्वाभावात्। कृष्णं श्रितः-कृष्णश्रित इति न स्यादिति। ननु स्थानिवद्भावेन प्रत्ययलक्षणेन वा - सुबन्तत्वं तत्रानेयमिति चेत् तर्हि वैकुण्ठमधिश्रितः वैकुण्ठाधिश्रितः। अत्र द्वितीयातत्पुरुषो न स्यात्। ननु श्रितादिप्रकृतिकैरित्युक्तेऽपि कथं तत्र स्यात्। अधिश्रितेत्यस्य प्रकृतित्वेन श्रितस्याप्रकृतित्वादिति चेत् मैवम्। यस्मिन् सुबन्ते अधिश्रितेत्यादौ या प्रकृतिः - अधिश्रित-तत्र श्रितस्य वर्तमानत्वाच्छ्रितादिप्रकृतिकसुबन्तः अधिश्रित इति भवतीति श्रितादिः प्रकृतौ येषां न्ते श्रितादिप्रकृतिकाः श्रितादिघटित समुदायप्रकृतिका इति भावः। न चैवम्। कृष्णश्रित इति न सिद्धचेदिति वाच्यम् । व्यपदेशिवद्भावेन श्रितप्रकृतिकेऽपि सुबन्ते श्रितादिघटित- समुदायप्रकृतिकत्वाभ्युपगमात्। कृष्णं श्रितः। ननु कर्तृकर्मणोः कृतीति कृद्योगे षष्ठीविधानान्नात्र कृष्णशब्दे द्वितीया संभवति। श्रितादियोगे द्वितीयान्तत्वमेवासंभवीति सूत्रस्याप्यस्य असंभव इति चेन्मैवम्। न लोकाव्ययनिष्ठा खलर्थतृणामिति निष्ठायोगे षष्ठीनिषेधात्। न च शेषे षष्ठी स्यादिति वाच्यम्। श्रयणक्रियया कृष्णस्येप्सितत्मत्वेन कारकव्यतिरिक्तत्वाभावात्। न च कर्तृत्वाविवक्षायां सम्बन्धसामान्यविवक्षायां शेषषष्ठीस्यादिति वाच्यम्। द्वितीयाश्रितेति सूत्रबलादेव तादृशविवक्षाया वा षष्ठ्या वा निषेधात्। दुःखमतीतः अतिरतिक्रमणे च कर्मप्रवचनीयत्वात् तद्योगे द्वितीया।

34. स्वयङ्क्तेन। स्वयमित्यात्मनेत्यर्थवाचकमव्ययम्। क्तान्तेन सह समस्यते। अस्य समासस्य अव्ययघटितत्वेऽप्यव्ययीभावाधिकारेऽपठितत्वात् तत्पुरुष एवायम्। स्वयङ्कृत इत्युदाहरणम्। ननु स्वयङ्कृत इत्यत्र समासकार्यस्य सुब्लुकादेरस्पष्टत्वात् (अव्ययत्वादेव स्वयम्पदात् जातस्य सुपो लुप्तत्वादित्यर्थः) इदं वाक्यं वा उत समास इति निर्णयाभाव इत्याशंक्य आह-स्वयङ्कृतस्यापत्यं स्वायं कृतिरिति। स्वयङ्कृत इति यदि वाक्यं तर्हि कृतशब्दादेवापत्यार्थे अत इञि कार्तिरिति स्यात् समासत्वे तु तद्धितेष्वचामादेरित्यादिवृद्धिः। स्वेत्यत्र अकारस्यैव स्यात् समस्तस्यैकपदत्वेन व्यवहारात्। एवं स्वयंजातस्यापत्यं स्वायञ्जातिर्नारदः। कथन्तर्हि स्ययम्भूः। न चात्र समासाभावशङ्क्यः। "धाम स्वायम्भुवं । ययाविति प्रयोगात्। उच्यते अव्यये भुवः क्विबिति पुनर्भूवत्स्वयम्भूरित्युपपदसमासः ।

**६८८। खट्वा क्षेपे** ।२।१।२६। खट्वाप्रकृतिकं द्वितीयान्तं क्तान्तप्रकृतिकेन सुबन्तेन समस्यते निन्दायाम् । खट्वारूढो जाल्मः। नित्यसमासोऽयम्। न हि वाक्येन निन्दा गम्यते ॥ **६८९। सामि** ।२।१।२७। सामिकृतम्॥ **६९०। कालाः** ।२।१।२८। क्तेनेत्येव। अनत्यन्तसंयोगार्थं वचनम्। मासप्रमितः प्रतिपच्चन्द्रः। मासं परिच्छेत्तुमारब्धवानित्यर्थः॥

**६९१। अत्यन्तसंयोगे च** ।२।१।२९। काला इत्येव अक्तान्तार्थं वचनम्। मुहूर्तं सुखं मुहूर्तसुखम्॥

---

35. खट्वाक्षेपे। द्वितीयेति क्तेनेति च पूर्वसूत्रादत्रान्वयः। द्वितीयान्तः खट्वाशब्दः क्तान्तेन सुबन्तेन सह समस्यते क्षेपे गम्यमाने इति सूत्रार्थः। खट्वा प्रकृतिर्यस्मिन् द्वितीयान्ते शब्दे तत्खट्वाप्रकृतिकम्। क्तान्तं प्रकृतिर्यस्मिन् सुबन्ते तत्क्तान्तप्रकृतिकम् इति लाक्षणिकोऽर्थः। लक्षणाश्रयणे फलन्तु श्रितादिप्रकृतिकैरित्यत्रेव बोध्यम्। अत्र खट्वारूढशब्दस्य खट्वामारूढ इति नार्थः। किन्तु जाल्म इत्येव। जाल्मो निन्दित इत्यर्थः। खट्वामारूढ इति वाक्यस्य तु खट्वाकर्मकारोहणमर्थः न तु निन्देति । निन्दागमकत्वे खट्वामारूढ इति न स्यादेवेति खट्वारूढ इति नित्यसमासः।

36. सामि। क्तेनेत्यस्यात्रान्वयः। सामीत्येतदव्ययम् क्तान्तेन सह वा समस्यते। सामि । कुट्मलितकोमलाधरमित्यत एव लीलाशुकः।

37. कालाः । ननु काला अत्यन्तयोगे चेत्येकमेव सूत्रमस्तु किं योगविभागेनेत्यत आह–अनत्यन्तसंयोगार्थं वचनमिति। वचनन्नाम योगविभाग इत्यर्थः। योगविभागेन सूत्रस्योक्तिरिति वा। ननु अत्यन्तसंयोग इति मास्तु, तेनानत्यन्तसंयोगेऽपि स्यादत आह।

38. अक्तान्तार्थं वचनमिति। अत्यन्तसंयोगे सति अक्तान्तेन। अनत्यन्तसंयोगे तु क्तान्तेन सह। कालवाचिनो द्वितीयान्तस्य यथा समासस्स्यात् तदर्थं योगविभाग इत्यर्थः। न च अत्र यद्यपि काला इत्यनेन अत्यन्तसंयोगानत्यन्तसंयोगसाधारण्येन क्तान्तेन सह द्वितीयान्तस्य समासो विहितः, तथाऽपि अत्यन्तसंयोगे क्तान्तेन सह न समासः, अत्यन्तसंयोगे चेति सूत्रस्य अक्तान्तेन सह समासविधायकस्य तदपवादकत्वात् इति वाच्यम्। अत्यन्तसंयोगानत्यन्तसंयोगसाधारण्येन क्तान्तेन सह काला इत्यनेन द्वितीयान्तस्य समासः। क्तान्ताक्तान्तसाधारण्येन अत्यन्तसवंयोगे – अत्यन्तसंयोगे चेति सूत्रेणेति विभिन्नविषयत्वान्नानयोरपवादत्वं। अत एव काला इत्यनेनैव अत्यन्तसंयोगेऽपि द्वितीयासमाससिद्धौ, किमनेनात्यन्तसंयोगे चेति सूत्रेणेत्याशंक्य अक्तान्तार्थं वचनमिति कैमुद्यामुक्तम्। क्तान्तेनेव अक्तान्तेनापि द्वितीयासमासविधानार्थमिदं सूत्रमित्यर्थः । तस्मात् मुहूर्तमधीतो मूहूर्ताधीत इत्यपि काला इति सूत्रे उदाहरणं बोध्यम्।

**इति द्वितीया तत्पुरुषः ।।**

**६९२। तृतीया तत्कृतार्थेन गुणवचनेन** ।२।१।३०। तत्कृतेति लुप्ततृतीयाकम्। तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनार्थशब्देन च सह प्राग्वत्। शङ्कुलया खण्डः शङ्कुलाखण्डः। धान्येनार्थो धान्यार्थः। तत्कृतेति किम्। अक्ष्णा काणः॥**६९३। पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः** ।२।१।३१। तृतीयान्तमेतैः प्राग्वत्। मासपूर्वः। मातृसदृशः। पितृसमः। ऊनार्थे। माषोनं कार्षापणम्। माषविकलम्। वाक्कलहः। आचारनिपुणः। गुडमिश्रः। आचारश्लक्ष्णः।

---

39. तृतीया तत्कृतार्थेन गुणवचनेन। तत्कृत–अर्थेन इति छेदः। तत्कृतेति लुप्ततृतीयाकं गुणवचनेनेत्यस्य विशेषणम्। एकपदत्वे तु अर्थेनेत्यस्य विशेषणं स्यात्। तथा च धान्यर्थ इति न स्यादर्थस्य धान्यकृतत्वाभावात्। न च पृथक्त्वेऽपि सन्निहितत्वेन अर्थेनेत्यस्यैव विशेषणं स्यादिति वाच्यम्। विभागवैयर्थ्यात्। उक्तप्रयोगासिद्धेश्च। तत्कृतेति विशेषणं। गुणवचनेनेति समासैकदेशे गुणेऽन्वेति। तथा च तत्कृतेन गुणवचनेनेत्यस्य तत्कृतो यो गुणः तद्वचनेनेत्यर्थः। तत्पदेन तृतीया परामृश्यते, सन्निहितत्वात्। तृतीयायां च तदन्तविधिः प्रत्ययग्रहणत्वात्। तेन च तृतीयान्तेन अर्थो लक्ष्यते केवलस्य पदस्य गुणकर्तृत्वासंभव एव लक्षणाबीजं तृतीयान्तस्य शंकुलयेत्यादेश्शब्दस्य योऽर्थः शंकुलाभिध(रूप) पदार्थः। तेन कृतो यो गुणः खंडनक्रियारूपो गुणः। तद्वाची शब्दः खंडनशब्दः, तेन तृतीयान्तं शङ्कुलयेति पदं वा समस्यते। शङ्कुलया खण्डः शङ्कुलाखण्ड इति शङ्कुलापदार्थकृतखण्डनगुणवद्द्रव्यमर्थः। शङ्कुलापदार्थकरणक खण्डनगुणाश्रय इति वा। अर्थशब्देन सह तृतीयान्तस्य समासे उदाहरणमाह धान्येनार्थो धान्यार्थ इति। अक्ष्णा काणः। यद्यपि काणशब्दः काणत्वगुणवचनः, तथाऽपि न तृतीयान्तार्थेन। अक्ष्णा कृत इति नात्राक्षिकाण इति समासः। अक्षिकाणमस्येति बहुव्रीहिणा तु अक्षिकाण इति स्यादेव। अयं भावः। कर्तृकरणयोरिति सूत्रविहिततृतीयान्तं पदम्। स्वार्थकरणकस्य स्वार्थकर्तृकस्य वा गुणस्य वचने द्रव्यवाचिना शब्देन सह समस्यते वेति सूत्रार्थनिष्कर्षः। तृतीयान्तमर्थशब्देन सहेति च (स्वार्थकरणकस्य स्वस्य तृतीयान्तस्य योऽर्थः तदभिधेयः पदार्थः करणं यस्य तस्य एवं स्वार्थकर्तृकस्येत्यत्राप्यूह्योऽर्थः) इति। एवं कर्तृकरणे कृता बहुलमिति सूत्रादेव शंकुलाखंड इत्यादिसिद्धौ किमनेन सूत्रेणेत्याशङ्कामन्तर्निधाय सूत्रैकदेशाक्षेपेऽपि सूत्राक्षेपः फलतीत्याशयेन तत्कृतेति किमित्याक्षिपति कौमुदीकारः इति तत्त्वबोधिनीकारमतम्।

40. पूर्वसदृशेति। एतेषां द्वन्द्वः। ऊनस्य अर्थ इवार्थो येषान्ते ऊनार्थाः शब्दाः, ऊनविकलादयः। अनुपसर्गग्रहणात् सन्धिभिन्नार्थे वर्तमानस्य अनुपसर्गस्य मिश्रस्य अन्तोदात्तस्वरविधानेन सोपसर्गस्य मिश्रस्य नेति मिश्रस्य सोपसर्गत्वं ज्ञापितम्। ऊनार्थ कलहंतृतीयाया इत्यतस्तृतीयानुवृत्त्या तृतीयातत्पुरुषविषय एव मिश्रं चानुपसर्गमसंधाविति

मिश्रग्रहणे सोपसर्गस्यापि ग्रहणम्। 'मिश्रं चानुपसर्गमसन्धौ ३८८८' इत्यत्रानुपसर्गग्रहणात्। गुडसंमिश्रा धानाः॥ **अवरस्योपसंख्यानम्॥** मासेनावरो मासावरः॥ **६९४। कर्तृकरणे कृता बहुलम्** ।२।१।३२। कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत्। हरिणा त्रातो हरित्रातः। नखैर्भिन्नो नखभिन्नः॥ (प) **कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्॥** नखनिर्भिन्नः। कर्तृकरणे इति किम्। भिक्षाभिरुषितः। हेतावेषा तृतीया। बहुलग्रहणं सर्वोपाधिव्यभिचारार्थम्। तेन दात्रेण लूनवानित्यादौ न। कृता किम्। काष्ठैः पचतितराम्॥

---

विधानमिति सोपसर्गेन मिश्रेण तृतीयासमासाभाव अनुपसर्गस्य मिश्रस्येत्युक्तिर्व्यर्थेति पूर्वसदृशेति तृतीयासमासविधायके सूत्रे सोपसर्गेणापि मिश्रेणेति मिश्रशब्दस्यार्थो वाच्य इति भावः।

41. कर्तृकरणे कृता बहुलम्। तृतीयेति सूत्रात् तृतीयापदस्यात्रान्वयः हरित्रातः कर्तरि तृतीया हरिणेति नखैर्भिन्नः करणे तृतीया। ननु तृतीयान्तार्थकृतिगुणवचनत्वात् त्रातभिन्नशब्दाभ्यां सह तृतीया तत्कृतेति सूत्रादेव समासः स्यात् इति किमनेनेति चेन्मैवम्। नखक्षतमिति समासासिद्धेः । नखेन क्षतमिति विग्रहः क्षतमिति भावे क्तः, न तु कर्मणि क्तः। तेन गुणवचनत्वेऽपि न द्रव्यवाचकत्वमिति तृतीया । तत्कृतसूत्रान्नात्र समासप्राप्तिरिति नखनिर्भिन्नः गतिपूर्वेण कृतात्र समासः हरिणा नखैर्भिन्नः हरिनखभिन्नः कारकपूर्वेण कृतात्र समासः।

सर्वोपाधिव्यभिचारार्थम्। सर्वासामप्युपाधीनां विशेषणानां कर्तरि तृतीयान्तत्वाकरणे तृतीयान्तत्वकृदन्तत्वादीनां व्यभिचारार्थं व्यभिचाराय साध्याभाववद्वृत्तिर्व्यभिचारः साध्यं समासत्वं। तदभाववद्वाक्यन्तत्र वृत्तिः तद्घटकीभूतत्वेन वरम् समर्थाद्धेतूनां विशेषणानामेव। सत्स्वपि समासहेतुषु सर्वेषु विशेषणेषु समासाभावो यदा स्यात्तदर्थमिति यावत् यथा दात्रेण लूनवान्। अत्र दात्रेणेति करणे तृतीया लूनवानिति तत्कृत- लवनगुणमुक्त्वाऽधुना द्रव्यमभिधत्त इति गुणवचनः (लूनवानिति कर्तरि क्तवतुः)। एवं समासहेतुषु सत्स्वपि समासोऽत्र नेति। ननु समासस्य पाक्षिकत्वेनैवात्र समासाभावसिद्धौ किं बहुलग्रहणेनेति चेन्मैवम्। दात्र लूनवानिति पक्षे समासो न स्यादिति। किंच, साध्यवदवृत्तित्वमपि व्यभिचार एव । साध्यं समासत्वं तद्वान्समासः। तत्र तद्घटकीभूतानयनरूपेण सर्वोपाधीनामवृत्तित्वम्। असत्स्वपि प्रकृतसमासहेतुषु सर्वेषु विशेषणेषु समासो यथा स्यात्तदर्थमिति। यथा पादाभ्याम् हारकः पादहारकः पादाभ्यामिति पञ्चमी। एकस्मिन्नेव साध्यवति सर्वोपाध्यवर्तनं न विवक्षितम्। किं तु अन्यतमस्यैव विशेषणस्येति कृदन्तत्वे सत्यपि न तृतीयान्तत्वमत्रेति व्यभिचारो बोध्यः।

**६९५। कृत्यैरधिकार्थवचने** ।२।१।३३। स्तुतिनिन्दाफलकमर्थवाद-वचनमधिकार्थवचनं तत्र कर्तरि करणे च तृतीया कृत्यैः प्राग्वत्। वातच्छेद्यं तृणम्। काकपेया नदी॥**६९६। अन्नेन व्यञ्जनम्** ।२।१।३४। संस्कारकद्रव्यवाचकं तृतीयान्तमन्नेन प्राग्वत्। दध्ना ओदनो दध्योदनः। इहान्तर्भूतोपसेकक्रियाद्वारा सामर्थ्यम्॥ **६९७ भक्ष्येण मिश्रीकरणम्** ।२।१।३५। गुडेन धानाः गुडधानाः। मिश्रणक्रियाद्वारा सामर्थ्यम् ॥

---

कोष्ठैः विचरितवणम् । अतिशायने तमबिष्ठनौ। तिङश्चेति पचतेरतिशये द्योत्ये तमप्। तरप्तमपौ घः –किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे इति "घसंज्ञकात्तमप आम्। पचतितमाम्। तद्धितान्तत्वात् कृत्तद्धितेति प्रातिपदिकसंज्ञया स्वादयः। तद्धित श्चासर्वविभक्तिरित्यामस्तत्र परिगणनादव्ययमिदम्। अव्ययादाप्सुप इति सुब्लुक्। विचरितवणम्। एवं तद्धितांतप्रकृतिकसुबन्तमिदं न तु कृदन्तप्रकृतिकसुबन्तमिति नात्र समासः। न च कृदतिङिति तिङभिन्नस्यातद्धितस्यापि कृत्संज्ञाऽस्तीति स्यादेवात्र समास इति वाच्यम् । कृतद्धितसमासाश्चेति सूत्रे कृत्तद्धितयोरुभयोर्ग्रहणेन तद्धितान्तस्य कृदन्तत्वाभावज्ञापनात् ।

42. कृत्यैरधिकार्थवचने। कर्तृकरण इति तृतीयेति चात्रान्वेति। कर्तृकरणे तृतीयान्तम्। कृत्यैस्सह वा समस्यते। स च समासः तच्च वाक्यम् वा। यद्यधिकार्थवचनः स्वघटितशब्दशक्त्या योऽर्थोऽभिधीयते तमर्थमभिदधदेव तस्मादर्थादधिकमप्यर्थं स्तुतिनिंदारूपमर्थवादं वक्ति तर्हि समस्यत इत्यन्वयः। यद्वा अधिकार्थवचने वाक्ये घटकतया वर्तमानं कर्तुकरणे तृतीयान्तम् । घटकतया वर्तमानेन कृत्यप्रत्ययान्तेन सह वा समस्यत इत्यन्वयः। अथ वा अधिकार्थवचने सति अधिकार्थद्योतने सति अधिकार्थे द्योत्ये सतीति यावत्।

43. अन्नेन व्यञ्जनम्। नात्र कर्तृकरण इत्यस्य संबन्धः। अन्ने व्यञ्जनकर्तृकत्वस्य व्यञ्जनकरणकत्वस्य वा असम्भवात्। किंतु तृतीयेति संबध्यते। दध्ना ओदनो दध्योदनः । सहयुक्तेऽप्रधान इति सहयोगाभावेऽपि वृद्धो यूनेति ज्ञापनात् दधिशब्दे तृतीया। ननु सामर्थ्याभावान्नात्र समासः स्यात्, इत्यत आह अन्तर्भूतेत्यादि। दध्युपसिक्त ओदनो दध्योधन इत्यर्थः।

44. भक्ष्येण मिश्रीकरणम्। तृतीयान्तं भक्ष्येण सह समस्यते मिश्रीकरणं गम्यते चेत्। मिश्रीकरणम् मिश्रकरणम्। गुडेन धाना गुडधानाः गुडमिश्रा धाना इत्यर्थः। तृतीया तु गुडशब्दे सहयुक्त इत्यनेनैव। इति तृतीयातत्पुरुषः।

**६९८। चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः** ।२।१।३६। चतुर्थ्यन्तार्थाय यत्तद्वाचिनाऽर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत्। तदर्थेन प्रकृतिविकृतिभाव एव गृह्यते। बलिरक्षितग्रहणाज्ज्ञापकात्। यूपाय दारु यूपदारु। नेह। रन्धनाय स्थाली। अश्वघासादयस्तु षष्ठीसमासाः॥ **अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्॥** द्विजायायं द्विजार्थः सूपः। द्विजार्था यवागूः। द्विजार्थं पयः। भूतबलिः। गोहितम्। गोसुखम्। गोरक्षितम्॥

---

45. चतुर्थी। चतुर्थ्यन्तार्थाय यदित्यत्र चतुर्थ्यन्तार्थशब्दात्तादर्थ्ये चतुर्थी। चतुर्थ्यन्तो यूपायेति शब्दः, तदर्थो यूपपदार्थः, तस्मै तदर्थं यत् दारु पदार्थः। तद्वाचि दारुशब्दः, तेन तदर्थेन प्रकृतिविकृतिभाव एव। तदर्थेन सह चतुर्थीसमासे प्रकृतिविकृतिभावरूपे तादर्थ्ये एव। प्रकृतिरुपादानं काञ्चनादिकम्। विकृतिर्विकारः कार्यम् कटकादिकं तद्भावे चतुर्थ्यन्तवाच्यपदार्थात्मना यद्वस्तु विक्रियते तद्वस्तुना चतुर्थ्यन्तं समस्यत इति, चतुर्थी तदर्थेनेत्यस्य निष्कृष्टार्थः। प्रकृतिविकृतिभाव एवेति नियमाभावे भूतेभ्यो बलिः भूतबलिः। गोभ्यो रक्षितं गोरक्षितमित्यत्रापि तादर्थ्ये चतुर्थ्यन्तं भूतपदं गोपदं च तदर्थेन हितपदेन रक्षितपदेन च समस्यत एवेति पृथक् बलिरक्षितग्रहणं व्यर्थं भवतीति भावः। बलेर्भूतार्थत्वाद्रक्षितस्य गवार्थत्वाच्च। प्रकृतिविकृतिभावस्तु नात्र। बलेरन्नादेः स्वप्रकृति-भूतव्रीह्यादिविकृतित्वेन भूतोपादानकत्वाभावात्। रक्षितस्यापि घासादेः भूतलोपादानकत्वेन गवोपादानकत्वाभावात्। किं तु भूतबल्योर्गोरक्षितयोश्च भोक्तृभोक्तव्यभावरूपस्संबन्ध इति न प्रकृतिविकृतिभावः। रंधनायस्थली इत्यत्र तु पचनस्थाल्योः आश्रयाश्रयीभावरूपस्संबन्धः। स च तंडुलद्वारा पचनक्रियाश्रयतंडुलाश्रयस्थालीत्यर्थः। रंधनं न स्थालीविकार इति न प्रकृतिविकृतिभावः। तादर्थ्ये चतुर्थी रंधनार्थं स्थालीति यावत्। नन्वेवं अश्वेभ्यो घासः अश्वघास इति कथं समासः अथ आह अश्वानां घासः अश्वघासः इति षष्ठीसमास एवेति संबंधविवक्षया षष्ठी अश्वसंबंधिघास इति न तादर्थ्यविवक्षया चतुर्थी। अश्वार्थं घास इति भावः। एतावता तदर्थेन समासो व्याख्यातः। अथ अर्थेनः। अर्थेनेत्यादिकम्। नित्यसमासत्वादस्वपदविग्रहः। विशेष्यलिङ्गत्वादनियतलिङ्गत्वं त्रिलिङ्गत्वमिति यावत्। तदर्थमुदाहरणत्रयं दर्शयति नित्यसमासत्वादेव। द्विजायार्थ इति न स्यात्। द्विजायायमिति तु स्यादेव। इदं शब्देन तत्र सम्बन्धात्। न चेदंशब्देन सह समासपक्षे द्विजेदमिति स्यादिति वाच्यम्। विधायकाभावात्। न च तदर्थेनेति विधानमस्तीति वाच्यम्। प्रकृतिविकृतिभावाभावात्। ननु कटकायेदं कटकम्। कटकेदमिति स्यादिति चेन्मैवम्। चतुर्थ्यन्तार्थाय

**६९९। पञ्चमी भयेन** ।२।१।३७। चोराद्भयं चोरभयम्॥ **भयभीतभीतिभीभिरिति वाच्यम्॥** वृकभीतः। वृकभीतिः। वृकभीः॥

**७००। अपेतापोढमुक्तपतितापत्रस्तैरल्पशः** ।२।१।३८। एतैः सहाल्पं पञ्चम्यन्तं समस्यते स तत्पुरुषः। सुखापेतः। कल्पनापोढः। चक्रमुक्तः। स्वर्गपतितः। तरङ्गापत्रस्तः। अल्पशः किम्। प्रासादात्पतितः॥

**७०१। स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन** ।२।१।३९। स्तोकान्मुक्तः। अल्पान्मुक्तः। अन्तिकादागतः। अभ्याशादागतः। दूरादागतः। विप्रकृष्टादागतः। कृच्छादागतः। 'पञ्चम्याः स्तोकादिभ्यः ९५९' इत्यलुक्॥ **७०२। षष्ठी** ।२।२।८। राज्ञः पुरुषो राजपुरुषः॥

**७०३। याजकादिभिश्च** ।२।२।९। एभिः षष्ठ्यन्तं समस्यते। 'तृज़काभ्यां कर्तरि ७०९' इत्यस्य प्रतिप्रसवोऽयम्। ब्राह्मणयाजकः। देवपूजकः॥ **गुणात्तरेण तरलोपश्चेति वक्तव्यम्॥** तरबन्तं यद्गुणवाचि तेन सह समासस्तरप्प्रत्ययलोपश्च। 'न निर्धारणे ७०४' इति 'पूरणगुण-७०५' इति च निषेधस्य प्रतिप्रसवोऽयम्। सर्वेषां श्वेततरः सर्वश्वेतः। सर्वेषां महत्तरः सर्वमहान्॥ **कृद्योगा षष्ठी समस्यत इति वाच्यम्॥** इध्मस्य व्रश्चनः इध्मव्रश्चनः॥

---

यत्तद्वाचिनेत्युक्तत्वेन इदं पदस्य कटकार्थकनकवाचित्वाभावात्। न हि सर्वनामशब्दाः कञ्चित् पदार्थमभिधया बोधयितुं क्षमन्ते। किन्तु तं परामृशन्ति । अतोऽत्र इदं पदस्य न कनकवाचित्वमिति न दोषः इति चतुर्थी ।

46. अल्पम्। पञ्चम्यन्तम्। यस्या(त्रा) वधिभूतस्य पञ्चम्यन्तस्य अपयानापोहनादिक्रियया कर्तृनिष्ठया अल्पत्वं गम्यते। तत्पञ्चम्यन्तमत्राल्पमित्युच्यते। यथा सुखापेतः। अल्पसुखाद्भ्रष्ट इत्यर्थः। सुखस्याधिक्ये तस्मादपयानस्य (भ्रंशस्य) असम्भवात्। स्वर्गात् पतित इत्यत्र तु स्वर्गशब्देन स्वर्लोकानुभवो लक्ष्यते, अन्यथा स्वर्गस्य अल्पत्वासम्भवात्। स्वर्लोकानुभवस्य क्षीणत्वेन तस्मात्पतित इत्यर्थः। प्रासादात्पतित इत्यत्र तु पतनक्रिया न प्रासदस्याल्पत्वं गम्यते, किन्तु पतनक्रियाश्रयस्य पुंसः चरणस्खलनादिकं लक्ष्यत इति न तत्र समासः इति पञ्चमीतत्पुरुषः।

47. षष्ठी। षष्ठ्यन्तम् समर्थेन सुबन्तेन सह वा समस्यते। समर्थ-समास-विभाषा-सुपामधिकारात्। राज्ञः पुरुषः षष्ठीशेष इति स्वस्वामिभावसम्बन्धे षष्ठी ।

48. याजकादिभिश्च। ननु षष्ठीत्यनेनैव याजकादिभिस्सह समाससिद्धौ किमनेनेत्यत

७०४। **न निर्धारणे** ।२।२।१०। निर्धारणे या षष्ठी सा न समस्यते। नृणां द्विजः श्रेष्ठः॥ **प्रतिपदविधाना षष्ठी न समस्यत इति वाच्यम्॥** सर्पिषो ज्ञानम्॥७०५। **पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन** ।२।२।११। पूरणाद्यर्थैः सदादिभिश्च षष्ठी न समस्यते। पूरणे। सतां षष्ठः। गुणे। काकस्य कार्ष्ण्यम्। ब्राह्मणस्य शुक्लाः। यदा प्रकरणादिना दन्ता इति विशेष्यं ज्ञातं तदेदमुदाहरणम्। अनित्योऽयं गुणेन निषेधः।

---

आह। तृजकाभ्याम् कर्तरीत्यस्य प्रतिप्रसवोऽयम् इति बाधकबाधनार्थमिदं सूत्रमिति भावः। प्रतिप्रसूत इति प्रतिप्रसवः। प्रतीत्यस्य विरोधो बाधनमर्थः। प्रतिविरोधेन। तृजकाभ्यामित्यस्य बाधनेन प्रसूते षष्ठीति प्रतिप्रसवः।

49. गुणात्तरेण तरलोपश्च। गुणाद्गुणवाचकात्परो यस्तरप् तेन तरबन्तम् यद्गुणवाचि, तेनेत्यर्थः षष्ठीसमस्यते तरप् लोपश्च। सर्वेषां श्वेततरः सर्वश्वेतः। तरबन्तं गुणवाचिश्वेततरशब्दः। तेन सर्वेषामिति षष्ठ्यन्तस्य समासः। तरब्लोपः। अत्र यद्यपि षष्ठीत्यनेनैव समासस्सुशकः तथाऽपि न निर्धारण इति गुण इति तस्या निषेधे प्राप्ते प्रवृत्तमिदं वार्तिकमित्याह– न निर्धारण इति पूरणगुणेति च निषेधस्य प्रतिप्रसवोऽयमिति तन्निषेधं बाधित्वा विधीयतेऽनेन षष्ठीति भावः। यतश्च निर्धारणमिति सर्वशब्दात् षष्ठी। ननु गुणशब्देन सह समासे "पूरणगुणेति" निषिद्धे अनेन विधीयते समास इति तत्र गुणशब्दग्रहणं व्यर्थमिति चेन्मैवम्। गुणोत्तरेणेति गुणवाचिना तरबन्तेनैव समासोऽनेन विधीयते न केवलं गुणवाचिनेति। काकस्य कार्ष्ण्यमित्यत्र एतद्वार्तिकाप्रवृत्त्या समासाभावः। तत्र गुणग्रहणस्य फलं भवतीति।

50. कृद्योगा षष्ठी समस्यत इति वाच्यम् प्रतिपदविधाना षष्ठी न समस्यत इति वक्ष्यमाणस्य षष्ठी निषेधस्य प्रतिप्रसवोऽयम्। इध्मनो व्रश्चनः कर्तृकर्मणोः कृतीति कर्मणि षष्ठी।

51. न निर्धारणे। नृणां द्विजः श्रेष्ठः। यतश्च निर्धारणमिति निर्धारणावधिर्नृणामिति। निर्धारणहेतुश्श्रेष्ठत्वम्। यश्चैकदेशो निर्धार्यते द्विजः। एवं यत्र त्रितयं लभ्यते तत्रैवायं निषेधः। तेन पुरुषोत्तम इत्यत्र पुरुषाणामुत्तम इति षष्ठीविग्रहपक्षेऽपि समासस्य नानुपपत्तिः। निर्धारणावधेः पुरुषाणां निर्धारणहेतोरुत्तमत्वस्य सत्वेऽपि निर्धारितैकदेशस्य विष्णोरित्यस्य अभावात्। तस्याऽपि सन्निधौ पुरुषाणामुत्तमो विष्णुरित्येव, न तु पुरुषोत्तमो विष्णुरिति। एवं श्रेष्ठपदाभावे नृद्विज इति। द्विजपदाभावे नृश्रेष्ठ इति च भवत्येव। निर्धारणावध्यभावे तु न स्यात् षष्ठ्या एवाभावात्।

'तदशिष्यं संज्ञाप्रमाणत्वात् १२९५' इत्यादिनिर्देशात्। तेनार्थगौरवं बुद्धिमान्द्यमित्यादि सिद्धम्। सुहितार्थास्तृप्त्यर्थाः। फलानां सुहितः। तृतीयासमासस्तु स्यादेव। स्वरे विशेषः । सत्। द्विजस्य कुर्वन्कुर्वाणो वा। किंकर इत्यर्थः। अव्ययम्। ब्राह्मणस्य कृत्वा। पूर्वोत्तरसाहचर्यात्कृदव्ययमेव गृह्यते। तेन तदुपरीत्यादि सिद्धमिति रक्षितः। तव्ये। ब्राह्मणस्य कर्तव्यम्। तव्यता तु भवत्येव। स्वकर्तव्यम्। स्वरे भेदः। समानाधिकरणेन। गोर्धेनोरित्यादिषु 'पोटायुवति - ७४४' इत्यादीनां विभक्त्यन्तरे चरितार्थानां परत्वाद्बाधकः षष्ठीसमासः प्राप्तः सोऽप्यनेन वार्यते॥

---

52. तदशिष्यं संज्ञाप्रमाणत्वादित्यादिनिर्देशात्। संज्ञानां प्रमाणत्वात् संज्ञाप्रमाणत्वादिति गुणवाचिना प्रमाणत्वशब्देन सह तत्र समासविधानात् ज्ञापकादिति भावः। तत्स्थैश्च गुणैस्समासो वक्तव्य इत्यत्र वार्तिकम्। तस्मिन् गुणे वर्तन्त इति तत्स्थाः। ये गुणाः गुणवाचकाश्शब्दास्तैसह षष्ठी समस्यत इति। गुणे वृत्तिश्च शब्दानां वाचकत्वसम्बन्धेन। एवं च गुणवाचकैर्गुणवाचकैश्शब्दैरिति लब्धम्। न च एकेनैव विशेषणेनालं किं द्वयेनेति पुनरुक्तिदोषश्शंक्यः। ये गुणमुक्त्वा द्रव्यमभिदधति तेऽपि गुणवाचका एवेति। गुणमेव अभिदधति न तु द्रव्यमुक्तवन्तः। तेऽत्र गृह्यन्त इति तदर्थ पुनरुक्तिर्गुणवाचकपदस्येति न पुनरुक्तिदोषः। अन्यतरस्या वैयर्थ्यादिति भावः। तथा च शुक्लकृष्णादयश्शब्दाः गुणवाचका अपि द्रव्यं चाभिदधति। शुक्लः पटः, कृष्णो घट इति प्रतीतिषु इति हेतोर्नामि तत्स्था गुणाः। किन्तु गन्धः रूपमित्यादयः। न द्रव्यमभिदधतीति तत्स्था गुणाः। एतैस्तु समासस्स्यादेव। चन्दनगन्धः, घटरूपमित्यादि। यद्यपि शौक्ल्यं कार्ष्ण्यमित्यादयः गुणवाचका एव न द्रव्यवाचकाः। शौक्ल्यं घट इति द्रव्यसामानाधिकरण्येन प्रतीत्यभावात्। तथाऽपि शुक्लस्य भाव (गुण)श्शौक्ल्यमिति ष्यङ्प्रत्ययप्रकृतिभूतशुक्लपदस्य द्रव्यवाचकत्वेन शौक्ल्यमपि अप्राधान्येन द्रव्यवाचकमेवेति। (अप्राधान्यं च स्वप्रकृतिद्वारा ष्यङो द्रव्यवाचकत्वरूपम्।) तस्मात्काकस्य कार्ष्ण्यमित्यत्र न समासः। प्रत्ययस्य ष्यङो गुणवाचकत्वेऽपि प्रकृतेः कृष्णस्य द्रव्यवाचकत्वात्। कथन्तर्हि यथा वृक्षस्य गन्धो दूराद्घ्रातीति चेत् उच्यते। विभाषाधिकारस्थत्वेन वार्तिकस्यापि वैकल्पिकत्वात्। एतेन तस्थैर्गुणैः - गुणैश्च- शब्दैः-विभाषा षष्ठ्यन्तं समस्यत इति सूत्रवार्तिकयोर्निष्कृष्टार्थः। न च गुणैर्विभाषा समास इति सूत्रात् कथमर्थः ? सूत्रस्य निषेधशास्त्रत्वादिति वाच्यम्। निषेधस्यानित्यत्वेन विधेरपि पाक्षिकत्वस्य लब्धत्वात्। शुक्लादीनां गुणवाचकत्वं गुणिवाचकत्वं चामरः प्राह "गुणे शुक्लदयः पुंसि गुणिलिङ्गास्तु तद्वति" इति। फलानां तृप्तस्सुहितः फलतृप्तः फलसुहितः इति न भवति। फलानामिति करणस्य हेतोर्वा शेषत्वविवक्षायां षष्ठी । फलैस्तृप्त इति

**७०६। क्तेन च पूजायाम्** ।२।२।१२। 'मतिबुद्धि-३०८९' इति सूत्रेण विहितो यः क्तस्तदन्तेन षष्ठी न समस्यते। राज्ञां मतो बुद्धः पूजितो वा। राजपूजित इत्यादौ तु भूते क्तान्तेन सह तृतीयासमासः ॥

---

विग्रहे तु फलतृप्तः इति स्यादेव तर्हि षष्ठीनिषेधे किं फलमत आह-स्वरे विशेष इति। सत्- तौसदिति शतृशानचोस्सत्संज्ञा शत्रन्तेन (तस्य) शानजन्तेन(तस्य) वा योगे षष्ठी न समस्यत इत्यर्थः। शतृशानजोः क्रमेणोदाहरणं कुर्वन् कुर्वाण इति योगरूढ्या किंकर इति कुर्वत्कुर्वाणपदयोरर्थः। द्विजस्येति शेषे षष्ठी। स्वस्वामिभावसम्बन्धप्रतीतेः। कृदव्ययेनेवेह गृह्यते। कृन्मेजन्तः क्त्वातोऽसुन्कसुनि इति सूत्राभ्यामव्ययसंज्ञकं कृदन्तमित्यर्थः। तेन तद्धितश्चासर्वविभक्तिरिति तद्धितांन्ताव्ययैः स्वरादिनिपाताव्ययैश्च समासः स्यादेव ।अत एव तस्योपरि तदुपरि। उपरि उपरिष्टादिति तद्धितान्तमिदमव्ययम्। रक्षितः तन्नामा वैयाकरणः। कर्तव्यम्। तव्यत्तव्यानीयर इति। तव्यत्प्रत्यये तव्यत्प्रत्यये वा कृते कृञः कर्तव्यमिति रूपम्। स्वरे भेदः। तकाररेफौ स्वरविशेषार्थमिति तत्रैव सूत्रे वक्ष्यति। समानमधिकरणं यस्य तेन समानाधिकरणेन तक्षकस्य सर्पस्य यत्र तक्षकत्वं तत्रैव सर्पत्वमपीति समानम्। षष्ठ्यन्तार्थाधिकरणाभिन्नमधिकरणम्। षष्ठ्यन्तार्थः तक्षकत्वं तदधिकरणं तक्षकः तदभिन्नमधिकरणम् यस्य सर्पत्वस्य (सर्पत्वस्य च तक्षकादिकरणकत्वात्) तत् सर्पत्वं तक्षकत्वसमानाधिकरणम् । तेन सर्पत्ववाचिना सर्पपदेन तत् षष्ठ्यन्तार्थस्य तक्षकत्वस्य वाचकम् तक्षकपदम् न समस्यते। षष्ठ्यन्तस्य तदितरस्य च यत्राभेदसम्बन्धेन शाब्दबोधः प्रतीयते तत्र समासो नेति फलितम्। यथा तक्षकस्य सर्पस्येत्यत्र तक्षकाभिन्नस्य सर्पस्येत्यर्थः। अत्र सर्पस्येति पदमपि यद्यपि षष्ठ्यन्तं तथाऽपि समस्यमानात् षष्ठ्यन्तात् तक्षकपदादितर इतिवदितरस्येत्युक्तस्संगच्छते। ननु विशेषणं विशेष्येण बहुळमिति समानाधिकरणेन सह विशेषणसमासोऽत्र स्यादेवेत्यत आह-बहुळग्रहणान्नेति। क्वचिदप्रवृत्तेरिति भावः। विभक्त्यन्तरे चरितार्थानां प्रथमाविभक्तौ चरितार्थानाम् गोधेनुरिति तत्र समासाः। यद्यपि गौर्धेनुर्गोधेनुः तस्याः गोधेनोरिति भवति , तथाऽपि गोर्धेनोर्गोधेनोरिति षष्ठीसमासो न स्यादिति बोध्यम्। एवमेव तक्षक इति सर्पस्तक्षकसर्पस्तस्य तक्षकसर्पस्य इति समासः स्यादेव। तक्षकस्य सर्पस्य तक्षकसर्पस्येति न षष्ठीसमासः ।

53. क्तेन च पूजायाम्। मतिबुध्दिपूजार्थेभ्यश्चेति क्तविधायकसूत्रगतपूजापदस्य प्रकृतसूत्रे ग्रहणात्। क्तसान्निध्यादिदं पूजापदं तत्सूत्रस्योपलक्षकम्। मतिबुध्योरुपलक्षकमिति वा कृत्वा मतिबुद्धीति सूत्रे त्याः कौमुदीकारः। पूजायां मतौ बुद्धौ च विहितो यः क्त इत्यपि व्यख्यातुमुचितम्। मतिबुद्धिपूजानामेकत्र समावेशेन मतिबुद्धिसूत्राद्विहितस्यैव क्तस्य ग्रहणमत्र न तु भूते क्तान्तस्येति नास्मिन्नपि व्याख्याने दोषः। राजभिः पूजित इति कर्तरि तृतीया।

**७०७। अधिकरणवाचिना च** ।२।२।१३। क्तेन षष्ठी न समस्यते। इदमेषामासितं गतं भुक्तं वा॥

**७०८। कर्मणि च** ।२।२।१४। 'उभयप्राप्तौ कर्मणि ७२४' इति या षष्ठी सा न समस्यते। आश्चर्यो गवां दोहोऽगोपेन

**७०९। तृजकाभ्यां कर्तरि** ।२।२।१५। कर्त्रर्थतृजकाभ्यां षष्ठ्या न समासः। अपां स्रष्टा। वज्रस्य भर्ता। ओदनस्य पाचकः। कर्तरि किम्। इक्षूणां भक्षणमिक्षुभक्षिका। **पत्यर्थभर्तृशब्दस्य तु याजकादित्वात् समासः** ।**भूभर्ता** । कथं तर्हि घटानां निर्मातुस्त्रिभुवनविधातुश्च कलह इति। शेषष्ठ्या समास इति कैयटः॥

---

54. इदमेषाम्। अधिकरणवाचिनश्चेति षष्ठी। उदाहरणान्यपि तत्सूत्र एव विवृतानि ।

55. कर्मणि

। कर्मणीति नामैकदेशे नामग्रहणमितिवत् सूत्रैकदेशे सूत्रग्रहणम्। यस्मिन् षष्ठीविधायके सूत्रे कर्मणि पदं वर्तते, तस्य ग्रहणं तच्च उभयप्राप्तौ कर्मणि इति सूत्रमित्याह उभयप्राप्तावित्यादि। गवां दोह इत्यत्र गोदोह इति न स्यात्।

56. तृजकाभ्याम् कर्तरि। कर्त्रर्थे यस्तृच् अकश्च तदन्ताभ्याम् सह न षष्ठी समस्यते। अपां स्रष्टा । सृजधातोः ण्वुल्तृचाविति कर्त्रर्थे तृच्। "सृजिदृशोर्झल्यम" इतीत्यमागमः । मित्त्वादन्त्यादचः परः सृ अज् तृच्-यण् स्रज् तृच् व्रश्चेति षत्वम् स्रष् तृच् ष्टुना ष्टुः स्रष्टनु-सु- ऋदुशनस्पुरुदंसोऽनेहसाञ्च" इत्यनङ्-स्रष्टन्सु-सर्वनामस्थानत्वासंबुद्धावित्युपधा दीर्घः स्रष्टान् सु संयोगान्तलोपः न लोपः प्रातिपदिकान्तस्य-स्रष्टा इति रूपम्। एवमेव भर्ता। पाचक इति तु ण्वुलि रूपम्। युवोरनाकाविति वोरकादेशः। अकान्तमिदम्। इक्षुभक्षिका। अत्र भक्षिकाशब्दः भावे ण्वुजन्तः (ण्वुच्यपि णचयोरित्वे नलोपे ओरकादेश इति अक एव शिष्यति) व्रजस्य भर्तेत्यत्र भर्तृशब्दस्य पालकः स्वामी अर्थः। भूभर्तेत्यत्र तु भूपतिरिति पतिरर्थः इति भेदः। त्रिभुवनविधातुः। विपूर्वकस्य डुदाङ्धातोः कर्तरि तृजन्तम् विधातेति।तेन तृजकाभ्याम् कर्तरि इति निषेधात्। त्रिभुवनस्य विधातुरित्येव भवितव्ये, त्रिभुवनविधातुरिति कथं प्रायुङ्क्त । भवभूतिर्भोजचरित्रे इत्यत आह। शेषषष्ठ्या समास इति। सर्वोऽप्ययम् प्रतिषेधः कारकषष्ठ्या एव न शेषषष्ठ्या इति भावः।अपां स्रष्टेत्यत्र कर्तृकर्मणोः कृतीति कर्मणि षष्ठी। त्रिभुवनविधातेत्यत्र तु कर्मत्वादि विवक्षायां शेषषष्ठी इति बोध्यम्। तृजकाभ्याम् कर्तरीति सूत्रे कर्मणीति नानुवर्तितम्, अव्यभिचारात्। कर्त्रर्थतृजकाभ्याम् योगे कर्तरि षष्ठ्या असंभवेन कर्मणि षष्ठ्या एव सिद्धत्वात् ।

**७१०। कर्तरि च** ।२।२।।१६। कर्तरि षष्ठ्या अकेन न समासः। भवतः शायिका। नेह तृजनुवर्तते। तद्योगे कर्तुरभिहितत्वेन कर्तृषष्ठ्या अभावात्॥**७११। नित्यं क्रीडाजीविकयोः** ।२।२।१७। एतयोरर्थयोरकेन नित्यं षष्ठी समस्यते। उद्दालकपुष्पभञ्जिका। क्रीडाविशेषस्य संज्ञा। 'संज्ञायाम्-३२८६' इति भावे ण्वुल्। जीविकायां। दन्तलेखकः। तत्र क्रीडायां विकल्पे जीविकायां 'तृजकाभ्यां कर्तरि-७०९' इति निषेधे प्राप्ते वचनम्।।**७१२। पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे** ।२।२।१। अवयविना सह पूर्वादयः समस्यन्ते एकत्वसंख्याविशिष्टश्चेदवयवी। षष्ठीसमासापवादः। पूर्वं कायस्य पूर्वकायः। अपरकायः 'एकदेशिना किम्। पूर्वं नाभेः कायस्य॥ एकाधिकरणे किम्। पूर्वश्छात्राणाम्। सर्वोऽप्येकदशोऽह्ना समस्यते। 'संख्याविसाय - २३८' इति ज्ञापकात्। मध्याह्नः। सायाह्नः। केचित्तु सर्वोऽप्येकदेशः कालेन समस्यते न त्वह्नैव। ज्ञापकस्य सामान्यापेक्षत्वात्। तेन मध्यरात्रः। उपारताः पश्चिमरात्रगोचरा इत्यादि सिद्धमित्याहुः॥

---

57. शायिका। शयनं शायिकेति भावे ण्वुल्। भवत इति कर्तरि षष्ठी।

58. जीविका जीवनम् दन्तलेखकः। दन्तानां लेखकः तष्टा इति यावत्। दन्तलेखनमस्य जीवनमित्यर्थः। उद्धालकस्य पुष्पभञ्जिका उद्दालकपुष्पभञ्जिका। कर्तृकर्मणोः कृतीति कर्मणि षष्ठी। नन्वत्र कृद्योगा षष्ठी समस्यत इति वार्तिकादेव समासः सिद्ध्यति। नच तृजकाभ्यामिति निषेधश्शङ्क्यः। कर्तरि अकर्त्रर्थे तृजकाभ्यामेव । तत्र निषेधेन भञ्जिकेत्यस्य भावार्थक ण्वुलन्तत्वान्न निषेध इति किमनेन क्रीडाग्रहणेनेत्यत आह। क्रीडायाम् विकल्पे प्राप्ते। नित्यार्थमिति। विभाषाधिकारस्थत्वेन वार्तिककृतषष्ठ्या वैकल्पिकत्वान्नित्यिार्थमिति भावः। नन्वेवं नित्यग्रहणं मास्तु, प्राप्तस्य पुनर्विधानेनैव नित्यत्वज्ञापनादत आह जीविकामित्यादि लेखक इति कर्त्रर्थक ण्वुलन्तमतस्तृजकाभ्यामिति तत्र निषेध इति तद्बाधनाय सूत्रस्यावश्यकत्वान्न ज्ञापकत्वम् वैयर्थ्यहेतुरभावादिति भावः।

59. पूर्वापरेति - पूर्वापराधरोत्तरम्। एकदेशिना। एकाधिकरणे इति पदच्छेदः। पूर्वादीनां चतुर्णां समाहारः पूर्वापराधरोत्तरं। कर्तृ एकाधिकरणे इति तृतीयार्थे सप्तमी (एकाधिकरणेनेति शब्दापेक्षया लाघवात्।)। एकेति भावप्रधानो निर्देशः। एकस्य एकत्वस्य अधिकरणमाधार एकाधिकरणं तेन एकश्चासौ देशश्च एकदेशः अवयवः। (अवयवसङ्घातस्यावयविनः एकप्रदेशो ह्यवयवः) एकदेशोऽस्यास्तीत्येकदेशी। तेन एकाधिकरणाभिन्नेनावयविनेत्यर्थः। समस्यते वा इति सूत्रार्थः। षष्ठी इति सूत्राद्यस्समासः प्राप्तस्तस्यापवादोऽयं समासः। फलन्तु षष्ठ्यन्तस्यापूर्वनिपातः । पूर्व कायस्य अर्थविशेषणविवक्षया नपुंसकत्वं पूर्वपदस्य । पूर्वमर्थ पूर्वो भाग इत्यर्थः । काय

**७१३ । अर्धं नपुंसकम्** ।२ ।२ ।२ । समांशवाच्यर्धशब्दो नित्यं क्लीबे स प्राग्वत् । . **एकविभक्तावषष्ठ्यन्तवचनम्** ॥ एकदेशिसमासविषयकोऽयमुपसर्जनसंज्ञानिषेधः । तेन पञ्चखट्वी इत्यादि सिद्ध्यति । अर्धं पिप्पल्याः अर्धपिप्पली । क्लीबे किम् । ग्रामार्धः । द्रव्यैक्य एव । अर्धं पिप्पलीनाम् ।

---

इत्यवयवी एकाधिकरणश्चेति तेन सह समासः पूर्वकायः। पूर्वं नाभेः कायस्य। नाभिरवयवो न त्ववयवी। नाभेरिति पञ्चमी। नाभिमवधीकृत्य यः पूर्वभागस्स कायस्यावयव इति प्रकृतार्थः। तेन नाभेरत्र अवयवित्वविवक्षाऽपि नेति न समासः। नाभिपदेन व्यवधानात् कायपदेनाप्येकदेशिना न समासः यदा तु नाभ्यवयवविवक्षया पूर्वं नाभेरिति वचनं तदा पूर्वनाभिरिति समासस्स्यादेव। स्वपूर्वावयवं प्रति नाभेरेकदेशत्वात्। नाभेः पूर्वभाग इत्यर्थः। नाभेरित्यवयवावयविभावसंबन्धे षष्ठी। शेष इति षष्ठी पूर्वश्छात्राणाम् । छात्राणामिति शेषषष्ठी । तेन न निर्धारणषष्ठीत्वादेव न समासोऽत्रेति नेदं प्रत्युदाहरणमिति शङ्क्यम्। शेषषष्ठीप्रयोजकसम्बन्धस्तु समुदाय समुदायिभावरूपः। छात्रसमुदायघटकीभूतसमुदाय्यभिन्नः पूर्व इति शाब्दबोधः। सामान्यापेक्षत्वात् सामान्यमपेक्षत इति सामान्यापेक्षं तस्य भावस्तत्वम्। तस्मात् ज्ञापकं कर्तृ सामान्याकारेण ज्ञापयति। न विशेषाकारेणेत्यङ्गीकारादिति भावः। प्रकृते ज्ञापकं सायपूर्वस्याह्न इति वचनम्। सामान्याकारेण सर्वोप्येकदेशस्सायादिः। कालेन कालवाचिनाह्नादि शब्देन समस्यत इति ज्ञापयतीति अह्नैव समस्यत इति वचनन्तु विशेषाकारेणेति बोध्यम्। "उपारताः पश्चिमरात्रगोचराः इति भारविः। रात्रेः पश्चिमः पश्चिमरात्रः। अहस्सर्वैकदेशेति रात्रेरच् प्रत्ययः।

60. एकविभक्तावषष्ठचन्तवचनम्। एकविभक्ति चापूर्वनिपात इति सूत्रस्थमिदं वार्तिकम्। एकविभक्तौ विशेष्यभूते अषष्ठचन्तस्य विशेषणस्य वचनं कर्तव्यम्। अषष्ठचन्तमेकविभक्तीति पठनीयमिति भावः। अषष्ठचन्तमित्येकविभक्तेर्विशेषणम्। नन्वेवमषष्ठचन्तवचनेन षष्ठचन्तस्य उपसर्जनसंज्ञानिषेधे प्राप्ते, कथं पञ्चखट्वेति अत आह। एकदेशिसमासविषय एवायमिति। षष्ठचन्तस्य उपसर्जनसंज्ञानिषेध एकदेशिसमासविषये न त्वन्यत्रेति भावः। द्रव्यैक्य एव। एकाधिकरण इत्यस्यानुवृत्या एकदेशिनो द्रव्यस्य एकत्व एव समासः। अर्धं पिप्पलीनामित्यादौ पिप्पलीनामिति विशेषणम् । अर्धं इति विशेष्यम्। भूतले घट इत्यत्र यथा भूतलं विशेषणं घटो विशेष्यञ्च तथा पिप्पल्यवयवोर्धमिति शाब्दबोधात्। पिप्पलीशब्दादवयवावयविभावसम्बन्धे शेषे षष्ठी ।

७१४। **द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम्** ।२।२।३। एतान्येकदेशिना सह प्राग्वद्वा। द्वितीयं भिक्षाया द्वितीयभिक्षा। एकदेशिना किम्। द्वितीयं भिक्षाया भिक्षुकस्य। अन्यतरस्यांग्रहणसामर्थ्यात् 'पूरणगुण-७०५' इति निषेधं बाधित्वा पक्षे षष्ठीसमासः। भिक्षाद्वितीयम्॥७१५। **प्राप्तापन्ने च द्वितीयया** ।२।२।४। पक्षे 'द्वितीयाश्रिता-६८६' इति समासः। प्राप्तो जीविकां प्राप्तजीविकः। जीविकाप्राप्तः। आपन्नजीविकः। जीविकापन्नः। इह सूत्रे द्वितीयया अ इति छित्वा अकारोऽपि विधीयते। तेन जीविकां प्राप्ता स्त्री प्राप्तजीविका। आपन्नजीविका॥।

---

61. द्वितीयं भिक्षाया भिक्षुकस्य। भिक्षुकस्य सम्बन्धि यदद्वितीयं तद्भिक्षाया अवयव इत्यर्थः। अत्र द्वितीयभिक्षाभिक्षुकस्येति स्यादेव। किन्तु द्वितीयभिक्षुको भिक्षाया इति न स्यात्। द्वितीयस्य भिक्षुकानवयवत्वात्। ननु द्विभाषाधिकारेणैव विकल्पे सिद्धे किमत्रान्यतरस्यां ग्रहणेनेत्यत आह-पक्षे षष्ठीसमास इति। अयं भावः- अव्ययानामनेकार्थत्वादन्यतरस्यामः वैपरीत्यमत्रार्थः। तथा च द्वितीयादीन्येकदेशिना सह समस्यन्ते। वैपरीत्येन-एकदेशी द्वितीयादिभिस्सह समस्यत इति चार्थद्वयं लब्धम्। स चैकदेशी प्रकरणात् षष्ठ्यन्तमेव। ननु षष्ठीति सूत्रादेव षष्ठीसमासस्स्यादिति। किमनया कुकल्पनया अत आह-पूरणगुणेति निषेधं बाधित्वेति। द्वेस्तीयः द्वितीयः तेस्सम्प्रसारणञ्च तृतीयः षट्करीति चतुरो डटि धुक् चतुर्थः। चतुरश्छयतावाद्यक्षरलोपश्चेति तुर्यः । एते पूरणप्रत्ययान्ता इति पूरणगुणसूत्रं षष्ठीम्बाधत इति तद्बाधनाय पुनरत्र षष्ठीविधानमिति भावः। षष्ठ्यन्तस्य षष्ठीसमासे पूर्वनिपातात् भिक्षाद्वितीयमिति ।

62. प्राप्तापन्ने च द्वितीयया-प्राप्तापन्ने इत्यस्य प्रगृह्यत्वेऽपि प्रकृतिभावाभावः। तेन एङः पदान्तादतीति पूर्वरूपम्। प्राप्तापन्ने-अप्राप्तापन्ने इति इदं प्राचीनमतम्। नवीनमतमाह। द्वितीयया-अ-इति छेद इति। अकस्सवर्णे दीर्घः। द्वितीयया इति। अ इति लुप्तप्रथमाकम्। प्राप्तापन्ने द्वितीयान्तेन समस्येते। अकारोन्तादेश्श्च स्यादित्यर्थः। यथा-प्राप्तो जीविकाम् प्रप्तजीविकः। गोस्त्रियोरुपसर्जनस्येति ह्रस्वात्। समासावयवस्य सुपो लुप्त्वाच्च प्राप्तशब्दत् शब्दात्सोः जीविकाशब्दादमश्च लुक्। जीविकाशब्दे आकारस्य ह्रस्वश्च प्राप्तजीविक आकारोन्तादेशः-प्राप्तजीविक इति प्रातिपदिकम् । समासत्वात् पश्चात्सा प्राप्तजीविकः। नन्वकारस्याकारविधानं व्यर्थमित्यत आह, जीविकां प्राप्ता स्त्री प्राप्तजीविका इति। अयम्भावः। प्राप्तजीविक इति समासात् स्त्रीत्वे अजाद्यत इति टापि स्थानिवद्भावेन आकारान्तत्वाट्टाप् न स्यादिति ह्रस्वस्याकारविधानम्। अकारादेशे तु स्थानिवद्भावेनाऽपि ह्रस्वान्त एव न तु दीर्घान्त इति ह्रस्वान्ताट्टाप् सुलभ एव।

**७१६।कालाः परिमाणिना** ।२।२।५।परिच्छेद्यवाचिना सुबन्तेन सह कालाः समस्यन्ते। मासो जातस्य यस्य स मासजातः। द्व्यहजातः। द्वयोरह्नोः समाहारो द्व्यहः। द्व्यहो जातस्य यस्य स इति विग्रहः॥ **उत्तरपदेन परिमाणिना द्विगोः सिद्धये बहूनां तत्पुरुषस्योपसंख्यानम्॥** द्वे अहनी जातस्य यस्य स द्व्यह्नजातः। 'अह्नोऽह्न-७९०' इति वक्ष्यमाणोऽह्नादेशः। पूर्वत्र तु 'न संख्यादेः समाहारे-७९३ इति निषेधः॥**७१७। सप्तमी शौण्डैः** ।२।१।४०।सप्तम्यन्तं शौण्डादिभिः प्राग्वद्वा। अक्षेषु शौण्डः अक्षशौण्डः। अधिशब्दोऽत्र पठ्यते। 'अध्युत्तरपादात्-२०७९' इति खः। ईश्वराधीनः॥

---

63. मासजातः। परिच्छेत्तुं योग्यः परिच्छेद्यः। तस्य शिश्वादेः वाचकं पदं प्रकृते जातः तेन सह परिच्छेदकं कालविशेषवाचकं मासपदं समस्यते। मासो जातस्य यस्य स मासजातशिशुः मासजात इत्यादिकं पदं परिच्छेद्यमेव। विशेष्यत्वेन शाब्दबोधेभिधत्ते न तु परिच्छेदकम्। यथा-मासजातो मृत इत्यादौ मासपरिमाणवान् जातो मृत्याश्रय इति न तु परिच्छेदकं जातपरिमाणाभिन्नो मास इति। तेन मासो जातस्येति न विग्रहः, किन्तु मासो जातस्य यस्य स मासजात इति। बहुव्रीहौ तु मासो जातो यस्येति विग्रहस्स्यात्। एतत्सूत्राभावे षष्ठीसमासेन जातमास इति स्यात्। ननु जातस्यैव प्राधान्यं न मासस्येति षष्ठीसमासप्रसक्तिरेव नास्ति। तत्र मासो जातस्येति मासस्य प्राधान्यप्रतीतेरिति चेन्मैवम्। वस्तुतो रूपस्यैव प्राधान्यमिति षष्ठी स्यात् प्रयोगतस्तु जातस्य प्राधान्यं ज्ञायते इति। ननु मासजातो मृत इति प्रयोगो बहुव्रीहिना निर्वाह्य एव। तेन मासविशेष्यकशाब्दबोधार्थ प्रकृतसूत्रमस्त्विति। मासो जातस्य (मासजात) इत्येव विग्रहकथनमुचितमिति चेदुच्यते। बहुव्रीहेरन्यपदार्थप्रधानत्वेन षष्ठीतत्पुरुषस्य पूर्वपदार्थप्राधान्येन च मासजात इत्यत्र जातविशेष्यकशाब्दबोधो न स्यादिति तदर्थमिदं सूत्रम् । मासपरिमितो जात इति शाब्दबोधात्। तच्च जातविशेष्यकत्वम्। मासो जातस्य यस्येति विग्रहे स्यादिति तथोक्तमिति तोष्टव्यम् । द्व्यहोजातस्य यस्येति विग्रहे द्व्यहजातः। द्वे अहनि जातस्य यस्येति विग्रहे द्व्यह्नजातः। ननु सुप्सुपेति द्वयोः पदयोरेव समास एतावता विधीयते। कथमधुना त्रयाणां पदानां द्वे-अहनि-जातस्य। इत्येषामित्यत आह-उत्तरपदेनेति -परिमाणिभूतोत्तरपदघटितस्सङ्ख्यापूर्वो द्विगुर्यथास्यात्तदर्थं बहूनां पदानां तत्पुरुषसमासः स्यादिति भावः।परिमाणिना समस्यमानं कालविशेषवाचिपदं विना सङ्ख्यापरिमाणिनोर्द्वयोस्समासासम्भवेन पदत्रयघटितोऽपि समासस्स्वीक्रियते । स च सङ्ख्यापूर्वत्वेन द्विगुरेव। ननु द्व्यह इति समाहारद्विगुर्यदा परिमाणिना समस्यते कालविशेषवाचकत्वात्तदा किमिति नाह्नादेशः।अत आह न सङ्ख्यादेरिति सुबन्तं सुबन्तेन सहेत्युक्तत्वेन समस्तपदमपि द्व्यः इति सुबन्तं जात इति सुबन्तेन समस्यत इति बोध्यम्, इति षष्ठी।

64. ईश्वराधीनः ईश्वरे अधि इति विग्रहः। अधिकरणे चेति सप्तमी । अक्षेषु शौण्डः ।

**७१८। सिद्धशुष्कपक्वबन्धैश्च** ।२।१।४१। एतैः सप्तम्यन्तं प्राग्वत्। सांकाश्यसिद्धः। आतपशुष्कः। स्थालीपक्वः। चक्रबन्धः॥**७१९। ध्वाङ्क्षेण क्षेपे** ।२।१।४२। ध्वाङ्क्षवाचिना सह सप्तम्यन्तं समस्यते निन्दायाम्। तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः। तीर्थकाकः॥ **७२०। कृत्यैर्ऋणे** ।२।१।४३। सप्तम्यन्तं कृत्यप्रत्ययान्तैः सह प्राग्वदावश्यके। मासे देयं ऋणम्। ऋणग्रहणं नियोगोपलक्षणार्थम्। पूर्वाह्णे गेयं साम॥ **७२१। संज्ञायाम्** ।२।१।४४। सप्तम्यन्तं सुपा प्राग्वत् संज्ञायाम्। वाक्येन संज्ञानवगमान्नित्यसमासोऽयम्। अरण्येतिलकाः। वनेकसेरुकाः। 'हलदन्तात्सप्तम्या-९६६' इत्यलुक्॥

---

65. ध्वांक्षेण क्षेपे तीर्थध्वांक्ष इति। न तीर्थाधिकरणकध्वाङ्क्षप्रतिपादकोऽयं शब्दः । किन्तु तत्तुल्यस्य निन्दितस्य पुंसः प्रतिपादक इतीदं ज्ञापयितुं विग्रहे तीर्थे ध्वांक्ष इवेतीवशब्दः प्रयुक्तः। तीर्थाधिकरणको ध्वांक्षवन्निन्दित इत्यर्थः। क्षेपे किम् तीर्थे ध्वांक्षामज्जन्ति ध्वांक्षः काकः ।

66. कृतैरृणे- ऋणे अधमर्णे आवश्यके च कृत्यप्रत्ययान्तैस्सह सप्तम्यन्तं समस्यते। आवश्यकाधमर्ण्ययोर्णिनिः। कृत्याश्च। इति आवश्यकाधमर्ण्ययोः कृत्यानां नियमितत्वेन तयोर्मध्ये एकस्य ग्रहणेऽपि अन्यदुपलक्षणतया भास्वत इत्याह। ऋणग्रहणं नियोगोपलक्षणार्थमिति। सूत्रे ऋणशब्दग्रहणमावश्यकोपलक्षणार्थमित्यर्थः। अमुमेवाभिप्रेत्य ऋणे आधमर्ण्ये आवश्यक चेति मया प्रोक्तम् । कौमुद्यान्तु ऋणशब्दादाधमर्ण्यार्थ स्पष्ट एवेति तमनुक्त्वा उपलक्षणतया भासितमावश्यकार्थं आवश्यके इत्युक्तवानिति बोध्यम्। आवश्यके चेत्युक्ते तु सुगमः पाठः। चात्सूत्रोक्त ऋणपदपरामर्शः. आधमर्ण्ये मासे देयम्। आधमर्ण्यद्योतनाय ऋण इति विशेष्यम्। अचो यदिति वा रोर्यत् इद्यतीति आत इत् देयम् । आवश्यके पूर्वाह्णे देयम्। आवश्यकत्वद्योतनाय सामेति विशेष्यम् अधिकरणे चेत्युभयत्रापि सप्तमी। कृत्यार्थाप्रयोगात्र कालेऽधिकरण इति षष्ठी। कृत्यप्रत्ययोऽप्यत्र अल्पल्कः कियदित्ययमेव गृह्यते। अपेतापोढसूत्रादल्पश इत्यस्य मण्डूकप्लुत्या अत्रान्वयात्। तच्च कृत्यैरित्यस्य विभक्तिविपरिणामेन विशेषणम्। अल्पकृत्यप्रत्ययान्तैरिति । प्रत्ययस्याल्पत्वञ्च स्वघटकीभूतानामचामल्पसङ्ख्याकत्वेन घटते। तस्माद्यत्र प्रत्यय एवाल्पः ।

67. अरण्ये तिलका इत्यादौ अरण्ये क्षुरका इत्यादिर्विग्रहो द्रष्टव्यः। नित्यसमासत्वेनास्वपदविग्रहत्वात्।

**७२२। क्तेनाहोरात्रावयवाः** ।२।१।४५। अह्नो रात्रेश्चावयवाः सप्तम्यन्ताः क्तान्तेन सह प्राग्वत्। पूर्वाह्णकृतम्। अपररात्रकृतम्। अवयवग्रहणं किम्। अह्नि दृष्टम्॥ **७२३। तत्र** ।२।१।४६। तत्रेत्येतत्सप्तम्यन्तं क्तान्तेन सह प्राग्वत्। तत्र भुक्तम्॥ **७२४। क्षेपे** ।२।१।४७। सप्तम्यन्तं क्तान्तेन प्राग्वन्निन्दायाम्। अवतप्तेनकुलस्थितं त एतत्॥ ७२५। **पात्रेसमितादयश्च** ।२।१।४८। एते निपात्यन्ते क्षेपे। पात्रेसमिताः। भोजनसमये एव संगता नतु कार्ये। गेहेशूरः। गेहेनर्दी। आकृतिगणोऽयम्। चकारोऽवधारणार्थः। तेनैषां समासान्तरे घटकतया प्रवेशो न। परमाः पात्रेसमिताः॥**७२६। पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** ।२।१।४९। 'विशेषणं विशेष्येण-७३६' इति सिद्धे पूर्वनिपातनियमार्थं सूत्रम्।

---

68. **क्तेनाहोरात्रावयवाः।** अह्नः पूर्वं पूर्वाह्ण इत्यह्नोऽवयवः। एकदेशिसमासोयम्। सप्तम्यन्तं चैतत्समस्तपदम्। क्तेन सह समस्यते पूर्वाह्णे कृतं पूर्वाह्णकृतं। सर्वोऽप्येकदेशः, काले न समस्यत इत्युक्तत्वेन पूर्वादिभिन्नोऽप्यपरशब्दः रात्रिशब्देन सह समस्यते। रात्रेरपरोऽपररात्रिः। तत्र कृतमपररात्रकृतम्। अह्नि दृष्टमित्यत्र तु अवयविन एवाह्नो ग्रहणं न तु तदवयवस्येति न समासः।

69. **पात्रे सम्मितादयश्च।** ननु क्षेप इत्यनेनैव क्तान्तेन सम्मितशब्देन सह सप्तम्यन्तं पात्रं समस्यत एवेति। पात्रे सम्मितशब्दस्य गणे पातोऽनर्थक इति चेन्मैवम्। अलुगर्थं निपातनमिति । ननु तत्पुरुषे कृति बहुलमित्यलुगपि स्यादेवेति चेत् तर्हि एतद्गणपठितानां समासान्तरे घटकतया प्रवेशो नेति अवधारणार्थकेन चकारेण ज्ञापितत्वात्तदर्थं पात्रे सम्मितग्रहणमिति विद्धि। गणे पाठाभावे तु परमावतप्तेन कुलस्थितमितिवत् परमपात्रे सम्मिता इति स्यादिति भावः। पात्रे सम्मितादय एव निपात्यन्ते न तु परमपात्रे सम्मितादय इति स्युरिति एतद्गणपठितस्य समस्तपदस्य न पुनरन्येन सह समास इति ज्ञेयम्।

70. **पूर्वकालशब्देन**-पूर्वकालाधिकरणकक्रियाश्रयो लक्ष्यते। तेन समानाधिकरणश्च उत्तर(अपर) कालाधिकरणकक्रियाश्रयञ्च पूर्वत्वस्य सप्रतियोगिकत्वात् । किमपेक्षयाऽयं पूर्व इति । पूर्वत्वं हि यत्किञ्चित्प्रतियोगिकं भवितुमर्हति। स च प्रतियोगी पूर्वापेक्षया पर एव। तदपेक्षयाऽस्य पूर्वत्वे एतदपेक्षया तस्य परत्वात्। यथा तस्मात्पूर्व इत्यत्र तत्प्रतियोगिकमस्य पूर्वत्वम्। पूर्वप्रतियोगिकतस्य परत्वञ्चार्थसिद्धम्। तस्मात् पूर्वकालसमानाधिकरणेनेत्यनेनैव पूर्वकालस्समानाधिकरणेनोत्तरकालेनेति लब्धम्। तयोस्तु स्वाधिकरणक्रियाश्रये लक्षणा। एवं पूर्वोक्तार्थसिद्धिः। स्नातानुलिप्तः पूर्वकालाधिकरणका क्रिया स्नानं तदाश्रयस्नातः, तत्समानाधिकरणः उत्तरकालाधिकरणकावलेपनक्रियाश्रयः।

एकशब्दस्य 'दिक्संख्ये संज्ञायाम्-७२७' इति नियमबाधनार्थं च। पूर्वं स्नातः पश्चादनुलिप्तः स्नातानुलिप्तः। एकनाथः। सर्वयाज्ञिकाः। जरन्नैयायिकाः। पुराणमीमांसकाः। नवपाठकाः। केवलवैयाकरणाः॥७२७। **दिक्संख्ये संज्ञायाम्** ।२।१।५०। समानाधिकरणेनेत्यापादपरिसमाप्तेरधिकारः। संज्ञायामेवेति नियमार्थं सूत्रम्। पूर्वेषुकामशमी। सप्तर्षयः। नेह। उत्तरा वृक्षाः। पञ्च ब्राह्मणाः॥७२८। **तद्धितार्थोत्तरपदसमाहारे च** ।२।१।५१। तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये प्राग्वद्वा। पूर्वस्यां शालायां भवः पौर्वशाल :।।

---

अवलिप्तः स्नातत्वावलिप्तयोरेकपुरुषाधिकरणकत्वात्। सामानाधिकरण्यं स्नातोऽनुलिप्त इत्येव विग्रहः । पूर्वपश्चात्पदप्रयोगस्तु पूर्वोत्तरकालाधिकरणकक्रियाश्रयत्वद्योतनाय। य स्नानानन्तरं चन्दनादिना लिप्तः स स्नातानुलिप्तः। ननु विशेषणं विशेष्येण बहुलमिति स्नातानुलिप्तादस्युरेवेति किमनेन सूत्रेणेत्यत आह-पूर्वनिपातनियमार्थमिति । स्नातानुलिप्तयोरुभयोरपि विशेषणत्वाविशेषेण उभयोरपि पर्यायेण पूर्वनिपातस्स्यादिति पूर्वकालिकस्यैव विशेषणस्य यथा पूर्वनिपातस्स्यात् तदर्थमिदमिति भावः। ननु विशेषणं विशेष्येण बहुलमित्युक्तं, न तु विशेषणेनेति कथमत्र विशेषणसमासस्त्वया शङ्कितमिति चेदुच्यते। बहुलग्रहणाद्विशेषणेनापीति। ननु पूर्वनिपातनियमाय पूर्वकालग्रहणमस्तु दिक्संख्ये संज्ञायामिति नियमबाधनाय एकग्रहणमस्तु। सर्वादिग्रहणं किमर्थं सर्वयाज्ञिका इत्यादिषु विशेषणस्य सर्वादेः पूर्वनिपातस्य विशेषणमिति सूत्रादेव लभ्यत्वादिति चेत्सत्यं तथापि बहुलग्रहणात्तत्र विशेषणस्य पूर्वनिपातोप्यनित्य एवेति यद्वा-सर्वे च ते विबुधाश्च सर्वविबुधा याज्ञिकाः। जरन्तश्च ते पटवश्च जरत्पटवो नैयायिकाः। पुराणाश्च ते वक्तारश्च पुराणवक्तारो मीमांसकाः। नवाश्च ते रम्याश्च नवरम्याः पाठकाः केवलाश्च ते योग्याश्च केवलयोग्या वैयाकरणा इत्यादिषूदाहरणेषु सर्वादीनामेव पूर्वनिपातो यथा स्यात्तदर्थमिदमिति ।

71. **तद्धितार्थोत्तरपदसमाहारे च**। दिक्सङ्ख्ये इत्यनयोरत्रानुवृत्तिः। तद्धितार्थश्च उत्तरपदञ्च समाहारश्च एतेषां समाहारः तद्धितार्थोत्तरपदसमाहारं तस्मिन्। द्वन्द्वान्ते श्रूयमाणायास्सप्तम्याः प्रत्येकमन्वयः। तद्धितार्थे उत्तरपदे समाहारे चेति। तद्धितार्थे विषये दिक्सङ्ख्ये प्राग्वद्वा। उत्तरपदे परतः दिक्सङ्ख्ये प्राग्वद्वा, समाहारे वाच्ये दिक्सङ्ख्ये प्राग्वद्वा इति सूत्रार्थः।पौर्वशालः तत्र भव इति तद्धितार्थे विषये सति दिग्वाचकम्पदम् । पूर्वस्यामिति समानाधिकरणेन शालायामित्यनेन समस्यते। पूर्वस्यां शालायां भव इति विग्रहवाक्यम्। तद्धितार्थे विषये किम्? पूर्वस्यां शालायां पूर्वशालायामिति माभूत्। संज्ञायामेवेति नियमेन समासाभावात्।पूर्वशालाप्रियः उत्तरपदं नाम येन यत्समस्यते

समासे कृते 'दिक्पूर्वपदादसंज्ञायां ञः-१३२८' इति ञः ॥ **सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः ॥** आपरशालः पूर्वा शाला प्रिया यस्येति त्रिपदे बहुव्रीहौ कृते प्रियाशब्दे उत्तरपदे पूर्वयोस्तत्पुरुषः। तेन शालाशब्दे आकार उदात्तः। पूर्वशालाप्रियः। दिक्षु समाहारो नास्त्यनभिधानात्। संख्यायास्तद्धितार्थे। षण्णां मातृणामपत्यं षाण्मातुरः। पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहाववान्तरतत्पुरुषस्य विकल्पे प्राप्ते ॥ **द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्** ॥

---

तत्पदद्वयात्परं तृतीयं पदमित्यर्थः। उत्तरपदे किम्? पूर्वा शाला पूर्वशालेति माभूत्। ननु पौर्वशाल इत्यत्र पूर्वशालाप्रिय इत्यत्र च पूर्वशब्दाट्टापः कथं लोप इत्यत आह। पुंवद्भाव इति। पूर्वपदस्य सर्वनामत्वेन सामान्यतस्सर्वत्रापि समासे सर्वनाम्नः पुंवद्भावो वक्तव्य इति वार्तिकात्पुंवद्भावातिदेशेन टापश्रवणमिति। पुंसीव पुंवत् भावो भवनं रूपस्येति शेषः-यथा-पुंसि रूपं तथैव स्त्रियामपि तद्रूपातिदेशः कर्तव्य इति। तेन पूर्वशब्दस्य पुंसि यथा ह्रस्वान्तत्वं तथैव स्त्रियामपीति लब्धम्। पौर्वशाला इत्यत्र शालापदे पूर्वशालाप्रिय इत्यत्र प्रियापदे च गोस्त्रियोरुपसर्जनस्येति ह्रस्वः। पूर्वशालाप्रिय इत्यत्र शालापदस्यानुपसर्जनत्वेन न ह्रस्वत्वम् तद्धितार्थे विषये, दिक् । अन्यदप्युदाहरणमाह। अपरशाला इति। अपरस्यां शालायां भव इति विग्रहः। भवार्थे ञ प्रत्ययः ञित्वादादिवृद्धिः। सङ्ख्यायां तद्धितार्थे इदमुदाहरणमिति शेषः। तद्धितार्थोत्तरपदयोर्दिक्समासमुक्त्वा सङ्ख्यासमासं वक्तुमादौ तद्धितार्थे दर्शयत्युदाहरणमिति भावः। षाण्मातुरः तद्धितार्थे प्रकृते अपत्यार्थे विषये सति सङ्ख्यावाचि षण्णामिति पदं स्वसमानाधिकरणेन मात्रूणामिति पदेन सह समस्यते षण्णां मात्रूणामिति विग्रहः। अलौकिकविग्रहस्तु षट् आम् मातृ आम् अण् प्रत्ययः, सुब्लुक् समासावयवत्वात्। षट् मातृ आम् यरोऽनुनासिक इत्यनुनासिको णः। षण् मातृ अण् णित्वादादिवृद्धिः षाण्मातृ अण् मातुरुत्सङ्ख्येत्युदादेशः षाण्मातुरः यद्वा अणप्रत्यय उदादेशश्च युगपदेव मातुरुत्सङ्ख्येति सूत्रादेव उभयोर्विहितत्वात्। षट् आम् मातुर् आम् अण् इति स्तिथे वृद्ध्यादिकं बोध्यम् अवान्तरतत्पुरुषस्य उत्तरपदे परतोऽनेन विहितस्य बहुव्रीहिघटकीभूतस्य तत्पुरुषस्येत्यर्थः। विकल्पे प्राप्ते विभाषाधिकारस्थत्वादित्यर्थः वार्तिकं पठति द्वन्द्वतत्पुरुषयोरिति उत्तरपदे परतः पूर्वपदयोर्विहितस्य द्वन्द्वस्य तत्पुरुषस्य च नित्यत्वं वक्तव्यमित्यर्थः।

72. पञ्चगवधनः । पञ्च गावो धनं यस्येति विग्रहे धनमित्युत्तरपदे परतः संख्यावाचि पञ्चपदं समानाधिकरणेन गोपदेन समस्यत इति तयोस्तत्पुरुषः । पञ्च जस् गो जस् धन सु इत्यलौकिकविग्रहवाक्ये सुब्लुकि पञ्च गो - धन सु - समासान्तष्टच्-

**७२९। गोरतद्धितलुकि** ।५।४।९२। गोन्तात्तत्पुरुषाट्टच् स्यात् समासन्तो न तद्धितलुकि। पञ्चगवधनः॥ **७३०। संख्यापूर्वो द्विगुः** ।२।१।५२। 'तद्धितार्थ-७२८' इत्यत्रोक्तस्त्रिविधः संख्यापूर्वो द्विगुः स्यात्॥ **७३१। द्विगुरेकवचनम्** ।२।४।१। द्विग्वर्थः समाहार एकवत्स्यात्। 'स नपुंसकम्-८२१' इति नपुंसकत्वम्। पञ्चानां गवां समाहारः पञ्चगवम्॥**७३२। कुत्सितानि कुत्सनैः** ।२।१।५३। कुत्स्यमानानि कुत्सनैः सह प्राग्वत्। वैयाकरणखसूचिः। मीमांसकदुर्दुरूढः॥**७३३। पापाणके कुत्सितैः** ।२।१।५४। पूर्वसूत्रापवादः। पापनापितः। आणककुलालः॥

---

एचोऽयवायावः पञ्च गव-धन सु-बहुव्रीह्यवयवस्य सुब्लुक् पञ्चगवधनः। न च पूर्वमेव धनशब्दादपि सुब्लुग् स्यादिति वाच्यम्। तत्पुरुषानवयवत्वेन तस्यालुक्त्वात्। समासात्सुपि पञ्चगवधनः । अथ समाहारे वाच्ये दिक्समासस्यानभिधानादभावेति संख्यासमासस्य सद्भावात्तमुदाहर्तुमुपक्रमते पञ्चानाम् गवाम् समाहार इति समाहारस्य वाच्यत्वम्। वैवक्षिकमेव अभिधेयपञ्चगोपदाभ्याम् समाहारार्थालाभात्।

73. सङ्ख्यापूर्वो द्विगुः- अत्र पूर्वसूत्रं सर्वमनुवर्तते। तद्धितार्थोत्तरपदसमाहारेषु दिक्पूर्वस्सङ्ख्यापूर्वश्च समासौ विहितौ यौ द्वौ तयोर्मध्ये सङ्ख्यापूर्वस्य तत्पुरुषस्य द्विगुरिति संज्ञा। एवं द्विगुसंज्ञया विशेषविहितया तत्पुरुषसंज्ञाया बाधितत्वेन द्विगुश्चेति द्विगोस्तत्पुरुषसंज्ञा विहिता। तत्पुरुषस्यैव द्विगुरित्यवान्तरसंज्ञेति भावः। द्विगोस्तत्पुरुषसंज्ञाविधानफलं गोरतद्धितलुकेति दर्शितमेव। यद्यपीदं सूत्रं षाण्मातुरः पञ्चगवधनः इत्यत्रैव वक्तुं शक्यम् । तयोर्द्विगुत्वात् तथापि द्विगुसंज्ञा फलं तत्र नास्तीति न तत्रोक्तमिति बोद्धव्यम् ।

74. स नपुंसकमिति-नपुंसकत्वम्, स नपुंसकम् समाहरे द्विगुर्द्वन्द्वश्च नपुंसकं स्यादिति वक्ष्यत्यर्थमस्य परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति। परवल्लिङ्गापवादत्वेनास्य सूत्रस्य परवल्लिङ्गसूत्रव्याख्यानानन्तरमेव अस्य वचनं युक्तमिति तत्रैवैतस्य व्याख्यानं क्रियत इति भावः। पञ्चगवं पञ्चानां गवां समाहार इति लौकिकविग्रहः। पञ्च जस् गो जस् इत्यलौकिकः, सुब्लुकि गोरतद्धितलुकीति टचि, पञ्चगव एकत्वेन नपुंसकत्वेन च सोरम् पञ्चगवम्।

75. कुत्सितान् कुत्सनैः। कुत्सितानि अवक्षिप्यमाणानि। अवक्षिप्यमाणार्थबोधकानि पदानीति यावत्। कुत्सनैरवक्षेपार्थप्रतिपादकैस्सह समस्यन्ते- खसूचित्वं दुर्दुरूढत्वञ्च कुत्सनमिति ताभ्यां हेतुभूताभ्यां वैयाकरणमीमांसकयोः कुत्सितत्वावगमात् वैयाकरणखसूचिः मीमांसकदुर्दुरूढ इति समासः। एतत्सूत्राभावे तु विशेषणं विशेष्येण बहुलमिति खसूचिवैयाकरणः दुर्दुरूढमीमांसकः इति स्यादिति बोध्यम्। परान् दुष्टं यथातथा य उत्क्षिपति स दुर्दुरूढः। दुर्भाषीति यावत्।

76. उपमानानि सामान्यवचनैः- उपमानवाचकानि पदानि सामान्यवाचकैः पदैस्सह

**७३४। उपमानानि सामान्यवचनैः** ।२।१।५५। घन इव श्यामो घनश्यामः। इह पूर्वपदं तत्सदृशे लाक्षणिकमिति सूचयितुं लौकिकविग्रहे इवशब्दः प्रयुज्यते। पूर्वनिपातनियमार्थं सूत्रम्॥

---

समस्यन्ते इति यद्यर्थस्तर्हि समानाधिकरणेनेत्यापादपरिसमाप्तेरधिकार इत्युक्तत्वेन उपमानवाचकानां साधारणधर्मवाचकैस्सह सामानाधिकरण्यं न घटेत। (नास्तीति) समासो न घटेत उपमानस्य चन्द्रादेरधिकरणं गगनादिकम्। साधारणधर्मस्य शोभादेरधिकरणन्तु चन्द्रादिकमिति भेदात्। यदि तु तक्षकस्य सर्पस्येत्यत्र भावप्राधान्येन तक्षकत्वसर्पत्वयोस्समानमधिकरणम् तक्षक इति यथोक्तं तथा प्रकृते भावप्राधान्येनापि चन्द्रत्वाधिकरणं चन्द्र एव। शोभात्वाधिकरणं शोभैव न तु चन्द्र इति न सामानाधिकरण्यम्। धर्मधर्मिणोश्शोभाचन्द्रयोर्भेदात्। तद्भावयोरपि भेद एवेति यदि पुनः समानाधिकरणेनेत्यस्य स्वसमानाधिकरण्येनेत्यर्थमविवक्ष्य स्वत्वसमानाधिकरणेति विवक्ष्यते, तदानीं चन्द्रत्वाधिकरणसमानाधिकरणवत्त्वं शोभाया घटत इति समासस्स्यादित्युच्यते। नैवमपि सामर्थ्याभावात्। न हि चन्द्र इव शोभा चन्द्रशोभेति समासः क्वापि दृश्यते । किञ्च सामान्यैरित्युक्तेऽपि सामान्यवाचिभिरित्यर्थलाभे किं वचनग्रहणेनेति वचनस्य आनर्थक्यं चास्मिन्पक्षे प्रसज्यते । तस्मात् सामान्यमुक्तवन्तस्सामान्यवचनाः इतः पूर्वं सामान्यमुक्त्वा इदानीं तद्विशिष्टं द्रव्यमभिदधतीति सामान्यविशिष्टवाचकैरित्यर्थस्स्वीक्रियते। तच्च सामान्यविशिष्टमुपमेयमेव उपमानत्वस्य सप्रतियोगिकत्वात्। स्वस्य स्वेन समासायोगाच्च। उपमानवाचिनोर्द्वयोस्समानाभ्युपगमेऽपि सामर्थ्याभावाच्च। ननु उपमानान्युपमेयैरित्येव सूत्र्यताम् यद्वा उपमानस्य सप्रयोगिकत्वेन उपमेयलाभात्। उपमानानीत्येव सूत्र्यताम्। किमनेन गुरुसूत्रकरणेनेति चेन्मैवम्। चन्द्र इव मुखं चन्द्रमुखमिति माभूत्। अयम्भावः। उपमानवाचकस्य केवलोपमेयवाचिना न समासः। किन्तु साधारणधर्मविशिष्टोपमेयवाचिना यथा घनश्यामः श्याम इति न गुणवचनम् किन्तु गुणवद्द्रव्यवचनम्। नापि केवलद्रव्यवचनं मुखादिवत्। उपमानान्युपमेयैरित्युक्ते तु चन्द्रमुखमिति केवलद्रव्यवाचिनापि समासस्स्यादिति। किञ्च उपमितं व्याघ्रादिभिरिति वक्ष्यमाणेनोपमितसमासेन परेण अस्य सूत्रस्य बाधोऽपि न स्यात्। तत्र उपमेयस्य पूर्वनिपातात्। अत्र उपमानस्य पूर्वनिपाताच्च सूत्रवैयर्थ्यभिया बाधाभावे तु पुरुषव्याघ्रः व्याघ्रपुरुषः इति पर्यायता स्यात्। व्याघ्रादिभिरिति विशेषणगणपाठान्न पर्यायता तत्रेति चेत्तर्हि व्याघ्रादेराकृतिगणत्वेन कृष्णो घन इव कृष्णघनः घनकृष्ण इति च पर्यायता स्यात्। (कृष्णो वासुदेवः) । ननु सामान्याप्रयोगे इत्युपमितस्य सङ्कोचितत्वेन सामान्यप्रयोगे उपमानसमासो निर्बाध एव। सामान्याप्रयोगे तु विशेषविहितत्वेन उपमितसमास एवेति न पर्यायतेति चेन्मैवम्। घन इव श्यामो राम इत्यत्र घनराम

**७३५। उपमितं व्याघ्रादिभिः सामान्याप्रयोगे** ।२।१।५६। उपमेयं व्याघ्रादिभिः सह प्राग्वत्साधारणधर्मस्याप्रयोगे सति। विशेष्यस्य पूर्वनिपातार्थं सूत्रम्। पुरुषव्याघ्रः। नृसोमः। व्याघ्रादिराकृतिगणः। सामान्याप्रयोगे किम्। पुरुषो व्याघ्र इव शूरः ।**७३६। विशेषणं विशेष्येण बहुलम्** ।२।१।५७। भेदकं समानाधिकरणेन भेद्येन बहुलं प्राग्वत्। नीलमुत्पलं नीलोत्पलम्। बहुलग्रहणात्क्वचिन्नित्यम्। कृष्णसर्पः। क्वचिन्न। रामो जामदग्न्यः॥ **७३७। पूर्वापरप्रथमचरमजघन्य. समानमध्यमध्यमवीराश्च** ।२।१।५८। पूर्वनिपातनियमार्थमिदम्। पूर्ववैयाकरणः। अपराध्यापकः॥ **अपरस्यार्धे पश्चभावो वक्तव्यः**॥

---

श्याम इति स्यात्, न तु घनश्यामो राम इति उपमेयेनैव समासविधानं न तु सामान्यवचनेनेति हेतोः यथाश्रुतसूत्रपक्षे तु सामान्यविशिष्टद्रव्यवचनत्वेन (राम इत्युपमेयपदान्तरसत्वेऽपि) श्यामपदेन समासस्स्यादेव। ननु सामान्यविशिष्टमुपमेयमेवेति पुरोक्तं हि तस्य कथमधुना निर्वाह इति चेन्नैष दोषः। श्यामाभिन्नो राम इत्यभेदसंबन्धेन। श्यामस्याप्युपमेयवाचकत्वात्। नन्वेवमपि उपमानसामान्यवाचकयोः सामर्थ्याभावान्न समासोपपत्तिरत आह। पूर्वपदं तत्सदृशे लाक्षणिकमिति घनसदृशाभिन्नश्श्याम इति सामर्थ्यमस्तीति नानुपपत्तिरिति भावः।

77. विशेष्यस्य पूर्वनिपातार्थं सूत्रम्–विशेष्यस्योपमितस्येत्यर्थः पुरुषो व्याघ्र इवेत्यत्र व्याघ्रसदृशाभिन्नः पुरुष इति बोधे पुरुषस्य विशेष्यत्वादुपमितस्य असति त्वस्मिन् सूत्रे विशेषणस्य पूर्वनिपातस्याद् व्याघ्रपुरुष इति विशेषणं विशेष्येण बहुलमिति सूत्रादिति भावः। एतद्भावबोधनार्थमेव उपमितस्येत्यनुक्त्वा विशेष्यस्येत्युक्तं कौमुद्यामिति बोद्धव्यम्।

78. विशेषणं विशेष्येण बहुलम्–विशेषणं भेदकं व्यावर्तकमिति यावत् यथा उत्पलमित्युक्ते नीलोत्पलरक्तोत्पलश्वेतोत्पलानां त्रयाणामप्यविशेषेण ग्रहणं सम्भवति। नीलमुत्पलमित्युक्ते तु नीलत्वग्रहणाद्रक्तसितोत्पलयोर्व्यावृत्तिः। व्यावृत्तौ हेतुर्नीलत्वमेवेति तदेव व्यावर्तकमित्युच्यते। क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः। क्वचिद्विभाषा क्वचिदन्यदेवेति बहुलग्रहणात् क्वचिन्नित्यं प्रवृत्तिः कृष्णसर्प इत्यत्र, क्वचिदप्रवृत्तिः रामो जामदग्न्य इत्यत्र, क्वचिद्विभाषा नीलमुत्पलमिति नीलोत्पलमिति च क्वचिदन्यदेव निश्चितञ्च प्रचितञ्च निश्चप्रचमिति विशेषणद्वयस्य समासः। ऋजुश्चासावायतश्च ऋज्वायतः। यद्वा–विशेष्यस्यापि पूर्वनियमः। व्यंसकाश्च ते मयूराश्च मयूरव्यंसकाः।

79. पूर्वपरेति– पूर्वादयस्समानाधिकरणेन समस्यन्ते। विशेषणसूत्रेणास्य गतार्थतामाशङ्क्याह पूर्वनिपातनियमार्थमिति। बहुलग्रहणेन तत्रानियमादस्यावश्यकमिति भावः। अपरस्यार्धे पश्चभावो वक्तव्यः। अपरस्य अर्धे परतः पश्चादेशस्स्यात्समासे कर्मधारये इत्यर्थः। अन्यथा अपरस्यार्ध इति षष्ठीसमासेऽपि पश्चादेशस्स्यात्। बहुलग्रहणाद्भविष्यति।

अपरश्चासावर्धश्च पश्चार्धः। कथमेकवीर इति। 'पूर्वकालैक-७२६' इति बाधित्वा परत्वादनेन समासे वीरैक इति हि स्यात्। बहुलग्रहणाद्भविष्यति॥

**७३८। श्रेण्यादयः कृतादिभिः** ।२।१।५९। **श्रेण्यादिषु च्व्यर्थवचनं कर्तव्यम्॥** अश्रेणयः श्रेणयः कृताः श्रेणीकृताः॥

**७३९। क्तेन नञ्विशिष्टेनानञ्** ।२।१।६०। नञ्विशिष्टेन क्तान्तेनानञ् क्तान्तं समस्यते। कृतं च तदकृतं च कृताकृतम्॥ **शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्॥** शाकप्रियः पार्थिवः शाकपार्थिवः। देवब्राह्मणः॥**७४०। सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः** ।२।१।६१।

---

विशेषणसूत्रेणैव एकस्य पूर्वनिपातः। क्वचिदन्यदेवेति बहुलार्थग्रहणेन विशेष्यस्यापि पूर्वनिपाताङ्गीकारात् पूर्वस्योदाहरणन्तु वीरपुरुष इति द्रष्टव्यम्।

80. श्रेण्यादयः कृतादिभिः—श्रेण्यादिषु च्व्यर्थवचनमिति वार्तिकम्। अभूततद्भावे च्विः—च्व्यर्थाः श्रेण्यादयः, कृतादिभिस्समानाधिकरणैस्सह समस्यन्ते—श्रेणयः कुता इत्येव विग्रहः। अभूततद्भावार्थद्योतनाय अश्रेणय इत्यस्य विग्रहे प्रवेशः। श्रेणि-वि-जस् कृत-जस् इत्यलौकिकविग्रहः। क्विप इव च्वेस्सर्वापहारः, सुब्लुक् श्रेणि कृत प्रत्ययलोपे प्रत्ययलक्षणन्यायेन च्वौ चेति दीर्घः। श्रेणीकृत ततो जस् श्रेणीकृताः। च्व्यर्थवचनम् किम् श्रेणयः कृतास्सम्यगत्र समासो माभूत्।

81. शाकपार्थिवानामिति समासस्तु विशेषणं विशेष्येणेति सूत्रात् । वार्तिकारम्भस्तूत्तरपदलोपार्थं तच्चोत्तरपदं पूर्वपदावयवमेव गृह्यते। न तु समासचरमावयवम्। शाकप्रियः पार्थिव इत्यत्र पार्थिवपदलोपापत्त्या शाकपार्थिवेत्यस्यासिद्धेः। पूर्वपदावयवमुत्तरपदमित्यनेन पूर्वपदं समस्तपदमेव ग्राह्यम् न त्वसमस्तम्। असमस्ते पदे अवयवस्य पदत्वासम्भवात्। तस्मात् अवान्तरसमासघटकीभूतोत्तरपदलोपः कर्तव्यमित्यर्थः। अमुमेव समासं लौकिकमध्यमपदलोपिसमासमाहुः। शाकप्रियः पार्थिव इति पदत्रयमध्यगत प्रियपदलोपदर्शनात् शाकपार्थिव इत्यत्र शाकप्रिय इत्यवान्तरसमासो बहुव्रीहिः। देवीब्राह्मण इत्यत्र देवपूजक इति षष्ठीतत्पुरुष इत्यूह्यम्।

82. सन्महदिति—सदादयस्समानाधिकरणैः पूज्यमानैस्सह समस्यन्ते। वक्ष्यमाणेन आन्महतस्समानाधिकरणजातीययोरिति सूत्रेणेति भावः। पूज्यमानैः किमुत्कृष्टा गौरिति सदादिशब्दसम्बन्धेन येषां पूज्यत्वमुच्यते, तेऽत्र पूज्यमानाः यथाश्रुतार्थे तु गोरपूज्यत्वापत्तेः। तेन उत्कृष्टगौरित्यपि स्यादेव पूज्यो गौरित्यर्थे विवक्षिते सति सन्महत्परमोत्कृष्टः पूज्ये इति सुवचनम् पूज्यार्थे वर्तमानस्सदादय इत्यर्थात्।

सद्वैद्यः। वक्ष्यमाणेन महत आकारः। महावैयाकरणः। पूज्यमानैः किम्। उत्कृष्टो गौः। पङ्कादुद्धृत इत्यर्थः ॥**७४१। वृन्दारकनागकुञ्जरैः पूज्यमानम्** ।२।१।६२। गोवृन्दारकः॥ व्याघ्रादेराकृतिगणत्वादेव सिद्धे सामान्यप्रयोगार्थं वचनम्॥

**७४२। कतरकतमौ जातिपरिप्रश्ने** ।२।१।६३। कतरकठः। कतमकलापः। गोत्रं च चरणैः सहेति जातित्वम्॥

**७४३। किं क्षेपे** ।२।१।६४। कुत्सितो राजा किंराजा। यो न रक्षति॥

**७४४। पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृ-श्रोत्रियाध्यापकधूर्तैर्जातिः** ।२।१।६५।

**७४५ । तत्पुरुषः समानाधिकरणः कर्मधारयः** ।१।२।४२।

---

83. पूज्यमानं श्लाघनीयमित्यर्थः। गौर् बृन्दारकः। गोबृन्दारकः कपिः कुञ्जरः कपिकुञ्जरः। पुमान्नागः पुन्नागः। बृन्दारकादिपदसमभिव्याहारबलाद्गवादीनां पूज्यत्वं प्रतीयत इति पूज्यमानास्ते। ननु गवादीनामुपमितत्वात् बृन्दारकादीनां व्याघ्रादिवदुपमानत्वादुपमितसमासेनैवास्य गतार्थत्वमित्यत आह। सामान्याप्रयोगार्थमिति। सामान्यधर्मप्रयोगे सत्यपि समासो यथा स्यात्तदर्थमित्यर्थः। तेन उन्नतः कपिकुञ्जर इत्यादि सिद्धम्। ननु उपमितसूत्रे सामान्याप्रयोगो मास्तु-किमनेन सूत्रेणेति चेन्मैवम्। बृन्दारकनागकुञ्जराणामेवोपमानानां प्रयोगे सामान्यधर्मप्रयोगेऽपि समासो यथा स्यात्। व्याघ्रादीनां प्रयोगे तु सामान्यप्रयोगे यथा न स्यादित्येतन्नियमार्थमिदं सूत्रमावश्यकम्। तेन पुरुषो व्याघ्र इव शूर इत्यत्र शूरः पुरुषव्याघ्र इति न भवति।

84. कतरकठः। शाखाध्येतृवाची शब्दो जातिकार्यंभरी इति कठेन प्रोक्तां शाखामधीत इति कठः। अध्येतृणो लुक् कतरः कठः कतरकठः। एवं कतरकलापः।

85. किमह क्षेपे-क्षेपार्थवृत्ती किंशब्दस्समानाधिकरणेन समस्यते वा। नित्यसमासत्वाभावेऽपि कुत्सितो राजेति विग्रहकथनं किमहकुत्सितार्थबोधकत्वद्योतनार्थं राज्ञः कुत्सितत्वञ्च। प्रजापालनराहित्यमेवेति मत्वाह यो न रक्षतीति।

86. पोटायुवतीति- एभिः पदैः जातिवाचकश्शब्दस्समस्यते वा समानाधिकरणैः। इभपोटेत्यादीन्युदाहरणान्यनुपदं वक्ष्यति ।

87. तत्पुरुष इति। यद्यपीदं सूत्रं पूर्वकालैकेत्यत्रैव उपन्यसनीयं तथापि कर्मधारयसंज्ञाप्रयुक्तफलाभावान्न तत्रोपन्यस्तमिति बोध्यम्। तेन स्नातानुलिप्तादिषु कर्मधारयसमास एव। अधिकृतसमानाधिकरणपदकस्तत्पुरुषः कर्मधारयसंज्ञकः। प्रतिसूत्रं समानाधिकरणपदाभावादधिकृतेति विशेषणम्।

88. पुंवत् कर्मधारय । अत्र स्त्रियाः पुंवदिति सूत्रात् भाषितपुंस्कादनूङित्यस्यात्रान्वयः । तदेतदाह -भाषितपुंस्कादित्यादिना। न कोपधाया इत्यारभ्य पुंवद्भावस्य निषिद्धत्वात् पुनरत्र पुंवद्ग्रहणं

**७४६। पुंवत्कर्मधारयजातीयदेशीयेषु** ।६।३।४२। कर्मधारये जातीयदेशीययोश्च परतो भाषितपुंस्कात्पर ऊङ्भावो यस्मिंस्तथाभूतं पूर्वं पुंवत्। पूरणीप्रियादिष्वप्राप्तः पुंवद्भावोऽनेन विधीयते। महानवमी। कृष्णचतुर्दशी। महाप्रिया। तथा कोपधादेः प्रतिषिद्धः पुंवद्भावः कर्मधारयादौ प्रतिप्रसूयते। पाचकस्त्री। दत्तभार्या। पञ्चमभार्या। स्रौघ्नभार्या। सुकेशभार्या। ब्राह्मणभार्या। एवं। पाचकजातीया। पाचकदेशीयेत्यादि। इभपोटा। पोटा स्त्री पुंसलक्षणा। इभयुवतिः। अग्निस्तोकः। उदश्वित्कतिपयम्। गृष्टिः सकृत्प्रसूता, गोगृष्टिः। धेनुर्नवप्रसूतिका, गोधेनुः। वशा वन्ध्या, गोवशा। वेहत् गर्भघातिनी, गोवेहत्। बष्कयणी तरुणवत्सा, गोबष्कयणी। कठप्रवक्ता। कठश्रोत्रियः। कठाध्यापकः। कठधूर्तः॥

---

कृतम्। ननु स्त्रियाः पुंवदिति सूत्रे अपूरणिप्रियादिष्वित्यपनीयपुंवदिति सूत्रं त्यज्यतां तेन पूरणीप्रियादिष्वपि स्त्रियाः पुंवदिति सूत्रादेव पुंवद्भावः प्राप्नोतीति चेन्मैवम्। बहुव्रीहौ विषये अपूरणीप्रियादिष्विति नियम आवश्यक एव। अन्यथा कल्याणीप्रिय इत्यादावपि बहुव्रीहौ पुंवत्स्यात् कर्मधारय एव पूरणीप्रियादिष्वनेन पुंवद्भावो विधीयते हि। तस्मात् समासमात्रे पूरणीप्रियादिषु पुंवद्भावो यथा न स्यात् तदर्थं स्त्रियां पुंवदिति सूत्रे अपूरणिप्रियादिष्विति निषेध आवश्यकः। समासविशेषे कर्मधारये पूरणीप्रियादिषु पुंवद्भावविधानार्थमिदं च सूत्रमावश्यकमिति यथाश्रुतं रमणीयम्। कर्मधारये पूरण्यां पुंवद्भावस्योदाहरणं महानवमी कृष्णचतुर्दशी इति नवमी चतुर्दशीशब्दयोः पूरणप्रत्ययान्तत्वात्। तयोः पूरण्योः परतः पूर्वस्य महती–कृष्णा इति स्त्रीवाचकयोरनूङोःभाषितपुंस्कयोः (महत्त्वकृष्णत्वयोरेव स्त्री पुं प्रवृत्तिनिमित्तत्वेन प्रवृत्तिनिमित्तैक्ये सति महान् कृष्ण इति पुमांसमुक्तवंताविति भाषितपुंस्कौ) पुंवद्भावः महत्–कृष्ण–इति आन्महत इत्याकारान्तादेशे महानवमी–कृष्णचतुर्दशी– महती नवमी–कृष्णा चतुर्दशी–इति विग्रहः। कर्मधारये प्रियादिषु पुंवद्भावमाह महती प्रिया महाप्रिया प्रतिप्रसूयते प्रतिविधीयते पुनर्विधीयत इति यावत्। पाचकस्त्री स्त्रीशब्दस्यापूरणीप्रियादित्वेन अस्मिन् परे पूर्वस्य स्त्रीवाचकस्य पाचका इत्यस्य पुंवद्भावे स्त्रियाः पुंवदिति प्राप्ते–न कोपधाया इति तन्निषेधः कर्मधारय इति पुनः पुंवद्भावः पाचकस्त्री दत्तभार्या दत्तशब्दस्य संज्ञात्वेन संज्ञापूरण्योरिति पुंवद्भवनिषेधे कर्मधारयेति पुनस्तस्य विधिः दत्ता भार्या दत्तभार्या। पञ्चमभार्या पञ्चमीशब्दस्य पूरणप्रत्ययान्तत्वेन पुंवन्निषेधे पुनरनेन विधिस्तस्य। पञ्चमी भार्या पञ्चमभार्या। स्रौघ्नभार्या–स्रुघ्नदेशे भवा स्रौघ्नी तद्धितस्यारक्तविकार इति पुंवद्भावनिषेधः। कर्मधारयेति पुनर्विधिः स्रौघ्नी भार्या

**७४७। प्रशंसावचनैश्च** ।२ ।१ ।६६। एतैः सह जातिः प्राग्वत्। गोमतल्लिका। गोमचर्चिका। गोप्रकाण्डम्। गवोद्धः। गोतल्लजः। प्रशस्ता गौरित्यर्थः। मतल्लिकादयो नियतलिङ्गा न तु विशेष्यनिघ्नाः। जातिः किम्। कुमारीमतल्लिका ॥**७४८। युवा खलतिपलितवलिनजरतीभिः** ।२ ।१ ।६७। पूर्वनिपातनियमार्थं सूत्रम्। लिङ्गविशिष्टपरिभाषया युवतिशब्दोऽपि समस्यते। युवा खलतिः युवखलतिः। युवतिः खलती युवखलती। युवजरती। युवत्यामेव जरतीधर्मोपलम्भेन तद्रूपारोपात्सामानाधिकरण्यम्॥ **७४९। कृत्यतुल्याख्या अजात्या** ।२ ।१ ।६८। भोज्योष्णम्। तुल्यश्वेतः। सदृशश्वेतः। अजात्या किम्। भोज्य ओदनः। प्रतिषेधसामाध्यार्द्विशेषणसमासोऽपि न॥

---

स्रौघ्नभार्या। सुकेशभार्या स्वांगाच्चेत् इति सुकेशीशब्दस्य पुंवद्भावनिषेधः। ब्राह्मणभार्या ब्राह्मणीशब्दस्य जातेश्चेति पुंवद्भावनिषेधः। ब्राह्मणीभार्या ब्राह्मणभार्या। पोटायुवतीति सूत्रस्योदाहरणान्यानि – इभपोटेत्यादीनि। इभपोटा । इभपोटा इभयुवतिः। इभयुवतिः कर्मधारये पुंवद्भावः। अग्निः स्तोकः अग्निस्तोकः, अल्पाग्निरित्यर्थः। गौः गृष्टिः गोगृष्टिः । पुंसि स्त्रियाञ्च गोशब्दस्य ओकारान्तत्वमव्यभिचरितमिति नात्र पुंवद्भावः, न वा तत्प्रयुक्तो निषेध इति बोध्यम्। गौर्वेहत् गोवेहत् वेहच्छब्दात्र ङीषादिकम्। स्त्रियां नियतत्वेनाविधानात्। वेहत् वेहतौ वेहत इति तकारान्तस्त्रीलिङ्गोऽयं शब्दः कठेन प्रोक्तमधीत इति कठः। गोत्रञ्च चरणैस्सहेति जातिवाचकोऽयं कठः प्रवक्ता कठप्रवक्ता।

89. ननु गौः प्रकाण्डम्। गोप्रकाण्डमित्यादौ विभिन्नलिङ्गयोः कथं विशेषणविशेष्यभावप्रयुक्तं सामानाधिकरण्यमत आह नियतलिङ्गा इति। नियतलिङ्गानां विशेषणविशेष्याणां विभिन्नलिङ्गत्वेति न सामानाधिकरण्यक्षतिः। लिङ्गभेदं प्रति नियतलिङ्गत्वस्यैव हेतुत्वात्।

90. युवतिः खलती युवखलती यूनस्तिरिति युवन् शब्दाद्यः स्त्री प्रत्ययस्तिर्विहितः तस्य लोपस्स्यात्पुम्वद्भावातिदेशात्। युवनित्यस्य कृदन्तत्वेन प्रातिपदिकत्वान्न लोपः। युवखलती युवजरती। या युवतिः लम्बकुचत्वादिभिर्जरतीव भाति सा युवजरती। युवत्वम् सहजम् जरत्वन्तु धर्मत आरोपितमिति जरत्यभिन्ना युवतिरिति शाब्दबोधभानान्नात्र सामर्थ्याभावश्शङ्क्यः।

91. कृत्यतुल्याख्या अजात्या । कृत्यप्रत्ययान्ताः तुल्यार्थाश्च (अजात्या जातिभिन्नेन समस्यन्त इति तुनार्थः। प्राप्तेरभावेन निषेधवैयर्थ्यात्) भोज्यमिति कृत्यान्तं तस्य उष्णमिति

७५०। **वर्णो वर्णेन** ।२।१।६९। समानाधिकरणेन सह प्राग्वत्। कृष्णसारङ्गः। **७५१। कडाराः कर्मधारये** ।२।२।३८। कडारादयः शब्दाः कर्मधारये वा पूर्वं प्रयोज्याः। कडारजैमिनिः। जैमिनिकडारः॥ **७५२। कुमारः श्रमणादिभिः** ।२।१।७०। कुमारी श्रमणा कुमारश्रमणा। इह गणे श्रमणा प्रव्रजिता गर्भिणीत्यादयः स्त्रीलिङ्गाः पठ्यन्ते। लिङ्गविशिष्टपरिभाषाया एतदेव ज्ञापकं बोध्यम्॥ **७५३। चतुष्पादो गर्भिण्या** ।२।१।७१। चतुष्पाज्जातिवाचिनो गर्भिणीशब्देन सह प्राग्वत्। गोगर्भिणी॥

---

गुणवाचिना समासः भोज्यमुष्णमिति विग्रहः। ननु जातिरिति निवृत्तमित्युक्तेनैवालम्। किमजात्येति सूत्रनिर्देशेनेत्यत आह–विशेषणसमासोऽपि नेतीति। अयम्भावः जातिरिति पदस्यात्राननुवृत्तौ तु जातिना अजातिना च कृत्यतुल्यानां समासः प्राप्तः। तयोर्मध्ये जात्या सह समासः कृत्यतुल्यार्थानां नेष्यत इति सूत्रे अजात्येत्युक्तम्। एवं स्थिते यदि जात्या सह विशेषणमिति सूत्रात्समासः स्वीक्रियेत तर्हि अजात्येति व्यर्थं स्यात्। अजात्येत्यनुक्तावपि जात्यजातिसाधारण्येन समासलाभात्। तस्मात् अजात्येति व्यर्थं सद्विशेषणसमासमपि जात्या सह बाधित्वा स्वांशे चरितार्थमिति प्रतिषेधसामर्थ्यात् अजात्येति पर्युदासप्रतिषेधसामर्थ्यात्। यद्वा–जात्या नेति प्रसज्यप्रतिषेधसामर्थ्यात् न चाप्राप्तिशश्क्यते शङ्कितुम्। विशेषणसूत्रात् जात्या सह समासप्रसक्तेः। भोज्य ओदन इत्यत्र ओदनत्वं जातिः।

92. कडारजैमिनिः। कडारः कपिलः पिङ्ग इति वर्णवाचित्वात् कडार शब्दस्य वर्णोवर्णेनेति जैमिनिना समासः पूर्वनिपातनियमाभावाय सूत्रं, न तु समासविधानार्थमिति तथैव व्याख्यातं कौमुद्याम्।

93. कुमारश्श्रमणादिभिः–कुमारशब्दः श्रमणादिभिस्समानाधिकरणैस्सह समस्यते वा। ननु कुमारशब्दः पुम्स्त्वे वर्तते, श्रमणादयस्स्त्रीत्व इति कथं सामानाधिकरण्यमित्यत आह लिङ्गविशिष्टचेत्यादि सामानाधिकरण्याभावादेव समासेऽनुपपद्यमाने सति कुमारश्श्रमणादिभिरिति समासविधानं व्यर्थं सत् प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषां ज्ञापयित्वा कुमारेति प्रातिपदिकग्रहणेऽपि स्त्रीलिङ्गविशिष्टस्य कुमारीत्यस्य ग्रहणसम्भवेन सामानाधिकरण्यसत्त्वात् कुमारीश्रमणाद्योस्समासमुत्पाद्य चरितार्थमिति भावः।

94. स्वस्तिमती गर्भिणी– स्वस्तिमतीत्यनेन यद्यपि गौर्विवक्षिता विशेष्यभूतत्वेन, तथाऽपि न समासः। स्वस्तिमच्छब्दस्य चतुष्पाज्जातिवाचकत्वाभावात्। न हि स्वस्तिमतीति चतुष्पात् काचिज्जातिर्विद्यते । चतुष्पाद इत्यस्य चतुष्पाज्जातिवाचिन इति कौमुद्यामर्थकथनन्तु चतुष्पाज्जातिरिति वार्तिकं मनसि कृत्वैवेति बोध्यम्।

**७५४। मत्यूरव्यंसकादयश्च** ।२।१।७२। एते निपात्यन्ते। मयूरो व्यंसको मयूरव्यंसकः। व्यंसको धूर्तः। उदक्चावाक् च उच्चावचम्। निश्चितं च प्रचितं च निश्चप्रचम्। नास्ति किंचन यस्य सः अकिंचनः॥ (ग) **आख्यातमाख्यातेन क्रियासातत्ये**॥ अश्नीत पिबतेत्येवं सततं यत्राभिधीयते सा अश्नीतपिबता। पचतभृज्जता। खादतमोदता॥ (ग) **एहीडादयोऽन्यपदार्थे**॥ एहीड इति यस्मिन्कर्मणि तदेहीडम्। एहिपचम्। उद्धर कोष्ठादुत्सृज देहीति यस्यां क्रियायां सा उद्धरोत्सृजा। उद्धमविधमा। असातत्यार्थमिह पाठः॥ (ग) **जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति**॥ जहीत्येतत्कर्मणा बहुलं समस्यते आभीक्ष्ण्ये गम्ये समासेन चेत्कर्ताऽभिधीयत इत्यर्थः॥ जहिजोडः। जहिस्तम्बः।। नास्ति कुतो भयं यस्य सोऽकुतोभयः। अन्यो राजा राजान्तरम्। चिदेव चिन्मात्रम्॥**७५५। ईषदकृता** ।२।२।७। ईषत्पिङ्गलः॥ **ईषद्गुणवचनेनेति वाच्यम्॥** ईषद्रक्तम्॥।

---

95. मयूरव्यंसकेति। व्यंसकस्य विशेषणत्वेन विशेषणसूत्रात्समासे पूर्वनिपातः प्राप्त इति मयूरस्य पूर्वनिपातार्थं निपातनम् । उदक्च्यावाक्च उदगवाक् इति विशेषणसमासेन भवितव्ये, निपातनादेव उच्चावचमिति। एवं निश्चितप्रचितमिति भवितव्ये, निश्चप्रचमिति च । न च विशेष्याभावाद्विशेषणसमासो न स्यादिति वाच्यम्। बहुलग्रहणात् विशेषणेनापीत्युक्तत्वात्। उत्तरपदे विशेष्यत्वस्य विवक्षितत्वाद्वा। तिङा सह नञ् समासाभावेन तदर्थपकिञ्चननिपातनम् । सति तु निपातेन समासे उत्तरपदस्यास्तेर्लोपः, नञो नलोपश्च अकिञ्चन इति भवति । एवमेवाकुतोभय इत्यत्रापि बोध्यम् । किञ्चात्र कुतो भयमित्यपि समासो न स्यादिति तदर्थञ्च निपातनम्। अन्यो राजा अन्यराज इति भवितव्ये निपातनादेव राजान्तरमिति अव्ययमेतत्। चिदेव चिन्मात्रं निपातनादेवमत्र च समासः। आख्यातमाख्यातेन क्रियासातत्ये तिङन्तस्यैव आख्यातमिति पर्यायः क्रियायास्सततत्वे गम्यमाने बहुव्रीहावेव आख्यातयोस्सामानाधिकरण्यं विभिन्नविषयत्वेन अभेदसम्बन्धायोगात्। अश्नीत पिबत यस्यां सा अश्नीतपिबता। सातत्यद्योतनाय सततं यत्राभिधीयत इत्यस्य विग्रहे प्रवेशः। अश्नीतपिबतेति प्रातिपदिकाददन्तात् स्त्रीत्वे टाप्। 'एहीडादयोऽन्यपदार्थे' अन्यपदार्थे वर्तमाना एहीडादयः निपात्यन्ते। अन्यपदार्थ इत्यनेन बहुव्रीहित्वं लब्धम्। तथैवोदाहरति एहीड इति यस्मिंस्तदेहीडम्। एहीड इति एड एहीत्यर्थः।

96. ईषदकृता– ईषच्छब्दस्समानाधिकरणेन कृद्भिन्नेन समस्यते। ईषत्पिङ्गलः। सिध्मादिभ्यश्चेति पिङ्गशब्दात्सिध्मादिगणपठितात्स्वार्थे लच् प्रत्ययः। तद्धितान्तोऽयं शब्दः । ननु अकृतेत्युक्ते ईषद्रक्तमिति न स्यात्। क्तस्य कृत्त्वात्। गुणेतरवचनैश्च कृद्भिः समासः स्यादित्यव्याप्त्यतिव्याप्तिदोषौ स्यातामित्यत आह वार्तिककारः। ईषद्गुणवचनेनेति वक्तव्यम्। सूत्रयितव्यमित्यर्थः।

**७५६। नञ्** ।२।२।६। नञ् सुपा सह समस्यते॥ **७५७। नलोपो नञः** ।६।३।७३। नञो नस्य लोपः स्यादुत्तरपदे। न ब्राह्मणः, अब्राह्मणः॥ **७५८। तस्मान्नुडचि** ।६।३।७४। लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुडागमः स्यात्। अनश्वः। अर्थाभावेऽव्ययीभावेन सहायं विकल्पते। **रक्षोहागमलध्वसंदेहाः प्रयोजनम्** इति, **अद्भुतायामसंहितम्** इति च भाष्यवार्तिकप्रयोगात्। तेनानुपलब्धिरविवादोऽविघ्नमित्यादि सिद्धम्॥ **नञो नलोपस्तिङि क्षेपे**॥ अपचसि त्वं जाल्म॥ नैकधेत्यादौ तु नशब्देन 'सह सुप्सुपा ६४९' इति समासः॥ **७५९। नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या** ।६।३।७५।

---

97. नञ् स्वरादिषु नञः पाठादव्ययमिदम्। अव्ययमिति सूत्राद्यद्यपि नञ्समासलाभस्तथाऽपि अव्ययीभावसंज्ञया नपुंसकत्वादिकं माभूदिति नञ् इति पृथक्तत्पुरुषेषु सूत्रितमिति बोध्यम्। सुपेत्यिधिकारः समानाधिकरणेनेति समास इति च नञ्समानाधिकरणेन सुबन्तेन सह समस्यत इत्यर्थः। ञः इत्संज्ञया लोपः न इति शिष्यते।

98. न लोपो नञः। नेति लुप्तषष्ठीकं पदम्। न लोपः नञः इति छेदः। न ब्राह्मणः। अब्राह्मणः। नञ आरोपितत्वमर्थः। आरोपितो ब्राह्मण इति नञ्ब्राह्मणयोस्सामानाधिकरण्यमभेदसम्बन्धेनोह्यम्। तत्त्वबोधिन्यां नञो शिति न्यासोऽशङ्कि अशादेशः। शित्त्वात्सर्वादिशः।

99. अर्थाभावेऽव्ययीभावेन सहायं विकल्प्यते। अव्ययं विभक्तीति अव्ययीभावसमासोऽर्थाभावे विहितः। तस्य नित्यत्वेऽपि वैकल्पिकत्वम्। समानाधिकरणाधिकारे विहितस्य नञ्तत्पुरुषस्य असामानाधिकरण्येऽप्यर्थाभावे वैकल्पिके प्रवृत्तिश्च भाष्यवार्तिकाभ्यां सिद्धमिति भावः। अयं नञ्तत्पुरुषः अव्ययीभावेन सह अव्ययीभावश्च अर्थाभावे विषये विकल्प्येते भाष्यवार्तिककाराभ्यामिति शेषः। यथा श्रुतार्थः। असन्देहा इति भाष्यप्रयोगः। सन्देहो नाम भाव इत्यर्थः। अर्थाभावे नञ्तत्पुरुषोऽयम्। यद्वा सन्देहस्याभावोऽसन्देहः। रक्षा च ऊहा च आगमश्च लघुश्च असंदेहश्च रक्षोहागमलघ्वसन्देहाः। प्रयोजनं भाष्यस्येति भावः। असंहितमिति वार्तिकम्। संहिताया अभावो संहितमित्यव्ययीभावः। अव्ययन्तु नञेव। तथा च कर्मधारये तत्पुरुषे अव्ययीभावे च नञस्त्रेधाप्रवृत्तिर्घटकतयेति फलितम्। श्रमेण, अब्राह्मणः असन्देहः असंहितमित्युदाहरणत्रयम्।

100. न भ्राडित्यादि-एतेषु नञ्प्रकृत्या स्यात्, नञो नलोपो न स्यादिति यावत्। नन्वेतानि निपात्यन्त इत्युक्ते सर्वेष्टसिद्धिस्स्यादिति प्रकृत्या किम्। नञोऽत्रानुवृत्तिक्लेशेन च किमिति चेन्मैवम्। नगोऽप्राणिति सूत्रेष्विति सूत्रे प्रकृत्येत्यस्यानुवृत्तेरावश्यकत्वेन कृतमिहैव

पादिति शत्रन्तः। वेदा इत्यसुन्नन्तः। न सत्या असत्याः न असत्या नासत्याः। न मुञ्चतीति नमुचिः। न कुलमस्य नकुलम्। न खमस्य नखम्। न स्त्रीपुमान् नपुंसकम्। स्त्रीपुंसयोः पुंसकभावो निपातनात्। न क्षरतीति नक्षत्रम्। क्षरतेः क्षीयतेर्वा क्षत्रमिति निपात्यते। न क्रामतीति नक्रः। क्रमेर्डः। न अकमस्मिन्निति नाकः॥७६०। **नगोऽप्राणिष्वन्यतरस्याम्** ।६।३।७७। नग इत्यत्र नञ् प्रकृत्या वा। नगाः अगाः पर्वताः। अप्राणिष्विति किम्। अगो वृषलः शीतेन। 'नित्यं क्रीडा-७११' इत्यतो नित्यमित्यनुवर्तमाने।

**७६१। कुगतिप्रादयः** ।२।२।१८। एते समर्थेन नित्यं समस्यन्ते। कुत्सितः पुरुषः कुपुरुषः। 'गतिश्च २३' इत्यनुवर्तमाने॥

**७६२। ऊर्यादिच्विडाचश्च** ।१।४।६१। एते क्रियायोगे गतिसंज्ञाः स्युः। ऊरीकृत्य। उररीकृत्य। शुक्लीकृत्य। पटपटाकृत्य॥ **कारिकाशब्दस्योपसंख्यानम्**॥ कारिका क्रिया। कारिकाकृत्य॥

---

प्रकृतिपदमिति। अत एव नञोऽनुवृत्तिश्च कृतेति। न असत्या नासत्याः न चात्र नुडागमश्शङ्क्यः। तस्मान्नुडचीति लुप्तनकारान्नञः परस्यैव नुडागमविधानात्।

101. नगोऽप्राणिष्वित्यन्यतरस्याम्-प्राणिभिन्नार्थे वर्तमानो नगशब्दः तत्र नञ्प्रकृत्या वा स्यात्। नगे प्राणिष्वित्यन्यतरस्यामिति सुवचम्। अप्राणिषु नगे नञ् इति अर्थसौलभ्यात्। अगोवृषलश्शीतेन वृषलश्शूद्रः शीतेन हेतुना अगः न गच्छतीत्यर्थः।

102. कुगतिप्रादयः-नित्यसमासत्वादस्वपदविग्रहः। कोरुदाहरणम् कुपुरुष इति। प्रादीनामुदाहरणं। प्रगत आचार्यः प्राचार्य इति वक्ष्यति। गतेरुदाहरण्म् वक्ष्यत्यूरीकृत्येति। यद्यपि गतिश्चेति प्रादीनां क्रियायोगे गतिसंज्ञा विद्यते, तथाऽपि सुबन्तेनैव प्रादीनां समासो न तु तिङन्तेनेति तथाविधानां प्रादीनामगतित्वाद्गतिप्रादीनां पृथगुपादानम्।

103. ऊरीकृत्वा, ऊरीकृत्य। समासेऽनञ्पूर्वे क्त्वोल्यबिति ल्यप्, आशुक्लं शुक्लं कृत्वा शुक्लीकृत्य च्व्यन्तत्वाच्छुक्लेत्यव्ययम्। (बह्वल्पार्थाच्छसिति सूत्रादारभ्य समासान्ता इति सूत्रपर्यन्तं पञ्चम्यास्तसिलित्यारभ्य याप्ये पाशप् इति सूत्रपर्यन्तं विद्यमानानां अमामादीनाञ्च असर्वविभक्तिकानां तद्धितानां तद्धितश्चासर्वविभक्तिरित्यनेन अव्ययत्वात् शस् समासान्तमध्यगतस्य च्वेरप्यव्ययत्वमिति भावः। डाबोऽपि तत्रैव पाठात् यटपटा इत्यव्ययम्। कारिकाकृत्वा कारिकाकृत्य अस्मादेवोपसङ्ख्यानात्। स्वरादीनां चादीनां चाकृतिगणत्वेन कारिकेत्यव्ययम्। अनव्ययत्वे तु ल्यबादेशो न स्यात्। ल्यबाभावे गतिसंज्ञाप्रयुक्तसमासफलं न दृश्येत। एवमेव खाडादीनामप्यव्ययत्वञ्च द्रष्टव्यम्।

**७६३ । अनुकरणं चानितिपरम्** ।१ ।४ ।६२ । खाट्कृत्य । अनितिपरं किम् । खाडिति कृत्वा निरष्ठीवत् ॥ **७६४ । आदरानादरयोः सदसती** ।१ ।४ ।६३ । सत्कृत्य । असत्कृत्य ॥ **७६५ । भूषणेऽलम्** ।१ ।४ ।६४ । अलंकृत्य । भूषणे किम् । अलं कृत्वौदनं गतः । पर्याप्तमित्यर्थः । 'अनुकरणम्-७६३' इत्यादित्रिसूत्री स्वभावात्कृञ्विषया ॥ **७६६ । अन्तरपरिग्रहे** ।१ ।४ ।६५ । अन्तर्हत्य । मध्ये हत्वेत्यर्थः । अपरिग्रहे किम् । अन्तर्हत्वा गतः । हतं परिगृह्य गत इत्यर्थः ॥ **७६७ । कणेमनसी श्रद्धाप्रतीघाते** ।१ । ४ ।६६ । कणेहत्य पयः पिबति । मनोहत्य । कणेशब्दः सप्तमीप्रतिरूपको निपातोऽभिलाषातिशये वर्तते । मनःशब्दोऽप्यत्रैव ॥ **७६८ । पुरोऽव्ययम्** ।१ ।४ ।६७ । पुरस्कृत्य ॥ **७६९ । अस्तं च** ।१ ।४ ।६८ । अस्तमिति मान्तमव्ययं गतिसंज्ञं स्यात् । अस्तंगत्य ॥

---

104. आदरानादरयोर्वर्तमाने सदसती क्रियायोगे सति संज्ञास्स्युः। सत्कृत्वा, सत्कृत्य असत्कृत्वा असत्कृत्य एते सदसती अव्यये।

105. अलम्। स्वरादिषु पठितमिदमव्ययम्। भूषणपर्याप्तिशक्तिवारणवाचकम्। तत्र भूषणवाचकमेवालङ्क्रिया योगे गतिसंज्ञम् । कृञ् विषया तेन खाड्भूयेत्याद यः प्रयोगा न भवन्तीति भावः ।

106. अन्तरपरिग्रहे- अपरिग्रहे गम्यमाने न तु वाच्ये इति। अन्तश्शब्दस्य मध्यार्थकत्वात्।

107. कणे मनसि श्रद्धा प्रतिघाते-श्रद्धाप्रतिघाते गम्यमाने कणे मनसि गतिसंज्ञके। श्रद्धा प्रतिघातो नाम क्रियासिद्ध्यनन्तरं श्रद्धाया अपगमः। यद्वा श्रद्धाप्रतिघातस्तृप्तिरेव। कार्यकारणयोरभेदोपचारात्। यद्विषया तृप्तिरुत्पद्यते तद्विषया श्रद्धा अपगच्छतीति तृप्तिकार्यं श्रद्धाप्रतिघातः ।

108. पुरोऽव्ययम्-पुर इत्यव्ययम्। गतिसंज्ञं स्यात्कियायोगे। पुरस्कृत्य, पुरस्कृत्वा अव्ययं किम्। पुरः कृत्वा गतः। पत्तनानीत्यर्थः। ननु गतिसंज्ञाप्रयुक्तसमासस्य फलं ल्यबेवेति अनव्ययात्। क्त्वो ल्यब् न स्यादिति च। पुर इत्यव्ययमेवेह गृह्यत इति किमव्ययपदेनेति चेत् मैवम्। कारिकादिवन्निपातबलेन पत्तनार्थकस्यापि पुर इत्यस्य अव्ययत्वं स्यादिति। नन्वेवं कणे मनसीत्यत्राप्यव्ययमिति पदं वक्तव्यमेव। कणार्थकचित्तार्थबोधकयोरपि सप्तम्यन्तयोः कणे मनसि इत्यनयोरुक्तरीत्या अव्ययत्वापत्तेः। तर्हि तत्राप्यव्ययपदमपकृष्यतामेतत्सूत्रादिति। वस्तुतस्तु अव्ययमिति चिंत्यफलम्। ल्यप्फलकसमासप्रयोजकगतिसंज्ञाविषये अव्ययानव्यययोर्मध्ये अव्ययग्रहणस्यैव न्याय्यत्वात्। असति त्वव्यये निपातनादव्ययत्वमानेतव्यं स्यादिति- न च समासफलं सुब्लुगपि

**७७०। अच्छ गत्यर्थवदेषु** ।१ ।४ ।६९। अव्ययमित्येव। अच्छगत्य। अच्छोद्य। अभिमुखं गत्वा उक्त्वा चेत्यर्थः। अव्ययं किम्। जलमच्छं गच्छति॥ **७७१। अदोऽनुपदेशे** ।१ ।४ ।७०। अदःकृत्य। अदःकृतम्। परं प्रत्युपदेशे प्रत्युदाहरणम्। अदःकृत्वा॥ **७७२। तिरोऽन्तर्धौ** ।१ ।४ ।७१। तिरोभूय॥ **७७३। विभाषा कृञि** ।१ ।४ ।७२। तिरःकृत्य। तिरस्कृत्य। तिरःकृत्वा॥ **७७४। उपाजेऽन्वाजे** ।१ ।४ ।७३। एतौ कृञि वा गतिसंज्ञौ स्तः उपाजेकृत्य। उपाजेकृत्वा। अन्वाजेकृत्या अन्वाजेकृत्वा दुर्बलस्य बलमाधायेत्यर्थः॥ **७७५। साक्षात्प्रभृतीनि च** ।१ ।४ ।७४। कृञि वा गतिसंज्ञानि स्युः॥ **च्व्यर्थ इति वाच्यम्**॥ साक्षात्कृत्य। साक्षात्कृत्वा। लवणंकृत्य। लवणं कृत्वा। मान्तत्वं निपातनात्॥ **७७६। अनत्याधान उरसिमनसी** ।१ ।४ ।७५। उरसिकृत्य। उरसि कृत्वा। अभ्युपगम्येत्यर्थः। मनसिकृत्य। मनसि कृत्वा। निश्चित्येत्यर्थः। अत्याधानमुपश्लेषणं तत्र न। उरसि कृत्वा पाणिं शेते॥ **७७७। मध्ये पदे निवचने च** ।१ ।४ ।७६। एते कृञि वा गतिसंज्ञाः स्युरनत्याधाने। मध्येकृत्य। मध्ये कृत्वा। पदेकृत्य। पदे कृत्वा। निवचनेकृत्य। निवचने कृत्वा। वाचं नियम्येत्यर्थः॥ **७७८। नित्यं हस्ते पाणावुपयमने** ।१ ।४ ।७७। कृञि। उपयमनं विवाहः। स्वीकारमात्रमित्यन्ये। हस्तेकृत्य। पाणौकृत्य॥

---

सम्भवतीति ल्यबेवेति किमिति निर्धारणमिति वाच्यम्। अव्ययात्सुब्लुकं प्रति अव्ययस्यैव हेतुत्वात् अनव्ययादपि गतिसंज्ञाबलाल्लब्धस्य अव्ययत्वस्यैव हेतुत्वात् न समासफलं तदिति।

109 अच्छ गत्यर्थवदेषु इति छेदः अच्छेत्यव्ययं गतिसंज्ञं स्यात् गत्यर्थक्रियायोगे वदक्रियायोगे च। अर्थग्रहणं किम्, अच्छयात्य। वदेति किम् ? वचधातुयोगे माभूत्। अच्छोक्त्या यद्वा गत्यर्थधातुषु वदे च परतः अच्छगतिसंज्ञं धातोरेव क्त्वाप्रत्ययविधानात् क्त्वान्तेऽपि धातुत्वं न व्यभिचरति, गत्वेति गत्यर्थकगम्ल्धातोः क्त्वा प्रत्यये रूपम्। एवं यात्वेयादि अच्छवदित्वा। अच्छोद्य। वदेति किम् ? वचयोगे माभूत्। अच्छोक्त्वा जलमच्छं गच्छति। गच्छतौ परतः अनव्ययस्य अच्छस्य गतिसंज्ञाभावेन समासाभावान्न सुब्लुक्। अन्यथा अच्छगच्छतीति स्यादिति भावः, न च एङन्तेन सह समासस्य प्राप्तिरेव नास्तीति प्रत्युदाहरणमसंगतमिति वाच्यम्। क्रियायोग इत्यनेन गतिसंज्ञकानां तिङन्तैस्सह समासस्य ज्ञापितत्वात्। जलमच्छं गत्वा इति प्रत्युदाहरणन्तु समीचीनम्।

110. उरसिमनसी उरसिश्च मनसिश्च उरसिमनसी सप्तम्यन्तस्यानुकरणशब्दाविमौ।

**७७९। प्राध्वं बन्धने** ।१।४।७८। प्राध्वमित्यव्ययम्। प्राध्वंकृत्य। बन्धनेनानुकूलं कृत्वेत्यर्थः। प्रार्थनादिना त्वानुकूल्यकरणे। प्राध्वं कृत्वा॥**७८०। जीविकोपनिषदावौपम्ये** ।१।४।७९। जीविकामिव कृत्वा जीविकाकृत्य। उपनिषदमिव कृत्वा उपनिषत्कृत्य। औपम्ये किम्। जीविकां कृत्वा। प्रादिग्रहणमगत्यर्थम्। सुपुरुषः। अत्र वार्तिकानि॥ **प्रादयो गताद्यर्थे प्रथमया**॥ प्रगत आचार्यः प्राचार्यः॥ **अत्यादयः क्रान्ताद्यर्थे द्वितीयया**॥ अतिक्रान्तो मालामतिमालः॥ **अवादयः क्रुष्टाद्यर्थे तृतीयया** अवक्रुष्टः कोकिलया अवकोकिलः॥ **पर्यादयो ग्लानाद्यर्थे चतुर्थ्या**॥ परिग्लानोऽध्ययनाय पर्यध्ययनः॥ **निरादयः क्रान्ताद्यर्थे पञ्चम्या**॥निष्क्रान्तःकौशाम्ब्या निष्कौशाम्बिः॥ **कर्मप्रवचनीयानां प्रतिषेधः**॥ वृक्षं प्रति।।**७८१। तत्रोपपदं सप्तमीस्थम्** ।३।१।९२। 'सप्तम्यन्ते पदे कर्मणि २९१३' इत्यादौ वाच्यत्वेन स्थितं कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात्तस्मिंश्च सत्येव वक्ष्यमाणः प्रत्ययः॥

---

111. वृक्षं प्रति । सति तु समासे प्रतिवृक्ष इति स्यात् । अव्ययीभावस्तु स्यादेव। वृक्षे वृक्षे प्रतिवृक्षम् ।

112 तत्रोपपदं सप्तमीस्थम् । धातोरित्यधिकारसूत्रात् समनन्तरमिदम् । तेन सन्निहितत्वात् धात्वधिकार एवास्य प्रवृत्तिः । धातोरिति सूत्रादारभ्य आतृतीयपरिसमाप्तेर्धात्वधिकारः। तथा च धात्वधिकारे सप्तमीस्थमुपपदसंज्ञं स्यात्तत्र सतीत्यर्थः सप्तम्यां वर्तत इति सप्तमीस्थम् । सप्तम्या च तदन्तविधिः। तत्र वर्तनञ्च वाच्यत्वसम्भवेन तदेतदाह सप्तम्यन्ते पदे वाच्यत्वेन स्थितमिति। धात्वधिकारान्तर्गतसूत्रघटकी-भूतसप्तम्यन्तपदवाच्यवाचकमिति निष्कृष्टार्थस्सप्तमीस्थपदस्य लक्ष्ये लक्षणसमन्वयं दर्शयति । कर्मणीत्यदौ कुम्भादिपदमिति। तत्रेत्यस्यार्थमाह तस्मिंश्चेत्यादि। तस्मिन्नुपपदे सत्येव वक्ष्यमाणः प्रत्ययः कृत्प्रत्यय इत्यर्थः स्यात् । यथा कर्मण्यण्। अत्र सप्तम्यन्तं कर्मणीति पदम् । तद्वाच्यन्तु कर्तुरीप्सिततमं कर्मेति कर्मसंज्ञकः पदार्थः तद्वाचकशब्द उपपदसंज्ञकः, एवं कर्मणः उपपदसंज्ञा सिद्धा । तथा च कर्मणीति पदस्य उपपदे इत्यर्थः इति फलितम् । सूत्रे तत्र ग्रहणफलन्तु उपपदे सत्येव अण्प्रत्ययः स्याद्धातोरिति। कुम्भकारः करणक्रिया आप्तुमीप्सिततमत्वेन कर्मसंज्ञकः कुम्भपदार्थः उपपदसंज्ञकः। तस्मिन्नुपपदे कुम्भे सत्येव कृञोऽण् णित्वाद्वृद्धिः। कारः उपपदं सप्तमीस्थमित्युपपदसंज्ञाविधानफलमुपपदमिति ङिति समासः। तत्रेति वचनफलन्तु कर्मणीत्यादेः कर्मणि (उपपदे) सत्येवेत्यर्थलाभः इति भावः। ननु कर्मणीत्यादेस्सप्तम्यन्तत्वेन

तस्मिन् सतीत्यर्थस्सुलभ एवेति किम् तत्र ग्रहणेनेति चेन्मैवम्। सप्तम्यन्तत्वस्य उपपदसंज्ञार्थतया चरितार्थत्वेन कर्मणीति पदात्प्रातिपदिकार्थमात्रस्यैव प्रतीतिरिति। (यथाकथाञ्चित्सप्तम्यर्थस्यापि प्रतीतिस्स्यादित्यभ्युपगमेऽपि कर्तरि कृदिति वत् कर्मण्यर्थेऽण् स्यादित्यर्थः प्रसज्येतेति । वस्तुतस्तु तत्र ग्रहणं मास्तु न च कर्मण्यभिधेये इत्यर्थस्यादिति वाच्यम् कर्मण एवोपपदसंज्ञाविधानेन उपपदेऽण् स्यादित्यर्थः प्रतीयते न तु कर्मण्यभिधेये इति। तथात्वे उपपदसंज्ञाया निर्विषयत्वापत्तेः। न च सप्तम्यन्तत्व उपपदसंज्ञाविधानेन चरितार्थतया प्रातिपदिकार्थमात्रस्यैव प्रतीतिरिति, कर्मणीत्यस्य उपपदसंज्ञकः कर्मसंज्ञकश्च पदार्थ एवार्थः। तथा च घटादिः पदार्थोऽण्स्यादित्यर्थः प्रसज्यते इति वाच्यम्। अनन्वितत्वादेव तादृशार्थानवगमात्। तथा हि । धातोरित्यधिकारात् धातोः घटादिरण्स्यादित्यर्थे अणः कथं घटादिपदार्थत्वम्? कथं वा तत्प्रयोजकीभूतं कर्मत्वं प्रत्ययमात्रस्येति नोपपद्यते सोऽर्थः। सप्तम्यर्थमजहदेव सप्तम्यन्तं पदमुपपदमर्थमभिलक्षयतीति वक्तुमुचितत्वेन नापि चारितार्थ्य सप्तम्यन्तत्वस्येति सर्व सुष्ठु नैकधेत्यादाविति। ननु विभाषाधिकारादयं नञ्समासो वैकल्पिक एव। अत एव न ब्राह्मण इति स्वपदविग्रहो दर्शितः। तस्मात् नैकधेत्यादौ नञ्समासाभावपक्षे वाक्यमेव। तेन नलोपादिकं न भवत्येवेति कृत्वा नञर्थक नशब्दपरिकल्पनक्लेशो मूलकृतो व्यर्थ एव इति चेन्मैवम्। नैकथा मां स बाधते इति वाक्ये यदि नञो पृथक्पदं स्यात्तर्हि बाधते इति क्रियापदेनैव तस्यान्वयस्स्यात्। क्रियातन्निषेधवाचिनोस्तयोरेव परस्परं साकांक्षत्वात्। न चैवं न दोष इत्यादिवाक्ये असामर्थ्यं शङ्क्यम्। तत्रापि भवतिक्रियया अस्तिक्रियया वा गम्यमानया नञस्सम्बन्धात्। नन्वेवं चेन्नञ्समास एव दुर्लभः। अब्राह्मण इत्यत्र नञः ब्राह्मणस्य च व्यपेक्षासामर्थ्याभावादिति चेन्मैवम्। तत्र समासे हि नञ आरोपितत्वमर्थः, न तु निषेधः। तथा च आरोपितत्वब्राह्मणत्वयोरेकाधिकरणवृत्तित्वादस्यैव सामानाधिकरण्यरूपं सामर्थ्यं तयोरिति। न च नैकथेति समासे सामर्थ्याभावः शङ्क्यः। तत्र नञः भिन्नत्वमर्थः। एकप्रकारत्वतद्भिन्नत्ववाचिनोरेकथा नञ्पदयोरस्यैव सामर्थ्यमिति। ननु वाक्ये नञ् क्रियापदेनैवान्वेति समासे तु शब्देनापीति कोऽयं नियम इति चेदुक्तमेव वाक्ये नञः शब्दान्तरस्य च सामर्थाभावान्नास्ति सम्बन्ध इति । न च वाक्येऽपि नञः सादृश्यविरुद्धत्वादयष्षडप्यर्थास्स्युरिति वाच्यम्। नोदेति चन्द्र इत्यादौ। चन्द्रसदृशं चन्द्रविरुद्धं वा मुखं पद्मं वा उदेतीत्यर्थाप्रतीतेः। अत एव नञर्थकथनप्रकरणे तत्सादृश्यं तद्विरोधं तदन्यत्वं तदल्पतेति तत्पदसमभिव्याहारो दर्शितः। समासघटकीभूतं पदं तच्छब्देनात्र परामृश्यते इति बोध्यम्। यथा विरुद्धता चापि यतो नञर्थस्तवाधरस्तेन घना घनोऽयम् अत्र धरः पर्वततद्विरुद्धः । अधरः इन्द्रः इति अधरपदे श्रूयमाणो

**७८२। उपपदमतिङ्** ।२।२।१९। उपपदं सुबन्तं समर्थेन नित्यं समस्यते। अतिङन्तश्चायं समासः। कुम्भं करोतीति कुम्भकारः। इह कुम्भ अस् कार इत्यलौकिकं प्रक्रियावाक्यम्। अतिङ् किम्। मा भवान् भूत्। 'माङि लुङ् २२१९' इति सप्तमीनिर्देशान्माङुपपदम्। अतिङ्ग्रहणं ज्ञापयति सुपेत्येतन्नेहानुवर्तत इति। पूर्वसूत्रेऽपि गतिग्रहणं पृथक्कृत्यातिङ्ग्रहणं तत्रापकृष्यते। सुपेति च निवृत्तम्। तथा च । (प) **गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः** इति सिद्धम्॥ व्याघ्री। अश्वक्रीती। कच्छपी॥

---

नञ् धरविरुद्धं ब्रवीति। वाक्ये तु वैवं प्रतीतिः। तस्मात् नैकधेत्यादौ न शब्देन सह समास इति मूलकृदुक्तं सुस्थम्। एतेन अकुसुमान् दधतं न महीरुहः। सव्रीडमन्द्रैरिव निष्क्रियत्वान्नात्यर्थमस्त्रैरवभास्यमान इत्यादिषु न दधतमिति, नावभास्यमान इति च अन्वयः दुष्ट एवेति सिद्धम्। यद्वा दधतमित्यत्र दधधातोर्धारणमर्थः। तदुत्तरशतृ प्रत्ययस्य कर्तृत्वमर्थः तथा च नञः दधतमिति पदैकदेशेन प्रकृत्यर्थेन धारणेनान्वयः। एवमेव अवभास्यमान इत्यत्रापि अवभासने नैवान्वयः। तेन नञः क्रिययैवान्वय इति न दोष इति वाच्यम्। अस्मिंश्च पक्षे एकदेशान्वयः दुष्ट एवेति बोद्ध्यम्। एतेन "तत्र चित्रमवनीपतेस्तत" इत्यत्र नास्तत इत्यन्वयं ब्रुवाणः मल्लादिलक्ष्मणसूरिरनधीतव्याकरणः परास्तः।

113. उपपदमतिङ्। सुबिति–नित्यं क्रिडेति सूत्रान्नित्यमिति समर्थ इति समास इति च अत्रानुयन्ति। प्रत्ययग्रहणे तदन्तग्रहणात् अतिङ्ङ्न्त इति अधिकृतस्यावृत्तस्य च समास इत्यस्य विशेषणम्। द्वितीयं समासपदन्तु समस्यत इति क्रियात्वेन विपरिणम्यते। अत्र अतिङ् इति लुप्ततृतीयाकं पदम्। नञः प्रसज्यप्रतिषेधोऽर्थः। उपपदं समर्थेन नित्यं समस्यते न तु तिङा इत्यपि व्याख्यातुमुचितम्। सुपेति पदस्यात्राव्ययीभावात् सुबसुप्साधारण्येन समासे विधीयमाने सति असुपि प्राप्तस्य समासस्य निषेधार्थमतिङ् इति। ननु सुपेति पदमत्रानुवर्त्य अतिङ्पदं त्यज्यतां लाघवादत आह गतिकारकोपपदानामित्यादि तन्न्यायज्ञापनार्थमतिङ्ग्रहणमिति भावः। ननु एतत्सूत्रस्थेनातिङ्ग्रहणेन। उपपदानां कृद्भिस्सह समासवचनं प्राक्सुबुत्पत्तेरिति न्यायस्सिद्ध्यति। सप्तम्यन्तकर्मण्यादिपद वाच्यकर्मादिकारकाणामुपपदसंज्ञया कारकोपपदानामित्यपि सिद्ध्यति। कथं पुनर्गतेरपीत्यत आह। पूर्वसूत्रेऽपीत्यादि गतिकारकोपपदानि सुबन्तेन समस्यन्त इत्यनुक्त्वा समर्थेन समस्यन्त इति वचनेन सुप्तिङोः प्रकृतिभूतेन समस्यन्त इति लब्धम्। (समासानन्तरं तस्याः प्रकृतेरविशेषेण सुप्तिङोः प्राप्तौ सत्यामतिङिति तिङ्प्रत्ययप्राप्तिं निषेधतीति सुबुत्पत्तेः प्रागेव समास इति ज्ञापितमतिङ्ग्रहणेनेति भावः। सा च कृदन्ता सुप्प्रकृतिरेव गृह्यते।

**७८३। अमैवाव्ययेन** ।२।२।२०। अमैव तुल्यविधानं यदुपपदं तदेवाव्ययेन सह समस्यते। स्वादुंकारम्। नेह॥'कालसमयवेलासु तुमुन् ३१७९' ॥ कालः समयो वेला वा भोक्तुम्। अमैवेति किम्। अग्रेभोजम्। अग्रे भुक्त्वा । विभाषाग्रेप्रथमपूर्वेष्विति क्त्वाणमुलौ। अमा चान्येन च तुल्यविधानमेतत्॥**७८४। तृतीयाप्रभृतीन्यन्यतरस्याम्** ।२।२।२१। 'उपदंशस्तृतीयायाम् ३३६८' इत्यादीन्युपपदान्यमन्तेनाव्ययेन सह वा समस्यन्ते। मूलकेनोपदंशं भुङ्क्ते। मूलकोपदंशम्॥**७८५। क्त्वा च** ।२।२।२२। तृतीयाप्रभृतीन्युपपदानि क्त्वान्तेन सह वा समस्यन्ते। उच्चैःकृत्य। उच्चैःकृत्वा। 'अव्ययेऽयथाभिप्रेत-३३८१' इति क्त्वा। तृतीयाप्रभृतीनीति किम्। अलं कृत्वा। खलु कृत्वा॥ **७८६। तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः** ।५।४।८६। संख्याव्ययादेरङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तोऽच् स्यात्। द्वे अङ्गुली प्रमाणमस्य व्यङ्गुलं दारु। निर्गतमङ्गुलिभ्यो निरङ्गुलम्॥

---

न तु किं प्रकृतिः। अतिङ्न्तस्य च समास इति समासानन्तरं तिङ्विधानासम्भवात्। समासानन्तरन्तु सुब्विधीयत इति। गत्यादीनां न सुबन्तेन समासः। नापि तिङन्तेन, किन्तु कृदन्तेनैवेति तन्नचायनिष्कर्षः। सुपेत्यस्यानुवृत्त्या सुबन्तेनैव समास्स्यान्न तु तिङन्तेनेति अतिङ्ग्रहणं व्यर्थीभूय गत्यादीनां सुबन्तेनापि न समासः। किन्तु कृदन्तेनैवेति ज्ञापयतीति भावः। यद्वा कृदतिङिति अतिङ्पदमेव कृद्रूपमर्थं बोधयतीति कृत्वा अतिङ्न्तेनेत्यस्य कृदन्तेनेत्यर्थ इति बोध्यम्।

114. अमैवाव्ययेन– यदुपपदसंज्ञाप्रयोजकीभूतसप्तम्यन्तपदघटितसूत्रमम एव विधायकम्। तदुपपदम् अव्ययेन समस्यते, यथा स्वादुंकारं यस्य स्वादु पदस्य उपपदसंज्ञाप्रयोजकीभूतं सप्तम्यन्तं पदम्। स्वादुमितद्घटितं सूत्रं स्वादुमि णमुलित्यविधायकं भवति। तत् सप्तम्यन्तपदवाच्यस्वाद्वर्थकमुपपदं स्वादुम् शब्दः अव्ययेन णमुलन्तेन कारं पदेन समस्यते। णकारोकारलकाराणामित्वेन लोपे णमुलि अं शिष्यते। अम् विधायकमिति किम्। तादृशसूत्रं तु अम्विधायकं चेन्माभूदिति यथाकालो भोक्तुं। अम एवेति किम्? तादृशसूत्रममः क्त्वायाश्च विधायकं चेन्माभूदिति अग्रे भोजं अग्रे भुक्त्वा । सति तु समासे अग्रभोजं अग्रभुक्त्वा इति स्यादिति भावः ।

115. अलंकृत्वा प्रकृत्वा। अलंखल्वोः प्रतिषेधयोरिति सप्तम्यन्ते ग्रहणात्। उपपदसंज्ञके अव्यये इमे। कृत्वेति क्त्वाम्म् । तेनानयोः समासे प्राप्ते अलंखल्वोरिति सूत्रस्य उपदंशस्तृतीयायामिति सूत्रात्प्राक् स्थितत्वेन तृतीयाप्रभृतित्वाभावात् न समासः। समासे तु अलंकृत्येत्यादि स्यात्। ननु भूषणेऽलमिति भूषणार्थकस्यैवालमस्समास इति कथं प्रतिषेधार्थकस्य समासप्राप्तिर्निषेद्धुमिति चेन्नैवम्। गतिसंज्ञाप्रयुक्तसमासनिषेधेऽपि उपपदसंज्ञाप्रयुक्तसमासानिषेधात् तेनेति।

**७८७ । अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः** ।५ ।४ ।८७ । एभ्यो रात्रेरच् स्याच्चात्संख्याव्ययादेः ॥ **अहर्ग्रहणं द्वन्द्वार्थम्** ॥ अहश्च रात्रिश्चाहोरात्रः । सर्वा रात्रिः । सर्वरात्रः । पूर्वं रात्रेः पूर्वरात्रः । संख्यातरात्रः । पुण्यरात्रः । द्वयो रात्र्योः समाहारो द्विरात्रम् । अतिक्रान्तो रात्रिमतिरात्रः ॥**७८८ । राजाहःसखिभ्यष्टच्** ।५ ।४ ।९१ । एतदन्तात्तत्पुरुषाट्टच् स्यात् । परमराजः । अतिराजी । कृष्णसखः ॥ **७८९ । अह्नष्टखोरेव** ।६ ।४ ।१४५ । टिलोपः स्यान्नान्यत्र । उत्तमाहः । द्वे अहनी भृतो व्यहीनः क्रतुः ।

---

116. निरङ्गुलम्। निरादयः क्रान्ताद्यर्थे पञ्चम्या इति प्रादिसमासः।

117. अहर्ग्रहणं द्वन्द्वार्थम्द्वन्द्वे अहश्शब्दात्परस्य रात्रिशब्दस्य समासान्तोऽच् यथा स्यात्तदर्थमित्यर्थः। ननु अहोरात्रिशब्दयोस्तत्पुरुषाभावेन कथमत्र समासान्तप्रत्ययप्रसक्तिरिति शङ्क्यावतारितमिदम्। सूत्रे च शब्दात्संख्याव्ययादेरित्यस्यानुवृत्तिः। अहरादीनां समाहारद्वन्द्वैक्यं पुण्यादिति। अहरादेः पदस्य सङ्ख्याव्ययाभ्यां परस्य च रात्रेरच् स्यादिति सूत्रार्थः। सङ्ख्याता रात्रिः सङ्ख्यातरात्रिः। पुण्या रात्रिः पुण्यरात्रिः। विशेषणमिति समासः। द्विरात्रं तद्धितार्थेति द्विगुः, अतिरात्रं अत्यादय इति प्रादिः।

118. परमराजः । परमो राजा परमराजः विशेषणमिति समासः। ननु तत्पुरुषस्येति सूत्रादच्प्रत्ययोऽत्राप्यनुवर्त्यताम्। किम् टज्विधानेनेत्यत आह। अतिराजी। राजानमतिक्रांता अतिराजी अत्यादयः क्रान्ताद्यर्थे द्वितीययेति प्रादिसमासः। टित्त्वात् स्त्रीत्वे टिड्ढाणञिति ङीप्। अचि सति तु अतिराजा इति अदन्तत्वाट्टापि स्यात्। एवं राजान्ताट्टचमुदाहृत्य सख्यन्तात् दर्शयति कृष्णसखः कृष्णस्य सखा कृष्णसखः इति षष्ठीतत्पुरुषः। टचोरित्संज्ञया लोपे कृष्णसखा-अ-इति स्थिते यस्येति चेत्यवर्णलोपः। कृष्णसख। पश्चात्सुबुत्पत्तिः कृष्णसखः। एवं अतिरात्रि। अति-इति स्थिते यस्येति चेति इवर्णलोपः। अतिरात्र इत्याद्यूह्यम्। ननु अचिटचोः प्रत्ययत्वं मास्तु आदेशत्वमस्तु । अङ्गुल्यं तस्य तत्पुरुषस्याजादेशः स्यात्। राजाद्यन्तस्य टजादेशः स्यादित्येवमर्थः प्रकल्प्यः। स च आदेशः अलोन्त्यस्येति अन्त्यस्यैव स्यादिति द्व्यङ्गुळमित्यादिरूपसिद्धिर्भवत्येवेति किमनेन प्रक्रियाक्लेशेनेति चेन्मैवम्। टिड्ढाणञिति सूत्रे ढाणादिसाहचर्यात् टितोऽपि प्रत्ययस्यैव ग्रहणेन टचः अप्रत्ययत्वात् ङीप् न स्यादिति अतिराजीति न सिद्ध्येदिति। ननु टजित्यादेशान्तरविधानसामर्थ्यादेव अप्रत्यय टिदन्तादपि ङीप् स्यादिति अङ्गीक्रियत इति चेत् तर्हि उपशरदं पञ्चगवमित्यादीनामसिद्धेर्न टजादेरादेशत्वं युज्यते। न ह्यन्त्यस्य शरत्तकारस्य पञ्चगोशब्दान्त्यस्य ङीकारस्य वा अकारादेशे सति शरदमिति गवमिति च भवेत्। तस्मात् अजादिः प्रत्ययः परस्सन्नेव भवतीति सुष्ठु ।

119. अह्नष्टखोरेव-राजान्तात् सख्यन्ताच्च टचमुदाहृत्य अहन्नन्तादुदाहर्तुमारभते अह्नष्टखोरित्यादिना । उत्तमाह । विशेषणसमासः । उत्तमाहर्। टच् इति स्थिते,

तद्धितार्थे द्विगुः ।" तमधीष्ट १७४४ इत्यधिकारे द्विगोर्वेत्यनुवृत्तौ " रात्र्यहःसंवत्सराच्च १७५१ " इति खः। लिङ्गविशिष्टपरिभाषया अनित्यत्वान्नेह। मद्राणां राज्ञी। मद्रराज्ञी ॥ **७९० । अह्नोऽह्न एतेभ्यः** ।५।४।८८। सर्वादिभ्यः परस्याहन्शब्दस्याह्नादेशः स्यात्समासान्ते परे॥ **७९१ । अह्नोऽदन्तात्** ।८।४।७। अदन्तपूर्वपदस्थाद्रेफात्परस्याह्नादेशस्य नस्य णः स्यात्। सर्वाह्णः। पूर्वाह्णः। संख्याताह्नः। द्वयोरह्नोर्भवः॥। 'कालाट्ठञ् १३८१'॥ 'द्विगोर्लुगनपत्ये १०८०' इति ठञो लुक्। द्व्यह्नः। स्त्रियामदन्तत्वाट्टाप् द्व्यह्ना। द्व्यह्नप्रियः। अत्यह्नः॥

---

नस्तद्धिते इति टिलोपः प्राप्तः अनेन सूत्रेण नियम्यते। अहन्शब्दस्य टे-टचि-खे खप्रत्यये च परतः टेः लोपस्स्यात्। एवकारेण नात्र त्रेति नियमो लब्धः । तस्मादत्र टचि परतष्टिलोपः । उत्तमाह्-अ-सुबुत्पत्तिः उत्तमाहः। खे टिलोपमुदाहरति द्व्यहीन इति । आयनेयीति खस्य ईनादेशः। ननु प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषाबलात् राजाः इति सूत्रे राजेति प्रातिपदिकग्रहणेन लिङ्गविशिष्टस्यापि स्त्रीलिङ्गबोधकङीबादिप्रत्ययविशिष्टस्यापि राज्ञी इत्यस्य ग्रहणं स्यात् । तथा च राज्ञन्तात्तत्पुरुषादपि टच् स्यात्। मद्रराज्ञी टच् यस्येति चेतीवर्णलोपे मद्रराज्ञा ततः अदन्तत्वाट्टाप् मद्रराज्ञा इति रूपं स्यादित्याशङ्क्याह अनित्यत्वान्मद्रराज्ञी इति ।

120. अह्नोह्नः । तेभ्यः एतेभ्य इति सर्वनाम्ना पूर्वसूत्रस्थसर्वादयः परामृश्यन्ते। चकारेण पूर्वसूत्रे सन्निधापिते संख्याव्यये च न पुनरहश्शब्दः। तस्मात्परस्य अह्नोसंभवात्। न च एतेभ्य इति व्यर्थम्। अनुवृत्यैव सर्वादीनामिहान्वयसंभवादिति वाच्यम्। तेषां स्वरितत्वाप्रतिज्ञानात्।

121. अह्नोऽदन्तात्। रषाभ्यामिति सूत्राद्रादिति नोण इति च पूर्वपदात्संज्ञायामिति सूत्रात् पूर्वपदादिति चात्रानुवर्त्यन्ते अदन्तात् पूर्वपदादित्यस्य रादित्यस्य च सामानाधिकरण्यसंभवाददन्ते पूर्वपदे योऽर्थः तस्मादित्यर्थः। (रेफमात्रस्य कथमदन्तत्वं कथं वा पदत्वमिति न सामानाधिकरण्यमिति भावः) इदमेवाह अदन्तपूर्वपदस्थात् रेफात् परस्येति । किञ्च अह्न इत्ययं नाहन् शब्दष्षष्ठ्यंन्तः। समासान्ते टचि परे अहनष्टेर्लोपेन न तत्र नकारो निमित्ती स्यादिति। तस्मादह्नादेशस्यैवेह ग्रहणमिति मत्वा आह । अह्नः अह्नादेशस्येति । ननु अह्नादेशस्य षष्ठ्यां अह्नस्येति भवितव्ये कथमह्न इति निर्देशो युज्यत इति चेदुच्यते । यस्येति चेति टचि परतः अवर्णलोपेन अह्न् इत्येव शिष्यत इति तस्य षष्ठी अह्न इति। यद्वा अह्न इति षष्ठ्यर्थे प्रथमा अथवा अह्न् इति हलन्त एवादेशः। अह्नोह्नएतेभ्य इति अजन्तत्वेन निर्देशस्तु उच्चारणसौलभ्यमेति। यद्वा अदन्तात्परो योऽह्नः तस्येति सर्वाह्णः

**७९२ । क्षुभ्नादिषु च** ।८ ।४ ।३९ । एषु णत्वं न स्यात् । दीर्घाह्नी प्रावृट् । एवं चैतर्थमह्न इत्यदन्तानुकरणक्लेशो न कर्तव्यः । 'प्रातिपदिकान्त-१०५५' इति णत्ववारणाय क्षुभ्नादिषु पाठस्यावश्यकत्वात् । अदन्तादिति तपरकरणान्नेह । परागतमहः पराह्णः ॥

---

सर्वमहसर्वाः इति पूर्वकालैकसर्वेति तत्पुरुषः । अहन् शब्दान्तात् तत्पुरुषाट्टच्। टचि परतः अह्नादेशः सर्वाह्न अदन्तं पूर्वपदं सर्वेति तत्साधिद्रेफात्परो योह्नदेशसंबंधी नकारस्तस्य णत्वं। न चात्र रेफादव्यवहितपरत्वाभावान्नस्य णत्वानुपपत्तिश्शंक्या अट्कुप्वाङ्नुम्व्यवायेपीत्युक्तत्वात्। अह्नः पूर्व पूर्वाह्न इत्येकदेशसमासः। द्व्यह्नप्रियः अपूरणीप्रियादिषु पुंवद्भावनिषेधः। ननु कर्मधारयेति पुंवद्भावश्शंक्यः। द्व्यह्ना प्रिया यस्येति बहुव्रीहित्वात्। नापि गोस्त्रियोरित्युपसर्जनह्रस्वः विग्रहे द्व्यह्नाशब्दस्य अनियतविभक्तिकत्वात्। द्व्यह्नायाः प्रिय इति च विभक्त्यन्तरेण वक्तुं विग्रहस्य शक्यवात्। अन्यथा पूर्वशालप्रिय इत्येव स्यान्न तु पूर्वशालाप्रिय इति। प्रियशब्दस्य तु ह्रस्वस्स्यादेव। विग्रहद्वयेऽपि न विभक्तिभेदः। किंतु लिङ्गभेद एवेति क्रियाशब्दस्योपसर्जनत्वात्। अत्यह्नः।अह्नमतिक्रान्तोऽत्यह्नः। एकविभक्तिकत्वेन अह्नाशब्दस्यात्रोपसर्जनह्रस्वः।

122. दीर्घाह्नि। दीर्घान्यहानि यस्यां सेति बहुव्रीहिः। विशेष्यं प्रावृडिति। दीर्घ जस् अहन् जस् इत्यलौकिकविग्रहे सुब्लुकि-सवर्णदीर्घे-दीर्घाहन्-ऋन्नेभ्यो ङीप्, ङीपि भत्वा दल्लोपो नः-दीर्घाह्नि। अत्र अदन्तपूर्वपदे दीर्घपदनस्य णत्वेन अह्नोदन्तादित्यनेन प्राप्ते तन्निषेधाय क्षुभ्नादिषु चेति क्षुभ्नादीनामाकृतिगणत्वेन दीर्घाह्निश्शब्दः क्षुभ्नादिषु पठितव्यम्। ननु अह्नोदन्तादिति सूत्रे अह्न इति य आदेशः इत्यपि व्याख्याततत्वेन अदन्तस्यैव अह्नस्य अवयवो यो नस्तस्यैव णत्वं नान्यस्येति। प्रकृते दीर्घाह्नि शब्दस्य ई दन्तत्वेन ङीबुत्पत्तेः प्राक् दीर्घाह्न इति हलन्तत्वेन च अदन्तत्वाभावान्न णत्वप्राप्तिरिति क्षुभ्नादिषु दीर्घाह्निशब्दस्य पाठोऽनर्थक इत्यत आह अदन्तानुकरणक्लेशो न कर्तव्य इति। अह्नोह्न एतेभ्य इति योऽदन्तोऽह्नशब्दः तदनुकरणशब्द एव अह्नोदन्तादिति सूत्रस्थाह्नशब्द इति कृत्वा अह्नः अह्नादेशस्येति यः पूर्व व्याख्यानक्लेशोऽभ्युपेतस्तेन क्लेशेन न प्रयोजनमिति भावः। एतेन अदन्तात्परो योऽहन् शब्दस्तस्येति व्याख्यानमेव सुसङ्गतं क्लेशाभावादिति फलितम्। तथा च दीर्घाह्न ङीप् इति स्थिते अदन्तात्परोऽहन्शब्दो दीर्घाह्ना इति भवत्येवेति नस्य णत्वे प्राप्ते क्षुभ्नादिषु तस्य पाठः कर्तव्य इति सिद्धम्। ननु क्षुभ्नादिषु तस्य पाठ एव त्यज्यतामत आह । प्रातिपदिकान्तेत्यादिना। यद्यप्यह्नोदन्तादित्यनेन अदन्ताभावान्न णत्वप्राप्तिरिति क्षुभ्नादिषु दीर्घाह्निपाठो व्यर्थ इति लब्धम्। तथाऽपि दीर्घाह्न इति प्रातिपदिकान्तस्य नस्य णत्वं स्यादेव प्रातिपदिकान्तेति सूत्रादिति तस्य णत्वस्य वारणाय

**७९३ । न संख्यादेः समाहारे** ।५ ।४ ।८९ । समाहारे वर्तमानस्य संख्यादेरह्लादेशो न स्यात्। संख्यादेरिति स्पष्टार्थम्। द्वयोरह्नोः समाहारो व्यहः। त्र्यहः॥ **७९४ । उत्तमैकाभ्यां च** ।५ ।४ ।९० । आभ्यामह्लादेशो न। उत्तमशब्दोऽन्त्यार्थः। पुण्यशब्दमाह। पुण्यैकाभ्यामित्येव सूत्रयितुमुचितम्। पुण्याहम्। सुदिनाहम्। सुदिनशब्दः प्रशस्तवाची। एकाहः। उत्तमग्रहणमुपान्त्यस्यापि संग्रहार्थमित्येके। संख्याताहः॥ **७९५ । अग्राख्यायामुरसः** ।५ ।४ ।९३ । टच् स्यात्। अश्वानामुर इव अश्वोरसम्। मुख्योऽश्व इत्यर्थः॥ **७९६ । अनोश्मायःसरसां जातिसंज्ञयोः** ।५ ।४ ।९४। टच् स्याज्जातौ संज्ञायां च। उपानसम्। अमृताश्मः। कालायसम्। मण्डूकसरसमिति जातिः। महानसम्। पिण्डाश्मः। लोहितायसम्। जलसरसमिति संज्ञा॥ **७९७ । ग्रामकौटाभ्यां च तक्ष्णः** ।५ ।४ ।९५ । ग्रामस्य तक्षा ग्रामतक्षः। साधारण इत्यर्थः। कुट्यां भवः कौटः स्वतन्त्रः स चासौ तक्षा च कौटतक्षः॥

---

क्षुभ्नादिपाठ अवश्यक इति क्षुभ्नादिपाठेनैव प्रातिपदिकान्तेति णत्वस्य अह्नोदन्तादिति णत्वस्य च निषेधे संभवति सति दीर्घाह्नीत्यत्र णत्वाभावार्थमह्न इत्यदन्तानुकरणक्लेशः निष्फल एवेति भावः। पराह्णः परा अहः पराह्णः। परा इत्याकारान्तमव्ययम्।

123. न सङ्ख्यादेस्समाहारे–अह्नोह्न इति पदयोरत्रानुवृत्तिः। सङ्ख्यातद्वाचकं पदं आदिर्यस्य तस्य अह्नः अहन्शब्दस्य । ननु दिक्षु समाहारो नास्त्यनभिधानादित्युक्तत्वेन सङ्ख्यायामेव समाहार इति फलितत्वात् समाहारेऽहन्शब्दः सङ्ख्यादिरेव भवतीति किमनेन सङ्ख्यादिग्रहणेनेत्यत आह स्पष्टार्थमिति।

124. उत्तमैकाभ्याञ्च–श्रेष्ठार्थवाचिनः उत्तमशब्दस्य (स्वरूपस्य)नेह ग्रहणम्। उत्तमात्परस्याहन् शब्दस्य अह्लादेशप्रसक्तिरेव नास्तीति कृत्वा निषेधो व्यर्थ इति तस्मादुत्तमशब्दादन्त्यार्थग्रणम् । अन्त्यश्च अह्नोह्न एतेभ्य इति सूत्रगतैतच्छब्दपरामृष्टानां अहस्सर्वादीनां योऽन्त्यः पुण्यशब्दस्स एव (यस्य कस्याप्यन्त्यस्य न तत् परस्य अह्लादेशाप्रसक्तेः) तदेतदाह । पुण्यशब्दमाहेति । सङ्ख्याव्ययादेः परस्याप्यह्लादेशविधानेन एकशब्दात्परस्य तत्प्राप्तौ तन्निषेधाय एकग्रहणम्। पुण्यशब्दे तदर्थस्यापि ग्रहणमस्तीत्याह सुदिनाहमिति । सुदिन शब्दस्य शोभनदिनवाचित्वेन न पुण्यार्थिकत्वं, किञ्च अहन्शब्देनैव दिनार्थबोधे दिनशब्दग्रहणेन पौनरुक्त्यं चेत्याशङ्क्याह।सुदिनशब्दः प्रशस्तवाची इति। उपान्त्यस्यापि अन्त्यस्य पुण्यशब्दस्य समीपे यशशब्दस्स उपान्त्यः सङ्ख्यातशब्दस्तस्यापि पुण्यैकाभ्यामिति सूत्रयितव्ये उत्तमैकाभ्यामिति सूत्राणामत्र ज्ञापकमित्येकेषामभिप्रायः।

125. साधारण इत्यर्थः–ग्रामे सर्वेषामपि साधारणस्तक्षा ग्रामतक्ष इत्यर्थः।

**७९८ । अतेः शुनः** ।५ ।४ ।९६ । अतिश्वो वराहः ॥ अतिश्वी सेना ॥ **७९९ । उपमानादप्राणिषु** ।५ ।५ ।९७ । अप्राणिविषयकोपमानवाचिनः शुनष्टच् स्यात् । आकर्षः श्वेव आकर्षश्वः । अप्राणिषु किम् । वानरः श्वेव वानरश्वा ॥ **८०० । उत्तरमृगपूर्वाच्च सक्थ्नः** ।५ ।४ ।९८ । चादुपमानात् । उत्तरसक्थम् । मृगसक्थम् । पूर्वसक्थम् । फलकमिव सक्थि फलकसक्थम् ॥ **८०१ । नावो द्विगोः** ।५ ।४ ।९९ । नौशब्दान्ताद्विगोष्टच् स्यान्न तु तद्धितलुकि । द्वाभ्यां नौभ्यामागतः द्विनावरूप्यः । 'द्विगोर्लुगनपत्ये १०८०' इत्यत्र अचीत्यस्यापकर्षणाद्धलादेर्न लुक् । पञ्चनावप्रियः । द्विनावम् । त्रिनावम् । अतद्धितलुकीति किम् । पञ्चभिर्नौभिः क्रीतः पञ्चनौः ॥ **८०२ । अर्धाच्च** ।५ ।४ । १०० । अर्धान्नावष्टच् स्यात् । नावोऽर्धम् । अर्धनावम् । क्लीबत्वं लोकात् ॥ **८०३ । खार्याः प्राचाम्** ।५ ।४ ।१०१ । द्विगोरर्धाच्च खार्याष्टज्वा स्यात् । द्विखारम् । द्विखारि । अर्धखारम् । अर्धखारि ॥

---

126. अप्राणिविषयकोपमानवाचिनः–अप्राणिगतस्वप्रतियोगिसादृश्यनिरूपकादित्यर्थः । उपमेयभूताप्राणिपदार्थकादिति यावत् ।

127. उत्तरसक्थम् ।–पूर्वसक्थमित्येकदेशिसमासः । मृगसक्थमिति षष्ठी ।

128. द्विनावमाप्यः–तद्धितार्थोत्तरपदसमाहारे चेति सङ्ख्यावाचकपूर्वस्य द्विगुत्वात्तद्धितार्थविषयकस्येदमुदाहरणम् । पञ्चनावप्रियः । पञ्चनावः । पञ्चनावं प्रिया यस्य पञ्चनावप्रियः । उत्तरपदे परतो द्विगोरिदमुदाहरणम् । द्विनावम् । द्वयोर्नावोस्समाहारो द्विनावं त्रिनावमितीदं द्विसमाहारे द्विगोः ।

129. नावोर्धमर्धनावम् । अर्धं नपुंसकमित्येकदेशिसमासः । अर्धशब्दस्य नपुंसकत्वे प्रमाणन्तु लोक एवेत्याह । क्लीबत्वं लोकादिति । यद्वा स नपुंसकमिति समाहारे द्विगोरव्ययीभावस्य च नपुंसकत्वं विहितं, न तु तत्पुरुषस्येति । अर्धपिप्पलीतिवत् । अर्धनावशब्दाट्टजन्ताट्टित्वात् ङीपि अर्धनावी इति भवितव्ये कथमर्धनावमित्यत आह क्लीबत्वं लोकादिति अर्धनावशब्दाल्लोको न स्त्रीत्वं विवक्षते । किन्तु क्लीबत्वमेवेति न ङीबिति भावः । लिङ्गन्तु लोकतो ज्ञेयमिति लिङ्गव्यवस्थापको लोक एवेति भावः ।

130. खार्याः प्राचाम्– द्विगोरिति अर्धादिति टजिति चात्रानुयन्ति केवलखारीशब्दे द्विगुत्वासम्भवात् । खारन्ताद्विगोः अर्धादेः खारीशब्दाच्च । (नात्र द्विगोरित्यस्यान्वयः अर्धपदस्य असङ्ख्यात्वेन द्विगुसंज्ञाप्रयोजकत्वात् ।) टच् स्यात् । प्राचां प्राग्देशीयानां मते तेन अन्येषां मते न स्यादिति विकल्पः फलतीत्याह । वा स्यादिति । द्विखारी–उपसर्जनह्रस्वः ।

**८०४ । द्वित्रिभ्यामञ्जलेः** ।५।४।१०२। टज्वा स्यात् द्विगौ। द्व्यञ्जलम्। द्व्यञ्जलि। अतद्धितलुकीत्येव। द्वाभ्यामञ्जलिभ्यां क्रीतो द्व्यञ्जलिः॥ **८०५। ब्रह्मणो जानपदाख्यायाम्** ।५।४।१०४। ब्रह्मान्तात्तत्पुरुषाट्टच् स्यात्समासेन जानपदत्वमाख्यायते चेत्। सुराष्ट्रे ब्रह्मा सुराष्ट्रब्रह्मः॥ **८०६ ।कुमहद्भ्यामन्यतरस्याम्** ।५।४।१०५। आभ्यां ब्रह्मणो वा टच् स्यात् तत्पुरुषे। कुत्सितो ब्रह्मा कुब्रह्मः। कुब्रह्मा॥ **८०७ । आन्महतः समानाधिकरणजातीययोः** ।६।३।४६। महत आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे। महाब्रह्मः। महाब्रह्मा। महादेवः। महाजातीयः। समानाधिकरणे किम्। महतः सेवा महत्सेवा। लाक्षणिकं विहाय प्रतिपदोक्तः 'सन्महत्-७४०' इति समासोऽत्र ग्रहीष्यते चेत्, महाबाहुर्न स्यात्।

---

131. सुराष्ट्रे ब्रह्मा-ननु कथमत्र सप्तमीतत्पुरुषः विधायकाभावादिति चेदुच्यते सप्तमीशौण्डैरिति सूत्रे सप्तमी- शौण्डैरिति योगविभागः। तेन सप्तम्यन्तसमर्थेन सुबन्तेन समस्यत इत्यर्थादत्र सप्तमीतत्पुरुष इति अधिकरणे चेति सप्तमीविभक्तिः।

132. आन्महत इति-कुमहद्भ्यामिति सूत्रेण कुमहच्छब्दाभ्यां परस्य ब्रह्मणष्टज्विहितः। तत्र कुशब्दाट्टचं कुब्रह्मः कुब्रह्म इत्युदाहृत्य महच्छब्दादुदाहर्तुं महच्छब्दे प्रसक्तं विशेषमाह। आन्महत इति। अलोन्त्यपरिभाषया आकारोन्तादेशस्स्यादित्युक्तं महाब्रह्मः महाब्रह्म इति। महच्छब्दाट्टज्विकल्पस्योदाहरण्। उत्तरपदस्य टजभावेऽपि महत आत्वं दर्शयितुमुदाहरणान्तरं महादेवः। ब्रह्मन्शब्दस्य देवशब्दस्य च प्रथमान्तस्य विशेष्यस्य महच्छब्दः प्रथमान्तो विशेषणमिति सामानाधिकरण्यं समासस्तु सन्महेति सूत्रात्। एवं समानाधिकरणे आत्वमुदाहृत्य जातीये दर्शयति महाजातीयः। प्रकारवचने जातीयर् महाप्रकारो महाजातीयः। महत्सेवा षष्ठीतत्पुरुषः।अत एवात्र न सामानाधिकरण्यं महत्वस्याधिकरणं यत् तत्सम्बन्धिन्यास्सेवाया अधिकरणमन्यदिति कर्तृभूतदेवदत्तादिनिष्ठा हि महत्वाधिकरणविष्णुमित्रादिसम्बन्धिनी सेवा महती सेवा इति विग्रहे तु सामानाधिकरण्यसत्वान्महासेवेति भवति ।ननु सन्महदिति सूत्रान्महच्छब्दस्य यैस्सह समसनमुक्तं तैरेव समानाधिकरणैस्तस्य महता यस्समासः स प्रतिपदोक्त इति लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य ग्रहणमिति न्यायेन तत्प्रतिपदोक्तसमासघटकी- भूतमहच्छब्दस्यैवात्वमभ्युपगम्य समानाधिकरणपदं सूत्रे त्यज्यतामत आह महाबाहुर्न स्यादिति । महान्तौ बहू यस्य स इति बहुव्रीहिः। नायं सन्महदिति प्रतिपदोक्तसमासः । नाप्यत्र सामानाधिकरण्याभाव इति। सति तु समानाधिकरणे आत्वं स्यात्। असति

तस्मात् (प) **लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य** इति परिभाषा नेह प्रवर्तते। समानाधिकरणग्रहणसामर्थ्यात्। आदिति योगविभागादात्वम्। 'प्रागेकादशभ्य १९९५' इति निर्देशाद्वा। एकादश। महतीशब्दस्य 'पुंवत्कर्मधारय - ७४६' इति पुंवद्भावे कृते आत्वम्। महाजातीया॥ **महदात्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्भावश्च**॥ असामानाधिकरण्यार्थमिदम्। महतो महत्या वा घासो महाघासः। महाकरः। महाविशिष्टः॥ **अष्टनः कपाले हविषि॥** अष्टाकपालः॥ **गवि च युक्ते**॥ गोशब्दे परे युक्त इत्यर्थे गम्येऽष्टन आत्वं वक्तव्यमित्यर्थः॥ अष्टागवं शकटम्। 'अच्प्रत्यन्वव-९४३' इत्यत्राजिति योगविभागाद्बहुव्रीहावप्यच्। अष्टानां गवां समाहारः अष्टगवम्। तद्युक्तत्वाच्छकटमष्टागवमिति वा॥

---

तु अप्रतिपदोक्तत्वात्सामानाधिकरण्येऽपि न स्यादिति भावः। ननु प्रतिपदोक्तपरिभाषायाः का गतिरत आह। नेह प्रवर्तत इति सा वैकल्पिकीति भावः। तस्या वैकल्पिकत्वे किं मानमत आह समानाधिकरणग्रहणसामर्थ्यादिति। अस्मिन् सूत्रे समानाधिकरणे इति पदस्य ग्रहणमेव तत्र मानमित्यर्थः। ननु द्वादशेत्यादीनामुत्तरसूत्रेणात्वं विधीयते। एकादशेत्यत्र कथमेकशब्दात्वमत आह । आदिति योगविभागादिति। समानाधिकरणे उत्तरपदे परतः पूर्वस्य आत्वं स्यादिति तदर्थः। पक्षान्तरमाह–निर्देशाद्वा इति पुंवत्कर्मधारयजातीयदेशीयेष्वित्यत्र जातीये परत उदाहरणम्। महाजातीयेति । कर्मधारये तु महती सेवा महासेवा। देशीये महादेशीया।

133. अष्टनः कपाले हविषि–समानाधिकरण इत्येव। अष्टाकपालः।अष्टसु कपालेषु संस्कृतः पुरोडाशः अष्टाकपालः। सङ्ख्यापूर्वत्वेनास्य द्विगुत्वात्। संस्कृतं गोर्लुगनपत्य इति लुक्। एकविभक्तिकत्वेन विशेषणविशेष्यभावादष्टन् कपालशब्दयोस्सामानाधिकरण्यं बोध्यम्। हविषि किम् ? अष्टौ कपाला अष्टकपालाः। कपाले किम् ।अष्टपात्रः अष्टसु पात्रेषु संस्कृतः पुरोडाशः अष्टपात्रः । समानाधिकरण इति तु सिद्धार्थकथनं न तु तेन व्यावर्त्यमस्ति अष्टकपालपदयोर्हविर्वाचकत्वायोगात्। यद्वा कपालेषु संस्कृताः कपालाः अष्टानां कपालाः अष्टकपाला इति प्रत्युदाहर्तव्यम्। अष्टागवं अष्टभिर्गोभिर्युक्तं शकटमष्टागवम्। यद्वा अष्टौ गावो विद्यन्ते यस्मिंस्तदिति विग्रहः । अमुमेवाभिप्रेत्याह बहुव्रीहावप्यच् इति गोरतद्धितलुकीति तत्पुरुषाद्गोन्ताट्टच् विहित इति बहुव्रीहौ न टचः प्रसक्तिः। किन्तु अच्प्रत्यन्ववपूर्वात्सामलोम्न इति, बहुव्रीह्यधिकारस्थे सूत्रे अच् इति योगं विभज्य बहुव्रीहावच् स्यादित्यर्थाश्रयाणादत्राच्। अर्थान्तरमाह। अष्टगवयुक्तं शकटमष्टागवमिति लाक्षणिकोऽयं प्रयोग इति भावः। तेन युक्तमित्यर्थे प्रत्ययविधानाभावात्।

८०८ । **द्व्यष्टनःसंख्यायामबहुव्रीह्यशीत्योः** ।६ ।३ ।४७ । आत्स्यात् । द्वौ च दश च द्वादश। द्व्यधिका दशेति वा। द्वाविंशतिः। अष्टादश। अष्टाविंशतिः । अबहुव्रीह्यशीत्योः किम् । द्वित्राः । द्व्यशीतिः ॥ **प्राक् शतादिति वक्तव्यम्** ॥ नेह । द्विशतम् । द्विसहस्रम् ॥ ८०९ । **त्रेस्त्रयः** ।६ ।३ ।४८ । त्रिशब्दस्य त्रयस् स्यात्पूर्वविषये । त्रयोदश । त्रयोविंशतिः । बहुव्रीहौ तु त्रिदश । त्रिदशाः । सुजर्थे बहुव्रीहिः । अशीतौ तु त्र्यशीतिः । प्राक् शतादित्येव । त्रिशतम् । त्रिसहस्रम् ॥ ८१० । **विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्** ।६ ।३ ।४९ । द्व्यष्टनोस्त्रेश्च प्रागुक्तं वा स्याच्चत्वारिंशदादौ परे । द्विचत्वारिंशत् । द्वाचत्वारिंशत् । अष्टचत्वारिंशत् । अष्टाचत्वारिंशत् । त्रिचत्वारिंशत् । त्रयश्चत्वारिंशत् । एवं पञ्चाशत्षष्टिसप्ततिनवतिषु ॥

---

134. द्व्यष्टनः द्विशब्दस्य चाष्टन् शब्दस्य चेत्यर्थः। (समानाधिकरणे सङ्ख्यावाचके परतः) उत्तरपदे परतस्सङ्ख्यायां वाच्यायामिति वा, आत्स्यात् न तु बहुव्रीहौ । न च अशीतौ परतः द्वादशादयः द्वन्द्वसमासाः । अथवा शाकपार्थिवादित्वादुत्तरपदलोपोऽपिनो वा। द्वित्राः द्वौ वा त्रयो वा द्वित्राः संङ्ख्ययाव्ययेति बहुव्रीहिषु वक्ष्यमाणेन सूत्रेण बहुव्रीहिरयम्। द्विरावृत्तोशीतिः द्व्यशीतिरिति विग्रहे सङ्ख्येयार्थकत्वात्सङ्ख्याया बहव्रीहित्वेन अबहुव्रीहावित्यनेनैव निषेधे अशीतिग्रहणं व्यर्थं स्यात्। तस्मात् द्वौ च अशीतिश्च द्व्यशीतिः द्व्यधिकाः अशीतिः द्व्यशीतिरिति वा विग्रहो बोध्यः । अष्टनस्तु बहुव्रीहो अष्टावृत्ता नव अष्टनवाः। अशीतौ तु अष्टाशीतिरित्येव। अष्टन् अशीतिरिति स्थिते नलोपः प्रातिपदिकान्तस्येति नलोपे सवर्णदीर्घे च कृते रूपभेदाभावात्। द्व्योश्शतयोस्समाहारो द्विशतमिति च भवति। विग्रहत्रयेऽपि अबहुव्रीहित्वादात्वे प्राप्ते तदर्थं वार्तिकमावश्यकमिति भावः।

135. सुजर्थे बहुव्रीहिः–त्रिर्दश इति विग्रहवाक्यं त्रिरावृत्ता दश इत्यर्थः। समासमाह त्रिदशा इति। सङ्ख्याव्ययेत्यादिना बहुव्रीहिरिति भावः । दिशब्दात्त्रिशब्दाच्च सुच्। प्रत्यये द्विः त्रिः इति रूपद्वयं भवति। द्वित्रिचतुर्भ्यस्सुजिति क्रियाभ्यावृत्तिगणने सुच् । तेन सुजर्थो नाम क्रियाभ्यावृत्तिगणनमिति सिद्धम् । तेन त्रिदशा इति समासस्य त्रिंशतिकृत्व इत्यर्थो बोध्यः। न चैवं समस्तात्त्रिदशशब्दादपि कृत्वसुच् स्यादिति वाच्यम् बहुव्रीहिनैव कृत्वसुजर्थस्य कथिततत्वात् । सुचः कृत्वसुचश्च क्रियाभ्यावृत्तिगणनमेक एवार्थ इति ज्ञेयम् ।

८११ ।**एकादिश्चैकस्य चादुक्** ।६ ।३ ।७६ । एकादिर्नञ् प्रकृत्या स्यादेकस्य च अदुगागामश्च। नञो विंशत्या सह समासे कृते एकशब्देन सह तृतीयेति योगविभागात्समासः। अनुनासिकविकल्पः। एकेन नविंशतिः। एकान्नविंशतिः। एकादूनविंशतिः। एकोनविंशतिरित्यर्थः॥ **षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च धासु वेति वाच्यम्**॥ षोडन् षोडश। षोढा। षड्धा॥

---

136. एकादिश्चैकस्य-चादुक्। न भ्राडिति सूत्रात्प्रकृत्येति नञ इति सूत्रान्नञिति चात्रानुवर्तेते। एकः एकशब्दः आदिर्यस्य स एकादिः। नञ्तत्पुरुषाद्यवयवो नकारः। प्रकृत्या नलोपे न स्यादिति भावः। एकशब्दस्य च अदुक् इत्यागमः स्यात् । आद्यन्तौ टकिताविति कित्त्वादन्त्यावयवः। न विंशतिर्नविंशतिः। एकेन न विंशतिरिति लौकिकविग्रहः। एक-टा-न । विंशतिः जस् इत्यलौकिकः। सुब्लुकि एक न विंशति एकस्यादुक् एकाद् न विंशतिः नञ्प्रकृत्या वर्तते। यरोऽनुनासिकेऽनुनासिको वेत्यनुनासिको नकारः विकल्पेन भवति। एकाद् न विंशतिः एकान्नविंशतिः। ननु न विंशतिर्नविंशतिरिति तत्पुरुष एव नलोपः किमिति न स्यादिति चेन्मैवम्। एकादिरिति वचनसामर्थ्यादेव नलोपात्प्रागेव एकेन समासः। कर्तव्य इति। यद्वा। नञित्यूनार्थकमव्ययम्। पूर्वसदृशसमो नेति सूत्रादेकशब्दस्य ऊनार्थेन नञा समासः एकेन । न एकन इति तृतीयातत्परुषः। न चात्र अव्ययमिति सूत्रादव्ययीभावसमासेन नञः पूर्वनिपातशङ्क्यः परत्वात्पूर्वसदृशेति सूत्रस्य, न चात्र नलोपो नञ इति नलोपश्शङ्क्यः। उत्तरपदे परतस्तद्विधानात्। पश्चाद्विंशतिना समासे नलोपे प्राप्ते एकादिश्चेति तन्निषेधः एकस्य आदुक्च एकाद् न विंशतिः। ननु परत्वान्नञ्समास एव स्यान्न तु तृतीयासमास इति चेन्मैवम्। आरोपितार्थक एव नञ् सुपा समस्यते। न पुनरूनार्थक इति नञतत्पुरुषस्यात्राप्रसक्तेः। अथवा एकेन न विंशतिरिति बहुपदतत्पुरुषः एकेनेति हेतौ तृतीया। सुब्लुकि यथापूर्वं सर्वं बोध्यम्। पथादिश्चेति सूत्रे चकारद्वयमस्ति हि। तत्र प्रकृतिभावानुकर्षणार्थ एकः अदुगागमनञ्प्रकृतिसद्भावयोरितरेतरसमुच्चयार्थोऽन्यः तेन अनेकविंशतिरित्यत्र अदुगागमो न भवति। नञः प्रकृतिवद्भावाभावात्-वस्तुतस्तु प्रकृतिभावानुकर्षणार्थश्चकारो न कर्तव्य एव। प्रकृत्येति पदस्य पूर्वसूत्रादनुवृत्तिः। इदमेवाभिप्रेत्य कौमुदीकारेण एकस्य चादुगागमश्चेति चकारद्वयमेकस्मिन्नेव वाक्ये निवेशितं फलाभावद्योतनायेति बोध्यम्।

137. षष आत्वमित्यादि- दत्रादेशे दशशब्दे थासुप्रत्यये च परतः षषः षष् इति शब्दस्य उत्वमतोन्तस्येत्यन्त्यादेशः गुणः। षो दतृ इति स्थिते उत्तरपदादेः ष्टुत्वञ्च, दस्य डः, षो ड तृ उगिदचामिति नुमागमादिकं षोडन् षोडश षट्च दश च षोडश षष् थास् इति स्थिते थासु वा इति विकल्पेन उत्वं ष्टुत्वञ्च षोढा । उत्वाद्यभावपक्षे झलां जस् झसीति षस्य जश्त्वेन डः षट्धा।

८१२ । **परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः** ।२।४।२६। एतयोः परपदस्येव लिङ्गं स्यात्। कुक्कुटमयूर्याविमे। मयूरीकुक्कुटाविमौ। अर्धपिप्पली॥ **द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वाच्यः**॥ पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः। प्राप्तो जीविकां प्राप्तजीविकः। आपन्नजीविकः। अलं कुमार्यै अलंकुमारिः। अतएव ज्ञापकात्समासः। निष्कौशाम्बिः॥

---

138. **परवलिङ्गं द्वन्द्वतत्पुरुषयोः।** परस्येव परवत्। तस्यै वेतिवतिः द्वन्द्वस्य तत्पुरुषस्य च स्वघटकीभूतोत्तरपदस्य यल्लिङ्गं तल्लिङ्गं स्यात्। द्वन्द्वस्तत्पुरुषश्च स्वघटकीभूतपरपदलिङ्ग-सदृशलिङ्गकस्स्यादित्यर्थः। यथा कुक्कुटश्च मयूरी च कुक्कुटमयूर्यौ इति द्वन्द्वः। मयूरीति परपदस्य स्त्रीलिङ्गत्वात् स्त्रीलिङ्गकः मयूरी च कुक्कुटश्च मयूरीकुक्कुटौ। कुक्कुटस्य परपदस्य पुंलिङ्गत्वात्पुंलिङ्गकः। अर्धपिप्पली अर्धं पिप्पल्या इति तत्पुरुषः। परपदस्य पिप्पल्याः स्त्रीलिङ्गत्वात् स्त्रीलिङ्गकः। ननु सुपो धात्विति समासावयवस्य सुप एव लुक् न तु स्त्रीलिङ्गस्येति। परपदलिङ्गं समासस्याव्यभिचार्येवेति किमनेन परवल्लिङ्गातिदेशेनेति चेन्मैवम्। विशेष्यलिङ्गबाधनार्थतया अस्यावश्यकत्वात् । अयं भावः। अर्धं पिप्पल्या इत्यत्र पिप्पलीविशेषणमप्रधानत्वादर्धं विशेष्यम्। प्रधानत्वादिति विशेष्यस्यार्धस्य यल्लिङ्गं नपुंसकं तदेव समासस्य स्यात्। अर्धपिप्पलीत्यस्य पिप्पलीसंबन्ध्यर्धमिति विशेष्यपर्यवसानेन विशेष्यलिङ्गकस्यौचित्यात्। एवं विशेष्यलिङ्गे नपुंसके सति ह्रस्वो नपुंसके प्रातिपदिकस्येति ह्रस्वस्स्यात्। अर्धपिप्पलि इति स्यादिति।। नन्वेवं तत्पुरुषस्यास्तु द्वन्द्वस्य तद्विधानं व्यर्थमेव । इतरेतरयोगद्वन्द्वघटकीभूतयोरुभयोरपि प्रधानत्वेन विशेषणविशेष्यभावानवगमात् । तेन कुक्कुट औ सु, मयूरी औ सु इति विग्रहे सुब्लुकि कुक्कुटमयूरी ततस्समासाद्द्वित्वत्वविवक्षया औ यण् कुक्कुटमयूर्यौ इति स्यादेवेति चेत् मैवम्। एकविभक्तिचापूर्वनिपात इत्युपसर्जनत्वेन मयूरीशब्दस्य ह्रस्वस्स्यात्। कुक्कुटमयूरि औ इति स्थिते। नेदं स्त्रीलिङ्गं पदम्। स्त्रीप्रत्ययस्य ङीषः ह्रस्वादेशेन स्त्रीलिङ्गबोधकप्रत्ययाश्रवणात्। तस्मात् सामान्ये नपुंसकमिति नपुंसकत्वेन औङश्श्यारिके सति कुक्कुटमयूरिणी इति स्यादिति। न च मयूरीकुक्कुटावित्यत्राप्युपसर्जनह्रस्वः शङ्क्यः। स्त्रीप्रत्ययान्तान्तस्यैव प्रातिपदिकस्योपसर्जनह्रस्वश्शङ्क्यः। स्त्रीप्रत्ययान्तान्तस्यैव प्रातिपदिकस्योपसर्जनह्रस्वविधानेन अस्मिन् मयूरीशब्दे तदप्राप्तेः। पञ्चकपालः विशेष्यभूत पुरोडाशस्य पुंस्त्वात् पुंलिङ्गोऽयं द्विगुः। वार्तिकाभावे तु कपालस्य नपुंसकत्वात् पञ्चकपालमिति स्यादिति बोद्धव्यम्। प्राप्तजीविकः उपसर्जनह्रस्वे कृते परवल्लिङ्गप्रतिषेधे च सति विशेष्यस्य प्राप्तस्य पुंस्त्वेन समासोऽपि पुंलिङ्गकः। ननु अलंपूर्वस्य समासस्य अलमोऽगतित्वे विधानाभावात् अलंकुमारी इति समास एव न स्यादित्यत आह। अत

८१३ । **पूर्ववदश्ववडवौ** ।२।४।२७। द्विवचनमतंत्रम्। अश्ववडवौ। अश्ववडवान्। अश्ववडवैः॥ **८१४ ।रात्राह्नाहाः पुंसि** ।२।४।२९। एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव। अन्तरङ्गत्वात्परवल्लिङ्गतापवादोऽप्ययं परत्वात्समाहारनपुंसकतां बाधते। अहोरात्रः। रात्रेः पूर्वभागः पूर्वरात्रः। पूर्वाह्णः। द्व्यहः॥ **संख्यापूर्वं रात्रं क्लीबम्**॥ 'लि० १३१' द्विरात्रम्। त्रिरात्रम्। गणरात्रम्।

---

एव ज्ञापकादिति। अलंकृत्येत्यादीनामव्ययत्वेन लिङ्गाभावात् परवल्लिङ्गातिदेशनिषेधो वृथेति। तद्योग्यत्वेनायं समासो ज्ञाप्यत इति भावः। वार्तिके गतिमपनीय प्रादिर्निवेशनीयः। प्रादिःसमासेष्विति वाच्यमित्यर्थः। अन्यथा क्रियायोगे गतिसंज्ञाविधानेन न क्रियावाचकानाम-लिङ्गत्वात्परवल्लिङ्गातिदेश एव न प्रसज्यत इति कुतस्तन्निषेधः । इदं सर्वं मनसि कृत्वाह निष्कौशाम्बिः। कौशाम्ब्या निर्गतः पुरुष इति सर्वं मनसि कृत्वाह निष्कौशाम्बिः। कौशांब्या निर्गतः पुरुष इति विशेष्यलिङ्गोऽयम्।

139.पूर्ववदश्वबडबौ–परवल्लिङ्गापवादोऽयम्। अश्वबडबपदघटितस्य द्वन्द्वस्य पूर्वस्याश्वशब्दस्येव लिङ्गं स्यात् । अश्वबडबाविति द्वन्द्वस्य पूर्ववल्लिङ्गमिति वा । न चात्रात्माश्रयत्वरूपो दोषः शङ्क्यः (अश्वबडबाविति पूर्ववल्लिङ्गविधायके सूत्र एव पूर्ववल्लिङ्गनिर्देशात्। ओदनं पचतीतिवद्भाविनं पूर्ववल्लिङ्गातिदेशमाश्रित्य व्यवहारात्। यद्वा पूर्ववल्लिङ्गतिदेशस्य अश्वबडबाविति सूत्रोक्तद्वन्द्वस्यापि लक्ष्यत्वात्। ननु अश्वबडबावित्येव सूत्रमस्तु । निपातनादेव पूर्ववल्लिङ्गातिदेशस्य लब्धत्वात्। किं पूर्ववदित्याशङ्कायामाह। अश्वबडबान् इति। ननु कृतेऽपि पूर्ववदिति पदे कथमश्वबडबानिति स्यात्। अश्वबडबौ इति द्वित्त्वस्यैव श्रूयमाणत्वादित्यत आह। द्विवचनमतन्त्रमिति अविवक्षितमित्यर्थः । पूर्ववद्ग्रहणमेवात्र ज्ञापकमिति भावः। द्विवचनमेव नाविवक्षितं, किन्तु विभक्तिरपीत्याह। अश्वबडबैरिति। अश्वश्च बडबा च अश्वबडबौ। ननु उपसर्जनह्रस्वे कृतेऽभीष्टं सिद्ध्येदेवेति किमनेनेति चेन्नैवम्। ह्रस्वात्पश्चाददन्तत्वाट्टापः प्रसक्तेः ।

140. रात्राह्नाहाः पुंसि। द्वन्द्वतत्पुरुषयोरित्यत्रानुवर्तेते। तौ च विभक्तिविपरिणामेन प्रथमान्तौ रात्रादिषु तदन्तविधिः विशेषणत्वात्। रात्रान्तौ द्वन्द्वतत्पुरुषौ । अह्नान्तस्तु तत्पुरुष एव ।अह्नोह्न एतेभ्य इति सर्वादिभ्यः परस्यैवाह्नादेशविधानेन सर्वादिभिरहन्शब्दस्य द्वन्द्वासम्भवात् अहश्शब्दान्तस्तु तत्पुरुषो द्वन्द्वश्च। अहश्च रात्रिश्च अहोरात्रः। द्वन्द्वोयम् । अहस्सर्वैकदेशेऽतिरात्रेरच्। ननु पुंस्त्वं भवतु नाम। कथमेकत्वं रामकृष्णावद्द्वित्वेन भाव्यत्वादिति चेत् सत्यं समाहारद्वन्द्वोऽयम्। न त्वितरेतरयोगद्वन्द्वः ।अहश्च रात्रिश्च अनयोस्समाहारः अहोरात्रः। अत्र परवल्लिङ्गं द्वन्द्वेति परवल्लिङ्गे प्राप्ते तस्यायमपवादः।

**८१५ । अपथं नपुंसकम्** ।२ ।४ ।३० । तत्पुरुष इत्येव। अन्यत्र तु अपथो देशः। कृतसमासान्तनिर्देशान्नेह। अपन्थाः ॥**८१६ । अर्धर्चाः पुंसि च** ।२ ।४ ।३१ । अर्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः। अर्धर्चः। अर्धर्चम्। ध्वजः। ध्वजम्। एवं तीर्थ, शरीर, मण्ड, पीयूष, देह, अङ्कुश, कलश इत्यादि॥ **८१७ । जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्** ।१ ।२ ।५८। एकोऽप्यर्थो वा बहुवद्भवति। ब्राह्मणाः पूज्याः। ब्राह्मणः पूज्यः ॥**८१८ । अस्मदो द्वयोश्च** ।१ ।२ । ५१। एकत्वे द्वित्वे च विवक्षितेऽस्मदो बहुवचनं वा स्यात्। वयं ब्रूमः। पक्षे अहं ब्रवीमि। आवां ब्रूव इति वा॥ **सविशेषणस्य प्रतिषेधः** ॥ पटुरहं ब्रवीमि॥

---

ननु स नपुंसकमिति समाहारे द्विगोर्द्वन्द्वस्य च नपुंसकत्वेन भाव्यम्। अहोरात्रम् इति चेन्मैवमित्याह । परत्वात्समाहारनपुंसकतां बाधत इति पूर्वरात्रः रात्रान्तस्तत्पुरुषोऽयम्। पूर्वाह्णः अह्नः पूर्वमिति विग्रहः। द्वयोरह्नोस्समाहारो द्व्यह इति द्विगुतत्पुरुषः । न सङ्ख्यादेरित्यह्नादेशनिषेधः। रात्रिश्च अहश्च अनयोस्समाहारो रात्र्यः इति द्वन्द्वस्योदाहरणं द्रष्टव्यम्। रात्रेति किम्। रात्र्यन्तान्माभूत् । रम्या रात्रिः रम्यरात्रिः। अह्नेत्युक्ते अहरन्तान्न स्यात्। अहरित्युक्ते अह्नान्तान्न स्यादित्युभयोर्ग्रहणम्। सङ्ख्यापूर्वमिति बहुगणवतुडतिसङ्ख्येति। कृत्रिमा संख्या नेह गृह्यते। द्व्यष्टनस्सङ्ख्यायामबहुव्रीह्यशीत्योरिति अशीतेरकृत्रिमसङ्ख्यात्वेन, तस्मिन् परे द्व्यष्टन आत्वप्राप्तिरेव नास्तीति कृत्वा तन्निषेधस्य वैयर्थ्यापातात्।

141. अर्धर्चाः–बहुवचननिर्देशात्तदादिलाभः । नात्र द्वन्द्वतत्पुरुषयोरनुवृत्तिः। अर्धर्चशब्दे तत्पुरुषसम्भवेऽपि तदितरेषु तयोरसम्भवात् ऋचोर्धमर्धर्च्यः। ऋक्पूरब्धूरिति समासान्तोऽप्रत्ययः क्लीबे अर्धर्चम् ।

142. अर्धर्चाः पुंसि चेति सूत्रेण असमस्तानामुपपदानां केषाञ्चिल्लिङ्गव्यवस्थादर्शितेति तत्प्रसङ्गात् केषाञ्चित् वचनव्यवस्थां दर्शयति जात्याख्यायामित्यादिना । जात्याख्यानां जातिवाचिके पदे एकस्मिन् एकार्थबोधके सत्यपि बहुवचनं तान्येकवचनेति सूत्रितं। बहुवचनसंज्ञिकं जसादिअन्यतरस्यां स्यात्। अर्थाज्जातिवाचकपदात्परस्सन्नेव। यद्वा जात्याख्यायां जातौ वाच्यायां एकस्मिन्नेकार्थबोधकप्रत्यये एकवचने इत्यर्थः । बहुवचनं बह्वर्थबोधकप्रत्ययातिदेशो वक्तव्य इत्यर्थः। अथवा एकस्मिन्नेकवचनस्य बहुवचनमादेशो वा स्यादित्यर्थः। यद्वा एकस्मिन्नेकत्वे विवक्षिते जात्याख्यायामिति पञ्चम्यर्थे सप्तमीजातिवाचकाच्छब्दात् बहुवचनजश्शसादिकं वा स्यात्।

**८१९ । फल्गुनीप्रोष्ठपदानां च नक्षत्रे** ।१ ।२ ।६० । द्वित्वे बहुत्वप्रयुक्तं कार्यं वा स्यात्। पूर्वे फल्गुन्यौ। पूर्वाः फल्गुन्यः॥ पूर्वे प्रोष्ठपदे। पूर्वाः प्रोष्ठपदाः॥ नक्षत्रे किम्। फल्गुन्यौ माणविके॥ **८२० । तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्** ।१ ।२ ।६३ । बहुत्वं द्वित्ववद्भवति। तिष्यश्च पुनर्वसू च तिष्यपुनर्वसू। तिष्येति किम्। विशाखानुराधाः। नक्षत्रेति किम्। तिष्यपुनर्वसवो माणवकाः॥ **८२१ । स नपुंसकम्** ।२ ।४ ।१७ । समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात्। परवल्लिङ्गापवादः। पञ्चगवम्। दन्तोष्ठम्॥ **अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः**॥ पञ्चमूली॥ **आबन्तो वा**॥ पञ्चखट्वी पञ्चखट्वम्॥ **अनो नलोपश्च वा द्विगुः स्त्रियाम्**॥ पञ्चतक्षी। पञ्चतक्षम्॥ **पात्राद्यन्तस्य न**॥ पञ्चपात्रम्। त्रिभुवनम्। चतुर्युगम्॥ **पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा**॥ पुण्याहम्। सुदिनाहम्॥ **पथः संख्याव्ययादेः**॥ संख्याव्ययादेः परः कृतसमासान्तः पथशब्दः क्लीबमित्यर्थः। त्रयाणां पन्थास्त्रिपथम्। विरूपः पन्थाः विपथम्। कृतसमासान्तनिर्देशान्नेह। सुपन्थाः। अतिपन्थाः॥ **सामान्ये नपुंसकम्**॥ मृदु पचति। प्रातः कमनीयम्॥

---

143. अकारान्तोत्तरपद इत्यादि। द्विगोरिति सूत्राददन्तात् द्विगोर्ङीप्विहितस्त्रियां। तस्यैव विवरणमिदं वार्तिकम्। इष्टः। द्विगोरिति सूत्रकृतपाणिनिना अङ्गीकृत इत्यर्थः। न चेदं वार्तिकं व्यर्थमिति वाच्यम्। पञ्चगवमित्यत्र द्विगोरिति ङीप्प्रसङ्गात् अयं भावः। अदन्ताद्विगोर्ङीप्सूत्रकृता विहितः अकारान्तोत्तरपदाद्द्विगोरिति् वार्तिककृता तस्य सङ्कोचः कृतः। पञ्चगवमित्यत्र यदुत्तरपदं समासान्तोदयात्प्रागगोशब्दः (विग्रहावस्थायामेव यदुत्तरपदं तदकारान्तं चेत् स द्विगुस्त्रियामिष्ट इति) गोशब्दस्य अकारान्तोत्तरपदत्वाभावान्न पञ्चगवशब्दात् ङीप्। सूत्रमते तु समासान्तप्रत्ययोत्पत्त्यनन्तरं गवेत्यदन्त एवेति ङीप् स्यादिति बोध्यम्। अनः।अन्नन्तोत्तरपदस्य पुण्याहं रात्राह्नाहाः पुंसीति पुंस्त्वे प्राप्ते अनेन क्लीबतापथ इति कृतसमासान्तनिर्देशादाह। कृतसमासान्तः पथशब्द इति सामान्ये नपुंसकम्। यत्र नियतलिङ्गत्वं नास्ति तत् सामान्यं तत्र नपुंसकं स्यात्। यथा मृदु। मृदुः मृद्वी। इति त्रिलिङ्गत्वादनियतलिङ्गमिदम्। मृदु यथा तथा पचतीत्यर्थः। एवं कमनीयम्। विशेष्यलिङ्गत्वेनानियतलिङ्गमिदं क्रियाविशेषणञ्च।

144. तदाद्याचिख्यासायाम्। तयोरादिस्तदादिः तस्य आख्यातुमिच्छा आचिख्यासा। तस्यां सत्यां पाणिन्युपज्ञं ग्रन्थः। अनेन व्याकरणग्रन्थेन पाणिनिरुपज्ञायते। आद्यत्वेन (आदिकर्तृत्वेन) विज्ञायत इति पाणिनेरुपज्ञा, ग्रन्थः। पाणिनिकर्मकाद्यज्ञानजनको ग्रन्थ इत्यर्थः।

**८२२ । तत्पुरुषोऽनञ्कर्मधारयः** ।२ ।४ ।१९ । अधिकोरोऽयम् ॥ **८२३ । संज्ञायां कन्थोशीनरेषु** ।२ ।४ ।२० । कन्थान्तस्तत्पुरुषः क्लीबं स्यात्सा चेदुशीनरदेशोत्पन्नायाः कन्थायाः संज्ञा। सुशमस्यापत्यानि सौशमयः तेषां कन्था सौशमिकन्थम्। संज्ञायां किम्। वीरणकन्था। उशीनरेषु किम्। दाक्षिकन्था॥ **८२४ । उपज्ञोपक्रमं तदाद्याचिख्यासायाम्** ।२ ।४ ।२१ । उपज्ञान्त उपक्रमान्तश्च तत्पुरुषो नपुंसकं स्यात् तयोरुपज्ञायमानोपक्रम्यमाणयोरादिः प्राथम्यं चेदाख्यातुमिष्यते। पाणिनेरुपज्ञा पाणिन्युपज्ञं ग्रन्थः। नन्दोपक्रमं द्रोणः॥ **८२५ । छाया बाहुल्ये** ।२ ।४। २२। छायान्तस्तत्पुरुषो नपुंसकं स्यात्पूर्वपदार्थबाहुल्ये। इक्षूणां छाया इक्षुच्छायम्। 'विभाषासेना-८२८' इति विकल्पस्यायमपवादः। इक्षुच्छायानिषादिन्य इति तु आ समन्तान्निषादिन्य इत्याङ्प्रश्लेषो बोध्यः॥

---

"उपज्ञा ज्ञानमाद्यं स्या" दित्यमरोक्तेः। अस्यायमाद्य इति यद् ज्ञानं तदाद्यज्ञानं तादृशज्ञाने यत्कर्म तदुपज्ञायमानं पाणिन्यादिः यः कर्ता स उपज्ञाग्रन्थादिः। अस्य ग्रन्थस्य अयं पाणिनिराद्य इति पाणिनिकर्मकाऽद्यज्ञाने ग्रन्थस्य कर्तृत्वप्रतीतेः। नन्दोपक्रमं द्रोणः । द्रोणेन नन्द उपक्रम्यत इति नन्दस्योपक्रमो द्रोणः । यद्वा नन्दस्येति कर्तरि षष्ठी। नन्देन द्रोण उपक्रम्यत इति नन्दस्योपक्रमो द्रोणः। परिमाणविशेषे द्रोणशब्दो रूढः। द्रोणाख्यस्य परिमाणस्य प्रथमप्रवर्तको नन्द इत्यर्थः। एवमेव पाणिनेरिति कर्तरि षष्ठी। पाणिनिना आदौ व्याकरणग्रन्थ उपज्ञायते ज्ञायते ज्ञात्वा क्रियते वेति पाणिनेरुपज्ञाग्रन्थ व्याकरणस्य प्रथमप्रवर्तकः पाणिनिरित्यर्थः। अस्मिंस्तु पक्षे उपज्ञायमानः ग्रन्थ एव । न तु पाणिनिः। एवमुपक्रम्यमाणश्च न नन्दः किन्तु द्रोण एव। तयोः प्राथम्याचिख्यासा नाम प्रथमप्रवृत्तिविवक्षेति बोध्यम्।

145. छायाबाहुळ्ये-अनातपवाची छायाशब्दोऽत्र गृह्यते। अत एव बाहुल्ये इत्यनेन पूर्वपदार्थबाहुळ्ये द्योत्ये इत्यर्थः। प्रतीयते। अनातपस्य आवरकद्रव्यनिमित्त-त्वात्पूर्वपदार्थोऽत्रावरकद्रव्यवाच्येव। तेन "रत्नच्छायाव्यतिकर" इति मेघसन्देशे छायाशब्दस्य कान्तिवाचित्वेन रत्नानामनावरकद्रव्यत्वेन च छायाबाहुळ्य इति नपुंसकं स्यादिति शङ्का परास्ता । यद्यपि छायानां कान्तीनां बाहुळ्यस्यापि पूर्वपदार्थभूतरत्नबाहुळ्याधीनत्वात् पूर्वपदार्थबाहुल्ये द्योत्ये इति वचनमत्रापि समन्वेति तथापि बहुविधरत्नजन्याः कान्तयो बहुविधा एव । श्वेतत्वादिविशेषावगमात्। इति पूर्वपदार्थबाहुळ्याच्छायानामपि बहुळ्यमस्तीति छायानां बाहुल्ये नपुंसकं स्यादित्येवालम्। अनातपस्य तु पूर्वपदार्थबाहुल्येऽपि न बाहुल्यं छायायाः नीलित्वाव्यभिचारात् किन्तु सान्द्रत्वमेव। सान्द्रवं नाम मध्ये मध्ये आतपाभावः । तस्मात् बाहुळ्यपदं नानातपान्वयीति पूर्वपदार्थान्वये

**८२६ । सभा राजाऽमनुष्यपूर्वा** ।२।४।२३। राजपर्यायपूर्वोऽमनुष्यपूर्वश्च सभान्तस्तत्पुरुषो नपुंसकं स्यात्। इनसभम्। ईश्वरसभम्। **पर्यायस्यैवेष्यते**॥ नेह। राजसभा। चन्द्रगुप्तसभा। अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह। रक्षःसभम्। पिशाचसभम्॥ **८२७ ।अशाला च** ।२।४।२४। संघातार्था या सभा तदन्तस्तत्पुरुषः क्लीबं स्यात्। स्त्रीसभम्। स्त्रीसंघात इत्यर्थः। अशाला किम्। धर्मसभा। धर्मशालेत्यर्थः ॥**८२८ ।विभाषा सेनासुराच्छायाशालानिशानाम्** ।२।४।२५। एतदन्तस्तत्पुरुषः क्लीबं वा स्यात्। ब्राह्मणसेनम्। ब्राह्मणसेना। यवसुरम्। यवसुरा। कुड्यच्छायम्। कुड्यच्छाया। गोशालम्। गोशाला। श्वनिशम्। श्वनिशा। 'तत्पुरुषोऽनञ्कर्मधारय-८२२' इत्यनुवृत्तेर्नेह। दृढसेनो राजा। असेना। परमसेना॥

इति तत्पुरुषः॥

---

बाहुल्यपदस्य छायापदमनातपवाच्यैवेति सर्वं सुष्ठु । ननु परत्वाद्विभाषेति सूत्रस्य वैकल्पिकमेव नपुंसकं स्यादिति व्यर्थमिदं सूत्रमत आह ।अपवाद इति । विभाषेति सामान्यशास्त्रं। इदन्तु विशेषशास्त्रमित्यपवादत्वं बोध्यम्।

146. सभाराजेति–राजशब्देनात्र राजपर्यायशब्दा एव गृह्यन्ते न तु राजविशेषवाचकाः शब्दाः। नापि राजशब्दः व्याख्यानात्। तत्पुरुष इत्यधिकारः । तस्य सभेति विशेषणम्। तेन तदन्तविधिः । राजा चामनुष्यश्च राजामनुष्यौ । आसंभवात्तयोरन्यतरः पूर्वः। पूर्वपदं पूर्वावयवो वा यस्य स सभान्तस्तत्पुरुषः नपुंसकं स्यादित्यन्वयः। इनस्य सभा इनसभम्। ईश्वरस्य सभा ईश्वरसभम्। राजपर्यायपूर्वस्येमे उदाहरणे राजशब्दपूर्वस्य राजविशेषपूर्वस्य च सभान्तस्य नपुंसकत्वाभावमाह । राजसभा चन्द्रगुप्तसभा इति। चन्दगुप्त इति कश्चिद्राजविशेषः। अमनुष्यपूर्व इत्यत्र अमनुष्येति तत्पुरुषघटकीभूतस्य नञः पर्युदासे वा प्रसज्यप्रतिषेधे वा मनुष्येतरसर्वजातिग्रहणं स्यादिति कृत्वाह। रूढ्या रक्षः पिशाचादीनाहेति। तथैवोदाहरति रक्षस्सभं पिशाचसभमिति मनुष्यसभेत्येव। आदिपदेन न देवानां ग्रहणं सम्भवति। रक्षःपिशाचयोर्न्यूनत्वाद्देवानामुत्कृष्टत्वाच्च। तेन देवसभा इति।

147 अशाला च–न शाला अशाला। नञः पर्युदासेन शालाभिन्नेत्यर्थः। पूर्वसूत्रादनुवृत्तस्य सभेत्यस्य विशेषणमिदं शालाभिन्ना सभा नाम शालार्थभिन्नार्थबोधकसभेत्यर्थः। शालार्थभिन्नश्चार्थस्सङ्घात एव। सभाशब्दस्य शालासङ्घातार्थद्वयवाचकत्वात्तदेतदाह–

सङ्घातार्था या सभेति। सभा राजामनुष्यपूर्वा अशाला च । अत्रेदं विचार्यते। राजपर्याय पूर्वो मनुष्यपुर्वश्च यश्शालावाचकसभान्तस्तत्पुरुषस्स नपुंसकं स्यात्। उदाहरणमीश्वरसभम्। रक्षस्सभम् प्रत्युदाहरणं राजसभा चन्द्रगुप्तसभा च। अशाला सङ्घातार्था या सभा तदन्तस्तत्पुरुषः क्लीबं स्यात्। उदाहरणं स्त्रीसभम् प्रत्युदाहरणं धर्मसभा इति व्याख्याने धर्मसभेत्यत्र कथं नपुंसकत्वप्राप्तिः । अशालेत्यनेन निषेद्धुं सभाशब्दस्य शालावाचकत्वेऽपि धर्मशब्दस्य अराजपर्याय(पूर्व)त्वात् रक्षःपिशाचादिकत्वाभावाच्च । अथ यदि सौत्रस्य सभाशब्दस्य सङ्घातवाचकत्वं व्याख्यायते तथा स्त्रीसभमित्युदाहरणं सिद्ध्यति। स्त्रीशब्दस्य मनुष्यवाचकत्वात् । ननु अशालेति पृथग्योगकरणवैयर्थान्यथानुपपत्या सिद्ध्यतीति चेत् अमनुष्यपूर्वाग्रहणमपार्थम्। तर्हि सुत्यजमिति चेत् इन्द्रसभेति न भवति। ननु राजपूर्वस्य चेद्भवति तर्हि राजपर्यायस्यैवेति नियमादिन्द्रस्य त्रिभुवनराजत्वात् राजपर्यायत्वाभावान्न दोष इति चेत् पण्डितसभेति न सिद्ध्यति । अथ पुनर्यदि सौत्रसभाशब्दस्य शालासङ्घातोभयवाचकत्वमभ्युपेयते तर्हि स्त्रीसभं धर्मसभा इत्युभयमपि न सिद्ध्यति। अशाला चेति सूत्रवैयर्थ्यान्यथानुपपत्त्या सिद्ध्यतीति चेद्धर्मसभेति प्रत्युदाहरणं व्यर्थम्। भवतु नास्माकं तत्राग्रहः। अतः राजपर्यायपूर्वः अमनुष्यपूर्वः शालासङ्घातोभयवाचकः सभान्तस्तत्पुरुषः क्लीबं स्यादिति पूर्वसूत्रं व्याख्याय सङ्घातवाचकसभान्तस्यापि राजपर्यायपूर्वत्वामनुष्यपूर्वत्वरूपनियमप्राप्तौ तद्बाधनार्थं सूत्रमुपक्षिपतीत्यवतरय्य अशालासङ्घातार्था या सभा तदन्तस्तत्पुरुषः क्लीबमेव स्यात् । प्राप्तनियमबाधनार्थश्चकारः । न तु नियममपेक्षत इत्यर्थः इति व्याख्येयमिति केचित्। अपरे तु अशाला किमिति प्रश्न स्य सभाराजामनुष्यपूर्वा अशाला चेत्युभयं किमित्यर्थमुपवर्ण्य पूर्वोक्तान्वयगतधर्मसभावैयर्थ्याङ्गीकाररूपदोषं ममृजुः। वस्तुतस्तु सभाशालाराजामनुष्यपूर्वा इति सूत्रयित्वा सभाशालासङ्घातोभयवाचकसभान्तस्तत्पुरुषः क्लीबं स्यात्। उत्तरसूत्रे सभेत्यनुवृत्त्य शालासभा शालावाचकसभान्तस्य तत्पुरुषस्य क्लीबं भवति चेत्तर्हि राजामनुष्यपूर्वाराजपर्यायपूर्वस्य अमनुष्यपूर्वस्यैव च इति विधिनियमपरतया व्याख्येयम्। अस्मिंस्तु पक्षे न कोपि दोषः। परन्तु लाघवरूपो गुणश्च । सर्व सुष्ठु ।

इति तत्पुरुषस्समाप्तः

श्रीहयग्रीवाय नमः

# बहुव्रीहिप्रकरणम् १९।

**८२९ ।शेषो बहुव्रीहिः** ।२ ।२ ।२३ । अधिकारोऽयम्। 'द्वितीया श्रित-६८६' इत्यादिना यस्य त्रिकस्य विशिष्य समासो नोक्तः स शेषः प्रथमान्तमित्यर्थः ॥**८३० । अनेकमन्यपदार्थे** ।२ ।२ ।२४। अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः। अप्रथमाविभक्त्यर्थे बहुव्रीहिरिति समानाधिकरणानामिति च फलितम्। प्राप्तमुदकं यं सः प्राप्तोदको ग्रामः। ऊढरथोऽनड्वान्। उपहृतपशू रुद्रः। उद्धृतौदना स्थाली। पीताम्बरो हरिः ।वीरपुरुषको ग्रामः॥ प्रथमार्थे तु न। वृष्टे देवे गतः। व्यधिकरणानामपि न। पञ्चभिर्भुक्तमस्य॥ **प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः**॥ प्रपतितपर्णः प्रपर्णः॥ **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः**॥अविद्यमानपुत्रः अपुत्रः। अस्तीति विभक्तिप्रतिरूपकमव्ययम्। अस्तिक्षीरा गौः॥

---

अथ बहुव्रीहिः

1. यस्य त्रिकस्य –प्रथमासंज्ञकस्य सु औ जस् इति प्रत्ययत्रयस्य विशिष्य यद्यपि कर्मधारये प्रथमान्तस्य समासः प्रदर्शितः, तथाऽपि समानाधिकरणेन समस्यत इति प्रथमादिसामान्येन स समासः प्रवृत्तः। न तु प्रथमैव समानाधिकरणेनेति विशेषाकारेणेति भावः। कस्य त्रिकस्य विशिष्य समास उक्त इत्यत आह। द्वितीयाश्रितेत्यादिनेति प्रथमाभिन्नानां षण्णामपि त्रिकाणां द्वितीयाश्रिताभिः सूत्रैर्विशिष्योक्त इत्यर्थः। द्वितीयाश्रिता तृतीया तत्कृत – चतुर्थीतदर्थ– पञ्चमीभयेन – षष्ठी – सप्तमीशौण्डैरिति। तत्तद्विभक्ति संज्ञाग्रहणपूर्वकं समासा उक्ता इति भावः। नैवं प्रथमा केनचित्समस्यत इत्युक्तमिति अनुक्तत्वात् स शेषपदेन व्यवह्रियते। उक्तातिरिक्तस्य शेषत्वात्। प्रथमाबहुव्रीहिरिति सूत्रे तु गौरवं स्यात्। शेष इति बहुव्रीहिरिति च पदद्वयमुत्तरत्राधिक्रियते इत्यधिकारः। न च बहुव्रीहिरित्येव सूत्रमस्तु, किं शेषग्रहणेनेति वाच्यम्। अनेकमिति वक्ष्यमाणसूत्रे अनेकं सुबन्तमित्यर्थप्रसक्तेः।

2. अनेकमन्यपदार्थे शेष इत्यधिकृतं पदमस्य विशेष्यम्। लिङ्गविपरिणामेनेत्याह। अनेकं प्रथमान्तमिति अन्यपदार्थे समस्यमानप्रथमान्तपदातिरिक्तस्य पदस्य योऽर्थोऽभिधेयस्तत्र सप्तम्या अधिकरणवाचित्वात्तन्निष्ठाधिकरणतानिरूपितमाधेयत्वं प्रथमान्ते वर्तत इत्यालोच्याह वर्तमानमिति । वर्तनञ्च विशेषणतारूपसम्बन्धेन अन्यपदार्थगतविशेष्यता निरूपितविशेषणताश्रयमनेकं सुबन्तमित्यर्थः। द्विभाषाधिकारात् वेति समासाधिकारात्समस्यत

इति बहुव्रीह्यधिकारात्समासो बहुव्रीहिस्स्यादिति। स्वप्रोक्तसूत्रार्थस्य फलितमाह अप्रथमेत्यादिना। समस्यमानप्रथमान्तपदेभ्योऽन्यत्पदं प्रथमाभिन्नमेव भवतीति कृत्वा अप्रथमाविभक्त्यर्थ इति । ननु प्राप्तोदको ग्राम इत्यत्र समस्यमानपदातिरिक्तो ग्रामपदार्थः प्रथमान्त ऐवेति कथन्तत्र बहुव्रीहिरिति चेन्मैवम् स्वार्थद्रव्यलिङ्गसंङ्ख्याकारकात्मकं पञ्चकं प्रातिपदिकार्थ इति केचित्। स्वार्थद्रव्यलिङ्गात्मकं त्रिकमेवेति केचित्। आदितो द्विकमेवेति केचन। प्रातिपदिकार्थमात्रे प्रथमाया विहितत्वात्। त्रिकपक्षे प्रथमाविभक्त्यर्थः त्रिकमेवेति कृत्वा यस्य त्रिकस्येत्यस्य स्वार्थद्रव्यलिङ्गात्मकस्य प्रातिपदिकार्थस्येत्यर्थ इति केचित्। स्वार्थो विशेषणं द्रव्यं विशेष्यं लिङ्गं स्त्रीत्वादि प्राप्तमुदकं यं स इति यच्छब्देन द्वितीयान्तस्यैव अन्यपदार्थस्य विग्रहे परामर्शात्। विशेषणासम्बन्धेन प्राप्तोदकयोर्ग्रामे वर्तनन्तु उदककर्तृकप्राप्तिकर्मभूतो ग्राम इति शाब्दबोधे फलति। समानाधिकरणानामिति अनेकं प्रथमान्तं समस्यत इत्युक्तत्वेन समसनक्रियार्हसामर्थ्यवन्ति प्रथमान्तानि पदानि समानाधिकरणान्येव भवन्तीति भावः। न एकमनेकमिति एकप्रतिषेधेन द्वयोबर्हूनां वा समासः फलति। बह्वित्युक्ते तु द्वयोर्न स्यादिति बोद्धव्यम्। पीताम्बरो हरिः हरिस्वामिकं पीताभिन्नमम्बरं विग्रहार्थः। पीताभिन्नाम्बरस्वामी हरिरिति समासार्थः। वीरपुरुषो ग्रामः ग्रामाधिकरणका वीराभिन्नाः पुरुषा इति विग्रहार्थः। वीराभिन्नपुरुषाधारो ग्राम इति समासार्थः । वृष्टे देवे गतः । यद्यप्यत्र समस्यमानयोस्सप्तम्यन्तत्वेन अप्रथमान्तत्वादेव न बहुव्रीहिरिति अन्यपदार्थे (अप्रथमाविभक्त्यर्थे) किमित्यस्य प्रत्युदाहरणान्न स्यात्। तथाऽपि अप्रथमाविभक्त्यर्थे वर्तमानानां समानाधिकरणानां बहुव्रीहिरिति फलितार्थमाश्रित्येदं प्रत्युदाहरणमिति बोध्यम्। तत्र समानाधिकरणानामित्येवोक्तं न तु प्रथमान्तानामिति हेतोः अत एव अप्रथमार्थे किमिति मनसि कृत्वा प्रथमार्थे तु नेत्युक्तम्। अन्यथा अप्रथमान्तानां नेति वक्तव्यं स्यात्। वृष्टे देवे इत्यत्र यस्य च भावेन भावलक्षणमिति सप्तमी। सप्तम्यन्तयोरुभयोस्सामानाधिकरण्यमस्त्येव अप्रधानत्वेन विशेषणं देवस्य वर्षणं प्रधानम्। गमनं लक्षयति । तच्च गमनं प्रातिपदिकार्थमात्रमेव न तु कर्मादिसंज्ञकमिति। प्रथमार्थे वर्तमानत्वान्न सप्तम्यन्तयोरनयोर्बहुव्रीहिः देवकर्तृकवर्षणलक्षणलक्षितं गमनमर्थः पञ्चभिर्भुक्तमस्य । अत्राप्यप्रथमान्तत्वादेव समासाप्राप्तिः। फलितार्थवाक्ये तु समानाधिकरणानामित्युक्तेर्न समासमिति भावः। यथाश्रुतसूत्रार्थपक्षे तु अनेकं किम्। श्रीमत्पीताम्बरः। यद्वा एकत्वे माभूत् अम्बरम् शेषः किम्। पञ्चभिर्भुक्तमस्य ।वृष्टे देवे गत इति च । अन्यपदार्थे किम्। वीरः पुरुषो वीरपुरुष इत्यत्र तत्पुरुषं कर्मधारयं बहुव्रीहिर्मा बाधताम्। प्रपतितः पर्णः प्रपर्णः । पत्ल् गतावित्यस्माद्धातोः कर्तरि क्तप्रत्यये कृते निष्पन्नत्वात् पतितशब्दो धातुजः उत्तरपदलोपस्य वा वाच्य इति प्रपतितपर्ण इत्यपि स्यात्। न चात्र प्रादयो गताद्यर्थे प्रथमयेत्यनेन वार्तिकेन अन्यथासिद्धिः शङ्क्या। प्रगत आचार्यः प्राचार्य इतिवत्

**८३१ । स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु** ।६।३।३४। भाषितपुंस्कादनूङ् ऊङोऽभावो यस्यामिति बहुव्रीहिः। निपातनात्पञ्चम्या अलुक् षष्ठ्याश्च लुक्। तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात्पर ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात्समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे न तु पूरण्यां प्रियादौ च परतः।

---

तद्वार्तिकलक्ष्यस्य तत्पुरुषत्वेन स्वपदार्थप्राधान्यात्। ननु अत्रापि पर्णस्यैव प्राधान्यमिति अन्यपदार्थप्राधान्याभावेन न बहुव्रीहिरिति लक्षणस्यासम्भव इति चेन्मैवम्। प्रपतितः पर्णो यस्मात्स वृक्षः प्रपर्ण इति सत्त्वादन्यपदार्थप्राधान्यस्य । न च मूले विग्रहवाक्ये कुतोऽनिबन्धनं, यस्मादिति पदस्येति वाच्यम्। अलौकिकविग्रहवाक्ये तत्प्रवेशाभावात् । उक्तं चैतन्मासो जातस्येति व्याख्यानावसरे तत्त्वबोधिन्याम्। ननु प्रपतिता सु–पर्ण सु इति हि अलौकिकविग्रहः कथमत्र प्रपतितः पर्ण इति निवद्ध इति चेत्सत्यम्। तथापि लौकिकालौकिकसाधारण्येनेदमुक्तमिति कथञ्चिदभ्युपेयम्। वस्तुतस्तु प्रपतितपर्णः प्रपर्ण इति पाठो युक्तः। उत्तरपदलोपस्य वैकल्पिकत्वेन लोपाभाव पक्षेऽप्युदाहरणप्रदर्शनस्यावश्यकत्वात्। विग्रहस्तु ऊढरथादिष्विव ऊह्य इति कौमुद्याशयः। एवमेव अविद्यमानः पुत्र इति पाठं त्यक्त्वा अविद्यमानपुत्र इति पठनीयम्। अविद्यमानः पुत्रो यस्येति लौकिकविग्रहः। ननु अनेकं प्रथमान्तमित्युक्तत्वेन अस्तीति धातोः क्षीरस्य च न बहुव्रीहिस्स्यादिति कथमस्ति क्षीरा गौरिति प्रयोगो घटत इत्याशङ्क्य तं साधयति। अस्तीति विद्यिमानार्थकस्तिङन्तप्रतिरूपकोऽव्ययसंज्ञश्शब्दः। क्षीरपदसामानाधिकरण्यात्प्रथमान्तश्च । न च प्रथमाया अग्रवशात् अप्रथमान्तं शङ्क्यम् ।अव्ययाद्विहितस्य सुपो लुकि प्रत्ययलक्षणन्यायेन प्रथमान्तत्वात्। अस्तिक्षीरं यस्यास्सा अस्तिक्षीरा। विद्यमानक्षीरेत्यर्थः बहुव्रीहेरन्यपदार्थप्राधान्येन कोऽत्रान्यपदार्थ इत्यत आह गौरिति विद्यमानाभिन्नक्षीरस्वामिनी गौरिति शाब्दबोधः।

3. स्त्रियाः पुंवदिति भाषितपुंस्कादनूङ् इति स्त्रिया इत्यस्य विशेषणम्। भाषितपुंस्कानूङ इति वक्तव्ये निपातनात्पञ्चम्या अलुक् षष्ठ्याश्च लुगिति। न ऊङः यस्यां सा अनूङ्। नञोऽत्राभावोऽर्थः। इदमेवाह ऊङभावो यस्यामिति व्यधिकरणबहुव्रीहिः। सप्तमीविशेषण इति वक्ष्यमाणसूत्रे सप्तमीग्रहणात् ज्ञापकात् क्वचिद्व्यधिकरणानामपि बहुव्रीहिरिष्यत इति कृत्वा निपातनाद्बहुव्रीहिरिति नोक्तम्। भाषितः पुमान् यस्मिन्नर्थे स भाषितपुंस्कः। भाषितपुंस्कोऽर्थोऽस्यास्तीति भाषितपुंस्कं शब्दस्वरूपमिति मनसि कृत्वा फलितमाह। तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कमिति ऊङुत इत्यादिभ्यो विहितस्त्रीप्रत्यय ऊङ् तदभावो यत्र

'गोस्त्रियोः-६५६' इति ह्रस्वः' चित्रा गावो यस्येति लौकिकविग्रहे। चित्रा अस् गो अस् इत्यलौकिकविग्रहे। चित्रगुः। रूपवद्भार्यः। चित्रा जरती गौर्यस्येति विग्रहे अनेकोक्तेर्बहूनामपि बहुव्रीहिः। अत्र केचित्। चित्राजरतीगुः। जरतीचित्रागुर्वा। एवं दीर्घातन्वीजङ्घः। तन्वीदीर्घाजङ्घः। त्रिपदे बहुव्रीहौ प्रथमं न पुंवत्। उत्तरपदस्य मध्यमेन व्यवधानात्। द्वितीयमपि न पुंवत्। पूर्वपदत्वाभावात्। उत्तरपदशब्दो हि समासस्य चरमावयवे रूढः। पूर्वपदशब्दस्तु प्रथमावयवे रूढ इति वदन्ति। वस्तुतस्तु नेह पूर्वपदमाक्षिप्यते। 'आनङ् ऋतः-९२१' इत्यत्र यथा। तेनोपान्त्यस्य पुंवदेव। चित्राजरद्गुरित्यादि। अतएव चित्राजरत्यौ गावौ सस्येति द्वन्द्वगर्भेऽपि चित्राजरद्गुरिति भाष्यम्। कर्मधारयपूर्वपदे तु द्वयोरपि पुंवत्। जरच्चित्रगुः कर्मधारयोत्तरपदे तु चित्रजरद्गवीकः। स्त्रियाः किम्। ग्रामणि कुलं दृष्टिरस्य ग्रामणिदृष्टिः। भाषितपुंकात्किम्। गङ्गाभार्यः। अनूङ् किम् । वामोरूभार्यः। समानाधिकरणे किम्। कल्याण्याः माता कल्याणीमाता। स्त्रियां किम्। कल्याणी प्रधानं यस्य स कल्याणीप्रधानः। पूरण्यां तु॥

---

प्रकृतिप्रत्ययोभयघटिते यस्मिन् शब्दे प्रकृतिर्भाषितपुंस्काप्रत्ययस्तु ऊङ् न भवति । स शब्दो भाषितपुंस्कानूङ् । तस्य तथाभूतस्य स्त्रियाः स्त्रीवाचकशब्दस्य पुंवत् पुंस इव पुंवाचकस्येव रूपं स्यात् । उतरपदाधिकारत्वादुत्तरपद इति परत इत्यस्यात्राप्यन्वयः। स्त्रियामित्यस्य स्त्रीलिङ्गे इति स्त्रीवाचके शब्दे इत्यर्थः। अपूरणीप्रियादिषु नञोऽत्र प्रसज्यप्रतिषेधोऽर्थः प्रियादर्गणः प्रियादौ प्रियादिगणपठितेषु शब्देष्वित्यर्थः । पञ्चमीविभक्त इति भाषितपुंस्कशब्दात्पञ्चमी । पञ्चमीभयेनेति सूत्रे पञ्चमी इति योगविभागात्समासः । भाषितपुंस्कानूङिति समासशास्त्रस्य वैकल्पिकत्वेन यद्यपि भाषितपुंस्कादिति पृथक्पदमपि सुवचमेव, तथाऽपि अर्थस्वारस्याय समासः कर्तव्य इति । कृते च समासे पञ्चम्या अलुक्। सौत्र इति च कौमुद्याशयः। तस्मात् भाषितपुंस्कादनूङ् इत्येकमेव पदमिति बोध्यम्। यथा चित्रगुः चित्र[illegible]दं भाषितपुंस्कम्। चित्रवर्णत्वरूपस्य प्रवृत्तिनिमित्तस्य ऐक्यात् तस्मात् स्त्रीत्वे अदन्तत्वाट्टाप् चित्रा नास्मिन् शब्दे ऊङस्तीति अनूङ्। अयं शब्दः गौरित्युत्तरपदं स्त्रीलिङ्गं समानाधिकरणञ्च । न च गोशब्दः पुंस्यपि वर्तत इति कथं स्त्रीत्वमिति वाच्यम्। लिङ्गस्य विवक्षाधीनत्वात् स्त्रीलिङ्गं एव गोशब्दोऽत्र गृह्यत इति भावः। पुंवद्रूपम् पुंवाचकस्य यथा चित्र इति रूपं तथैवात्रापि, विशेष्यम्। चित्र गो ह्रस्वः चित्रगु सु चित्रगुः गोप इति विशेष्यम्अत्र चित्रा अस् गो अस् इति स्थिते सवर्णदीर्घः प्राप्तो न भवति अन्तरङ्गानपि विधीन् बहिरङ्गो लुक् बाधत इति न्यायात्। तेन सुपो धात्विति सुब्लुक्। अनेकोक्तेः अनेकमन्यपदार्थ

इति बहुव्रीहावनेकपदानां समासवचनात् चित्रा जरती गुः स्त्रियां पुंवदिति द्वयोस्समास एव पुंवद्भावविधानान्नात्र त्रयाणां समासे पुंवद्भावः । चित्राजरत्योरुभयोरपि गोशब्दं प्रति विशेषणत्वाद्विशेषणस्य पूर्वनिपातनियमेन उभयोः पूर्वनिपातासम्भवात् कदाचिच्चित्राशब्दस्य कथाचिज्जरतीशब्दस्य च पूर्वनिपातः । तेन जरतीचित्रागुरिति च पक्षे । ननु विशेषणं विशेष्येणेति सूत्राद्यत्र समासः क्रियते तत्रैव विशेषणस्य पूर्वनिपात इति चेन्मैवम्। अनेकमिति प्रथमानिर्दिष्टा विशेषात्त्रयाणामपि पूर्वनिपातापत्त्या तदसम्भवात्। त्रिषु स्थितेन विशेषणविशेष्यभावसम्बन्धेन विशेषणविशेष्यसमासाभावेऽपि विशेषणस्य पूर्वनिपातोभ्युपेयत इति, यद्वा प्रथमानिर्दिष्टत्वाविशेषण त्रयाणामुपसर्जनसंज्ञायां सत्यामपि अप्रधानलक्षणमुपसर्जनत्वं विशेषण एव वर्तते न तु विशेष्य इति, तथाविधस्यात्र पूर्वनिपातः । उपसर्जनं पूर्वमिति सूत्रात्सामान्यत उपसर्जनस्य पूर्वनिपातो विधीयते, न तु प्रथमानिर्दिष्टमुपसर्जनमित्यस्यैवेति भावः। वस्तुतस्तु सप्तमी विशेषणं इति विशेषणं बहुव्रीहौ पूर्व प्रयोज्यमिति वक्ष्यति। अथ चित्रा जरती गुरित्यादौ पुंवद्भावाभावं व्याख्यातुमुपक्रमते त्रिपद इत्यादिना । अयं भावः। स्त्रियाः। स्त्रियां पुंवदित्येतावदुक्तौ प्रथमस्य स्त्रीवाचकस्य द्वितीये परतः द्वितीयस्य तृतीये परतश्च पुंवदित्यर्थलाभेन त्रयाणामपि समासो लभ्यत एव। प्रथमद्वितीययोः पुंवद्भावश्च सिद्ध्यति। प्रकृते तु स्त्रीवाचके उत्तरपदे परत इति वचनेन उत्तरपदशब्दस्य समासचरमावयवे रूढत्वादुत्तरपदेन पूर्वपदमाक्षिप्यते । पूर्वपदं नाम समासपूर्वावयवः । पूर्वपदस्य उत्तरपदे परतः पुंवदिति पठितम्। तथात्वे त्रयाणां समासे तु मध्यपदेन व्यवधानात्। यस्समासपूर्वावयवस्तस्य नोत्तरपदपरकत्वं, यदुत्तरपदं न तत्पूर्वपदात्परमिति, न पुंवद्भाव इति द्वयोरेव समासे पुंवद्भाव इति। अत्र केचिदिति मूलोक्तस्य इति वदन्तीत्यनेनान्वयः। केचिदित्युक्त्या सूचितं पूर्वोक्ते तन्मते दौर्बल्यं दर्शयन् स्वमतमुपक्षिपति वस्तुतस्त्विति, उत्तरपदेन पूर्वपदाक्षेपाभावे। दृष्टान्तभूतमन्यत् स्थलं दर्शयति। आनङृत इत्यत्र यथेति आनङृतो द्वन्द्वे इति द्वन्द्वे वक्ष्यति। ननु तत्रापि पूर्वपदाक्षेपोऽभ्युपेयत एवेति चेन्मैवम्। होतृपोतृनेष्ठोद्गातार इति भाष्यविरोधात्। उपान्त्यस्य अन्त्यसमीपे यत्तदुपान्त्यं तस्य समासचरमावयवपरकत्वं, पूर्वपदस्य नास्तीति तस्य पुंवद्भावाभावेऽपि उपान्त्यस्य मध्यपदस्य अस्तीति तस्य पुंवद्भावः। ननु मध्यस्येत्येव वक्तव्यम्। किमित्युपान्त्यस्येति चेन्मैवम्। रम्या चित्रा जरद्गुरित्यादिचतुष्पदसमासेषु मध्यस्य पदस्याभावात् (पदद्वयं हि तत्र मध्यभूतं न त्वेकमिति) उभयोरपि मध्यस्येत्यनेन एकत्वाविवक्षाया ग्रहणे तु उभयस्य पुंवद् स्याद्रम्या चित्रा जरद्गुरिति। नैतदिष्टं अत उपान्त्यस्येत्युक्तिः। ननु हेतृपोतृनेष्टोद्गातार इति भाष्यप्रयोगात्तत्रैव पूर्वपदाक्षेपाभाव इत्यङ्गीक्रियतां किमत्रापीत्यत आह। चित्रा जरद्गुरिति भाष्यमिति। अत्रापि भाष्यप्रयोगसत्वान्न पूर्वपदाक्षेप इति भावः। द्वन्द्वगर्भेऽपि पूर्वस्य समस्तपदस्य उत्तरपदपरकत्वे सत्यपि

**८३२ । अप्पूरणीप्रमाण्योः** ।५।४।११६। पूरणार्थप्रत्ययान्तं यत् स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप् स्यात्। कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः। स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः। पुंवद्भावप्रतिषेधोऽप्प्रत्ययश्च प्रधानपूरण्यामेव। रात्रिः पूरणी वाच्या चेत्युक्तोदाहरणे मुख्या। अन्यत्र तु॥

---

अभाषितपुंस्कत्वात् चित्राजरत्याविति द्वन्द्वे जरतीशब्दस्यैव उत्तरपदत्वाच्च द्विवचनान्तेन गोशब्देन सह द्वयोस्सामानाधिकरण्यं न त्वेकस्य जरतीशब्दस्येति। जरतीशब्दस्य समानाधिकरणोत्तरपदपरकत्वाभावाच्च। द्वन्द्वगर्भे बहुव्रीहौ पुंवद्भावस्य दुर्घटत्वेपीत्यपेरर्थः। उत्तरपदपरकत्वमात्रस्य सत्त्वेन उपान्त्यस्य पुंवद्भावाङ्गीकारात् द्वन्द्वावयवस्य जरतीशब्दस्य पुंवद्भाव इति भाष्यप्रयोगाद् ज्ञाप्यत इति भावः। द्वयोरपि चित्राजरती चित्रजरती इति कर्मधारयः। पुंवत्कर्मधारयेति स्त्रियाः पुंवदिति वा पुंवत् चित्रजरती गौर्यस्येति बहुव्रीहौ चित्रजरतीशब्दस्य पूर्वपदस्य गौरित्युत्तरपदे पुंवत् चित्रजरद्गुः। सूत्रे स्त्रिया इत्यस्याभावे पुंवद्भावातिदेशयोग्यस्य नपुंसकस्यापि ग्रहणं स्यादिति मत्वा प्रत्युदाहरति। ग्रामणि दृष्टिरिति। दृष्टिशब्दस्तद्विषये लाक्षणिकस्त्रीलिङ्गः ग्रामणिशब्दस्तु ग्रामनयनार्थे भाषितपुंस्कः। तथा च पुंलिङ्गेषु ग्रामणीरिति रूपम् दर्शितं मूल एव। प्रकृते कुलविशेषबोधकं नपुंसकमिदम्। अस्यापि पुंवत्वे ग्रामणीकुलमिति स्यादिति बोध्यम्।

4. अप्पूरणीति। बहुव्रीहिरित्यधिकृतः । पञ्चम्यन्तेनात्र विपरिणम्यान्वेति । पूरणीति न स्वरूपग्रहणं । किन्तु पूरणार्थबोधकः प्रत्ययो गृह्यते । प्रत्ययग्रहणे तदन्तविधिः पूरणार्थप्रत्ययान्तमिति। पूरणी इति ण्यन्तेन स्त्रीत्वं वाच्यत इत्याह–यत्स्त्रीलिङ्गमिति। बहुव्रीहिविशेषणत्वात्तदन्तविधिः प्रमाणेति तु स्वरूपग्रहणम्। उभयत्रापि व्याख्यानमेव शरणम्। अप्समासान्तोप्प्रत्ययस्स्यादित्यर्थः। कल्याणीपञ्चमाः कल्याणीपञ्चमीति प्रातिपदिकादपि यस्येति चेति लोपः। पूरणीपरकत्वान्न पूर्वस्य पुंवत्वं। पञ्चानां पूरणः पञ्चम इति तस्य पूरण इति डट् । नान्तादिति मट् । ततस्त्रीत्वे टित्वात् ङीप्। पञ्चमी। प्रधानपूरण्यामेव। पूरणप्रत्ययान्तार्थस्य प्राधान्य एवेत्यर्थः। न च बहुव्रीहावन्यपदार्थप्राधान्येन कथं पूरणीप्राधान्यमिति वाच्यम्। सोप्यन्यपदार्थः पूरणप्रत्ययान्तार्थाभिन्न एव गृह्यत इति न पूरणी प्राधान्यासम्भवः। यथा उक्तोदाहरणे कल्याणी पञ्चमी इत्यत्र अन्यपदार्थो रात्रिपदार्थः पञ्चमीवाच्यश्च स एवेति पञ्चम्याः प्राधान्यं। न च पञ्चमीपदादेव रात्र्यर्थप्रतीतौ रात्रय इति विशेष्यं पुनरुक्त्यावहमिति वाच्यम्। सामान्यविशेषभावेन वार्थक्यावगमात् पूरणीवाच्यो रात्रिविशेषः । रात्रय इत्यन्यपदन्तु रात्रिसामान्यवाचकमिति भेदादिति भावः । अन्यपदार्थे सामान्यभूते यत्र पूरणीपदार्थो विशेष्यत्वेन वर्तते तदेव पूरण्यां प्राधान्यमिति यावत्। इदमेवाह रात्रिः पूरणीवाच्या चेति रात्रिपदार्थः

**८३३ । नद्यृतश्च** ।५ ।४ ।१५३ । नद्युत्तरपदादृदन्तोत्तरपदाच्च बहुव्रीहेः कप्स्यात्। पुंवद्भावः ॥ **८३४ । केऽणः** ।७ ।४ ।१३ । के परेऽणो ह्रस्वः स्यात्। इति प्राप्ते ॥ **८३५ । न कपि** ।७ ।४ ।१४। कपि परे ह्रस्वो न स्यात्। कल्याणपञ्चमीकः पक्षः। अत्र तिरोहितावयवभेदस्य पक्षस्यान्यपदार्थतया रात्रिरप्रधानम्। बहुकर्तृकः। अप्रियादिषु किम्। कल्याणीप्रियः। प्रिया। मनोज्ञा। कल्याणी। सुभगा। दुर्भगा। भक्तिः। सचिवा। स्वसा। कान्ता। क्षान्ता। समा। चपला। दुहिता। वामा। अबला। तनया ॥ **सामान्ये नपुंसकम्** ॥ दृढं भक्तिर्यस्य स दृढभक्तिः। स्त्रीत्वविवक्षायां तु दृढाभक्तिः ॥ **८३६ तसिलादिष्वाकृत्वसुचः** ।६ ।३ ।३५ । तसिलादिषु कृत्वसुजन्तेषु परेषु स्त्रियाः पुंवत्स्यात् । परिगणनं कर्तव्यम् । अव्याप्त्यतिव्याप्तिपरिहाराय ॥

---

पूरणीपूरणान्तवाच्यः वाच्या च समस्तपदवाच्यश्च इत्यर्थः। सामान्यतः समासेन विशेषतः पूरण्या च रात्रिपदार्थो वाच्य इति भावः।

5. तिरोहितावयवभेदस्य– अवयवानां रात्रीणामह्नां च यो भेदः प्रथमाद्वितीयेत्यादिर्विशेषः तिरोहितः पक्षे न गृह्यत इति तथोक्तस्य पक्षे शुक्लत्वकृष्णत्वरूप एव भेदः शुक्लपक्षः कृष्णपक्ष इति न तु रात्रिभेदाः । रात्रौ तु प्रथमा रात्रिर्द्वितीयारात्रिरित्यादयो रात्रिभेदा गृह्यन्ते।

बहुकर्तृकः बह्वयः कर्त्र्यो यस्मिन् स इति विग्रहे बहुकर्त्रीक इति स्यात्। परन्तु बहवः कर्तारो यस्मिन् स इत्यत्र विग्रहः नद्यन्तस्य कपमुदाहृत्य ऋदन्तस्य कपमुदाहर्तुमिदं दृढं भक्तिर्यस्य दृढभक्तिः। एतेन दृष्टभक्तिर्भवान्या इति व्याख्यातो मेघः।

6. तसिलादिष्विति– परिगणनञ्च पाणिनिनैवोपनिबद्धमस्मिन् सूत्र एव। ननु आकृत सुच इति मास्तु तसिलादिगणपाठादेव अव्याप्त्यतिव्याप्तिपरिहारस्य सिद्धत्वात् इति चेसत्यम्। आमुष्मिकफलायैव बह्वीभ्यो देहि बहुशः बह्वल्पार्थाच्छन् तदर्थबोधकशब्दाच्च शस् विहित इति शस्प्रत्यययोग्यत्वसूचनाय क्रियान्वयित्वं दर्शयितुं देहीति। तेन बह्वीभ्यो देहि बहुशो देहि इति सुवचम् । एवमेव अल्पश इत्यत्रापि देहीत्यस्यान्वयो द्रष्टव्यः। कृतार्थता कृतार्थस्य भावः कृतार्थतेति कृतार्थशब्दस्सामान्ये नपुंसकमिति लिङ्गविशेषविवक्षाभावान्नपुंसकः। अन्यथा स्त्रीत्वविवक्षायां कृतार्थाता इति स्यात्, कृतार्थशब्दस्य अगुणवचनत्वात् । अत एव द्वारवतीत्वमिति माघे द्वारवतीशब्दस्य संज्ञात्वेन अगुणवचनत्वात् लिङ्गविशेषस्य स्त्रीत्वस्य विवक्षिततत्वान्न पुंस्त्वं स्त्रीत्वविवक्षाभावे तु द्वारवत्त्वमिति प्रयोगो साधुरेव। द्वाराण्यस्यास्सन्तीति द्वारवती तस्याभाव इति यौगिकप्रयोगे तु द्वारवत्त्वमित्येव अगुणवचनत्वात्।

**त्रतसौ । तरप्तमपौ । चरड्जातीयरौ । कल्पब्देशीयरौ । रूपप्पाशपौ । थाल् । तिलथ्यनौ** । बह्वीषु बहुत्र बहुतः । दर्शनीयतरा । दर्शनीयतमा । 'घरूप -९८५' इति वक्ष्यमाणो ह्रस्वः परत्वात्पुंवद्भावं बाधते । पट्वितरा । पट्वितमा । पटुचरी । पटुजातीया । दर्शनीयकल्पा । दर्शनीयदेशीया । दर्शनीयरूपा । दर्शनीयपाशा । बहुथा । प्रशस्ता वृकी वृकतिः । अजाभ्यो हिता अजथ्या ॥ **शसि बहल्पार्थस्य पुंवद्भावो वक्तव्यः** ॥ बह्वीभ्यो देहि बहुशः । अल्पाभ्यो देहि अल्पशः ॥ **त्वतलोर्गुणवचनस्य** । शुक्लाया भावः शुक्लत्वम् । शुक्लता । गुणवचनस्य किम् । कर्त्र्या भावः कर्त्रीत्वम् । शरदः कृतार्थतेत्यादौ तु सामान्ये नपुंसकम् । **भस्याढे तद्धिते** ॥ हस्तिनीनां समूहो हास्तिकम् । अढे किम् । रौहिणेयः ।

---

भस्याढे तद्धिते। तद्धितप्रत्यये परतः पूर्वस्य भस्य स्त्रीवाचकस्य पुंवत्स्यात् न तु ढप्रत्यये परतः। हास्तिकम् हस्तिनी ठक् ठस्येकः हस्तिनी। इक पुंवत् हस्तिन् इक नस्तद्धित इति टिलोपः। हस्तु इक ठकः कित्वादादिवृद्धिः हास्तिक सोरं हास्तिकम् रौहिणेयः रोहिणीशब्दात् स्त्रीभ्यो ठक् आयनेयीति ठस्य एयादेशः रौहिणि एय यस्येति चेतीकारलोपः रोहिणेयः आदिवृद्धिः किन्निमित्तः रौहिणेयः। सापत्नः। सपत्नशब्दादणि यस्येतिचेतीकारलोपे आदिवृद्धौ सापत्नः । न चात्र भस्याढ इति पुंवद्भावशशङ्क्यः। भाषितपुंस्कस्यैव स्त्रीवाचकस्य पुंवद्भावविधानेन समानः पतिर्यस्यास्सेति सपत्नी शब्दस्य नित्यस्त्रीलिङ्गशब्दत्वेन अभाषितपुंस्कत्वात् शत्रुपर्यायस्य तु भाषितपुंस्कत्वात्पुंवदेव सपत्नी अण् पुंवत् सपत्न अण् यस्येति चेत्यवर्णलोपः आदिवृद्धिः सापत्नः इति। तृतीयात्सपत्न सपत्नी ण्या इति स्थिते यचि भमिति यादिप्रत्ययपरकत्वेन पूर्वस्य भत्वात् भत्वात् भस्याढ इति पुंवद्भावेन स्त्रीत्वस्य निमित्तस्यापाये सति नित्यं सपत्न्यादिष्विति स्त्रीत्वनिमित्तेन जातो नकारोऽप्यपयाति। सपति य यस्येति चेतीकारलोपः आदिवृद्धिः सापत्यसर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्य इति भाष्यकारेष्टिः। इष्टयभावे सर्वमय इत्यादिर्न सिद्ध्यति। इष्टिसद्भावे तु भावत्का इत्यादिसिद्ध्यति चेति इष्टेरावश्यकत्वेन सूत्रवार्तिकयोर्वैयर्थ्यमिति भावः । सर्वाभ्य आगतस्सर्वमयः काम्यच्चेति सर्वा आत्मन इच्छति सर्वकाम्यति। ननु सर्वनाम्नो वृत्तिमात्र इत्यनेन वृत्तौ, सर्वनामपदं पूर्वं वा भवतु परं वा भवतु। उभयविधस्यापि पुंवद्भावः स्यात् । तेन सर्वप्रिय इत्यादौ पूर्वस्येव तस्मादितरा तदितरा इत्यादौ परस्यापि पुंवद्भावो निष्ठ आपततीत्याशङ्कायामाह पूर्वस्यैवेदमिति। ननु अस्य नियमस्य किं ज्ञापकमत आह भस्त्रैषाद्वेति लिङ्गादिति। अयं भावः। एषा द्वा एतयोः कात्पूर्वस्यात् इत्वं विहितम्। एषिका द्विका इति तत्र एषैव एषिका इति ।

'स्त्रीभ्यो ढक् ११२३' इति ढोऽत्र गृह्यते ।'अग्रेर्ढक् १२३६' इति ढकि तु पुंवदेव । अग्नायी देवताऽस्य स्थालीपाकस्याग्नेयः। सपत्नीशब्दस्त्रिधा ।शत्रुपर्यायात्सपत्नशब्दा. च्छार्ङ्गरवादित्वात् ङीन्येकः । समानः पतिर्यस्या इति विग्रहे विवाहनिबन्धनं पतिशब्दमाश्रित्य नित्यस्त्रीलिङ्गो द्वितीयः । स्वामिपर्यायपतिशब्देन भाषितपुंस्कस्तृतीयः । आद्ययोः शिवाद्यण् । सपत्न्या अपत्यं सापत्नः । तृतीयात्तु लिङ्गविशिष्टपरिभाषया पत्युत्तरपदलक्षणो ण्य एव न त्वण् । शिवादौ रूढयोरेव ग्रहणात् । सापत्यः । **ठक्छसोश्च** ॥ भवत्याश्छात्रा भावत्काः । भवदीयाः । एतद्वार्तिकं 'एकतद्धिते च १०००' इति सूत्रं च न कर्तव्यम् ।'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति भाष्यकारेष्ट्या गतार्थत्वात् । सर्वमयः । सर्वकाम्यति । सर्विका भार्या यस्य स सर्वकभार्यः । सर्वप्रिय इत्यादि पूर्वस्यैवेदम् । 'भस्त्रैषाजाज्ञाद्वा ४६६' इति लिङ्गात् । तेनाकचि एकशेषवृत्तौ च न । सर्विका । सर्वाः ॥ **कुक्कुट्यादीनामण्डादिषु** । कुक्कुट्या अण्डं कुक्कुटाण्डम्। मृग्याः पदं मृगपदम्। मृगक्षीरम्। काकशावः॥

---

वृत्तौ सर्वनाम्न इति पुंवद्भावे एषाक एषक इति स्थिते कात्पूर्वस्य आकारस्यैवाभावात्कथं तत्रेत्वं स्यात् ।। एवमेव द्विकेत्यत्रापि तस्मात् इदं एषाद्वा एतयोः कात्पूर्वस्य आत इत्वविधानं व्यर्थं सत् वृत्तिघटकानेकभागमध्ये किञ्चिदपेक्षया पूर्वस्यैव सर्वनाम्नः वृत्तिमात्रे पुंवद्भाव इति ज्ञापयित्वा वृत्तिघटकभागानांमेव अभावात् किञ्चिदपेक्षया पूर्वत्वं किञ्चिदपेक्षया परत्वं वा एषका द्विका इत्यत्र नास्तीति न पुंवद्भावः। नापि तन्निषेधश्च इति स्वांशे चरितार्थमभवदिति। तदितरेत्यत्र तु किञ्चिदपेक्षया परत्वमेव वर्तते न तु पूर्वत्वमिति पुंवद्भावनिषेधः । न च कप्रत्ययापेक्षया पूर्वत्वं वर्तत इति पुंवद्भावश्शङ्क्यः। सर्वनाम्नोऽकच् प्राक्टेरिति टेः प्रागुद्भूतोऽकच् प्रत्ययसम्बन्ध्येव, तत्र श्रूयमाणः कः न तु कप्रत्यय इति साकच्कस्यापि सर्वनामत्वेनैव व्यवहारः। अकचः टेः प्रागुद्भूतत्वात् इदमेव मनसि कृत्वाऽऽह तेनाकचिनेति।ननु सर्वा च सर्वा च सर्वा च सर्वाः। अत्रैकशेषे पुंवत्स्यादेकस्य सर्वाशब्दस्य द्वितीयाद्यपेक्षपूर्वत्वादिति चेन्नैवम्। एकस्यैव शिष्टत्वेन द्वितीयाभावान्न पूर्वत्वमिति । किञ्च एकविभक्तौ परत इति विभक्तिसन्निहित एव सर्वाशब्दश्शिष्यत इति न तस्य पूर्वत्वमिति। काक्याश्शाबः काकीशाबः।

**८३७ क्यङ्मानिनोश्च** ।६ ।३ ।३६। एतयोः परतः पुंवत् । एनीवाचरति एतायते ।श्येनीवाचरति श्येतायते।स्वभिन्नां कांचिद्दर्शनीयां मन्यते दर्शनीयमानिनी । दर्शनीयां स्त्रियं मन्यते दर्शनीयमानी चैत्रः ॥ **८३८ न कोपधायाः** ।६ ।३ ।३७। कोपधायाः स्त्रिया न पुंवत् । पाचिकाभार्यः । रसिकाभार्यः । मद्रिकायते । मद्रिकामानिनी ॥ **कोपधप्रतिषेधे तद्धितवुग्रहणम्** । नेह पाका भार्या यस्य स पाकभार्यः ॥ **८३९ । संज्ञापूरणयोश्च** ।६ ।३ ।३८। अनयोर्न पुंवत् दत्ताभार्यः। दत्तामानिनी ।दानक्रियानिमित्तः स्त्रियां पुंसि च संज्ञाभूतोऽयमिति भाषितपुस्कत्वमस्ति । पञ्चमीभार्यः । पञ्चमीपाशा ॥

---

7. एतायते–वर्णादनुदात्तात्तोपधात्तो न इति, एतशब्दात्स्त्रीत्वे यो नस्तस्य पुंवद्भावेन श्रवणं सन्नियोगशिष्टस्य सह वा प्रवृत्तिस्सह वा निवृत्तिरिति ङीप्सन्नियोगशिष्टनस्य ङीपः पुंवद्भावेन निवृत्तौ, निवृत्तत्वात्श्येनायते श्येनस्य स्त्री श्येनी पुंयोगे ङीष् पुंवद्भावे न ङीषः निवृत्तिः श्येनायते । एवं क्यङि परत उदाहरणद्वयं दर्शयित्वा मानिनि परतः पुंवद्भावं दर्शयति दर्शनीयमानिनी दर्शनीयमानिन् शब्दादृन्नेभ्यो ङीपि रूपं । न चात्र स्त्रियाः पुंवदित्यनेन पुंवद्भावो वाच्यः । या मानिनी सा न दर्शनीयेति सामानाधिकरण्याभावात्। एतदर्थमेव स्वभिन्नां काञ्चिदिति ।

8. तद्धितवुक्ग्रहणम्। तद्धितस्य वोश्च यः कः तदुपधाया एव स्त्रियाः न पुंवदिति वाच्यमिति वार्तिकार्थः। पाका "पाकः पोतोर्भको डिम्भ इति" शिशुवाचकात्पाकशब्दादजाद्यतष्टाप्।

9. संज्ञापूरण्योश्च षष्ठ्यन्तोयम्। तेन अपूरणीप्रियादिष्वित्यत्र पूरणीग्रहणेन नान्यथासिद्धिरस्य संज्ञावाचकस्य पूरणार्थप्रत्ययान्तस्य च स्त्रियाः भाषितपुंस्कस्य स्त्रीवाचकशब्दस्य समानाधिकरणे स्त्रियां परतो न पुंवदित्यर्थः । संज्ञामुदाहरति । दत्ताभार्यः, दत्ता मानिनी इति। दत्ता भार्या यस्य सः दत्तामात्मानं मन्यत इति चोभयत्र विग्रहः। ननु दत्तेति कस्याश्चिन्नामेति भाषितपुंस्कत्वाभावादेव पुंवदप्राप्तौ संज्ञेति व्यर्थमत आह। दानक्रियेत्यादिदत्तेति न कस्याश्चिद्विशेषनाम किन्तु केनचित्कस्मैचिद्दत्ता कन्या दत्तेत्युच्यत इति पुंस्यपि दत्त इत्यस्तीति भाषितपुंस्क एवेत्यर्थः । न तु संज्ञात्वां हीयेत तथासतीति वाच्यम्। दत्तशब्दस्य योगरूढत्वेन संज्ञात्वात् । अन्यथा प्रत्त इत्यपि दत्तस्य व्यवहारस्स्यात्। पूरणीमुदाहरति। पञ्चमीभार्यः कस्याश्चित्पुत्रिकाणाम्मध्ये या पञ्चमी सा भार्या यस्य स पञ्चमीभार्यः। कुत्सिता पञ्चमी पञ्चमीपाशा।

**८४० । वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे** ।६ ।३ ।३९ । वृद्धिशब्देन विहिता या वद्धिस्तद्धेतुर्यस्तद्धितोऽरक्तविकारार्थस्तदन्ता स्त्री न पुंवत् । स्रौघ्नीभार्यः । माथुरीयते । माथुरीमानिनी । वृद्धिनिमित्तस्य किम् । मध्यमभार्यः । तद्धितस्य किम् । वृद्धिनिमित्तस्य किम् । मध्यमभार्यः । तद्धितस्य किम् । काण्डलावभार्यः । वृद्धिशब्देन किम् । तावद्भार्यः । रक्ते तु काषायी कन्था यस्य स काषायकन्थः । विकारे तु हैमी मुद्रिका यस्येति हैममुद्रिकः । वृद्धिशब्देन वृद्धिं प्रति फलोपधानाभावादिह पुंवत् । वैयाकरणभार्यः सौवश्वभार्यः ॥

---

10. वृद्धिनिमित्तस्य– वृद्धिरिति न स्वरूपग्रहणम् नाप्युपचयलक्षणः। किन्तु वृद्धिरादैच् इति कृत्रिमो वृद्धिसंज्ञक आदैच् गृह्यते । तच्च आदैच् शब्दाभ्यां विहितं न गृह्यते, किन्तु तयोस्संज्ञाभूतेन वृद्धिशब्देन विहितम् । यथा स्रौघ्नी तत्र भव इत्यण् स्रुघ्नी भवा स्रौघ्नी मृजेर्वृद्धिरिति सूत्रादनुवृत्तवृद्धिशब्दघटितेन तद्धितेष्वचामादेः इति सूत्रेण णिति प्रत्यये परतः आदेर्वृद्धिः। इयं हि वृद्धिः वृद्धिशब्देन विहिता तद्धितेष्वचामादेरचो वृद्धि स्स्यादिति विहितत्वात् स्रौघ्न अण् यस्येति च स्रौघ्न टिड्ढाणिति ङीप् स्रौघ्नी भार्या यस्य स स्रौघ्नीभार्यः । माधुरी पूर्ववदेव । ततः क्यङि मानिनि च क्यङ्मानिनोश्चेति पुंवद्भावे प्राप्ते अनेन तन्निषेधः। मध्यमभार्यः मध्यान्म इति मप्रत्यये परतः वृद्धिविधानाभावान्न वृद्धिनिमित्तोयम्। वृद्धिशब्देनेत्यादि तद्धितस्येति शेषः। वृद्धिशब्देन विहितां वृद्धिम्प्रति तद्धितस्य फलोपधानाभावादित्यन्वयः। फलस्योपधानं फलोपधानं वृद्धिश्ब्देन विहिताया वृद्धेर्यत्फलमादैज्लक्षणं तद्युक्तत्वाभावादित्यर्थः। । केवलस्य तद्धितस्य वृद्धिम्प्रति निमित्तत्वेन वृद्धिफलोपहितत्वाभावेऽपि तद्धितान्तस्य वृद्धिफलोपहितत्वात्तद्धितेऽपि तदुपचर्यत इति बोद्धव्यम्। यद्वा फलोपधानं नाम फलयोजनं अर्थात्स्वप्रकृतौ वैयाकरणभार्यः व्याकरणशब्दात्तदधीते तद्वेद चेद्यणि नैय्वाभ्यामिति वृद्धिनिषेधः। पूर्वौ तु ताभ्यामैच् इति ऐजागमः। वैयाकरण ङीपि वैयाकरणी । अत्र वृद्धिशब्देन वृद्धिविधानं यद्यप्यस्ति तथाऽपि फलनिष्पत्तिपर्यन्तं नास्ति नैय्वाभ्यामिति निषेधात् वृद्धिरप्यैजन्तस्यैव न तु सा वृद्धिशब्देन विहिता । किन्तु ताभ्यामैच् इति स्वशब्देनैव, तस्मात् वृद्धिशब्दविहितवृद्धिनिमित्ततद्धितान्तस्त्रीवाचकमपि वैयाकरणीपदं न पुंवद्भावमापद्यते, वृद्धिशब्दविहितवृद्धिफलोपहिततद्धितान्तस्त्रीवाचकत्वाभावादिति फलितम्। निमित्तशब्दः फलोपहितार्थबोधक एवात्र गृहीतुमुचितम्, न तु हेतुमात्रबोधकमिति भावः।

**८४१ स्वाङ्गाच्चेतः** ।६।३।४०। स्वाङ्गाद्य ईकारस्तदन्ता स्त्री न पुंवत् । सुकेशीभार्यः । स्वाङ्गात्किम् । पटुभार्यः । ईतः किम् । अकेशभार्यः ॥ **अमानिनीति वक्तव्यम्** ॥ सुकेशमानिनी ॥ **८४२ जातेश्च** ।६।३।४१। जातेः परो यः स्त्रीप्रत्ययस्तदन्तं न पुंवत् शूद्राभार्यः । ब्राह्मणीभार्यः । सौत्रस्यैवायं निषेधः । तेन हस्तिनीनां समूहो हास्तिकमित्यत्र 'भस्याढे- ३९२८' इति तु भवत्येव ॥ **८४३ । संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये** ।२।२।२५। संख्येयार्थया संख्ययाऽव्ययादयः समस्यन्ते स बहुव्रीहिः । दशानां समीपे ये सन्ति ते उपदशाः । नव एकादश वेत्यर्थः ।'बहुव्रीहौ संख्येये ८५१ इति वक्ष्यमाणो डच् ॥ **८४४ ति विंशतेर्डिति** ।६।४।१४२। विंशतेर्भस्य तिशब्दस्य लोपः स्याड्डिति । आसन्नविंशाः । विंशतेरासन्ना इत्यर्थः । अदूरत्रिंशाः । अधिकचत्वारिंशाः । द्वौ वा त्रयो वा द्वित्राः । द्विरावृत्ता दश द्विदशाः । विंशतिरित्यर्थः । **८४५ । दिङ्नामान्यान्तराले** ।२।२।२६। दिशो नामान्यन्तराले वाच्ये प्राग्वत् । दक्षिणस्याः पूर्वस्याश्च दिशोऽन्तरालं दक्षिणपूर्वा । नामग्रहणाद्यौगिकानां न । ऐन्द्र्याश्च कौबेर्याश्चान्तरालं दिक् ॥ **८४६ तत्र तेनेदमिति सरूपे** ।२।२।२७। ससम्यन्ते ग्रहणविपये सरूपे पदे तृतीयान्ते च प्रहरणविषये इदं युद्धं प्रवृत्तमित्यर्थे समस्येते कर्मव्यतिहारे द्योत्ये स बहुव्रीहिः ।

---

11. पटुभार्यः। वोतो गुणवचनादिति ङीष्। पट्वी भार्या यस्य स इति विग्रहः ईदन्तत्वं यद्यप्यत्र वर्तते तथाऽपि न स्वाङ्गत्वमिति न पुंवन्निषेधः । अमानिनीति वक्तव्यम्। स्वाङ्गाच्चेतो मानिनि इति सूत्रयितव्यमित्यर्थः। मानिनिपरतस्तु न पुंवन्निषेध इत्यर्थः। सुकेशीं स्त्रियम्। सुकेशीमात्मानञ्च मन्यत इति सुकेशमानी। सुकेशमानिनी च।

12. सौत्रस्यैवायं निषेधः। न तु वार्तिकविहितस्य तेन भस्याढ इति वार्तिकेन विहितो यः पुंवत् हास्तिकमित्यादौ न स निषिध्यत इति ज्ञेयम्।

13. आज्झलादेश इति तत्त्वबोधिनी- अज्झल्समुदायादेश इत्यर्थः। प्रकृतेति, इति अज्झल् समुदायस्य लोपादेशो विहितः न त्वङ्मात्रस्येति नात्राजादेशत्वमिति।

14. दिङ्नामान्यन्तराळे-दिग्वाचकपदानि मिथस्समस्यन्ते। अन्तराळे मध्ये। तच्च मध्यं दिग्रूपमेव वाच्ये सति स बहुव्रीहिः।

15. सरूपे-समानानुपूर्वीके समानार्थबोधके च। केशाकेशि आपञ्चमपरिसमाप्ते स्तद्धिताधिकारत्वेन इचस्तद्धितत्वात्। यस्येति चेत्यलोपः केशाकेश् इ केशाकेशि।

इतिशब्दादयं विषयविशेषो लभ्यते । इच् समासान्तो वक्ष्यते । तिष्ठद्गुप्रभृतिष्विच्प्रत्ययस्य पाठादव्ययीभावत्वमव्ययत्वं च । 'अन्येषामपि दृश्यते ३५३९' इति दीर्घः । केशेषु केशेषु गृहीत्वेदं युद्धं प्रवृत्तं केशाकेशि । दण्डैर्दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं दण्डादण्डि । मुष्टीमुष्टि ॥ **८४७ ओर्गुणः** ।६।४। १४६। उवर्णान्तस्य भस्य गुणः स्यात्तद्धिते । अवादेशः । बाहूबाहवि । ओरोदिति वक्तव्ये गुणोक्तिः (प) **संज्ञापूर्वको विधिरनित्यः** इति ज्ञापयितुम् । तेन स्वायम्भुवमित्यादि सिद्धम् । सरूपे इति किम् । हलेन मुसलेन ॥ **८४८ तेन सहेति तुल्ययोगे** ।२।२। २८। तुल्ययोगे वर्तमानं सहेत्येतत्तृतीयान्तेन प्राग्वत् । **८४९ वोपसर्जनस्य** ।६।३। ८२। बहुव्रीह्यवयवस्य सहस्य सः स्याद्वा । पुत्रेण सह सपुत्रः सहपुत्रो वा आगतः । तुल्ययोगवचनं प्रायिकम् । सकर्मकः । सलोमकः ॥

---

16. बाहूबाहवि–इचि गुणः अवादेशः स्वायम्भुवम्। ङीर्गुण इति गुणे सति स्वायम्भुवमिति स्यात् । न च गुणस्यानित्यत्वेन पक्षे तथा स्यादिति शङ्क्यम्। अनित्यत्वस्य व्यवस्थिततत्वात्। समानानुपूर्वीके किम्। कचेषु केशेषु समानार्थबोधके किम्।शरैर्बाणैश्शरैः कुशैश्च प्रवृत्तं युद्धमित्यत्र शराशरि इति मा भूत्। उभयाभावस्थलं प्रत्युदाहरति। हलेन मुसलेनेति।

17. तेन सहेति। तेनेति तृतीयान्तसर्वनामग्रहणेन तृतीयान्तं यत्किञ्चित्पदं लक्ष्यत इति कृत्वा तृतीयान्तेनेति कौमुदी। लक्षणास्वीकारे ज्ञापकं चात्र इति ग्रहणमेव अस्मादतिरिक्तं न किञ्चिदपि फलमितेरस्ति हि। ननु सह युक्तेऽप्रधान इति सहयोगे तृतीयान्तमेव पदं सहभिन्नं भवितुमर्हतीति। तेनेति किम्। देवदत्तः पुत्रेण सह विष्णुमित्रगृहं गत इत्यत्र सह विष्णुमित्रस्य सविष्णुमित्र इति माभूदिति। ननु समर्थपरिभाषया सहपदं समर्थेन पुत्रेणैवान्वेति न तु विष्णुमित्रपदेनेति दोषोऽयमकिञ्चित्कर इति चेत्तर्हि पुत्रेण सह पुत्र सह इति तृतीयान्तस्य पूर्वनिपातो माभूदिति। ननु सह सहपदमिति प्रथमान्तत्वेन सहस्यैव पूर्वनिपातस्यादिति नायं दोष इति चेत् तर्हि पुत्रेण सह पितेत्यत्र सपितेति माभूदिति। न चात्र सामर्थ्याभावश्शङ्क्यः। सहेत्यस्य युक्त इत्यर्थेन विशेषणविशेष्ययोस्सामर्थ्यसत्वात् । वस्तुतस्तु सः इत्येव सूत्रमस्तु। सः पदं समर्थेन सुबन्तेन समस्यते स बहुव्रीहिरिति। न च सह पिता सपितेति स्यादिति वाच्यम्। व्यधिकरणबहुव्रीहिप्रकरणस्थत्वेन अस्य सूत्रस्य समानाधिकरण– विशेषणसमासापवादत्वात्। (अन्यथा विशेषणसूत्रेणैव सिद्धे इदं विधानं व्यर्थं स्यात्) सहेत्यस्य प्रथमान्ताव्ययत्वेन

**८५० प्रकृत्याशिषि** ।६।३।८३। सहशब्दः प्रकृत्या स्यादाशिषि । स्वस्ति राज्ञे सहपुत्राय सहामात्याय ॥ **अगोवत्सहलेष्विति वाच्यम्** । सगवे । सवत्साय । सहलाय ॥ **८५१ बहुव्रीहौ संख्येये डजबहुगणात्** ।५।४।७३। संख्येये यो बहुव्रीहिस्तस्माड्डच् स्यात् । उपदशाः । अबहुगणात्किम् । उपबहवः । उपगणाः । अत्र स्वरे विशेषः ॥ **संख्यायास्तत्पुरुषस्य वाच्यः** ॥ निर्गतानि त्रिंशतो निस्त्रिंशानि वर्षाणि चैत्रस्य। निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः ॥ **८५२ बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्** ।५।४।११३। व्यत्ययेन षष्ठी । स्वाङ्गवाचि सक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात् । दीर्घे सक्थिनी यस्य स दीर्गसक्थः। जलजाक्षी । स्वाङ्गात्किम् । दीर्घसक्थि शकटम् । स्थूलाक्षा वेणुयष्टिः । 'अक्ष्णोऽदर्शनात् ९४४' इत्यच् ॥ **८५३ । अङ्गुलेर्दारुणि** ।५।४।११४। अङ्गुल्यन्ताद्बहुव्रीहेः षच् स्याद्दारुण्यर्थे । पञ्चाङ्गुलयो यस्य तत्पञ्चाङ्गुलं दारु । अङ्गुलिसदृशावयवं धान्यादिविक्षेपणकाष्ठमुच्यते । बहुव्रीहेः किम् । द्वे अङ्गुली प्रमाणमस्या द्वयङ्गुला यष्टिः । तद्धितार्थे 'तत्पुरुषे तत्पुरुषस्याङ्गुलेः - ७८६' इत्यच् । दारुणि किम् । पञ्चाङ्गुलिर्हस्तः ॥**८५४ द्वित्रिभ्यां ष मूर्ध्नः** ।५।४।११५। आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ । द्विमूर्धः । त्रिमूर्धः । **नेतुर्नक्षत्रे अब्वक्तव्यः** ॥ मृगो नेता यासां रात्रीणां ताः मृगनेत्रा रात्रयः । पुष्यनेत्राः ॥ **८५५ अन्तर्बहिर्भ्यां च लोम्नः** ।५।४।११७। आभ्यां लोम्नोऽप्स्याद्बहुव्रीहौ । अन्तर्लोमः। बहिर्लोमः ॥ **८५६ अञ् नासिकायाः संज्ञायां नसं चास्थूलात्** ।५।४।११८। नासिकान्ताद्बहुव्रीहेरच् स्यात् नासिकाशब्दश्च नसं प्राप्नोति नतु स्थूलपूर्वात् ॥

---

तद्व्यधिकरणं पदं न प्रथमान्तं किन्तु तदन्यदेव। तत्रापि। सहयुक्तेप्रधान इति सहयोगजन्यतृतीयाविभक्त्यन्तमेव गृह्यते। प्रतिपदोक्तत्वात् सामर्थ्यसत्वाच्च। सकर्मक सलोमकादिसिद्धये तुल्ययोगवचनं प्रायिकमति मूल एव वक्ष्यति ।

18. संङ्ख्येये यो बहुव्रीहिः–सङ्ख्ययाव्ययेति सूत्रात्सङ्ख्येयार्थया सङ्ख्याया अव्ययादीनां समसनं यत्र स बहुव्रीहिरित्यर्थः। यद्यपीदं सूत्रं सङ्ख्ययेति सूत्रानन्तरमेव व्याख्यातुमुचितं तथापि समासान्तविधित्वाड्डचस्तद्विधिमद्य एव व्याख्यातमिति बोध्यम्। उपगणाः गणशब्दः बहुत्वसंख्यावत्परः प्रकृते गणरात्रमित्यत्र तु सङ्ख्यापर एव।

19. द्विमूर्धः– द्विमूर्धन् अनस्तद्धित इति टिलोपः। मूर्धमृगनेतृ अ इको यणचि मृगनेत्र, स्त्रीत्वे अदन्तत्वत् टाप् मृगनेत्रा ।

20. अञ्नासिकाया इति। यरोऽनुनासिक इत्यनुनासिकश्चकारस्थाने ञकारः। तेन अञ् नासिकाया इति च्छेदः। अधिकृतस्य बहुव्रीहिपदस्य पञ्चम्यन्तेन विपरिणामः।

**८५७ पूर्वपदात्संज्ञायामगः** ।८।४।३। पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्यात्संज्ञायां नतु गकारव्यवधाने। द्रुरिव नासिकाऽस्य द्रुणसः। खरणसः।अगः किम्। ऋचामयनं ऋगयनम्। 'अणृगयनादिभ्यः १४५२' इति निपातनाण्णत्वाभावमाश्रित्य अग इति प्रत्याख्यातं भाष्ये। अस्थूलात्किम्। स्थूलनासिकः॥ **खुरखराभ्यां वा नस्**॥ खुरणाः॥ खरणाः॥ पक्षे अजपीष्यते॥ खुरणसः। खरणसः॥

---

नासिकाया इति पदमावर्त्यते। एकं पञ्चम्यन्तं बहुव्रीहेर्विशेषणं। तेन तत्र तदन्तविधिः द्वितीयन्तु प्रथमार्थे षष्ठचन्तम्। न समितिनशशब्दादिद्वितीया। अस्थूलादिति निषेधस्तु नसादेशविषय एव। स्थूलनासिक इत्यादौ समासान्ताच्प्रत्यये कृतेऽप्यकृतेऽपि उपसर्जनह्रस्वत्वे सति रूपसिद्धेः। फलाभावेऽपि पर्जन्यवल्लक्षणप्रवृत्यङ्गीकारे तु अज्विषयेऽपि निषेधो बोध्यः। अत्र अञ्नासिकाया नस्चास्थूलपूर्वादिति न्यासस्सुवचः। नासिकाया नसादेशस्स्यादित्यर्थः।

21. पूर्वपदात्संज्ञायामगः। रषाभ्याम् नो ण इत्यत्रानुयन्ति रषयोः पदत्वासम्भवात्पूर्वपदादित्यनेन न सामानाधिकरण्यं तयोरिति कृत्वा आह। पूर्वपदस्थान्निमित्तादिति पूर्वपदस्थाभ्यां रषाभ्यामित्यर्थः। अट्कुप्वाङिति सूत्राद्व्यवायपदमन्वेति। ग् शब्दात् षष्ठी गः नञः प्रसज्यप्रतिषेधोऽर्थः। गः गकारस्य व्यवाये व्यवधाने सति। न नस्य णत्वं न। संज्ञायां कृतणत्वेन पदेन कस्यचित्संज्ञा गम्यते चेत् कृतणत्वं पदम्। कस्यचिन्नाम स्याच्चेदिति यावत्। अत एव नारमयनं यस्य स नारायण इति नारायणशब्दो भगवति विष्णौ योगरूढ्या वर्तत इति तत्संज्ञात्वेन तत्र णत्वमुपपद्यते। न त्वन्यत्र शिवादौ तेषां नारायणसंज्ञाभावादिति वैष्णवाः। द्रुणस इत्यादीनि केषां चिन्नामानि, न तु केवलं रूढानि। किन्तु योगरूढानि। उपसर्गादनोत्पर इति। अत्र नश्चधातुस्थोरुषुभ्य इति पूर्वसूत्रात् नस् इति लुप्तषष्ठीकं पदमनुवर्तते। रषाभ्यामित्यतो रषाभ्यां नो ण इति च उपसर्गस्थाभ्यां निमित्ताभ्यां रषाभ्यां परस्य नसो नस्य णस्स्यात्। अनोत्परः नङित्परः अनोत्पर इति नञ्तत्पुरुषः। नसादेशावयवस्स नकारो यदि ङीत्परो न भवति तर्हि णत्वं प्राप्नोतीत्यर्थः। ङीत् ङीकारः परो यस्य स ङीत्पर इति बहुव्रीहिः। नस् इत्ययमादेशश्च द्विविधः अस्मच्छब्दस्य बहुवचनस्य वस्नसाविति सूत्राद्विहित एकः नासिकाशब्दस्य उपसर्गाच्चेति सूत्रेण विहितोऽपरः तयोरुभयोरपि प्रकृते नस् इत्यनेन ग्रहणमेव प्रतिपादितं नैतत्तत्त्वबोधिन्यां नश्चेति सूत्रव्याख्यावसरे वैदिकप्रक्रियायां सूत्रस्योदाहरणं प्रणस इति। प्रकृष्टा नासिका यस्य स इति बहुव्रीहौ नासिकाया नसादेशे अनेन सूत्रेण णत्वं। अनोत्परः किम्। प्रनो मुञ्चतेत्यत्र णत्वं माभूदिति तत्त्वबोधिनी। वेदे हि उपसर्गधात्वोर्विश्लेष आश्रीयते। नः प्रमुञ्चतेति वक्तव्ये प्रनो मुञ्चतेत्युक्तं। अस्मच्छब्दश्यादेशोऽयं नस् तदवयवो नकारस्तु

**८५८। उपसर्गाच्च** ।५।४।११९। प्रादेर्यो नासिकाशब्दस्तदन्ताद्बहुव्रीहेरच् नासिकाया नसादेशश्च। असंज्ञार्थं वचनम्। उन्नता नासिका यस्य स उन्नसः। उपसर्गादनोत्पर इति सूत्रं तद्भङ्क्त्वा भाष्यकार आह ॥**८५९। उपसर्गाद्बहुलम्** ।८।४।२८। उपसर्गस्थान्निमित्तात्परस्य नसो नस्य णः स्याद्बहुलम्। प्रणसः ॥ **वेर्ग्रो वक्तव्यः** ॥ विगता नासिकाऽस्य विग्रः ॥ **ख्यश्च** ॥ विख्यः। कथं तर्हि विनसा हतबान्धवेति भट्टिः। विगतया नासिकयोपलक्षितेति व्याख्येयम् ॥**८६०। सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः** ।५।४।१२०। एते बुव्रीहावच्प्रत्ययान्ता निपात्यन्ते। शोभनं प्रातरस्य सुप्रातः। शोभनं श्वोऽस्य सुश्वः। शोभनं दिवाऽस्य सुदिवः।

---

ङीत्पर एवेति नात्र णत्वं। अस्मिन् सूत्रकारमते प्रणो नयेत्यादावव्याप्तिं प्रनः पूषेत्यादावतिव्याप्तिञ्च दृष्ट्वा भाष्यकार एतत्सूत्रं भङ्क्त्वा उपसर्गाद्बहुलमित्याह। तथा हि-प्र इत्युपसर्गस्य नयेति धातुना सह संश्लेषाभावाद्भेदोऽयम्। प्र नः नय इतिच्छेदः। नः प्रणयेत्यर्थः। अत्र ङीत्परस्यापि नसादेशावयवस्य नस्य णत्वं जातमिति। अनोत्पर इति निषेधस्य तत्राभावादव्याप्तिः प्रनः पूषेत्यत्र ओत्परत्वाभावेन नत्वस्य भवितव्यत्वेऽपि तदभावादतिव्याप्तिः। भाष्यकारमतेऽपि बहुलग्रहणात् प्रनो मुञ्चतेत्यादौ णत्वाभाव इति बोध्यम्। क्वचित्प्रवृत्तिः क्वचिद्प्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेवेति बहुळपदार्थस्य निरुक्तत्वात्।

उपसर्गाद्बहुलमित्यस्यायमर्थः। अत्र नश्चेति सूत्रात् नन् इत्यनुवर्तते। तच्च लुप्तषष्ठीकं पदम्। रषाभ्यामित्यतो रषाभ्यां नो ण इत्यनुवर्तते उपसर्गादित्यस्य रषाभ्यामित्यस्य च विशेषणविशेष्यभावे सत्यपि रषयोरुपसर्गत्वासम्भवात्। उपसर्गस्थाभ्यामित्यर्थस्स्वीकार्यः। तस्मादित्युत्तरस्येति परिभाषया परस्येति लाभः। तदेवं उपसर्गस्थाभ्यां रषाभ्यां परस्य नसवयवस्य नस्य णस्याद्बहुलमित्यर्थः। रषाभ्यामित्येतस्य निमित्तादिति प्रतिपदं कृत्वा कौमुद्यामुपसर्गस्थान्निमित्तादित्युक्तं। प्रणस इति नासिकाया नसादेशस्योदाहरणमिदं। प्रणो नयेति तु अस्मच्छब्दस्य नसादेशस्य बोद्धव्यम्। बहुलमिति किम्। प्रनो मुञ्चतीति।

22. वेर्ग्रः वेः परो यो नासिकशब्दस्तस्य बहूव्रीह्यवयवस्य ग्रादेशस्स्यात्। एवमेव ख्वश्चेत्यत्रापि। न चास्मिन् वार्तिकद्वये संज्ञावश्यकी। तस्मादेव विनसा हत बांधवा इति कथमिति शंका संगच्छते। न हि शूर्पणखाय विनसेति नाम वर्तते ।

23. सुप्रातः सुप्रातर् अच् इति स्थिते निपातनादेव टिलोपः। एवमेव सुश्व इत्यत्रापि श्वसष्टेर्लोपः। सुदिवः दिवा इत्यस्य अव्ययत्त्वेन स्त्रीप्रत्ययान्तत्वाभावान्नोपसर्जनह्रस्व इति

शारेरिव कुक्षिरस्य शारिकुक्षः। चतस्रोऽश्रयोऽस्य चतुरश्रः। एण्या इव पादावस्य एणीपदः। अजपदः। प्रोष्ठो गौः, तस्येव पादावस्य प्रोष्ठपदः॥ **८६१। नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम्** ।५।४।१२१। अच् स्यात्। अहलः। अहलिः। असक्थः। असक्थिः। एवं दुःसुभ्याम्। शक्त्योरिति पाठान्तरम्। अशक्तः। अशक्तिः॥ **८६२। नित्यमसिच् प्रजामेधयोः** ।५।४।१२२। नञ्दुःसुभ्य इत्येव। अप्रजाः। दुष्प्रजाः। सुप्रजाः। अमेधाः। दुर्मेधाः। सुमेधाः॥ **८६३ । धर्मादनिच्केवलात्** ।५।४।१२४। केवलात्पूर्वपदात्परो यो धर्मशब्दस्तदन्ताद्बहुव्रीहेरनिच् स्यात्। कल्याणधर्मा। केवलात्किम्। परमः स्वो धर्मो यस्येति त्रिपदे बहुव्रीहौ माभूत्। स्वशब्दो हीह न केवलं पूर्वपदं किंतु मध्यमत्वादापेक्षिकम्। संदिग्धसाध्यधर्मेत्यादौ तु कर्मधारयपूर्वपदो बहुव्रीहिः। एवं तु परमस्वधर्मेत्यपि साध्वेव। निवृत्तिधर्मा अनुच्छित्तिधर्मेत्यादिवत्। पूर्वपदं तु बहुव्रीहिणाऽऽक्षिप्यते॥

---

कृत्वा सुदिव इति रूपासिद्धेरच्प्रत्ययनिपातनं। अचि तु परे यस्येति चेत्यवर्णलोपः चतुरश्रः चतुष्कोणः चतुरस्र इति तु अपपाठः।

24. असिच् च स्वरार्थः इकार उच्चाणार्थः अस् इति शिष्यते। एवमेव अनिच्यपि अन् शिष्यते ।

25. केवलात् निरपेक्षात् बहुव्रीहिणैव यदाक्षिप्तं पूर्वपदं तद्धि निरपेक्षम्। बहुव्रीहिणा यदनाक्षिप्तं मध्यमपदं तद्धि आपेक्षिम्। पदद्वययोगेन बहुव्रीहिलाभात् धर्माद्बहुव्रीहेरित्यनेन पूर्वपदमाक्षिप्यते तच्च केवलमेकमेव न तु पूर्वपदद्वयस्याक्षेपः एकपदाक्षेपेणैव धर्माद्बहुव्रीहेस्सिद्धत्वेन पदान्तराक्षेपसामर्थ्याभावात्। एतावता केवलादित्यस्य एकादित्यर्थ इति फलितं तच्चैकत्वं पूर्वपदस्य एकसुबन्तत्वलक्षणमेव न तु समासानाश्रयत्वम्। तेन समस्तमपि पूर्वपदम् यद्येकं तर्हि तस्मादपि परस्य धर्मादनिच् संभवति। अत एव निवृत्तिधर्मा अनुच्छित्तिधर्मा इत्यादौ निवृत्त्यनुच्छित्त्योस्समस्तत्वेऽपि एकपदत्त्वेन व्यवहारात्तयोः परार्थधर्मादनिच्। परमः स्वः धर्मः यस्य स इत्यत्र तु धर्मात्पूर्वयोस्सुबन्तयोः पदयोर्द्वयोस्संभवान्नैकपूर्वपदत्वमिति नानिच्। परमस्वः धर्मः यस्येत्यत्र तु परमस्व इत्येकसुबन्तमेवेति एकपूर्वपदत्वादनिच् परमस्वधर्मा न चैवं केवलादिति व्यर्थमिति वाच्यम्। बहुव्रीहिणात्र पूर्वपदमाक्षिप्यत इति तात्पर्यं ग्राहयितुं केवलादित्यस्यावश्यकत्वात्। अयं भावः। धर्मादनिच् इति सूत्रिते बहुव्रीहेरित्यधिकृतं प्रति धर्मादित्यस्य विशेषणत्वेन तदन्तविधौ धर्मान्ताद्बहव्रीहेरनिच्स्यादित्यर्थस्स्यात्। तथा च त्रिपदबहुव्रीहावपि धर्मान्तत्वाव्यभिचारात् केवलादित्युक्ते तु केवलात्परो यो धर्मशब्दस्तदन्ताद्बहुव्रीहेरित्यर्थे केवलात्पूर्वपदादिति

**८६४। जम्भा सुहरिततृणसोमेभ्यः** ।५।४।१२५। जम्भेति कृतसमासान्तं निपात्यते। जम्भो भक्ष्ये दन्ते च। शोभनो जम्भोऽस्य सुजम्भा। हरितजम्भा। तृणं भक्ष्यं यस्य तृणमिव दन्ता यस्येति वा तृणजम्भा। सोमजम्भा। स्वादिभ्यः किम्। पतितजम्भः ॥**८६५। दक्षिणेर्मा लुब्धयोगे** ।५।४।१२६। दक्षिणे ईर्मं व्रणं यस्य दक्षिणेर्मा मृगः। व्याधेन कृतव्रण इत्यर्थः॥ **८६६। इच् कर्मव्यतिहारे** ।५।४।१२७। कर्मव्यतिहारे यो बहुव्रीहिस्तस्मादिच् स्यात्समासान्तः। केशाकेशि। मुसलामुसलि॥ **८६७। द्विदण्ड्यादिभ्यश्च** ।५।४।१२८। तादर्थ्ये चतुर्थ्येषा। एषां सिद्ध्यर्थमिच् प्रत्ययः स्यात्। द्वौ दण्डौ यस्मिन्प्रहरणे तद् द्विदण्डि प्रहरणम्। द्विमुसलि। उभाहस्ति। उभयाहस्ति॥ **८६८। प्रसंभ्यां जानुनोर्ज्ञुः** ।५।४।१२९। आभ्यां परयोर्जानुशब्दयोर्ज्ञुरादेशः स्याद्बहुव्रीहौ। प्रगते जानुनी यस्य प्रज्ञुः। संज्ञुः॥ **८६९। उर्ध्वाद्विभाषा** ।५।४।१३०। उर्ध्वज्ञुः। ऊर्ध्वजानुः॥ **८७०। धनुषश्च** ।५।४।१३२। धनुरन्तस्य बहुव्रीहेरनङादेशः स्यात्। शार्ङ्गधन्वा॥ **८७१। वा संज्ञायाम्** ।५।४।१३३। शतधन्वा। शतधनुः॥

---

बहुव्रीहिणा पूर्वपदमाक्षिप्यत इति न दोष इति। ननु किमत्र पूर्वपदाक्षेपे न केवलात्परो यो धर्मस्तदन्ताद्बहुव्रीहेरित्यनेनैव केवलस्य एकार्थबोधकत्वेन तस्मात्परो यो धर्म इत्यनेन पूर्वत्वस्य लब्धत्वेन च एकपूर्वपदादित्यर्थः सिद्ध्यत्येवेति। न च केवलादित्यत्र स्वरूपग्रहणप्रसंगस्स्यात्। तद्वारणाय पूर्वपदाक्षेपे इति वाच्यम्। कृतेऽपि पूर्वपदाक्षेपे तत्प्रसङ्गस्यावार्यत्वेन व्याख्यानस्यैव शरणत्वाभ्युपगमात् इति चेन्मैवम्। केवलादिति धर्मविशेषणं माभूदिति। न च बहुव्रीह्यनुवर्तनादेव न स्यादिति वाच्यम्। केवलग्रहणेन बहुव्रीह्यनुवर्तनस्य निवृत्तत्वप्रतीतेः। ननु व्याख्यानादेव केवलपदम् धर्मविशेषणं भवतीति चेदत एव सूत्रे न पूर्वपदं न्यस्तं किन्तु बहुव्रीहिणाऽऽक्षिप्तमिति व्याख्यातम्। बहुव्रीहिणा पूर्वपदस्याक्षेप इति व्याख्यातुमपि केवलादितीदमेव गमकमिति भावः।

26. जंभा बहुव्रीहौ सुहरित्वादिभ्यः परस्सन् जंभा इत्यनिजन्तो निपात्यत इत्यर्थः।

27. उभाभ्यामुभयाभ्यां च हस्तिभ्यां प्रवृत्तं युद्धमुभाहस्ति उभयाहस्ति। उभयोः कर्णयोर्गृहीत्वा प्रवृत्तमिदं युद्धमिति उभयाकर्णि उभाकर्णि।

28. धनुषश्च। ऊधसोनङ् इति पूर्वसूत्रादनङोनुवृत्तिरत्र। बहुव्रीहौ सक्थ्यक्ष्णोरिति सूत्रादबहुव्रीह्यनुवृत्तिरेषु सूत्रेषु अनङो ङित्त्वादन्त्यस्य षस्य आदेशः यण् शाङ्र्गधन्वन् नान्तस्योपधा दीर्घः नलोपः शाङ्र्गधन्वा ।

**८७२। जायाया निङ्** ।५।४।१३४। जायान्तस्य बहुव्रीहेर्निङादेशः स्यात्॥ **८७३। लोपो व्योर्वलि** ।६।१।६६। वकारयकारयोर्लोपः स्याद्वलि। पुंवद्भावः। युवतिर्जाया यस्य युवजानिः॥ **८७४। गन्धस्येदुत्पूतिसुसुरभिभ्यः** ।५।४।१३५। एभ्यो गन्धस्य उकारोऽन्तादेशः स्यात्। उद्गन्धिः। पूतिगन्धिः। सुगन्धिः। सुरभिगन्धिः ॥ **गन्धस्येत्वे तदेकान्तग्रहणम्**॥ एकान्त एकदेश इव अविभागेन लक्ष्यमाण इत्यर्थः। सुगन्धि पुष्पं सलिलं च। सुगन्धिर्वायुः। नेह शोभना गन्धाः द्रव्याण्यस्य सुगन्ध आपणिकः॥ **८७५। अल्पाख्यायाम्** ।५।४।१३६। सूपस्य गन्धो लेशो यस्मिंस्तत् सूपगन्धि भोजनम्। घृतगन्धि। 'गन्धो गन्धक आमोदे लेशे संबन्धगर्वयो' रिति विश्वः॥ **८७६। उपमानाच्च** ।५।४।१३७। पद्मस्येव गन्धोऽस्य पद्मगन्धि॥

---

29. युवजानिः। यूनस्तिरिति- स्त्रीप्रत्ययस्य तेः पुंवद्भावातिदेशेन लोपः। अन्त्यस्य यकारोपर्याकारस्य नि इत्यादेशः युवजाय् नि। नेर्वल्त्वाल्लोपो व्योर्वलीति नौ परतो यलोपः। युवजानि पश्चात्तुप्।

30. गन्थस्येत्। अलोन्त्यपरिभाषया अन्त्यस्येकारादेशः। तदेकान्तस्य गन्धस्योदादिपूर्वस्येत्वं वक्तव्यमिति वार्तिकार्थः। तत्पदेन अन्यपदार्थः परामृश्यते-अन्यत्त्वञ्च समस्यमानपदापेक्षया प्रायेणान्यपदार्थप्रधानो बहुव्रीहिरिति वक्ष्यमाणत्वात् अनेकमन्यपदार्थ इति सूत्रितत्वाच्च। गन्धो गुणः तद्वानन्यपदार्थस्तु द्रव्यम्। यथा द्रव्ये भूम्यादौ तदवयवा एकदेशाः परमाण्वादयः विभागेन न लक्ष्यन्ते तथा गन्थोऽपि विभागेन न लक्ष्यत इति तदेकान्तस्येत्यस्य तदेकदेशतुल्यस्येत्यर्थः। वार्तिकस्य फलं दर्शयितुं प्रत्युदाहरणमाह। सुगन्ध आपणिक इति गन्धशब्दोऽत्र द्रव्यवचनः तेन द्रव्ये द्रव्यान्तरं विभागेन लक्ष्यत एवेति न ह्यापणद्रव्यैकदेशतुल्यत्वं गन्थद्रव्याणाम्। अस्मिन्पक्षे यद्यपि गन्थस्येत्वे गुणग्रहणमिति। न्यासस्सुवचस्तथापि। तदेकान्तस्येत्यस्य स्वाभाविकस्येत्यप्यर्थमाश्रित्य केचित्व्याचख्युरिति मतद्वयधारण्याय तदेकान्तस्येत्येव सुवचम्।

31. गुणवाचिन एव गन्थस्येत्वमिति पूर्वसूत्रस्य वार्तिकेन नियमितत्वात्। द्रव्यवाचिनो गन्थस्य उदादिभिन्नपूर्वस्य इत्वार्थमल्पाख्यायामिति सूत्रम्।

32. उपमानाच्च- उपमानवाचकात्परो यो गन्थशब्दस्तस्येत्स्यात्। उपमानवाचकञ्च अन्यपदार्थनिष्ठोपमेयतानिरूपकमेव गृह्यते न तु गन्धनिष्ठोपमेयतानिरूपकम्। व्याख्यानादिति कृत्वा उदाहरति पद्मगन्धिरिति। पाणिरिति (देह इति वा) विशेष्यम् ।

**८७७। पादस्य लोपोऽहस्त्यादिभ्यः** ।५।४।१३८। हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्याद्बहुव्रीहौ। स्थानिद्वारेणायं समासान्तः। व्याघ्रस्येव पादावस्य व्याघ्रपात्। अहस्त्यादिभ्यः किम्। हस्तिपादः। कुसूलपादः॥ **८७८। कुम्भपदीषु च** ।५।४।१३९। कुम्भपद्यादिषु पादस्य लोपो ङीप् च निपात्यते स्त्रियाम्॥ 'पादः पत् ४१४'। कुम्भपदी। स्त्रियां किम्। कुम्भपादः॥ **८७९। संख्यासुपूर्वस्य** ।५।४।१४०। पादस्य लोपः स्यात्समासान्तो बहुव्रीहौ। द्विपात्। सुपात्॥ **८८०। वयसि दन्तस्य दतृ** ।५।४।१४१। संख्यासुपूर्वस्य दन्तस्य दतृ इत्यादेशः स्याद्वयसि। द्विदन्। चतुर्दन्। षट् दन्ता अस्य षोडन्। सुदन्। सुदती। वयसि किम्। द्विदन्तः करी। सुदन्तः॥ **८८१। स्त्रियां संज्ञायाम्** ।५।४। १४३। दन्तस्य दतृ स्यात्समासान्तो बहुव्रीहौ। अयोदती। फालदती। संज्ञायां किम्। समदन्ती॥ **८८२। विभाषा श्यावारोकाभ्याम्** ।५।४।१४४। दन्तस्य दतृ वा बहुव्रीहौ। श्यावदन्। श्यावदन्तः। अरोकदन्। अरोकदन्तः॥

---

33. पादस्येति- समासान्तो लोपस्स्यादित्यर्थः। समासान्तावयवस्य लोपस्स्यादिति यावत्। अत्रेदं तत्त्वम्। समासान्ता इत्यत्राधिकारः स च एकवचनान्तत्वेन विपरिणम्य लोप इत्यस्य विशेषणम्भवति। समासस्य अवयविनः अन्तस्समासान्तोऽवयवः। समासस्यान्तावयव इत्यर्थः। लोपस्य अभावपदार्थस्य कथं समासस्य भावपदार्थस्य अन्तावयवत्वं घटते इति शङ्कायामाह स्थानिद्वारेणेति। समासान्तावयवस्य लोपत्वासम्भवात्। समासान्तावयवस्य लोप इति स्वीकृते सत्यर्थे लोपस्थानिद्वारेण समासान्तावयवो भवतीति लोपस्थानिनः समासान्तावयवत्वेन लोपेऽपि समासान्तावयवत्वमौपचारिकमिति भावः। अत्र लोपोऽस्यास्तीति लोपः लोपवानित्यर्थः। समासान्तः लोपवान्भवतीति व्याख्यातुं सुगमम्। व्याघ्रपात्। व्याघ्रपाद इति समासः तदन्तावयवोऽकारः। तस्य लोपः व्याघ्रपात्।

34. सुदती–तारुण्यावस्थायामयं प्रयोगः सुदत् इति स्थिते उगितश्चेति ङीप् सुदती। सु हल्ङ्याभ्य इति सोर्लोपः। अत एव सर्वनामस्थानपरकत्वाभावात् ङीपाव्यवधानाच्च। उगिदचामिति न नुम्। स्वाद्यपेक्षया स्त्रीप्रत्ययस्यान्तरङ्गत्वात् ङ्याप्प्रातिपदिकादिति सूत्रेण न्यन्तादेव सुबुत्पत्तिविधानाच्च ङीपः प्राक्तु न सुबुत्पत्तिः, येन सुदत् सु इत्यस्यामवस्थायामेव उगिदचामिति नुम् स्यात् पश्चात् ङीबिति वक्तुं शक्येत।

35. समदन्ती- समदन्त ङीप् यस्येति चेत्यकारलोपः समदन्ती। न चात्र अनिदितामित्युपधानकारलोपश्शङ्क्यः। हलन्तानामित्यङ्गविशेषणेन अकारलोपात्प्रागजान्ताङ्गत्वात्। पश्चादङ्गसंज्ञाभावात्। न हि हलन्तादङ्गात् ङीप् विहितः ।

**८८३। अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च** ।५।४।१४५। एभ्यो दन्तस्य दतृ वा। कुड्मलाग्रदन्। कुड्मलाग्रदन्तः॥ **८८४। ककुदस्यावस्थायां लोपः** ।५।४।१४६। अजातककुत्। पूर्णककुत्॥ **८८५। त्रिककुत्पर्वते** ।५।४।१४७। त्रीणि ककुदान्यस्य त्रिककुत्। संज्ञैषा पर्वतविशेषस्य। त्रिककुदोऽन्यः॥ **८८६। उद्विभ्यां काकुदस्य** ।५।४।१४८। लोपः स्यात्। उत्काकुत्। विकाकुत्। काकुदं तालु॥ **८८७। पूर्णाद्विभाषा** ।५।४।१४९। पूर्णकाकुत्। पूर्णकाकुदः॥ **८८८। सुहृद्दुर्हृदौ मित्रामित्रयोः** ।५।४।१५०। सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते। सुहृन्मित्रम्। दुर्हृदमित्रः। अन्यत्र सुहृदयः। दुर्हृदयः॥

---

36. अग्रान्त-अग्रपदमन्ते यस्य तस्मादग्रान्तात्परो यो दन्तस्तस्येत्यर्थः। कुट्मलाग्राणीव दन्ता यस्य स कुट्मलाग्रदन् इत्यग्रान्तस्योदाहरणम्। न चात्र विधानाभावादुपमानपूर्वपदो बहुव्रीहिर्न स्यादिति वाच्यम्। कुट्मलाग्रशब्दस्तत्सदृशे लाक्षणिक इति सामानाधिकरण्यस्य अन्यपदार्थप्रधानत्वस्य च सत्त्वेन अनेकमन्यपदार्थ इत्यनेनैव विहितत्वात्। वृषस्येव दन्ता यस्यस वृषदन् व्यधिकरणबहुव्रीहिः। उपमानाच्चेति सूत्रमत्र बहुव्रीहौ ज्ञापकं उपमानपूर्वपदव्यधिकरणबहुव्रीहेर्विधानाभावेन हेतुना पद्मस्येव गन्धो यस्येति बहुव्रीहेरसम्भवे सति बहुव्रीहौ उपमानात्परस्य गन्धस्येत्वविधायकमुपमानाच्चेति सूत्रं व्यर्थं सदुपमानपूर्वपदव्यधिकरणबहुव्रीहिं ज्ञापयतीति, न च उपमानपूर्वपदं गन्धोत्तरपदमेव व्यधिकरणबहुव्रीहिं ज्ञापयतीति वाच्यम्। ज्ञापकस्य सामान्यापेक्षत्वात्। अग्रान्तेति सूत्रे वृषवराहग्रहणानर्थक्यप्रसङ्गाच्च। (वृषा इव। वराहा इव वा दन्तवर्तन्त इति वक्तुं न हि शक्यत इति समानाधिकरणबहुव्रीह्यभावात्तयोः)वृषस्य दन्ता इव दन्ता यस्येति विगृह्य उपमानोत्तरपदो बहुव्रीहिरिति केचिदमुं वदन्ति। तन्मते तु शाकपार्थिवादीनामाकृतिगणत्वेन तत्र पठित्वा नूनमेषामुत्तरपदलोपो वक्तव्यः। अन्यथा वृषदन्तदन्त इति स्यात्। वृषस्य दन्ता इति षष्ठी तत्पुरुषे यदुत्तरपदं तस्य उपमानवाचकस्य लोप इति भावः।

37. ककुदम्-वृषभस्योपरितनः कश्चन अवयवः (आन्ध्रे मूपुरमु) बाल्ये नेदं जायत इति अजातककुद्बालवृषः। तारुण्ये पूर्णं भवतीति पूर्णककुत्तरुणवृषः। एवं ककुदनेन अवस्था गम्यत इति समासान्तलोपः।

**८८९। उरःप्रभृतिभ्यः कप्** ।५।४।१५१। व्यूढोरस्कः। प्रियसर्पिष्कः। इह पुमान्, अनड्वान्, पयः, नौः, लक्ष्मीरिति एकवचनान्तानि पठ्यन्ते। द्विवचनबहुवचनान्तेभ्यस्तु 'शेषाद्विभाषा ८९१' इति विकल्पेन कप्। द्विपुमान्। द्विपुंस्कः॥ (प) **अर्थान्नञः** ॥ अनर्थकम्। नञः किम्। अपार्थम्। अपार्थकम्॥**८९०। इनः स्त्रियाम्** ।५।४।१५२। बहुदण्डिका नगरी॥ (प) **अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेनापि तदन्तविधिं प्रयोजयन्ति**॥ बहुवाग्मिका। स्त्रियां किम्। बहुदण्डी। बहुदण्डिको ग्रामः॥ **८९१। शेषाद्विभाषा** ।५।४।१५४। अनुक्तसमासान्ताच्छेषाधिकारस्थाद्बहुव्रीहेः कप् वा स्यात्। महायशस्कः। महायशाः। अनुक्तेत्यादि किम्। व्याघ्रपात्। सुगन्धिः। प्रियपथः। शेषाधिकारस्थात्किम्। उपबहवः। उत्तरपूर्वा। सुपुत्रः। तन्त्रादिना शेषशब्दोऽर्थद्वयपरः॥ **८९२। आपोऽन्यतरस्याम्** ।७।४।१५। कप्याबन्तस्य ह्रस्वो वा स्यात्। बहुमालाकः। बहुमालकः। कबभावे तु बहुमालः॥ **८९३। न संज्ञायाम्** ।५।४।१५३। शेषादिति प्राप्तः कप् न स्यात्संज्ञायाम्। विश्वे देवा अस्य विश्वेदेवः॥ **८९४। ईयसश्च** ।५।४।१५६। ईयसन्तोत्तरपदान्न कप्। बहवः श्रेयांसोऽस्य बहुश्रेयान्।

---

38. द्विपुंस्कः कपा व्यवधानान्न पुंसोऽसुङत्र भवति। ननु सर्वनामस्थाने विवक्षित इति हि तत्रार्थः न तु परत इति कथं कब्व्यवधानेप्यसुङा देशाभाव इति चेन्मैवम्। पुंस् शब्दस्य असुङ्विधीयते तेन, अयन्तु पुंस्कशब्द इति नेदं तत्सूत्रलक्ष्यमिति। अर्थान्नञः नञः परो योऽर्थस्तदन्ताद्बहुव्रीहेः कप् स्यादिति नास्त्यर्थो यस्य तदनर्थकम्।

39. इनः। इन्नन्तोत्तरपदाद्बहुव्रीहेः कप् स्यात् स्त्रियामित्यर्थः। बहुदण्डिन् इतीन्नन्तोयम्। ततः कपि नलोपः। अदन्तत्वाट्टाप् बहुदण्डिका। ननु अर्थवद्ग्रहणे नानर्थकस्येति परिभाषया इन्नन्ताद्विधीयमानं कार्यं ग्मिन्तन्तान्न स्यात् । ग्मिनोवयवस्य इनोऽनर्थकत्वादित्यत आह अनिनस्मन्नित्यादि।

40. आपः। श्रू।दृ।प्रा। ह्रस्व इति सूत्राद्ध्रस्वानुवृत्तिः। केण इति ह्रस्वस्य न कपीति निषेधात्। विकल्पेन पुनराबन्ते ह्रस्वर्थमिदं सूत्रम्। बहुमालाकः। नन्वत्र गोस्त्रियोरित्युपसर्जनह्रस्वं किमिति न स्यादिति चेदुच्यते। न कपीत्यनेन केण इति ह्रस्वस्येव उपसर्जनह्रस्वस्यापि निषेधात् ह्रस्वसामान्यं हि तेन निषिध्यते। अत एव कबभावे ह्रस्वनिषेधाभावेन बहुमाल इति।

41. ईयसो–बहुव्रीह्यवयवस्य स्त्रीप्रत्ययान्तस्य ईयस उपसर्जनह्रस्वो नेत्यर्थः। वन्दिते भ्रातुरिति सूत्रव्याख्यायां कौमुद्यां न पूजनादिति निषेधस्त्वित्यस्यायमाशयः। ननु प्रशस्तभ्रातेत्यादौ न पूजनादित्यनेनैव समासान्तनिषेधात्कप् न भवत्येवेति कृत्वा वन्दित

'गोस्त्रियोः-६५६' इति ह्रस्वे प्राप्ते ॥ **ईयसो बहुव्रीहेर्नेति वाच्यम्** ॥ बह्व्यः श्रेयस्योऽस्य बहुश्रेयसी। बहुव्रीहेः किम्। अतिश्रेयसिः ॥ **८९५। वन्दिते भ्रातुः** ।५।४।१५७। पूजितेऽर्थे यो भ्रातृशब्दस्तदन्तान्न कप् स्यात्। प्रशस्तो भ्राता यस्य प्रशस्तभ्राता। 'न पूजनात् ९५४' इति निषेधस्तु 'बहुव्रीहौ सक्थ्यक्ष्णोः-८५२' इत्यतः प्रागेवेति वक्ष्यते। वन्दिते किम्। मूर्खभ्रातृकः ॥ **८९६। नाडीतन्त्र्योः स्वाङ्गे** ।५।४।१५९। स्वाङ्गे यौ नाडीतन्त्रीशब्दौ तदन्तात्कप् न स्यात्। बहुनाडिः कायः। बहुतन्त्रीर्ग्रीवा। तन्त्रीर्धमनी। स्त्रीप्रत्ययान्तत्वाभावाद्ध्रस्वो न। स्वाङ्गे किम्। बहुनाडीकः स्तम्भः। बहुतन्त्रीका वीणा ॥ **८९७। निष्प्रवाणिश्च** ।५।४।१६०। कबभावोऽत्र निपात्यते। प्रपूर्वाद्वयतेर्ल्युट्। प्रवाणी तन्तुवायशलाका। निर्गता प्रवाण्यस्य निष्प्रवाणिः पटः। समाप्तवानः, नव इत्यर्थः ॥ **८९८। सप्तमीविशेषणे बहुव्रीहौ** ।२।२।३५। सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं प्रयोज्यम्। कण्ठेकालः। अतएव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः। चित्रगुः ॥

---

इति सूत्रं व्यर्थमेवेत्यत आह। न पूजनादित्यादिशेषाद्विभाषेति कपः बहुव्रीहाविति सूत्रात्परत्वेन कब्विषये न पूजनादिति निषेधो न प्रवर्तत एवेति कृत्वा प्रशस्तभ्रातृक इत्यनिष्टरूपं स्यादतस्तद्वारणाय वन्दित इति सूत्रमावश्यकमिति भावः। वस्तुतस्तु न पूजनादिति सूत्रेस्वतिभ्यामेवेति वार्तिकं पठ्यते। ततश्च प्रशस्तभ्रातेत्यादौ न पूजनादिति निषेधो नैव प्रवर्तत इति कृत्वा कौमुदीकारोक्तं समाधानं चिन्त्यमेव। तत्समाधानसमाधेय –पूर्वोक्तशङ्काया एवात्रानवतारादिति। यद्वा वन्दिते भ्रातुरिति सूत्रस्य शोभनो भ्राता यस्य स सुभ्राता इत्युदाहरणं दत्वा न पूजनादिति निषेधस्त्वित्यादि यथामूलं लेखनीयम्। अथवा प्रशस्तभ्रातेत्युदाहरणानन्तरं सुभ्रातेत्युदाहरणान्तरं कौमुद्यां लेखनीयम्। तथा च सुभ्रातेत्यादौ न पूजनादित्यनेनैव निषेधे सति वन्दित इति सूत्रस्य सुभ्रातेत्युदाहरणं व्यर्थमिति शङ्का सुखेनावतरति। तत्समाधानार्थं न पूजनादिति निषेधस्त्वित्यादिकौमुदीमूलमावश्यकमिति।

42. ल्युट्–युवोरनाकावित्यनादेशः। आदेच उपदेशेचेतीति वेङ एकारस्याकारः सवर्णदीर्घः टित्त्वात् ङीप् संज्ञात्वात्पूर्वपदादिति णत्वं। प्रवाणी कपि सति निष्प्रवाणीक इति स्यात्।

43. सप्तमी–उपसर्जनं पूर्वमिति सूत्रात्पूर्वमित्यनुवर्तते। न च विशेषणं विशेष्येणेति सूत्रे प्रथमानिर्दिष्टत्वादेव विशेषणस्य पूर्वनिपातसिद्धे किमनेनेति वाच्यम्। विशेषणसमास एव तेन विशेषणस्य पूर्वनिपातसिद्धिः। न तु बहुव्रीहाविति। चित्रा गावो यस्येति विग्रहे

**सर्वनामसंख्ययोरुपसंख्यानम्** ॥ सर्वश्वेतः । द्विशुक्लः ॥ **मिथोऽनयोः समासे संख्या पूर्वं शब्दपरविप्रतिषेधात्** । द्व्यन्यः ॥ **संख्याया अल्पीयस्याः** ॥ द्वित्राः ॥ **द्वन्द्वेऽपि** ॥ द्वादश ॥ **वा प्रियस्य** ॥ गुडप्रियः । प्रियगुडः ॥ **गड्वादेः परा सप्तमी** ॥ गडुकण्ठः । क्वचिन्न । वहेगडुः ॥

---

समासविधायकं शास्त्रं न हि विशेषणं विशेष्येणेति भावः ये नात्र तेनैव पूर्वनिपात इति वक्तुं शक्येत। अत एव ज्ञापकादिति। अनेकं प्रथमान्तं समस्यत इत्युक्तत्वेन सप्तम्यन्तस्य बहुव्रीहौ घटकतया प्रवेशाभावे सिद्धे सप्तम्यन्तस्य पूर्वनिपातविधानं व्यर्थ सदप्रथमान्तानामत एव व्यधिकरणानामपि बहुव्रीहिर्भवतीति ज्ञापयतीति भावः। यद्वा सप्तम्यन्तं पूर्वमित्यनेन बहुव्रीह्यवयवपदमध्ये एकस्यैव सप्तम्यन्तत्वमन्यस्य तद्भिन्नविभक्त्यन्तत्वमिति च लब्धम्। तथा च सप्तम्यन्तासप्तम्यन्तयोस्सामानाधिकरण्याभावेन समासस्यैवाप्राप्तौ कुतस्सप्तम्यन्तस्य पूर्वनिपात इतीदं व्यर्थं सत् भिन्नविभक्त्यन्तानां पदानामपि (व्यधिकरणानामर्थात्।) बहुव्रीहिर्भवतीति ज्ञापयतीति भावः।

सर्वश्श्वेतः। सर्वस्मिन्नङ्गे श्वेतं यस्य स सर्वश्वेतः इति विग्रहे तु सप्तम्यन्तत्वादेव पूर्वनिपातसिद्धौ व्यर्थमिदं वार्तिके सर्वनामग्रहणम्। अतः सर्वं श्वेतं यस्य स इति विग्रहः। अस्मिंस्तु विग्रहे विशेषणत्वाच्छ्वेतस्य पूर्वनिपाते प्राप्ते वार्तिकमिदं द्वौ शुक्लौ (शुक्लशब्दस्य द्रव्यवाचकत्वेन पटोऽत्रार्थः) यस्य स द्विशुक्लः। अस्मिन्नर्थे तु विशेषणत्वादेव द्विशब्दस्य पूर्वनिपातस्स्यात्। अतः द्वावित्येव विशेष्यसमर्पकं शुक्लशब्दस्तु तद्विशेषणमिति बोद्धव्यम्। शब्दपरविप्रतिषेधात् परस्य शब्दस्य विप्रतिषेधनपूर्वं प्रयोगः। नेदं वार्तिकम्। किन्तु सर्वनामसङ्ख्ययोरिति वार्तिकनिर्देशेन ज्ञापितं अस्मिन् वार्तिके पूर्वत्र निपातनीयस्य संङ्ख्याशब्दस्य परत्र निपाताद्धेतोः परस्सङ्ख्याशब्द एव परविप्रतिषेधेन पूर्वं प्रयोज्य इति भावः। ननु सङ्ख्ययोर्द्वयोस्समासे तु कथमत आह। सङ्ख्याया अल्पीयस्या इति अल्पत्वं चार्थापेक्षया न तु शब्दापेक्षयेति बोध्यम्। गुडं प्रियं यस्येति विग्रहे प्रियशब्दस्य विशेषणत्वेन पूर्वनिपाते नियमेन प्राप्ते विकल्पार्थं वा प्रियस्येति वार्तिकम्। गडुः कण्ठे यस्य सः गडुकण्ठः। वहती वहः युगवहनप्रदेशः तत्र गडुर्यस्य स वहे गडुः। हलदन्तात्सप्तमी इत्यलुक् कण्ठेकाल इत्यत्रापि गड्वादिभ्य इत्यत्र आदिशब्दस्य प्रकारवाचित्वेन पद्मनाभ इत्यत्र सप्तम्याः परत्वं सिद्धम्। अच्प्रत्यन्ववपूर्वादिति वक्ष्यमाणसूत्रे अजिति योगविभागात्समासोन्तोऽच् योगविभागस्य क्वाचित्कत्वात् समासान्तविधेरनित्यत्वाद्वा। पद्मनाभिरित्यपि प्रयोगस्साधुरेव।

८९९। **निष्ठा** ।२।२।३६। निष्ठान्तं बहुव्रीहौ पूर्वं स्यात्। कृतकृत्यः॥ **जातिकालसुखादिभ्यः परा निष्ठा वाच्या॥** सारङ्गजग्धी। मासजाता। सुखजाता। प्रायिकं चेदम्। कृतकटः। पीतोदकः॥ ९००। **वाहितग्न्यादिषु** ।२।२।३७। आहिताग्निः। अग्न्याहितः। आकृतिगणोऽयम्॥ **प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ॥** अस्युद्यतः। दण्डपाणिः॥ कचिन्न। विवृतासिः॥ ॥ इति बहुव्रीहिप्रकरणम्॥

## द्वन्द्वप्रकरणम् २०।

९०१। **चार्थे द्वन्द्वः** ।२।२।२९। अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः। समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः। परस्परनिरपेक्षस्यानेकस्य एकस्मिन्नन्वयः समुच्चयः। अन्यतरस्यानुषङ्गिकत्वेऽन्वाचयः। मिलितानामन्वय इतरेतरयोगः। समूहः समाहारः। तत्रेश्वरं गुरुं च भजस्वेति समुच्चये, भिक्षामट गां चानयेत्यन्वाचये च न समासोऽसामर्थ्यात्। धवखदिरौ। संज्ञापरिभाषम्। अनेकोक्तेर्होतृपोतृनेष्टोद्गातारः। द्वयोर्द्वयोर्द्वन्द्वं कृत्वा पुनर्द्वन्द्वे तु होतापोतानेष्टोद्गातारः॥

---

44. निष्ठा– ननु किमनेन सूत्रेण कृतकृत्य इत्यत्र कृतस्य विशेषणत्वेन पूर्वनिपाताव्यभिचारादिति चेत् मैवम्। कृतभव्य कृत्य इति यथा स्याद्भव्यकृतकृत्य इति माभूदिति। विशेषणद्वयघटितबहुपदबहुव्रीहौ निष्ठान्तस्य विशेषणस्यैव पूर्वनिपातो न त्वन्यस्येत्येतदर्थमिदमावश्यकमिति। सारङ्गो जग्धो यया सा सारङ्गजग्धी व्याघ्री सारङ्गशब्दो जातिवचनः। मासो जातो यस्यास्सा मासजाता शिशुः। सुखं जातं यस्यास्सा सुखजाता । कटस्य जातित्वेऽपि कृतकट इत्यादौ न परनिपातो निष्ठान्तस्य। पीतोदक इत्यत्र तु उदकस्य सुखादित्वेन परनिपातो निष्ठान्तस्य प्राप्तस्सन्न भवति।

45. वाहिताग्न्यादिषु–अग्न्याधीनामजादिकालसुखादित्वेन आहितादिनिष्ठान्तस्य पूर्वनिपाते नियमेन प्राप्ते वचनमिदम्। आहिताग्न्यादिषु निष्ठान्तस्य पूर्वनिपातो वा वक्तव्य इत्यर्थः। असिरुद्यतो येन स अस्युद्यतः। उद्यत इति निष्ठा तस्य परनिपातः। दण्डः पाणौ यस्य स दण्डपाणिः सप्तमीसूत्रात्पाणेः पूर्वनिपाते प्राप्ते परनिपातोस्माद्वार्तिकात् असिदण्डयोः प्रहरणार्थत्वात् प्रहरन्त्यनेनेति प्रहरणम् आर्थो ययोस्तयोः प्रहरणार्थयोःशब्दयोरिति विशेष्यम्। इदमपि वार्तिकं प्रायिकं तेन क्वचिन्न विवृतोसिर्यस्य स विवृतासिः। **इति बहुव्रीहिः**

46. चार्थे द्वन्द्वः–"चान्वाचयसमाहारेतरेतरसमुच्चये" इत्यमरोक्तेः चस्य चत्वारोऽर्थाः। तेषाम्मध्ये चरमयोरेव समासः न तु पूर्वयोरसामर्थ्यात्। तथा हि। ईश्वरं गुरुञ्च भजस्वेति समुच्चये भजनक्रियानिरूपितं कर्मत्वमुभयत्र वर्तते न तु कर्मणोस्तयोः परस्परापेक्षा। ईश्वरं भजस्व गुरुं भजस्व इति प्रत्येकवाक्यार्थसमुच्चयस्य पर्यवसानात्। ईश्वरगुर्वोर्न

९०२। **राजदन्तादिषु परम्** ।२।२।३१। एषु पूर्वप्रयोगार्हं परं स्यात्। दन्तानां राजा राजदन्तः॥। **धर्मादिष्वनियमः** ॥ अर्थधर्मौ। धर्मार्थौ। दम्पती। जम्पती। जायापती। जायाशब्दस्य जम्भावो दम्भावश्च वा निपात्यते। आकृतिगणोऽयम्॥ **९०३। द्वन्द्वे घि** ।२।२।३२। द्वन्द्वे घिसंज्ञं पूर्वं स्यात्। हरिश्च हरश्च हरिहरौ॥ **अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे** ॥ हरिगुरुहराः। हरिहरगुरवः॥

---

हि परस्परं कर्मत्वविशेषणत्वकर्तृत्वादिरूपस्सम्बन्धः। एवमेवान्वाचयेति उभयोः प्राधान्ये समुच्चयः अन्यतरस्याप्राधान्येन्वाचय एतावानेव तयोर्भेद इति। भिक्षामट गाञ्चानय भिक्षाकर्मकमटनं प्रधानं गोकर्मकानयनमप्रधानं। एतत्प्राधान्याप्राधान्ये विवक्षाधीने समुच्चये एकस्यां क्रियायामुभयोः कर्मत्वमिह तु क्रियाद्वये द्वयोः कर्मत्वमित्यपि भेदः। उभयोर्वाक्यार्थयोः भिक्षाटनगवानयनयोर्निरपेक्षत्वेन तद्धटितकर्मभूतयोर्भिक्षागावोश्च निरपेक्षत्वेन नैकार्थीभावोऽत्रेति इतरेतरयोगे तु धवश्च खदिरश्च धवखदिरौ धवयुक्तः खदिर इति परस्परसाहित्यसत्त्वेन सामर्थ्यमस्ति समाहारे तु अवयविनि प्रधाने समाहारे अवयवानामप्राधान्येन वर्तनादस्ति परस्परं योगः संज्ञायुक्तपरिभाषावयववदभिन्नस्समाहार इति। होता च पोता च होतापोतारौ आनङ् ऋतो द्वन्द्व इत्युत्तरपदपरकत्वेन पूर्वस्याङ्। नेष्टा च उद्गाता च नेष्टोद्गातारौ। उद्गातृशब्दादौङि ऋतो ङीति गुणे उद्गातर् अप्तृण्णित्युपधाद्दीर्घः। उद्गातारौ एवमेव पोतारौ होता होतृ औ नेष्टोद्गातृ औ इत्यलौकिक विग्रहे (होतापोतारौ च नेष्टोद्गातारौ च इति लौकिकविग्रहः) सुब्लुकि होतापोतृशब्दस्यानङ् नेष्टोद्गात्रात्मकोत्तरपदपरकत्वात् (समस्तयोरपि पुनस्समासे कृते तत्समासावयवयोस्समस्तयोः पदयोर्मध्ये प्रथमस्य समासपूर्वावयवत्वाद्द्वितीयस्य समासोत्तरावयवत्वाच्च नेष्टोद्गातृशब्दोऽत्र उत्तरपदं भवतीति बोद्धव्यम्।) होतापोतानेष्टोद्गातृ अस् गुणोपधावृद्धी होतापोतानेष्टोद्गातारः । बहुपदद्वन्द्वे तु उत्तरपदमुद्गातृ इत्येव, तस्मिन् परे नेष्टृशब्दस्यैवानङ् इति होतृपोतृनेष्टोद्गातारः।

47. द्वन्द्वे घि– शेषोघ्यसखीति घिसंज्ञकं पदम्। द्वन्द्वे किम्। गुरुमतिः अनेकप्राप्तौ घिसंज्ञकानामनेकपदानां द्वन्द्वे समावेशे सति एकत्र एकस्मिन्नेव घिसंज्ञके नियमः पूर्वनिपातनियमः भवति शेषे तद्भिन्नेषु घिसंज्ञकेषु अनियमः नियमो नास्ति। विग्रहे घीनां मध्ये यः प्रथममुद्दिष्टस्तस्मिन्नेवैकस्मिन्नियमो भवति न तु यस्मिन्कस्मिन्। पूर्वनिपातं प्रति तेषां पूर्वस्य सन्निहितत्वात्। हरिश्च हरश्च गुरुश्चेति विग्रहे हरेर्नियमेन पूर्वनिपातः गुरोरनियमेन हरश्च हरिश्च गुरुचेति विग्रहेऽपि हरेरेव पूर्वनिपातः। गुरुश्च हरिश्च हरश्चेति विग्रहे तु गुरुहरिहरा इति भवति। गुरुश्च हरश्च हरिश्चेति विग्रहे तु गुरुहरहरय इति ।

**९०४। अजाद्यदन्तम्** ।२।२।३३। इदं द्वन्द्वे पूर्वं स्यात्। ईशकृष्णौ। बहुष्वनियमः। अश्वरथेन्द्राः। इन्द्राश्वरथाः॥ **घ्यन्तादजाद्यदन्तं विप्रतिषेधेन**॥ इन्द्राग्नी॥ **९०५। अल्पाच्तरम्** ।२।२।३४। शिवकेशवौ॥ **ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण**। हेमन्तशिशिरवसन्ताः। कृत्तिकारोहिण्यौ। समाक्षराणां किम्। ग्रीष्मवसन्तौ॥ **लघ्वक्षरं पूर्वम्**॥ कुशकाशम्॥ **अभ्यर्हितं च**॥ तापसपर्वतौ॥ **वर्णानामानुपूर्व्येण**। ब्राह्मणक्षत्रियविट्शूद्राः॥ **भ्रातुर्ज्यायसः**॥ युधिष्ठिरार्जुनौ॥

---

48. अजाद्यदन्तम्। अजादित्वादन्तत्वाभ्यां विशिष्टो यश्शब्दस्तस्य पूर्व प्रयोगः। ईशकृष्णौ कृष्णो यद्यप्यदन्तस्तथापि नाजादिरिति न तस्य पूर्वनिपातः। बहुष्वनियमः पूर्वव्याख्यातवार्तिकमत्राप्यन्वेतव्यम्। तेन बहुषु अजाद्यदन्तादिषु एकत्र नियमो नान्यत्रेत्यर्थः। बहुपदद्वन्द्वे न नियम इत्यर्थ उक्तश्चेत् रथेन्द्राश्वा इत्यपि प्रयोगः स्यात्। ननु उभयोरजाद्यदन्तयोर्द्वन्द्वे कस्य पूर्वनिपात इति चेदल्पाच्तरत्वाद्यभावे वैवक्षिकमिति बोद्धचम्। ननु घ्यन्तस्य अजाद्यदन्तस्य च द्वन्द्वे कस्य पूर्वनिपात इत्यत आह। घ्यन्तादित्यादिपरत्वात्पूर्व घ्यन्तस्य पूर्वनिपातं बाधित्वा अजाद्यदन्तमेव स्यादिति भावः। इन्द्राग्नी इन्द्रोऽजाद्यदन्तः अग्निर्घ्यन्तः इन्द्रस्यैव पूर्वनिपातः परत्वादिति ।

49. अल्पाच्तरम्। अल्पा अचो यस्मिंस्तदल्पाच् तदेव अल्पाच्तरम्। अल्पाच्कमित्यर्थः। शिवकेशवौ। द्वन्द्वे घि अजाद्यदन्तं एताभ्यां परत्वादेत द्वयं बाधित्वा अल्पाच्कस्यैव पूर्वनिपातः स्यात् यथा–चार्कौ–चचन्द्रः अर्कस्सूर्यः चाग्नी इति च, कुशकाशं। अत्र समाहारद्वन्द्वे द्वयोर्मध्ये एकमपि न घिसंज्ञं–नाप्यजाद्यदन्तम्। नाप्यल्पाच्तरम् । प्रत्येकं द्व्यच्कत्वात्। अतः लघ्वक्षरम्पूर्वमिति वार्तिकमावश्यकम्। लघून्यक्षराणि यस्मिंस्तल्लघ्वक्षरम्। कुशपदमत्र तथाविधम्। उकाराकारयोर्ह्रस्वत्वेन लघुत्वात् काशपदन्तु दीर्घाकारवदिति न लघ्वक्षरमिति कुशस्य पूर्वनिपातः। अभ्यर्हितम् पूजितं पूजनीयमित्यर्थः। वर्णानामिति ऋतुनक्षत्राणामिति वार्तिके एव वर्णग्रहणं न कृतं अल्पाक्षरस्यापि आनुपूर्व्येणैव वर्णानाम्प्रायोगः । न तु तस्य पूर्वनिपातः। ऋतुनक्षत्राणान्तु असमाक्षराणाम्मध्ये आनुपूर्व्यं विहाय अल्पाक्षरस्यैव पूर्वनिपातः इति भेदात्। अत एव विट्छब्दस्य अल्पाक्षरत्वेऽपि न पूर्वनिपातः। युधिष्ठिरार्जुनौ। अर्जुनशब्दस्य अजाद्यदन्तत्वेऽपि अल्पाच्तरत्वेऽपि न पूर्वनिपातः ज्यायसः ज्येष्ठस्य भ्रातुः पूर्वनिपातनियमात्। न च ज्येष्ठस्य अभ्यर्हितत्वादभ्यर्हितमित्यनेनैव पूर्वनिपातस्सिद्ध्यति किमनेनेति वाच्यम्। वयोज्येष्ठत्वं नाभ्यर्हितत्वे कारणं, किन्तु ज्ञानादिगुणवत्त्वमेवेति नान्यथासिद्धिर्भ्रातुरिति वार्तिकस्य –

१०६। **द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्** ।२।४।२। एषां द्वन्द्व एकवत्स्यात्। पाणिपादम्। मार्दङ्गिकपाणविकम्। रथिकाश्वारोहम्। समाहारस्यैकत्वादेकत्वे सिद्धे नियमार्थं प्रकरणम्। प्राण्यङ्गादीनां समाहार एव यथा स्यात्॥ १०७। **अनुवादे चरणानाम्** ।२।४।३। चरणानां द्वन्द्व एकवत्स्यात्सिद्धस्योपन्यासे॥ **स्थेणोर्लुडीति वक्तव्यम्**॥ उदगात्कठकालापम्। प्रत्यष्ठात्कठकौथुमम्॥ १०८। **अध्वर्युक्रतुरनपुंसकम्** ।२।४।४। यजुर्वेदे विहितो यः क्रतुस्तद्वाचिनामनपुंसकलिङ्गानां द्वन्द्व एकवत्स्यात्। अर्काश्वमेधम्। अध्वर्युक्रतुः किम्। इषुवज्रौ सामवेदे विहितौ। अनपुंसकं किम्। राजसूयवाजपेये। अर्धर्चादी॥ १०९। **अध्ययनतोऽविप्रकृष्टाख्यानाम्** ।२।४।५। अध्ययनेन प्रत्यासन्ना आख्या येषां तेषां द्वन्द्व एकवत्। पदकक्रमकम्॥ ११०। **जातिरप्राणिनाम्** ।२।४।६। प्राणिवर्ज्यजातिवाचिनां द्वन्द्व एकवत्। धानाशष्कुलि। प्राणिनां तु विट्शूद्राः। द्रव्यजातीनामेव। नेह। रूपरसौ। गमनाकुञ्चने। जातिप्राधान्य एवायमेकवद्भावः। द्रव्यविशेषविवक्षायां तु बदरामलकानि॥

---

50. समाहार एव। न त्वितरेतरद्वन्द्व इत्येवकारार्थः। तेन पाणिश्च पादश्च पाणिपादाविति न द्वन्द्वः किन्तु पाणिश्च पादश्च तयोस्समाहारः पाणिपादमिति।

51. राजसूयवाजपेयौ। ननु नेमौ नपुंसकलिङ्गाविति कथं प्रत्युदाहरणत्वमत आह। अर्धर्चादी। अर्धर्चाः पुंसि चेति चात् क्लीबत्वमपि वर्ततेऽनयोरर्धर्चादित्वादित्यर्थः। यद्यप्यर्धर्चादिषु नानयोः पाठस्तथाप्याकृतिगणत्वात्तुदादित्वमिति वेद्यम्। राजसूयवाजपेये इति पाठस्तु सुगमः।

52. अध्ययनत इति–अध्ययनार्थबोधकप्रत्ययान्तानां – अध्ययनद्वारा परस्परप्रत्यासत्तिद्योतकानां पदानामिति निष्कर्षः। पदक्रमकं पदानि क्रमं चाधीत इति पदकः क्रमकः। तयोस्समाहारः क्रमादिभ्यो वुन्निति अध्ययनार्थबोधकप्रत्ययोऽत्र वुन्। युवोरनाकाविति तस्याकादेशः। एवञ्च पदक्रमकौ तादृशप्रत्ययान्तौ पदानां क्रमस्य च अध्ययनद्वारा सामीप्यं वर्तते। पदानन्तरं क्रमस्य अध्येतव्यत्वात् प्रथमविशेषणं स्वरूपप्रदर्शनमात्रपरं न तु व्यावर्तकम्। द्वितीयादेव अव्याप्त्यतिव्याप्तिपरिहारे सिद्धे प्रथमव्यावर्त्याभावात्। तथा हि प्रत्यासत्तिद्योतकानामिति किम्। घटपटौ मृत्तन्तु प्रत्यासत्तिं द्योतयतो हीमौ। परस्परेति किम्। पितापुत्रौ अध्ययनद्वारा किम् मीमांसकनैयायिकौ न हि न्यायमीमांसयोः प्रत्यासत्तिरस्ति –

**९११। विशिष्टलिङ्गो नदीदेशोऽग्रामाः** ।२।४।७। ग्रामवर्ज्यनदीदेशवाचिनां भिन्नलिङ्गानां समाहारे द्वन्द्व एकवत्स्यात्। उद्ध्यश्च इरावती च उद्ध्येरावति। गङ्गा च शोणश्च गङ्गाशोणम्। कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रम् भिन्नलिङ्गानां किम्। गङ्गायमुने। मद्रकेकयाः। अग्रामाः किम्। जाम्बवं नगरम्। शालूकिनी ग्रामः। जाम्बवशालूकिन्यौ॥ **९१२। क्षुद्रजन्तवः** ।२।४।८। एषां समाहारे द्वन्द्व एकवत्स्यात्। यूकालिक्षम्। आ नकुलात्क्षुद्रजन्तवः॥ **९१३। येषां च विरोधः शाश्वतिकः** ।२।४।९। येषां प्राग्वत्। अहिनकुलम्। गोव्याघ्रम्। काकोलूकमित्यादौ परत्वात् 'विभाषा वृक्षमृग-९१६' इति प्राप्तं चकारेण बाध्यते॥ **९१४। शूद्राणामनिरवसितानाम्** ।२।४।१०। अबहिष्कृतानां शूद्राणां प्राग्वत्। तक्षायस्कारम्। पात्राद्बहिष्कृतानां तु चण्डालमृतपाः॥ **९१५। गवाश्वप्रभृतीनि च** ।२।४।११। यथोच्चारितानि साधुनि स्युः। गवाश्वम्। दासीदासमित्यादि॥ **९१६। विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्** ।२।४।१२। वृक्षादीनां सप्तानां द्वन्द्वः, अश्ववडवेत्यादिद्वन्द्वत्रयं च प्राग्वद्वा॥ **वृक्षादौ विशेषाणामेव ग्रहणम्॥** प्लक्षन्यग्रोधम्। प्लक्षन्यग्रोधाः। रुरुपृषतम्। रुरुपृषताः। कुशकाशम्। कुशकाशाः। व्रीहियवम्। व्रीहियवाः। दधिघृतम्। दधिघृते। गोमहिषम्। गोमहिषाः। शुकबकम्। शुकबकाः। अश्ववडवम्। अश्ववडवौ। पूर्वापरम्। पूर्वापरे। अधरोत्तरम्। अधरोत्तरे॥ **फलसेनाङ्गवनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम्॥** बदराणि चामलकानि च बदरामलकम्। 'जातिरप्राणिनाम् ९१०' इत्येकवद्भावः। नेह। बदरामलके। रथिकाश्वारोहौ। प्लक्षन्यग्रोधौ। इत्यादि। 'विभाषावृक्ष-९१६' इति सूत्रे येऽप्राणिनस्तेषां ग्रहणं 'जातिरप्राणिनाम् ९१०' इति नित्ये प्राप्ते विकल्पार्थम्। पशुग्रहणं हस्त्यश्वादिषु सेनाङ्गत्वान्नित्ये प्राप्ते। मृगाणां मृगैरेव शकुनीनां तैरेवोभयत्र द्वन्द्वः। अन्यैस्तु सहेतरेतरयोग एवेति नियमार्थं मृगशकुनिग्रहणम्। एवं पूर्वापरमधरोत्तरमित्यपि। अश्ववडवग्रहणं तु पक्षे नपुंसकत्वार्थम्। अन्यथा परत्वात् 'पूर्ववदश्ववडवौ ८१३' इति स्यात्॥

---

53. आ नकुलात्–मशकमारभ्य नकुलपर्यन्तानां जन्तूनां क्षुद्रत्वव्यवहारः।

54. गवाश्वम्। अवङ् स्फोटायनस्येत्यवङ् वा यदा नावङ् तदा गोअश्वं गो अश्वा इति विभाषा सूत्रेण विकल्प एव पाणिनिना गवाश्वमित्येवोच्चरितं न तु गो अश्वमितीति। गवाश्वमिति द्वन्द्व एव, नित्यैकवचनान्तमिति भावः।

**११७। विप्रतिषिद्धं चानधिकरणवाचि** ।२।४।१३। विरुद्धार्थानामद्रव्यवाचिनां द्वन्द्व एकवद्वा स्यात्। शीतोष्णम्। शीतोष्णे। वैकल्पिकः समाहारद्वन्द्वः 'चार्थे द्वन्द्वः ९०१' इति सूत्रेण प्राप्तः। स विरुद्धार्थानां यदि भवति तर्हि अद्रव्यवाचिनामेवेति नियमार्थमिदम्। तेन द्रव्यवाचिनामितरेतरयोग एव। शीतोष्णे उदके स्तः। विप्रतिषिद्धं किम्। नन्दकपाञ्चजन्यौ। इह पाक्षिकः समाहारद्वन्द्वो भवत्येव॥ **११८। न दधिपयआदीनि** ।२।४।१४। एतानि नैकवत्स्युः। दधिपयसी। इध्माबर्हिषी। निपातनाद्दीर्घः। ऋक्सामे। वाङ्मनसे॥ **११९। अधिकरणैतावत्त्वे च** ।२।४।१५। द्रव्यसंख्यावगमे एकवदेवेति नियमो न स्यात्। दश दन्तोष्ठाः॥ **१२०। विभाषा समीपे ।२।४।१६।** अधिकरणैतावत्त्वस्य सामीप्येन परिच्छेदे समाहार एवेत्येवंरूपो नियमो वा स्यात्। उपदशं दन्तोष्ठम्। उपदशा दन्तोष्ठाः॥ **१२१। आनङ् ऋतो द्वन्द्वे** ।६।३।२५। विद्यायोनिसंबन्धवाचिनामृदन्तानां द्वन्द्वे आनङ् स्यादुत्तरपदे परे। होतापोतारौ। होतृपोतृनेष्टोद्गातारः। मातापितरौ। पुत्रेऽन्यतरस्यामित्यतो मण्डूकप्लुत्या पुत्र इत्यनुवृत्तेः। पितापुत्रौ॥ **१२२। देवताद्वन्द्वे च** ।६।३।२६। इहोत्तरपदे परे आनङ्। मित्रावरुणौ॥ **वायुशब्दप्रयोगे प्रतिषेधः**॥ अग्निवायू। वाय्वग्नी। पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्यस्य परिग्रहार्थम्। तेन ब्रह्मप्रजापती इत्यादौ नानङ्। एतद्धि नैकहविर्भागित्वेन श्रुतं नापि लोके प्रसिद्धं साहचर्यम्॥

---

55. एकवद्भावाभावपक्षे। जात्याख्यायामिति बहुवचनं प्लक्षन्यग्रोधा इत्यादि अजातित्वाद्दधिघृते जात्याख्यायामिति सूत्रे वा बहुवदित्युक्तत्वात्। अश्वबडबौ इति। अश्वबडबा इत्यपि भवति। एवं प्लक्षन्यग्रोधावित्यादि च। बहुप्रकृतिः बहुवचनान्तावयवा, विप्रतिषिद्धं किम् विप्रतिषिद्धग्रहणाभावे एकवद्भावो द्वन्द्वस्य यदि भवति तर्ह्यद्रव्यवाचिद्वन्द्वस्यैवेति नियमस्स्यात्। तेन नन्दकपाञ्चजन्ययोर्द्रव्यवाचित्वात्समाहारद्वन्द्वे एकवद्भावो न भवेत्। तेन नन्दकपाञ्चजन्यमिति न सिद्ध्येदिति भावः। नन्दकपाञ्चजन्याविति तु न प्रत्युदाहरणं इतरेतरद्वन्द्वत्वात्तस्य –

56. न दधि–एतेषां समाहारद्वन्द्वो नास्ति। किन्तु इतरेतरद्वन्द्व एवेति भावः। विभाषेति सूत्रे व्यञ्जनग्रहणाद्दधिपयसोः तृणग्रहणादिध्माबर्हिषोः जातिरप्राणिनामिति ऋक्सामयोः चार्थे द्वन्द्व इति वाङ्मनसोरेकत्वे द्वन्द्वस्य प्राप्ते निषेधोऽनेन।

57. पुत्र इत्यनुवृत्तेः– तथा च पुत्रशब्दे उत्तरपदे परतः पूर्वस्य ऋतः द्वन्द्वे आनङित्यर्थः। न च यथाश्रुतसूत्रादेवात्राङ्प्राप्तिश्शङ्क्या ऋदन्तानां द्वन्द्वे आनङित्यनेन ऋदान्तनामेव यदा द्वन्द्वस्तदैवानङ् न तु ऋदन्तानामृद्भिन्नान्तानामिति च इतरेतरयोगद्वन्द्वे इति सिद्धत्वात्।

**९२३। ईदग्नेः सोमवरुणयोः** ।६।३।२७। देवताद्वन्द्वे इत्येव॥ **९२४। अग्नेः स्तुत्स्तोमसोमाः** ।८।३।८२। अग्नेः परेषामेषां सस्य षः स्यात्समासे। अग्निष्टुत्। अग्निष्टोमः। अग्नीषोमौ। अग्नीवरुणौ॥ **९२५। इद्वृद्धौ** ।६।३।२८। वृद्धिमत्युत्तरपदे अग्नेरिदादेशः स्याद्देवताद्वन्द्वे। अग्नामरुतौ देवते अस्य आग्निमारुतं कर्म। अग्नीवरुणौ देवते अस्य आग्निवारुणम्। 'देवताद्वन्द्वे च १२३९' इत्युभयपदवृद्धिः। अलौकिके वाक्ये आनङमीत्वं च बाधित्वा इत्। वृद्धौ किम्। आग्नेन्द्रः। 'नेन्द्रस्य परस्य १२४०' इत्युत्तरपदवृद्धिप्रतिषेधः॥ **विष्णौ न**॥ आग्नावैष्णवम्॥

---

58. ईदग्नेः–अलोन्त्यपरिभाषया अन्त्यस्य इकारस्य ईकारस्स्यात्। ननु तपरः किम्। ह्रस्वव्यावृत्तये। तत्कालग्रहणार्थमिति चेद्विधानारम्भसामर्थ्यादेव न ह्रस्वस्य सवर्णस्य ग्रहणमत्रेति चेदुच्चारणार्थमेव। ननु इदित्येवास्तु अग्नेरिकारागम इत्यर्थः। अग्नि इ सवर्णदीर्घः अग्नी इति भवत्येव। किं दीर्घोच्चारणेनेति चैन्मैवम् । अग्न्यवयवानाम्मध्ये अस्मादवयवात्परस्सन्निकारागमो भवेदिति नियमाभावेन इ अग्नि यग्नि इति भवेदिति ।ननु तर्हि इगग्नेरिति पठ्यतां कित्त्वादन्त्यावयव एव भवतीति चेत् मैवम् आदेशप्रकरणस्थत्वेन सूत्रस्यास्य आगमत्वे अपाणिनीयत्वापत्तेः। किञ्च स्वरेऽप्यस्ति विशेष इति–

59. सास्यदेवतेत्यणि उभयपदवृद्धिः आग्निमरुतं लौकिकविग्रहे देवताद्वन्द्वे चेत्यनङ् अग्नामरुतौ देवते अस्येति, अलौकिके तु अग्नि सु मरुत् सु अण् इति स्थिते सुब्लुकि अग्निमरुत् अण् अत्र देवताद्वन्द्वेचेत्यानङ् प्राप्नोति देवताद्वन्द्वे चेत्युभयपदवृद्धिश्च प्राप्नोति। परत्वाद्वृद्धिः आग्निमारुत इदानीं पुनरनङ् प्राप्तः। इद्वृद्धाविति वृद्धिमति मारुते परतः इत् प्राप्तः परत्वादित् आग्निमारुतम्। न च वृद्ध्या बाधितत्वात्पुनरानङः प्राप्तिरेव नास्तीति इद्वृद्धाविति व्यर्थमिति वाच्यम्। लक्ष्ये लक्षणन्यायोऽत्राश्रीयते। लक्ष्ये लक्षणं न हि प्रवृत्तम्। किन्तु प्रवर्तितुमिच्छदेव बाधितमिति। तस्मात्पुनरानङः प्रवृत्तिरस्त्येवेति। आग्नि वारणम्। अत्र ईदग्नेरितीत्वं बाधित्वा वृद्धिः पश्चात्पुनरपीत्वं बाधित्वा इद्वृद्धौ इति इत्वं (न चात्रानङः प्राप्तिश्शङ्क्या परत्वेन ईदग्नेरित्यस्य आनङ्बाधकत्वात्)आग्नीन्द्रः अग्नि इन्द्र अण् वृद्धिः आनङ् आग्नाइन्द्रः आद्गुणः आग्नीन्द्रः अग्नीन्द्रौ देवते अस्य आग्नीन्द्रः। विष्णौ न वृद्धिमति विष्णौ उत्तरपदे परतो नाग्नेरित् अग्नाविष्णू देवते अस्य आग्नावैष्णवम्। द्वन्द्वे इद्वृद्धाविति सूत्रव्याख्यानावसरे देवताद्वन्द्वे चेत्युभयपदवृद्धिः। अलौकिकवाक्ये आनङमीत्वञ्च बाधित्वेति मूलम्। तस्यायमाशयः अग्नि मरुत्। अण् इति स्थले अग्नि वरुण अण् इति स्थले च क्रमेण आनङ्वृद्धी ईत्ववृद्धी च प्राप्तौ आनङमीत्वञ्च

बाधित्वा परत्वाद्वृद्धिरिति। न च अनवकाशत्वादानङीत्वे इति वाच्यं अग्नामरुतौ अग्नीमरुतौ इति द्वन्द्वे (वृद्धिप्रसक्तयभाववति स्थले) तयोश्चरितार्थत्वात्। ननु आदेर्वृद्धिः अन्त्यस्य आनङीत्वे इति विभिन्नविषयत्वेन बाध्यबाधकत्वप्रसक्तिरेवात्र नास्तीति चेत् सत्यम्। यदि वृद्धिस्यात्तर्हि इद्वृद्धाविति इदादेशस्स्यात् तेन च अपवाद भूतेन इद्वृद्धिसूत्रेण आनङीत्वे बाध्येते इति कृत्वा देवताद्वन्द्वे चेति वृद्धिः इद्वृद्धिसम्पादनद्वारा आनङीत्वयोर्बाधकमिति अभिप्रायेण तथोक्तम्। एतेन यत्र इद्वृद्धिसम्पादनं देवताद्वन्द्वे चेति वृद्धिर्नास्ति तत्र वृद्धेः आनङीत्वयोश्च न बाध्यबाधकभाव इति सिद्धम्। तथा च दीर्घाच्च वरुणस्येति सूत्रे वक्ष्यमाणं ऐन्द्रावरुणमित्युदाहरणं सङ्गच्छते। तत्र हि वृद्धेः इद्वृद्धिसम्पादकत्वं नास्तीति वृद्धिर्नानङं बाधते। इन्द्रवरुण अण् प्रथमत एवानङ् पश्चाद्वृद्धिः दीर्घात्परत्वान्नोत्तरपदवृद्धिः ऐन्द्रावरुणम्। यदि तु यत्तत्रापि बाध्यबाधकत्वं स्यात्तर्हि आनङं बाधित्वा वृद्धिः पूर्वोत्तरपदयोः पश्चादानङ् ऐन्द्रावरुणमिति स्यात्। यत्र अग्निवरुण अण् इत्यादिस्थले देवताद्वन्द्वे चेति वृद्धेः इद्वृद्धाविति इदादेशसम्पादकत्वं वर्तते। (वृद्धिमतीदादेशोग्नेरिति इदादेशम्प्रति वृद्धेरुपजीव्यत्वात्। न हि वृद्ध्यभावे इदादेशस्स्यादिति) तदेवस्थलं इद्वृद्धिविषय इत्युच्यते। तथा च इद्वृद्धिविषये देवताद्वन्द्वे चेति वृद्धिरानङमात्वञ्च बाधते इति फलितम्। न च अन्तरङ्गत्वाद्वृद्धिं बाधित्वा आनङीत्वे स्त इति वाच्यम्। वृद्धिर्यदि परत्वादानङमीत्वञ्च बाधेत तर्हि अन्तरङ्गत्वादानङ् ईत्वञ्च वृद्धिम् बाधेयाताम् न तु तथा किन्तुवृद्धिः इदादेशं सम्पाद्य इद्वृद्धिना अपवादभूतेन प्रयोज्यकर्त्र्या आनङ्मीत्वञ्च बाधते इत्युक्तं तथा च अपवादोपजीव्यत्वेन अपवादत्वाद्वृद्धिरानङमीत्वञ्चान्तरङ्गमपि बाधते एव। अपि च परिहृत्यापवादविषयं तत उत्सर्गः प्रवर्तते, इति परिभाषया अपवादविषये उत्सर्गस्य प्रवृत्तिरेव नास्तीति इद्वृद्धिविषये आनङीत्वयोः प्रवृत्तिरेव नास्तीति वृद्धेर्बाध्यत्वशङ्कैव न । एतत्परिभाषानुगुण्येन तु मूलस्यायमर्थः। आनङमीत्वञ्च बाधित्वा अप्रवर्तयित्वा (स्वोत्पत्त्यासंभावितेन इद्वृद्धिविषयत्वेन उपलक्षिते लक्ष्ये आनङीत्वयोरप्रवृत्तिर्भवतीति तस्यैव (दीर्घस्यैव) आनङीत्वाप्रवर्तकत्वमिति हेतोः) उभयपदवृद्धिर्भवतीति, एतावता ग्रन्थसन्दर्भेण यत्रेद्वृद्धिविषयत्वं तत्र नानङीत्वयोः प्रवृत्तिः इति। अग्नि मरुत् अण् अग्निवरुण अण् इत्यत्र उभयपदवृद्धिः। पश्चादिदादेशः आग्निमारुतम् आग्निवारुणम् इति रूपे सिद्ध्यत इति फलितम्। ननु इकारस्य इकारादेशविधानं व्यर्थमिति चेन्मैवम्।

ईदानङोरप्रवृत्तिं प्रति इद्वृद्धावित्यस्य आवश्यकत्वात् अपवादविषयत्वे सति हि उत्सर्गस्य अप्रवृत्तिरिति अपवादविषयत्वाय अपवादसूत्रमिति भावः। अत्र व्याख्यानान्तरं इद्वृद्धौ किमित्यस्य इत्वृद्धौ किम् इति छेदः इदित्यस्य पूर्वेणान्वयः। वृद्धौ किमिति प्रश्नः युक्तञ्चेदम्। न हि सूत्रारम्भः किमर्थ इति प्रश्नतात्पर्यम्। आग्निवारुणमित्यादावनङाद्यभावाय

**९२६। दिवो द्यावा** ।६ ।३ ।२९ । देवताद्वन्द्वे उत्तरपदे । द्यावाभूमी । द्यावाक्षामा ॥
**९२७। दिवसश्च पृथिव्याम्** ।६ ।३ ।३० । दिव इत्येव । चाद् द्यावा । आदेशे अकारोच्चारणं सकारस्य रुत्वं माभूदित्येतदर्थम् । द्यौश्च पृथिवी च दिवस्पृथिव्यौ । द्यावापृथिव्यौ ॥
**छन्दसि दृष्टानुविधिः** ॥ द्यावा चिदस्मै पृथिवी । दिवस्पृथिव्योररतिमित्यत्र पदकारा विसर्गं पठन्ति ॥

---

सूत्रस्यावश्यकत्वं दर्शितमिति प्रश्नस्यावश्यकत्वात्। किन्तु सूत्रैकदेशस्य वृद्धिपदस्यायमाक्षेपः। तथैव प्रत्युदाहरणमाग्नीन्द्र इति वृद्धिमदुत्तरपरकत्वाभावान्नाग्नेरिदादेश इति प्रत्युदाहर्तुराशयः। इदित्यस्य पूर्वेणान्वये सति अलौकिकवाक्ये आनङमीत्वञ्च बाधित्वा इत्स्यादिति सिद्ध्यति । इद्वृद्धावित्यस्य अपवादत्वाद्बाधकत्वं अन्त्यस्यैवानङ्, ईत्वञ्च इदादेशश्चेति न विभिन्नविषयत्वमिति बाध्यबाधकभावोऽत्र सुसंगत एव। एकविषयत्वात् (अन्त्यादेशविषयत्वादित्यर्थः) इदादेशश्च उभयपदवृद्धेश्च उपजीव्योपजीवकत्वेन बाध्यबाधकभावशङ्का नास्त्येवेति प्रथमतः वृद्धिः पश्चादिदादेशः। न च प्रथमत एव इदादेश इति वाच्यम्। वृद्धिमति परतः इदादेशस्स्यादिति वृद्धेरुपजीव्यत्वेन प्रथमतः प्रसक्तिरिति इदमेवाभिप्रेत्य मूले देवता द्वन्द्वेचेत्युभयपदवृद्धिः इति प्रथमतो निर्दिष्टम् अत्रेदं बोध्यम् अग्निवरुण अण् इति स्थले वृद्धिः ईदादेशः इति द्वयं प्राप्नोति परत्वाद्वृद्धिः। आग्निवारुण इति स्थिते ईदादेशः, इदादेशश्च प्राप्तौ अपवादत्वादिदादेशः आग्निवारुणमिति यद्यन्तरङ्गत्वादीदादेश एव वृद्धिं बाधते इत्युच्यते तर्हि परिहृत्यापवादविषयमिति परिभाषैवात्राश्रयणीया। आश्रित्य तु परिभाषां बाधित्वेत्यस्य अप्रवर्तकइत्वेत्यर्थो वाच्यः (इदादेशो हि लक्ष्यं स्वविषयीकृत्य आनङीत्वयोरप्रवर्तकमिति।

60. दिवोद्यावा– देवताद्वन्द्वे दिवो द्यावादेशस्स्यादुत्तरपदे परतः दिव् भूमि औ द्यावाभूमी दिवभिमानिन्याः भूम्यभिमानिन्याश्च देवताया वाचकाविमौ केवलयोस्तुद्युभूमी इत्येव। दिव उदिति उत्वम्।

61. दिवसश्च पृथिव्याम्। पृथिव्यां परतो दिवो दिवसादेशस्स्यात्। दिवो द्यावेति पूर्वसूत्राद्दिव इत्यस्यात्रानुवृत्तिः। द्यावेत्यस्य तु चकारेणानुकर्षणम्। स्थान्यनिर्देशेन स्थानिनो दिवोऽनुवृत्तिः आदेशस्य निर्देशेन द्यावेत्यादेशस्याननुवृत्तिरिति च कृत्वा सूत्रे चकारो निहित इति वेद्यम्। ननु दिवस् च पृथिव्यामित्येव सूत्र्यतां किमिति दिवसश्चेति अकारान्तसूत्रणेनेत्यत आह। आदेश इत्यादि। ससजुषोरुरिति रुत्वं माभूदित्यर्थः। न तु पुनः दिवसेत्यकारानादेशार्थमिति भावः। नाप्युच्चारणार्थ इति भ्रमितव्यम्।

**९२८। उषासोषसः** ।६ ।३ ।३१। उषस्शब्दस्योषासादेशो देवताद्वन्द्वे। उषासासूर्यम्॥ **९२९। मातरपितरावुदीचाम्** ।६ ।३ ।३२। मातरपितरौ। उदीचां किम्। मातापितरौ॥ **९३०। द्वन्द्वाच्चुदषहान्तात्समाहारे** ।५ ।४ ।१०६। चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे। वाक् च त्वक् च वाक्त्वचम्। त्वक्स्रजम्। शमीद्दषदम्। वाक्त्विषम्। छत्रोपानहम्। समाहारे किम्। प्रावृट्शरदौ॥ ॥ **इति द्वन्द्वप्रकरणम्**॥

---

दिवश्च पृथिव्यामित्युच्चारणस्य अतिसुलभत्वतात् । वस्तुतस्तु दिवस् पृथिव्यामित्येव सूत्रमस्तु दिवः पृथिव्यामिति विसर्गान्तपाठाभावादेव। दिवसस्सस्य रुत्वादिकं न दिवो द्यावेति पदद्वयस्यात्रानुवृत्तिः द्यावापदस्यानुवृत्त्यैव द्यावादिवसोरादेशयोः पर्यायता गम्यते। द्यावादेशन्तु दिवसादेशो न बाधते। तथात्वे द्यावादेशानुवृत्तिवैयर्थ्यात् इति दृष्टानुविधिः छन्दसि यथा दृष्टं तथा विधिर्नेय इत्यर्थः। यो हि विधिः (व्याकरणशास्त्रं) छन्दोनियमनाय शक्नुयात् तेन अद्वन्द्वेऽपि दिवो द्यावादेशः द्यावाचिदस्मै पृथिवी इति। द्वन्द्वे पृथिव्याम्परतः दिवस्सकारस्य रुत्वविसर्गौ च दिवः पृथिव्योरिति पदकाराः। पदं कुर्वन्ति वदन्ति ये ते पदप्रवचनसमय इत्यर्थः दिवस् पृथिव्योरिति पठनीयमिति। भावः।

62. उषसः–प्रातरभिमानिनी देवता उषश्शब्देनोच्यते न तु केवलं प्रातः तस्या देवतात्वात्।

63. मातापितरौ आनङ्ऋत इत्यानङ् इत्युदग्देशीयभिन्नानां पाठः।

64. वाक्त्वचम् चोः कुरिति कुत्वस्य त्रैपादिकत्वेन एतत्सूत्रदृष्ट्या असिद्धत्वात् वाक्त्वच् इति चान्तोयम् । यद्वा वाच् त्वच् इत्यलौकिकविग्रहे समासान्ते अचि कृते वाच्, त्वच्, अ, झल्परकत्वात् वाचश्चोः कुत्वं वाक् त्वच् अ अपदान्तत्वात् झल्परकत्वाभावाच्च त्वचश्चोर्न कुत्वम्, वाक्त्वचं । अत्रापि पक्षे असिद्धत्वादेव न कुत्वप्रवृत्तिरिति बोद्धव्यम् । पूर्वस्मिन्पक्षे तु प्रवृत्त्यनन्तरमसिद्धत्वाभ्युपगमे वाक्त्वगमिति स्यादिति दोष ऊह्यः। किञ्च अलौकिकविग्रहावस्थायामेव समासान्तस्य कर्तव्यत्वेन अचि कृते पूर्वस्य भत्वेन पदत्वाभावान्न कुत्वमित्यपि बोध्यम् । **इति द्वन्द्वः।**

# एकशेषप्रकरणम् २१।

अथैकशेषः 'सरूपाणाम्-१८८'। रामौ। रामाः॥ **विरूपाणामपि समानार्थानाम्**॥ वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ। कुटिलदण्डौ॥ **९३१। वृद्धो यूना तल्लक्षणश्चेदेव विशेषः** ।१।२।६५। यूना सहोक्तौ गोत्रं शिष्यते गोत्रयुवप्रत्ययमात्रकृतं चेत्तयोः कृत्स्नं वैरूप्यं स्यात्। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ। वृद्धः किम्। गर्गगार्ग्यायणौ। यूना किम्। गर्गगार्ग्यौ। तल्लक्षणः किम्। भागवित्तिभागवित्तिकौ। कृत्स्नं किम्। गार्ग्यवात्स्यायनौ॥

---

65. अथैकशेषः तत्पुरुषादिवदेकशेष इति न संज्ञा । किन्तु यत्रैकश्शिष्यते स एकशेष इति, लौकिकव्यवहारः। सरूपाणामेकशेष एकविभक्ताविति सूत्रमारभ्य प्रकरणमेकशेषस्य व्याख्यातञ्चेदं सूत्रम्। रामौ इत्यत्र सरूपाणामिति मूलोक्तपदस्य समानानुपूर्वीकानां समानार्थबोधकानाञ्चेत्यर्थाश्रयणे वक्रदंडावित्यस्यासिद्धेर्विरूपाणामिति वार्तिकम्, समानानुपूर्वीकानां वा समानार्थबोधकानां वा इत्यर्थाश्रयणे तु व्यर्थमिदमिति तत्रैव प्रतिपादितम् ।

66. वृद्धो यूना । पूर्वस्मात्सूत्रादेकशेष इति पदस्यात्रानुवृत्तिः वृद्धिर्यस्याचामादिस्तद्वृद्धमिति कृत्रिमस्य वृद्धस्य नात्र ग्रहणम् युवप्रत्ययान्तेन सह सारूप्याभावात् । तदेतदाह गोत्रमिति । वृद्धपदेन गोत्रस्य ग्रहणमित्यर्थः, यूना सहोक्तौ युवप्रत्ययान्तेन सह गोत्रप्रत्ययान्तस्य ग्रहणे इत्यर्थः । ननु गोत्रयुवप्रत्ययप्रकृत्योस्सारूप्येऽपि तत्प्रत्यययोरसारूप्येन प्रत्ययान्तयोरपि सारूप्याभाव एवेति कथं तत्रैकशेष इत्यत आह–तल्लक्षणश्चेदेव विशेष इति अस्मादेव सूत्रात्तथाविधयोरप्येकशेष इति भावः। ताभ्यां लक्ष्यत इति तल्लक्षणः। तत्कृत इति यावत्। विशेषो भेदः वैरूप्यमिति यावत्। एवकारार्थमाह मात्रेति । गोत्रयुवप्रत्ययकृतवैरूप्येतरवैरूप्याभावे सतीत्यर्थः। गार्ग्यः गर्गादिभ्यो यञ् इति गोत्रप्रत्ययान्तः। यञिञोश्चेति फक्। गार्ग्यायणः युवप्रत्ययान्तः फक् कृतमेव ह्यत्र वैरूप्यमुभयोः गर्गगार्ग्यौ। अत्र वृद्धो वर्तते युवात् न अतो नैकशेषः। गर्गेति न गोत्रं नापि युवा। वैरूप्यञ्च अर्थतश्शब्दतश्चेति द्वेधा तदुभयमपि तत्प्रत्ययमात्र कृतञ्चेत्तर्ह्येवैकशेषः। तेन भागवित्तिभागवित्तिकावित्यत्र शब्दवैरूप्यस्य तत्प्रत्यये कृतत्वेऽपि अर्थवैरूप्यं न तन्मात्रकृतमिति नैकशेषः। कृत्स्नं किम् शब्दद्वयगतं कृत्स्नं वैरूप्यं तत्प्रत्ययमात्रकृतमिति किमित्यर्थः गार्ग्यवात्यायनौ अत्र वैरूप्यस्य कृत्स्नत्वमस्त्येव। किन्तु नेदं वैरूप्यं सर्वं प्रत्ययमात्रकृतम् प्रकृत्योरपि विरूपत्वात्।

67. **गर्गाः।** गर्गादिभ्यो यञ् यञश्चेति ङीप्। यस्येति चेत्यकारलोपः।

**९३२ । स्त्री पुंवच्च** ।१ ।२ ।६६। यूना सहोक्तौ वृद्धा स्त्री शिष्यते तदर्थश्च पुंवत्। गार्गी च गार्ग्यायणौ च गर्गाः। अस्त्रियामित्यनुवर्तमाने 'यञञोश्च ११०८' इति लुक्। दाक्षी च दाक्षायणश्च दाक्षी॥**९३३ । पुमान् स्त्रिया** ।१ ।२ ।६७। स्त्रिया सहोक्तौ पुमान् शिष्यते तल्लक्षण एव विशषश्चेत्। हंसी च हंसश्च हंसौ॥ **९३४। भ्रातृपुत्रौ स्वसृदुहितृभ्याम्** ।१ ।२ ।६८। भ्राता च स्वसा च भ्रातरौ। पुत्रश्च दुहिता च पुत्रौ॥ **९३५। नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्** ।१ ।२ ।६९। अक्लीबेन सहोक्तौ क्लीबं शिष्यते तच्च वा एकवत्स्यात्तल्लक्षण एव विशेषश्चेत्। शुक्लः पटः। शुक्ला शाटी। शुक्लं वस्त्रम्। तदिदं शुक्लम्। तानीमानि शुक्लानि॥ **९३६। पिता मात्रा** ।१ ।२ ।७०। मात्रा सहोक्तौ पिता वा शिष्यते। माता च पिता च पितरौ। मातापितरौ॥ **९३७। श्वशुरः श्वश्र्वा** ।१ ।२ ।७१। श्वश्र्वा सहोक्तौ श्वशुरो वा शिष्यते तल्लक्षण एव विशेषश्चेत्। श्वश्रूश्च श्वशुरश्च श्वशुरौ। श्वश्रूश्वशुरौ॥

---

हलस्तद्धितेस्येति यलोपः गार्गी च गार्ग्यायणौ चेति विग्रहे स्तीपुंवच्चेत्येकशेषे गार्गीत्यस्य पुंवद्भावः। यञञोश्चेति पुंसि बहुत्वे यञो लोपविधानेन स्त्रियाः पुंवद्भावातिदेशाल्लोपोऽत्रापि गर्ग य ञ् ङीप् गर्ग यञ् फक् इत्यलौकिके एकशेषे गर्ग यञ् ङीप् पुंवद्भावेन ङीबभावः गर्ग यञ् यञयोश्चेति यञो लुक् गर्ग – न च बहुत्वाप्रतीते : लोपासंभवश्शङ्क्यः। शेषितस्य लुप्तमानार्थाभिधायकत्वेन गर्गेत्यस्य बहुत्वात् ततो जसि गर्गाः। दाक्षी दक्षशब्दादत इञ् दाक्षिः इतो मनुष्यजाते रिति स्त्रियां ङीप् दाक्षी च दाक्षायणश्चेति विग्रहे दाक्षी इति शिष्यते। तस्य पुंवद्भावः। दाक्षि औ। प्रथमयोः पूर्वसवर्णदीर्घः दाक्षी इति द्विवचनान्तम्।

68. **पुमान् स्त्रिया**–तल्लक्षणश्चेदेव विशेष इति वाक्यस्य मण्डूकप्लुत्यात्रान्वयः। अत्र वृद्धस्य नानुवृत्तिः। तेन अवृद्धया स्त्रिया सहोक्तौ पुमान् शिष्यते नात्र पुंसि यूनोऽनुवृत्तिः। तल्लक्षणः स्त्रीपुंस्त्वलक्षणः हंसशब्दात् स्त्रीत्वेऽजादिलक्षणो ङीष् हंसी । न चात्र हंसस्य स्त्री इति पुंयोगे ङीष् शंङ्क्यः स्त्रीत्वपुंस्त्वप्रयुक्तविशेषादधिकस्य पुंयोगप्रयुक्तविशेषस्य भाजेन एकशेषाभावप्रसङ्गात् हंसी च हंसश्च हंसौ। हंसहंसीशब्दयोरत्र स्त्रीत्वे ङीपेव विशेषाधायक इत्यस्ति तल्लक्षणविशेषवत्त्वम्।

69. **पूर्वशेषोऽपि**–पूर्वस्याप्येकस्य शेषः। त्यदादीनां मिथःसहोक्तावित्येवात्राप्यन्वयः।

70. **त्यदादित इति।** त्यदादीनामेकशेषे सति एकशेषात्प्राग्विग्रहावस्थायां वर्तिपदार्थानां

**९३८। त्यदादीनि सर्वैर्नित्यम्** ।१।२।७२। सर्वैः सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते। स च देवदत्तश्च तौ। **त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते**॥ स च यश्च यौ। पूर्वशेषोऽपि दृश्यत इति भाष्यम्। स च यश्च तौ॥ **त्यदादितः शेष पुंनपंसकतो लिङ्गवचनानि**॥ सा च देवदत्तश्च तौ॥ तच्च देवदत्तश्च यज्ञदत्ता च तानि। पंनपुंसकयोस्तु परत्वान्नपुंसकं शिष्यते। तच्च देवदत्तश्च ते॥ **अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम्**॥ कुक्कुटमयूर्याविमे। मयूरीकुक्कुटाविमौ। तच्च सा च अर्धपिप्पल्यौ ते॥

**९३९। ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री** ।१।२।७३। एषु सहविवक्षायां स्त्री शिष्यते। 'पुमान् स्त्रिया ९३३' इत्यस्यापवादः। गाव इमाः॥ ग्राम्येति किम्। रुरव इमे। पशुग्रहणं किम्। ब्राह्मणाः। सङ्घेषु किम्। एतौ गावौ।

---

त्यदादितद्भिन्नानां अन्यतमं यदि पुंलिङ्गं तर्हि शेषितस्य पुंस्त्वं यदि नपुंसकलिङ्गं तर्हि नपुंसकत्वं यदि अन्यतमस्य कस्य चित्पुंस्त्वं कस्य चिन्नपुंसकत्वं तर्हि शेषितस्य नपुंसकत्वमेवेति वार्तिकस्य भावः। अद्वन्द्वेत्यादिद्वन्द्वतत्पुरुषयोरन्यतरः विशेषणं येषां तेषां द्वन्द्वतत्पुरुषनिष्ठविशेषणतानिरूपितविशेष्यताकानामित्यर्थः। तद्भिन्नानामद्वन्द्वतत्पुरुषविशेषणानां द्वन्द्वतत्पुरुषान्यतरनिष्ठविशेषणतानिरूपितविशेष्यत्वाभाववतामिति निष्कर्षः। त्यदादीनामिति विशेष्यपदं त्यदादित इति वार्तिके तसिलान्निर्दिष्टं यथा अयञ्च इयञ्च इमे इमाविति पुंस्त्वेन भवितव्ये स्त्रीत्वन्तु द्वन्द्वविशेषणत्वप्रयुक्तं। द्वन्द्वश्च कुक्कुटमयूर्यौ इति त्यदादित इति पुंस्त्वनियमाभावे शब्दपरविप्रतिषेधात् स्त्रीत्वं। तच्च सा च ते अर्धं पिप्पल्योः अर्धपिप्पल्यौ। अर्धं पिप्पल्या अर्धपिप्पिली। तौ अर्धपिप्पल्याविति विग्रहे तु तत्पुरुषगर्भोयमेकशेषः। रामावितिवत्। ते इत्यस्य विशेषणमिदमित्यस्ति तत्पुरुषविशेषणत्वं यद्वा द्वन्द्वतत्पुरुषयोर्विशेषणानां त्यदादीनामिति। त्यदादीनामेव विशेषणत्वं वाच्यं तथा च द्वन्द्वतत्पुरुषान्यतरनिष्ठविशेष्यतानिरूपितविशेषणत्वाभाववतामित्यर्थः फलति। अस्मिंस्तु पक्षे कुक्कुटमयूर्याविति विशेष्यं इमे इति विशेषणमित्याद्यनुसन्धेयम्।

71. गाव इमाः। गौरयं गौरियं गौरियञ्च गाव इमाः न च गोशब्दस्त्रीशिष्यतां नाम। कथमिदं शब्दं स्त्रीशिष्यते। त्यदाद्यत इति पुंस्त्वस्य शेषितस्य विधानादिति वाच्यम्। विशेष्यं यल्लिङ्गं तदेव विशेषणमपीति गाव इति विशेष्यस्य स्त्रीलिङ्गत्वादिदं शब्दोऽपि स्त्रीलिङ्ग एवेति।

(वत्सश्च वत्सश्च वत्सा श्च वत्साः) सर्वनाम्ना इदं शब्देन प्रकृतग्राम्यपशुसङ्घविवक्षायाः

अतरुणेषु किम्। वत्सा इमे॥ **अनेकशफेष्विति वाच्यम्॥** अश्वा इमे। इह सर्वत्र एकशेषे कृतेऽनेकसुबन्ताभावाद्द्वन्द्वो न। तेन शिरसी शिरांसीत्यादौ समासस्येत्यन्तोदात्तः प्राण्यङ्गत्वादेकवद्भावश्च न । पन्थानौ पन्थान इत्यादौ समासान्तो न॥

इत्येकशेषप्रकरणम्॥

## सर्वसमासशेषप्रकरणम् २२

कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः। परार्थाभिधानं वृत्तिः। वृत्त्यर्थावबोधकं वाक्यं विग्रहः। स द्विविधः। लौकिकोऽलौकिकश्च। परिनिष्ठितत्वात्साधुर्लौकिकः। प्रयोगानर्होऽसाधुरलौककः। यथा। राज्ञः पुरुषः। राजन् अस् पुरुष सु इति। अविग्रहो नित्यसमासः, अस्वपदविग्रहो वा।

---

सत्त्वात् ग्राम्यसूत्रेणैव स्त्रीशेष इदं शब्देपीत्येके। अत्र वत्सशब्दो न संवत्सरादर्वाचीनं वक्ति। किन्तु तरुणमेव। अन्यथा अतरुणेषु किमिति प्रत्युदाहरणशङ्काया असाङ्गत्यापत्तेरिति।

72. समासान्तो न एकशेषस्य असमासत्वादिति भावः। ऋक्पूरब्धू इति समासान्तं वक्ष्यति–**इत्येकशेषः**

73. परार्थाभिधानं वृत्तिः–प्रत्ययार्थेन वा परपदार्थेन वा विशिष्टो यः प्रकृत्यर्थः पदार्थो वा स परार्थः अभिधीयते। येन तत्परार्थाभिधानमिति सामान्ये नपुंसकं सा वृत्तिरित्युच्यते। परार्थाभिधानत्वं वृत्तेर्लक्षणमित्यर्थः। यथा उपलम्भ्य इति कृत् प्रकृतेरुपलभेः प्रशंसा अर्थः प्रत्ययस्य तु योग्यत्वमर्थः। तदुभयविशिष्टं अर्थं प्रशंसनीयत्वरूपं कृद्वृत्तिरभिधत्ते इति कृतो वृत्तित्वं दाक्षिरिति तद्धितः प्रत्ययस्य अपत्यमर्थः प्रकृतेर्दक्षोर्थः तद्विशिष्टं दक्षापत्यत्वरूपमर्थं बोधयतीति तद्धितस्य वृत्तित्वं। चिकीर्षति इति सनाद्यन्तधातृषु सन्नन्तः। कृञः प्रकृतेः करणमर्थः। सनः प्रत्ययस्य इच्छार्थः। तदुभयविशिष्टमर्थं करणेच्छात्व (कर्तुमिच्छात्व) रूपं बोधयतीति सनाद्यन्तधातोर्वृद्धित्वं। राजपुरुष इति समासः। राजपदस्य प्रभुरर्थः पुरुषेति परपदस्य पुरुषोऽर्थः। परपदार्थविशिष्टमर्थं राजपुरुषत्वरूपं केवलराजपदं केवलपुरुषपदं वाऽभिधत्त इति समासस्य वृत्तित्वं। रामाः इत्येकशेषः। रामरामराम इति स्थिते परपदार्थयो रामराम इत्यभिधानं शेषितरामशब्दादेव भवतीति एकशेषस्य वृत्तित्वं ननु रामः इति पदेऽपि सोरेकत्वमर्थः। तद्विशिष्टं रामं प्रकृतिप्रत्ययात्मकं पदं बोधयतीति पदस्यापि वृत्तित्वं स्यादिति चेन्मैवम्। प्रकृत्यर्थ एव रामपदार्थगतैकत्वमपि स्वादीनां द्योतकत्वन्यायेन न विशिष्टार्थबोधकत्वम्। तत्रेति। ननु राज्ञः पुरुष इति वाक्ये राज्ञ

समासश्चतुर्विध इति तु प्रायोवादः। अव्ययीभावतत्पुरुषबहुव्रीहिद्वन्द्वाधिकारबहिर्भूतानामपि 'सह सुपा ६४९' इति समासविधानात्। पूर्वपदार्थप्रधानोऽव्ययीभावः। उत्तरपदार्थप्रधानस्तत्पुरुषः। अन्यपदार्थप्रधानो बहुव्रीहिः। उभयपदार्थप्रधानो द्वन्द्वः। इत्यपि प्राचां वादः प्रायोऽभिप्रायः। सूपप्रति उन्मत्तगङ्गमित्याद्यव्ययीभावे अतिमालादौ तत्पुरुषे द्वित्रा इत्यादिबहुव्रीहौ दन्तोष्ठमित्यादिद्वन्द्वे चाभावात्। तत्पुरुषविशेषः कर्मधारयः।

---

इति पदस्य वृत्तित्वमस्तु षष्ठीसंबन्धरूपस्य अधिकार्थस्य भानात्। इति चेन्नैवमपि प्रकृतिबलात्संबन्धस्य प्रतीतावेव षष्ठीविधानेन सोऽपि संबन्थः प्रकृत्यर्थ एव, एवमेव कर्मत्वादिकमपि अन्यथा षष्ठ्यादीनामेव सम्बन्धाद्यर्थ उक्तस्स्यात् पाणिनिना, नैवं दृश्यते, कर्मणि द्वितीयेत्यादौ कर्मत्वस्य प्रकृत्यर्थत्वाभिधानात् कर्तुरीप्सिततममित्यादिना प्रकृतेरेव कर्मादिसंज्ञाविधानात् । एतावता प्रकृत्यर्थादधिकार्थस्याभिधायकत्वं वृत्तिरिति फलितम्। तच्चाभिधायकत्वं प्रत्ययद्वारा कृत्तद्धितसनाद्यन्तधातुषु परपदार्थद्वारा समासैकशेषयोश्चेति निष्कृष्टम्। सुबुत्पत्त्यनन्तरं यत्र सुब्लुगादिकं तत्र समासत्वं। यत्र सुबुत्पत्तेः प्रागेव एकशेषस्य शेषत्वं तत्रैकशेषत्वमिति। एकशेषे समासत्वाभावादेकशेषस्य मासासत्पृथग्ग्रहणम्। परार्थाभिधानमित्यत्र कैयटस्तु परस्य पदस्य योर्थस्तस्याभिधानमित्यर्थमाह। तन्मते तु समासैकशेषयोर्वृत्तित्वं दर्शितरीत्या सुगममेव। कृदादिषु तु इञादिप्रत्ययानामपत्याद्यर्थे विहितत्वेन अपत्यादिपदानां परेषां योर्थः अपत्यादिरूपः तस्याभिधानं प्रत्ययेरिञादिभिः क्रियत इति लक्षणसमन्वयो बोध्यः। अस्मिन्मते तु प्रत्ययद्वारा परपदद्वारा चेत्युभयथापारार्थाभिधायकत्वमिति सिद्धम्।

**74. प्रायोवादः–**प्रायशश्चतुर्विध इति प्राचामुक्तिस्सङ्गमनीयेति भावः। कुत एतदत आह, सह सुपेति विधानादिति सह सुपेति यस्समासो विहितस्सः नाव्ययीभावाद्यधिकारस्थ इति अव्ययीभावादिषु न तस्यान्तर्भावः। तस्मात्सुप्समासस्य पञ्चमस्य सत्त्वान्न समासचतुष्टयत्वमिति भावः। तथा हि। पूर्वं भूतो भूतपूर्वः नायमव्ययीभावः। अम्भावाद्यभावात्। न सप्तमीतत्पुरुषः सप्तम्यन्तत्वाभावात्पूर्वमित्यव्ययस्य न बहुव्रीहिः स्वपदार्थप्राधान्यात्। न द्वन्द्वः चार्थाभावात्। अतस्तेभ्योऽन्योऽयमिति सिद्धम्। अपि च द्वितीयाध्यायप्रथमपादपञ्चमसूत्रमारभ्य अव्ययीभावाद्यधिकारः। सह सुपेति सूत्रन्तु चतुर्थसूत्रमेवेति नात्र तेषामधिकारः इति–

75. **सूपप्रति–अत्र** लेशार्थकस्य प्रतेरेव प्राधान्यम् विशेष्यत्वादिति। प्रतिरुत्तरपदार्थ इति न पूर्वपदार्थप्राधान्यम्। उन्मत्तगङ्गम्। अन्यपदार्थे च संज्ञायामित्यन्यपदार्थप्रधानमिदम्। अतिमाला मालामतिक्रान्ता अतिमाला इति। पूर्वस्य अतेरेव प्राधान्यं द्वित्राः द्वौ वा त्रयो वा इति द्वि त्रि। प्राधान्यमेत्र न त्वन्यस्य। दन्तोष्ठम् । दन्तोष्ठसमाहारस्यात्र प्राधान्यम्। न दन्तोष्ठानामिति नोभयपदार्थप्राधान्यं किन्त्वन्यपदार्थप्राधान्यमेव।

तद्विशेषो द्विगुः। अनेकपदत्वं द्वन्द्वबहुव्रीह्योरेव। तत्पुरुषस्य क्वचिदेवेत्युक्तम्। किंच॥ सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा। सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः॥ १॥ सुपां सुपा, राजपुरुषः। तिङा, पर्यभूषत्। नाम्ना, कुम्भकारः। धातुना, कटप्रूः। अजस्रम्। तिङां तिङा, पिबतखादता। खादतमोदता। तिङां सुपा, कृन्तविचक्षणेति यस्यां क्रियायां सा कृन्तविचक्षणा। एहीडादयोऽन्यपदार्थे इति मयूरव्यंसकादौ पाठात्समासः॥ **इति सर्वसमासशेषप्रकरणम्॥**

---

76. **तद्विशेषो द्विगुः**–कर्मधारयविशेष इत्यर्थः। सामानाधिकरण्ये कर्मधारयत्वं तत्रापि सङ्ख्यापूर्वत्वे द्विगुत्वमित्युक्तत्वादित्युक्तं। उत्तरपदेन परिमाणिनेति वार्तिकेन बहुपदतत्पुरुष उक्तः। स क्वाचित्क एव यत्र परिमाण्युत्तरपदको द्विगुस्तत्रैवेति सङ्कोचात् द्विपदतत्पुरुषस्सार्वत्रिक इति भावः। स्वमतमाह। सुपां सुपेत्यादिना समासषाड्विध्यं स्वमतमिति भावः।

**77. सुपां सुपा सह समास एकः**–एतेन प्रागुक्तं समासचतुष्कं सह सुपेति समासश्च संगृहीतः। (अव्ययस्यापि सुप्त्वात्) सुपां तिङा सह समास एकः पर्यभूषत्। परीत्यव्ययं सुप् क्रियायोगादुपसर्गसंज्ञम् अभूषदिति। तिङन्तेन तस्य समासः सुपां नाम्ना सह समास एकः। अनेन गतिकारकोपपदसमाससङ्ग्रहः। तेष्वेव सुबुत्पत्तेः प्राक्कृद्भिस्सह समासवचनात्। कुम्भकारः कुम्भमिति सुपः कार इति अनुत्पन्नसुपा कृदन्तेन (प्रातिपदिकेन) समासात्। सुपां धातुना सह समास एकः। तिङेत्यनेन नात्रान्यथासिद्धिः शङ्क्या। प्रूरित्यस्य अतिङन्तत्वात्, न च धातुत्वमेव नास्तीति वाच्यम्। क्विप्तु धातुत्वं न जहातीति क्विबन्तस्य धातुत्वात्। ननु नाम्ना इत्यनेन अस्यान्यथासिद्धिः। कटमिति कारकस्य प्रू इति कृदन्तेन अनुत्पन्नसुपा समासविधानात्। न च प्रू इत्यस्य क्विबन्तत्वेन नास्ति कृदन्तत्वमिति वाच्यम्। कृदतिङ् इति तिङ्भिन्नस्य सर्वस्यापि कृत्त्वादिति चेन्मैवम्। नाम्नेत्यस्य प्रातिपदिकेनेत्यर्थात्। अर्थवत्सूत्रे अधातुपर्युदासेन क्विपो धातुत्वेन प्रू इत्यस्य प्रातिपदिकत्वाभावादिति। ननु तर्हि स्वाद्युत्पत्तिरपि न स्यात्। अत एव अधातुरिति पर्युदासेन धातुभिन्नो धातृसदृशः प्रातिपदिकमेवेति क्विपो धातुसदृशत्वादस्ति प्रातिपदिकत्वम्। यद्वा कृत्तद्धितसूत्रात् कृदन्तत्वेनाप्यस्ति प्रातिपदिकत्वमिति नैष दोष इति चेत्तर्हि भूवादयो धातव इति भ्वादिप्रकृतेर्धातुसंज्ञा तेन सह समासविधानार्थं धातुनेति विद्धि। यथा कटमित्यस्य प्रु इति धातुप्रकृतिनैव समासः पश्चात् क्विप् ततः स्सुप् कटप्रूः इति कृदन्तेन धातुना सह समासो नाम्नेति संगृहीतः। तिङन्तेन धातुना सह तिङेति केवलेन धातुना सह धातुनेति चेति नान्यथासिद्धिरस्य। ननु विधायकाभावादेव धातुना समास इति चेन्मैवम्। नमिकप्विति

## समासान्तप्रकरणम् २३

**९४०। ऋक्पूरब्धूःपथामानक्षे** ।५।४।७४। अ अनक्ष इति च्छेदः। ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवः स्यात्। अक्षे या धूस्तदन्तस्य तु न। अर्धर्चः। अनृचबह्वृचावध्येतर्येव। नेह–अनृक्साम। बह्वृक् सूक्तम्। विष्णोः पूः विष्णुपुरम्। क्लीबत्वं लोकात्। विमलापं सरः॥

---

सूत्रे क्विब्वचीति वार्तिके च कटप्रु अजस्रमिति निपातनस्यैव विधायकत्वात् । कटं प्रवते कटप्रूः। न जसतीत्यजस्रं नञस्सुपः जिसा धातुना समासः न जस् अजस् रप्रत्ययः अजस्रं । ननु प्रवत इति प्रूः कटं प्रूः इति सुबन्तेन वा प्रवतेः क्विपि प्रू कटं प्रू कटप्रू इति कृदन्तेन नाम्ना वा समासमङ्गीकृत्य धातुनेति त्यज्यतामिति चेत्सत्यं तथाऽपि केवलात्क्विबभावेन क्विब्वचीति वार्तिके कटप्रुशब्दात्किब्विहित इति धातुना सह समासाभावे कथं कटप्रु इति क्विपः प्रकृतिभूतः शब्दो निष्पद्येत । एवमेव नमिकम्पीतिसूत्रे अजश्शब्दोऽपि कथं निष्पद्येत। वस्तुतस्तु कटप्रु अजस् इत्येवधातुना सह समासस्योदाहर्तव्यम्। तथा च क्विब्वचीति वार्तिके यत्कटप्रु नमिकम्पीतिसूत्रे यच्चाजस् तदुभयमपि समस्तपदमेव। स च समासः सुपो धातुनैव न तु क्विपा नापि कृता। प्रकृतिभूतयोस्तयोः परत्वेन क्विब्रप्रत्यययोर्विधास्य (धीय) मानत्वात् कटप्रु इति धात्वन्तात्समासात्क्विपि दीर्घः कटप्रू सुप् कटप्रूः। अजस् इति धात्वन्तात्समासाद्रप्रत्यये अजस्र अम् अजस्रं इति विग्रहस्तु कटं प्रु इति न जस् इति च बोध्यः। कृन्तविचक्षणे कृन्त इति तिङन्तं तस्य विचक्षणा इति सुपा समासः। सुपां तिङेत्यनेन नास्यान्यथासिद्धिः सुबन्तस्य तत्र तिङन्तस्य अत्र पूर्वनिपात इति भेदात्। एहीड इति यस्मिन्कर्मणि तदेहीडमित्यप्यत्रोदाहरणम्। **इति सर्वसमासशेषः**

78 पूर्वोक्तसमस्तसमासेषु वक्तव्यत्वेन इदमंशश्शिष्यत इति एतत्प्रकरणस्य सर्वसमासशेषत्वेन व्यवहारः।

79. ननु सम्भावनापूर्वपदः कर्मधारयः। अवधारणापूर्वपदश्चेति लौकिकव्यवहारस्य प्रियालव इति द्रुमाः प्रियालुद्रुमाः, विद्यैव धनं यस्य स विद्याधन इति प्रयोगयोश्च कथं गतिः कल्पनीयेति चेदुच्यते। संज्ञायास्सज्ञिनम्प्रति विशेषणत्वेन विशेषणं विशेष्यणेति सम्भावनापूर्वपदकर्मधारयसिद्धिः। अवधारणपूर्वपदस्य तु बहुव्रीहावन्तर्भावः। बहुव्रीहिव्यतिरेकेण अवधारणस्य केवलकर्मधारयेऽनुपलभ्यमानत्वात् **इति समासप्रकरणं समाप्तम्।**

80. ऋक्पूरिति–समासान्ता इत्यत्राधिकारः एकवचनान्तेन विपरिणम्य अ इत्यस्य विशेषणं भवति। समासस्य अन्तस्समासान्त इति षष्ठीतत्पुरुषः, ऋक्पूरब्धूः पथामिति षष्ठीसमासान्तैकदेशसमासपदेन षष्ठचन्तेनान्वेति। विशेषणत्वात्तदन्तविधिः।तदेतदाह।

**९४१। द्व्यन्तरुपसर्गेभ्योऽप ईत्** ।६।३।९७। अप इति कृतसमासान्तस्यानुकरणम्। षष्ठ्यर्थे प्रथमा। एभ्योऽपस्य ईत्स्यात्। द्विर्गता आपो यस्मिन्निति द्वीपम्। अन्तरीपम्। प्रतीपम्। समीपम्। समापो देवयजनमिति तु समा आपो यस्मिन्निति बोध्यम्। कृतसमासान्तग्रहणान्नेह। स्वप्। स्वपी॥ **अवर्णान्ताद्वा॥** प्रेपम्। परेपम्। प्रापम्। परापम्।

---

ऋगाद्यन्तस्येत्यादिना। अनृचः नास्ति ऋक् अध्ययनविषयभूता यस्य सः अनृचः बह्वृचो ऋचो यस्य स बह्वृचः। न सन्ति ऋचो यस्मिस्तदनृक् सामवेद इत्यर्थः। विष्णुपुरं समासान्ते अप्रत्यये कृते सति कथं क्लीबत्वं विधानाभावादत आह–क्लीबत्वं लोकादिति। लिङ्गन्तु लोकतो ज्ञेयमिति सिद्धान्तादिति भावः। भ्राजिभासेति सूत्रात् पधातोः क्विपि उदोष्ठ्यपूर्वस्येत्युत्वे पुर् इति प्रातिपदिकम्। क्विबन्तत्वाद्धातुरयम्। तेन हलि चेति दीर्घः पूर्। पूः विष्णु ङस् पुर् सु इति स्थिते सुब्लुकि विष्णुपुर् अ ससमासान्तः विष्णुपुर सोरं अमि पूर्वः विष्णुपुरं। न च विष्णु ङस् पुर् सु इत्यस्यामवस्थायामेव हलि चेति दीर्घशङ्क्यः अकृतव्यूहाः पाणिनीया इति दीर्घनिमित्तस्य हलस्सोः सुपो धात्विति नङ्क्ष्यमाणत्वेन दीर्घाभावात्। विमला आपः यस्सिंस्तद्विमलापम्। विमलाप् इति अबन्तस्समासः। तस्य अप्रत्ययोन्तावयवः। न चात्र पकारस्य जश्त्वं शक्यम्। अपदान्तत्वात् झश्परकत्वाभावाच्च।

81. एभ्यो पश्य ईप्स्यात्–एभ्यः परस्यापस्य ईप्स्यात् आदेः परस्येति परस्यापस्य य आदिरकारस्तस्येदादेशः द्वीपम्। द्वि अप् अस् इत्यलौकिके सुब्लुकि समासान्तेऽप्रत्यये द्वि अप इको यणचीति यणं बाधित्वा परत्वाद्व्यन्तरिति ईदप द्वीप न च कृताकृतप्रसङ्गित्वरूपमित्यत्वादीत्वमिति वाच्यम्। यणि कृते द्विशब्दात्परत्वमपश्याभावेन ईदप्रवृत्तेः सं अप ईत् समीप। ननु एभ्यः परस्याप्शब्दस्य ईत्स्यादिति यथाश्रुतार्थ एवास्तु किमनेन अप इति षष्ठ्यर्थे प्रथमेतिक्लेशेनेत्यत आह। नेह स्वप् स्वपी इति शोभना आपः यस्मिंस्तत् स्वप् सरः औङि स्वपी जसि स्वंपि सु इत्यस्य उपसर्गत्वेऽपि ततः परस्य अप्शब्दस्यात्र न पूजनादिति निषेधेन समासान्ताभावान्नेत्वम्। न च स्वीप् इति रूपे इष्टापत्तिं कृत्वा समासान्तानुकरणं न कर्तव्यमिति वाच्यम्। स्वापस्तिष्ठन्तीति भाष्यप्रयोगेन अकृतसमासान्तस्य अप्शब्दस्य द्व्यादिभ्यः परस्य ईत्वं नेष्टमिति ज्ञापितत्वात् शोभना आपः स्वाप इति तत्पुरुषसमासः। अवर्णान्ताद्वा अवर्णान्तादुपसर्गात्परस्य अपश्य ईद्वास्यादिति वार्तिकार्थः।

**९४२। ऊदनोर्देशे** ।६ ।३ ।९८। अनोः परस्यापस्य उत्स्यादेशे। अनूपो देशः। राजधुरा। अक्षे तु अक्षधूः। दृढधूरक्षः। सखिपथः। रम्यपथो देशः॥ **९४३। अच् प्रत्यन्ववपूर्वात्सामलोम्नः** ।५ ।४ ।७५। एतत्पूर्वात्सामलोमान्तात्समासादच् स्यात्। प्रतिसामम्। अनुसामम्। अवसामम्। प्रतिलोमम्। अनुलोमम्। अवलोमम्॥ **कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते॥** कृष्णभूमः। उदग्भूमः। पाण्डुभूमः। द्विभूमः। प्रासादः॥ **संख्याया नदीगोदावरीभ्यां च॥** पञ्चनदम्। सप्तगोदावरम्। अजिति योगविभागादन्यत्रापि। पद्मनाभः॥ **९४४। अक्ष्णोऽदर्शनात्** ।५ ।४ ।७६। अचक्षुःपर्यायादक्ष्णोऽच् स्यात्समासान्तः। गवामक्षीव गवाक्षः **। ९४५। अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङमनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायु-षद्व्यायुषत्र्यायुषर्ग्यजुष.जातोक्षमहोक्षवृद्धोक्षो पशुनगोष्ठश्वाः**। ५ ।४ ।७७। एते पञ्चविंशतिरजन्ता निपात्यन्ते। आद्यास्त्रयो बहुव्रीहयः। अविद्यमानानि चत्वार्यस्य अचतुरः। विचतुरः। सुचतुरः॥ **त्र्युपाभ्यां चतुरोऽजिष्यते॥** त्रिचतुराः। चतुर्णं समीपे ये सन्ति ते उपचतुराः। तत एकादश द्वन्द्वाः। स्त्रीपुंसौ। धेन्वनडुहौ। ऋक्सामे। वाङ्मनसे। अक्षिणी च भ्रुवौ च अक्षिभ्रुवम्। दाराश्च गावश्च दारगवम्। ऊरू च अष्ठीवन्तौ च ऊर्वष्ठीवम्।

---

82. अक्षाणां धूः अक्षधूः। समासे अक्षपदाघटितत्वेऽपि धुरोक्षसम्बन्धित्वे सति समासान्तो नेति दर्शयितुं दृढधूरिति द्वितीयोदाहरणम्। दृढा धूर्यस्य स दृढधूः । सखिपथः सखायः पन्थानो यस्मिं स सखिपथः। सखि अस् पथिन् अस् इत्यलौकिके विग्रहे सुब्लुकि सखि पथिन् अ नस्तद्धित इति टिलोपः सखिपथ। एवं रम्याः पन्थानो यस्मिं स रम्यपथः पञ्चनदमित्युदाहरणद्वयम्। द्विगुर्वा बहुव्रीहिर्वा समासान्तोदयात्प्रागुत्तरपदस्य अकारान्तत्वाभावान्न स्त्रीत्वं। किन्तु स नपुंसकमिति नपुंसकत्वं द्विगुपक्षे। बहुव्रीहौ तु क्लीबत्वं लोकात्।

83. **अक्ष्णो दर्शनात्।** दर्शनशब्दस्य चक्षुरर्थः तद्भिन्नमदर्शनम् चक्षुर्भिन्नादक्षिशब्दादित्यन्वयः। अक्षिशब्दश्चक्षुश्शब्दभिन्न एवेति विशेषणं व्यर्थं सत् चक्षुश्शब्दार्थबोधकाक्षि-शब्दभिन्नादक्षिशब्दादित्यर्थं बोधयति। एतस्यार्थस्य फलितमाह अचक्षुः पर्यायादिति चक्षुश्शब्दपर्यायशब्दः चक्षुश्शब्दार्थमेव बोधयतीति कृत्वा अचक्षुः पर्यायादित्युक्तं चक्षुरर्थाबोधकादिति यावत्। अदर्शनात्किम्। जलजाक्षी। गवाक्षः जालमित्यर्थः। गवां किरणानां सूर्यस्य चन्द्रस्य वा अक्षीव रन्ध्र इव वर्तत इति गवाक्षः ।

निपातनाट्टिलोपः। पदष्ठीवम्। निपातनात्पादशब्दस्य पद्भावः। नक्तं च दिवा च नक्तन्दिवम्। रात्रौ च दिवा च रात्रिन्दिवम्। रात्रेर्मान्तत्वं निपात्यते। अहनि च दिवा च अहर्दिवम्। वीप्सायां द्वन्द्वो निपात्यते। अहन्यहनीत्यर्थः। सरजसमिति साकल्येऽव्ययीभावः। बहुव्रीहौ तु सरजःपङ्कजम्। निश्चितं श्रेयो निःश्रेयसम्। तत्पुरुष एव। नेह। निःश्रेयान् पुरुषः। पुरुषस्यायुः पुरुषायुषम्। ततो द्विगू। द्व्यायुषम्। त्र्यायुषम्। ततो द्वन्द्वः। ऋग्यजुषम्। ततस्त्रयः कर्मधारयाः। जातोक्षः। महोक्षः। वृद्धोक्षः। शुनः समीपं उपशुनम्। टिलोपाभावः संप्रसारणं च निपात्यते। गोष्ठे श्वा गोष्ठश्वः ॥९४६। **ब्रह्महस्तिभ्यां वर्चसः** ।५।४।७८। अच् स्यात्। ब्रह्मवर्चसम्। हस्तिवर्चसम्। । **पल्यराजभ्यां चेति वक्तव्यम्॥** पल्यवर्चसम्। राजवर्चसम्॥ **९४७। अवसमन्धेभ्यस्तमसः** ।५।४।७९। अवतमसम्। संतमसम्। अन्धयतीत्यन्धं पचाद्यच्। अन्धं तमः अन्धतमसम्॥ **९४८। श्वसोवसीयश्श्रेयसः** ।५।४।८०। वसुशब्दः प्रशस्तवाची ततः ईयसुनि वसीयः। श्वस्शब्द उत्तरपदार्थप्रशंसामाशीर्विषयतामाह। मयूरव्यंसकादित्वात्समासः। श्वोवसीयसम्। श्वःश्रेयसं ते भूयात्।

---

84. **निपातनाट्टिलोपः–** अष्ठीवदिति तान्तत्वेन नान्तत्वाभावान्न स्तद्धित इति नात्र टिलोप इति निपातनादेव टिलोपः। नक्तं दिवं नक्तमिति मान्तमव्ययं रात्रिवाचीसमाहारत्वात्स नपुंसकमिति नपुंसकत्वं। द्वयोरायुषयोस्समाहारो द्व्यायुषं। जातश्चासावुक्षा च जातोक्षः उपशुनमित्यव्ययीभावः।

85. **श्वसो इति–**श्वसः परयोर्वशीयश्श्रेयसो समासान्तोऽच् स्यात् समाहारत्वादेकवचनं सूत्रे वशीयश्श्रेयस इति। प्रशश्यस्य श्रः तत ईयसुनि श्रेयः अतिशयेन प्रशस्ते इत्यर्थे वशीयश्श्रेयश्शब्दौ वर्तेते। वशीयश्च तत् श्वस् च श्वोवशीयसम् । श्रेयश्च त च्छ्वश्च श्वश्रेयसम् विशेषणं विशेष्येणेति विशेषणस्य श्वसः पूर्वनिपाते सिद्धे विशेष्यस्य पूर्वनिपातसिद्ध्यर्थमाह। मयूरव्यंसकादित्वादिति। अत्र विग्रहावस्थायां यदुत्तरपदं श्वस् इति तस्यार्थः प्रशंसैव सा च आशीर्विषय एव आशिषोर्विषयभूतां प्रशंसां श्वसित्यव्ययमभिधत्त इत्यर्थः । आशीर्विषयत्वद्योतनाय ते भूयादित्यनुप्रयोगः। श्रेष्ठप्रशंसा तेऽस्तु इत्यर्थः । श्वस् इत्यस्य अव्ययत्वेन अलिङ्गत्वात्तद्विशेषणभूते श्रेयसि सामान्ये नपुंसकमिति नपुंसकत्वम् । नन्वेवं श्वश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभमिति कथममर इति चेन्न विरोधः। शुभस्य श्रेष्ठप्रशंसात्मकत्वाव्यभिचारात् यदुक्तं गुरुबालप्रबोधिकायां श्वश्शोभनं श्रेयः क्षेमं श्वश्रेयसमिति निपातनादकारान्तत्वमिति च तदुभयमपि अवैयाकरणोक्तिविलसितमेव।

**९४९ । अन्ववतप्ताद्रहसः** ।५ ।४ ।८१ । अनुरहसम् । अवरहसम् । तप्तरहसम् ॥ **९५० । प्रतेरुरसः सप्तमीस्थात्** ।५ ।४ ।८२ । उरसि इति प्रत्युरसम् । विभक्त्यर्थेऽव्ययीभावः ॥ **९५१ । अनुगवमायामे** ।५ ।४ ।८३ । एतन्निपात्यते दीर्घत्वे । अनुगवं यानम् । 'यस्य चायामः ६७०' इति समासः ॥ **९५२ । द्विस्तावा त्रिस्तावा वेदिः** ।५ ।४ ।८४ । अच्प्रत्ययष्टिलोपः समासश्च निपात्यते । यावती प्रकृतौ वेदिस्ततो द्विगुणा त्रिगुणा वाऽश्वमेधादौ तत्रेदं निपातनम् । वेदिरिति किम् । द्विस्तावती त्रिस्तावती रज्जुः ॥ **९५३ । उपसर्गादध्वनः** ।५ ।४ ।८५ । प्रगतोऽध्वानं प्राध्वो रथः ॥ **९५४ । न पूजनात्** ।५ ।४ ।६९ । पूजनार्थात्परेभ्यः समासान्ता न स्युः । सुराजा । अतिराजा ॥ **स्वतिभ्यामेव** ॥ नेह परमराजः । पूजनात्किम् । गामतिक्रान्तोऽतिगवः । 'बहुव्रीहौ सक्थ्यक्ष्णोः-८५२ इत्यतः प्रागेवायं निषेधः । नेह । सुसक्थः । स्वक्षः ॥ **९५५ । किमः क्षेपे** ।५ ।४ ।७० । क्षेपे यः किंशब्दस्ततः परं यत्तदन्तात्समासान्ता न स्युः । कुत्सितो राजा किंराजा । किंसखा । किंगौः । क्षेपे किम् । किंराजः । किंसखः । किंगवः ॥ **९५६ । नञस्तत्पुरुषात्** ।५ ।४ ।७१ । समासान्तो न । अराजा । असखा । तत्पुरुषात्किम् । अधुरं शकटम् ॥

---

श्वश्रेयसमिति निपातनाभावात् मयूरव्यंसकादित्वेन श्वसो विशेष्यस्य पूर्वनिपातवचनात् अतिशायनेऽर्थे ईयसुनो विधानात् वसुश्रयोः प्रशस्तार्थकत्वाच्च। कौमुदीविसंवाद्येवेति। अनेन वशीयसः श्रेयसश्च, श्वः श्वो वशीयः श्वश्रेयसम् इति व्याख्यानमपास्तम्। वशीयश्श्रेयसोश्शुभवाचकत्वाभावादेतद्विग्रहघटकीभूतयोः इति यद्वा श्वः प्रशस्तम् श्रेयः श्वश्रेयसं श्वः प्रशस्तम् वसीयः श्वोवशीयमित्येवास्तु। एवं चेदमरव्याख्यानमपि संगच्छते। अकारान्तत्वनिपातनमिति तु प्रामादिकं न चात्र कौमुदीविरोधः। उत्तरपदार्थस्य श्रेयसः वशीयसश्च प्रशंसां श्वसभिधत्त इत्यर्थात्। श्वस् इत्यस्य विशेषणत्वेऽपि अव्ययत्वात् समासाभावमाशङ्क्य मयूरव्यंसकादिपाठत्वमस्य कल्पितं। अव्ययमिति समासे तु नाव्ययीभावादित्यमादेशस्स्यात्। प्रथमायाममादेशस्येष्टत्वेति एकवचने तदितरविभक्तिष्वनिष्टत्वान्नाव्ययीभावत्वं इति।

86. प्रकृतौ प्रकृतिरिति यज्ञाङ्गं कर्म। द्विस्तावति द्विःतावती इति पदद्वयं समास इति न भ्रमितव्यम्। विधानाभावात्। द्विस्तावा इत्यादौ समासश्च निपात्यत इत्युक्तत्वात्।

87. सुराजा सुः पूजायाम् । अतिराजा अतिरतिक्रमणे च चात्पूजायामिति स्वत्योः पूजानार्थत्वम्। पूजितो राजा सुराजा । अतिराजा च प्रादिसमासः सह सुपेति सुप् समासो वा।

**९५७। पथो विभाषा** ।५।४।७२। नञ्पूर्वात्पथो वा समासान्तः। अपथम्। अपन्थाः। तत्पुरुषादित्येव। अपथो देशः। अपथं वर्तते॥ ॥**इति समासान्तप्रकरणम्**॥

## अलुक्समासप्रकरणम् २४

**९५८। अलुगुत्तरपदे** ।६।३।१। अलुगधिकारः प्रागानङः उत्तरपदाधिकारस्त्वापादसमाप्तेः॥ **९५९। पञ्चम्याः स्तोकादिभ्यः** ।६।३।२। एभ्यः पञ्चम्या अलुक् स्यादुत्तरपदे। स्तोकान्मुक्तः। एवमन्तिकार्थदूरार्थकृच्छ्रेभ्यः। उत्तरपदे किम्। निष्क्रान्तः स्तोकान्निस्तोकः॥ **ब्राह्मणाच्छंसिन उपसंख्यानम्॥** ब्राह्मणे विहितानि शस्त्राणि उपचाराद् ब्राह्मणानि तानि शंसतीति ब्राह्मणाच्छंसी ऋत्विग्विशेषः। द्वितीयार्थे पञ्चम्युपसंख्यानादेव॥ **९६०। ओजःसहोऽम्भस्तमसस्तृतीयायाः** ।६।३।३। ओजसाकृतमित्यादि॥ **अञ्जस उपसंख्यानम्॥** अञ्जसाकृतम्। आर्जवेन कृतमित्यर्थः॥ **पुंसानुजो जनुषान्ध इति च॥** यस्याग्रजः पुमान् स पुंसानुजः। जनुषान्धो जात्यन्धः॥

---

88. पथो विभाषा नञस्तत्पुरुषादिति सूत्रस्य अत्रानुवृत्तिः। पाप्तविभाषेयम्। नयस्तत्पुरुषादित्यनेन समासान्तनिषेधस्य प्राप्तत्वात् अपन्थाः अपथन्नपुंसकमिति नपुंसकत्वं न तत्र कृतसमासान्तग्रहणादिति मूल एव तत्सूत्रे प्रोक्तम्।

**इति समसान्ताः**

89. अलुगुत्तरपदे। अधिकारोऽयम्। पदद्वयस्याप्यधिकारावधिमाह अलुगित्यादिना। आनङृतो द्वन्द्वे इति सूत्रात् प्राक् अलुक्पदाधिकारः व्याख्यानमेव शरण्यमेवंविधनियमे इति बोध्यम्।

90. स्तोकान्मुक्तः। स्तोकान्तिकेति पञ्चमीतत्पुरुषः करणे च स्तोकेति पंचमी। स्तोक ङसि–मुक्त सु–इति स्थिते सुपो धात्विति ङसेस्सोश्च लुकि प्राप्ते, अनेन ङसेरलुक् लुक् न भवति इत्यर्थः। लुगभावे टाङसीत्यात्।सवर्णदीर्घः। यरोऽनुनासिक इत्यनुनासिकः स्तोकान्मुक्त–सु–स्तोकान्मुक्तः–निस्तोकः। निरादयः क्रान्ताद्यर्थे पंचम्या इति प्रादिसमासः। अत्र स्तोकपदमेवोत्तरपदं, न तु तस्योत्तरपदपरकत्त्वमिति नालुक्। सति त्वलुकि निस्स्तोकादिति स्यादिति भावः।

91. ओजः इन्द्रियपाटवम्। सहः मनः पाटवम्। ओजसा कृतमित्यादौ करणे तृतीया। ननु द्रुतार्थकस्य अंजस्शब्दस्य कथं तृतीयान्तत्वमनभिधानादत आह–आर्जवेन कृतमित्यर्थ इति अंजसारयेणेति तृतीयाऽपि कथंचिद्घटत एव प्रकृत्यादिषु पाठात्। पुंसानुजः पुंसेति हेतौ तृतीया। जनुषान्धः "प्रकृत्यादिभ्य उपसंख्यानमि"ति जनुषेति तृतीया ।

**९६१ । मनसः संज्ञायाम्** । ६ ।३ ।४ । मनसागुप्ता ॥ **९६२ । आज्ञायिनि च** । ६ ।३ ।५ । मनस इत्येव । मनसा आज्ञातुं शीलमस्य मनसाज्ञायी ॥ **९६३ । आत्मनश्च** । ६ ।३ ।६ । आत्मनस्तृतीयाया अलुक् स्यात् ॥ **पूरण इति वक्तव्यम्** ॥ पूरणप्रत्ययान्ते उत्तरपदे इत्यर्थः । आत्मनापञ्चमः । जनार्दनस्त्वात्मचतुर्थ एवेति बहुव्रीहिर्बोध्यः । पूरणे किम् । आत्मकृतम् ॥ **९६४ । वैयाकरणाख्यायां चतुर्थ्याः** ।६ ।३ ।७ । आत्मन इत्येव । आत्मनेपदम् । आत्मनेभाषाः । तादर्थ्ये चतुर्थ्येषा । चतुर्थीति योगविभागात्समासः ॥ **९६५ । परस्य च** ।६ ।३ ।८ । परस्मैपदम् । परस्मैभाषाः ॥ **९६६ । हलदन्तात्सप्तम्याः संज्ञायाम्** ।६ ।३ ।९ । हलन्ताददन्ताच्च सप्तम्या अलुक् संज्ञायाम् । त्वचिसारः ॥**९६७ । गवियुधिभ्यां स्थिरः** ।८ ।३ ।९५ । आभ्यां स्थिरस्य सस्य षः स्यात् । गविष्ठिरः । अत्र गवीति वचनादेवालुक् । युधिष्ठिरः । अरण्येतिलकाः । 'संज्ञायाम् ७२१' इति सप्तमीसमासः ॥ हृद्द्युभ्यां च ॥ हृदिस्पृक् । दिविस्पृक् ॥

---

92. मनसा गुप्ता मनसेति करणे तृतीया। कस्याश्चित्संज्ञेयम्।

93. आज्ञायिनि च। आज्ञायिन् शब्दे उत्तरपदे सति तृतीयाया अलुक् स्यात् मनस इत्यर्थः।

94. आत्मचतुर्थः। आत्मा चतुर्था चतुर्विधत्वेन यस्य सः। चतुर्विधस्वरूप इत्यर्थः । आत्मना चतुर्थ इति विग्रहे तु तृतीयाया तिङ् न स्यादिति भावः।

95. आत्मनः परायाश्चतुर्थ्या तिङ् न स्यात्। तेनालुक्समासेन वैयाकरणाख्यायां वाच्यायाम् व्याकरणे भवा वैयाकरणी सा च आख्या च पुंवद्भावः स्त्रियाः पुंवदिति कर्मधारयेति वा वैयाकरणाख्या व्यारणशास्त्रसांकेतिका या संज्ञायां वाच्यायामित्यर्थः।

96. त्वचि सारः त्वचि चर्मणि सारोऽस्यास्तीति विग्रहः । सप्तमी विशेषणे बहुव्रीहाविति सूत्रज्ज्ञादितस्सप्तमीबहुव्रीहिः। वृक्षविशेषस्य संज्ञाहलन्तादिदमुदाहरणं अदन्तात्तु कंठेकालः इति बोध्यम्।

97. गवीति वचनादेव गोशब्दस्य हलदन्तत्वाभावात्तत्परसप्तम्याः हलन्तादिति लुगप्राप्तौ (गविशब्दपरस्य स्थिरस्य इति) गवियुधिभ्यामिति सूत्रनिर्देशादेव अलुक् गवियुधिशब्दाभ्यां परस्येति सूत्रार्थः। स्थिर इति षष्ठ्यर्थे प्रथमा अबलान्तस्य मूर्धन्यः सहेस्साडस्सः–इति सूत्राभ्यां मूर्धन्य इति स इति च अत्रान्वेति पदद्वयम्। मूर्धन्य इत्यस्य फलितार्थकथनं ष इति। युदिष्ठिरः हलन्तत्त्वादलुक्। युध् इतिशब्दः युद्ध्यतेः क्विपि निष्पन्नः युद्ध्यन्ति योधा अत्रेति युध् तस्मिन् युधि युद्धे इत्यर्थः। संज्ञामित्येव हलन्तादिति सूत्रेणैवात्रालुग्विधानात्। संज्ञायां किम्? युधि स्थिरः युद्धे स्थिर इत्यर्थः। हृद्द्युभ्याञ्च असंज्ञार्थमिदम्। संज्ञायां तु हलन्तादित्यनेनैवसिद्धेः।

**९६८। कारनाम्नि च प्राचां हलादौ** ।६।३।१०। प्राचां देशे यत्कारनाम तत्र हलादावुत्तरपदे हलदन्तात्सप्तम्या अलुक्। मुकुटेकार्षापणम्। दृषदिमाषकः। पूर्वेण सिद्धे नियमार्थम्। कारनाम्न्येव, प्राचामेव, हलादावेवेति। कारनाम्नि किम्। अभ्याहितपशुः। कारादन्यस्यैतद्देशस्य नाम। प्राचां किम्। यूथपशुः। हलादौ किम्। अविकटोरणः। हलदन्तात्किम्। नद्यां दोहो नदीदोहः॥ **९६९। मध्याद्गुरौ** ।६।३।११। मध्येगुरुः॥ **अन्ताच्च॥** अन्तेगुरुः॥ **९७०। अमूर्धमस्तकात्स्वाङ्गादकामे** ।६।३।१२। कण्ठेकालः। उरसिलोमा। अमूर्धमस्तकात्किम्। मूर्धशिखः। मस्तकशिखः। अकामे किम्। मुखे कामोऽस्य मुखकामः॥**९७१। बन्धे च विभाषा** ।६।३।१३। हलदन्तात्सप्तम्या अलुक्। हस्तेबन्धः हस्तबन्धः। हलदन्तेति किम्। गुप्तिबन्धः॥

---

98. कारनाम्नि कर एव कारः राज्ञा देयष्षष्ठांशो भागः करः। बलिहस्तांशवः करा इति अमरः इति केचिद्वुरवः। प्राचां देशे यत्क्रेयवाचकं पदं तस्मिन् हलादावुत्तरपदे परतः पूर्वस्माद्धलन्तात्सप्तम्या लुङ् न स्यादित्यर्थः। गुंजाद्वयपरिमितं रौप्यं माषकः। षोडशमाषकपरिमितं रौप्यं कर्षः। तेन पण्यते व्यवह्रियत इति कार्षापणम्। इमावुभौ प्राचां देशे क्रयविक्रयार्हद्रव्यवाचकौ न तदीयवाचकाविति। मकुटे कार्षापणम्। अधिकरणे चेति सप्तमी। सप्तमीति योगविभागात्समासः। एवं दृषदि माषकः। अभ्याहिते विषये पशुः अभ्याहितपशुः। पशुर्यद्यपि क्रेयः तथाऽपि अभ्याहितविषयः पशुर्देय एव न क्रेय इति न पशोः कारनामत्वमत्र। इदमेवाह कारादन्यदिति। किं तदित्यत आह–देयस्य नामेति। यूथे पशुः यूधपशुः " यतश्च निर्धारण" इति सप्तमी। सर्वत्राऽपि देशे अयं क्रेयः न तु केवलप्राग्देश इति नात्र यूधशब्दादलुक्। अविकटे अविसंघाते ऊरणः अविकटोरणः। अवयः मेषाः दोहः क्षीरं लाक्षणीकोऽयं प्रयोगः। गंगायां घोष इतिवत् क्रेयमिदम्।

99. अमूर्धेति असंज्ञर्थमिदं मूर्धमस्तकेति पर्यायग्रहणात्स्वरूपस्यैवेह ग्रहणम्। मूर्धमस्तकशब्दाभ्यां भिन्नः यस्स्वाङ्गवाचिशब्दः तस्मात्सप्तम्या अलुक् उत्तरपदे, न तु कामशब्दे उत्तरपदे परतः कामः प्रीतिः। प्रत्यन्ववपूर्वादिव लोम्नः अज्विधानादुरसि लोमा इत्यत्र न समासान्तोऽच्।

100. हस्ते बन्धः अधिकरणे चेति सप्तमी। सिद्धशुष्कपक्वबन्धैश्चेति सप्तमीतत्पुरुष इति न भ्रमितव्यम्। नेन्सिद्ध बन्धादिषु चेति अलुङ्निषेधात् हस्ते बन्धोस्य हस्तबन्ध इति बहुव्रीहिः। बन्धशब्दे उत्तरपदे परतः हलदन्तात्सप्तम्या अलुक् विभाषा स्यादिति सूत्रार्थः।

**९७२। तत्पुरुषे कृतिबहुलम्** ।६।३।१४। स्तम्बेरमः। कर्णेजपः। क्वचिन्न। कुरुचरः॥ **९७३। प्रावृट्शरत्कालदिवां जे** ।६।३।१५। प्रावृषिजः। शरदिजः। कालेजः। दिविजः। पूर्वस्यायं प्रपञ्चः **९७४। विभाषा वर्षक्षरशरवरात्** ।६।३। १६। एभ्यः सप्तम्या अलुक् जे। वर्षेजः वर्षजः। क्षरेजः। क्षरजः। शरेजः। शरजः। वरेजः। वरजः॥ **९७५। घकालतनेषु कालनाम्नः** ।६।३।१७। सप्तम्या विभाषाऽलुक् स्यात्। घे। पूर्वाह्णेतरे। पूर्वाह्णतरे। पूर्वाह्णेतमे। पूर्वाह्णतमे। काले। पूर्वाह्णेकाले। पूर्वाह्णकाले। तने। पूर्वाह्णेतने। पूर्वाह्णतने॥ **९७६। शयवासवासिष्वकालात्** ।६।३।१८। खेशयः। खशयः। ग्रामेवासः। ग्रामवासः। ग्रामेवासी ग्रामवासी। हलदन्तादित्येव। भूमिशयः॥ **अपोयोनियन्मतुषु**॥ अप्सु योनिरुत्पत्तिर्यस्य सोऽप्सुयोनिः। अप्सु भवोऽप्सव्यः। अप्सुमन्तावाज्यभागौ॥ **९७७। नेन्सिद्धबध्नातिषु च** ।६।३।१९। इन्नन्तादिषु सप्तम्या अलुङ्न। स्थण्डिलशायी। साङ्काश्यसिद्धः। चक्रबन्धः॥ **९ ७८। स्थे च भाषायाम्** ।६।३।२०। सप्तम्या अलुङ्न। समस्थः। भाषायां किम्। कृष्णोस्याखरेष्ठः॥

---

101. तत्पुरुषे–तत्परुषसमासे कृदन्ते उत्तरपदे पूर्वपदात्सप्तम्या अलुक् बहुलं स्यात् संज्ञायामिति। हलदन्तादिति च नात्रान्वेति। अलुक्समासेन योऽभिधीयिते, लुक्यपि स एवाभिधीयत इति संज्ञात्वस्याप्रयोजकत्वात्। अदन्तत्वाभावाद्धलन्तत्वाभवाच्च । कुरुषु धरः कुरुधर इत्यत्रालुगप्राप्तौ सत्यां बहुलग्रहणात् क्वचिन्नेति मूले उक्तत्वात् कर्मणोऽधिकरणत्वविवक्षया सप्तमी कुरुषु इति। तत्पुरुषे किं? आत्मनि रतिरस्य आत्मरतिः।

102. प्रावृडिति जेजशब्दे उत्तरपदे प्रावृडादीनां सप्तम्यां अलुक्।ननु जस्य कृत्त्वात् प्रावृषिज इत्यादीनां तत्पुरुषत्वाव्यभिचाराच्च बहुलग्रहणात् क्वचिन्नित्यमित्यर्थलाभाच्च किमनेन सूत्रेणेत्यत आह– पूर्वस्येति। प्रपञ्चः विस्तारः पूर्वसूत्रे संक्षेपेणोक्तस्य विस्तृतत्वेन कथनमिदमित्यर्थः।

103. घ। तरप्तमपौ घ इति तरप्तमपोर्ग्रहणं घेन।

104. अकालात्किं पूर्वाह्णशयः। कालनाम्नः परस्यास्सप्तम्या अलुङ् नेत्यर्थः। न तु कालादिति प्रसज्यप्रतिषेधः।

105. अप्सुमन्तावाज्यभागौ मतौ । अप्शब्दात्सप्तम्या अलुग्विधानादेव सप्तम्यन्तादपि मतुप्।

106. बन्धादिषु। आदिना सिद्धशुष्कपक्वबन्धैरिति सूत्रस्थशुष्कपक्वयोर्ग्रहणम्।

107. कृष्णोस्या खरे ष्ठः इण्कोरिति सस्य षत्वम्। समस्थ इत्यत्र तु अकारस्य इण्त्वाभावान्न षत्वम्। भाषायाम् लोके।

108. तत्पूर्वोत्तरपदग्रहणं विद्यायोनिसंबंधपूर्वकोत्तरपदे परत इति तदर्थः। तत्पूर्वोत्तरपदे

**९७९। षष्ठ्या आक्रोशे** ।६।३।२१। चौरस्य कुलम्। आक्रोशे किम्। ब्राह्मणकुलम्॥ **वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु**॥ वाचोयुक्तिः। दिशोदण्डः। पश्यतोहरः॥ **आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति च॥** अमुष्यापत्यं आमुष्यायणः। नडादित्वात्फक्। अमुष्य पुत्रस्य भाव आमुष्यपुत्रिका। मनोज्ञादित्वाद्वुञ्। एवमामुष्यकुलिका॥ **देवानांप्रिय इति च मूर्खे॥** अन्यत्र देवप्रियः॥ **शेषपुच्छलाङ्गूलेषु शुनः**॥ शुनःशेपः। शुनःपुच्छः। शुनोलाङ्गूलः॥ **दिवश्च दासे॥** दिवोदासः॥ **९८०। पुत्रेऽन्यतरस्याम्** ।६।३।२२। षष्ठयाः पुत्रे परेऽलुग्वा निन्दायाम्। दास्याःपुत्रःदासीपुत्रः। निन्दायां किम्। ब्राह्मणीपुत्रः॥ **९८१। ऋतो विद्यायोनिसंबन्धेभ्यः** ।६।३।२३। विद्यासंबन्धयोनिसंबन्धवाचिन ऋदन्तात्षष्ठ्या अलुक्। होतुरन्तेवासी। होतुःपुत्रः। पितुरन्तेवासी। पितुःपुत्रः॥ **विद्यायोनिसंबन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणम्॥** नेह होतृधनम्॥ **९८२। विभाषा स्वसृपत्योः** ।६।३।२४। ऋदन्तात्षष्ठ्या अलुग् वा स्वसृपत्योः परयोः॥ **९८३। मातुःपितुर्भ्यामन्यतरस्याम्** ।८।३।८५। आभ्यां स्वसुःसस्य षो वा स्यात् समासे। मातुःस्वसा। मातुःष्वसा। पितुःस्वसा। पितुःष्वसा। लुक्पक्षे तु॥ **९८४। मातृपितृभ्यां स्वसा** ।८।३।८४। आभ्यां परस्य स्वसुः सस्य षः स्यात्समासे। मातृष्वसा। पितृष्वसा। असमासे तु मातुः स्वसा। पितुः स्वसा॥ ॥ **इत्यलुक्समासप्रकरणम्**॥

---

इति। उत्तरपदे इत्यस्य तत्पूर्व इति विशेषणं कर्तव्यमित्यर्थः। ऋतो विद्यायोनिसंबधेभ्यस्तत्पूर्वे इति सूत्रयितव्यमिति यावत्। होतृधनम्। होतुर्धनमिति षष्ठी होतरि विद्यासंबंधो योनिसंबंधो वा यद्यप्यस्ति, तथाऽपि धनस्य तत्संबंधपूर्वकत्वाभावान्नालुक्। ननु विद्यायोनिसंबन्धेभ्य इत्यनेनैव विद्याद्वारा योनिद्वारा च पदार्थद्वयनिरूपित एव संबंधस्स्यात्। सम्बन्धस्य संयोगात्मकत्वात् संयोगस्य द्विनिष्ठत्वादिति। तेन पूर्वोत्तरपदार्थयोर्यत्र विद्यायोनिसंबन्धस्तत्रैव स्यादलुक् न त्वन्यत्रेति किमनेन वार्तिकेन इति चेत्सत्यम्। तथापि शब्दशक्तिस्वाभाव्यादेव यस्मिन्पदार्थे विद्यया योनिना च संबंधोऽभिधीयते स शब्दो विद्यासंबंधवाची योनिसंबंधवाची च (विद्यातद्वतोःयोनितद्वतोश्च संबंधः न तु विद्यायोनिद्वारा अन्ययोर्द्वयोरिति) यथा होता अविदुषो न होतृत्वमिति विद्वानयं तेन विद्यासंबंधो होतुरस्ति। पिता अयोनिमतः पितृत्वं नास्तीति पितुर्योनिना संबंधः। (योनिर्बीजं शुक्लं शोणितं वा) इति वार्तिककाराशयः।

109. स्वसृपत्योः । पत्यौ परत उदाहरणं मातुः पतिरिति बोध्यम्।

110. मातुः पितृभ्याम् मातुः पितुः इत्यनयोरनुकरणशब्दाविमौ। मातुश्च पितुश्च मातापितरौ। ताभ्यां मातृपितृभ्यामित्यनेनैव षत्वे सिद्धे विकल्पार्थं पृथक् सूत्रम्। स च विकल्पः अलुक्समास एव। समासे तु नित्यं षः। वाक्ये तु न इति व्यवस्थार्थं सूत्रद्वयम्। **इत्यलुक् समासः।**

# समासाश्रयविधिप्रकरणम् २५

**९८५। घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः** ।६।३।४३। भाषितपुंस्काद्यो ङी तदन्तस्यानेकाचो हस्वः स्यात् घरूपकल्पप्रत्ययेषु परेषु चेलडादिषु चोत्तरपदेषु। ब्राह्मणितरा। ब्राह्मणितमा। ब्राह्मणिरूपा। ब्राह्मणिकल्पा। ब्राह्मणिचेली। ब्राह्मणिब्रुवा। ब्राह्मणिगोत्रेत्यादि। ब्रूञः पचाद्यचि वच्यादेशगुणयोरभावो निपात्यते। चेलडादीनि वृत्तिविषये कुत्सनवाचीनि तैः 'कुत्सितानि कुत्सनैः ७३२' इति समासः। ङ्यः किम्। दत्तादरा। भाषितपुंस्कात्किम्। आमलकीतरा। कुवलीतरा॥

---

111. घरूप–ईषदसमाप्तौ कल्पप्। हता च सा ब्रह्मणी च ब्राह्मणिहता। कुत्सिवानीति ब्राह्मण्याः पूर्वनिपातः। पट्वितरेत्यादाविव ब्राह्मणीतरेत्यादावपि तसिलादिष्विति पुंवद्भावो न शंक्यः पुंवद्भावाद्ध्रस्वस्य परत्वात्। जातेश्चेति तन्निषेधाच्च। अत एव ब्राह्मणीति जातिवाचन इह ग्रहणमुदाहरणेषु। अनेकाचः किं ? न च स्त्रीतरा स्त्रितरा इति एकाचो विकल्पं वक्ष्यतीति वाच्यम्। स्त्रीशब्दस्य अभाषितपुंस्कत्वान्न तत्। प्रत्युदाहरणम्। किन्तु अस्येयं स्त्री ई अशब्दात्तस्येदमित्यणि अ अ इति स्थिते यस्येति चेत्यकारलोपः। अ टिड्ढाणिति ङीप्। अ ई यस्येति चेत्यकारलोपः। ई न च लक्ष्ये लक्षणं न्यायविरोधश्शंक्यः। प्रकृत्यकारस्य पूर्वं लोपः प्रत्ययाकारस्नधुनेति लक्ष्यभेदात् ई तरा अस्सायं अहः इति पुंस्त्वे इ इति स्त्रीत्वे च असंबंधित्वं प्रवृत्तिनिमित्तमेकमेवेति भाषितपुंस्कोयम्। न च ई कारेण पुमान्न भाष्यत इति वाच्यम्। ईकारस्य ङीप्त्वेन ङीपि परतः यः अः इति शब्दः तस्य भाषितपुंस्कत्वात्। वस्तुतस्तु परिनिष्ठिते ईशब्दे पुंवाचकशब्दसमानार्थबोधकत्वे सत्यपि, पुंवाचकशब्दसमानानुपूर्वीकत्वाभावान्न भाषितपुंस्कत्वमिति अनेकाच इति सुत्यजमेवेति गुरवः । ङ्यन्तत्वं तु व्यपदेशिवद्भावेन अनेकाच इत्यस्य बह्वच्कस्य इति त्वर्थो न वाच्यः । पट्वीतरा इत्यत्र द्व्यच्के पट्वीशब्दे ह्रस्वाप्रवृत्तेः। किन्तु एकाच्कभिन्नस्येत्यर्थः। ङ्यइति निरनुबन्धकस्य षष्ठ्यंतस्य ङीशब्दस्य ग्रहणेन ङीन् ङीप् ङ्गीषामविशेषेण ग्रहणम्। कौमुद्यां ङीप् इत्युक्तिस्तु उपलक्षणत्वेनेति मन्तव्यम्। अन्यथा शार्ङ्गरवादित्वादीङ्गन्ते ब्राह्मणीशब्दे ह्रस्वो न प्रवर्तेत। वोतोगुणवचनादिति ङीपन्ते पट्वीशब्दे च न प्रवर्तेत। इष्टापत्तौ पट्वीतरा इति तसिलादिसूत्रव्याख्याने ब्राह्मणीतरेत्यत्र च उदाहर्तुः स्वस्य उक्तिव्याघातः स्यात्। ह्रस्वः किं पुंवद्भावे तु ब्राह्मणतरा इति स्यात्।

**९८६। नद्याः शेषस्यान्यतरस्याम्** ।६।३।४४। अङ्यन्तनद्या ङ्यन्तस्यैकाचश्च घादिषु ह्रस्वो वा स्यात्। ब्रह्मबन्धुतरा। ब्रह्मबन्धूतरा। स्त्रितरा। स्त्रीतरा॥ **कृन्नद्या न**॥ लक्ष्मीतरा॥ **९८७। उगितश्च** ।६।३।४५। उगितः परा या नदी तदन्तस्य घादिषु ह्रस्वो वा स्यात्। विदुषितरा। ह्रस्वा भावपक्षे तु 'तसिलादिषु–८३६' इति पुंवत्। विद्वत्तरा। वृत्त्यादिषु विदुषीतरेत्यप्युदाहृतं तन्निर्मूलम्॥ **९८८। हृदयस्य हृल्लेखयदण्लासेषु** ।६।३।५०। हृदयं लिखतीति हृल्लेखः। हृदयस्य प्रियं हृद्यम्। हृदयस्येदं हार्दम्। हृल्लासः। लेखेत्यणन्तस्य ग्रहणम्। घञि तु हृदयलेखः। लेखग्रहणमेव ज्ञापकम् (प) **उत्तरपदाधिकारे तदन्तविधिर्नास्तीति॥ ९८९। वा शोकष्यञ्रोगेषु** ।६।३।५१। हृच्छोकः। हृदयशोकः। सौहार्द्यम्। सौहृदय्यम्। हृद्रोगः। हृदयरोगः। हृदयशब्दपर्यायो हृच्छब्दोऽप्यस्ति। तेन सिद्धे प्रपञ्चार्थमिदम्॥

---

112. नद्याश्शेषस्येति । अत्र अनेकाच इति पदं विना प्राक्सूत्रं सर्वमनुवर्तते। शेषस्येति पदस्यावृत्तिः । उक्तातिरिक्तश्शेषः। "यूस्त्र्याख्यौ नदी इति ईदन्तोदन्तयोर्नदीत्वं वर्तते। तत्र ईदन्तनद्या ह्रस्व उक्तः। ऊदन्तनद्यास्तु ह्रस्वो वक्तव्यत्वेन शिष्यत इति शेषस्य नद्या इत्यनेन अङ्यन्तनद्या इत्यर्थो लब्धः। तथा ङ्यन्तस्य पदस्य अनेकाच्कत्वमेकाच्कत्वं चेति द्वैविध्यमस्ति। तत्र अनेकाच्कस्य ङ्यन्तस्य ह्रस्व उक्तः । एकाच्कस्य तु शिष्यत इति शेषस्य ङ्यन्तस्येत्यनेन ङ्यन्तस्यैकाच इत्यर्थो लब्धः । शेषस्येति पदमावृत्त्या नद्या इत्यनेन ङ्य इत्यनेन च संबध्यत इति यावत्। ब्रह्मबन्धुशब्दात् "ऊङुत" इत्यूङि ब्रह्मबंधू इति ऊदन्तत्वेन नदीसंज्ञकोऽयम्। स्त्रीतरास्त्यायतेर्ड्रट्, टित्वात् ङीप् स्त्री । ङ्यन्त एकाच् अयं शब्दः लक्ष्मीतरा । लक्ष्मेर्मुट् चेत्यौणादिकईप्रत्ययान्तो लक्ष्मीशब्दः । अयं हि न स्त्रीप्रत्ययेकारान्तः। किन्तु उणादीनां कृत्त्वात्कृदीकारान्त इति नात्र ह्रस्वः। वार्तिकार्थस्तु कृद्यानदी तस्या नेति ईदूदन्तयोश्शब्दयोर्यदि कृदन्तत्वं तर्हि तयोर्न ह्रस्व इति यावत्। ईदूतोः ह्रस्व संबन्धित्वेनेति भावः।

113. उगितः पराया नदी ईदूदन्तयोः कृतापि नदीसंज्ञा ईदूतोरेव विश्राम्यतीत्युक्तत्वात्। उगितः परत्वं नद्या न विरुध्यत इति बोध्यम्। तन्निर्मूलम्। तसिलादिष्विति पुम्वद्भावस्य अवैकल्पिकत्वेन ह्रस्वाभावपक्षे दुर्वारत्वादिति भावः।

114. ज्ञापकम् । अणिति प्रत्ययग्रहणेन अणन्तस्यापि यदि ग्रहणं तर्हि लेखेत्यणन्तस्य पृथग्ग्रहणं व्यर्थं स्यादिति नाणंतग्रहणमिति ज्ञापयित्वा ज्ञापकस्य सामान्यापेक्षत्वेन उत्तरपदाधिकारे तदन्तविध्यभावमेव ज्ञापयतीति भावः।

115. वा शोकेति। प्राक्सूत्रात् हृदयस्य हृदित्यत्रानुवर्तते। ष्यञि सुहृत् य इति स्थिते उभयपदवृद्धौ सौ हार् द् य– सौहार्द्यम्। सुहृदयशब्दात् ष्यञि हृदादेशाभावे तु सुहृदय

**९९०। पादस्य पदाज्यातिगोपहतेषु** ।६।३।५२। एषूत्तरपदेषु पादस्य पद इत्यदन्त आदेशः स्यात्। पादाभ्यामजतीति पदाजिः। पदातिः। 'अज्यतिभ्यां पादे च उ० ५५०' इतीण् प्रत्ययः। अजेर्व्यभावो निपातनात्। पदगः। पदोपहतः॥ **९९१। पद्यत्यतदर्थे** ।६।३।५३। पादस्य पत्स्यादतदर्थे यति परे। पादौ विध्यन्ति पद्याः शर्कराः। अतदर्थे किम्। पादार्थमुदकं पाद्यम्। 'पादार्घाभ्यां च २०९३' इति यत्॥ **इके चरतावुपसंख्यानम्**॥ पादाभ्यां चरति पदिकः। पर्पादित्वात् ष्ठन्॥

---

य इति स्थिते, यस्येति चेत्यवर्णलोपः । यस्य तद्धितत्वात् यचिभमिति यादिप्रत्यये परे पूर्वस्य भत्वाच्च लोपेऽत्र्योर्वलीति पश्चात् वलि लोपः । सुहृदय हृद्भगेति हृदादेश एव। उभयपदवृद्धिर्नात्रेति तद्धितेष्वचामादेरित्यादिवृद्धिः। सौ हृदयम् । ननु हृदयशब्दपर्यायो हृच्छब्दोऽप्यस्तीति रूपद्वयसिद्धिर्भवत्येवेति किमाभ्यां सूत्राभ्यामित्यत आह। प्रपञ्चार्थमिति विस्तरेण बोधनार्थमित्यर्थः।

116. पादस्येति। पद-आज्यातिगोपहतेष्विति च्छेदः। लुप्तप्रथमाकं पदं पदेति। पदः इत्यर्थः। पच्छब्दात् षष्ठ्यां पद इति स्यादिति तद्भ्रमवारणाय अदन्त इति। आजिश्च आतिश्च गश्च उपहतश्च आज्यातिगोपहताः । तेषु परेषु अजगतिक्षेपणयोः अत-सातत्यगमने इति धातुपाठः। ताभ्यां ञप्रत्यये कृते अत् इ, अत्-इ-इति स्थिते-णित्वाद्वृद्धौ आजि-आति-इति रूपे। ननु पादे उपपदे सत्येव अज्यतिभ्यां णिर्विधीयते इति कथम् । केवलयोस्सूत्रे ण्यन्तत्वे नोपनिबन्धनमिति चेत्, ण्यन्ततयोरनुकरणशब्दाविमाविति न दोषः। यद्वा पादास्याज्यात्योरिति पादोपपदकत्वेन बादिनील्यान्ततामाश्रित्य व्यवहारः। न च आज्यतिभ्यामित्येव सूत्र्यतामिति वाच्यम्। तथा सति इक्स्तिपाविति इका धातुनिर्देशेन धात्वोरेव ग्रहणं स्यात् । तेन अजतेरततेर्वा (अन्येभ्योऽपि दृश्यन्ते) क्विपि कृते अज्-अत्-इति रूपे ताभ्यां सह पादशब्दस्य समासे पादाज् पादात् इति भवितव्ये तत्रापि पदादेशे पदाज् पदात् इति रूपापत्तिस्स्यादिति। पादाज् कुत्वं न अजिव्रज्योश्चेति निषेधात् । आज्यात्योर्यद्यपि पदेत्यदन्तादेशो व्यर्थः। पद् इति हलन्तादेशेनैव रूपसिद्धेः । तथाऽपि गोपहतयोरदन्तादेशस्यैवावश्यकत्वम् । पदपर्यायपच्छब्दस्य समासे तु पद्गः पदुपहत इत्यपि स्यादिति बोध्यम्।

117. पद्यतीति। न चात्र पादपर्यायपच्छब्देन सिद्धे सूत्रस्य प्रपञ्चार्थकत्वमिति शंक्यम्। पदौ विद्यन्तीति विग्रहे पद्या इति यद्यपि भवेत्तथाऽपि पादौ विद्यन्तीति विग्रहेऽपि पाद्या इति माभूत्। पद्या इत्येव भवतु, इत्येतदर्थं सूत्रस्य आवश्यकत्वात् पाद्यम्। पद्यमिति तु न भवति। पच्छब्दाद्यत्प्रत्ययस्याविधानात्। (पादार्घाभ्यामिति पादशब्दाद्धि यद्विधीयते) न च पादार्थकादपि यत्स्यादिति वाच्यम्। पर्यायपदानामग्रहणात्तत्र। अन्यथा चरण्यमित्यपि

**९९२। हिमकाषिहतिषु च** ।६।३।५४। पद्धिमम्। पत्काषी। पद्धतिः॥ **९९३। ऋचः शे** ।६।३।५५। ऋचः पादस्य पत्स्याच्छे परे। गायत्रीं पच्छः शंसति। पादंपादमित्यर्थः। ऋचः किम्। पादशः कार्षापणं ददाति॥ **९९४। वा घोषमिश्रशब्देषु** ।६।३।५६। पादस्य पत्। पद्घोषः। पादघोषः। पन्मिश्रः। पादमिश्रः। पच्छब्दः। पादशब्दः॥ **निष्के चेति वाच्यम्**॥ पन्निष्कः। पादनिष्कः॥ **९९५। उदकस्योदः संज्ञायाम्** ।६।३।५७। उदमेघः॥ **उत्तरपदस्य चेति वक्तव्यम्**॥ क्षीरोदः॥ **९९६। पेषंवासवाहनधिषु च** ।६।३।५८। उदपेषं पिनष्टि। उदवासः। उदवाहनः। उदधिर्घटः। समुद्रे तु पूर्वेण सिद्धम्॥ **९९७। एकहलादौ पूरयितव्येऽन्यतरस्याम्** ।६।३।५९। उदकुम्भः। उदककुम्भः। एकेति किम्। उदकस्थाली। पूरयितव्येति किम्। उदकपर्वतः॥

---

भवेत्। इके चरतौ चरत्यर्थके इके परतः पादस्य पदादेश उपसंख्यातव्य इत्यर्थः। वार्तिकारम्भफलं तु पादिक इति माभूदिति ष्ठन्-षकारनकारयोरित्वे नलोपे तस्येकादेशः।

118. हिमेति पादहिममित्यादीनि रूपाणि माभूवन्निति सूत्रविधानफलम्।

119. ऋचः शे। ऋचो मन्त्रस्य यः पादः चतुर्थांशरूपं चरणं तद्वाचिनः पादशब्दस्य पत्स्यात्। शशिपादशब्दपर्यायः पच्छब्दः अघ्र्यर्धबोधक एव नांशार्थक इति नात्र पच्छब्देनान्यथासिद्धिश्शंक्यः पच्छः।

120. वा घेषेति चतुर्थांशवाचिन एकपादस्येह ग्रहणम्। पद्घोषः। संपूर्णघोषस्य तुरीयांशोऽयं घोष इत्यर्थः। पादो घोष इति कर्मधारयः। पादेन मिश्रः पन्मिश्र इति तृतीयातत्पुरुषः। पूर्वसदृशेति सूत्रात् अप्रधाने तृतीया। विनापि सहयोगं वृद्धो यूनेति ज्ञापकात्। पादश्शब्दः पादशब्द इति कर्मधारयः। शब्दस्य तुरीयांश इत्यर्थः। एवमेव पन्निष्कः।

121. उदकस्येति उत्तरपदाधिकारात्। उत्तरपदे परतः उदकस्य उदादेशस्स्यात्। समासेन संज्ञायां गम्यमानायामित्यर्थः। उदरस्य मेघः। उदकयुक्तो। मेघ इति वा विग्रहः उत्तरपदभूतस्याप्युदकशब्दस्य उदादेशो वक्तव्यः संज्ञायामिति वार्तिकार्थः। क्षीरोदः क्षीरं पयः उदकमुदकस्थानीयं यस्मिन् स इति विग्रहः।

122. पेषमिति असंज्ञार्थमिदं सूत्रं उदपेषं पिनष्टीत्यर्थः। उदकस्य वासमुदवासम्। उदकस्य वाहनः उदवाहनः घटः। उदवासादीनां त्रयाणामपि घटोर्थः मेघेपि भवति। ननु उदधिरिति कथं समुद्रपर्यायत्वमत आह। पूर्वेण सिद्धमिति संज्ञत्वात्पूर्वसूत्रेणसिद्धमित्यर्थः।

123. एकहलादौ। असंयुक्तहलाद्यवयवके यस्य पदस्य आद्यवयवो हल् हलन्तरेण संयुक्तो न भवति तादृशे इत्यर्थः। हलोनन्तरास्संयोग इति लक्षितस्संयोगः यत्पदस्य

**९९८ । मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च** ।६ ।३ ।६० । उदमन्थः । उदकमन्थः । उदौदनः । उदकौदनः ॥ **९९९ । इको ह्रस्वोऽङ्यो गालवस्य** ।६ ।३ । ६१ । इगन्तस्याङ्यन्तस्य ह्रस्वो वा स्यादुत्तरपदे । ग्रामणिपुत्रः । ग्रामणीपुत्रः । इकः किम् । रमापतिः । अङ्य इति किम् । गौरीपतिः । गालवग्रहणं पूजार्थम् । अन्यतरस्यामित्यनुवृत्तेः ॥ **इयङुवङ्भाविनामव्ययानां च नेति वाच्यम्** । श्रीमदः भ्रूभङ्गः शुक्लीभावः ॥ **अभ्रुकुंसादीनामिति वक्तव्यम्** । भ्रुकुंसः । भ्रुकुटिः । भ्रूकुंसः । भ्रूकुटिः अकारोऽनेन विधीयत इति व्याख्यान्तरम् भ्रकुंसः । भ्रकुटिः । भ्रुवा कुंसो भाषणं शोभा वा यस्य सः स्त्रीवेषधारी नर्तकः । भ्रुवः कुटिः कौटिल्यम् ॥ **१००० एकतद्धिते च** ६ ।३ ।६२ । एकशब्दस्य ह्रस्वः स्यात्तद्धिते उत्तरपदे च । एकस्या आगतं एकरूप्यम् । एकक्षीरम् ॥

---

पूर्वावयवो न भवति तस्मिन्निति यावत्। पूरयितव्ये (अर्थादुदकेन) जलादिना पूरयितुं योग्ये सरंध्रे इति यावत्। घटादाविति भावः। तद्वाचके पदे परतः उदकस्य उदो वा स्यात् उदकस्य कुंभ इति विग्रहः। कुम्भशब्दः एकहलादिः। आदिहलः ककारस्य उकारेणाचः संबंधः न तु हलन्तरेणेति। स्थालीशब्दस्तु आदिहलस्सस्य थकारेण हला संयोगोऽस्तीति नैकहलादिः।

124. मन्थौदनेति अपूरयितव्यानां मंथादीनां योगे उदादेशाप्राप्ताविदम्। मन्थौदनसक्तुषु तृतीयातत्पुरुषः। बिन्दादिषु षष्ठी वीवथस्तृणविशेषः।

125. इको ह्रस्व इति। अत्र स्त्रीवाचकस्येति न । ग्रामणीशब्दस्य पुंस्त्वेऽपि अत एव ह्रस्वः पुत्रशब्दे उत्तरपदे ग्रामणिपुत्र इति। शुक्लीभावः अशुक्लस्य भावो भवनं शुक्लीभावः (शुक्लत्वमित्यर्थः) शुक्लीभवनमित्यर्थः च्व्यन्तस्याव्ययत्वात् शुक्ली इत्यव्ययम् अभ्रुकुंसादीनाम्। भ्रुकुंसादीनामियञोवर्जिति वार्तिककृतह्रस्वनिषेधो नेत्यर्थः। भ्रुकुंसादीनामिकोऽकारस्यादुत्तरपदे इति चान्योऽर्थः कुंस इत्युत्तरपदे भ्रू इतीगन्तस्य अकारः। अलोन्त्यस्येत्यंत्यस्योकारस्य भ्रुकुंसः।

126. एकतद्धिते च एक इति च्छेदः। षष्ठ्यास्सौत्रः लुक् तद्धिते परतः चादधिकृते उत्तरपदे परतः एकरूप्यमिति तद्धिते एकस्याः क्षीरमेकक्षीरमिति उत्तरपदे च उदाहरणम् सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति भाष्यकारेष्टचा गतार्थमिदं सूत्रमिति मूल एव प्रतिपादितं प्राक्। पुंवद्भावे कृत्वे ह्रस्वे कृते वा एकरूप्यमित्यादिरूपेषु विशेषाभावात् कृत्तद्धितसमासेति तद्धितसमासयोर्वृत्तित्वात्। एकशब्दस्य सर्वनामत्वाच्च भाष्यकारेष्टचा अत्र समन्वयो लक्ष्ये लक्षणभूताया इति।

**१००१ ङ्यापोः संज्ञाछन्दसोर्बहुलम्** ६।३।६३। रेवतिपुत्रः। अजक्षीरम्॥ **१००२ त्वे च** ६।३।६४। त्वप्रत्यये ङ्यापोर्वा ह्रस्वः। अजत्वम्। अजात्वम्। रोहिणित्वम्। रोहिणीत्वम्॥ पूर्वपदस्य संप्रसारणं स्यात्पुत्रपत्योरुत्तरपदयोस्तत्पुरुषे॥ **१००३। ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे।** ६।१।१३। ष्यङन्तस्य पूर्वपदस्य संप्रसारणं स्यात्पुत्रपत्योरुत्तरपदयोस्तत्पुरुषे॥

---

127. ङ्यापोः अभाषितपुंस्कत्वेऽपि स्त्रिया ह्रस्वार्थमत्र ङीग्रहणं। घादिव्यतिरिक्ते उत्तरपदे परतो ह्रस्वार्थं च। ङ्यन्तस्य अजन्तस्य च ह्रस्वो बहुलं स्यात् संज्ञायां गम्यमानायां छंदसि च । उत्तरपदे परतः संज्ञावाचकश्च ङ्याबन्त एव न तु समासः रेवत्याः पुत्रः रेवतिपुत्रः रेवतीति बलरामभार्यायाः संज्ञा ङ्यन्तश्च। इको ह्रस्व इत्यनेन वैकल्पिके ह्रस्वे जाते नित्यार्थं बहुलग्रहणं। इदमेव मनसि कृत्वा रेवतीपुत्र इति रूपान्तरं न दर्शितं कौमुदीकारेण छन्दसि। अजक्षीरं अजायाः क्षीरमिति विग्रहः। अजा इति न संज्ञा किन्तु जातिवाचकशब्दः। अजा इति कस्याश्चित्संज्ञेत्यभ्युपगमेत् आपसंज्ञायामिदमुदाहरणं स्यात् ।

128. त्वे च अत्र संज्ञाछंदसोरिति निवृत्तम् योगविभागसामर्थ्यादिति यद्युच्येत तर्हि रोहिण्या भावो रोहितत्वमिति न स्यात्। (वर्णादनुदात्तादिति रोहिता रोहिणी इति रुपद्वयसिद्धेः) त्वतलोर्गुणवचनस्येति पुंवद्भावात्त्वे चेति ह्रस्वस्य पदत्वात्। तस्मात् संज्ञाछंदसोरेव ङ्यापोस्त्वे ह्रस्व इति वक्तव्यम्। उत्तरपदे परतः त्वप्रत्यये परतश्चेति उक्तिद्वयलाभाय योगविभागः एकसूत्रत्वात् त्वग्रहणमुत्तरपदाधिकारमत्र बाधेतेति। वस्तुतस्तु योगविभगो व्यर्थः। त्वे चेति चकारेण उत्तरपदानुकर्षणेन उत्तरपदाधिकारबाधासम्भवात्। रोहिणीत्वम्। ह्रस्वाभावपक्षे न त्वतलोरिति पुंवद्भावः। संज्ञात्वेन रोहिणीशब्दस्य गुणवचनत्वाभावात्। उत्तरपदे परतः त्वप्रत्यये परतश्च ङ्यापो ह्रस्व इत्येतदर्थलाभाय चकारः। वस्तुतस्तु चो न कर्तव्यः। विधानसामर्थ्यादेव तादृशार्थलाभात् इति पूर्वपक्षे व्याख्यानम्। उत्तरपक्षस्तु संज्ञाच्छंदसोरिति निवृत्तमित्येव। योगविभागसामर्थ्यात् उदाहृतरोहिणीशब्दस्तु संज्ञावाचक एव।तेन त्वतलोरिति न पुंवद्भावो ह्रस्वाभावपक्षे अत एव चतुर्दशत्वम्। कृतवान् कुतस्स्वयमिति श्रीहर्षप्रयोगः संगच्छते। चतुर्दशशब्दो हि संख्यावाचको न तु गुणवाचकः। नेष्टं पुरोद्वारवतीत्वमासीदिति माघप्रयोगः। पृथिव्या गंधवत्त्वं लक्षणमिति तर्कप्रयोगोप्यत एव निर्बाधः। ह्रस्वस्य वैकिल्पिकत्वात्। त्वतलोरिति तु नात्र पुंवद्भावः। प्रसिद्धगुणश्चैव त्वततलोरिति सूत्रे परिग्रहात् जातिवाचकस्याजाशब्दस्य असंज्ञात्वेति अजत्वमिति ह्रस्वप्रवृत्तिरप्यत्र प्रबलो हेतुः।

**१००४ संप्रसारणस्य** ६।३।१३९। संप्रसारणस्य दीर्घः स्यादुत्तरपदे कौमुदगन्ध्यायाः पुत्रः कौमुदगन्धीपुत्रः ।कौमुदगन्धीपतिः। व्यवस्थितविभाषया ह्रस्वो न (प) **स्त्रीप्रत्यये चानुपसर्जनेन इति** तदादिनियमप्रतिषेधात् । परमकारीषगन्धीपुत्रः ।उपसर्जने तु तदादिनियमान्नेह। अतिकारीषगन्ध्यापुत्रः ॥ **१००५ बन्धुनि बहुव्रीहौ** ६।१।१४ बन्धुशब्दे उत्तरपदे ष्यङः संपरसारणं स्याद्बहुव्रीहौ ।कारीषगन्थ्या बन्धुरस्येति कारीषगन्धीबन्धुः। बहुव्रीहाविति किम् । कारीषगन्ध्यायाः बन्धुः कारीषगन्ध्याबन्धुः। क्लीबनिर्देशस्तु शब्दस्वरूपापोक्षय। **मातज्मातृकमातृषु वा॥** कारीषगन्धीमातः। कारीषगन्धीमातृकः । कारीषगन्ध्यामातृकः। कारीषगन्धीमाता। कारीषगन्ध्यामातः। अस्मादेव निपातनान्मातृशब्दस्य मातजादेशः 'नद्यृतश्च ८३३' इति कब्विकल्पश्च। बहुव्रीहावेवेदम्। नेह कारीषगन्ध्याया माता कारीषगन्ध्यामाता। चित्त्वसामर्थ्याचित्स्वरो बहुव्रीहिस्वरं बाधते॥

---

129. कौमुदगंध्यापुत्र इति स्थिते इग्यणस्संप्रसारणमिति यस्य स्थाने संप्रसारणमिकारः कौमुदगन्ध् इ आ पुत्र संप्रसारणाच्चेति पूर्वरूपं कौमुदगन्धिपुत्र दीर्घः कौमुदगंधीपुत्रः व्यवस्थितविभाषया इक इति सूत्राद्यो ह्रस्वविकल्पः तरय व्यवस्थितत्वेन प्रयोगानुसारेण ज्ञेयः न सार्वत्रिक इत्यर्थः। ष्यङः स्त्रीप्रत्ययत्वादनुपसर्जनादित्यधिकारेण अनुपसर्जनं यत् ष्यङन्तन्तस्यैव पूर्वपदस्य संप्रसारणमित्यर्थः। तेन उपसर्जनस्त्रीप्रत्ययान्तस्य नेति फलितम्। इदमेवाह स्त्रीप्रत्यय इत्यादिना। अनुपसर्जने स्त्रीप्रत्यये न तदादिनियमो नास्तीत्यर्थः। परमा च सा कारीषगंध्या च इति कर्मधारयः। परमेति विशेणम्। ष्यङन्तन्तु विशेष्यमेवेति नास्याप्राधान्यलक्षणं विशेषणत्वरूपं वोपसर्जनत्वम्। कारीषगन्ध्यामतिक्रान्ता अतिकारीषगंन्ध्या इति प्रादिसमासः। अत्र अतिक्रमणकर्मभूतत्वेन ष्यङन्तस्योपसर्जनत्वम्। अतिक्रमणकर्त्री तु अनुपसर्जना काचित्।

130. बन्धुरस्येति स्त्रीस्त्वेपि अमनुष्यजातित्वान्नोङ्। अगुणवचनत्वान्न ङीष् अदन्तत्वाभावान्न टाप्। शिशुरितिवत्। क्लीबनिर्देशः। बन्धुनि इति सूत्रे क्लीबस्य बन्धुशब्दस्य निर्देशः शब्दस्वरूपापेक्षया शब्दस्वरूपमित्यस्य नपुंसकत्वात्तद्विशेषणत्वविवक्षयेत्यर्थः। बन्धु इति शब्दस्वरूपे परत इत्यर्थलाभायेति यावत्। अन्यथा कारीषगन्धीबन्धु इति क्लीबत्व एव संप्रसाररणं स्यान्न तु पुंस्त्वे। कारीषगन्ध्या माता यस्य च कारीषगन्धीमातः मातृशब्दस्य मातञादेशः। वार्तिके मात ञिति निपातनादेव न द्यृतश्चेति कपि कारीषगन्धीमातृकः। कबभावपक्षे मतञादेशाभावपक्षे कारीषगन्धीमाता इति। कपो नित्यत्वेऽपि मातृषु इति वार्तिकनिर्देशादेव वैकल्पिकत्वम्। चित्त्वसामर्थ्यात्। कुमुदस्येव गन्धोऽस्यास्तीति कुमुदगन्धिः। उपमानाच्चेति गन्धस्येत्वम् कुमुदगन्धेरपत्यमित्यर्थे अणि कृते अणिञोश्चेति अणष्यङादेशे कौमुदगन्ध्य यङश्चाप् कौमुदगन्ध्या चापश्चित्वं

**१००६ इष्टकेषीकामालानां चिततूलभारिषु** ६।३।६५। इष्टकादीनां तदन्तानां च पूर्वपदानां चितादिषु क्रमादुत्तरपदेषु ह्रस्वः स्यात्। इष्टकचितम्। पक्वेष्टकचितम्। इषीकतूलम्। मुञ्जेषीकतूलम्। मालभारि। उत्पलमालभारि ॥

---

स्वरार्थमिति। बहुव्रीहिस्वरे सति चित्स्वरो न स्यादिति चित्वं व्यर्थं स्यादतश्चित्त्वसामर्थ्याच्चित्स्वर एव। अन्तोदात्तश्चित्स्वरः पूर्वपदप्रकृतिस्वरो बहुव्रीहिस्वर इति भेदः।

131. इष्टकादीनां तदन्तानां च पदाधिकार इव उत्तरपदाधिकारेऽपि तदन्तविधिरस्तीति इष्टकचितं पक्वेष्टकचितमिति भाष्योदाहरणेन ज्ञापितत्वात्तदन्तविधिः। प्रतिपादितं चेदमलुक्समासेषु ओजसाकृतमित्यत्र तत्त्वबोधिन्याम्। इषीकायाः तूलमिषीकतूलम्। ननु हृदयस्य हृल्लेखेति सूत्रे अण्ग्रहणेन उत्तरपदाधिकारे तदन्तविधिर्नास्तीति ज्ञापितमित्युक्तं हि प्राक्। कथमत्र तदन्तविधिरिति चेदुच्यते। सति बाधके ज्ञापकस्य विशेषापेक्षत्वात् लेखग्रहणेन उत्तरपदाधिकारे उत्तरपद एव तदन्तविधिर्नास्तीति ज्ञापितम्। न तु पूर्वपदेपीति। तेन इष्टकादिषु पूर्वपदेषु तदन्तविधिरस्त्येवेति। नन्वेवं रात्रेः कृतिविभाषेत्यत्र कृतीत्यस्य कृदन्त इत्यर्थो न भवेत्। तस्य उत्तरपदत्वादिति चेत्सत्यम्। तथाऽपि रात्रिशब्दस्य केवलकृत्प्रत्ययपरकत्वासंभवात्तदन्तविध्यनभ्युपगमे सूत्रमिदं निर्विषयं स्यात्। अतः कृतीत्यत्र तदन्तविधिरस्तीति। अस्मिंश्च पक्षे पदाङ्गाधिकारे तस्य तदन्तस्य चेति परिभाषावशादेव इष्टकेत्यत्र तदन्तलाभः। पदाधिकारीयत्वादस्येति कृत्वा पक्वेष्टकचितमिति भाष्योदाहरणादत्र तदन्तविधेर्ज्ञापितत्वमिति ज्ञापनक्लेशाभ्युपगमो नैवेति वेद्यम्। ननु तत्त्वबोधिन्यामप्युक्तमेवेदं पदाधिकारात्तदन्तविधिरिति नैतदुपपद्यते। पदस्येत्यधिकारस्य त्रिपाद्यामे पद इति सत्त्वात् इति चेदुच्यते। उत्तरपदाधिकारेऽपि पदाधिकारत्वमस्त्येव उत्तरपदे इति शब्दे शब्दस्य सत्त्वात्, इति तत्त्वबोधिन्याशयः। स्यादेतत्। यद्युत्तरपदाधिकारे तदन्तविधेः प्रसक्तिरेव नास्तीत्युच्येत तर्हि ज्ञापनद्वारा तन्निषेध एव न युज्येत प्रसक्तिपूर्वकत्वान्निषेधस्य। किंच सुहृदयस्येदं सौहार्दं सौहृदयमित्यादिरूपाणि न सिद्ध्येयुः। हृदयशब्दस्यैव हृदादेशो विहितः न तु हृदयशब्दान्तस्येति। तस्मात् उत्तरपदाधिकारेऽपि तदन्तविधिरस्त्येव। तन्निषेधस्तु दर्शितरीत्या विशेषापेक्ष एव। अतो न कश्चिद्दोष इति। वस्तुतस्तु पदाधिकारोऽन्य एव उत्तरपदाधिकारात्। यत्र उत्तरपदे इति पदमधिक्रियते स उत्तरपदाधिकारः। यत्र तु पदस्येति पदमधिक्रियते स पदाधिकार इति सिद्धान्तात्। तस्मात् उत्तरपदाधिकारे तदन्तविधिः पक्वेष्टकचितमिति भाष्यादेव ज्ञापितः। लेखग्रहणेन तु स नास्तीति ज्ञापितः। उत्तरपदाधिकारे पूर्वपदस्य तदन्तविधिरस्ति। उत्तरपदस्य तु नास्तीति विशेषाश्रयणान्मतद्वयस्याप्यविरोधः इति। यद्वा ज्ञापकसिद्धं न सर्वत्रेति लेखग्रहणेन ज्ञापितस्य उत्तरपदाधिकारे तदन्तविधिर्नास्तीत्यस्य असार्वत्रिकत्वात्पक्वेष्टकचितमित्यादिषु तदन्तविधिरस्त्येवेति ज्ञेयम्।

**१००७ कारेसत्यागदस्य** ६ ।३ ।७०। मुम् स्यात्। सत्यङ्कारः। अगदङ्कारः ॥ **अस्तोश्चेति वक्तव्यम्** ॥ अस्तुङ्कारः ॥ **धेनोर्भव्यायाम्** ॥ धेनुम्भव्या ॥ **लोकस्य पृणे** ॥ लोकम्पृणः। पृण इति मूलविभुजादित्वात्कः। **इत्येऽनभ्याशस्य** ॥ अनभ्याशमित्यः। दूरतः परिहर्तव्यः इत्यर्थः ॥ **भ्राष्ट्राग्न्योरिन्धे**। भ्राष्ट्रमिन्धः अग्निमिन्धः। **गिलेऽगिलस्य** ॥ तिमिङ्गिलः। अगिलस्य किम्। गिलगिलः ॥ गिलगिले च ॥ तिमिङ्गिलगिलः **उष्णभद्रयोः करणे** ॥ उष्णङ्करणम्। भद्रङ्करणम् ॥ **१००८ रात्रेः कृति विभाषा** ६ ।३ ।७२। रात्रिञ्चरः। रात्रिचरः। रात्रिमटः। रात्र्यटः। अखिदर्थमिदं सूत्रम्। खिति तु 'अरुर्द्विषत् - २९४२' इति नित्यमेव वक्ष्यते। रात्रिम्मन्यः ॥

---

132. सत्यागदस्य सत्यागदयोसमाहारस्सत्यागदन्तस्य सत्यागदयोरित्यर्थः. कारेकारशब्दे परतः मुप् स्यात्। उकार उच्चारणार्थः। मिदचोन्त्यात्पर इति अन्त्यादचः परस्सभवति। शेषितो मकारः (उभयोरित्वेन लोपान्मस्य शिष्टत्वम्।) सत्यंकारः - "मोऽनुस्वारः"-"अनुस्वारस्य ययि परसवर्णः"-सत्यङ्कारः-सत्यं करोतीति सत्यंकारः। कर्मण्यण्। गदस्य रोगस्याभावः। अगदम्। अर्थाभावेऽव्ययीभावः। अगदं करोतीति विग्रहे-अगद-अम्। कार सु-इति स्थिते-सुब्लुकि-मुम्-अगदङ्कारः। निरामयं करोतीत्यर्थः। अस्तु इति वचनस्य करणमस्तुङ्। कारः।कृञो भावे घञ् अस्तोश्चेति निर्देशात् इत्ये। एतुं प्राप्तुं योग्य इत्यः तस्मिन्नित्यशब्दे परतः भाष्ट्रमिन्धः क्लीबेम्बरीषं भाष्ट्रो ना इत्यमरः। भ्राष्ट्रमिन्धयतीति भ्राष्ट्रमिन्धः अम्बरीषतापक इत्यर्थः। अग्निमिन्धः अग्निप्रज्वालक इत्यर्थः। गिले परतः पूर्वस्य मुं स्यात् न तु गिलिस्येत्यर्थः। तिमिगिलति भक्षयतीति तिमिङ्गिलः तिमि अं गि लि सु इति स्थिते सुब्लुकि तिमिगिल। मुमि तिमिग्लमोऽनुस्वारः-अनुस्वारस्य ययि परसवर्णः तिमिङ्गिल सु-तिमिङ्गिलः। तिमिङ्गिलिं गिलतीति विग्रहे तु तिमिङ्गिलगिल इत्येव, तिमीनां गिलगिल इति विग्रहे तु तिमिंगिलगिलिः। उष्णस्य भद्रस्य च करणमुष्णं करणं भद्रं करणं।

133. रात्रेः कृति। कृदन्ते उत्तरपदे परतः रात्रेर्मु वा स्यादित्यर्थः। रात्रेः कृदन्तत्वेन पुनः कृत्प्रत्ययपरकत्वासम्भवात् उत्तरपदाधिकारेऽप्यत्र प्रत्ययग्रहणे तदन्तग्रहणं। रात्रौ चरति अटति वा रात्रिंचरः रात्रिमटः अधिकरणे चेति सप्तमी। सप्तमीति योगविभागात्समासः। अत्यन्तसंयोगविवक्षायान्तु द्वितीयैव रात्रिंचरत्यटति वा इति विग्रहः। अत्यन्तसंयोगे चेति द्वितीयातत्पुरुषः। चरेष्ट इति सप्तमी। तत्पुरुषपक्षे चरतेष्टः अटतेः पचाद्यच् अटः द्वितीयातत्पुरुषे तु चराटयोर्मूलविभुजादित्वात्कः उपपदसमासः खिति इत्संज्ञकखकारवति प्रत्यये परत इत्यर्थः। रात्रिमात्मनो मन्यत इति रात्रिम्मन्यः । मन्यतेः खशि मन् आ इति स्थिते श्यन् अतो गुणे मन्य खिदन्तत्वादस्मिन्परे अजन्तस्य रात्रेर्द्विर्षदजन्तस्येति मुम् रात्रिम्मन्यः।

**१००९ सहस्य सः संज्ञायाम्** ।६।३।७८ उत्तरपदे। सपलाशम् । संज्ञायां किम् । सहयुध्वा। **१०१० ग्रन्थान्ताधिके च** ६।३।७९। अनयोः परयोः सहस्य सः स्यादुत्तरपदे । समुहूर्तं ज्योतिषमधीते । सद्रोणा खारी ॥ **१०११ द्वितीये चानुपाख्ये** ६।३।८०। अनुमेये द्वितीये सहस्य सः स्यात् । सराक्षसीका निशा । राक्षसी साक्षादनुपलभ्यमाना निशयाऽनुमीयते ॥ **१०१२ समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु** ।६।३।८४। समानस्य सः स्यादुत्तरपदे नतु मूर्धादिषु। अनु भ्राता सगर्भ्यः। अनु सखा सयूथ्यः। योनः सनुत्यः। तत्र भव इत्यर्थे 'सगर्भसयूथसनुताद्यत् ३४०१' अमूर्धादिषु किम्। समानमूर्धा। समानप्रभृतयः। समानोदर्काः। समानस्येति योगो विभज्यते। तेन सपक्षः साधर्म्यं सजातीयमित्यादि सिद्धमिति काशिका। अथवा सहशब्दः सदृशवचनोऽप्यस्ति। सदृशः सख्या ससखीति यथा। तेनायमस्वपदविग्रहो बहुव्रीहिः। समानः पक्षोऽस्येत्यादि॥

---

134. पलाशैस्सहितं सपलाशमिति कस्य चिद्वस्तुनस्संज्ञा सह युध्यतीति सहयुध्वा नेयं संज्ञा।

135 ग्रन्थान्ताधिके च–ग्रन्थस्यान्तो ग्रन्थान्तः अन्त्यग्रन्थवाचक इत्यर्थः। अधिक आधिक्यापादकश्शब्दः तयोस्समाहारः ग्रन्थान्ताधिकं तस्मिन्परे यद्वा ग्रन्थान्तवाचकस्य आधिक्यवाचकस्य च सहस्येत्यर्थः। सुमुहूर्तं महूर्तग्रन्थेन सहितं सुमुहूर्तं। अन्यत्र मुहूर्तस्यान्तास्सुमुहूर्तमित्यव्ययीभावः। सद्रोणा द्रोणेन सहिता भार्या आधिक्यप्रतिपादकोऽत्र द्रोणशब्दः द्रोणाधिका खारीत्यर्थात्। द्वितीयपक्षेऽपि तुल्यमिदं उभयत्रापि साहित्यस्य आधिक्यार्थबोधे पर्यवसानात्।

136. समानस्येति समानो गर्भस्सगर्भः, समानो यूथस्सयूथः। समानं नुतं सनुतं इति प्रकृतसूत्रोदाहरणम्। एतेभ्यः तत्र भव इत्यर्थे यणि कृते सगर्भ्य इत्यादिकं तेषामर्था अनुभ्रातेत्यादयः। समानो मूर्धा समानमूर्धा समानस्समानशब्दः प्रभृतिरादिर्येषान्ते समानप्रभृतयः शब्दाः। समानमुदर्कमुत्तरफलं येषान्ते समानोदर्काः समानो धर्मः समधर्म्यं। गुणवचनब्राह्मणादिभ्य इति ष्यङ् समानायां जातावृत्पन्नं सजातीयम्। काशिकेति वृत्तिग्रन्थः। अस्वपदविग्रहः अव्ययं विभक्तीति सूत्रेण कृतानां समासानां नित्यत्वेनेति भावः । (सादृश्यार्थकस्य सहस्य सुबन्तेनात्र पक्षादिना समासविधानात्।) ननु सोऽव्ययीभाव इति अव्ययीभावत्वेन तस्यैव नित्यत्वं न बहुव्रीहेरिति सदृशः पक्षः सपक्षमित्येव स्यान्न तु सपक्ष इति चेन्मैवम्। परेण बहुव्रीहिणा अव्ययीभावस्य बाधितत्वात् अनेकमन्यपदार्थ इत्येव यद्यप्यत्र बहुव्रीहिः। तथाऽपि अव्ययघटितत्वादव्ययमिति सूत्रस्याप्यत्र लक्ष्ये समन्वयो दुर्वार इति नित्यत्वमस्य।

**१०१३। ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु** ।६ ।३ ।८५। एषु द्वादशसूत्तरपदेषु समानस्य सः स्यात्। सज्योतिः। सजनपद इत्यादि॥ **१०१४। चरणे ब्रह्मचारिणि** ।६ ।३ ।८६। ब्रह्मचारिण्युत्तरपदे समानस्य सः स्याच्चरणे समानत्वेन गम्यमाने। चरणः शाखा। ब्रह्म वेदः, तदध्ययनार्थं व्रतमपि ब्रह्म, तच्चरतीति ब्रह्मचारी। समानः सः सब्रह्मचारी॥ **१०१५। तीर्थे ये** ।६ ।३ ।८७। तीर्थे उत्तरपदे यादौ प्रत्यये विवक्षिते समानस्य सः स्यात्। सतीर्थ्यः:एकगुरुकः। 'समानतीर्थेवासी १६५८' इति यत्प्रत्ययः॥ **१०१६। विभाषोदरे** ।६ ।३ ।८८। यादौ प्रत्यये विवक्षिते इत्येव। सोदर्यः। समानोदर्यः॥ **१०१७। दृग्दृशवतुषु** ।६ ।३ ।८९। सदृक्। सदृशः ॥ **दृक्षे चेति वक्तव्यम्**॥ सदृक्षः। वतुरुत्तरार्थः॥**१०१८। इदंकिमोरीश्की** ।६ ।३ ।९०। दृग्दृशवतुषु इदम ईश् किमः की स्यात्।

---

137. रात्रिनाभिनामसु–सशब्दपूर्वेषु अचप्रत्यन्ववेति सूत्रे अच् इति योगविभागात्पक्षे सरात्रः सनाभः सनामा इति च भवन्ति रूपाणि समासान्तस्य अनित्यत्वात्। सरात्रिरित्यादीनि च ।

138. सब्रह्मचारी। देवदत्तस्य यज्ञदत्त इत्यर्थः। उभयोरप्येकशाखाध्येतृत्व एवायं सभावः। अन्यत्र तु समानब्रह्मचारी इत्येव।

139. तीर्थे ये। तीर्थशब्दे गुणवाचके उत्तरपदे परतः समानस्य सस्स्यात् यादौ प्रत्यये विवक्षित एव, न तु परतः । यादिप्रत्ययादन्तरङ्गत्वेन पूर्वमेव सभावस्य जायमानत्वेन यादिप्रत्ययपरकत्वासंभवात्। तेन समाने तीर्थे वसतीति सतीर्थ्य इत्यर्थो लब्धः। सतीर्थे वसतीति तु न विग्रहः। यादिप्रत्ययविवक्षायामेव सभावः न तु केवले उत्तरपदे परत इत्युक्तत्वात्, सतीर्थशब्दस्य असाधुत्वात्, समान सु तीर्थ सु, इति स्थिते सुब्लुकि सभावः सतीर्थ, सुबुत्पत्तेः प्रागेव यत् सतीर्थ्य पश्चात्सुप् सतीर्थ्यः। तीर्थे यि इति तु सुवचम्। अल्मात्रग्रहणसप्तम्यन्तत्वेन यस्मिन्विधिरिति तदादिपरिभाषोपस्थितिसम्भवसौलभ्यात्। लाघवाच्च य् शब्दस्य सप्तम्यां यि इति रूपं यथास्थितसूत्रमते तु अल्मात्रग्रहणाभावान्न तदादिपरिभाषा सूपपादा विवक्षित इति किम् तीर्थेभवं तीर्थ्यं, तत्र भव इति यत् समानं तीर्थ्यं समानतीर्थ्यं समानतीर्थभवं जलमर्थः।

140. समानं पश्यतीति सदृक्, सदृशः सदृक्ष इति च क्विनि कञि क्से च परतः क्रमो रूपत्रयं दृशिर्प्रेक्षण इति धातोः।

141. ईश् सर्वादेशार्थ शित्वम् के अनेकाल्त्वात्सर्वादेशः। इदम्पश्यतीदृक्। किम्पश्यतीति कीदृक्। त्यदादिष्विति क्विन्कञौ।

ईदृक्। ईदृशः। कीदृक्। कीदृशः। वतूदाहरणं वक्ष्यते॥ **दृक्षे च।** ईदृक्षः। कीदृक्षः। 'आ सर्वनाम्नः ४३०'। **दृक्षे च।** तादृक्। तादृशः। तावान्। तादृक्षः। दीर्घः। मत्वोत्वे। अमूदृक्। अमूदृशः। अमूदृक्षः॥ **१०१९। समासेऽङ्गुलेः सङ्गः** ।८।३।८०। अङ्गुलिशब्दात्सङ्गस्य सस्य मूर्धन्यः स्यात्समासे। अङ्गुलिषङ्गः। समासे किम्। अङ्गुलेः सङ्गः॥ **१०२०। भीरोः स्थानम्** ।८।३।८१। भीरुशब्दात् स्थानस्य सस्य मूर्धन्यः स्यात्समासे। भीरुष्ठानम्। असमासे तु। भीरोः स्थानम्॥ **१०२१। ज्योतिरायुषः स्तोमः** ।८।३।८३। आभ्यां स्तोमस्य सस्य मूर्धन्यः स्यात्समासे। ज्योतिष्टोमः। आयुष्टोमः। समासे किम्। ज्योतिषः स्तोमः॥ **१०२२। सुषामादिषु च** ।८।३।९८। सस्य मूर्धन्यः। शोभनं साम यस्य सुषामा। सुषन्धिः॥ **१०२३ एतिसंज्ञायामगात्** ।८।३।९९। सस्य मूर्धन्यः। हरिषेणः। एति किम्। हरिसक्थम्। संज्ञायां किम्। पृथुसेनः। अगकारात्किम्। विष्वक्सेनः। इण्कोरित्येव। सर्वसेनः॥

---

142. समासे। अपदान्तस्य मूर्धन्य इति सूत्रान्मूर्धन्य इत्यस्यात्रान्वयः। आदेः परस्येति सङ्गसकारास्य षत्वम्।

143. ज्योतिष्टोमः। यागविशेषः ज्योतिस्स्तोम इति स्थिते आदेशावयवत्वाभावादप्रत्ययत्वाच्च नुंविसर्जनीयशर्व्यवायेपीति नात्रेणः परस्य सस्य षत्वम्। स्तोमावयवस्य ज्योतिरायष इति षत्वे ष्टुत्वे च ज्योतिन्ष्टोम। स्टुत्वं ज्योतिष्टोम झरो झरि सवर्णे इति ष्टोमषस्य लोप पक्षे ज्येतिष्टोम। लोपाभावपक्षे ज्योतिष्टोम इति रूपद्वयं। एवमग्निष्टोमेत्यत्रापि बोध्यम्। यद्वा ज्योतिस्सकारस्य रुत्वविसर्गौ ज्योतिःष्टोम खर्परे शरि वा विसर्गलोपो वक्तव्यः। ज्योतिष्टोम। विसर्गलोपाभावपक्षे विसर्जनीयस्य वा शरीति सत्वे ष्टुत्वे च ज्योतिष्ष्टोम। सत्वाभावपक्षे ज्योतिःष्टोम इति रूपत्रयम्।

144. एति। इण्कोः परस्य सस्य मूर्धन्यस्स्यादेकारे परे संज्ञायां वाच्यायां न तु गकारव्यवधाने । अगादिति प्रसज्यप्रतिषेधः गौत् न इत्यर्थः। गकाराद्धेतोः यद्व्यवधानं तत्र नेति यावत्। गव्यवधानेनेत्यनेन तदितरव्यवधाने षत्वं सिद्धम्। हरिषेणः कश्चन राजा हरीणां कपीनां वाजिनां सिंहानां वा सेना अस्यास्तीति व्युत्पत्तिः। अत्र इणो व्यवहितपर एव सकारः तस्य स् इत्यस्य एन इत्येकारे परतष्षत्वम्। हरिसक्थम्। हरिद्वर्णे सक्थिनी यस्य तद्धरिसक्थमिति कस्यचित्संज्ञा ।अत्र स् इत्यस्यादिणःपरीभूतादकारः परस्सन्वर्तत इति नैकारपरत्वं। पृथ्वीसेन यस्य स पृथुसेनः स्त्रियाः पुंवदिति पुंवद्भावः। राजा इत्यर्थः। अत्र इणः परत्वमेत्परकत्वञ्च सस्य वर्तत एव। न पुनरनेन पदेन कस्य चित्संज्ञाऽभिधीयते इति नात्र षत्वं। विष्वक् सर्वत्र सञ्चारिणी सेना अस्य

विष्वक्सेनः। भगवतस्सेनाधिपतेस्संज्ञा। अत्र वकारोपरीकाराधीणः व्यवहितस्य परस्य सस्य एतिपरतष्षत्वे प्राप्ते गकारेण व्यवधानमस्तीति न षत्वम्। विष्वक्सेन इत्यत्र गकारेण व्यवधानमस्तीति न षत्वमिति तत्त्वबोधिनीमतमनुसृत्य सिद्धान्तितम् । तत्र शङ्कते। ननु निमित्तनिमित्तिनोर्हि गकारेण व्यवधायकेन भाव्यम्। निमित्तमिण् कवर्गान्यतमं निमित्ती तु सकार इति विवेकः। विष्वक्सेन इत्यत्र खरि चेति चर्त्वस्य असिद्धत्वेन गकारोऽस्त्येव। परन्तु न केवलं स एव व्यवधायकः। किन्तु षकारवकाराकारास्त्रयस्सन्ति। अतः कथमिति चेन्मैवम्। अगादित्यस्य गकारव्यवधानाभाव एव तात्पर्यम्। तेन अन्ये व्यवधायकास्सन्तु नाम। मा वा इति सिद्धम्। अतः प्रकृते गकारव्यवधानसत्त्वान्न षत्वमिति। ननु अगादिति निषेधो व्यर्थ एव। णत्वशास्त्र इव षत्वशास्त्रे अट्कुप्वाङित्यादेः व्यवधाने सति षत्वप्रापकस्य शास्त्रस्य अभावात्। प्रसक्तिपूर्वो हि निषेधः। तेन विष्वक्सेन इत्यत्र षकारादिबहुव्यवधानसत्वात् षत्वप्रसक्तिरेव नास्तीति कृत्वा व्यर्थोऽयमगादिति निषेधः इति चेदुच्यते। अयमेवागादिनिषेधो दर्शितविधया व्यर्थीभूय ज्ञापयति। किमिति? इण्कवर्गाभ्यां व्यवहितपरस्यापि सस्य मूर्धन्यस्स्यादिति। तेन गकारकव्यवधाने तदितरव्यवधाने च इण्कवर्गनिमित्तकस्सस्य षत्वं स्यादिति सिद्धम्। ततश्च गकारेण व्यवधाने सति षत्वाभावार्थमगादिति पदमावश्यकमिति स्वांशे चारितार्थ्यञ्च सुस्थं–इति। न चैवं उदस्थादित्यादावपि षत्वं स्यादिति वाच्यम्। एतीति प्रकृतसूत्रविषय एवायं व्यवधानस्वीकारः ज्ञापकस्य विशेषापेक्षत्वात्। अत एव शिवादीनां वाड्व्यवायेपीति सूत्रं पर्यषिधादित्यादिरूपसिद्ध्यर्थमुपन्यस्तम्। अन्यथा तद्व्यर्थं स्यात्। ननु विकल्पार्थं शिवादीनां वेति सूत्रमावश्यकमेवेति चेद्भवतु नाम। ज्ञापकस्य सामान्यापेक्षत्वे उत्सेवते इत्यादावपि षत्वं स्यात्। नन्वेवं संज्ञायां गकारव्यवधाने एव इण्कोस्सस्य षत्वं न अन्यव्यवधाने त्वस्त्येव, इति हि ज्ञापितोंशः। तत्र गकारव्यवाये षत्वाभावस्य विष्वक्सेन इत्युदाहृतम्। ककारेतरव्यवधाने षत्वस्य किमुदाहरणमिति चेदुच्यते । विहितषेण इति। नन्वेवं संज्ञायामेव एति पर एव गकारेतरव्यवधाने इण्कोस्सस्य षत्वमिति ज्ञापितत्वेन सुषमादिषु व्यवधान स्वीकारो नाङ्गीकार्य एवेति सिद्धम्। ततश्च जलाषाहमिति रूपं कथं सुषामादिगणे पठितम्। तत्र हि लकारस्य इणः निमित्तत्वेन लकारसकारयोर्मध्ये आकारेण व्यवधानात् इति चेदुच्यते। सहतेश्शिवादित्वेन शिवादीनां वाड्व्यवायेपीति व्यवधानस्वीकारोस्त्येवेति। ननु परिनिविभ्यः परेषामेव शिवादीनामड्व्यवायस्वीकार इति चेत्तर्हि निपातनादेव जलाषाहमित्यत्र अकारव्यवधानेऽपि षत्वमिति स्वीकर्तव्यम्। अतो न दोषः। वस्तुतस्तु अगादित्यस्य गात्परस्य नेत्यर्थः। ततश्च सस्य षत्वं प्रति यदि गकारो निमित्तं स्यात्तर्हि षत्वं नेति सिद्धम्। शतभिषक्सेनः। विष्वक्सेन इत्यादिषु चर्त्वस्यासिद्धत्वेन गकारं निमित्तीकृत्य षत्वं प्रसक्तमिति कृत्वा न षत्वं। तस्माद्गकारो न व्यवधायकः। किन्तु

**१०२४ नक्षत्राद्वा** ८।३।१००। एति सस्य संज्ञायामगकारान्मूर्धन्यो वा। रोहिणीषेणः रोहिणीसेनः। अगकारात्किम् । शतभिषक्सेनः। आकृतिगणोऽयम् ॥ **१०२५ अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु** ६।३।९९। अन्यशब्दस्य दुगागमः स्यादाशीरादिषु परेषु। अन्यदाशीः ।अन्यदाशा।अन्यदास्था।अन्यदास्थितः।अन्यदुत्सुकः।अन्यदूतिः ।अन्यद्रागः।अन्यदीयः 'अषष्ठीत्यादि किम् । अन्यस्याऽन्येन वाशीः' अन्याशीः ॥ **कारके छे च नायं निषेधः**। अन्यस्य कारकः, अन्यत्कारकः ।अन्यस्यायमन्यदीयः ।गहादेराकृतिगणत्वाच्छः ॥ **१०२६ अर्थे विभाषा** ६।३।१००। अन्यदर्थः ।अन्यार्थः ॥ **१०२७ कोः कत्तत्पुरुषेऽचि** ६। ३।१०१। अजादावुत्तरपदे ।कुत्सितोऽश्वः कदश्वः ।कदन्नम् ।तत्पुरुषे किम् ।कूष्ट्रो राजा ॥ **त्रौ च** ॥ कुत्सितास्त्रयः कत्त्रयः ॥

---

निमित्तमेवेति बोध्यम्। पूर्वस्मिन्पक्षे तु विहितषेण इति यदुदाहृतं तदप्रमाणमेव, क्वाप्यप्रसिद्धित्वात्। किञ्च अगादित्यस्य वैयर्थ्यकल्पनं ज्ञापनस्वीकारेत्यादिकं गौरवावहमेवेति ज्ञेयम्।

145. आकृतिगणोऽयम्। सुषामादिषु चेति सुषामादिगण आकृतिगण इत्यर्थः। एतीत्यस्य नक्षत्राद्वेत्यस्य च तदन्तर्गण सूत्रत्वादेतत्सूत्रद्वयव्याख्यानन्तरमाकृतिगणोऽयमित्युक्तम्।

146. अषष्ठ्यतृतीयास्थस्य–न षष्ठी । न तृतीया अतृतीया। तत्र वर्तमानस्य षष्ठीतृतीययोरवर्तमानस्येत्यर्थः। तद्विभक्तिद्वयार्थाबोधकस्येति यावत्। तत्परकस्येत्युक्तौ तु सुब्लुकि तत्परकत्वाभावान्निषेधो व्यर्थस्स्यात्। लुप्यमानस्य प्रत्ययस्यार्थं शेषितप्रकृतिर्बोधयतीति, तदर्थबोधकत्वन्तु सुसङ्गतं। अन्या च सा आशीश्चेति विग्रहे कर्मधारयेति पुंवद्भावानन्तरं दुक्। उकार उच्चारणार्थः। कित्वादन्त्यावयवः अन्यदाशीः अन्यमाशीः। अन्यस्मै आशीः अन्यस्मादाशीः। अन्यस्मिन्नासीः इति विग्रहेष्वपि अन्यदाशीरित्येव रूपम्। एवमन्यदाशेत्यादावपि बोध्यम्। अन्यदीयः अन्यशब्दात्तस्यायमित्यर्थे छे कृते आयनेयीति छस्य ईयादेशः। ननु अन्यशब्दात्कथं छस्स्यात् विधानाभावादत आह। गहादेरित्यादिगहादिषु अन्यशब्दपाठाभावेऽपि तद्गणस्याकृतिगणत्वेन तत्रास्योपसङ्ख्यानमिति भावः।

147. अर्थे–अत्रापि अषष्ठीतृतीयास्थस्येत्येव। विकल्पार्थं पृथक्सूत्रम्।

148. कूष्ट्रः–कुत्सिता उष्ट्राः क्रमेलका यस्य स कूष्ट्र इति बहुव्रीहिः। त्रौ त्रिशब्दस्य नित्यबहुवचनत्वेऽपि तदनुकरणशब्दत्वादस्य न बहुत्वनियमः त्रिशब्दे परत इत्यर्थः।कु त्रि जस् अनेकाल्त्वात्सर्वादेशः कत् त्रि अस् जसि चेति गुणः अयादेशः कत्त्रयः।

**१०२८ रथवदयोश्च** ६।३।१०२। कद्रथः। कद्वदः॥ **१०२९ तृणे च जातौ** ६।३।१०३। कत्तृणम्॥ **१०३० का पथ्यक्षयोः** ६।३।१०४। कापथम्। काक्षः। अक्षशब्देन तत्पुरुषः। अक्षिशब्देन बहुव्रीहिर्वा॥ **१०३१ ईषदर्थे** ६।३।१०५। ईषज्जलं काजलम्। अजादावपि परत्वात्कादेशः। काम्लः। **१०३२ विभाषा पुरुषे** ।६।३।१०६। कापुरुषः। कुपुरुषः। अप्राप्तविभाषेयम्। ईषदर्थे हि पूर्वविप्रतिषेधान्नित्यमेव। ईषत्पुरुषः कापुरुषः॥

---

149. रथवदयोश्च–तत्पुरुष इत्यस्य नात्रानुवृत्तिः योगविभागसामर्थ्यात्। अन्यथा कोः कत्तत्पुरुषेचि रथवदयोरित्येव सूत्र्येत कोः कदोरनुकर्षणार्थश्चकारः। स्वरितत्वाभावान्न तयोरनुवृत्तिस्सम्भवतीति चस्य विधानम्। कुत्सितो रथः कद्रथः कुत्सितो रथो यस्य इति वा। कुत्सितं वदतीति कद्वदः। पचाद्यच् वदः कुत्सितो वद इति वा।

150. तृणे च–जातावेवेति नियमार्थ योगविभागः। अन्यथा रथ वद तृणेषु चेत्येव सूत्र्येत। कोः कत्स्यात्तृणे परतः जातौ वाच्यायाम्। कुत्सितं तृणं कत्तृणमिति तृणजातिभेदः।

151. का–पथ्यक्षयोः–कोरित्यनुवृत्तिः पथ्यक्षयोः परतः कोः का इत्ययमादेशस्स्यात् अक्षशब्दः कृतसमासान्तः। अक्षिशब्दो वा अक्ष इत्यकारान्तशब्दो वेति संशयापगमहेत्वभावात्। तदुभयसिद्धिरित्याह। अक्षशब्देनेत्यादि। कुत्सितोक्षः काक्षः। कुत्सिते अक्षिणी यस्य स च काक्षः। बहुव्रीहौ सक्थ्यक्ष्णोस्स्वाङ्गात् षच् इति समासान्तष्षच्।

152. ईषदर्थे। विद्यमानस्य कु इत्यव्ययस्य का इत्ययमादेशस्स्यात्। कुगतिप्रादय इति नित्यसमासत्वादस्वपदविग्रहः ईषज्जलमिति।

153. कापुरुषः– कुत्सितः पुरुष इति विग्रहः अत एव अप्राप्तविभाषेयम्। कुत्सितार्थकस्य कोः पुरुषे कादेशस्याविहितत्वेन अप्राप्तेः। ननु ईषदर्थे तु प्राप्तविभाषापीयं स्यादिति उभयत्र विभाषेति वक्तुं शक्यमत आह। नित्यमेवेति कुत्सितार्थकस्य कोरेव पुरुषे परतः कादेशो विभाषा स्यात् इत्यस्मिन् सूत्रे कुत्सितार्थकस्यैव ग्रहणं नत्वीषदर्थकस्येति ईषदर्थकस्य न विभाषा, किन्तु पूर्वविप्रतिषेधात् विप्रतिषेधे पूर्वस्यैवेष्टत्वादीषदर्थकस्य कोः कादेशो नित्य एवेति भावः। अस्मिन्विभाषासूत्रे ईषदर्थ इत्यस्यानुवृत्तौ तु प्राप्तविभाषैवेयं स्यात् तेन कौमुदी विरुध्येत। अतस्तत्वबोधिनी प्रामादिकैवास्मिन्नंशे।

**१०३३ कवं चोष्णे** ६।३।१०७। उष्णशब्दे उत्तरपदे कोः कवं का च वा स्यात् । कवोष्णम् । कोष्णम् । कदुष्णम् ॥ **१०३४ पृषोदरादीनि यथोपदिष्टम्** ६। ३।१०९। पृषोदरप्रकाराणि शिष्टैर्यथोच्चारितानि तथैव साधूनि स्युः । पृषतः उदरं पृषोदरम्। तलोपः। वारिवाहको बलाहकः । पूर्वपदस्य वः उत्तरपदादेश्च लत्वम् ॥ भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् । गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरम् ॥१ ॥ **दिक्शब्देभ्यस्तीरस्य तारभावो वा** । दक्षिणतारम् । दक्षिणतीरम् । उत्तरतारम् । उत्तरतीरम् ॥ **दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेः ष्टुत्वं च** ॥ दुःखेन दाश्यते दूडाशः । दुःखेन नाश्यते दूणाशः । दुःखेन दभ्यते दूडभः खल् त्रिभ्यः । दम्भेर्नलोपो निपात्यते । दुःखेन ध्यायतीति दूढ्यः। 'आतश्च १८९८' इति कः। ब्रुवन्तोऽस्यां सीदन्तीति बृसी। ब्रुवच्छब्दस्य बृ आदेशः, सदेरधिकरणे डट्। आकृतिगणोऽयम् ॥ **१०३५ संहितायाम्** ६।३।११४। अधिकारोऽयम् ॥

---

154. कवञ्चोष्णे। चकारस्समुच्चयार्थः। अन्यथापरत्वेन कत्कादेशौ बाधित्वा कवञेव स्यादिति। कवञ्-का-कत् इत्यमी आदेशाः पर्यायेण स्युरित्यर्थः। कवङ्काच कवञो ञकारस्य यरोऽनुनासिक इति परसवर्णोऽनुनासिकः। ङकारः कवञ् काचेति पाठस्सुगमः। कवङ् इति ङान्तादेशे तु ङित्येत्ययमन्तादेशस्स्यात्। क्कवोष्णमित्यनिष्टरूपापत्तिः। कवम् च "मोनुस्वारः" "अनुस्वारस्य ययि परसवर्णः कवञ् च इति स्यादिति। कवम् इति मान्तागम इति यद्युच्येत तर्हि "मिदचोन्त्यात्पर" इति कुकवोष्णमिति रूपं स्यात्। तस्मात् कवञ् इति ञान्त एवादेशः। कोष्णं कवोष्णं मन्दोष्णं कदुष्णमित्यमरः। ईषदर्थे विभाषा इति पदयोरत्रानुवृत्तिः। तेन ईषदर्थकस्य कोरेव कवञादयः कवञ्। चात् का। विकल्पत्वात् कोः कत्।

155. गूढोत्मा वर्णविकृतेः। वर्णस्य विकृतिः वर्णविकृतिः असवर्णवर्ण इत्यर्थः। गूढ आत्मा इति स्थिते अकस्सवर्णे दीर्घ इति सवर्णस्य आ इति वर्णस्य आदेशे भवितव्ये असवर्णस्य ऊवर्णस्य आदेशः गूढोत्मा। दक्षिणं तीरं दक्षिणतीरमिति कर्मधारयः दुर उत्वमलोन्त्यपरिभाषया अन्त्यस्य रेफस्य दाश-नाश-दभ-ध्यशब्देषु परतः दूडाश इत्याद्याः प्रादिसमासाः। नित्यसमासत्वादस्वपदविग्रहः। दुर् दाश उत्वं सवर्णदीर्घः उत्तरपदस्य दाश इत्यस्य य आदिर्दकारस्य ष्टुत्वेन डः। दूडाश-दूणाश-दूडभ इति त्रयः खल्प्रत्ययान्ताः अन्तं पुमान् लुप्येदिति तत्त्वबोधिनी। पुमान् उच्चारणकर्ता अन्तं अन्तवर्णं लुप्येत् लुप्तं कुर्यात् अन्त्यस्य लोपो भवतीति यावत् ।

**१०३६ कर्णे लक्षणस्याऽविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य** ६।३।११५। कर्णशब्दे परे लक्षणवाचकस्य दीर्घः। द्विगुणाकर्णः। लक्षणस्य किम् ।शोभनकर्णः। अविष्टादीनां किम् । विष्टकर्णः। अष्टकर्णः । पञ्चकर्णः । मणिकर्णः । भिन्नकर्णः । छिन्नकर्णः । छिद्रकर्णः । स्रुवकर्णः स्वस्तिककर्णः॥ **१०३७ । नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ** ।६।३।११६। क्विबन्तेषु एषु परेषु पूर्वपदस्य दीर्घः। उपानत्। नीवृत्। प्रावृट्। मर्मावित्। नीरुक्। अभीरुक्। ऋतीषट्। परीतत्। क्वाविति किम्। परिणहनम्। 'विभाषा पुरुषे १०३२' इत्यतो मण्डूकप्लुत्या विभाषानुवर्तते सा च व्यवस्थिता। तेन गतिकारकयोरेव। नेह। पटुरुक्। तिग्मरुक्। **१०३८ वनगिर्योः संज्ञायां कोटरकिंशुलुकादीनाम्** ६।३। ११७। कोटरादीनां वने परे किंशुलुकादीनां गिरौ परे दीर्घः स्यात्संज्ञायाम् ॥**१०३९ वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः** ८।४।४। वनशब्दस्योत्तरपदस्य एभ्य एव णत्वं नान्येभ्यः। इह कोटरान्ताः पञ्च दीर्घविधौ कोटरादयो बोध्याः ।तेषां कृतदीर्घाणां णत्वविधौ निर्देशो नियमार्थः। अग्रेशब्दस्य तु विध्यर्थः। पुरगावणम्।

---

156. कर्णे इति–विष्टादिनवशब्दभिन्नस्य लक्षणवाचकस्य शब्दस्य दीर्घः स्यात् कर्णे परत इत्यर्थः। ढलोपसूत्राद्दीर्घ इत्यस्यात्रान्वयः परस्सन्निकर्षस्संहिता।

157. ऋतीषट् – सहतेःक्विपि ढत्वं जश्त्वचर्त्वे सट् ऋति सट् षत्वं पूर्वस्य दीर्घश्च । परीतत् तनोतेः क्विपि तन् परितन् दीर्घः नलोपः परीतह्रस्वस्य पिति कृति तुक् परीतत्। तेन व्यवस्थितविभाषात्वेन गतिकारकयोरेव प्राचीनप्रयोगाः। तयोरेव दीर्घ व्यवस्थापयन्तीति भावः। पूर्वपदस्य गतित्वं कारकत्वं वा यद्यस्ति तथैव क्विबन्तेषु सह्यादिषु परतः पूर्वस्य दीर्घः नान्यस्येति लब्धम्। उपासदित्यादिषु उपादीनां गतित्वम् मर्माविदित्यादिषु मर्मादीनां कारकत्वं चास्तीति बोध्यम्। पटुरुक् पट्व्योरुचो यस्य सः कर्मधारयत्वे तु पट्वी च सा रुक्च इति विग्रहः स्त्रियाः पुंवदिति पुंवद्भावः । अत्र पटुशब्दः प्रातिपदिकार्थमात्रवृत्तित्वेन प्रथमान्त इति न कारकः प्रथमायाः कारकत्वाभावात् नाप्युपसर्गः प्रादिष्वपठितत्वात्। एवं तिग्मरुगित्यत्रापि ।

158. वनम्पुरगेति–कोटरादित्वात्पुरगादीनां वने परतो दीर्घः। कोटरादित्वबोधनायैव सूत्रे कृतदीर्घनिर्देशः। इदमेवाह दीर्घविधौ कोटरादयो बोध्या इति इमे पञ्चकोटरादय इति भावः। नियमार्थः पूर्वपदात्संज्ञायामग इति णत्वस्य प्राप्तत्वात् पुनर्विधानं नियमायेति भावः। विध्यर्थः असंज्ञात्वात् गकारव्यवधानाच्च णत्वस्याप्राप्तेरिति भावः। अग्रेवणं राजदन्तादिषु परमिति परस्य पूर्वनिपातः। नायमव्ययीभावः अव्ययाघटितत्वात्, नपुंसकत्वात्सोरम् सोः

मिश्रकावणम्। सिध्रकावणम्। सारिकावणम्। कोटरावणम्। एभ्य एवेति किम्। असिपत्रवनम्। वनस्याग्रे अग्रेवणम्। राजदन्तादिषु निपातनात्सप्तम्या अलुक्। प्रातिपदिकार्थमात्रे प्रथमा। किंशुलुकागिरिः ॥ **१०४० वले** ।६।३।११८। वलप्रत्यये परे दीर्घः स्यात्संज्ञायाम् । कृषीवलः ।। **१०४१ मतौ बह्वचोऽनजिरादीनाम्** ।६।३।११९ ।अमरावती ।अनजिरादीनां किम्। अजिरवती। बह्वचः किम्। व्रीहिमती। संज्ञायामित्येव। नेह वलयवती ॥ **१०४२ शरादीनां च** ।६।३।१२०। शरावती ॥ **१०४३ इको वहेऽपीलोः**।६।३।१२१। इगन्तस्य धीर्घः स्याद्वहे। ऋषीवहम्। इकः किम्। पिण्डवहम्। अपीलोः किम्। पीलुवहम् **अपील्वादीनामिति वाच्यम्**॥ दारुवहम् ॥ **१०४४ उपसर्गस्य घञ्यमनुष्ये बहुलम्** ६।३।१२२। उपसर्गस्य बहुलं दीर्घः स्याद्घञन्ते परे नतु मनुष्ये ।परीपाकः ।परिपाकः ।अमनुष्ये किम् ।निषादः ॥ **१०४५ इकः काशे** ६।३।१२३। इगन्तस्योपसर्गस्य दीर्घः स्यात्काशे ।वीकाशः । नीकाशः ।इकः किम् ।प्रकाशः ॥ **१०४६ अष्टनः संज्ञायाम्** ६।३।१२५। उत्तरपदे दीर्घः ।अष्टापदम् ।संज्ञायां किम् ।अष्टपुत्रः ॥ **१०४७ चितेः कपि** ६।३।१२७। एकचितीकः ॥ **१०४८ नरे संज्ञायाम्** ६।३।१२९। विश्वानरः॥ **१०४९। मित्रे चर्षौ** ।६।३।१३०। विश्वामित्रः। ऋषौ किम्। विश्वमित्रो माणवकः॥ **शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः**॥ श्वादन्तः इत्यादि॥

---

प्राप्तिः कथमित्यत आह प्रातिपदिकार्थमात्रे प्रथमा इति समासावयवस्य वनशब्दोत्तरषष्ठ्यास्सुपो धात्विति लुकि अग्रेवण इति स्थिते पुनर्न शेषषष्ठी सम्बन्धस्य समासेनैवोक्तत्वात् नापि कारकविभक्तिः वनशब्दस्य क्रियान्वयित्वाभावादतः परिशेषात्प्रथमैवेति सोरुत्पत्तिस्सुसङ्गतेति भावः।

159. अष्टापदम् – अष्टसु पदमस्येत्यष्टापदम्। सुवर्णम् अष्टलोहेष्वपि प्रतिष्ठाशालीत्यर्थः। अष्टौ पादा अस्येत्यष्टापदः मृगविशेषश्च।

160. चितेः कपि–केवलाच्चितेः कबभावाच्चित्यन्तात्कपि दीर्घस्स्यादित्यर्थं मनसि कृत्वा तथैवोदाहरति एकचितीक इति एका चितिरस्येति बहुव्रीहौ कप्।

161. विश्वानरः–अग्नेर्जनकः कश्चन ऋषिः। नयति सर्वं स्ववशमिति नरः। विश्वस्य नरः (कर्मणि षष्ठी) विश्वानरः ।

162. विश्वस्य मित्रं विश्वामित्रः–कौशिकऋषिः मित्रशब्दस्य सुहृद्वाचकस्य क्लीबत्वेऽपि ऋषिविशेषणत्वात्पुंस्त्वम्।

**१०५०। प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि** ।८।४।५। एभ्यो वनस्य णत्वं स्यात्। प्रवणम्। कार्ष्यवणम्। इह षात्परत्वाण्णत्वम्॥ **१०५१। विभाषौषधिवनस्पतिभ्यः** ।८।४।६। एभ्यो वनस्य णत्वं वा स्यात्। दूर्वावणम्। दूर्वावनम्। शिरीषवनम्। शिरीषवणम्॥ **द्व्यच्त्र्यज्भ्यामेव**॥ नेह देवदारुवनम्॥ **इरिकादिभ्यः प्रतिषेधो वक्तव्यः**॥ इरिकावनम्। मिरिकावनम्। **१०५२। वाहनमाहितात्** ।८।४।८। आरोप्य यदुह्यते तद्वाचिस्थान्निमित्तात्परस्य वाहननकारस्य णत्वं स्यात्। इक्षुवाहणम्। आहितात्किम्। इन्द्रवाहनम्। इन्द्रस्वामिकं वाहनमित्यर्थः। वहतेर्ल्युटि वृद्धिरिहैव सूत्रे निपातनात्॥ **१०५३। पानं देशे** ।८।४।९। पूर्वपदस्थान्निमित्तात्परस्य पानस्य नस्य णत्वं स्याद्देशे गम्ये। क्षीरं पानं येषां ते क्षीरपाणा उशीनराः। सुरापाणाः प्राच्याः। पीयते इति पानम्। कर्मणि लुयुट्॥**१०५४ वा भावकरणयोः** ८।४।१०। पानस्येत्येव । क्षीरपाणम् । क्षीरपानम्॥ **गिरिनद्यादीनां वा**॥ गिरिणदी गिरिनदी। चक्रणितम्बा। चक्रनितम्बा॥ **१०५५ प्रातिपदिकान्तनुम्विभक्तिषु च** ८।४।११। पूर्वपदस्थान्निमित्तात्परस्य एषु स्थितस्य नस्य णो वा स्यात् । प्रातिपदिकान्ते, माषवापिणौ । नुमि, व्रीहिवापाणि। विभक्तौ, माषवापेण । पक्षे माषवापिनावित्यादि॥

---

163. पीयूक्षाभ्यः–पीयूक्षा इत्येकं पदम्। भिन्नपदत्वे पीयुपदात्परस्य् वनस्य णत्वं न स्यान्निमित्ताभावादिति। पीयूक्षावणमित्युदाहरणं बोध्यम्। निर्वणमन्तर्वणमित्यादीनि च।

164.वाहनमाहितात् – आहितादारोपितात् वाहनशब्दसाहचर्यात्तच्चारोपणमरोहणविषय एव। इदमेवाह आरोप्य यदुह्यत इति वाहनकर्तृकवहन क्रियाकर्मत्वं यत्रारोपितं तद्वाचिन इत्यर्थः।अरोपितारोहकवाचिस्थादिति यावत्। इक्षुवाहणम्। इक्षूणामचेतनत्वात्। स्वाभाविकमारोहणमिति आरोपितमेव इक्षूणां वाहनमिति षष्ठीतत्पुरुषः।

165. वाभाव–भावार्थकस्य करणार्थकस्य च पानस्येत्यर्थः। पाधातोर्भावे करणे यो ल्युट् तस्यानादेशे निष्पन्नस्य पानशब्दस्येति भावः। ननु किमनेन सूत्रेण निमित्तवत्पदभिन्नपदत्वाभाववद्वृत्तित्वान्नस्य रषाभ्यामित्यनेनैव सिद्धेरिति चेत्सत्यम्। विकल्पार्थमिदम्। तत्त्वबोधिन्यान्तु निमित्तवत्पदभिन्नप्रत्ययवृत्तेर्नस्य णत्वं न पुनरादेशवृत्तेरिति ल्युडादेशस्य अनो नकारोयमिति नात्र णत्वप्राप्तिरिति आदेशार्थोयमारम्भ इत्युक्तम्।

166. प्रातिपदिकान्तनुमोरप्राप्तविभाषा–विभक्तौ प्राप्तविभाषाप्रातिपदिकस्य पदत्वेन तदन्तस्य तदागमस्य वा नकारस्य पदवृत्तित्वात् रषाभ्यामित्यनेनैव णत्वसिद्धिर्विभक्तौ। तन्नकारस्य प्रत्ययवृत्तित्वात्। ननु गर्गभगिनीत्यत्र भगिन् शब्दादृन्नेभ्य इति ङीपि भगिनी

**उत्तरपदं यत्प्रातिपदिकं तदन्तस्यैव णत्वम्** ॥ नेह । गर्गाणां भगिनी गर्गभगिनी। अतएव नुम्ग्रहणं कृतम् । अङ्गस्य नुम्विधानात्तद्भक्तो हि नुम् न तूत्तरपदस्य। किंच । प्रहिण्वन्नित्यादौ हिवेर्नुमो णत्वार्थमपि नुम्ग्रहणम् । प्रेन्वनमित्यादौ तु क्षुभ्नादित्वान्न ॥ **युवादेर्न** ॥ रम्ययूना । परिपक्वानि । 'एकाजुत्तरपदे णः ३०७' नित्यमित्युक्तम् । वृत्रहणौ । हरिं मानयतीति हरिमाणी नुमि, क्षीरपाणि। विभक्तौ, क्षीरपेण रम्यविणा ॥ **१०५६ कुमति च** ८।४।१३। कवर्गवत्युत्तरपदे प्राग्वत् । हरिकामिणौ । हरिकामाणि। हरिकामेण ॥

---

इति रूपम्। भगिनो नकारः प्रातिपदिकान्त एव। भगिन्नित्यस्य तद्धितान्तत्वेन प्रातिपदिकत्वात् (भगोस्यास्तीति भगी अत इनि ठनौ इति इन्नन्तः) गर्गभगिणी इति स्यादिति शङ्कायामाह। उत्तरपदं यत्प्रातिपदिकमिति यदत्रोत्तरपदं भगिनी इति तन्न प्रातिपदिकम् लिङ्गविशिष्टत्वात्, यत्प्रातिपदिकं भगिन् इति न तदुत्तरपदम्। यच्चि भमिति भत्वात् । अतो न णत्वमत्रेति भावः। अन्यथा सूत्रे नुंग्रहणं व्यर्थम्। नुंनकारस्य प्रातिपदिकान्तस्थत्वात् । तथा हि व्रीहिवापाणि व्रीहिवापशब्दाज्जश्शसोश्शौ शेस्सर्वनामस्थानत्वेन नपुंसकस्य झलच इति नुमि दीर्घे व्रीहिवापान् इ समासत्वद्व्रीहिवापानिति प्रातिपदिकम् तदन्त एव नकार इति प्रातिपदिकान्तेत्यनेनैव णत्वं सिद्धमिति उत्तरपदं यत्प्रातिपदिकमित्युक्ते तु वापेत्यकारान्तमेव प्रातिपदिकमुत्तरपदम् न तु वापानिति नकारान्तं समासस्य प्रातिपदिकत्वेन केवलस्य वापानित्यस्य अप्रातिपदिकत्वात्। नुमोङ्गावयवत्वेन अनुत्तरपदत्वाच्च तद्भक्तः अङ्गावयव इत्यर्थः । उत्तरपदावयवस्तु नेति भावः। किञ्चेत्यादिना स्वमतमाह – किञ्च वस्तुतस्तु इत्यर्थः। प्रहिण्वन् प्रपूर्वकस्य हि विधातोरिदितोनुम्धातोरिति नुमि प्रहिन् व्-ततश्शतृप्रत्ययः-उगिदचामिति नुं संयोगान्तलोपः प्रहिन् व् अन्। अत्र नुंनकारस्य प्रातिपदिकान्तस्थत्वाभावात् (प्रहिन् व् इत्यस्य धातुत्वेन अधातुरिति प्रातिपदिकत्वाभावात् नकारस्य अन्त्यत्वाभावाच्च) प्रातिपदिकान्तेति न णत्वं सिद्ध्यतीति नुम्ग्रहणमावश्यकमेवेति नुमो वैयर्थ्याभावान्न पूर्वोक्तज्ञापकत्वसिद्धिरिति भावः। नन्वेवं नुमा उत्तरपदं यत्प्रातिपदिकं तदन्तस्यैव णत्वमित्यस्य अज्ञापितत्वे गर्गभगिनी इत्यत्र णत्वं स्यादिति चेन्मैवम्। उत्तरपदं यत्प्रातिपदिकं तदन्तस्यैव णत्वमिति नियम आवश्यक एव। तत्र च नियमेन नुम्ग्रहणं ज्ञापकम्। किन्तु व्याख्यानमेव शरणमिति कौमुदीकाराशयः। नन्वेवं प्रपूर्वकस्य इविधातोर्नुमि प्रेन् व् तस्माल्ल्युटि प्रेन्वनम्। अत्र नुमो णत्वं स्यादत आह। क्षुभ्नादित्वान्नेति।

167. कुमति च–कुः कवर्गः अस्मिन्नस्तीति कुमत् तस्मिन्नुत्तरपदे प्रातिपदिकान्तनुंविभक्तिस्थस्य नस्य णत्वं नित्यं स्यात्। एकाजुत्तरपदे ण इति सूत्रादुत्तरपदे ण इति प्रातिपदिकान्तसूत्रं सर्वञ्च रषाभ्यामित्यतो न इति च अत्रानुयन्ति। हरिं कामयते

**१०५७ पदव्यवायेऽपि** ८।४।३८। पदेन व्यवधानेऽपि णत्वं न स्यात् । माषकुम्भवापेन । चतुरङ्गयोगेन ॥ **अतद्धित इति वाच्यम्** ॥ आर्द्रगोमयेण । शुष्कगोमयेण ॥ **१०५८ कुस्तुम्बुरूणि जातिः** ६।१।१४३। अत्र सुण्निपात्यते । कुस्तुम्बुरु धान्याकम् । क्लीबत्वमतन्त्रम् । जातिः किम् । कुतुम्बुरूणि । कुत्सितानि तिन्दुकीफलानीत्यर्थः। **१०५९ । अपरस्पराः क्रियासातत्ये** ।६।१।१४४। सुण्निपात्यते। अपरस्पराः सार्था गच्छन्ति। सततमविच्छेदेन गच्छन्तीत्यर्थः। क्रियेति किम्। अपरपरा गच्छन्ति। अपरे च परे च सकृदेव गच्छन्तीत्यर्थः॥

---

हरिकामी। औङि हरिकामिन् औ प्रातिपदिकान्तः कुमदुत्तरपदस्थः नकारः तस्य णत्वं हरिकामिणौ। हरौ कामो यस्य तद्धरिकामं ततश्शौ नुमि हरिकामाणि। हरौ कामः हरिकामः। तेन हरिकामेण। टा ङसि ङसामिनेति विभक्तिस्थनकारः।

168. पदव्यवायेऽपि–न भा भू पू इत्यारभ्य णत्वनिषेधप्रकरणम्। णत्वनिषेधस्थलसमुच्चयार्थमपि ग्रहणम्। प्रातिपदिकान्तसूत्रेण णत्वप्राप्तौ तन्निषेधः। तथा हि माषकुम्भवापेन माषेति पूर्वपदं तत् स्थान्निमित्तात् षकाराद्व्यवहितपररस्य विभक्तिस्थस्य नस्य णत्वम् । अट्कुप्वाङ्नुम्व्यवायेऽपीति अडादिभिन्नव्यवधानाभावोऽत्र वर्तत एव। न च विभक्तिसन्निहितपदापेक्षया पूर्वपदस्थान्निमित्तादेव णत्वमिति पदव्यवाये णत्वप्राप्तिर्नेति वाच्यम्। अव्यवहितपूर्वपदस्थस्यैव ग्रहणमिति नियमाभावेन व्यवहितपूर्वपदस्थस्यापि ग्रहणात्। यद्वा पूर्वपदं समासप्रथमावयवे रूढमिति बहुपदसमासोत्तरविभक्तिस्थस्यापि पूर्वपदस्थनिमित्तात्परत्वं सम्भवत्येवेति न कापि क्षतिः निमित्तनिमित्तमतोः पदयोर्मध्ये पदे सति णत्वं नेति सूत्रार्थः न च माषकुम्भवापे नेत्यत्र निमित्तिमती विभक्तिरेव न तु पदमिति णत्वं स्यादिति वाच्यम्। विभक्तिवृत्तित्वेऽपि तस्य विभक्तिसन्निहितपदवृत्तित्वाभ्युपगमात् विभक्त्यन्तस्य पदत्वेन प्रकृतिप्रत्ययान्यतरवृत्तेरपि नस्य पदवृत्तित्वाव्यभिचाराच्च। वापेनेत्यत्र नकारः विभक्तिस्थोऽपि पदस्थ एवेति। तत्त्वबोधिन्यान्तु निमित्तनिमित्तिनोर्मध्ये पदे सतीत्युक्तं तस्याप्ययमेवाभिप्रायः। अन्यथा माषवापेणेत्यत्रापि णत्वं माभूत् निमित्तस्य षस्य निमित्तिनः इनस्य च वापपदेन व्यवधानात् यद्वा यथाश्रुताभिप्रायोऽपि साधुरेव। वापेत्यस्य इने परतः भत्वेन पदत्वाभावान्न पदव्यवधानं तत्रेति णत्वस्य सुलभत्वात् । नन्वेवं माषकुम्भवापेनेत्यत्रापि णत्वं स्यात् निमित्तनिमित्तिनोष्षकारनकारयोर्मध्ये व्यवधायकयोः कुम्भवापयोर्वापस्य भत्वेन अपदत्वात् कुम्भस्य स्वादिष्विति पदत्वाभावात् सुप्तिङन्तलक्षणपदत्वाभावाच्च। न च प्रत्ययलक्षणन्यायेन सुबन्तत्वलक्षणं पदत्वमस्तीति वम्यम् उत्तरपदत्वे चेति तन्निषेधात्। माषाणां कुम्भः माषकुम्भः इति समासे कुम्भस्य उत्तरपदत्वात् इति चेत्, अत एव कुम्भस्य वापः कुम्भवापः माषाणां कुम्भवापः इति नव्यैर्विगृहीतमिति तत्त्वबोधिनी। कुम्भवापि इति समासे कुम्भपदस्य

**१०६० गोष्पदं सेवितासेवितप्रमाणेषु** ।६ ।१ ।१४५। सुट् सस्य षत्वं च निपात्यते । गावः पद्यन्ते ऽस्मिन्देशे स गोभिः सेवितो गोष्पदः असेविते, अगोष्पदान्यरण्यानि । प्रमाणे, गोष्पदमात्रं क्षेत्रम् । सेवितेत्यादि किम् । गोः पदं गोपदम् ॥ **१०६१ आस्पदं प्रतिष्ठायाम्** ६ ।१ ।१४६ । आत्मयापनाय स्थाने सुट् निपात्यते । आस्पदम् । प्रेति किम् । आपदापदम् ॥ **१०६२ आश्चर्यमनित्ये** ६ ।१ ।१४७ । अद्भुते सुट्। आश्चर्यं यदि स भुञ्जीति। अनित्ये किम्। आचर्यं कर्म शोभनम्॥ **१०६३ । वर्चस्केऽवस्करः** ।६ ।१ ।१४८ । कुत्सितं वर्चो वर्चस्कम्, अन्नमलं तस्मिन् सुट्। अवकीर्यत इत्यवस्करः। वर्चस्के किम्। अवकरः॥ **१०६४ अपस्करो रथाङ्गम्** ६ ।१ ।१४९ । अपकरोऽन्यः **१०६५ विष्किरः शकुनौ वा** ६ ।१ ।१५० । पक्षे विकिरः । वावचनेनैव सुड्विकल्पे सिद्धे विकिरग्रहणं तस्यापि शकुनेरन्यत्र प्रयोगो माभूदिति वृत्तिस्तन्न । भाष्यविरोधात् । **१०६६ । प्रतिष्कशश्च कशेः** ६ ।१ ।१५२ । कश गतिशासनयोरित्यस्य प्रतिपूर्वस्य पचाद्यचि सुट् निपात्यते षत्वं च । सहायः पुरोयायी वा प्रतिष्कश इत्युच्यते । कशे किम् । प्रतिगतः कशां प्रतिकशोऽश्वः । यद्यपि कशेरेव कशा तथापि कशेरिति धातोर्ग्रहणमुपसर्गस्य प्रतेर्ग्रहणार्थम् । तेन धात्वन्तरोपसर्गान्न ॥

---

पूर्वपदत्वेन उत्तरपदत्वे चेति निषेधाभावात्प्रत्ययलक्षणन्यायेन पदत्वमस्त्येवेति भावः। अपदादिविधावित्यस्य पदान्तविधावित्यर्थमाश्रित्य प्रत्ययलक्षणनिषेधः नेति प्राचां मतमाश्रित्य माषकुम्भं वपतीति तत्त्वबोधिन्याम् विगृहीतम्।

169. गोष्पदं ननु गोष्पदानि न भवंतीत्यगोष्पदानीति सिध्यत्येवेति असेवितग्रहणं व्यर्थमत आह तत्त्वबोधिनी गवां संचार इत्यादिना गोवश्यकमिति भावः।

170. प्रतिष्ठायां आत्मयापनाय यत्स्थानं तत्प्रतिष्ठा तस्यां वाच्यायामित्यर्थः। आपदादापदमिति पाठः आङ्मर्यादाभिविध्योरिति समासः।

171. अनित्ये अद्भुते इत्यर्थः। आश्चर्यमित्यद्भुतार्थे निपात्यत इति यावत्।

172. अवकरः धान्यानां विक्षेपणम्। वर्चस्कार्थे अवस्कर इति निपात्यत इत्यर्थः।

173. विष्किरश्शकुनिर्वा इत्येव सूत्रपाठः। वा ग्रहणात्पक्षे विकिरः। अत्र विष्किरश्शकुनिर्विकिरो वा इति वृत्तिग्रन्थे पाठः तमनुवदति, वा वचनेनेत्यादिना तस्यापि विकिरशब्दस्य शकुनावेव प्रयोगः नत्वन्यत्रेति नियमार्थं विकिरग्रहणमिति वृत्तिकाराशयः।

174. प्रतिष्कशश्च कशेः–कशधातोरिका निर्देशः कशेरुपसर्गो यः प्रतिः तस्य सुट् षत्वं च स्यात्पचाद्यचि। इति सूत्रार्थः। प्रतिष्कश इति निपातनाल्लब्धोऽयमर्थः। ननु

**१०६७ प्रस्कण्वहरिश्चन्द्रावृषी** ६ ।१ ।१५३ । हरिश्चन्द्रग्रहणममन्त्रार्थम् । ऋषीति किम् । प्रकण्वो देशः । हरिचन्द्रो माणवकः ॥**१०६८ मस्करमस्करिणौ वेणुपरिव्राजकयोः** ६ ।१ ।१५४ । मकरशब्दोऽव्युत्पन्नस्तस्य सुडिनिश्च निपात्यते । वेण्विति किम् । मकरो ग्राहः । मकरी समुद्रः ॥**१०६९ । कास्तीराजस्तुन्दे नगरे** ।६ ।१ ।१५५ ईषत्तीरमस्यास्तीति कास्तीरं नाम नगरम् । अजस्येव तुन्दमस्येति अजस्तुन्दं नाम नगरम् । नगरे किम् । कातीरम् । अजतुन्दम् ॥ **१०७० कारस्करो वृक्षः** ६ । १ ।१५६ । कारं करोतीति कारस्करो वृक्षः । अन्यत्र कारकरः । केचित्तु कस्कादिष्विदं फठन्ति न सूत्रेषु ॥**१०७१ । पारस्करप्रभृतीनि च संज्ञायाम्** ।६ ।१ ।१५७ । एतानि ससुट्कानि निपात्यन्ते नाम्नि । पारस्करः । किष्किन्धा ॥ **ग. तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च ॥**

---

प्रतिष्कश इति निपात्यताम् किं कशिग्रहणेन अत आह प्रतिकशो श्व इति। अत्र प्रतिः न कशेरुपसर्गः कशिक्रियाऽयुक्तत्वात्। किन्तु प्रतिगत इति गमेरुपसर्गः। गमिक्रियायुक्तत्वादिति भावः। उपसर्गस्य प्रतेः कशधातूपसर्गस्य प्रतेरित्यर्थः।

175. ऋषी। मुनी इत्यर्थः। न तु वेदाविति। असम्भवादप्रकरणाच्च। प्रस्कण्व इति कश्चन ऋषिः। हरिश्चन्द्रो यद्यपि राजा तथाऽपि राजर्षित्वेन ऋषिरपि स भवति। यद्वा हरिश्चन्द्रो नाम कश्चन ऋषिरप्यस्तीति बोध्यम्। हरिचन्द्रः कस्य चिच्छिशोर्नाम।

176. कारकरः कर एव कारः। बलिः तं करोतीति ददातीति कारकरः।

177. तद्बृहतोरिति करपतिशब्दयोः क्रमेण तद्बृहच्छब्दाभ्यां परयोस्सतोः समासाभ्यां क्रमेण चोरदेवतयोर्वाच्ययोः करपत्योस्सुडागमः। तद्बृहतोस्तु तलोपश्च भवति। तलोप इत्यनेन तच्छब्दाद्यवयवस्य तकारस्यापि लोपस्स्यादविशेषादिति मत्वाऽहतत्पूर्वमित्यादि। सुट् द् तलोप इति स्थिते दस्य चर्त्वे सुट् त् तलोपः। झरो झरि सवर्णे इति तकारलोपः सुट् तलोप इति रूपम्। दकारतकारयोर्लोप इति तलोपश्चेत्यस्यार्थः। सुट् तलोपश्चेत्यत्र तकारात्पूर्वं कृतचर्त्वोदकारोस्तीति ज्ञेयमिति तदर्थः। सुट् तलोपश्चेति तकारद्वयवत्पाठस्तु सुगमः। अन्यथा चर्त्वलोपेन दकारो बोध्य इति वक्तव्यं स्यात्। कृतचर्त्वस्यापि दस्य झरो झरीति लोपात्। चर्त्वस्याप्यग्रहणात् समुदायोपाधिः। समुदाययोस्समस्तयोस्तस्करबृहस्पत्योः पदयोः उपाधिर्विशेषणम्। चोरदेवतावाचकत्वरूपं बोध्यमित्यर्थः। तेन केवलाभ्यां तद्बृहद्भ्यां करपतिभ्यां वा न चोरदेवताप्रतीतिरिति सिद्धं तस्य करस्तत्करः। चोरेति किं तत्करः बृहतां वाचां पतिः बृहस्पतिः। देवगुरुः। देवतेति किं? बृहच्चासौ पतिश्च बृहत्पतिः

तात्पूर्वं चर्त्वेन दकारोऽपि बोध्यः। तद्बृहतोर्दकारतकारौ लुप्येते। करपत्योस्तु सुट्। चोरदेवतयोरिति समुदायोपाधिः। तस्करः। बृहस्पतिः॥। **ग. प्रायस्य चित्तिचित्तयोः** ॥ प्रायश्चित्तिः। प्रायश्चित्तम्। वनस्पतिरित्यादि। आकृतिगणोऽयम्॥
**इति समासाश्रयविधिप्रकरणम्**॥

## तद्धितेष्वपत्याधिकारप्रकरणम् २६

**१०७२। समर्थानां प्रथमाद्वा** ।४।१।८२। इदं पदत्रयमधिक्रियते। प्राग्दिश इति यावत्। सामर्थ्यं परिनिष्ठितत्वम्। कृतसंधिकार्यत्वमिति यावत्॥

---

महाराज इत्यर्थः। प्रायस्येति वार्तिके सुटि एव संबंधः न तु तलोपस्य । असंभवात्। प्रायस् चित्तिः स्तोश्चुनाश्चुरिति श्चुत्वेन शः प्रायश्चित्तिः। पारस्करप्रभृतित्वाद्वनस्पतिरिति वनस्य पतिरिति विग्रहः। निपातनात्सुट् वृक्षजातिविशेषः। पुष्पं विना ये फलन्ति ते वनस्पतयः। न्यग्रोधोदुम्बरादयः। आकृतिगणोऽयम्। पारस्करादिगण आकृतिगण इत्यर्थः।

इति समासाश्रयविधयः

समासप्रकरणम् सविशेषं संपूर्णम्

### शरद्रात्रौ तद्धिता व्याख्यायन्ते

1. **तद्धिताः**-४-५-२६ अधिकारोयमापञ्चमपरिसमाप्तेः इति स्त्रीप्रत्ययेषूक्तम्। तद्धितेष्वचामादेरित्यादिकं तद्धिताधिकारस्य फलम्। समर्थः पदविधिरिति समर्थपरिभाषा तद्धितेष्वप्यतितिष्ठते तद्धितानां पदविधित्वात्, न च सुबुत्पत्तेः प्रागेव तद्धितप्रत्ययोणादिर्विधीयत इति तद्धितेषु पदविधिर्नास्तीति वाच्यम् (सुप्तिङन्तस्य पदत्वात्) घकालतनेष्विति घे तने च परतस्सप्तम्या अलुग्विहितः सुबुत्पत्तेः प्रागेव तद्धिते घादौ विहिते सति तद्धितान्तस्य प्रतिपदिकत्त्वेन तस्मादेव सुप् न तु तद्धितप्रकृतिभूतादिति, सुप एवाभावे कथं तस्य अलुक्संघटते इतीदमेव ज्ञापकं सुबुत्पत्त्यनन्तरमेव तद्धितोत्पत्तिरिति तस्मादुपपन्नं तद्धितेषु पदविधित्वम्। अत्र समर्थपरिभाषोपस्थितिफलन्तु वस्त्रमुपगोरपत्यं चैत्रस्येत्यत्र उपगुशब्दादपत्यार्थेऽणि औपगवमिति माभूदिति, (वस्त्रेणै उपगोस्सम्बन्ध इति तयोरेव सामर्थ्यं न तूपग्वपत्ययोरिति)। नन्वेवं समर्थपरिभाषयैव सिद्धे समर्थानामिति पुनस्समर्थपदाधिकारेण किमित्यत आह-परिनिष्ठितत्वमिति। समर्थानामिति पञ्चम्यर्थे षष्ठी । अत एव समर्थादित्युचितं वक्तुमिति तत्त्वबोधिनी।

**१०७३। प्राग्दीव्यतोऽण्** ।४।१।८३। 'तेन दीव्यति १५५०' इत्यतः प्रागणधिक्रियते॥ **१०७४। अश्वपत्यादिभ्यश्च** ।४।१।८४। एभ्योऽण् स्यात् प्राग्दीव्यतीयेष्वर्थेषु। वक्ष्यमाणस्य ण्यस्यापवादः॥ **१०७५। तद्धितेष्वचामादेः** ।७।२।११७। ञिति णिति च तद्धिते परेऽचामादेरचो वृद्धिः स्यात्॥ **१०७६। किति च** ।७।२।११८। किति तद्धिते च तथा। अश्वपतेरपत्यादि आश्वपतम्। गाणपतम्। गाणपत्यो मन्त्र इति तु प्रामादिकमेव॥ **१०७७। दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः** ।४।१।८५। दित्यादिभ्यः पत्युत्तरपदाच्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यादणोऽपवादः। दैत्यः। अदितेरादित्यस्य वा आदित्यः। प्राजापत्यः॥ यमाच्चेति काशिकायाम्॥ याम्यः॥ **पृथिव्या ञाञौ**॥ पार्थिवा। पार्थिवी॥ **देवाद्यञञौ**॥ दैव्यम्। दैवम्॥ **बहिषष्टिलोपो यञ्च**॥ बाह्यः॥ **ईकक्च**॥ बाहीकः॥ **स्थाम्नोऽकारः**॥ अश्वत्थामः। पृषोदरादित्वात्सस्य तः॥ **भवार्थे तु लुग्वाच्यः**॥ अश्वत्थामा॥ **लोम्नोऽपत्येषु बहुषु**॥ अकारः बाह्वादीञोऽपवादः। उडुलोमाः। उडुलोमान्। बहुषु किम्। औडुलोमिः॥

---

2. प्राग्दीव्यतीयेषु तेन दीव्यतीत्यतः प्राग्विद्यमाना ये अपत्यादयोऽर्थास्तेषु।

3. अश्वपतेरपत्यादि–आदिना अश्वपतिना दृष्टं साम आश्वपतमित्यादीनां सङ्ग्रहः। आश्वपतं आश्वपतेरपत्यमिति लौकिकविग्रहः। अश्वपति अस् अण् इत्यलौकिकः। सुपो धात्विति सुब्लुकि यस्येति चेति इवर्णलोपे आदिवृद्धौ आश्वपत ततस्सोरम्।

4. ञा ञौ, ञश्च अञ् चेति द्वन्द्वः। ञ इति साकारस्य ञ् कारस्य ग्रहणम् अदन्तोऽञप्रत्यय इत्यर्थः। ञ्कारस्य इत्संज्ञया लोपः। अ इति शिष्यते। अञ् प्रत्ययेऽपि ञ्कारस्य लोपे अ इति शिष्यते। ञानुबन्धफलन्तु ञिति णितीति वृद्धिः टिड्ढाणञ् इति ङीबर्थमञ् इति पृथक्प्रत्ययनिर्देशः। ञप्रत्यये कृते तु अदन्तत्वाट्टाप्। एवं फलभेदात्प्रत्ययभेदः। (ञाञौ इति प्रत्ययद्वयनिर्देशः) उपपन्नः। एतत्सूचनायैव पार्थिवा पार्थिवी इति स्त्रीलिङ्गोदाहरणे पृथिवी अस् ञ, सुब्लुक्–पृथिवी–अ–अचामादेरचो ऋवर्णस्य वृद्धिः। आर् (अत एव तद्धितेष्विति सूत्रे अचां ग्रहणम्। तदभावे आदेरचो वृद्धिस्स्यादित्युक्ते पृथिवीशब्दे आदावचोऽभावेन वृद्धिर्न स्यात्। अचां मध्ये य आदिरच् इत्युक्ते तु ऋवर्णोऽत्र आदिरच्भवत्येवेति) पार्थिवी–अ–यस्येति च इति लोपः। पार्थिव टाप् सवर्णदीर्घः पार्थिवा, अञ् कृते तु पार्थिव ई यस्येति चेति अणोऽकारलोपः। न च लक्ष्ये लक्षणन्यायविरोधः पृथिवीशब्दगते कारस्य पूर्व लोपः। अणोकारस्याधुनेति लक्ष्यभेदात् पार्थिवी यञ् च आञ् च यञञौ स्थाम्नोकारः स्थामन्नन्तात्समर्थादपत्याद्यर्थेषु अप्रत्ययस्यादित्यर्थः। अश्वस्थाम्नोऽपत्यादि अश्वत्थामः। ञ्काराद्यनुबन्धाभावान्नादिवृद्धिः। ननु स्थाम्नस्सकारस्य कथं तादेशोऽत आह पृषोदरादित्वादिति। अप्रत्यये कृते नस्तद्धित इति टिलोपः। अश्वत्थामः बाह्वादीञोपवादः। बाह्वादिभ्यश्चेति उडुलोमन्शब्दादपत्यार्थे इञ् औडुलोमिरिति रूपम्। तमिञं बाधित्वा बहुत्वे अकारः अपवादत्वञ्चास्य अकारस्य विशेषशास्त्रत्वात्। एकद्विबह्वर्थसाधारण्येन इञ् विहितः बह्वर्थ एव अकारो विहित इति विशेषशास्त्रमिदम्।

**गोरजादिप्रसङ्गे यत्** ॥ गव्यम्। अजादिप्रसङ्गे किम्। गोभ्यो हेतुभ्य आगतं गोरूप्यम्। गोमयम्॥ **१०७८। उत्सादिभ्योऽञ्** ।४।१।८६। औत्सः॥ अग्निकलिभ्यां ढक् वक्तव्यः॥ अग्नेरपत्यादि आग्नेयम्। कालेयम्॥ **इत्यपत्यादिविकारान्तार्थ-साधारणाः प्रत्ययाः॥ १०७९। स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्** ।४।१।८७। 'धान्यानां भवने १८०२' इत्यतः प्रागर्थेषु त्रीपुंसाभ्यां क्रमान्नञ्स्नञौ स्तः। स्त्रैणः। पौंस्नः। वत्यर्थे न। 'स्त्री पुंवच्च ९३२' इति ज्ञापकात्। स्त्रीवत्। पुंवत्॥

---

5. गोरजादिप्रसङ्गे यत् गोशब्दात्प्राग्दीव्यतीयेष्वर्थेषु अच् (प्रत्याहारः) आदौ येषान्तेषामजादीनां प्रत्ययानां अण् इञ् इत्यादीनामित्यर्थः। प्रसङ्गे सति प्रसक्तौ सत्याम्। प्राप्ताविति यावत् यत्प्रत्ययस्स्यात् अजादिप्रत्ययान् बाधित्वेत्यर्थः। गोरिदं तस्येदमित्यर्थेऽणि प्राप्ते तं बाधित्वा यत् "वान्तो यि प्रत्यये" गव्यम्। गोः पुरीषं गोमयम्। पुरीषार्थे मयट्। अत्र मयटो हलादेः प्रत्ययस्य प्राप्तिरिति अजादिप्रसङ्गाभावान्न यत् । गोर्यदित्युक्ते तु स्यादेव यदत्रापीति भावः वार्तिके सूत्रोक्तिरिति तत्त्वबोधिनी। कवेर्ढक् इतीदं यदि वार्तिकं तर्हि सूत्रपाठे सूत्रत्वेन किमिति पठितमत आह। प्रतारणार्थेति वञ्चनायेत्यर्थः। वार्तिकमपि सूत्रत्वेन सूत्रपाठे मीमांसकवञ्चनार्थमुपन्यस्तमिति भावः। आग्नेयम्। अग्नि अस् ढक्। सुब्लुक् आयनेयीनिति ढकारस्य एय् इत्ययमादेशः। ढकः कित्वादादिवृद्धिः आग्नि एय्। अ यस्येति च आग्नेय (अयमन्ते श्रूयमाणोकारः ढप्रत्ययावयव एव। ढु इत्यस्य एय् इत्यस्मिन्नादेशे अकारस्य शिष्टत्वात्) इत्यपत्थादिवाकारान्तार्थसाधारणाः प्रत्ययाः। अपत्यमादिर्येषान्ते अपत्यादयः विकारोन्तः एषान्ते विकारान्ताः। ते च ते अर्थाः प्राग्दीव्यतीया अर्था इति यावत्। तेष्वर्थेषु साधारणाः सामान्यतः प्राप्ताः प्रत्ययाः अणि आदयः समाप्ताः।

6. स्त्रीपुंसाभ्याम्। अचतुरविचतुरसुचतुरस्त्रीपुंसेति निपातनादजन्तो द्वन्द्वः। ततः पञ्चम्यां भ्यामिति कृते, सुपि चेति दीर्घः। स्त्रीपुंसाभ्यां शब्दस्वरूपयोरेवेह ग्रहणं व्याख्यानात्। नञस्नञोः ञित्त्वं तद्धितेष्विति वृद्ध्यर्थं न स्न इति शिष्येते। रषाभ्यामिति णत्वम्। स्त्रैणः स्त्रीणां समूहः। स्त्रियोऽपत्यं स्त्री अस्य देवता स्त्रिया दृष्टं साम। स्त्रिया इदमित्यादयो विग्रहाः। एवं पौंस्न इत्यादयोऽप्यूह्याः। पुम् स् शब्दात्समूहाद्यर्थेषु स्नञि कृते पुम् स् स्न स्ने परतः स्वादिष्विति पदत्वात्संयोगान्तलोपेन पुंसस्सस्य लोपः पुम्स्न वृद्धिः पौम्स्न मोऽनुस्वारः न भवति, संयोगान्तलोपस्यासिद्धत्वेन सान्तत्वात् नश्चापदान्तस्ये झलि अनुस्वारः। पौंस्नः स्नञमविधाय उभयत्रापि नञ् कृते तु पौन्न इत्यनिष्टरूपं स्यादिति बोद्धव्यम्।

**१०८०। द्विगोर्लुगनपत्ये** ।४।१।८८। द्विगोर्निमित्तं यस्तद्धितोऽजादिरनपत्यार्थः प्राग्दीव्यतीयस्तस्य लुक् स्यात्। पञ्चसु कपालेषु संस्कृतः पुरोडाशः पञ्चकपालः। द्विगोर्निमित्तस्येति किम्। पञ्चकपालस्येदं खण्डं पाञ्चकपालम्। अजादिः किम्। पञ्चगर्गरूप्यम्। अनपत्ये किम्। द्वयोर्मित्रयोरपत्यं द्वैमित्रिः॥ **१०८१। गोत्रेऽलुगचि** ।४।१।८९। अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्यालुक् स्यात्। गर्गाणां छात्राः। 'वृद्धाच्छः १३३'॥ **१०८२। आपत्यस्य च तद्धितेऽनाति** ।६।४।१५१। हलः परस्यापत्ययकारस्य लोपः स्यात्तद्धिते परे न त्वाकारे। गार्गीयाः। प्राग्दीव्यतीये किम्। गर्गेभ्यो हितं गर्गीयम्। अचि किम्। गर्गेभ्य आगतं गर्गरूप्यम्॥

---

7. द्विगोर्लुदनपत्ये तद्धिता इत्यधिकारस्यात्र षष्ठ्येकवचनान्तत्वेन विपरिणामः अचीत्युत्तरसूत्रादपकृष्यते। प्राग्दीव्यतोऽण् इति सूत्रात्प्राग्दीव्यत इत्यस्यान्वयः। तस्य च तद्भव इत्यर्थे लक्षणा। प्राग्दीव्यतीयस्येति द्विगोरिति हेतौ षष्ठी। अनपत्येऽर्थे वर्तमानस्य द्विगुनिमित्तस्य अजादेस्तद्धितस्य प्राग्दीव्यति यस्य लुक्स्यादित्यर्थः। तद्धितार्थोत्तरपदसमाहारे चेति तद्धितार्थे विषये यस्सङ्ख्यापूर्वस्समासस्तस्य द्विगुत्वात्तद्धितस्य द्विगुनिमित्तत्वं पञ्चकपालः संस्कृतं भक्षा इति सप्तम्यन्तादण् पञ्चन् सुप् कपाल सुप् अण् इत्यलौकिके विग्रहे सुब्लुकि पञ्चन् कपाल अ नलोपः प्रातिपदिकान्तस्येति । अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वान्न लोपः। न चोत्तरपदत्वे चेति तन्निषेधश्शङ्क्यः। पूर्वपदत्वात् प्रकृतसूत्रेण अणो लक्। पञ्च कपाल। न च लुकः प्रागेव अणो णित्त्वादाद्यचो वृद्धिस्स्यादिति वाच्यम् । अकृतव्यूहपरिभाषया निमित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्यं न कुर्वन्तीति सिद्धत्वात् द्विगोरित्यस्य हेतुषष्ठीत्वमनुक्त्वा पञ्चम्यन्तत्वमाश्रित्य द्विगोः परस्य तद्धितस्येति व्याख्याने पाञ्चकपालमिति न सिद्ध्येत् । अणो लुक्यादिवृद्ध्यश्रवणस्यौचित्यात् पञ्चानां कपालानां समाहारः पञ्चकपालमिति समाहारे द्विगुः। यद्वा पञ्चसु कपालेषु संस्कृत इति तद्धितार्थविषयकद्विगुः। ततस्तस्येदमित्यणि अणोऽस्यद्विगुनिमित्तत्वाभावान्न लुक् संस्कृतार्थकस्य तद्धितस्याणो ह्यत्र द्विगुनिमित्तत्वं न तु तस्येदमित्यणः द्विगोः परत्वेनैव तस्येदमित्यणो विधानात् द्वैमित्रिः। अत इञ् । पञ्चभ्यः गर्गेभ्य आगतं पञ्चगर्गरूप्यम् तद्धितार्थविषय कोयं द्विगुः।

8. आपत्यस्य अपत्यार्थे विहितस्य प्रत्ययस्य अवयवो यो यकारस्तस्य लोपः। अपत्यस्येदमापत्यं तस्येति सा अपत्यप्रत्ययसम्बन्धिनो यकारस्येत्यर्थः। न आत् अनात् तस्मान्नुडचीति नुडागमः। तपरस्तत्कालस्य नञः प्रसज्यप्रतिषेधोऽर्थः। आतिनेत्यर्थः। अनातीत्यकारप्रश्लेषस्सुत्यज एव न आतीति भेदेन सर्वेष्टसिद्धेः। गार्गीयाः गर्गस्य गोत्रापत्यं

**१०८३। यूनि लुक्** ।४।१।९०। प्राग्दीव्यतीये अजादौ प्रत्यये विवक्षिते युवप्रत्ययस्य लुक् स्यात्। ग्लुचुकस्य गोत्रापत्यं ग्लुचुकायनिः। वक्ष्यमाणः फिन्। ततो यून्यण्। ग्लौचुकायनः। तस्य छात्रोऽपि ग्लौचुकायनः। अणो लुकि वृद्धत्वाभावाच्छो न॥ **१०८४। पैलादिभ्यश्च** ।२।४।५०। एभ्यो युवप्रत्ययस्य लुक्। 'पीलाया वा ११२१' इत्यण्। तस्मात् 'अणो द्व्यचः ११८०' इति फिञ्। तस्य लुक्। पैलः पिता पुत्रश्च॥ (ग) **तद्राजाच्चाणः**॥'द्व्यञ्मगध-११८८' इत्यणन्तादाङ्गशब्दात् 'अणो द्व्यचः ११८०' इति फिञो लुक्। आङ्गः पिता पुत्रश्च॥

---

गार्ग्यः गर्गादिभ्यो यञ् ञित्वादादिवृद्धिः गर्गस्य गोत्रापत्यानीति विग्रहे तु गर्ग यञ् इति स्थिते यञञोश्चेति लुक् गर्गाः। एवं बहुत्वे प्राप्तस्य यञञोरिति गोत्रप्रत्ययलुकः गोत्रेऽलुगचीत्यनेन निषेधः। गर्गाणां छात्रा इति लौकिकः विग्रहः। गर्ग ङस् यञ् (आम्) इत्यलौकिकः। अत्र तस्येदमित्यणि चिकीर्षिते यञोऽलुक् सुब्लुक् यञोऽलुक्यादिवृद्धिः यस्येति चेत्यवर्णलोपः गार्ग्य आम् वृद्धिर्यस्याचामादिरिति वृद्धत्वाद्वृद्धाच्छ इति छप्रत्ययः। गार्ग्य आम् छ सुब्लुक् आयनेयीय इति छस्य ईयादेशः। गार्ग्य ईय यस्येति चेत्यकारलोपः। आपत्यस्य चेति यकारलोपः। गार्गीय जस् गार्गीयाः। अजादौ प्राग्दीव्यतीये परे सति गोत्रप्रत्ययस्यालुगिति यद्युच्येत तर्हि तस्येदमित्यणि कृते गर्ग ङस् यञ् आम् अण् इति स्थिते सुब्लुकि यञोऽलुकि अलोपयलोपवृद्धिषु गार्गाः इति स्यात्। तस्येदमित्यर्थे अणः कृतत्वेन छस्यानवकाशात्। न च परत्वाच्छ एव स्यादिति वाच्यम्। अणि कृत एव यञोऽलुक् यञोऽलुक्येवादिवृद्धिः। आदिवृद्धावेव वृद्धाच्छः इति अण्विधेः प्राग्वृद्धत्वाभावेन छस्याप्रप्तेः। अजादौ विवक्षित इत्युक्तौ तु अण्विवक्षातः प्राग्वृद्धत्वाभावेऽपि अण्विधेः प्रागेव वृद्धत्वं वर्तत इति अणं बाधित्वा परत्वाच्छ एव स्यादिति। (पूर्वं विवक्षा पश्चाद्विधिरिति विधावेव परत्वान्तरंगत्वादिप्रयुक्तदौर्बल्यप्राबल्यविशेषः) एतेन अणो लुकि वृद्धत्वाभावाच्छो नेति वक्ष्यमाणमन्ग्रन्थो व्याख्यातः। तथा हि-ग्लौचुकायनस्यायं ग्लौचुकायिनश्छात्रः। अत्र ग्लुचुक ङस् (गोत्रापत्ये) फिस्-ङस् (युवापत्ये) अण्-ङस् (तस्येदमिति) अण् इत्यौलौकिकविग्रहवाक्ये सुब्लुगनन्तरम् यूनि लुक् फस्यायन्नोदेशः सवर्णदीर्घः ग्लुचुकायिनि अण् आदिवृद्धिः यस्येति च ग्लौचुकायनः तस्येदमित्यर्थे अणः कृतत्वेन छस्यानवकाश एवेति नात्र छः। यदा तु अणि विवक्षित एव युवप्रत्ययस्य लुग्विधीयते तदा तु तस्येदमित्यणो विवक्षायामेव यून्यणो लुकि आदिवृद्धिहेतुप्रत्ययाभावेन वृद्ध्चभावान्न वृद्धत्वमिति छो नेति भावः।

9. तद्राजाच्चाणः ते तद्राजा इति ञायादीनां तद्राजसंज्ञा वक्ष्यते। तद्राजसंज्ञकादणः परस्य युवप्रत्ययस्य लक्स्यादित्यर्थः। अङ्गस्य गोत्रापत्यमाङ्गः। द्व्यचङ्मगधेति व्यंच्त्वादण् ततो यूनि फिञ्-तस्यानेन लुक् अङ्गस्य युवापत्यमाङ्गः। गोत्रापत्यं पिता युवापत्यं पुत्रः।

**१०८५। इञः प्राचाम्** ।२।४।६०। गोत्रे य इञ् तदन्ताद्युवप्रत्ययस्य लुक् स्यात् तच्चेद्गोत्रं प्राचां भवति। पन्नागारस्यापत्यम्। 'अत इञ् १०९५'। 'यञिञोश्च ११०३' इति फक्। तस्य लुक्। पान्नागारिः पिता पुत्रश्च। प्राचां किम्। दाक्षिः पिता। दाक्षायणः पुत्रः॥ **१०८६। न तौल्वलिभ्यः** ।२।४।६१। तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य लुक् न स्यात्। पूर्वेण प्राप्तः। तुल्वलः। तत इञि फक्। तौल्वलिः पिता। तौल्वलायनः पुत्रः॥ **१०८७। फक्फिञोरन्यतरस्याम्** ।४।१।९१। 'यूनि लुक् १०८३' इति नित्ये लुकि प्राप्ते विकल्पार्थं सूत्रम्। कात्यायनस्य छात्राः। कातीयाः। कात्यायनीयाः। यस्कस्यापत्यं यास्कः। शिवाद्यण्। तस्यापत्यं युवा यास्कायनिः। 'अणो द्व्यचः ११८०' इति फिञ्। तस्य छात्राः, यास्कीयाः। यास्कायनीयाः॥**१०८८। तस्यापत्यम्** ।४।१।९२। षष्ठ्यन्तात् कृतसन्धेः प्रथमादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः। उपगोरपत्यम् औपगवः। आदिवृद्धिरन्त्योपधावृद्धी बाधते॥

---

10. यञिञोश्चेति फक् तस्य युवप्रत्ययस्य अनेन लुगिति शेषः। पन्नागारस्य गोत्रापत्यं युवापत्यं च पान्नागारिः इदमेवाह पिता पुत्रश्चेति ।

11. फक्फिञोर्युवप्रत्यययोर्लुगन्यरस्याम्। स्यादित्यर्थः। अजादौ प्रत्यये विवक्षित इत्येवकातीयाः कतशब्दाद्गोत्रापत्ये यञ् ततो यूनि फक् ततस्तस्येदमिति छात्रार्थे अणि विवक्षिते यूनः फक् लुक् कात्य वृद्धाच्छः आपत्यस्येति यलोपः कातीयाः। लुगभावे कात्यायनीयाः। यञन्तस्य बहुत्वेऽपि कातीया इति भवत्येव। गोत्रे लुगचीति यञोऽलुक्त्वात् यास्कफिञ् छः फिञो लुक् यास्कीयाः। लुगभावे फस्यायन्नादेशः यास्कायनि छः छस्य ईयादेशः सवर्णदीर्घपरत्वात् यस्येति चेति लोपः यास्कायनीयाः।

12. तस्यापत्यम्। समर्थानां प्रथमाद्वेत्यधिकारः। समर्थः पदविधिरिति परिभाषा तस्येति षष्ठ्यंतानुकरणशब्दः। ततः पञ्चम्या सौत्रो लुक्। समर्थानामित्यस्यार्थः कृतसंधेरिति। प्रत्ययाधिकारात् प्रत्यय इति विशेषानिर्देशादुक्तावक्षमाणाच्छेति सामान्याकारेण सर्वप्रत्ययग्रहणम्। प्रथमादित्यस्य प्राथमिकादित्यर्थः। लक्षणवाक्ये प्रथममुद्दिष्टादिति यावत्। प्रथमान्तादिति तु न। अपत्यवाचकात् षष्ठ्यर्थे माभूदिति वक्ष्यमाणत्वात्। तस्यापत्यमिति लक्षणवाक्ये प्रथमो यस्तस्येति षष्ठ्यंतः। तस्मात् प्रथमाषष्ट्यंतात्कृतसंधेस्समर्थादपत्यमित्यर्थे प्रत्यया वास्युरिति संगृहीतोऽर्थः। औपगतः प्राग्दीव्यतोऽणधिक्रियत इत्युक्तत्वादुपगुशब्दादपत्येर्थेऽ अण्। ण्या दयस्तु न भवन्ति दित्य दित्यादिभ्य एव तद्विधानात्। न चैवमुक्ता वक्ष्यामाणश्च प्रत्ययास्स्युरित्यस्य वचनस्य व्याघातो वाच्यः। एषां शब्दानामपत्येतरार्थेषु ये ये प्रत्यया विहितास्ते अपत्यार्थेऽपि तेषां विधीयन्त इति तदर्थात्। न हि सर्वेभ्यश्शब्देभ्यः अपत्यार्थे सर्वे प्रत्ययास्स्युरिति वक्तुं शक्यते। अतञित्यादिनां अपत्यार्थे अदन्तादेव इञित्यादीनां

**तस्येदमित्यपत्येऽपि बाधनार्थं कृतं भवेत्। उत्सर्गः शेष एवासौ वृद्धान्यस्य प्रयोजनम्**॥१॥ योगविभागस्तु, भानोरपत्यं भानवः। कृतसन्धेः किम्। सौत्थितिः। अकृतव्यूहपरिभाषया सावुत्थितिर्माभूत्। समर्थपरिभाषया नेह। वस्त्रमुपगोरपत्यं चैत्रस्य। प्रथमात्किम्। अपत्यवाचकात्षष्ठ्यर्थे माभूत्। वाग्रहणाद्वाक्यमपि। 'दैवयज्ञि-१२०१' इति सूत्रादन्यतरस्यां ग्रहणानुवृत्तेः समासोऽपि। उपग्वपत्यम्। जातित्वान् ङीष्। औपगवी। आश्वपतः। दैत्यः। औत्सः। स्त्रैणः। पौंस्नः॥

---

वक्ष्यमाणत्वात्। तेन दितेरपत्यं दैत्य इति ण्यः उच्छस्यापत्यमौच्छ इत्यञ् स्त्रियोपत्यं स्त्रैण इति पुंसोऽपत्यं पौंस्न इति स्नञ् इत्यादयः नियमेन सिद्ध्यन्ति। अन्यथा दितेरपत्यं दैत इत्यणि दैत्न इति ञि दैत्स्न इति स्नञि च अनिष्टरूपाणामापत्तिस्स्यात्। ननु किमनेन सूत्रेण इदमर्थे अपत्यार्थस्याप्यनंतर्भावेण (छात्रार्थवत्गर्गाणामिमे छात्रा गार्गीयाः) उपगोरिदमपत्यमौपगव इति तस्येदमित्यणाभीष्टसिद्धेः इति चेन्मैवम्। अत इञ् इत्यादिषु तस्यापत्यमित्यपत्यार्थे इञादयो यथैव स्युः। अणादयो मा भूवन्नित्येतदर्थमस्यावस्यकत्वात्। नन्वेवं तस्यापत्यमत इञ् इत्येकमेव सूत्रं कर्तव्यं कोऽर्थो योगविभागेन। बह्वादिभ्यश्चेत्यादिषु तु तस्यापत्यमित्यस्य अनुवृत्तिरस्तु इति चेन्मैवम्। भानोरपत्यं भानवः। अत्र तस्यापत्यमत इञ् इत्येकसूत्रत्वे अदन्तत्वाभावादपत्यार्थे इञ् न स्यात्। किन्तु तस्येदमित्यण् प्राप्नोति। तं बाधित्वा वृद्धाच्छः भानवीय इति स्यादिति । ननु तस्यापत्यमिति योगे विभक्तेऽपि तस्यापत्यमिहपरत्वात् तस्येदं ततोऽपि परत्वात् छश्च स्यादेवेति चेन्मैवम्। योगविभागसामर्थ्यात्। तस्येदमित्यनेन सिद्धस्याणः पुनस्तस्यापत्यमिति विधानाच्च। तस्यापत्यमित्यणेव स्यादिति ननु वृद्धाच्चः परत्वात् तस्यापत्यमित्यसम्बाधात एवेति चेन्मैवम्। अपत्यादिचातुरर्ध्यतिरिक्तशेषाधिकारे वृद्धाच्छस्य विहितत्वेन अपत्यार्थे छप्रसक्तिरेव नास्तीति। नन्वेवं योगविभागाभावेपि अपत्यार्थस्याशैषिकत्वाच्छो नैवेति किं योगविभागेनेति चेन्मैवम्। अदन्तबाह्वादिप्रकृतिभ्य एवापत्यार्थे इञ्विधानेन तत्रैवापत्यार्थ उपयुक्तः नान्यत्रेति उकारान्तेषु भान्वादिषु अपत्यार्थस्यानुपयुक्तत्वेन शेष एवायमपत्यार्थ इति छस्य प्रसक्तिरस्तीति (उपयुक्तादन्यश्शेषः) तस्यापत्यमिति पृथक्सूत्रपक्षे तु अविशेषेण सर्वत्राप्यपत्यार्थ उपयुक्त इति नासौ शेषः एतेन तस्येदमिति श्लोकसाकल्येन विवृतः। अक्षरार्थस्तु अपत्येति अपत्यार्थेऽपि तस्येदमित्यणि सति इदमिति शेषः। तस्यापत्यमितीदं पृथक्सूत्रं बाधनार्थं वृद्धाच्छ इत्यस्य बाधनायं कृतं भवेत्। पाणिनिनेति शेषः। असावपत्यार्थ उत्सर्गो विधिः शेष एव अनुपयुक्त एव अस्य सूत्रस्य प्रयोजनम्। वृद्धा निर्वृद्धिर्यस्याचामादिरिति वृद्धसंज्ञकानि भवन्तीति शेषः। इति योगविभागस्तु भानोरपत्यं

भानवः इत्यत्र छप्रत्ययेन अणो बाधो माभूदिति कृत इति शेषः। ननु तस्यापत्यमिदमिति सूत्र्यताम्। तस्येदमिति पृथक्सूत्रं मास्तु । तस्यापत्यमित्यर्थे तस्येदमित्यर्थे च अण् स्यादिति सूत्रार्थः । इदमित्यनेनैव सिद्धे अपत्यग्रहणं बाधकस्य छस्य बाधनार्थं तेन भानोरपत्यमित्यादावणेवेति भानव इति सिद्ध्यति। अत इञित्यादौ तस्यापत्यमित्येतावदेवानुवर्तनीयम्। तेन दाक्षिरित्यादयः सिद्ध्यन्ति इति किमनेन तस्यापत्यं–तस्येदमिति योगविभागेनेति चेत्। मैवम् । तस्येदमिति छात्राद्यर्थस्याप्यण उपयुक्तत्वे तद्भिन्नार्थ एव वृद्धाच्छस्य प्रवृत्तिः स्यात्। तस्य शेषाधिकारस्थत्वात् । एवं च विभिन्नविषयत्वेन च्छाणोर्बाधाभावादणं च्छो बाधते परत्वादिति वाचोयुक्तिरयुक्ता स्यात्। ततश्च गर्गानां छात्रा गार्गा इत्येवं रूपं, न तु गार्गीयाः इति। नन्वेवं तस्यापत्यमिदमिति शेषाधिकार एव सूत्र्यताम्। तस्येदमिति स्थाने। न च अत इञि तस्यापत्यमित्यस्याभावाद्दक्षस्यापत्यं दाक्षिरिति न स्यात्। परेण तस्यापत्यमिदमित्यणा बाधादिति वाच्यम्। अत इञ उपयुक्तत्वेन तस्यापत्यमिदमःशेषविधित्वेन च विभिन्नविषयत्वेन बाधासंभवात्। न चैवं अपत्यार्थस्यानुक्तत्वेन अपत्यार्थे अत इञः प्रवृत्तिरेव न संज्ञा घटतीति वाच्यम्। मण्डूकप्लुत्या तस्यापत्यमिदमिति सूत्रात्तस्यापत्यमित्यस्य अत इञिअपकर्षात्। (अन्वयात्) इति चेत् मैवमपि अपत्यार्थे एकस्मिन्नेव अत इञादावुपयुक्तत्वं तस्यापत्यमिदमित्यत्र अनुपयुक्तत्वं चेति विरुद्धधर्मद्वयसमावेशस्य दुर्घटत्वात्। ननु अदन्तादावपत्यार्थ उपयुक्तः, अन्यत्रानुपयुक्त इति आश्रयभेदात्सुघट एवेति चेत् तर्हि अपत्यार्थस्य अत इञः अपत्यार्थेन तस्यापत्यमिदमित्यणा परेण बाधस्यादिति । ननु अनवकाशमूलकापवादत्वादणम् बाधित्वा अत इञेव स्यादिति अकिंचित्करा अमी दोषाः इति। तस्यापत्यमिदमिति शैषिकेषु सूत्रयितव्यमेव इति पूर्वः पक्षः। तस्येदमित्यपत्येऽपि तस्येदमिति सूत्र एव अपत्यग्रहणे कृतेऽपि तस्यापत्य तस्येदमिति योगविभागमपनीय तस्येदमपत्यमिति सूत्रितेऽपीत्यर्थः न दोष इति शेषः। इष्टासिद्धिरनिष्टसिद्धिर्वा नास्तीत्यर्थः। कुत एतत् परेण च्छेन अपत्यस्य अणो बाधसंभवादत आह–बाधनार्थं कृतं भवेत्। तस्येदमित्यनेनैव आपत्येर्थेप्यणि सिद्धे आपत्यग्रहणं बाधकबाधनार्थमिति परमपि छं बाधित्वा अपत्ये अणेव स्यादिति भावः असावुत्सर्गः तस्येदमपत्यमिति विधिः शेष एव शेषाधिकारे एव पठनीयः। अन्यथा छात्राद्यर्थानामपि उपयुक्तत्वापत्तेः। ननु औपगव इत्यादौ वृद्धत्वाभावाच्छस्याप्राप्तौ तस्येदमित्यनेनैव अण्सिद्धेः किमपत्यन्नेत्यत आह। वृद्धान्यस्य प्रयोजनमिति अस्य अपत्यग्रहणस्य वृद्धानि प्रातिपदिकानि भानव इत्यादीनि प्रयोजनं भवन्तीत्यर्थः। इति पूर्वपक्षानुगुणश्लोकार्थः। मण्डूकप्लुत्या अपकर्षाश्रयणस्य क्लेशावहत्वात्। तस्येदमपत्यमिति सूत्रे तस्य पदस्य आवर्तनीयत्वाच्च। (तस्येदमित्यनेन तस्यापत्यमित्यर्थेन च स्यादिति सूत्रार्थात् षष्ठ्यन्तादिदमेतदपत्यमित्यर्थेन स्यादिति विपरीतार्थस्यापि प्रतीतेश्च। (उपगोरिदमपत्यमौपगव इति इदमित्यस्य अपत्यविशेषणत्वेनापि भानसंभवात्। इदं वस्तु उपगोरपत्यं भवतीति) योगविभाग एवोचित इत्युत्तरः पक्षः।

योगविभागस्तु भानोरपत्यं भानवः इत्येतदर्थमिति वदतो मूलकर्तुरभिप्रायोऽपि पूर्वपक्षीयाणां विरुद्धः। दर्शितरीत्या पूर्वपक्षे योगविभागं विनैव भानव इति सिद्धेः। तस्मात् योगविभागस्तु इति मूलग्रन्थस्य तस्यापत्यम् अत इञ् इति सूत्रद्वयकरणं तु इत्येवार्थः न तु तस्यापत्यं तस्येदमिति सूत्रद्वयकरणं तु इत्यर्थ इति भ्रमितव्यमिति सर्वं सुष्ठु। सौत्थितिः सूत्थितस्यापत्यमिति विग्रहः सु उत्थित ङस् अण् इत्यलौकिके सुब्लुगनंतरं सकारोपर्युकारस्य वृद्धिः प्राप्ता सवर्णदीर्घश्च प्राप्तः। अन्तरं गत्वाद्धीर्घः अन्तरंगपरिभाषापवादभूतया अकृतव्यूहपरिभाषया दीर्घ बाधित्वा वृद्धिः। सवर्णदीर्घे कृतेऽपि वृद्धिप्राप्तिरस्तीति नित्यत्वाद्वृद्धिरिति तु नोक्तं परनित्यान्तरंगापवादानामुत्तरोत्तरं बलीय इति नित्यत्वाद्वृद्धेरन्तरंगस्य दीर्घस्य बलवत्त्वात् तस्मादपवादत्वाद्वृद्धिः। (सवर्णदीर्घम्प्रति निमित्तस्य उकारस्य अवश्यभाविन्या वृद्ध्या संक्ष्यमाणत्वान्निमित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्य न कुर्वन्तीति अकृतव्यूहपरिभाषात्रोपतिष्ठते) ननु सवर्णदीर्घम्प्रति यन्निमित्तं स न सकारोपर्युकारः। किन्तु उत्थितशब्दाद्यवयवोकारः (सवर्णेचीति परस्य निमित्तत्वाभ्युपगमात्) स हि न विनाशोन्मुखः। आदेरच एव वृद्धिविधानात् नात्राकृतव्यूहपरिभाषोपस्थितिरिति चेत् मैवम्। सवर्णदीर्घे कृते य ऊकारस्स एव पूर्वान्तवद्भावेन आदिरच्। तकादिवद्भावेन निमित्तं दीर्घस्य चेति भाविन्या वृद्ध्या विसंक्ष्यमाणत्वं सवर्णदीर्घम्प्रति निमित्तत्त्वं च वर्तत एवेति। ननु सवर्ण दीर्घे क्रियमाणे एव अकृतव्यूहपरिभाषोपस्थानीयासवर्णदीर्घबाधनार्थमिति सवर्णदीर्घे कृते किं तयेति चेत्। सत्यम्। अत एव सवर्णदीर्घम्प्रति निमित्तस्य सवर्णदीर्घानन्तरं भाविन्या वृद्ध्या संक्ष्यमाणत्वेन निमित्तस्य विनाशोन्मखत्त्वान्न सवर्णदीर्घो जायत इत्युक्तम्। यद्वा अकारद्वयस्थाने सवर्णदीर्घस्य विहितत्वेन सवर्णदीर्घम्प्रति द्वयमपि निमित्तमेव। निमित्तातिरिक्तस्य कार्यिणो निमित्तिनः अनुपलंभात् । तथा च सकारोपर्युकारोपि निमित्तमेवेति तस्य विनाशोन्मुखत्वात् परिभाषोपस्थितिरिति बोध्यम्। अत्र गुरवः सवर्णदीर्घम्प्रति सवर्णाच्त्वन्निमित्तं तद्धि उत्थिताद्यवयवे उकारे वर्तते यदा तु सोरुकारस्य वृद्धिः तदा औकारनिरूपितसावर्ण्यमुत्थिताद्यवयवे उकारे न भवतीति उकारनिरूपितं सवर्णाच्त्वमुत्थिताद्यवयवनिष्ठं विनाशोन्मखमेवेति। एवमपवादत्वाद्वृद्धौ सौ उत्थितिः। आवादेशः, सावुत्थितिः इति स्यादिति कृतसन्धिग्रहणम्। सन्धिरत्र सवर्णदीर्घः सूत्थित इति कृतसंधेरेव अणुत्पत्तिः न तु सु उत्थित इत्यकृतसंधेरिति। तद्धितोत्पत्तेः प्रागेव सवर्णदीर्घः। तद्धिताभावान्न तदानीं वृद्धिप्रसंगः। तद्धितोत्पत्तेः पश्चादपि वृद्धेः अन्तरंगत्वात् सन्धौ कृते पश्चाद्वृद्धौ सौत्थित इत्यादिरूपं सिद्ध्यत्येवेति। समर्थानामित्यधिकारपदम् व्यर्थ, स तु अकृतव्यूहपरिभाषां ज्ञापयति, ज्ञापानानन्तरं तु संधेर्विनाशोन्मुखनिमित्तकार्यत्त्वेन अप्राप्तौ वृद्धिरेव स्यादिति वृद्धिबाधनार्थं समर्थपदमिति स्वांशे चारितार्थ्यम्।

ननु उपगोरपत्यमौपगवः। अत्र उपगु ङ्स अण् इति स्थिते कृतसन्धिरेव तद्धित इति प्रथमतस्संधिः उपगोस् अण् एकादेशस्य परादिवद्भावेन सुपो धात्वति ओसो लुक् उपग् अ वृद्धिः औपग पश्चात्तद्धितान्तात्सुप् औपगः इत्येव स्यात् किं च दण्डिन् सु संयोगान्तलोपः उपधादीर्घः । नलोपः प्रातिपदिकान्तस्य दण्डि कृतसंधिरयं संगोगान्तलोपादीनां संधिकार्याणाम् कृतत्वात् अस्मान्मतुपि दण्डिमान् इति स्यात् इति कृतसंधेरेव तद्धित इति कथं घटत इति चेदुच्यते । ङ्याप्प्रातिपदिकांश एव कृतसंधिकार्यत्वं न तु सुब्विशिष्ट इति। न चैवं नलोपादीनां प्रातिपदिककार्यत्वमेवेति वाच्यम् । सुप्कार्यानन्तरमेव तेषां प्रसक्तिरिति सुप्कार्यस्यैव लोपात् प्रथमतः अकर्तव्यत्वेन प्रतिबन्धात् ।

ननु समर्थानामिति मास्तु सुबन्तात्तद्धितोत्पत्तिरिति घकालतनेष्वित्यलुग्विधानेन ज्ञापितत्वात् । सुबुत्पत्तिश्च ङ्याप्प्रातिपदिकादिति कृत्तद्धितसमासाश्चेति समासस्य प्रातिपदिकत्वम् । सुष्ठु उत्थितस्सूत्थित इति प्रादिसमासः सुप्समासो वा । सूत्थितेति समासात्प्रातिपदिकात् ङस् पश्चादपत्यार्थे इञ् । ङसो लुक् वृद्धिः, सौत्थितिः इति भवत्येवेति। न च उत्थितेति सुबन्तादपत्यार्थे इञ् ततस्सु, सु उत्थित इञ्, इदानीं वृद्धिबाधनाय आवश्यकं समर्थपदमिति वाच्यम् । विधानाभावादेव, उत्थित इञ् इत्यतः प्राक्सुर्न भवतीति प्रादीनां हि प्रथमाद्यन्तेन समासो विहितः न त्वपरिनिष्ठिततद्धितान्तेनेति । न च सु उत्थत इति समासप्रक्रियादशायामेव तद्धितोत्पत्तिरिति वाच्यम्। असुबन्तत्वात्। न च सु उत्थित – सु– इत्यस्मात् तद्धित इति वाच्यम्। तद्धितोत्पत्तेः प्रागेव समासावयवस्य सुपो लोपात् । न च प्रत्ययलक्षणं न्यायः उत्तरपदत्वे चेति तन्निषेधात्। किंच षष्ठचन्तादिञ्, प्रथमान्तेन समास इति तद्धितस्य सुतरामसम्भवः षष्ठचन्तयोरेव सुप्समास इत्युक्तौ तु समासावयवस्य सुलोपात् । समासानुदयेन समासात्पश्चात्सुपोऽत्यसम्भवाच्च असुबन्तत्वान्न तद्धितोत्पत्तिः इति प्रथमं सूत्थितयोस्समासः पश्चत्सूत्थित शब्दात्तद्धित इति सौत्थितिरिति भवत्येवेति किं समर्थपदेन इति पूर्वः पक्षः। पदस्य विभज्यान्वाख्यान पक्षमसारेण कृतः क्रमिकान्वयपक्षमा श्रीत्यवदन्नुत्तरम् अमुमेव वाक्यसंस्कारपक्षमाहुः सुङस उत्थित जस्–इत्यलौकिकविग्रहादेव तद्धितोत्पत्तिस्स्यात् । न च सुपा धात्विति सुब्लुकि सुबन्तत्वाभावान्न तद्धितोत्पत्तिरिति वाच्यम्। परत्वात्सुब्लुकं बाधित्वा अत इञ् स्यादिति समर्थनामित्यधिकारे सति तु परिणिष्ठितादेव तद्धितोत्पत्तिरिति अलौकिकविग्रहस्य अपरिनिष्ठितत्वान्न तस्मातद्धितोत्पत्तिरिति । सूद्धितशब्दादत इञ् सौत्थित इति सिद्धम् तस्मात् कृतसन्धेः किं सुङ्स् उत्थितङ्स इत्यपरिनिष्ठितादत इञ् माभूता। सति तु दीर्घ सन्धिं बाधित्वा अपवादत्वाद्वृद्धौ स सवुत्थित इति स्यात् – इत्युत्तरः पक्षः ।

वस्तुतस्तु सूत्थितादपत्य चिकिर्षा न तु सोरुत्थितादिति सु ङस् उत्थिता ङस्

इत्यकिकात् सोरुत्थितस्येति लौकिकात्परिनिष्ठिताद्वा न तद्धितोत्पत्तिरिति नेदम्प्रयोजनम्। अन्यथा सोरित्थितस्येति परिनिष्ठितादत इञ् सुब्लुकि सौत्थितिरित्यस्य इष्टापत्तावपि सोरुपगोरणि सौपग इति स्यात् न तु सौपगव इति। सूपगोरपत्यं सौपगव इति। तु इष्टम् । न च अलौकिकादेव तद्धितचिकिर्षैति वाच्यम्। परिनिष्ठितमेव पदं समस्तमसमस्तं वा वाक्यगतं वा कस्यचिदभिधायकं भवति न त्वपरिनिष्ठतमिति । अपरिनिष्ठतात्पदार्दानवगतौ कथन्तस्मादपत्यचिकिर्षैति । अयम् भावः दशरथस्यायं दाशरथिरिति । परिनिष्टितेन दाशरथिशब्देन रामार्थप्रतीतिः । दशरथशब्दे न दशरथाभिधराजप्रतीतिश्च भवति। दशरथशब्देन राजार्धप्रतितौ सत्यामेव तस्यायमपत्यं राम इति रामार्थे तस्मादपत्यप्रत्ययचिकिर्षा वर्तते । दशन् जस् रथ जस् इत्यपरिनिष्ठितात्तु न राजार्थप्रतीतिरिति न तस्मादपत्यचिकीर्षा सम्भवति इति अपत्यवाचकात् षष्ठ्यर्थे मा भूत् । प्रथमादित्यस्याभावे लक्षणवाक्ये यः प्रथमस्तस्येति षष्ठ्यन्तस्तस्मात्प्रत्ययास्स्युरित्यर्थो न स्यात् । किन्तु अपत्यवाचकात् तस्येति षष्ठ्यर्थे प्रत्ययास्स्युरित्यर्थस्स्यात्। तथा च उपगुरपत्यमस्यौपगवो देवदत्त इति स्यादिति भावः । पितृवाचका षष्ठ्यन्तादेव यथाण् स्यात् अपत्यवाचकात्प्रथमान्ताद्यथा न स्यात्तदर्थ प्रथमात्ग्रहणमिति फलितम् ।

**अपत्यम्** । ननु अपत्यं पितुरेव स्यादिति पक्षे पुत्रस्यैव अपत्यत्वन्न पौत्रादीनामिति । पौत्रप्रभृतेरपत्यत्वमसंभवि, ततः प्राचामपीति चेति द्वितीयपक्षे अव्यभिचारि इति मतद्वयेप्यपत्यग्रहणं दुष्टम् । दुर्घटत्वाद्व्यर्थत्त्वाच्चेत्याशंक्याह । अपत्यत्वेन विवक्षितमिति पौत्रादीनां पौत्रत्वादिना यदा विवक्षा तदा न गोत्रसंज्ञा, अपत्यत्वेन यदा विवक्षा तदा गोत्रसंज्ञेति भावः। उत्यस्य गोत्रापत्यमति विग्रहे औत्सिरिति भवति, उत्ससस्यायं प्रौत्रः इति विग्रहे तस्येदमित्यिणि औत्स इत्येव इति गोत्रसंज्ञा सत्वासत्वयोःफलभेदः एतेन पक्षद्वयेऽपि अपत्यत्वेन विवक्षितस्य लोकापरपर्यायस्य अपत्यस्य पुत्रस्य पुत्र्या वा न गोत्रसंज्ञा । पौत्रप्रभृतेरेवापत्यस्य गोत्रसंज्ञा विधानात्। तस्मादुत्सस्यापत्यमौत्सिः पुत्र एव । उत्सस्य गोत्रापत्यमौत्सिस्तु पौत्रो भवति । गोत्रापत्येऽप्यपत्यप्रत्ययोऽत्र अत इञेव। एको गोत्रे इति वक्ष्यमाणत्वात् ।

चतुर्थादिपितापुत्रः पौत्रः प्रपौत्रः इति पौत्रापत्यस्य प्रपौत्रस्य च तदर्थत्वात्पौत्रापत्यं चतुर्थः। आदिग्रहणं तु ततः प्राचामपीति चेति मुख्यपक्षे पौत्रादीनामप्यपत्यत्वात्पौत्रस्य पौत्रादयोप्यपत्यान्येवेति । पितुरेवेति पक्षे तु पौत्रादेरपत्यं चतुर्थादिरिति पौत्रस्यापत्यं चतुर्थः पौत्रादेरित्यादिग्रहणात् प्रपौत्रस्यापत्यं पंचमः इत्यादिबोध्यम् । एतेन पक्षद्वयेऽपि पौत्रं विहाय प्रपौत्रादीनां युवसंज्ञैव न तु गोत्रसंज्ञेति सिद्धं । न चैवमपत्यमिति सूत्रे प्रभृतिग्रहणं

व्यर्थमिति वाच्यम्। जीवति तु वंश्य इति पित्रादौ जीवत्येव प्रपौत्रादीनां युवसंज्ञा। मृते तु पौत्रप्रभृतीति गोत्रसंज्ञैवेति । ननु पित्रादावित्यत्र आदिपदात्पितामहदीनां ग्रहणमिति पक्षे तु पौत्रादेरित्यत्रादिपदात् पुत्रादीनां ग्रहणम् । अन्यथा पितामहात्पुत्रापत्यस्य चतुर्थत्वं न स्यादिति चेन्नैवम् । पौत्रादेरित्यत्र आदिपदात्प्रपौत्रादीनामेव ग्रहणम् । चतुर्थत्वाभावे तु आदिना पंचमत्वं स्यादेवेति पितामहादपि पौत्रापत्ये चतर्थादित्वं न हीयते । अन्यथा पौत्रे चतुर्थत्वाद्युवसंज्ञा । प्रपितामहापेक्षया पुत्रे च युव संज्ञेति गोत्रयुवसंज्ञयोरपत्यत्वस्य च सांकर्यं स्यात् । तस्मात् पितुः पितामहादीनां वा अपत्ये न गोत्रसंज्ञा । पौत्रे न युवसंज्ञेति निष्कर्षः ।

कनीयान् चतुर्थादिः पित्राद्यपेक्षया चतुर्थादिः- न तु चतुर्णां भ्रातृणां मध्ये अन्त्यश्चतुर्थः बहूनां मध्ये चतुर्थादिः इति भ्रमितव्यम् । युवसंज्ञायाः गोत्रसंज्ञापवादत्वेन तत्र गोत्रसंज्ञाया एवाप्रवृत्तेः। पित्रादौ जीवति पूर्वेणैव सिद्धम् । पित्रादौ मृतेऽपि भ्रातरि जीवति पौत्रादेरपत्यस्य चतुर्थदिर्युवसंज्ञार्थोऽयमारंभः। यस्य युवसंज्ञा तद्भ्रातृत्वमेवात्र विवक्षितम् । न तु पित्रादेर्भ्रातृत्वम् । ज्यायसीति निर्देशात् । गर्गादिषु पित्रादिषु मृतेष्वपि चतुर्थदिः पौत्राद्यपत्यानां मध्ये कनिष्ठस्य युवसंज्ञा स्याज्ज्येष्ठे जीवति सतीति निष्कृष्ठोऽर्थः ।

सपिंडे समानमभिन्नं पिंडं वंशः यस्य सः पितृपितामहाद्युत्पादकप्रबंन्धो वंशः तदन्तःपातिनः पितृव्यादयस्सपिंडाः । भ्राता च सपिण्ड एवेति अन्यस्मिन्नित्युक्तम् । भ्रातरीति सूत्रादनुवृत्तस्य पंचम्यन्तेन विपरिणामः। भ्रातुरन्यस्मिन्निति जीवत्विति सूत्राज्जीवतियुवयोरनुवृत्तिः तुशब्दस्य च अपत्यमिति सूत्रादपत्यम् पौत्रप्रभृतीत्यस्यानुवृत्तिः। पौत्रप्रभृतीत्यस्य षष्ठचन्तेन विपरिणामः । अस्मिन्सूत्रे जीवतीति धातुग्रहणमपनीय जीवत् इति शत्रन्तं सुवचम् । लाघवात् अपत्यविशेषणत्वेन भानसौलभ्याच्च। जीवत्तु जीवदेव इत्यपत्यमित्यस्य विशेषणम्। उभयोरुत्कर्षार्थः। स्थानवयसोरुत्कर्षायेत्यर्थः। स्थानं नाम स्थितिर्वंशे तस्योत्कर्षो नाम प्राथम्यम्। पितृवंशे पुत्रस्थितेः प्रागेव पितृव्यस्थितिस्सम्भवतीति पुत्रस्थानात् पितृव्यस्थानमुत्कृष्टम्। नन्वनेनैव वयोधिकत्वमपि सिद्धिमिति किं वय उत्कर्षग्रहणेति चेत्सत्यम्। तथाऽपि पितुः पुत्रोदयादनन्तरमपि पितामहात्पुनः पुत्रोदयस्स्यादिति स हि पितृपुत्रस्य पितृव्य एव पितृव्यस्थानापन्नत्वात् स्थानत उत्कृष्ट एव वय आधिक्यन्तु न तस्येति तदर्थं वयोग्रहणम्। न चैवं पितृव्यस्थितेः प्रागेव पुत्रस्थितिरिति स्थानत उत्कर्षोऽपि नास्ति पितृव्येरिति वाच्यम्। क्वाचित्कमिदं प्रायशस्तु पितृव्य एव प्राथमिक इति तत्स्थानमुत्कृष्टमेव।

वस्तुतस्तु पितुः पितामहो यथा पूज्यः तथा पितुः पुत्रस्य पितामहपुत्रोऽपि पूज्य एवेति पुत्रस्थानात् पितृव्यस्थानम्। पूज्यत्वादुत्कृष्टमिति न वयं उत्कर्षस्य वैयर्थ्यमिति बोध्यम्। पितृव्ये पितामह भ्रातरि वा प्रायोवचनमिदं प्रपितामहभ्रातुरपि स्थविरतरसपिंडत्वात् गर्गस्य। गोत्रापत्यम्। गार्ग्यः तयोर्युवापत्ये यञिञोश्चेति फक् तस्य यूनि लुक् न पुनः

**१०८९। अपत्यं पौत्रप्रभृति गोत्रम्** ।४।१।१६२। अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात्॥ **१०९०। जीवति तु वंश्ये युवा** ।४।१।१६३। वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञमेव न गोत्रसंज्ञम्॥ **१०९१। भ्रातरि च ज्यायसि** ।४।१।१६४। ज्येष्ठे भ्रतरि जीवति कनीयान् चतुर्थादिर्युवास्यात्॥ **१०९२। वान्यस्मिन्त्सपिण्डे स्थविरतरे जीवति** ।४।१।१६५। भ्रातुरन्यस्मिन्सपिण्डे स्थविरतरे जीवति पौत्रप्रभृतेरपत्यं जीवदेव युवसंज्ञं वा स्यात्। एकं जीवतिग्रहणमपत्यस्य विशेषणम्। द्वितीयं सपिण्डस्य। तरप्निर्देश उभयोरुत्कर्षार्थः। स्थानेन वयसा चोत्कृष्टे पितृव्ये मातामहे भ्रतरि वा जीवति। गार्ग्यस्यापत्यं गार्ग्यायणः। गार्ग्यो वा। स्थविरेति किम्। स्थानवयोन्यूने गार्ग्य एव। जीवतीति किम्। मृते मृतो वा गार्ग्य एव॥ **वृद्धस्य च पूजायामिति वाच्यम्**॥ गोत्रस्यैव वृद्धसंज्ञा प्राचाम्। गोत्रस्य युवसंज्ञा पूजायां गम्यमानायाम्। तत्रभावान् गार्ग्यायणः। पूजेति किम्। गार्ग्यः॥ **यूनश्च कुत्सायां गोत्रसंज्ञेति वाच्यम्**॥ गार्ग्यो जाल्मः। कुत्सेति किम्। गार्ग्यायणः॥**१०९३। एको गोत्रे** ।४।१।९३। गोत्रे एक एवापत्यप्रत्ययः स्यात्। उपगोर्गोत्रापत्यं औपगवः। गार्ग्यः। नाडायनः॥ गोत्रे स्वैकोनसंख्यानां प्रत्ययानां परम्परा। यद्वा स्वद्व्यूनसंख्येभ्योऽनिष्टोत्पत्तिः प्रसज्यते॥ १॥

---

प्रत्ययान्तरविवक्षाभावात् गार्ग्यायणः। अत्रेदं बोध्यम्। एकस्मिन्वंशे वंशकर्तृ ऋषेरारभ्य एतावत्पर्यन्तं सहस्रं पुरुषा जाता मृता जीवन्ति च। गर्गो वंशकर्ता तदपत्यं पुत्रो गार्ग्यः तत्पुत्रपौत्राद्यपत्यपरं परायामविशेषेण गोत्रसंज्ञा वर्तते। तथा च गर्गाच्छततमं गोत्रापत्यमपि गार्ग्य एव तस्य यदपत्यम् स यूवा स्याद्वा न वेति विचारः । अष्टनवतितमे गार्ग्ये पितरि जीवति सति युवा स्यात्। यद्वा शततमगार्ग्यस्य प्रथमापत्ये जीवति द्वितीयमिदमपत्यम् चेद्युवा स्यात्। अथवा अष्टनवतिवमस्य गार्ग्यस्य अनुजे (पितृव्ये) जीवति सति इदमपत्यम् युवा स्यात्। जीवच्छेत् सोप्यष्टनवतितमगार्ग्यानुजः अपत्यापेक्षया अपकृष्टश्चेदपत्यं न युवा इदं चापत्यं मृतश्चेन्न युवा इति। युवसंज्ञायां सत्यां गोत्रप्रत्ययान्तादपत्यप्रत्ययस्योत्पत्तिः। असत्यान्तु एको गोत्र इति एक एव यञ् गार्ग्यः तत्रभवान् इति समस्तम् पदम्। पूज्यार्थकम् अत्रभवानितिवत्।

एको गोत्रे एकस्मिन् गोत्रार्थे एक एव प्रत्ययस्यान्न तु द्वाविति सूत्रारंभो व्यर्थस्स्यादतः गोत्रे इति जात्येकवचनम्। गोत्रसंज्ञकेषु पौत्रप्रभृतिष्वपत्येषु एक एव अपत्यप्रत्ययस्स्यादित्यर्थः। गोत्रापत्यप्रत्ययान्तान्न पुनर्गोत्रापत्यप्रत्ययोत्पत्तिरिति यावत्। नन्वेवम् अनन्तरापत्यान्तादपि गोत्रापत्यप्रत्यय एकस्स्यात् गोत्र एव एकप्रत्यय इति नियामादिति चेत् न। गोत्रेऽभिधित्सिते

अपत्यं पितुरेव स्यात्ततः प्राचामपीति च। मतभेदेन तद्धान्यै सूत्रमेतत्तथोत्तरम्॥ २॥ पितुरेवापत्यमिति पक्षे हि उपगोस्तृतीये वाच्ये औपगवादिञ् स्यात्। चतुर्थे त्वजीवज्जयेष्ठे मृतवंश्ये औपगवेः फक्। इत्थं फगिञोः परम्परायां मूलाच्छततमे गोत्रे एकोनशतं प्रत्ययाः स्युः। पितामहादीनामपीति मुख्यपक्षे तु तृतीये वाच्ये उपगोरणा इष्टे सिद्धेऽपि अण्णन्तादिञपि ततश्चतुर्थे फगिति फगिञोः परम्परायां शततमे गोत्रेऽष्टनवतिरनिष्टप्रत्ययाः स्युः। अतो नियमार्थमिदं सूत्रम्। एवमुत्तरसूत्रेऽप्यूह्यम्॥

---

प्रकृतेरेक एवापत्यप्रत्ययस्स्यादिति। अनन्तरापत्यान्ताद्गोत्रप्रत्यये सति प्रकृतेर्द्वौ प्रत्ययौ स्याताम् न त्वेक इति । किञ्च गोत्रे एवेति न नियमः। गोत्रे एक एवेति नियमः।। तथा च अनन्तरापत्यान्ताद्वा गोत्रापत्यान्ताद्वा न गोत्रप्रत्यय इति निष्कर्षः। गोत्रप्रत्ययो नेत्यनेन युवप्रत्ययस्स्यादेव इति लब्धम्। ननु व्यर्थमिदं सूत्रम्। पौत्रप्रभृत्यपत्यस्य गोत्रसंज्ञया पौत्रापत्येभिधित्सिते प्रपौत्रापत्येभिधित्सिते वा एक एव यञ् प्रत्ययस्स्यात्। गर्गस्य गोत्रापत्यम् (पौत्रः) गार्ग्यः। गर्गस्य गोत्रापत्यम् (प्रपौत्रः) गार्ग्यः इति एकस्स्यैव विवक्षातः एक एव प्रत्यय इति सिद्धम्। न हि युगपदनेकविवक्षा सम्भवति। अनेकप्रत्यया यतो जायेरन् इति चेत्सत्यम्। तथाऽपि गार्ग्यशब्दादपत्यार्थे पुनर्गोत्रप्रत्ययस्स्यादिति (गार्ग्यापत्यस्यापि गर्गं प्रति प्रपौत्रत्वादस्ति गोत्रत्वमिति गार्ग्यशब्दात्गोत्रापत्यप्रसक्तिरस्तीति) गर्गशब्दादेक एव यञ् यञन्तादस्माद्गार्ग्यशब्दात्पुनर्गोत्रापत्ये फक् स्यादिति तद्वारणार्थमिदं सूत्रमिति भावः।

**औपगवः** उपगोरनन्तरापत्यम् (पुत्रः) औपगवः। तस्यापत्यम्। (उपगोर्गोत्रापत्यम् औपगव एव न त्वत इञा औपगविः। प्रकृतेरेव गौत्रापत्यप्रत्ययः न त्वनन्तरापत्यान्तादित्युक्तत्वात्। गोत्रापत्यान्तान्न गोत्रापत्यप्रत्यय इत्यत्रोदाहरणं गार्ग्य इति। गर्गस्य गोत्रापत्यम् गार्ग्यः तदपत्यमपि गार्ग्य एव।

**स्वैकोना संख्यानाम्।** एकेन ऊना एकोना स्वस्मादेकोना स्वैकोना संख्या योषां गोत्रं यत्संख्यं तत्संख्यात एकोनसंख्यानामित्यर्थः। एकस्य गोत्रप्रत्ययस्य इष्टत्वेन तदेकोनसंख्या एव प्रत्यया अनिष्टा इति भावः। यथा गर्गस्य शततमं गोत्रं गार्ग्यः अत्र गोत्रासंख्यशतम्। प्रथमे (गोत्रा) पत्ये यञ्। स इष्ट एव। द्वितीये तु यञन्तात् फक्। द्वितीये तु भगन्ताद्यञ्। इत्येवं द्वितीयादयोऽनिष्टा एकोनशतं प्रत्ययाः। तेषां परम्पराप्रसज्यत इति तद्वारणायेदं सूत्रमिति एकः पक्षः। स्वद्व्यूणसंख्येभ्यः। द्वाभ्यामूना संख्या एषान्ते द्व्यूनसंख्याः। स्स्वद्व्यूनसंख्यास्तेभ्यः प्रत्ययेभ्य इति पञ्चमी अनिष्टोत्त्पत्तिः प्रसज्यते। तद्धान्यै इदमिति द्वितीयः पक्षः । अस्मिन्पक्षे पौत्रे भिधित्सितेऽप्यपत्यप्रत्यय एवेति प्रथमेऽपत्यप्रत्ययः। द्वितीये गोत्रापत्ये एव गोत्रप्रत्यय इति

तृतीयादयोऽनिष्टाः। उपगोस्तृतीये वाच्ये तृतीयपुरुषे गोत्रसंज्ञकस्य पौत्रस्यापत्ये वाच्ये इत्यर्थः इञ्स्यादनिष्ट इति शेषः। नन्वत्र प्रथमादपत्यप्रत्ययान्ताद्वितीये पौत्रे वाच्ये एव इञ् स्यादनिष्ट इति किमिति तृतीये वाच्ये इत्युक्तमिति चेत् अपत्यप्रत्ययापवादपूर्वकं गोत्रप्रत्यय स्स्यादिति बुध्या। वस्तुतस्तु उपगुरेकः तदपत्यं पुत्रो द्वितीयः तदपत्यं पौत्रस्तृतीयः। द्वितीयेऽपत्ये यो अण् स इष्ट एव अणन्तादिञ् तृतीयस्त्वनिष्ट इति। नन्वेवं शततमे पुरुषे अष्टनवतिरेवानिष्टप्रत्यया इति कथमेकोनशतमित्युक्तमिति चेन्मैवम्। मूलाच्छततमे गोत्रे इत्यनेन मूलपुरुषं विहाय शतं पुरुषा इत्यर्थः। तथा च प्रथमे पुरुषे अपत्ये अण् इष्टः द्वितीये तु इञ् अनिष्ट इति द्वितीयादीनामेकोनशतत्वं संगच्छत इति । ननु गोत्रे स्वैको नेति गोत्रापेक्षाया एकोनत्वं विवक्षितम्। अत्र तु अपत्यापेक्षया एकोनत्वं फलितमिति पूर्वोत्तरविरोध इति चेन्मवम् विशेषविहितत्वेन गोत्रप्रत्ययः यत्रापत्यप्रत्ययं बाधते तत्र गोत्रापेक्षया एकोनत्वं संख्यायाः यथा गर्गशब्दादपत्येऽत इञि गार्गिः। गोत्रापत्ये तु यञेव गार्ग्यः। यत्र पुनरौपगव इत्यादौ अपत्ये गोत्रापत्ये च अणादिस्तत्र अपत्यापेक्षयैव एकोनत्वम्। यद्वा।

समूलं गोत्रं यत्सक्यं तत एकोनसंख्याः प्रत्ययाः पारंपर्येण प्रसज्यते एकस्य मूलपुरुषस्य प्रकृतित्वात् तदितरेष्वेव अपत्येषु प्रत्ययोत्पत्तिरिति एकोनत्वम्। प्राप्तायां प्रत्ययपरम्परायामेक एवेष्टः प्रत्यय इत्येको गोत्रे सूत्रेण नियम्यते। अत एव एकोनशतं प्रत्ययास्स्युरित्येतावदेवोक्तं न त्वनिष्टा इति। अष्टनवतीनामेवानिष्टत्वात्। यथा उपगोरनन्तरापत्यं (द्वितीयः पुरुषः) औपगवः इत्यण्। तदपत्ये (तृतीये पुरुषे ) वाच्ये अत इञ् तदपत्ये चतुर्थे फक्, तदपत्ये पंचमे इञ्, इत्थं फगिञ्परम्परा अणस्तु न पारम्पर्येन्तर्भावः। अपत्यार्थ एवाण् न तु गोत्रापत्ये इति तृतीयादावणः प्रसक्त्यभावात्। अण् एकः फगिञौ पारंपर्येण अष्टनवतिः मिळित्वा एकोनशतं प्रत्यायाः मूलाच्छततमे गोत्रभिधित्सिते प्राप्ताः। पितुरेवापत्यमिति पक्षे अपत्यशब्दः पुत्र एव वर्तते न तु पौत्रे इति पक्षे इत्यर्थः। पितामहादीनामिति पक्षे तु पौत्रादयोप्यपत्यसंज्ञा एवेति पक्षे तु अयं हि सिद्धांतत्वेन मुख्यः पक्षः भाष्योक्तत्वात्। मूलपुरुषाद्द्वितीये इव तृतीयेप्यपत्योणेव। (उपगोरपत्यं तृतीयः औपगव इति तृतीयस्यापि पौत्रस्यापत्यत्वात्। उपगोरनन्तरापत्यमौपगवः तस्यापत्यत्वविवक्षायान्तु अत इञ् स्यात् स चानिष्ट इति। तृतीयमारभ्य शतपर्यन्तमनिष्टप्रत्ययाः (इञ् फक् इत्यनयोः परंपरा) अष्टनवतिः प्राप्ताः। द्वितीये वाच्ये योऽणन्तः तस्येष्टत्वेन स्वद्व्यूनसंख्येभ्यः प्रातिपदिकेभ्यः तृतीयादौ गोत्रेऽभिधित्सिते अणन्ताद्धे इञादयः तेषामनिष्टानां प्रत्ययानामुत्पत्तिः प्रसज्यते इति द्वितीयः पक्षः । ननु पक्षद्वयेपि अष्टनवत्यनिष्टप्रत्ययोत्पत्तिर्भवत्येवेति उपगोश्शततमे गोत्रेऽभिधित्सिते फगि इञोः परंपरा च भवत्येवेति को भेदः पक्षयोरनयोरिति चेत्, उच्यते। मुख्यपक्षे अवान्तरं पक्षद्वयमस्ति। दर्शितं चेदमुपगोरणा इष्टे सिद्धेऽपि अणन्तादिञपि स्यादिति उपगोः

पितृपितामहादिपरंपरायां यश्शततमः तस्याप्यपत्यमिति उपिगोश्शततमे गोत्रेप्यपत्यप्रत्ययेऽणि सति औपगव इतीष्टं सिद्ध्यत्येव इत्यवान्तरः पक्ष एकः। अनिष्टोत्पत्तिर्भवति उपगोः पुत्रात्तत्पुत्रात्तत्पुत्राच्च अणो इञ् फक् आदयस्युरिति द्वितीयः पक्षः। तथा च प्रथमावान्तरपक्षे अनिष्टोत्पत्यभावः पक्षद्वयेऽप्यतिरिच्यत इति। (पितुरेवेति पक्षस्य ततः प्राचामपीति पक्षस्य च उभयोर्भेदहेतुरिति)। ननु य उपगोः पुत्रस्य तस्यैवापत्यम् न तत्पित्रादीनाम्। तत्पितुरुपगुरपत्यं तत्पितामहस्य तत्पिता इति लोकसिद्धत्वात् कथं पितामहादीनामप्यपत्यं भवति इति द्वितीयः पक्षोऽनुपपन्न एवेति चेन्मैवम्। न पतन्त्यनेन पित्रादय इत्यपत्यम्। तथा च पुत्रो यथा पितुरपतने हेतुत्वात्पितुरपत्यमिति व्यवह्रियते तथापितामहादीनाप्यपतने हेतुत्वात्तेषामप्यपत्यमेवेति। अत एवायं मुख्यः पक्षः। अपत्यं पितुरेवेति श्लोकस्यायमर्थः। पुत्र इति शेषः। पुत्रः देवदत्तादिः पितुरेव यज्ञदत्तादेरेव । अपत्यं अपतने हेतुत्वादपत्यं भवति। ततः पितुः प्राचां पित्रपेक्षया प्राचां पितामहादीनां च अपत्यं भवति। च इति मतभेदेन प्रत्ययानां परंपरा अनिष्टोत्पत्तिश्च प्रसज्यत इति पूर्वेणान्वयः। तद्धान्यैतयोःप्रत्ययपरंपरानिष्टोत्पत्त्योर्हान्यै वारणाय एतत्सूत्रम्। तथा उत्तरं उत्तरसूत्रं च पाणिनिनोपनिबद्धमिति शेषः इति। एवं पितामहं प्रति पुत्रस्य अपत्यत्वात्पौत्रोऽपत्यमिति लब्धं (पुत्रस्य पितामहपौत्रत्वात्)। तथा प्रपितामहादीन् प्रत्यपत्यत्वात्प्रपौत्रादयोऽपत्यानि।

ननु मतभेदेन एकस्मिन्मते प्रत्ययमाला अपरस्मिन्ननिष्टोत्पत्तिरिति दोषयोर्व्यवस्थिततत्वेन कथनं कथं संगच्छते। उभयत्र उभयोस्सत्वादिति चेत् उच्यते। उपगुशब्दात् अपत्यपौत्रप्रपौत्रादिषु अण् इञ् फक् इत्यादयः प्रत्यया स्युः परंपरातः एकोननवतिः। शततमे वाच्ये सति इत्येकः पक्षः। उपगुशब्दादण् औपगवशब्दादिञ् औपगविशब्दात्फक् औपगवायनशब्दादीन् इति तत्तत्प्रत्ययान्तेभ्यस्तत्तत्प्रयास्स्युरित्यणः पक्षः। अस्मिन्पक्षे उपगुशब्दाच्छततमेऽभिधित्सितेऽपि अणेव शततमस्याप्यपत्यत्वात्। अत एव ह्युपगुशब्दादणा इष्टेऽसिद्धेऽपि अणन्तादिञपि स्यादित्युक्तं मूले। तस्मात् उपगुशब्दस्य प्रकृतित्वेन विवक्षायामपि दशमेऽभिधित्सिते नव प्रत्ययाः परंपरातस्स्युरिति प्रथमे पक्षे प्रत्ययमालेत्युक्तम्। उपगुशब्दस्य प्रकृतित्वेन विवक्षायां दशमे वाच्येऽप्येक एवाण्प्रत्ययस्स्यादिति, द्वितीयपक्षेन प्रत्ययमालानाप्यनिष्टोत्पत्तिः। किन्तु औपगवादिशब्देभ्यः प्रकृतित्वेन विवक्षितेभ्यः अनिष्टप्रत्ययानामिञादीनामुत्पत्तिस्स्यात्। औपगवशब्दात् तृतीये वाच्ये हीञ् भवति। (उपगुः प्रथमः औपगवो द्वितीय इति) द्वाभ्यां प्रातिपदिकाभ्यान्नानिष्टोत्पत्तिः। एकत्र अपत्यप्रत्ययशून्यत्वात्। द्वितीये अपत्यस्य अणः इष्टत्त्वात्। (द्वयोरप्युपग्वित्येकमेव प्रातिपदिकं अपत्यप्रत्यये अनुदिते मूलपुरुषे वाच्ये उपगु इत्यस्यैव प्रातिपदिकत्वात्। अपत्यप्रत्यये अणि उदिते द्वितीयपुरुषे वाच्ये च उपगोरेव प्रातिपदिकत्वात्। तस्मात्

**१०९४। गोत्राद्यून्यस्त्रियाम्** ।४।१।९४। यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात्। स्त्रियां तु न युवसंज्ञा। गर्गस्य युवापत्यं गार्ग्यायणः। स्त्रियां गोत्रत्वादेक एव प्रत्ययः ॥

---

औपगवेति तृतीयात्प्रातिपदिकादनिष्टईञ् स्यात्। चतुर्थात् फक् इत्येवम् इदमेव हि स्वद्यूनसंख्येभ्योऽनिष्टोत्पत्तिर्नाम। अस्मिन्पक्षे न प्रत्ययमाला, किन्तु तत्तत्प्रत्ययान्तेभ्यस्तत्तदनिष्टा प्रत्ययोत्पत्तिरेवेति।

ननु फगिञोः परंपरायामित्युभयत्र यविशेषेण प्रतिपादितम्मूले इति चेत्, नैष दोषः फगिञोरित्यनयोः परंपरेत्येकत्र फगन्तादिञ् ञयन्तात् फक् इत्येवं परम्परेत्यपरत्र चार्थभेधेन व्यवस्थोपपत्तेः। ननु प्रथमपक्षे औपगवादीञ औपगवेः फक् इति मूले तत्तदन्तेभ्य एव तत्तत्प्रत्ययाः कुतो निर्दिष्टाः इति चेत्, संभवाभिप्रायेणेदमुक्तं, न तु निष्कर्षेणेति बोध्यम्। अत्र तत्त्वबोधिनी। अणियोः परम्परा अणिञ्फकाम्। अणिञ्फकिञाम् इति प्रथमपक्षे फगन्तादीञ् इञन्तात् फक्-फगन्तात्पुनरिञ् इत्यादिपरंपरायां सत्यामिति द्वितीयपक्षे च व्याख्यातवती संग्रहेण मदुक्तमेवार्थ बोधयति।

गोत्रेऽभिधित्सिते प्रथमादेव प्रातिपदिकादेक एवात्प्रत्ययस्स्यादिति नियमशरीरं प्रथमादेव प्रातिपदिकादित्यनेन मुख्यपक्षे तत्तत्प्रत्ययान्तेभ्यो द्वितीयादिभ्यः प्रातिपदिकेभ्यः तत्तत्प्रत्ययोत्पत्तिर्वारिता । न च तृतीयादिभ्य एव अनिष्टोत्पत्तिरित्युक्तत्वेन द्वितीयात्प्रत्ययोत्पत्तिरिष्टैवेति तद्वारणमनिष्टमिति वाक्यम्। प्रथमत्प्रादिपदिकभिन्नेभ्यः द्वितीयादिभ्य इति व्याख्यानात्। न हि अणि परतः द्वितीयं प्रातिपदिकमपि उपगुइत्यादिकं प्रथमादप्रत्ययान्ताद्भिद्यते। उपगु इत्यस्यैव प्रथमप्रातिपदिकत्वात्। स्पष्टीकृतमिदं प्राक् एक एवापत्यप्रत्यय इत्यनेन प्रथमपक्षे प्रत्ययमाला व्यावर्त्यते। गोत्रेऽभिधित्सिते किंयून्यभिधित्सिते तु प्रत्ययान्तरोत्पत्तिरिष्टैव। एतदर्थमेव अजेव ज्येष्ठे मृतवंशे औपगवेः फक् इत्युक्तम्मूले। जीवज्येष्ठे वंशे जीवति वा युवसंज्ञया औपगवेः फकि औपगवायन इत्यस्येष्टत्वात्। (अनिष्टोत्पत्तिरित्यत्र अनिष्टप्रकृत्युत्पत्तिरिति गुरवः) फले तु न भेदः। अणणन्तादिञि तदन्तात्फकि औपगविः औपगवायन इत्यादिप्रकृतीनामनिष्टत्वस्य समानत्वात्)।

**गोत्राद्यून्यस्त्रियाम्।** पितुरेवापत्यमिति पक्षे गोत्रे युवयून्यपि प्रत्ययमालायां पाप्तायां ततः प्राचामपीति पक्षे मूलप्रकृतित्यनन्तरयुवभ्यः पाक्षिकानिष्टे प्राप्ते नियमार्थम्दम् तथा हि गर्ग इति मूलप्रकृतिः। तस्यापत्यं गार्ग्यि इत्युनन्तरापत्यं गर्गस्य गोत्रापत्यं गार्ग्य इति गोत्रान्तम्। तदपत्यं (चतुर्थम्।) युवा गार्ग्यायणः। तस्यापत्यं युवगार्ग्यायणः। अत्र पञ्चमे यून्यभिधित्सिते क्रमेण इञ् यञ् पक् इञ् इति प्रत्ययमालायां जातायां एको गेत्र इति इञि निवारितेऽपि यञ् फक् इञ् इति परंपरावतिष्ठते। अस्यां यञ फक् च इष्टावेव।

**१०९५ । अत इञ्** ।४ ।१ ।९५ । अदन्तं यत्प्रातिपदिकं तत्प्रकृतिकात्षष्ठ्यन्तादिञ् स्यादपत्येऽर्थे । दाक्षिः ॥ **१०९६ । वाह्वादिभ्यश्च** ।४ ।१ ।९६ । वाहविः । औडुलोमिः । आकृतिगणोऽयम् ॥

---

गोत्राद्युवा स्यादित्युक्तत्वात्। इञत्वनिष्टः। तद्वारणाय गोत्रादेव युवेति नियमः। एवकारेण यूनो न युवेति लब्धत्वादिञ् निवार्यते इति प्रथमः पक्षः। गर्गादीञ् इञन्ताद्गार्गेः यञ यञन्तात्फक् फगन्तादिञ् अत्र यञन्तात्फकि इष्टे सिद्धेऽपि फगन्तात्पुनरिञ् माभूदिति पञ्चमस्याप्यपत्यत्वेन युवत्वेन च गर्गादेव युवापत्यप्रत्ययः। अतइञि (गार्गिः) माभूदिति च। गर्गादनन्तरापत्ये इञि जाते गार्गिरित्यस्मात् यञिञोरिति फक् माभूतिदि च । सति तु गार्ग्यायण इति स्यात्। (चतुर्थस्याप्यपत्यत्वेन गार्गेरेव अपत्यप्रत्ययोत्पत्तिः) सूत्रमिदं इति मुख्यपक्षः। यून्यभिधित्सिते गोत्रान्तादेव प्रत्ययस्स्यादिति सूत्रार्थः।

**अत इञ्** । तस्यापत्यमित्यस्यात्रान्वयः। प्रातिपदिकमित्यधिकारः। तस्येत्यस्य षष्टयन्तादित्यर्थ इति तत्सूत्रव्याख्यानावसर एव प्रतिपादितम्। विशेषणत्वेन तदन्तविधिरदन्तादिति। अदन्तात्प्रातिपदिकात् षष्ठयन्तादीञ् अपत्येर्थे इत्यन्वयः। अत् (तपरस्तत्कालस्य) अ इति ह्रस्वः अन्तः अन्तावयवः यस्य तस्माददन्तात् अकारान्तावयवादित्यर्थः। षष्ठी अन्ते यस्मात् तत् षष्ठयन्तम्। तस्मात् षष्ठीविभक्तिपरकादित्यर्थः। प्रातिपदिकादिति विशेष्यम्। इदमेवाह अदन्तं यत्प्रातिपदिकं तत्प्रकृतिकात् षष्ठयन्तादिति फलितार्थकथनमिदम्। तत्प्रातिपदिकं प्रकृतिर्यस्मिन् तस्मात्प्रकृतिकात् यस्मिन् षष्ठ्यन्ते पदे अदन्तं प्रातिपदिकं प्रकृतिभूतं तस्मादित्यर्थः। अदन्तात्प्रातिपदिकात्परायाषष्ठी तदन्तादिति यावत्। दक्षस्यापत्यं दाक्षिः। दक्ष इत्यदन्तं प्रातिपदिकम्। टाङसिङसामिनात्स्या इति ङसादेशः। स्य इत्येतत् षष्ठी। षष्ठयन्तस्य अदन्तस्य प्रातिपदिकस्य दक्षस्येति, अस्मात् इञ् दक्षस्य इञ् सुब्लुक्–आदिवृद्धिः यस्येति चेत्यवर्णलोपः दाक्षिः। ननु अदन्तात् षष्ठयन्तादिञ्स्यादपत्ये इत्येवास्तु, दक्षस्येत्यस्य अदन्तत्वात् षष्ठन्तत्वाच्च इष्टसिद्धिरिति चेन्मैवम्। दाक्षी च दक्षस्य दक्षौ पुमान् स्त्रियेत्येकशेषः। (दक्षस्य स्त्री दाक्षी, पुंयोगे ङीष्) दक्षयोरपत्यमिति विग्रहे षष्ठयन्तस्य दक्षयोरित्यस्य अदन्तत्वाभावात् इञ् न स्यादिति। ननु स्त्रीत्वं पुंस्त्वेतरपुंयोगकृतविशेषस्य सद्भावादिन्द्रेन्द्राण्यावित्यत्रेव दाक्षिदक्षावित्यत्रैकशेषो न स्यादिति नैष दोष इति चेत्तर्हि दक्षा इत्यदन्तत्वेन टाप्,

**१०९७। सुधातुरकङ् च** ।४।१।९७। चादिञ्। सुधातुरपत्यं सौधातकिः॥ **व्यासवरुडनिषादचण्डालबिम्बानां चेति चक्तव्यम्॥१०९८। न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्**।७।३।३। पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः किंतु ताभ्यां पूर्वौ क्रमादैचावागमौ स्तः। वैयासकिः। वारुडकिरित्यादि॥

---

दक्षा च दक्षश्च दक्षौ इति बोध्यम्। यद्वा हंसी च हंसश्च हंसौ हंसयोरपत्यं हांसिः इत्युदाहरणं बोध्यम्। बाहविः। बाहोः कस्यचन ऋषेरपत्यं बाहविः। अनदन्तार्थमिदं सूत्रम्। नन्विह गणे कृष्णादीनामदन्तानां पाठो व्यर्थः। अत इञा सिद्धेः इति चेन्मैवम्। ऋष्यन्धकवृष्णिकुरुभ्यश्चेति परेणाणा अत इञो बाधितत्वात्कृष्णादिभ्यः इञि प्राप्तौ सत्यामिञर्थमत्र गणे पाठः।

**सौधातकिः** सुधाता इति ऋकारान्तश्शब्दः। सुधातृ ङस्–कृतसंधेरेव तद्धितोत्पत्तिक्तत्वात् संधिः। ऋत उत्। सूधातुर् अकञ्–इञ् –सुब्लुक्–एकादेशस्य परादिवद्भावेन उको लुक् सुधात् अकञ्–वृद्धिः–यस्येति चेत्यस्य लोपः सौधातकि–ननु प्रातिपदिकांश एव कृतसंधिकार्यत्वम् न तु सुब्विशिष्टे इत्युक्तं प्राक् औपग इत्याद्यनिष्टवारणाय। तत्कथमधुना सुब्विशिष्टे कृतसंधिकार्यत्वमुच्यत इति चेत् सत्यम्। सौधातकिरिति प्रामादिकः पाठः। सौधात्रकिरिति पठितव्यम्। सुधातृ ङस्–अकञ् – सुब्लुक्–सौधात्रकिः। अकञिञोस्समुच्चय एव न पर्यायता। तेन प्रातिपदिकादकञ्, पश्चादिञ् अत्र सुधातुरकङ् च इति सूत्रपाठः प्रामाणिकः। सुधातुरकङ् सुधातुरकङ् आदेशः. चादिञ्प्रत्ययः। ङिच्चेन्त्यस्य ऋवर्णस्य सौधातकिः इति यथापाठस्सुष्ठु। सुधातुरकङिति निर्देशात् प्रातिपदिकादेवाकङ् न ञ्जिञः पश्चादिति बोध्यम्। अन्यथा सुधातुश्चाकञ् इति सूत्र्येत। सूधातुश्च इञ् स्यात् ततोऽकञ् इत्यर्थः। तथा सति सन्निहितत्वादादावकञिति भावः।

**नैय्वाभ्याम्।** मृजेर्वृद्धिरित्यारभ्य वृद्धिप्रकरणं तन्निषेधप्रकरणमिदमारभ्य। तस्मादत्र मृजेर्वृद्धिरिति सूत्राद्वृद्धिपदस्यानुवृत्तिः केन न वृद्धिरिति लब्धं। वृद्धेः प्रसक्तिस्तु तद्धितेष्वचामादेरिति न्यासादकञ् चादिञ् अपत्यार्थे आदिवृद्धौ सत्यामपि पर्जन्यवल्लक्षणप्रवृत्यावृद्धिः। व्यासकिः इति भवितव्ये नैय्वाभ्यामिति वृद्धिनिषेधः यात्पूर्व ऐजागमः। आन्तरतम्याद्यकारात् ऐकारः। वकारस्य औकारस्च यथासंख्याद्वावौ यासकिः,

**१०९९। गोत्रे कुञ्जादिभ्यश्च्फञ्** ।४।१।९८॥ **११००। व्रातच्फञोरस्त्रियाम्** ।५।३।११३। व्रातवाचिभ्यश्च फञन्तेभ्यश्च स्वार्थे ञ्यः स्यान्न तु स्त्रियाम्। कौञ्जायन्यः। बहुत्वे तद्राजत्वाल्लुग्वक्ष्यते। ब्राध्नायन्यः। स्त्रियां कौञ्जायनी। गोत्रत्वेन जातित्वान्ङीष्। अनन्तरापत्ये कौञ्जिः॥

---

वृद्धिरेचि वैयासकि। न च वृद्धिरेचीति वृद्धेरपि निषेधश्शंक्यः । मृजेर्वृद्धिरित्यारभ्य वृद्धिप्रकरणे तत्सूत्रस्य असत्वेन अस्य सूत्रस्य तत्प्रकरणनिषेधप्रकरणत्वेन वृद्धिरेचीति सूत्रबाधनाशक्तत्वात्। किञ्च वकारात्परस्य नासौ वृद्धिः वकारात्परयोर्द्वयोर्विधीयमानत्वात्। अपि च निषेधात्प्रागैजागमाभावेन वृद्धिरेचीति न प्रवर्तते इति न तद्बाधश्शंक्यते शंकितुं। निषेधानन्तरमेजागमे सति प्रवर्तमानं वृद्धिरेचीति सूत्रं निषेद्धुं नैय्वाभ्यामिति न प्रवर्तते। लक्ष्ये लक्षणन्यायविरोधात्। उपजीव्यविरोधस्य अन्याय्यत्वाच्च। ननु कथमत्र व्यासशब्दे यकारस्य पदान्तत्वं व्यासेत्यस्यैव पदत्वादिति चेदुच्यते। विपूर्वकात् असुगतिक्षेपणयोरिति धातोः कर्मण्यणि व्यास इति रूपम्। विरित्युपसर्गोऽव्ययत्वेण पदम्। असुधातोरणि अत अपधाया इति वृद्धौ आसः वि आसः–इको यणचि–व्–य्–आसः पदान्ते क्स्थानिकादेशत्वाद्यकारोयं पदान्तः व्यासः। न चात्र पूर्वधातुरुपसर्गेण युज्यते पश्चात्साधनेनेति मतान्तरस्वीकारेण व्यस् इत्यस्मादणि व्यास इति वाच्यम्। वृद्धिं बाधित्वा ऐजागमेन वैयास इत्यनिष्टरूपापत्तेः। वैयासकिरिति यादुदाहरणम्। स्वस्यस्यायं सावश्व इति वादुदाहरणम् बोध्यम्। वारुडकिः। व्यासवरुडेति वार्तिके वरुडग्रहणात् अकइञौ इत्यादि आदिना नैषादकिः चाण्डातिकिः बैम्बिकिः अत्र वार्तिके चण्डालबिम्बानामिति स्थाने पण्डारमिवानामिति पाठान्तरम्। तेन पांण्डारतिः वैम्वकिः इत्यपि भवतीति तत्त्वबोधिनीकारः। ननु वैयासकिशब्दादितोमनुष्यजातेरिति ङीषि वैयासकी इति भवितव्ये वैयासिक्यामिति कथम्प्रयोगस्संगच्छते भारतादिषु इति चेत् उच्यते शेषाधिकारीये कृते ग्रन्थे अणादयस्युरिति व्यासेन कृतो ग्रन्थः वैयासिक इति दिक्। टिड्ढाणेति ङप् वैयासिकि न हि संहिता व्यासस्य अपत्यं भवितुमर्हति येन व्यासवरुडेत्यपत्यार्थे अकञिञौ स्यातां वैयासकी इति भवितुम्। तस्मात् वैयसिक्याम्पारमहंस्यसंहितायामित्येव पाठः प्रामाणिकः। गोत्रे कुञ्जादिभ्यश्छफञ् गोत्रेऽभिधित्सिते कुञ्जादिभ्यःच्फञ् स्यादिति सूत्रार्थः। प्राग्दीव्यतोणित्यधिकृतस्याणोपवादः। चञो इत्संज्ञा ए इति शिष्यते अव्रातच्फञोरस्त्रियाम्। सूत्रान्तरमेतत्। स्वार्थिकेषु वक्ष्यति। पूगाञ्ञ्यो ग्रामणीति सूत्रात् ञ्य इत्यस्यात्रानुवृत्तिः। प्रत्ययग्रहणे तदन्तग्रहणमिति च्फञा तदन्तानां ग्रहणम्। व्राताश्चच्फञोश्च तेषां समाहारः व्रातच्छञ् इति समासन्तेव्रातच्फञोस्त्रियामिति सूत्रयितुमुचितम्। यथाश्रुते तु व्रात इति जात्येकवचनम्। व्रातश्चच्फञ् च व्रातच्फञौ ताभ्यां व्रातच्फञोरिति पञ्चमी।

**११०१। नडादिभ्यः फक्** ।४।१।९९। गोत्र इत्येव। नाडायनः। चारायणः। अनन्तरो नाडिः॥ **११०२। हरितादिभ्योऽञः** ।४।१।१००। एभ्योऽञन्तेभ्यो यूनि फक्। हारितायनः। इह गोत्राधिकारेऽपि सामार्थ्याद्यून्ययम्। नहि गोत्रादपरो गोत्रप्रत्ययः। बिदाद्यन्तर्गणो हरितादिः॥ **११०३। यञिञोश्च** ।४।१।१०१। गोत्रे यौ यञिञौ तदन्तात् फक् स्यात्। अनातीत्युक्तेः 'आपत्यस्य १०८२' इति यलोपो न। गार्ग्यायणः। दाक्षायणः॥ **११०४। शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु** ।४।१।१०२। गोत्रे फक्। अञिञोरपवादः। आद्यौ बिदादी। शारद्वतायनो भार्गवश्चेत्। शारद्वतोऽन्यः। शौनकायनो वात्स्यश्चेत्। शौनकोऽन्यः। दार्भायण आग्रायणश्चेत्। दार्भिरन्यः॥

---

कौञ्जायन्यः कुजंस्य तस्यऋृषेः गोत्रापत्यं कौञ्जायनः। स एवेति स्वार्थे ञ्यः ञ्कारस्य इत्संज्ञया लोपः। य इति शिष्यते। यस्येति चेत्यवर्णलोपः। कौञ्जायन्यः। च्फञन्तात् ञ्यस्येदमुदाहरणम्। व्राते कापोतपाक्य इत्युदाहरिष्यति। लुग्वक्ष्यते तद्राजस्य बहुष्विति सूत्रेणेति शेषः। ते तद्राजा इति ञ्यादीनां तद्राजसंज्ञाञ्च वक्ष्यति। गोत्रत्वेन जातित्वात् गोत्रञ्च चरणैस्सहेति गोत्रस्य ज्यातित्वस्योक्तत्वात्। ङषजातेः स्त्रीविषयादिति सूत्रात् गोत्रे कुञ्जादिभ्य इति सूत्रे गोत्रे किम् अनन्तरापत्ये कौञ्जिः। स्त्रियान्तु इतो मनुष्यजातेरिति ङीष् कौञ्जी।

**अनञोनाडिः** नडस्यानन्तरापत्यं नाडिः अत इञ्।

**हरितादिभ्योऽञः** अनृष्यानन्तर्ये बडादिभ्यो ञ् इति वक्ष्यमाणसूत्राद्धरितादिभ्यो ऋृषिभ्योऽञ् गोत्रे हरितस्य गोत्रापत्यं हारितः तदपत्यं युवा हारितायनः । ननु गोत्राधिकारान्तर्गते सूत्रेऽस्मिन् कथं युवाधिकारः। अत आह सामर्थ्यादिति। एको गोत्र इति गोत्रे एकस्यैव प्रत्ययस्य विधानेन गोत्रान्तात्पुनर्गोत्रप्रत्यययोऽसंभवीति सोत्रप्रत्यययाञन्तेभ्यः हरितादिभ्यः प्राग्विधानं व्यर्थं स्यादिति प्रकृतसूत्रावैयर्थ्याय युवाधिकारोऽत्रेति भावः।

अनातीत्युक्तेः आतपत्यस्येति सूत्रे आतिपरतो यलोपो नेत्युक्तत्वात् गार्ग्यायिण इत्यत्र फस्य आयन्नादेशे कृते आकारपरकत्वान्न लोपः गर्गस्यं गोत्रापत्यं गार्ग्यः तदुपत्यं युवा गार्ग्यायनः यञन्तात्फक इदमुदाहरणम्। इञन्तात् दाक्षायण इति।

**शरद्वदिति** गोत्रेऽभिधित्सिते भृवादिषु क्रमेण वाच्येषु शरद्वदाभ्यः फक् स्यात् बिडादित्वात्प्रथमयोरञि तृतीये अत इञि च प्राप्ते तयोरपवादायेदं सूत्रम्। भृग्वादिष्ववाच्चेषु सत्सु तु अञिञौ भवत एव फकः कित्त्वं वृद्ध्यर्थम्। किति चेत्यादिवृद्धिः।

द्रोणपर्वतजीवन्तादिति समाहारैकवद्भावः। नडादिभ्य इति सूत्रात्फकोधिकारः गोत्रे कुञ्जादिभ्य इत्यतो गोत्रे इति फगभावे अत इञ् अनन्तरापत्ये तु इञेव न तु फक्।

**११०५। द्रोणपर्वतजीवन्तादन्यतरस्याम्** ।४।१।१०३। एभ्यो गोत्रे फग् वा। द्रौणायनः। द्रौणिः। पार्वतायनः। पार्वतिः। जैवन्तायनः। जैवन्तिः। अनादिरिह द्रोणः। अश्वत्थाम्न्यनन्तरे तूपचारात्॥ **११०६। अनृष्यानन्तर्ये बिदादिभ्योऽञ्** ।४।१।१०४। एभ्योऽञ् गोत्रे ये त्वत्रानृषयस्तेभ्य अनन्तरे। सूत्रे स्वार्थे ष्यञ्। बिदस्य गोत्रापत्यं बैदः। अनन्तरो बैदिः। बाह्वादेराकृतिगणत्वादिञ्। पुत्रस्यापत्यं पौत्रः दौहित्रः ॥**११०७। गर्गादिभ्यो यञ्** ।४।१।१०५। गोत्र इत्येव। गार्ग्यः वात्स्यः॥ **११०८। यञञोश्च** ।२।४।६४। गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक्स्यात्तत्कृते बहुत्वे नतु स्त्रियाम्। गर्गाः वत्साः। बिदाः। उर्वाः। तत्कृते इति किम्। प्रियगार्ग्याः। स्त्रियां तु–गार्ग्यः स्त्रियः। गोत्रे किम्। द्वैप्याः। औत्साः। प्रवराध्यायप्रसिद्धमिह गोत्रम्। तेनेह न। पौत्राः। दौहित्राः॥

---

पार्वतिः। ननु पर्वतस्यापत्यं स्त्री पार्वती इति कथमिति चेत् अत इञ् कृते इकारान्तात्सर्वतोऽक्तिन्नर्थादिति ङीषि बोध्यम्। उपचारात्। अनादिद्रोणभिन्नो यो द्रोणस्तस्मादनन्तरापत्ये अश्वत्थाम्नि द्रौणायन इति भाष्यप्रयोगस्तु अनन्तरापत्ये गोत्रापत्यत्वोपचारात्। द्रोणे अनादिद्रोणत्वोपचाराच्च संगच्छते इति भावः। भाष्यप्रयोगस्य निरंकुशत्वादेवं विधिकल्पना।

अनृषीति–बिदादिभ्योऽञस्याद्गोत्रे, अनृषिभ्यस्त्वनन्तरापत्ये ऋषयो न भवन्तीत्यनृषयः। बिदादिगणे ये ऋषिवाचकाश्शब्दास्तेभ्यो गोत्रे ये अनृषिवाचकास्तेभ्य आनन्तर्ये च अञ्स्यादिति सूत्रार्थः। बिद इति कश्चन ऋषिः। अतो गोत्रापत्ये अञि बैदः अनन्तरापत्येत्विञ् वा– अनृषिभ्य आनन्तर्ये उदाहरणद्वयं पौत्रो दाहित्र इति च।

तत्कृते बहुत्वे............. ञान्तार्थकृते बहुत्वे इत्यर्थः। केवलयोर्वञञोर्बहुत्वाद्यसंभवात्तदन्तार्थ कृते इति। बह्वर्थबोधकत्वे इति यावत् लिङ्गसंख्यादीनां प्रातिपदिकार्थत्वेन यञन्ते (तद्धितान्तत्वात्) प्रातिपदिके एव एकद्विबह्वर्थबोधके इति हेतोः बहुवचनबोधकयोः गोत्रविहितयञन्तयोः प्रातिपदिकयोरवयवौ यौ यञञौ तयोर्लुक् स्यात्, स्त्रियान्तु न लुक् इति निष्कृष्टोऽर्थः। यञञोरित्यावृत्तिः एकं प्रातिपदिकविशेषणम्। अन्यल्लुगन्वयि। ननु गोत्रे यौ यञञौ तयोर्लुक्स्यात् बहुषु न तु स्त्रियामित्येवार्थोऽस्तु किंमावृत्त्या इति चेत्। केवलयोर्यञञोर्गोत्रवाचित्वाभावात् तदंतयोरित्यर्थमावृत्तिरिति तत्वबोधिनी। गोत्रे यत्प्रातिपदिकं तस्मात्परयोरित्युक्तिस्तु केवलप्रातिपदिकस्य गोत्रवाचकत्वाभावन्नसंगच्छते। ननु गोत्रे विहितौ यौ यञञौ

**११०९। मधुबभ्व्रोर्ब्राह्मणकौशिकयोः** ।४।१।१०६। गोत्रे यञ्। माधव्यो ब्राह्मणः। माधवोऽन्यः। बाभ्रव्यः कौशिकऋषिः। बाभ्रवोऽन्यः। बभ्रुशब्दस्य गर्गादिपाठात्सिद्धे नियमार्थमिदम्। गर्गादिपाठफलं तु लोहितादिकार्यम्। बाभ्रव्यायणी॥

---

तयोर्लुगित्यर्थोऽस्तु इति चेन्मैवम्। पौत्रा इत्यादावपि लुक्प्रसंगात्। कृते तु तदन्तग्रहणे यञन्तमञन्तं वा यत्र गोत्रसंज्ञं न तु केवलौ यञञौ तत्रैव लुक् न त्वन्यत्रेति पौत्रा इत्यत्र अञ एव गोत्रसंज्ञत्वेन न लुक्प्रसंग इति। ननु अपत्यं पौत्रप्रभृतिगोत्रमिति अपत्यस्य यञादेर्गोत्रत्वमव्यभिचारीति कथं तदन्तस्य गोत्रत्वमिति चेदुच्यते। प्रवराध्यायप्रसिद्धं गोत्रमिह गृह्यते न त्वपत्यमिति कृत्रिमम्। तादृशं गोत्रत्वं तदन्तस्यैवेति। अत एव प्रवराध्यायप्रसिद्धगोत्रवाचिनौ केवलौ यञञौ न भवत इति तत्त्वबोधिनी। इत्थं तदन्तग्रहणेन सिद्धमेवानुवदति मूले प्रवराध्यायप्रसिद्धमिह गोत्रमिति। प्रवराध्यायो नाम प्रवरस्य अध्ययनम्। त्रयार्षेयप्रवरान्वितो भारद्वाजगोत्र इत्यादिकम्। यद्यप्यस्मिन्गोत्रेऽपि कृत्रिमगोत्रत्वं वर्तते (गर्गस्य गोत्रापत्यं गार्ग्यः गर्गपौत्र इति) तथाऽपि कृत्रिमे नैतद्गोत्रत्वं वर्तत इति वैलक्ष्यण्यमुभयोर्बोध्यम्। यद्गोत्रम्। प्रवराध्यायाप्रसिद्धं न तदवयवयोर्लुगिति प्रवराध्याये तु भारद्वाज-कौशिक इत्येवं तद्धितप्रत्ययान्तयोरेव गोत्रत्वेन व्यवहारः। न तु स्थितप्रत्ययस्येति यञन्त..........मञन्तञ्च यद्गोत्रं, अर्थात् प्रवराध्यायप्रसिद्धम्। गार्गेत्यादिकं तदवयवयोर्लुगिति निष्कृष्टम्। अत्र ञञोरित्यस्यावृत्तिर्मास्तु यञन्तयोर्लुगित्युक्ते निर्दिश्य मानस्यादेशा भवन्तीति परिभाषया सूत्रे निर्दिष्टयोर्यञञोरेव लुगादेशो भवतीति तत्वबोधिनी। (गर्गादिभ्योऽञ् इति सूत्रे तु कृत्रिममेव गोत्रं गृह्यते। उक्तन्यायेन केवलयोः प्रत्ययप्रातिपदिकयोर्गोत्राभावेन यञुत्पत्त्यसंभव प्रसंगात्। द्वीपे भवा द्वैप्याः। उत्सस्यानन्तरापत्यान्यौत्साः। प्रतिपदोक्तत्वादतइञं बाधित्वा उत्सादिभ्योऽञ् प्रियगार्ग्याः। अत्र तदर्थकृते बहुत्वे सत्यपि तदितरार्थकृतबहुत्वाभावस्य असत्त्वान्न लुक्। तत्कृते इत्यस्य तदितरार्थाकृते तात्पर्यम्। अन्यथा तत्कृते इति व्यर्थ स्यात्। संख्यायाः। प्रातिपदिकार्थत्वाव्यभिचारात्। प्रियाश्च ते गार्ग्याश्च प्रियगार्ग्याः यद्वा प्रियो गार्ग्यो येषान्ते इति विग्रहः। अत्र हि न यञन्तार्थकृतं बहुत्वं गार्ग्य इति एकार्थवाचित्वाद्यञन्तस्य-किंतु यञन्तान्तार्थकृतम्। यञन्तं गार्गीति, तदन्तं प्रियगार्गीति प्रातिपदिकं तदर्थगतत्वाद्बहुत्वस्य-गर्गस्य गोत्रापत्यं स्त्रियो गार्ग्यः ।

लोहितादि गर्गाद्यन्तर्गणत्वाल्लोहितादिगणस्य लोहितादिगणे भभ्रोः पाठाच्च लोहितादीनां यत्कार्यं स्त्रियां कप्रत्ययः स बभ्रोरपि भवति। बभ्रोर्गोत्रापत्यं बाभ्रव्य-ततस्त्रियां ष्फः। षित्वात् ङीष् बाभ्राव्यायणी। नियमार्थम्। गर्गादिभ्य इति यञ् यदि बभ्रोर्भवति तर्हि कौशिकवाचकत्वे एवेति।

**१११०। कपिबोधादाङ्गिरसे** ।४।१।१०७। गोत्रे यञ् स्यात्। काप्यः। बौध्यः। आङ्गिरसे किम्। कापेयः। बौधिः॥ **११११। वतण्डाच्च** ।४।१।१०८। आङ्गिरस इत्येव। वातण्ड्यः। अनाङ्गिरसे तु गर्गादौ शिवादौ च पाठाद्यञणौ। वातण्ड्यः। वातण्डः॥ **१११२। लुक् स्त्रियाम्** ।४।१।१०९। 'वतण्डाच्च ११११' इति विहितस्य लुक् स्यात् स्त्रियाम्। शार्ङ्गरवादित्वान् ङीन्। वतण्डी। अनाङ्गिरसे तु वातण्ड्यायनी। लोहितादित्वात् ष्फः। अणि तु वातण्डी। ऋषित्वाद्वक्ष्यमाणः ष्यङ् न॥ **१११३। अश्वादिभ्यः फञ्** ।४।१।११०। गोत्रे। आश्वायनः॥ (ग) **पुंसि जाते**। पुंसीति तु प्रकृतिविशेषणम्। जातस्य गोत्रापत्यं जातायनः। पुंसीति किम्। जाताया अपत्यं जातेयः॥ **१११४। भर्गात्त्रैगर्ते** ।४।१।१११। गोत्रे फञ्। भार्गायणस्त्रैगर्तः। भार्गिरन्यः॥

---

बौधिः। आत इञ् अनृषित्वादृषबन्धकेति नाण् आंगिरसो ऋषिरेवेति स्वीकारे तु बाह्वादित्वादिञ् कपिबोधादिति समाहारद्वंद्वः।

प्रकृतेः जातेति प्रातिपदिकस्य विशेषणम्। पुंवाचकाज्जातेति प्रातिपदिकाद्गोत्रे फञ् स्यादिति वार्तिकार्थः । प्रकृतिविशेषणत्वाभावे जातात् फञ् स्यत् पुंसीत्यर्थस्स्यात्तेन जातायना इति न सिद्ध्येत्। यञञ्च–

यञञोः परामर्शः यञन्तार्थकृते बहुत्वे इत्यर्थः। केवलयोर्यञञोर्बहुत्वाद्यसम्भवात्तदन्तार्थ कृत इति बह्वर्थबोधकत्वे इति यावत्। लिङ्गसंख्यादीनां प्रातिपदिकार्थत्वात् कृत्तद्धितसमासाश्चेति तद्धितान्तस्य प्रातिपदिकत्त्वेन यञन्तयोरेव एकद्वि बह्वर्थबोधकत्वमिति बोध्यम्। बह्वर्थवाचिनोः गोत्रविहितयञन्तयोः प्रातिपदिकयोरवयवौ यौ यञञा तयोर्लुक्स्यात्। स्त्रियास्तु न लुक् इति सूत्रनिष्कृष्टार्थः। अत्र च यञञोरित्यावृत्तिः। एकं प्रातिपदिकविशेषणं तेन तदन्तविधिः अन्यल्लुगन्य इति बोध्यम्। ननु आवृत्तिर्मास्तु। गोत्रे विहितौ यौ यञञै तयोर्लुक्स्यात् बहुषु न तु स्त्रियामित्येवार्थोस्तु। न च यञञोः केवलयोर्गोत्रवाचकत्वाभावात्तदन्तयोरित्येतदर्थमावृत्तिरावश्यकीति वाच्यम्। अपत्यं पौत्रप्रभृति गोत्रमिति गोत्रसंज्ञामादौ उक्त्वा ततः गर्गादिभ्यो गोत्रे यञ् स्यात्। बडादिभ्यो गोत्रे अञ् स्यादित्युक्तत्वेन यञञेर्गोत्रे विधानात्केवलयोर्यञञोरेव गोत्रवाचकत्वमिति नार्थस्तदन्तविधिनेति–इति शंकायामाह। प्रवराध्यायात्प्रसिद्ध गोत्रवाचिनौ केवलौ यञञौ न भवत इति गोत्र इत्यनेन तदन्तं विशेषितमिति तत्त्वबोधिनी। अयं भावः गोत्रं त्रिविधम्। लौकिकं शास्त्रीयं प्रवराध्ययप्रसिद्धं चेति तत्रापत्यमात्रं लौकिकं गोत्रम्। अपत्यं पौत्रप्रभृतितु स्त्रियं इदमेव वंश इत्यप्युच्चते। तृतीयस्तु त्रयात्रृषेयप्रवरन्वित भारद्वाजगोत्र इत्यादि

प्रवराध्ययनप्रसिद्धम्। भारद्वाज–काश्यप इत्यदि यञन्तम्। एवमादि। प्रवराध्यायप्रसिद्धगोत्रत्वन्तु केवलयोर्यञञोर्नास्ति, किन्तु तदन्तयोरेव। अत स्तदन्तार्थमावृत्तिरिति । ननु लौकिकमेव गोत्रं गृह्यताम्। को दोष इत्यत आह–पौत्रदौहित्र इति। बिदादिगणे पुत्रदुहितृशब्दौ पठितौ। नृषिभ्य आनन्तर्य इति ताभ्यामनन्तरापत्ये अञ्विहितः। पुत्रस्य दुहितुश्च अनन्तरापत्यानि पौत्रादौहित्राश्च। अत्र गोत्रे यौयञञौ तयोर्लुग्बहुत्वे इत्येतावदुक्तौ। लौकिकगोत्रे अपत्ये विहितस्य अञः लुक्स्यात्। अतस्तद्वारणाय प्रवराध्यायप्रसिद्धं तृतीयमेव गोत्रं गाह्यम्।

ननु तर्हि कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्यय इति कृत्रिमाकृत्रिमन्यायेन प्रकृते शास्त्रीयमपत्यं पौत्रप्रभृतिगोत्रमित्युक्तलक्षणं गोत्रमेव गृह्यते। तच्च गोत्रत्वं यञञोरेव वर्तते न तु तदन्तयोः। अतोनात्रावृत्तिरभ्युपेया। न च पौत्रा दौहित्रा इत्यत्रातिप्रसंग इति वाच्यम्। आनन्तर्य एव पुत्रदुहितृशब्दाभ्यामञो विहितत्वेन तत्र अञः कृत्रिमगोत्रत्वासंभवात् गोत्रे विहितयोरेव यञञोर्लुक् न त्वपत्ये विहितयोरिति कृत्वा नैव तत्रातिप्रसक्तिः। तस्मात् प्रवराध्यायप्रसिद्धगोत्रग्रहणमत्र व्यर्थमेवेति चेत् सत्यम्। तथाऽपि पुत्रादिशब्देभ्यः गोत्रे अञोऽविहितत्वेऽपि बिदादिभ्यो गोत्रे विहितत्वेन अञ् तावत् गोत्रे विहितः एव। अतः पौत्रा इत्यत्रापि लुक् स्यादेवेति.– – – – – – – – – – – – – – – – –

– – – – – – – – –सूत्राद्गोत्रे इति प्रवर्तते तत्र गोत्रशब्दोत्तरवर्तिसप्तम्यावृत्तित्वमर्थः। गोत्रवृत्तीति यावत्। गोत्रप्रतिपादकमिति निष्कृष्टार्थः। शब्दोह्यर्थे प्रतिपाद्यप्रतिपादकभावसम्बन्धेन वर्तत इति पूर्वमेवोक्तम्। गोत्रवाचियद्यञन्तमञन्तं च तदवयवयोर्यञञोर्लुक् स्यादित्यर्थः। लौकिकशास्त्रीयगोत्रद्वयवाचित्वं यञञोरेव वर्तते न तु तदन्त इति कृत्वा प्रवराध्यायप्रसिद्धगोत्रवाचित्वमिह ग्राह्यमित्युक्तम्मूले एव। तत्र पुनर्विचार्यते यास्कादिभ्य इति सूत्रे हि गोत्रपदं वर्तते। तत्र तस्य कृत्रिमगोत्रवाचित्वमेवाभ्युपेतम्। एभ्यो गोत्रप्रत्ययस्य लुक्स्यादिति मूले एव वक्ष्यमाणत्वात्। उत्तरत्र अत्रिभृग्विति सूत्रे अनुवर्तितस्याप्यस्य गोत्रपदस्य कृत्रिमगोत्रवाचित्वमेवोक्तम्। अतो मध्ये यञञोश्चेति सूत्रे अनुवर्तितस्यास्य प्रवराध्यायप्रसिद्धगोत्रवाचित्वोक्तिरसंगतत्वाद्विरुद्धैव। न च प्रवराध्यायप्रसिद्धं गोत्रमगृहीत्वा गोत्रे यञञोर्लुगिति कृत्रिमगोत्रवाचिनोर्यञञोर्लुग्वचने पौत्रा इत्यत्रापि अञोलुक्स्यादिति वाच्यम्। तत्र पुत्रशब्दादनन्तरापत्ये एव अञोविहितत्वेन गोत्रवाचित्वाभावात्। नापि यत्र कुत्रापि स्थले गोत्रे विहितत्वादञोऽत्रापि लुक्स्यादिति वाच्यम्। गोत्रवाचिनोर्यञञोरित्युक्तत्वेन प्रकृते अञः गोत्रवाचित्वाभावात्। अन्यथा गोत्रे इत्येतस्यानुवृत्तिरपि व्यर्थैव स्यात्। यञञोर्गोत्रे विहितत्वस्य अव्यभिचरितत्वात् । न च लौकिकं कृत्रिमञ्चेति गोत्रं

**१११५। शिवादिभ्योऽण्** ।४।१।११२। गोत्र इति निवृत्तम्। शिवस्यापत्यं शैवः। गाङ्गः। पक्षे तिकादित्वात् फिञ्। गाङ्गायनिः। शुभ्रादित्वाड्ढक्। गाङ्गेयः॥

---

द्विविधमेव। प्रवराध्यायप्रसिद्धं गोत्रन्तु कृत्रिममेव। अतो नासंगतमिति वाच्यम्। तथाविधविवक्षा– - - - - - - - - - - - - - - - - यञञौ तयोर्लुगित्येव ब्रूयान्न तु पुनर्गो यञन्तमञन्तञ्चेति। तस्मात् चिन्त्यमेवेदम्मूलम्।

अत्रायं पूर्वपक्षसंग्रहः। यञञोर्लुिक्स्याद्गोत्रे तत्कृते बहुत्वे न तु स्त्रियाम्। गोत्रञ्चेह कृत्रिमम्। तेनेह न पौत्रा दौहित्रा इति वक्तव्ये गोत्रे यद्यञन्तमञन्तञ्च तदवयवयोरेतयोर्लुक्स्यातत्कृते बहुत्वे न तु स्त्रियाम्। प्रवराध्यायप्रसिद्धमिह गोत्रम्। तेनेह न पौत्रा दौहित्राः इति वचनमसङ्गतमनुपपन्नम्। क्लिष्टञ्च इति ।

अथोत्तरः पक्षः–अनृष्यानन्तर्य इति सूत्रे योगो विभज्यते। अन्नष्यानन्तर्य इत्येकं सूत्रम्। बिदादिभ्योञ् इति द्वितीयम्। बिदादिभ्योञ् स्याद्गोत्रे इत्येकस्यार्थः। अनृषिभ्यो बिदादिभ्य आनन्तर्ये गोत्रे च अञ्स्सादित्यन्यस्स्यार्थः। ततश्च बिदादिगणे ये ऋषिभिन्नाः पुत्रदुहित्रादयस्तेभ्य आनन्तर्ये गोत्रे चाञ् स्यादिति सिद्धम् । एवं सति पुत्रस्य गोत्रापत्यानि पौत्राः। दुहितुर्गोत्रापत्यानि दौहित्रा इति भवति। पुत्रस्यापत्यानि पौत्राः । दुहितुरपत्यानि दौहित्रा इत्यपि च भवति। यदि यञञोरिति सूत्रे आवर्तितस्य गोत्रपदस्य कृत्रिमगोत्रमित्यर्थस्स्यात्तर्हि गोत्रवाचिनोर्यञञोर्लुग्बहुत्वे इति सूत्रार्थस्स्यात्। ततश्च पौत्रा दौहित्र इत्यत्रापि अयोलक्स्यात्। गोत्रवाचित्वात्तत्र तस्य अतः प्रवराध्याय प्रसिद्धं गोत्रमेवेह सूत्रे केवलं गाह्यम् यस्कादिभ्य इत्यत्र तु कृत्रिममेव। न चेयमेकस्यैव गोत्रपदस्य सूत्रद्वये अर्थद्वयकल्पना अप्रामाणिकेति वाच्यम्। भाष्यकैयटयोरुक्तकल्पनायाः प्रमाणभूतत्वात् दर्शितञ्चेदं भाष्यमुपादाय कैयटेनोक्तमिति तत्त्वबोधिन्याम्।

जातीयः। स्त्रीभ्यो ढक् पुंसीत्यस्य अभावे अस्मिन्नपि विग्रहे जातायन इति स्यात्। जात इति कस्य चित्संज्ञा।

शिवादिभ्योऽण् गोत्र इति निवृत्तम्ः तस्यापत्यामित्यत्रान्वेति। शिवादिभ्यः षष्ठ्यन्तेभ्योऽण्स्यादपत्येर्थे इति सूत्रार्थः। अत्राण्ग्रहणं व्यर्थम्। न च अत इञादिकं स्यादिति तद्बाधनार्थमिति वाच्यम्। शिवादिभ्य इति पृथक्सूत्रारम्भसामर्थ्यादेव तत्सिद्धेः। न च प्राक्सूत्रात्फञोनुवृत्तिस्स्यादिति वाच्यम्। व्याख्यानादेव तन्निवृत्तेः तस्मात् प्राग्दीव्यतोऽण् इत्यधिकारप्राप्तोण् स्यादेवात्र इति पक्षे वेत्यधिकारादिति भावः। अणो विकल्पेन गङ्गाशब्दात्तिकादित्वात्फिञ्। तिकादिभ्यः फिञ् इति सूत्रात् फिञोपिवाधिकारस्थत्वेन पक्षे ढक् शुभ्रादिभ्यश्चेति सूत्रात्।

अवृद्धाभ्य इति नदीति न स्वरूपग्रहणं नापि संज्ञाग्रहणं किन्तु नदीवाच्यानां ग्रहणम्

**११११६। अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः** ।४।१।११३। अवृद्धेभ्यो नदीमानुीषीनामभ्योऽण् स्यात्। ढकोऽपवादः। यामुनः। नार्मदः। चिन्तिताया अपत्यं चैन्तितः। अवृद्धेभ्यः किम्। वासवदत्तेयः। नदीत्यादि किम्। वैनतेयः। तन्नामिकाभ्यः किम्। शोभनाया अपत्यं शोभनेयः॥ **१११७। ऋष्यन्धकवृष्णिकुरुभ्यश्च** ।४।१।११४। ऋषयो मन्त्रद्रष्टारः। वासिष्ठः। वैश्वामित्रः। अन्धकेभ्यः, श्वाफल्कः। वृष्णिभ्यः, वासुदेवः। आनिरुद्धः। शौरिरिति तु बाह्वादित्वादिञ्। कुरुभ्यः, नाकुलः। साहदेवः। इञ एवायमपवादो मध्येऽपवादन्यायात्। अत्रिशब्दात्तु परत्वाड्ढक्। आत्रेयः॥

---

तन्नामिकाभ्य इति निर्देशालिङ्गात्। एवं मानुषीत्यत्रापि नामैव नामकम्। तयोर्नदीमानुष्योर्नामके संज्ञे यासां ताभ्यस्तन्नामिकाभ्यः वृद्धान्यासां संतीति वृद्धाः। न वृद्धा अवृद्धाः ताभ्यः नदीमानुषीभ्य इति विशेष्यम्। नदीमानुषीभ्य इत्यर्थग्रहणम्। अर्थे वाचकत्वेन शब्दो वर्तत इति अवृद्धत्वं तन्नामकत्वञ्च संगच्छते। नदी वा मानुषी वा या अवृद्धसंज्ञका ततोण्स्यादपत्येर्थे इति सिद्धोर्थः। अर्थात् प्रत्ययानुदयात् ततोणित्यस्य तद्वाचकादण् इत्यर्थः। तद्वाचकोपि शब्दोत्र अवृद्धसंज्ञाभूत एव विशेषणद्वयसामर्थ्यात्। इमं क्लेशं परिहरन् फलितमाह अवृद्धेभ्य इत्यादिना अवृद्धेभ्यो नदीमानुषीनामभ्य इति सूत्रिते क्लेशो न तादृश इति भावः। प्राक्सूत्रादणोनुवृत्तिः अधिकाराद्वा यामुनः यमुना इति नदीसंज्ञा अवृद्धा तस्या अपत्यं यामुनः चिन्तिता इति कस्याश्चिन्मनुष्यस्त्रियोर्नाम एषु स्त्रीभ्यो ढक् इति ढकि प्राप्ते तं बाधित्वाऽनेन अण्। नदी मानुषी इति ङचन्तनिर्देशात्पुंसि नानेनाण्। चिन्तितस्यापत्यम् चैन्तितिः। शोणस्य अपत्यं शौणिः। अतइञ् सिन्धोरपत्यं सैन्धव इत्येव तस्यापत्यमित्यण्।

ऋष्यंधकवृष्णिकुरुभ्य इत्यत्र चतुर्ष्वप्यर्थग्रहणम्। अन्धकाः कुरवश्च देशविशेषाः तद्राजाः तद्देशीया अप्यन्धककुंरव एव तेषामिह ग्रहणम्। न तु देशानाम्। अपत्यत्वायोगात् वृष्णयो यादवाः। अनिरुद्धस्यापत्यमानिरुद्धः अत इञोयमपवादः। न तु बाह्वादीञः तस्य प्रतिपदोक्तत्वात्। विशेषविहितत्वेन अपवादत्वाद्वा। मध्येपवादाः पूर्वान्विधीन् बाधन्ते नोत्तरानिति न्यायादत इञ एवायं बाधकः न त्वितश्चा निञः इत्यस्य। न च ऋष्यन्धकसूत्रात् प्राक्तना ये फयञ्आदयस्तेषामेव बाधकोऽस्तु ऋष्यन्धकाण्-न त्वत इञ इति वच्यम्। गर्गादिभ्य इत्यादीनां प्रतिपदोक्तत्वेन विशेषविहितत्वान्नानेन ते बाध्येरन्। किञ्च गोत्रप्रत्ययास्ते अपत्यप्रत्ययोयमिति विभिन्नविषयत्वात् अपत्यविषयस्य अत इञ एव बाधकोयमिति न शंकावकाशः ऋषित्वादत्रिशब्दादणः प्राप्तिः। इतश्चानिञ इति ढक् आत्रेयः।

मातुः-उत् संख्यासम्भद्रपूर्वायाः इति च्छेदः। मातृशब्दस्य स्त्रीलिङ्गत्वात् पूर्वाया इति

**१११८। मातुरुत्संख्यासंभद्रपूर्वायाः** ।४।१।११५। संख्यादिपूर्वस्य मातृशब्दस्योदादेशः स्यादण्प्रत्ययश्च। द्वैमातुरः। षाण्मातुरः। सांमातुरः। भाद्रमातुरः। आदेशार्थं वचनम्॥ प्रत्ययस्तूत्सर्गेण सिद्धः। स्त्रीलिङ्गनिर्देशोऽर्थापेक्षः। तेन धान्यमातुर्न। संख्येति किम्। सौमात्रः। शुभ्रादित्वाद्वैमात्रेयः॥ **१११९। कन्यायाः कनीन च** ।४।१।११६। ढकोऽपवादोऽण् तत्सन्नियोगेन कनीनादेशश्च। कानीनो व्यासः कर्णश्च। अनूढाया एवापत्यमित्यर्थः॥ **११२०। विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु** ।४।१।११७। अपत्येऽण्। वैकर्णो वात्स्यः। वैकर्णिरन्यः। शौङ्गो भारद्वाजः। शौङ्गिरन्यः। छागल आत्रेयः छागलिरन्यः। केचित्तु शुङ्गेत्याबन्तं पठन्ति। तेषां ढक् प्रत्युदाहरणम्। शौङ्गेयः॥

---

सम्। भद्र। इति स्वरूपग्रहणम्। संख्येत्यर्थग्रहणं संख्यासम्भद्राः पूर्वम्। (पूर्वमिति सप्तम्यर्थकमव्ययम्) यस्यास्सा संख्या सम्भद्रपूर्वा। सख्यादिभ्यः परस्य मातृशब्दस्येत्यर्थः। सम्मातुरपत्यं साम्मातुरः एतत्स्थाने षाण्मातुर इति प्रामादिकः पाठः। यद्वा षण्णाम्मातृणामपत्यं षाण्मातुर इति प्रामादिकः पाठः। यद्वा षण्णाम्मातृणामपत्यं षाणण्मातुर इतीदमपि संख्यापूर्वस्योदाहरणम्। संपूर्वस्य यस्साम्मातुर इत्यूह्यम्। ननु तस्यापत्यमित्यनेनैव अण्सिद्धेः किमनेन सूत्रेणेत्यत आह–आदेशार्थमिति उदादेशार्थमित्यर्थः। उत्सर्गेण तस्यापत्यमिति सामान्यशास्त्रेण (विधिशास्त्रेण वा )–स्त्रीलिंङ्गनिर्देशः। सूत्रे पूर्वाया इति शेषः अर्थापेक्षः। मातृशब्दार्थस्य जनन्यास्त्रीत्वात्तदपेक्षयेति भावः। तेन स्त्रीलिंङ्गनिर्देशेन धान्यम्मिमीते परिच्छिनत्तीति धान्यमाता।तस्यापत्यम् धान्यमात्रः। अत्रोदादेशो न परिमातुरत्र पुंस्त्वात्। सुमातुरपत्यं सौमात्रः कथन्तर्हि वैमात्रेय इत्यत आह शुभ्रादित्वादिति। ननु धान्यमातुर्नेत्युक्तिर्न सङ्गच्छते। संख्यादिपूर्वस्य मातृशब्दस्यैव उदादेशविधानेन धान्यपूर्वस्याप्राप्तेः। स्त्रीलिङ्गनिर्देशोपमर्दितो भवतीति चेत्–तर्हि धान्यमातुरित्यादौ स्थितौ यो मातृशब्दः परिच्छेदकवाचकस्तस्मात्संख्याधिपूर्वान्नेति धान्यमातुर्नेत्यस्यार्थो वाच्यः। तथा च सम्यग्माता (परिच्छेत्ता सम्माता तस्यापत्यं साम्मात्र इत्यादि।

कनीन च चकारः अण्कनीनयोस्सन्नियोगद्योतनार्थः। सति तु सन्नियोगे अणभावेन कनीनादेश इति लभ्यते। अनूढात्वलक्षणं कन्यात्वमत्र गृह्यते न त्वक्षतयोनित्वम्। अक्षतयोनेः कन्याया अपत्यासम्भवादित्याह–अनूढाया एवेति। अक्षतयोनिरनुदितरजस्का– कर्णश्च चाच्छिवद्विजोपि।

शुङ्गच्छगलादित्यत्र च्छेचेति तुक्–विकर्णादीनां समाहारद्वन्दः। वात्स्यश्च भारद्वाजश्च

**११२१। पीलाया वा** ।४।१।११८। तन्नामिकाणं बाधित्वा 'द्व्यचः ११२४' इति ढकि प्राप्ते पक्षेऽण् विधीयते। पीलाया अपत्यं पैलः। पैलेयः॥ **११२२। ढक् च मण्डूकात्** ।४।१।११९। चादण्। पक्षे इञ्। माण्डूकेयः। माण्डूकः। माण्डूकिः॥ **११२३। स्त्रीभ्यो ढक्** ।४।१।१२०। स्त्रीप्रत्ययान्तेभ्यो ढक् स्यात्। वैनतेयः। बाह्वादित्वात्सौमित्रिः। शिवादित्वात्सापत्नः॥ **११२४। द्व्यचः** ।४।१।१२१। द्व्यचः स्त्रीप्रत्ययान्तादपत्ये ढक्। तन्नामिकाणोऽपवादः। दात्तेयः। पार्थ इत्यत्र तु 'तस्येदम् १५००' इत्यण्॥

---

आत्रेयश्च वत्सभरद्वाजात्रयः। प्रत्येकं बहत्वाभावेति समुदाये अधिकरणभूते अस्तीति समासान्तगतं बहुत्वं वर्तिपदार्थेषु विश्राम्यति। तेन वात्स्यादीनां बह्वर्थबोधकत्वाल्लुक्संभवतीति बोध्यम्।

पीला इति काचिन्नदी, तस्या अपत्यार्थे अण् स्याद्वा। अधिकारादेव वेति विकल्पे सिद्धे पुनरिह वा ग्रहणम् पाक्षिक ढगागमार्थविकल्पाधिकारात्तु पाक्षिकस्समास इति भावः। ननु अवृद्धाभ्य इत्यणि सति किमनेन सूत्रेणेत्यत आह। तन्नामिकाणमित्यादि । अत्रेदं बोध्यम्। पुरस्तादपवादन्यायेन अवृद्धाभ्य इति सूत्रम्। स्त्रीभ्यो ढकं बाधते न तु द्व्यच इति ढकम्। तेन द्व्यच इति ढक् तन्नामिकाणोपवाद द्व्यच इति ढकोपवादः पीलायावेति। विशेषविहितत्वात् प्रतिपदोक्तत्वाच्च अपवादेन मुक्तेपुनरुत्सर्गः प्रवर्तत इति अणभावपक्षे यथा प्राप्तो ढक् इति। पीलाया अपत्यं पैलः। अत्र स्त्रीभ्यो ढक्, तं बाधित्वा तन्नामिकाण्, तं बाधित्वा द्व्यच इति ढक्, तं बाध्तिवा पीलायावेत्यण् इति सूत्रक्रमः। पैलेयः आयनेयीति ढ्इत्यस्य एय् आदेशः ढकारोपर्यकारः एयढित्त्वाद्वृद्धिः वैनतेयः। विनताया अपत्यम्। विनतशब्दस्य अदन्तत्वेन तापि विनता इति स्त्रीप्रत्ययान्तः। गरुत्मानर्थः। ननु सुमित्राशब्दात् सपत्नी शब्दाच्च अपत्येर्थे ढकि कृते सौमित्रेया- सापत्नेय इति भवितव्ये कथं सौमित्रिः सापत्नः इति शंकायामाह - बाह्वादित्वाच्छिवादित्वाच्चेति इञणाविति शेषः।

द्व्यचः-स्त्रीभ्यो ढगित्यनेनैव सिद्धे किमनेनेति शंकायामाह-तन्नामिकाणोपवाद इति स्त्रीभ्यो ढकपवादस्य तन्नामिकाणः अपवादार्थमिदं सूत्रमिति भावः। दत्ता या मानुषी संज्ञात्वात्तन्नामिकाणः प्रसक्तिः। नन्वेवं पृथाया अपत्यम् पार्थेय इति स्यादत आह- तस्येदमित्यण् इति अपत्यत्वाविवक्षायां पृथाया अयं पार्थ इत्यण् इति भावः। पार्थेय इति प्रयोगोपि साधुरेवापत्यत्वविवक्षायामिति बोध्यम्। शिवादित्वादपत्यार्थे एव पृथाशब्ददण् स्यादिति मतेत्वसाधुरेव ।

**११२५। इतश्चानिञः** ।४।१।१२२। इकारान्ताद् द्व्यचोऽपत्ये ढक् स्यात् न त्विञन्तात्। दौलेयः। नैधेयः ॥**११२६। शुभ्रादिभ्यश्च** ।४।१।१२३। ढक् स्यात्। शुभ्रस्यापत्यं शौभ्रेयः ॥**११२७। प्रवाहणस्य ढे** ।७।३।२८। प्रवाहणशब्दस्योत्तरपदस्याचामादेरचो वृद्धिः पूर्वपदस्य तु वा ढे परे। प्रवाहणस्यापत्यं प्रावाहणेयः। प्रवाहणेयः॥ **११२८। तत्प्रत्ययस्य च** ।७।३।२९। ढान्तस्य प्रवाहणस्योत्तरपदस्यादेरचो वृद्धिः पूर्वपदस्य तु वा। प्रवाहणेयस्यापत्यं प्रावाहणेयिः। प्रवाहणेयिः। बाह्यतद्धितनिमित्ता वृद्धिर्ढाश्रयेण विकल्पेन बाधितुं न शक्यत इति सूत्रारम्भः॥ **११२९। विकर्णकुषीतकात्काश्यपे** ।४।१।१२४। अपत्ये ढक्। वैकर्णेयः। कौषीतकेयः। अन्यो वैकर्णिः। कौषीतकिः॥ **११३०। भ्रुवो वुक् च** । ४।१।१२५। चाड्ढक्। भ्रौवेयः॥

---

इतश्चानिञः। नन्वत्र अनिञ इति व्यर्थम्। न च इञन्ताद् द्व्यचः। इदन्तत्वेन ढकि दाक्षेय इति स्यान्न तु दाक्षायण इति तदर्थमनिञो ग्रहणमिति वाच्यम्। परमपि इतश्चेति ढकं बाधित्वा विशेषविहितत्वेन यञिञोश्चेति फगेव स्यादिति (इदिति कृत्तद्धितेदन्तयोरविशेषेण ग्रहणम्। इञिति तु तद्धितेदन्तस्यैव (ग्रहणमिति इञो विशेषत्वादपवादत्वम्) इति चेन्मैवम्। इञश्चेति पृथक्सूत्रत्वे स्यादेवं, प्रकृते तु यञिञोश्चेति सूत्रितम्। यञिञन्तापेक्षया इदन्तमेव विशिष्यत इति इत इत्येव विशेषविहितत्वेन तदपवादभूतमिति। वस्तुतस्तु यञः इञश्च इतश्च इति सूत्रयित्वा अनिञोर्ग्रहणं त्यक्तुं शक्यम्। दुलेर्निधेश्च अपत्यं दौलेयः–नैधेयः।

वैकर्णेय इत्यनन्तरं कौषीतकेय इति पठितव्यम्।

भ्रुवो वुक्च। भ्रूशब्दस्य वुगागमस्स्यात् ढक् प्रत्ययश्चापत्येऽर्थे – भ्रूव् एय – वृद्धिः भ्रौवेयः – वुगागमाभावे तु वृद्धावावादेशे भ्रावेय इत्यनिष्टरूपापत्तिस्स्यादिति बोध्यम्।

प्रवाहणस्य ढे–शुभ्रादित्वात् ढक् प्र इति पूर्व पदम्। वाहनमित्युत्तरम्। पूर्वपदात्संज्ञायांमग इति णत्वम्। ननु वृद्धस्योत्तरपदस्य पुनर्विहितया वृद्ध्या किं इत्यतस्तत्त्वबोधिन्याम्प्रवाहणेयी भार्या इति। अयं भावः। वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे इति वृद्धिशब्देन विहितवृद्धिहेतुतद्धितान्तस्य स्त्रीवाचकस्य पुंवद्भावनिषेधात्। अत्रापि वृद्धौ तद्धितजन्यायां सत्यां पुम्वद्भावनिषेधो यथास्यात्तदर्थं वृद्धिविधानमिति। प्रवाहस्यापत्यम् स्त्री प्रवाहणेयि टिड्ढाणञिति ङीप् भार्या यस्य स इति विग्रहः। स्त्रिया पुंवदिति पुंवद्भावप्रसक्तिः।

तत्प्रत्ययस्य च सहः ढः प्रत्ययो यस्मात्तस्य ढप्रत्ययान्तस्येप्यर्थः ढान्तस्येति सुवचम्।

**११३१। कल्याण्यादीनामिनङ्** ।४।१।१२६। एषामिनङादेशः स्यात् ढक् च। काल्याणिनेयः। वान्धकिनेयः॥ **११३२। कुलटाया वा** ।४।१।१२७। इनङ्मात्रं विकल्प्यते ढक् तु नित्यः पूर्वेणैव। कौलटिनेयः। कौलटेयः। सती भिक्षुक्यत्र कुलटा। या तु व्यभिचारार्थं कुलान्यटति तस्याः 'क्षुद्राभ्यो वा ११३७' इति पक्षे ढक्। कौलटेरः॥ **११३३। हृद्भगसिन्ध्वन्ते पूर्वपदस्य च** ।७।३।१९। हृदाद्यन्ते पूर्वोत्तरपदयोरचामादेरचो वृद्धिर्ञिति णिति किति च। सुहृदोऽपत्यं सौहार्दः। सुभगाया अपत्यं सौभागिनेयः। सक्तुप्रधानाः सिन्धवः सक्तुसिन्धवः। तेषु भवः साक्तुसैन्धवः॥

---

ढान्तप्रवाहणस्य यदवयवमुत्तरपदं तदवयवानामचामादेरचो वृद्धिः। वृद्धिश्चात्र ढक् प्रत्ययेतर तद्धितनिमित्तैव - अचोञ्णिति तद्धितेष्वचामादेः किति चेत्यत्रान्वयात् - ञिति णिति किति च तद्धिते परतः - वृद्धिरित्यन्वयः। पूर्वेण प्रावहणेयः-अत इञ्-ननु ढप्रत्ययेनैव पूर्वसूत्राद्वृद्धिविकल्पादौ जाते-किमनेन सूत्रेणेत्यत आह-बाह्यतद्धितनिमित्तेत्यादि। ढान्ते वृद्धिविकल्पो यद्यपि वर्तते तथापि ततः परे ञ्निमित्ता वृद्धिर्नित्यं स्यादिञन्ते ढे परतो विहितो वृद्धिविकल्पः। न हि इङ्नमित्तां वृद्धिं नित्यां बाधितुं शक्नोपि ढापेक्षयात्र इञो बाह्यत्वात्-डान्तात् बहिः (परत्र)इञः कृतत्वादिति भावः।

इनङ् च- ङच्चेत्यन्तादेशः -ढक्सन्नियोगे एवेनङित्येतदर्थं च ग्रहणभ्। कल्याण्या अपत्यं-अन्त्यस्येकारस्येनङ्-ढक् -ढस्येयादेशः वृद्धिः काल्याणिनेयः। बन्धक्या अपत्यं बान्धकिनेयः इनङि अकार उच्चारणार्थः। इन् इति शिष्यते। अदन्तादेशे तु यस्येति चेति अवर्णलोपः कर्तव्य इति प्रक्रियागौरवम्।

कुलटाया वा पूर्वसूत्रादिनङोऽत्रानुवृत्तिः। कुलटाया इनङ् वा स्यादित्यर्थः। ननु सन्नियोगशिष्टत्वाड्ढगभावे कथमिनङत आह। ढक्तु नित्य इति-कल्याण्यादित्वात्कुलटाया इति भावः। कुलान्यटति भिक्षार्थम्। व्यभिचारार्थञ्च कुलटेति द्वेधा व्युत्पत्तिः। भिक्षुकायां पतिव्रतायां, व्यभिचारिण्याञ्च वर्तते कालटेरः कुलटा ढ्रक् -ढस्येय् -कुलटा एय् र् अ इति स्थिते-लोपो व्योर्वलीति यलोपः वृद्धिः कालटेरः।

हृद्भगेति तद्धितेष्वित्यादिना पूर्वपदस्य वृद्धौ सत्यामुत्तरपदवृद्ध्यर्थमयमारंभः। सौहार्दः, तस्यापत्यमित्यण्। सु इति पूर्व पदम् हृदित्युरमुभयोर्वृद्धिः हृदन्तत्वात् सौभागिनेयः कल्याण्यादित्वादिनङ् ढक्च-पाक्तु सैन्धवः - तत्र भव इत्यण्।

**११३४। चटकाया ऐरक्** ।४।१।१२८॥ **चटकस्यादिति वाच्यम्**॥ लिङ्गविशिष्टपरिभाषया स्त्रिया अपि। चटकस्य चटकाया वा अपत्यं चाटकैरः॥ **स्त्रियामपत्ये लुग्वक्तव्यः**॥ तयोरेव स्त्र्यपत्यं चटका। अजादित्वाट्टाप्॥ **११३५। गोधाया ढ्रक्** ।४।१।१२९। गौधेरः। शुभ्रादित्वात्पक्षे ढक्। गौधेयः॥ **११३६। आरगुदीचाम्** ।४।१।१३०। गौधारः। रका सिद्धे आकारोच्चारणमन्यतो विधानार्थम्। जढस्यापत्यं जाडारः। पण्डस्यापत्यं पाण्डारः॥ **११३७। क्षुद्राभ्यो वा** ।४।१। १३१। अङ्गहीनाः शीलहीनाश्च क्षुद्रास्ताभ्यो वा ढ्रक्। पक्षे ढक्। काणेरः। काणेयः। दासेरः। दासेयः॥ **११३८। पितृष्वसुश्छण्** ।४।१।१३२। अणोऽपवादः। पैतृष्वस्रीयः ॥**११३९। ढकि लोपः** ।४।१।१३३। पितृष्वसुरन्त्यलोपः स्याड्ढकि। अतएव ज्ञापकात् ढक्। पैतृष्वसेयः॥ **११४०। मातृष्वसुश्च** ।४।१।१३४। पितृष्वसुर्यदुक्तं तदस्यापि स्यात्। मातृष्वस्रीयः। मातृष्वसेयः॥ **११४१। चतुष्पाद्भ्यो ढञ्** ।४।१।१३५।

---

स्त्रियामपत्ये स्त्र्यपत्ये इत्यर्थः स्त्र्यपत्यं अपत्यं स्त्री इत्यर्थः।

औरक् इति प्रत्ययः कित्त्वम्। वृद्ध्यर्थम्।

अंगहीनाश्शीलहीनाश्च स्त्रियः क्षुद्राः ताभ्यः स्त्री ग्रहणार्थमेव क्षुद्राभ्य इति स्त्रीलिंङनिर्देशः। काणाया अपत्यं काणेरः। काणस्यापत्यं तु काणिरित्येव।

पैतृष्वस्रीयः पितृष्वसृ छण्

नित्यत्त्वाद्वृद्धिः। पैतृष्वसृ छ। आयनेईनीयिति ईय् आदेशश्चकारस्यच्छकारोपर्यकारेण ईययण्–पैतृष्वस्रीय पितृष्वसुरपत्यमिति विग्रहः।

ढकि लोपः। पितृष्वसुरित्यनुवर्तते। अलोन्त्यपरिभाषया अन्त्यस्य लोपादेशः। ननु विधानाभावाड्ढक एवाभावे कथं तस्मिन्नन्त्यलोपः इत्यत आह। अत एव ज्ञापकादिति इदं सूत्रं व्यर्थं सत् ढकं ज्ञापयतीति भावः। पैतृष्वसृ एय- अन्त्यस्य ऋवर्णस्य लोपः। पैतृष्वस् एय–पैतृष्वसेय।

मातृष्वसुश्च। चकारः छणो ढक् लोपयोश्च अनुकर्षणार्थः। तदेतदाह- पितृष्वसुर्यदुक्तं तदिति। पितृष्वसुमातृष्वस्रोश्चण्–इत्येकमेव सूत्रमुचितम्। अर्थमात्रालाघवमपि पुत्रोत्सवं मन्यन्ते वैय्याकरणा इति पठित्तत्वात्। पितृमातृभ्यां स्वसोश्चण् इति सूत्रिते तु ढकि लोपः आदेः परस्येति स्वस्रृशब्दादिसकारस्य स्यादिति दोषो बोध्यः।

चतुष्पाद्भ्य इति बहुत्वनिर्देशः। अर्थस्वीकारस्य कृते। अर्थस्य महिषादेर्बहुत्वात्। एकत्वनिर्देशेत्शब्दस्वरूपस्यैव ग्रहणं स्यादिति बोध्यम्। अर्थात्प्रत्ययनुदयात्सचार्थः स्ववाचके शब्दे पर्यवस्यति। तथा च चतुष्पाज्जातिवाचिभ्यः ढञ् स्यादपत्येर्थे इति सूत्रार्थः।

**११४२। ढे लोपोऽकद्र्वाः** ।६।४।१४७। कद्रूभिन्नस्योवर्णान्तस्य भस्य लोपः स्यात् ढे परे। कामण्डलेयः। कमण्डलुशब्दश्चतुष्पाजातिविशेषे॥ **११४३। गृष्ट्यादिभ्यश्च** ।४।१।१३६। एभ्यो ढञ् स्यात्। अण्ढकोरपवादः। गार्ष्टेयः। मित्रयोरपत्यम्। ऋष्यणि प्राप्ते ढञ्॥ **११४४। केकयमित्रयुप्रलयानां यादेरियः** ।७।३।२। एषां यकारादेरिय् आदेशः स्यात् ञिति णिति किति च तद्धिते परे। इति इयादेशे प्राप्ते॥ **११४५। दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेय-वाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि** ।६।४।१७४। एतानि निपात्यन्ते। इति युलोपः। मैत्रेयः। मैत्रेयौ॥

---

ढे लोपोऽकद्र्वाः । अत्र भस्येत्यधिकारः ओर्गुण इति सूत्रादोरित्यस्यानुवृत्तिः। अकदद्वाः इति पर्युदासः। अलोन्त्यपरिभाषया अन्त्यस्योवर्णस्य लोपः। वस्तुतस्तु अकद्वा इति पर्युदासेनैव कद्रूभिन्नः कद्रूसदृश्या उवर्णान्त एव भवतीति ओरनुवृत्या न फलं, किंच ढे परतः पूर्वस्य भत्वमव्यभिचार्येवेति भस्येत्यधिकारेणापि नफलमत्र। न च कद्रूभिन्नः कद्रूसदृश ऊदन्त एव भवतीति न पुन ऋवर्णान्त इत्याग्रहः कर्तव्यः। ज्ञापकस्य सामान्यापेक्षत्वेन पर्युदासेन ज्ञापितोवर्णान्त एव भवति, न तु विशेषत ऊदन्त इति कामण्डलेयः। लोपाविधाने तु कामण्डल्वेय इति स्यात्। ननु अस्त्रीकमण्डलुः कुण्डमिति घटपर्यायात्कमण्डलोः कथं ढञ्, अत आह–चतुष्वाज्जातिविशेषवाचक इति।

यकारादेः यकारादिर्यस्य खण्डस्य तस्येत्यर्थः अचोञ्णिति। तद्धितेष्वचामादेरिति सुत्रात्तद्धितेषु किति चेत्यत्रानुयन्ति। तदेतदाह–ञिति णिति किति च तद्धिते परे इति। केकयादञि यादेः खण्डस्य य इत्यस्य इयादेशे केक इय्-अ-आदिवृद्धिः आद्गुणः। केकय स्त्रियां टिड्ढाणञिति ङीपि, यस्येति लोपे कैकेयी। मित्रयुशब्दाद्भावार्थे वुञि ओरकादेशे यादेः खण्डस्य यु इत्यस्य इयादेशे गुणे–ञित्त्वादादिवृद्धौ मैत्रेयक–स्त्रियामतष्टाप्–मैत्रेयका। मित्रयूनां भाव इति विग्रहः। ननु मैत्रेय इति निपातितत्वात्कथं मैत्रेयकेति रूपमिति चेत्–मैवम्। अपत्ये एव तन्निपातनात्। सर्वत्रापीत्याग्रहे अस्मिन् सूत्रे मित्रयुग्रहणं व्यर्थं स्यात्। यादेरियादेशस्य मित्रयुशब्दे क्वापि तद्धिते अप्रसक्तेः।

युलोपः। निपातनादिति शेषः मित्रयवः। ननु गोत्रप्रत्ययस्य लुग्विहितः। मित्रयोरपत्यानीत्यपत्यप्रत्ययो यः कथं तस्य लुगिति चेदुच्यते। तस्यापत्यमित्यपत्याधिकारादन्यत्र यो गोत्रशब्दः श्रूयते तस्य अपत्यं पौत्रप्रभृतिगोत्रमिति कृत्रिमगोत्रत्वं नार्थः। किन्तु लौकिकमेव। लौकिकगोत्रंनाम ऋषिसन्तानात्मकम्। सन्तानशब्दोपत्यासाधारणः। तस्मात् अनपत्याधिकारस्थयास्कादि– सूत्रगतगोत्रशब्दः लौकिकगोत्रपर इति दर्शितरीत्याऽपत्यस्यापि गोत्रत्वादपत्यस्याणोऽत्र लुक्संभवतीति। वस्तुतस्तु गोत्रप्रत्ययस्येत्यपपाठः। अपत्यप्रत्ययस्येत्येव पाठं तत्त्वबोधिन्यां स्वीकृतः। सूत्रगतगोत्रशब्दादपत्यार्थलाभस्तु दर्शितरीत्या बोध्यः।

**११४६। यस्कादिभ्यो गोत्रे** ।२।४।६३। एभ्योऽपत्यप्रत्ययस्य लुक् स्यात्तत्कृते बहुत्वे न तु स्त्रियाम्। मित्रयवः ॥**११४७। अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च** ।२।४।६५। एभ्यो गोत्रप्रत्ययस्य लुक् स्यात् तत्कृते बहुत्वे, नतु स्त्रियाम्। अत्रयः। भृगवः। कुत्साः। वसिष्ठाः। गोतमाः। अङ्गिरसः॥ **११४८। बह्वच इञः प्राच्यभरतेषु** ।२।४।६६। बह्वचः परो य इञ् प्राच्यगोत्रे भरतगोत्रे च वर्तमानस्तस्य लुक् स्यात्। पन्नागाराः। युधिष्ठिराः॥ **११४९। न गोपवनादिभ्यः** ।२।४।६७। एभ्यो गोत्रप्रत्ययस्य लुक् न स्यात्। बिदाद्यन्तर्गणोऽयम्। गौपवनाः। शैग्रवाः॥**११५०। तिककितवादिभ्यो द्वन्द्वे** ।२।४।६८। एभ्यो गोत्रप्रत्ययस्य बहुत्वे लुक् स्यात् द्वन्द्वे। तैकायनयश्च कैतवायनयश्च। 'तिकादिभ्यः फिञ् ११७८' तस्य लुक्। तिककितवाः।**११५१। उपकादिभ्योऽन्यतरस्यामद्वन्द्वे**। २।४।६९। एभ्यो गोत्रप्रत्ययस्य बहुत्वे लुग्वा स्यात् द्वन्द्वे चाद्वन्द्वे च। औपकायनाश्च लामकायनाश्च 'नडादिभ्यः फक् ११०१' तस्य लुक्। उपकलमकाः। औपकायनलामकायनाः। भ्राष्ट्रककपिष्ठलाः भ्राष्ट्रकिकापिष्ठलयः लमकाः। लामकायनाः ॥**११५२। आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्** ।२।४।७०। एतयोरवयवस्य गोत्रप्रत्ययस्याणो यञश्च बहुषु लुक् स्यादवशिष्टस्य प्रकृतिभागस्य यथासंख्यमगस्ति कुण्डिनच् एतावादेशौ स्तः। अगस्तयः। कुण्डिनाः॥**११५३। राजश्वशुराद्यत्** ।४।१।१३७। **राज्ञो जातावेवेति वाच्यम्॥ ११५४। ये चाभावकर्मणोः** ।६।४।१६८। यादौ तद्धिते परे अन् प्रकृत्या स्यान्न तु भावकर्मणोः। राजन्यः। श्वशुर्यः। जातिग्रहणाच्छूद्रादावुत्पन्नो राजनः॥

---

प्राग्देशे भवाः प्राच्याः भरतो राजा। तेष्विति षष्ठ्यर्थे सप्तमी। तेषां गोत्रे वंशे इत्यर्थः। प्राच्यगोत्रे भरतगोत्रे च वर्तमानः यो बह्वच् ततः परस्य इञः लुक्स्यादित्यर्थः। पन्नागार इति प्राच्यगोत्रे बह्वच्कशब्दः। तस्यापत्ये अत इञ् पान्नागारिः। बहुषु लुक् पन्नागाराः। यथा श्रुतमूलोक्तार्थे तु इञः प्राच्यगोत्रवृत्तित्वं प्रकृत्यपेक्षयेति बोध्यम्। प्रकृतेः तद्गोत्रजत्वादिञ्यपि तथैव आरोपादिति भावः। यद्वा पन्नागारस्यापत्यमपि प्राच्यगोत्रजमेवेति इञश्च तद्गोत्रजत्वम्।

राजन्शब्दात् श्वशुरशब्दाच्च अपत्यार्थे यत्प्रत्ययस्स्यात्। राज्ञोऽपत्यं राजन्यः। क्षत्रिय इत्यर्थः। श्वशुर्यः। यत्प्रत्ययस्य ञित्वाद्याभावाद्वृद्धिर्न। श्वशुरस्यापत्यमिति विग्रहः। शूद्रादौ शूद्र स्त्र्यादौ राज्ञस्सकाशादुत्पन्नः राज्ञोऽपत्यमित्येव विग्रहः। अत एव राज्ञो जाताविति वार्तिकस्य जातिवाचकाद्राजन्शब्दादित्यर्थो नोक्तः। किन्तु प्रकृतिप्रत्ययसमुदायेन जातिश्चेद्वाच्येति तत्वबोधिन्याम्। राजन्शब्दाद्यत् स्यात् जातिर्वाच्या चेदिति वार्तिकार्थः। राजन इत्यत्र राजन् शब्दो यद्यपि जातिवाचकः, तथापि राजनशब्दान्न जातिरभिधीयत इति न यत्। राजन्यशब्दात् क्षत्रियजातिरभिधीयत एव। अत एव क्षत्रिय इत्यर्थ इति मयोक्तम्।

**११५५। अन्** ।६।४।१६७। अणि अन्प्रकृत्या स्यादिति टिलोपो न। अभावकर्मणोः किम्। राज्ञः। कर्म भावो वा राज्यम्॥ **११५६। संयोगादिश्च** ।६।४।१६६। इन्प्रकृत्या स्यादणि परे। चक्रिणोऽपत्यं चाक्रिणः॥**११५७। न मपूर्वोऽपत्येऽवर्मणः** ।६।४।१७०। मपूर्वोऽन्प्रकृत्या न स्यादपत्येऽणि। भाद्रसामः। मपूर्वः किम्। सौत्वनः। अपत्ये किम्। चर्मणा परिवृतश्चार्मणो रथः। अवर्मणः किम्। चक्रवर्मणोऽपत्यं चाक्रवर्मणः॥ **वा हितनाम्न इति वाच्यम्**॥ हितनाम्नोऽपत्यं हैतनामः। हैतनामनः॥**११५८। ब्राह्मोऽजातौ** ।६।४।१७१। योगविभगोऽत्र कर्तव्यः। ब्राह्म इति निपात्यते अनपत्येऽणि। ब्राह्मं हविः। ततोऽजातौ। अपत्ये जातावणि ब्रह्मणष्टिलोपो न स्यात्। ब्रह्मणोऽपत्यं ब्राह्मणः। अपत्ये किम्। ब्राह्मी औषधिः॥ **११५९। औक्ष्मनपत्ये** ।६।४।१७३। अणि टिलोपो निपात्यते। औक्षं पदम्। अनपत्ये किम्। उक्ष्णोऽपत्यम्॥

---

अन्। योगविभागसामर्थ्यादभावकर्मणोरिति नात्रापकृष्यते। इनण्यनपत्ये इत्यतः अण् इति अन्वेति। प्रकृत्यैकाच् इति सूत्रात्प्रकृत्या इत्यस्यान्वयः। ब्रह्मण इत्यस्योदाहरणम्। ये चेति सूत्रे अभावकर्मणोरिति किम्। राज्यमिति मूले एवोक्तम्। अस्य सूत्रस्य अत्र उपक्षेपे संगतिस्तु राजन इति प्रत्युदाहरणे– राजन्शब्दस्य अणि परतः नस्तद्धित इति टिलोपे प्राप्ते राज्ञ इति भवितव्ये कथं राजन इति टिलोपाभावः। अत आह अन् इति बोध्या।

संयोगिादिश्च। इनणीति सूत्रादिनण्वेत्यत्र अणि इति च, हलोनन्तरास्संयोगः स आदौ यस्मात्स संयोगादिः। संयोगात्परीभूत इत्यर्थः।

मः पूर्व यस्य स मपूर्वः मात्पर इत्यर्थः। अन् इति सूत्रादनोऽनुवृत्तिः। ब्राह्मो जातौ न मपूर्व इति सूत्रादपत्ये इति इनणीति सूत्रादणीति च अत्रान्वेति। ब्राह्मः। जातौ इति छेदे, जातौ वाच्यायामपत्येऽणि ब्राह्म इति निपात्यते, इति सूत्रार्थस्स्यात्। न मपूर्व इत्यनेन प्रकृतिभावनिषेधादेव टिलोपे सति ब्राह्म इति रूपसिद्धेः। नियमार्थमिदं सूत्रम्। कोऽसौ नियमः। जातवेव प्रकृतिभावनिषेध इति। अस्मिन् व्याख्याने ब्राह्मो नारद इति न सिद्ध्यति। अजातित्वात्। ब्राह्मणो बाडब इति न सिद्ध्यति जातित्वेन ब्राह्म इति भवितव्यत्वात्। अथ ब्राह्मः अजाताविति छेदे उभयं सिद्ध्यति। तथाऽपि ब्राह्महविरिति न सिद्ध्येत्। अनपत्याणन्तत्वात्। अपत्येऽण्येव ब्राह्म इति निपातितत्वात्। अथ यदि अपत्ये इत्यननुवर्त्य अणि परतो ब्रह्मन् शब्दस्य ब्राह्म इति निपात्यते। न तु जातावित्यर्थः। तथाऽपि जातौ ब्राह्मण इति न सिद्ध्येत्। न मपूर्वादित्यनेन प्रकृतिभावनिषेधात्। ननु अजातादि इत्यस्य जातावाच्यायामितिनार्थः। किन्तु जातौ वाच्यायां नेत्यर्थः।

**११६०। षपूर्वहन्धृतराज्ञामणि**।६।४।१३५। षपूर्वो योऽन् तस्य हनादेश्च भस्यातो लोपोऽणि। औक्ष्णः। ताक्ष्णः। भ्रौणघ्नः। धृतराज्ञोऽपत्यं धार्तराज्ञः। षपूर्वेति किम्। साम्नोऽपत्यं सामनः। अणि किम्। ताक्षण्यः॥

---

प्रसज्यप्रतिषेधात्। तथा च जातौ वाच्यायां ब्राह्म इति नस्यादिति फलितम्। न मपूर्व इत्यनेन प्रकृतिभावे निषिद्धे टिलोपे सति जातावपत्येऽणि ब्राह्म इति यस्य रूपस्य आपत्तिः तद्रूपं न भवतीति भावः। ब्राह्म इति रूपे निषिद्धे तद्रूपनिष्पत्तिं प्रति हेतुभूतस्य टिलोपस्य निषेधः। तद्द्वारा न मपूर्व इति प्रकृतिभावनिषेधस्याऽपि निषेधः इति। अर्थात् अनः प्रकृतिभावः सिद्ध्यति। ब्राह्मण इति जातौ वाच्यायाम्। तस्मात् अणि ब्राह्म इति निपात्यते। जातौ तु ना इति योगविभागाभावेऽपीष्टं सिद्ध्यत्येवेति। किं योगविभागेनेति चेत्सत्यम्। ब्राह्म इति रूपनिषेधद्वारा टिलोपनिषेधः। तद्द्वारा प्रकृतिभावनिषेधनिषेधः इत्येतत्क्लेशपरिहाराय योगविभागः। योगे विभक्ते तु अजातावित्यस्य जातौ ब्रह्मणष्टिलोपो नेत्यर्थस्वीकारेण अक्लेशेनैव ब्राह्मण इति रूपसिद्धेः।

अनपत्ये किम्। अनपत्य इत्यस्याभावे अपत्यानपत्यसाधारण्येन औक्षमिति निपातितं स्यात्। तथा च अपत्ये अन् इति प्रकृतिभावं बाधित्वा टिलोप एव स्यात्। इष्यते त्वौक्ष इति।

षपूर्वेति। अत्र अल्लोपो न इति पूर्वसूत्रं सर्वमनुवर्तते। भस्येत्यधिकारः षपूर्वानादिनामितरेतरद्वन्द्वः। (षः पूर्वं यस्य स षपूर्वः षात्पर इत्यर्थः) षपूर्वस्य हनः धृतराज्ञश्चेति द्वन्द्वार्थः । अनुवृत्तमन इत्येतत् षपूर्वस्य विशेषणम्। न तु हनादेरव्यभिचारात्। षपूर्वस्येति विशेषणस्य विशेष्याकांक्षत्वेन विशेष्यस्यानोऽत्र साकांक्षत्वादेकदेशान्वयोऽपि न दुष्टः । षपूर्वस्य भस्यानः यः अत् तस्य हन् धृतराज्ञोरवयवो भसंज्ञो योऽत् तस्य च लोपस्यादणीति सूत्रनिष्कृष्टार्थः। उक्षा वृषभः। तक्षाशिल्पिअनयोरपत्येऽणि तक्षन्शब्दादनपत्येऽण्यपि क्षवर्णस्यककारषकारसंयोगात्मक-त्वादनष्षपूर्वत्वेन- अनवयवाकारस्य लोपः। औक्ष्णः ताक्ष्णः। ननु कथमौक्ष्ण इति चेत्प्रामादिक एव। अनपत्ये किं । औक्ष्णः इत्येव पाठः । टिलोपाभावे औक्षण इति भवितव्ये कथमौक्ष इत्यत आह-षपूर्वस्येति सूत्रमिति संगतिर्बोध्या यद्वा अनपत्ये किम्। उक्षोऽपत्यम्। षपूर्वहन् धृतराज्ञा यणि-औक्ष इत्येवालम्। षपूर्वेत्यल्लोपं प्रदर्श्यैव औक्ष इति प्रत्युदाहर्तुमुचितत्वात्। अथवा औक्षण इत्यपरिनिष्ठितरूपप्रदर्शनम्। उक्षोऽपत्यमिति विग्रहे अणि औक्षण इति स्थिते- षपूर्वेत्यल्लोपः। औक्षः इति स्थितस्य गतिश्चिन्तनीया। भ्रौणघ्नः। भ्रूणहन्। अण् हनोऽकारलोपः वृद्धिः-होहन्तेरिति हस्य कुत्वेन घः। भ्रौणघ्नः। सामनः साम्नोऽपत्यमिति विग्रहे-न मपूर्व इति प्रकृतिभावनिषेधेन नस्तद्धित इति टिलोपे साम इति स्याद्भाद्रसाम इतिवत्।

**११६१। क्षत्राद्धः** ।४।१।१३८। क्षत्रियः। जातावित्येव। क्षात्रिरन्यः॥ **११६२ कुलात्खः** ।४।१।१३९। कुलीनः। तदन्तादपि। उत्तरसूत्रेऽपूर्वपदादिति लिङ्गात्। आढ्यकुलीनः॥**११६३। अपूर्वपदादन्यतरस्यां यड्ढकञौ** ।४।१।१४०। कुलादित्येव। पक्षे खः। कुल्यः। कौलेयकः। कुलीनः। पदग्रहणं किम्। बहुकुल्यः। बाहुकुलेयकः। बहुकुलीनः॥**११६४। महाकुलादञ्खञौ** ।४।१।१४१। अन्यतरस्यामित्यनुवर्तते। पक्षे खः। माहाकुलः। माहाकुलीनः। महाकुलीनः॥

---

अतः साम्नोऽयमिति विग्रहः। तस्येदमिति अनपत्याण्त्वान्न मपूर्व इति न प्रकृतिभावनिषेधः। तेन अन् इति प्रकृतिभावः । सामनः । सामोऽपत्यमिति मूले पाठस्तु प्रामादिक एव। साम्नोऽयमिति पठितव्याम्। ताक्षण्यः । सेनान्तलक्षणकारिभ्यश्चेति कारित्वात् तक्ष्णोन्यः पक्षे-(कारी शिल्पी)।

क्षताद्धः। राजश्वशुराद्यदिति प्राक्सूत्रस्थाद्राज्ञो जातावेवेति वार्तिकाज्जातावेवेत्यत्रान्वयः। आयनेईनीयियः फढखछघाम्प्रत्ययादीनामिति घस्य इय् आदेशः। घकारोपर्यकारेण इय क्षत्र इय- यस्येति चेत्यलोपः क्षत्रिय। बाहुज इत्यर्थः । क्षत्रस्यापत्यमित्येव विग्रहः। अजातौ तु क्षात्रिः। क्षत्राच्छूद्रादावुत्पन्न इत्यर्थः। अत इञ्। जातौ तु इञं बाधित्वा घ इति बोध्यम्।

कुलात्खः कुलात्खस्यादपत्येर्थे। खस्य ईनादेशः। लिङ्गादिति ग्रहणवता प्रातिपदिकेन च तदन्तविधिर्नास्तीति प्रातिपदिकं गृहीत्वा यत्र कार्यं विधीयते तत्र तदन्तविध्यभावेन सपूर्वपदात्कुलाद्यड्ढकञोः प्राप्तिरेव नास्तीति कृत्वा अपूर्वपदादिति व्यर्थं सत् कुलेति प्रातिपदिकं गृहीत्वा यत्र कार्यं विधीयते तत्र तदन्तविधिरस्तीति ज्ञापयित्वा ज्ञापनानन्तरं सपूर्वस्य कुलस्य यड्ढकञोः प्राप्तौ सत्यां तन्निवारणेन अपूर्वपदग्रहणम् सार्थकमिति । कुले तदन्तविधिरस्तीति भावः । आढ्यञ्च तत्कुलञ्च आढ्यकुलं तस्यापत्यमाढ्यकुलीनः आढ्यकुलोदित इत्यर्थः ।

कौलेयकः कुलाड्ढकञि ञित्त्वाद्वृद्धौ ढस्येयादेशे कौलेयकः। अदन्तोऽयमादेशः। न त्वकार उच्चरणार्थः। ननु अपूर्वादित्येवास्तु किमपूर्वपदादिति पदग्रहणेन इत्याक्षिपति पदग्रहणं किमिति। प्रत्युदाहरणानि बहुकुल्य इत्यादीनि। विभाषा सुपो बहुच् पुरस्तात्त्विति। बहुच्प्रत्ययः। ईषदूनं कुलं बहुकुलम्। प्रत्ययत्वाद्बहुचिनपदत्वं सुप्तिङन्तलक्षणं वा स्वादुष्विति वा विद्यते, अतस्तत्पूर्वात्कुलात्प्रत्ययत्रयं भवत्येव इति।

अञ् खञौ खञ ञित्त्वादादिवृद्धिः। खे तु नेति खञोपि विधानमिति बोध्यम्। पक्षे खः-कुलात्ख इति, सूत्रेणेति शेषः। यड्ढकञौ तु न भवतः। सपूर्वपदत्वान्महा-कुलावयवकुलपदस्य। एवं दुष्कुलादित्यत्रापि बोध्यम्।

**११६५। दुष्कुलाड्ढक्** ।४।१।१४२। पूर्ववत्पक्षे खः। दौष्कुलेयः। दुष्कुलीनः॥ **११६६। स्वसुश्छः** ।४।१।१४३। स्वस्त्रीयः॥**११६७। भ्रातुर्व्यच्च** ।४।१।१४४। चाच्छः। अणोऽपवादः। भ्रातृव्यः। भ्रात्रीयः॥ **११६८। व्यन्त्सपत्ने** ।४।१।१४५। भ्रातुर्व्यन् स्यादपत्ये प्रकृतिप्रत्ययसमुदायेन शत्रौ वाच्ये। भ्रातृव्यः शत्रुः। पाप्मना भ्रातृव्येणेति तूपचारात्॥ **११६९। रेवत्यादिभ्यष्ठक्** ।४।१।१४६। **११७०। ठस्येकः** ।७।३।५०। अङ्गात्परस्य ठस्येकादेशः स्यात्। रैवतिकः॥ **११७१। गोत्रस्त्रियाः कुत्सने ण च** ।४।१।१४७। गोत्रं या स्त्री तद्वाचकाच्छब्दात् णठकौ स्तः कुत्सायाम्। सामर्थ्याद्यूनि। गार्ग्या अपत्यं गार्गो गार्गिको वा जाल्मः। 'भस्याढे तद्धिते' इति पुंवद्भावाद्गार्ग्यशब्दाण्णठकौ। 'यस्य ३११' इति लोपः। 'आपत्यस्य-१०८२' इति यलोपः॥ **११७२। वृद्धाट्ठक् सौवीरेषु बहुलम्** ।४।१।१४८। सुवीरदेशोद्भवाः सौवीराः। वृद्धात्सौवीरगोत्राद्यूनि बहुलं ठक् स्यात् कुत्सायाम्। भागवित्तेर्भागवित्तिकः। पक्षे फक्। भागवित्तायनः॥

---

अणोऽपवादः। तस्यापत्यमिति प्राग्दीव्यतोऽणोऽधिकृतस्यापवादः। स्वसुश्च इत्यत्रापीदं बोध्यम्। क्षत्रादित्यादौ तु अत इञोपवादः। (अणोऽपवादत्वादत ञः) छस्य ईयादेशे-भ्रात्रीय इति।

व्यन्-व्यत् व्यनोस्स्वरे विशेषः न तु रूपे, भ्रातुरपत्यं भ्रातृव्यः। शत्रुरित्यर्थः। न तु भ्रातुर्पुत्र इत्यर्थ इति भावः। शत्रुपर्यायो भ्रातृव्यशब्द इति यावत्। कथन्तर्हि पाप्मना भ्रातृव्येणेति अचेतने पाप्मनि पापे चेतनधर्मस्य शत्रुत्वस्याभावादत आह उपचारादिति। दुःखजनकत्वरूपसादृश्येन अचेतनेऽपि पाप्मनि चेतनधर्मशत्रुत्वमारोप्यत इति भावः। अत्र तत्त्वबोधिन्याम्। भाष्यावलम्बनेन व्यत्ययेनार्थ उक्तः। तथा हि- प्रकृतिप्रत्ययसमुदायेनेत्यस्य प्रकृतिप्रत्ययसमुदायघटितप्रत्ययेनेत्यर्थ इति। तन्मतरीत्या भ्रातृव्यश्शत्रुरित्यस्य शत्रुभूतोऽयं भ्रातृपुत्र इत्यर्थो वाच्यः। उपचाराद्भ्रातृव्येनेत्यस्य लाक्षणिकमिदं भ्रातृव्यपदमिति लक्षणया शत्रुरभिधीयत इति तदाशयः। भाष्ये द्रष्टव्यमिदं सम्यग्वा न वेति।

रैवतिकः रेवति इक यस्येति चेति ई लोपः वृद्धिः रैवतिकः रेवत्या अपत्यमिति विग्रहः।

सौवीरेष्विति गोत्राधिकरणत्वात्सप्तमी। गोत्रस्त्रिया इत्यतः गोत्रे तस्यानुवृत्तिः पञ्चम्यन्तेन तस्य विपरिणामः। सामर्थ्याद्यूनीति। सौवीरेषु यद्गोत्रं तस्मात्सौवीरगोत्रात् भागवित्तिरिति सौवीरगोत्रम्। भगवित्तस्सौवीरः। तस्य गोत्रापत्यं भागवित्तिः। अत इञ् तस्य युवापत्यं भागवित्तिकः। पक्षे यञिञोश्चेति फक्।

फेश्छ च- फिरिति प्रत्ययग्रहणात्तदन्तविधिः। फिना फिञो-ग्रहणं व्याख्यानात्।

**११७३। फेश्छ च** ।४१।१४९। फिञन्तात्सौवीरगोत्रादपत्ये छः ठक् च कुत्सने गम्ये। यमुन्दस्यापत्यं यामुन्दायनिः। तिकादित्वात् फिञ्। तस्यापत्यं यामुन्दायनीयः। यामुन्दायनिकः। कुत्सने किम्। यामुन्दायनिः। औत्सर्गिकस्याणो 'ण्यक्षत्रिय-१२७६' इति लुक्। सौवीरेति किम्। तैकायनिः। **११७४। फाण्टाहृतिमिमताभ्यां णफिञौ** ।४।१।१५०। सौवीरेषु। नेह यथासंख्यम्। अल्पाच्तरस्य परनिपाताल्लिङ्गादिति वृत्तिकारः। भाष्ये तु यथासंख्यमेवेति स्थितम्। फाण्टाहृतः। फाण्टाहृतायनिः। मैमतः। मैमतायनिः॥

---

सौवीरेष्वित्यनुवृत्तिः। गोत्रेति च-पिञ्-अन्ते यस्य तत् फिञन्तम्। अन्तावयवीभूतफिञ्प्रत्ययकमित्यर्थः। सौवीराद्गोत्रेऽभिधित्सिते यः पिञ् तदन्तादिति यावत्। अपत्ये अर्थाद्यूनि-छः-चात्पूर्वसूत्रात् ठक्-यमुन्द इति सौवीरः-तस्मात् गोत्रापत्ये फिञ्-यामुन्दायनिः। तस्माद्युवापत्ये छः-छस्य ईयादेशः । यामुन्दायनीयः । पक्षे ठकि ठस्येकादेशे यस्येति चेति फिञ इकारलोपे यामुन्दायनिकः। कुत्साऽभावेऽपि ञन्तात्तस्यापत्यमित्यौत्सर्गिकस्य अधिकारप्राप्तस्य अणः ण्यक्षत्रियेति वक्ष्यमाणेन लुक्। उत्सर्गेन स्वभावतः सामान्यतो वा पाप्त औत्सर्गिकः। एवं यामुन्दायने। अपत्यं यामुन्दायनीयः। इदञ्चापत्यं युवसंज्ञम्। गोत्रादपरत्वात्। युवसंज्ञायामप्यपत्यसंज्ञा वर्तत एवेति तस्यापत्यमित्यस्यात्र प्रवृत्तिः। पितामहदीनामपीति मुख्यपक्षे यूनोऽप्यपत्यत्वात्। पितुरपत्यमिति पक्षेऽपि तस्येत्यनेन गोत्रान्तस्य ग्रहणादत्र न दोषः। तैकायनिः तैकायनेर्युवापत्यं तैकायनिः। पूर्ववद्यून्यणो लुक् । तिक इत्ययं न सौवीरः।

सौवीरगोत्रात् फाण्टाहृतिशब्दात् यूनि फिञौ स्तः । फाण्टाहृत इति कश्चन सौवीरः तस्य गोत्रापत्यं फाण्टाहृतिः। तस्य युवापत्यं फाण्टाहृतः। फिञि फाण्टाहृतायनिः। वृत्तिकारमतानुसारेणेदमुदाहरणद्वयम्। भाष्यमते तु फाण्टाहृ इत्येकमेव रूपम्। यथासंख्येन फाण्टाहृतेर्णिः। मिमतस्य पिञ् इति व्याख्यानात् मिमत इति सौवीरः। तस्मादपत्ये णः। णित्त्वाद्वृद्धिः। मैमतः। पक्षे फिञ् मैमतायनिः मिमत इति मूलपुरुष एव, न गोत्रान्तः। अतः मिमते न सौवीरगोत्रान्वयः। किन्तु सौवीर इत्येव उभयसाधारण्येन मूले सौवीरेष्वित्युक्तम्। न तु सौवीरगोत्र इति गोत्रादिति निवृत्तमिति मूलकाराशयः। कुर्वादिभ्य इति सूत्रे सौवीरेष्वित्यपि निवृत्तमिति वक्ष्यति च तत्त्वबोधिन्याम्। अपिना प्राक्सूत्रे गोत्र इति निवृत्तमिति ध्वन्यते। तेन तस्याप्ययमेवाशय इति गम्यते। गोत्रादित्यस्य निवृत्तावपि फाण्टाहृतिशब्दो गोत्रान्त इति तस्माद्यून्यपत्य एव णफिञौ इति स्यादेतत्। भाष्यमते णफिञावित्यपनीय अफिञावित्येव सूत्रयितव्यम्। वृद्ध्यर्थं हि णेति णित्त्वम्। फाण्टाहृतिशब्दे वृद्धिस्वतस्सिद्धैवेति णित्वं व्यर्थम्। वृत्तिकारमते तु मैमत इत्यत्र वृद्ध्यर्थं

**११७५। कुर्वादिभ्यो ण्यः** ।४।१।१५१। अपत्ये। कौरव्या ब्राह्मणाः। वावदूक्याः॥ (ग) **सम्राजः क्षत्रिये**॥ साम्राज्यः। साम्राजोऽन्यः॥ **११७६। सेनान्तलक्षणकारिभ्यश्च** ।४।१।१५२। 'एभ्यो ण्यः। एति संज्ञायाम्-१०२३' इति सस्य षः। हारिषेण्यः। लाक्षण्यः। कारिः शिल्पी तस्मात्। तान्तुवाय्यः। कौम्भकार्यः। नापित्यः॥ **११७७। उदीचामिञ्**।४।१।१५३। हारिषेणिः। लाक्षणिः। तान्तुवायिः। कौम्भकारिः। नापितात्तु परत्वात् फिञेव। नापितायनिः॥ **तक्ष्णोऽण उपसंख्यानम्**॥ 'षपूर्व-११६०' इत्यनोऽकारलोपः। ताक्ष्णः। पक्षे ताक्षण्यः॥

---

णित्वमावश्यकम्। तस्मिन् णफिञाविति सूत्रितवतस्सूत्रकारस्यापि वृत्तिकारमतमेव। न च भाष्यमते फाण्टाहृतमैमतायनि इति सूत्रयितव्यम्। निपात्येते इत्यर्थः। इति वाच्यम्। फाण्टाहृत इति युवापत्ये मैमतायनिरित्यपत्ये च निपात्येते इति निष्कर्षा। प्रतीत्यगोत्रापत्येपि फाण्टाहृत इति- युवापत्येऽपि मैमतायनिरिति च प्रयोगः स्यात्। अपि च गोत्रापत्ये अत इञि मैमतिरित्यपि स्यात्। यद्यपि यथोत्तरं मुनीनां प्रामाण्यमिति भाष्यमतरीत्या फाण्टाहृतिमिमताभ्यामपि ञौ इति सूत्रयितव्यमेव। णित्त्वेन फलाभावात्, तथाऽपि सूत्रवृत्तिकारयोरुभयोरैकमत्येन यथास्थितमपि सूत्रं सुष्ठु णित्वस्य सफलत्वात्।

**कौरव्याः** कुरुरिति कश्चिद्ब्राह्मणः। तदपत्यानि कौरव्याः। "कुरुनादिभ्यो ण्य" इति ण्यप्रत्ययस्यैव तद्राजत्वाद्बहुषु लुकि कौरव्या इति न भवेत्। किन्तु कुरव इत्येव। कुर्वादिभ्यो ण्यस्य तु अतद्राजत्वाद्बहुषु न लुगिति दर्शयितुं कौरव्या इति बहुवचनान्तमुदाहरणम्। किञ्च तद्राजमाचक्षाणः तद्राज इति राजन्येव कुरुनादिभ्यो ण्य इति ण्यविधानस्तस्य तद्राजत्वालुक्चेति कुरवो राजानः । ब्राह्मणास्तु कौरव्या एव। कुरुदेशानां न हि राजानो ब्राह्मणा इति दर्शयितुं ब्राह्मणा इत्यपि मूले इति बोध्यम्।

सेनशब्दान्तात् प्रातिपदिकात् लक्षणशब्दात् शिल्पिवाचकशब्देभ्यश्च अपत्ये अणपवादो ण्यस्स्यात्। (कारीति नस्य रूपग्रहणं किन्तु तदर्थस्य) हरीणां सेना यस्य स हरिषेणः। तस्यापत्यं हारिषेण्यः. तन्तुवायकुम्भकारनापिताः शिल्पिनः।

उदीचाम्मते पूर्वोक्तेभ्य इञ् स्यादपत्ये, परत्वात् फिञेव। उदीचां वृद्धादगोत्रादिति वक्ष्यमाणसूत्रेणेत्यर्थः। यद्यपि हरिषेणादीनामदन्तत्वेन अत इञ् प्राप्नोति । तद्धितेषु वाऽधिकारेण न्याभावपक्षे उत्सर्गस्य इञः प्रवृत्त्यौचित्यात् इति। तथाऽपि अपवादेन मुक्ते पुनरुत्सर्गो न प्रवर्तत इति। समासापवादत्वात्तद्धितानां तद्धिताभावपक्षे समामस्य वोत्सर्गत्वेन उत्सर्गोऽपि समास एव प्रवर्तेत, न त्विञिति वा। उदीचामिञ् इति सूत्रनिर्देशकृतः । एवं तक्षन् शब्दादपि कारिलक्षण्याभावपक्षे उदीचामिञि प्राप्ते वार्तिकं तक्ष्णोण उपसंख्यानमिति। उदीचाम्मते तक्ष्णोण् स्यादिति वक्तव्यमित्यर्थः। उत्सर्ग शिवाद्यणं बाधित्वा तक्षन्शब्दात् ण्ये कृते ण्याभावपक्षे दर्शितरीत्या समास एव

**११७८। तिकादिभ्यः फिञ्** ।४।१।१५४। तैकायनिः ॥**११७९। कौशल्यकार्मार्याभ्यां च** ।४।१।१५५। अपत्ये फिञ्। इञोऽपवादः॥ परमप्रकृतेरेवायमिष्यते। प्रत्ययसंनियोगेन प्रकृतिरूपं निपात्यते। कुशलस्यापत्यं कौशल्यायनिः। कर्मारस्यापत्यं कार्मार्यायणिः॥ **छागवृषयोरपि**॥ छाग्यायनिः। वार्ष्यायणिः॥ **११८०। अणो द्व्यचः** ।४।१।१५६। अपत्ये फिञ्। इञोऽपवादः। कार्त्र्यायणिः। अण इति किम्। दाक्षायणः। द्व्यचः किम्। औपगविः। **त्यदादीनां फिञ्वा वाच्यः**॥ त्यादायनिः। त्यादः॥

---

महोत्सर्गस्स्यात्, न त्वण् इति कृत्वा वार्तिकमिदम्। न च इञ्बाधनार्थमेवेति वाच्यम्। तर्हि तक्ष्णो नेति वाच्यमित्येव वार्तिकं निबद्धव्यं स्यात्। ननु सेनान्तलक्षणकारिभ्यश्च वा इति सूत्रयित्वा उदीचामिञ् इति सूत्रं सुत्यजम्। वाग्रहणाद्यदा प्राप्तमौत्सर्गिकमियादिकं स्यात्। नापितात्तु अत इञं बाधित्वा परत्वात् फिञ्पक्षे ण्याभाववति। एवं च तक्ष्णोण इति वार्तिकमपि सुत्यजमेव शिवाद्यणस्तत्रोत्सर्गत्वात्-इति चेन्मैवम्। क्षुरिणोपत्यं क्षौर्यः, क्षौरिः इति इञन्तरूपसिध्यर्थमुदीचामिञित्यस्यावश्यकत्वात्। (क्षुरिन्शब्दादिञि नस्तद्धित इति टिलोपे वृद्धौ क्षौरिः).

कौसल्यकार्मार्याभ्याञ्च परमप्रकृतेरेवायमिष्यत इति व्याख्यानात्। कोसलकर्माराभ्याञ्चेत्येव सूत्रयितव्ये कौशल्यकार्मार्येति सूत्रणं प्रकृतिरूपनिपातार्थम्। तथा च कोसलकर्माराभ्यामपत्ये फिञ् स्यात्। प्रकृत्योः क्रमेण कौसल्य-कार्मार्य-इति आदेस्स्यादिति सूत्रार्थः। प्रत्ययसन्नियोगेनेति किं? कोसलस्यापत्यं कोसलापत्यमिति समासे कौसल्यापत्यमिति माभूदिति। कोसलस्यापत्यं कौसल्यायनः। कौसलायनिरिति तु प्रामादिकः पाठः। प्रकृतौ कौशल्येति रूपस्य सूत्रे निपातितत्वात् । छागवृषयोरपि फिञादेशस्स्यात्। तत्सन्नियोगेन प्रकृत्योर्यान्तत्वञ्च निपात्यते इति वार्तिकार्थः । (यान्तत्वञ्च यप्रत्ययान्तत्वम्. य इति ञ्यिः ण्यः इत्यनयोरविशेषेण ग्रहणम्। भागशब्दाद्वृद्धेरिति ञ्यः-वृषशब्दादत एव वार्तिकाण्ण्यः-) यद्वा प्रकृत्योर्योपधत्वञ्च निपात्यते इत्यर्थो वाच्यः । गकाराकारयोः षकाराकारयोश्च मध्ये यकारस्स्यादिति तदर्थः।

अणो द्व्यचः। अणन्तो यो द्व्यच्कः तस्मादपत्येर्थे फिञ् स्यात्कर्तुरपत्यमित्यौत्सर्गिकेऽणि कार्त्रः कार्त्रस्यापत्यं कार्त्र्यायणिः। दाक्षायणः । दक्षस्यापत्यं दाक्षिरिति इञन्तोऽयं द्व्यच्कः। अस्माद्यञञोश्चेति फगेव न तु फिञ् इति भावः। उपगोर्गोत्रापत्यमौपगव इत्यणन्तोऽयं बह्वच्कः । तस्मादपत्ये इञेव औपगविः । त्यस्यापत्यं त्याद इत्यणि त्यद्-अण्। वृद्धिः त्यादः फिञ्। आयन्नादेशे त्यद् आयनिः। वृद्धिः त्यादायनिः । त्यद्-तद् एतद्

**११८१। उदीचां वृद्धादगोत्रात्** ।४।१।१५७। आम्रगुप्तायनिः। प्राचां तु। आम्रगुप्तिः। वृद्धात्किम्। दाक्षिः। अगोत्रात्किम्। औपगविः॥ **११८२। वाकिनादीनां कुक् च** ।४।१।१५८। अपत्ये फिञ्वा स्यात्। वाकिनस्यापत्यं वाकिनकायनिः। वाकिनिः॥ **११८३। पुत्रान्तादन्यतरस्याम्** ।४।१।१५९। अस्माद्वा फिञ् सिद्धः तस्मिन्परे पुत्रान्तस्य वा कुक् विधीयते। गार्गीपुत्रकायणिः। गार्गीपुत्रायणिः। गार्गीपुत्रिः॥ **११८४। प्राचामवृद्धात्फिन्बहुलम्।** ।४।१।१६०। ग्लुचुकायनिः॥ **११८५। मनोर्जातावञ्यतौ षुक् च** ।४।१।१६१। समुदायार्थो जातिः। मानुषः। मनुष्यः॥

---

इत्यादयस्सर्वनामगणपाठे पठितास्त्यदादयः। एवं तस्यापत्यं तादः। तादायनिः। इत्याद्यूह्यम्। एकस्यापत्यं ऐकायनिः ऐकिरिति अत इञ्, द्वयोरपत्यं द्वायायनिः । पक्षे अणि, द्वायः । यस्येति चेति लोपात्परत्वाद्वृद्धिः। आयादेशः। न च अन्तरङ्गत्वाल्लोप इति वाच्यम्। भस्येत्यस्य असर्वनामस्थानयजादिस्वादिपरस्येत्यर्थाल्लोप एव बह्वपेक्षत्वेन बहिरङ्ग इति द्विपर्यन्तानामेवेष्टिरिति भाष्यकारेष्टया त्यदाद्यत्वमेव विषयः । तेन युष्मदादेरपि फिञ् वा । यौष्मदः यौष्मदायनिः इत्यादि। आम्रगुप्त इति कश्चन मूलपुरुषः तस्मादपत्यार्थे वा फिञ् । उदीचां ग्रहणेन विकल्पस्य फलितत्वात्। फिञभावपक्षे अत इञ् अगोत्रादित्यनेन गोत्रप्रत्ययान्तात्फिञ् भावो लब्धः। औपगवस्यापत्यं औपगविः। इह लौकिकं गोत्रं गृह्यते। तेन अपत्यमपि गोत्रमेव आम्रगुप्तेरित्यनन्तरापत्यान्तात् तु यञिञोरिति फगेव न तु फिञ् । फिञन्तात्तु औत्सर्गिकोण्। आम्रगुप्तायनः।

कुक् इत्यागमः । कित्त्वादन्तावयवः। फिञसन्नियोग एव। कुक् न त्वन्यत्रेति सन्नियोगग्रहणार्थश्चकारः। तेन अत इञि न कुक् वाकिनिः अस्मात् पुत्रान्तादित्यर्थः। गार्गीपुत्रस्यापत्यमिति विग्रहे उदीचामिति सूत्रेण वा फिञ् सिद्धः । सिद्धार्थस्य कथनमिदं अनेन फिञ् न विधीयत इति तदाशयः। फलन्तु सुन्दरीपुत्रस्यापत्यमिति विग्रहे अवृद्धत्वात्फिञभावे कुगागमाभावः । अनेन फिञोऽपि विधाने तु तत्रापि कुक्स्यादिति सौन्दरीपुत्रकायणिरिति स्यादिति बोध्यम्। अत इञि सौन्दरीपुत्रिरितीष्यते रूपम्। फिञि कुगागमे एकं, कुगभावे एकमिति फिञि रूपद्वयम्। फिञभावे इञि एकं रूपमिति क्रमेणोदाहृतं मूले रूपत्रयम्। गार्गीपुत्र इति तु तद्धितस्य वैकल्पिकत्वेन पक्षे षष्ठीसमासः।

मनोरिति। मनोरपत्ये अञ्, यत् इति प्रत्ययौ स्याताम्। षुगागमश्च (षकारोपर्युकार उच्चारणार्थः। कित्त्वादन्तावयवः) प्रकृतिप्रत्ययसमुदायेन जातौ वाच्यायाम्। अञि ञित्त्वादादिवृद्धिः। मानुषः। यतिमनुष्यः। अथ कथं मानवा इति अपत्यत्वाविवक्षायां तस्येदमित्यणि बोध्यम्। जाताविति किम्। मानवः प्रियव्रतो राजा। अत्र कुत्सिते मूढे च अपत्ये वाच्ये

**११८६।जनपदशब्दात्क्षत्रियादञ्** ।५।१।१६८।जनपदक्षत्रिययोर्वाचकादञ् स्यादपत्ये।'दाण्डिनायन ११४५' इति सूत्रे निपातनाट्टिलोपः।ऐक्ष्वाकः।ऐक्ष्वाकौ॥ **क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्**॥ तद्राजमाचक्षाणस्तद्राज इत्यन्वर्थसंज्ञासामर्थ्यात्। पञ्चालानां राजा पाञ्चालः॥ **पूरोरण् वक्तव्यः**॥ पौरवः॥ **पाण्डोर्ड्यण्**॥ पाण्ड्यः॥

---

मनोस्तस्यापत्यमित्यौत्सर्गिकोण् स्यात्। नस्य च नत्वं माणवः इति हरिः। कथमिदं सङ्गच्छते। अञ्यतोर्नित्यत्वात्। महाविभाषया तद्धितानां वैकल्पिकत्वेपि विकल्पादौत्सर्गिकस्समास एव। न तु तद्धित इति चेदुच्यते। प्राक्सूत्राद्बहुलमित्यनुवर्तनीयमिति तदाशयः। तेन अञ्यतोर्वैकल्पिकत्वात्पक्षे उत्सर्गिकोऽण् लभ्यते।

जनपदेति–जनपदक्षत्रियेति न स्वरूपग्रहणम्। किन्तु तदर्थग्रहणम्। तथा च क्षत्रियात् क्षत्रियवाचकात् जनपदवाचकश्शब्दो जनपदशब्दः तस्मात् विशेष्यमिदम्। क्षत्रियवाचकत्वे सति जनपदवाचकाच्छब्दादित्यर्थः। अपत्ये आञ् स्यात् । इदमेवाह जनपदक्षत्रिययोर्वाचकादिति। अत्र जनीपदात् क्षत्रियादञ् इति सूत्रिते जनपदक्षत्रियवाचकाभ्यामञ् स्यादित्यर्थस्स्यादिति शब्दग्रहणम्। वस्तुतस्तु जनपदक्षत्रियादञ् इत्यसूत्रयित्वा जनपदात् क्षत्रियादञ् इति पार्थक्येन गुरुनिर्देशादेव अधिकृतप्रातिपदिकविशेषणभूते उभे इमे पदे इति। एकस्मिन्नेव प्रातिपदिके जनपदवाचकत्वं क्षत्रियवाचकत्वञ्च यदि वर्तते तर्हि तस्मादपत्ये स्यादञ् इति लभ्यत इति शब्दग्रहणं व्यर्थम्। यथा इक्ष्वाकोरपत्यमैक्ष्वाकः इक्ष्वाकुरिति सूर्यवंश्यो राजा । अतः क्षत्रियवाच्योऽयं शब्दः इक्ष्वाकुरिति देशविशेषोऽप्यस्तीति जनपदवाची चायं अस्मादञि गुणे अवादेशे आदिवृद्धौ ऐक्ष्वाकव इति भवितव्ये दाण्डिनायनेति सूत्रे ऐक्ष्वाकेति निपातनात् टेः उकारस्य लोपः। गुणात्प्रागेव यद्यपि गुणे अवादेशे च कृतेऽपि टेरवः लोपेन रूपसिद्धिर्भवति, तथाऽपि अकृतव्यूहपरिभाषया गुणात्प्रागेव टिलोपः। ओर्गुण इति सूत्रात्परत्वाद्वा दाण्डिनायनेति सूत्रस्य आदौ टिलोपः। बहुत्वे तु तद्राजत्वाल्लुकि इक्ष्वाकव इत्युदाहरिष्यते इति ऐक्ष्वाकः। ऐक्ष्वाकौ इति द्वयोरत्रोदाहरणम्। क्षत्रियसमानशब्दात् क्षत्रियवाचकशब्दाभिन्नशब्दादिति विशेष्यम्। जनपदाज्जनपदवाचकादिति विशेषणम्। क्षत्रियवाचकशब्दाभिन्नो यो जनपदवाची शब्दस्तस्मादित्यर्थः। तस्य जनपदस्य राजनि वाच्येऽपि अपत्येऽर्थे इव अञ् स्यादिति वार्तिकार्थः। नन्वेवं तस्य राजन्यपत्यवदित्येतावदेव वार्तिकमस्तु। तत्पदेन क्षत्रियवाचको जनपदशब्दः परामृश्यत इति। किञ्च जनपदक्षत्रियोभयवाचकत्वमिक्ष्वाक्वादिशब्दानामस्तु नाम। तत्र एतद्वाचकत्वं पुरस्कृत्य सत्रेणाञ् स्यात् । एतद्वाचकत्वं पुरस्कृत्य वार्तिकेण तस्य राजन्यञ् स्यात्

इति निष्कर्षाभावेन जनपदवाचकत्वे सति क्षत्रियवाचकात्, क्षत्रियवाचकत्वे सति जनपदवाचकाच्च। अपत्ये तद्राजनि च अविशेषेण आञ् प्रवृत्तःस्यात्। स च दोषः। क्षत्रियवाचकस्य जनपदवाचकत्वपुरस्कारेण अपत्यासम्भवात्। जनपदवाचकस्य च क्षत्रियवाचकत्वपुरस्कारेण तद्राजासम्भवादिति चेत्तर्हि सूत्रे क्षत्रियादिति विशेष्यम् शब्द्यते अभिधीयते इति शब्दः। जनपदः शब्दः येन स जनपदशब्दः । जनपदाभिधायक इत्यर्थः। तस्मादिति विशेषणम्। जनपदवाचकत्वे सति क्षत्रियवाचकादञ् स्यादपत्ये इत्यर्थः। यश्शब्दः इतः पूर्व जनपदमभिधाय इदानीं क्षत्रियमभिधत्ते सः जनपदशब्दः क्षत्रियवाचकश्शब्द इति यावत्। भाषितपुंस्कस्त्रीवाचकशब्द इतिवत्। एतेन इक्ष्वाकुशब्दाद्भाषितजनपदादधुना क्षत्रियवाचकादपत्येऽञि ऐक्ष्वाक इति सिद्धम्। इत्थं क्षत्रियवाचकत्वे सति जनपदवाचकाच्छब्दादपत्यासम्भवेन तद्राजनि अञं विधत्ते वार्तिकं तत्र जनपदादिति विशेष्यं क्षत्रियेण क्षत्रियवाचकेन शब्देन समानः। अभिन्नश्शब्दः पदं प्रातिपदिकं वा वाचकत्वेन यस्य सः क्षत्रियसमानशब्दः। क्षत्रियवाचकशब्दवाच्य इत्यर्थः। तस्माज्जनपदादित्यर्थग्रहणं प्रत्येकासम्भवात्तद्वाचके विश्राम्यति क्षत्रियवाचकशब्दवाच्य–जनपदवाचकाच्छब्दादिति निष्कृष्टोर्थः। तस्य तादृशस्य जनपदस्य राजनि वाच्ये अपत्ये इव अपत्यवत् जनपदवाचकत्वे सति क्षत्रियवाचकादपत्यार्थे इवेत्यर्थः। यथाशृतार्थे तु जनपदवाचकादपत्यासम्भवेन तद्वद्राजन्यप्यसम्भव एव स्यात्। प्रत्ययः अञ् भवतीति शेषः । यथा पञ्चालः क्षत्रियः । तद्वाचकशब्दः पञ्चालेति तद्वाच्यो जनपदः पञ्चलदेशः तद्वचकाच्छब्दात्पञ्चालेत्यस्माद्राजन्यञ् पञ्चालानां राजा पाञ्चालः इति। इदञ्च वार्तिकं क्षत्रियशब्दात् जनपदात् तस्य राजन्यपत्यवदिति सूत्रयितुमुचितम्। क्षत्रियश्शब्द्यते येन तदिति तदर्थलाभात्। वस्तुतस्तु तद्राजनीत्येतावदेव वाचकमस्तु । सूत्राक्षरैरेव वार्तिकार्थसिद्धेः। जनपदशब्दादित्यस्य विशेष्यत्वेन विशेषणत्वेन च व्याख्याने सूत्रवार्तिकोभयार्थसङ्ग्रहात्, न च क्षत्रियावाचकत्वे सति जनपदवाचकाच्च अपत्ये इञ् स्यादिति शङ्कनीयम्। असम्भवादेव तन्निवृत्तेः। न च जनपदवाचकत्वे सति क्षत्रियवाचकादप्यञ् स्याद्राजनीति वाच्यम्। असम्भवात् । ननु देशानामिव देशस्थानां क्षत्रियाणामपि सम्भवत्येव राजेति चेत्सत्यम्। तथाऽपि पञ्चालशब्दः इक्ष्वाकुशब्दवत् राजवाचक एव। न तु सामान्यक्षत्रियवाचकः। तन्नाम्ना कृतो देशः पञ्चालदेशः इक्ष्वाकुदेशः। एवं कुरव इत्याद्या अपि। अतः राजवाचकात्प्रातिपदिकात्पुना राजनि प्रत्ययासम्भवान्न दोष इति। पञ्चालस्यापत्यानि पञ्चाला इति बहुत्वेऽपि पञ्चालराजवंश्यास्तेपि राजान एवेति न तत्रापि राजनि प्रत्ययस्सम्भवति। तस्मात् तद्राजनीति वार्तिकमस्त्विति सिद्धान्तः। यद्वा

**११८७। साल्वेयगान्धारिभ्यां च** ।४।१।१६९। आभ्यामपत्येऽञ्। 'वृद्धेत्- ११८९' इति ञ्यङोऽपवादः। साल्वेयः। गान्धारः। तस्य राजन्यप्येवम्॥ **११८८। द्व्यञ्मगधकलिङ्गसूरमसादण्** ।४।१।१७०। अञोऽपवादः। द्व्यच्। आङ्गः। वाङ्गः। सौह्मः। मागधः। कालिङ्गः। सौरमसः। तस्य राजन्यप्येवम्॥ **११८९। वृद्धेत्कोसलाजादाञ्ञ्यङ्** ।४।१।१७१। वृद्धात्। आम्बष्ठ्यः। सौवीर्यः। इत्। आवन्त्यः। कौन्त्यः कौसल्यः। अजादस्यापत्यं आजाद्यः॥ **११९०। कुरुनादिभ्यो ण्यः** ।४। १।१७२। कौरव्यः। नैषध्यः। स नैषधस्यार्थपतेरित्यादौ तु शैषिकोऽण्॥

---

तद्राजनीत्यपि माऽस्तु ते तद्राजा इति वक्ष्यमाणतद्राजसंज्ञाया अन्वर्थत्वेन अञादीनां तद्राजाभिधायकत्वस्यापि सत्त्वादिति। नेदं वार्तिकमपूर्व वचनम् । किन्तु तद्राजसंज्ञाविधानादेव लब्धमित्याह। तद्राजमाचक्षाण इत्यादि । पाण्ड्यः पाण्डुदेशाधिपतिरयं पाण्डुः क्षत्रियः । तस्मदपत्येप्यण् डित्त्वाट्टेरुकारस्य लोपः । पाण्ड्यः। अथ कथं पाण्डवा इति उच्यते । जनपदवाचकत्वे सति क्षत्रियवाचकादित्यनेन तज्जनपदाधिपतेः क्षत्रियस्यैव ग्रहणम्। न सामान्यक्षत्रियस्य नाप्यन्यदेशाधिपतेः क्षत्रियस्य च ग्रहणमिति सिद्धान्तात्, युधिष्ठिरपिता पाण्डुः न पाण्डुदेशाधिपतिः, किन्तु कुरुदेशाधिपतिरिति। तस्मान्नाञ् । किन्तु औत्सर्गिकोऽण् पाण्डवाः। औत्सर्गिकस्याणः अतद्राजत्वाद्बहुषु न लुक् इति । साल्वेयेति - पूर्वसूत्रस्यात्रानुवृत्तिः। जनपदवाचकत्वे सति क्षत्रियवाचकाभ्यां साल्वेयगान्थारिभ्यामपत्येञ् स्यात्। वार्तिकात्तद्राजनि च पूर्वेणैव सिद्धे बाधकबाधनार्थमिदम्। जनपदसूत्रात्परत्वाद्वृद्धेति सूत्रस्य तदपवादत्वादस्य चेति साल्वेयस्यापत्यं साल्वेयानां राजा च साल्वेयः। गान्थारेरपत्यं गान्थारीणां राजा च गान्थारः। एवं द्व्यञ्मगधेति सूत्रेऽप्यूह्यम्।

**अञोपवादः**-जनपदादिति सूत्रेण प्राप्तस्य अञः बाधनार्थोऽयमण् इत्यर्थः। सुम्हस्यापत्यं सुंहानां राजा च सौंहः अणञोस्स्वरे भेदः।

वृद्धादीनां समाहारः-इत् इदन्तः। आम्बष्ठो राजा ।आम्बष्ठाजनपदाश्च तस्यापत्यं तेषां राजा च आम्बष्ठ्यः अवन्तिरिति। इदन्तः. अजादात् ञ्यङ् इति च्छेदः तकारस्य श्चुत्वेन अनुनासिको ञकारः ञ्ङ्इत्यनयोरित्त्वेन लोपः य इति शिष्यते। ञित्त्वं वृद्ध्यर्थ ङित्त्वं यङश्चाप इति चाबर्थ एकेनैव आदिवृद्धिसिद्धेः।

कुर्विति । कुरुः निषधः । उभाविमौ जनपदाधिपतिक्षत्रियवाचिनौ ततोऽपत्ये राजनि च अयं बाधित्वा ण्यः। कुरोरपत्यं कुरूणां राजा च कौरव्यः। निषधानां राजा निषधस्य अपत्यं च नैषध्यः । शैषिकोऽण् अपत्यत्वस्य राजत्वस्य वा अविवक्षायां तस्येदमित्यण् इति भावः।

प्रातिलोम्येन अञ्चतीति प्रत्यक्-रथः यस्य सः प्रत्यग्रथः-राजा। प्रत्यग्रथा जनपदाश्च। एवमितरेष्वप्यूह्यम्।

**११९१। साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ्** ।४।१।१७३। साल्वो जनपदस्तदवयवा उदुम्बरादयस्तेभ्यः प्रत्यग्रथादिभ्यस्त्रिभ्यश्च इञ्। अञोऽपवादः। औदुम्बरिः। प्रात्यग्रथिः। कालकूटिः। आश्मकिः। राजन्यप्येवम्॥ **११९२। ते तद्राजाः** ।४।१।१७४। अञादय एतत्संज्ञाः स्युः॥ **११९३। तद्राजस्य बहुषु तेनैवास्त्रियाम्** ।२।४।६२। बहुष्वर्थेषु तद्राजस्य लुक् स्यात्तदर्थकृते बहुत्वे नतु स्त्रियाम्। इक्ष्वाकवः। पञ्चाला इत्यादि। कथं तर्हि कौरव्याः पशव इति। तस्यामेव रघोः पाण्ड्या इति च। कौरव्ये पाण्ड्ये च साधव इति समाधेयम्। रघूणामन्वयं वक्ष्ये, निरुध्यमाना यदुभिः कथंचिदिति तु रघुयदुशब्दयोस्तदपत्ये लक्षणया॥ **११९४। कम्बोजाल्लुक्** ।४।१।१७५। अस्मात्तद्राजस्य लुक्। कम्बोजः। कम्बोजौ॥ **कम्बोजादिभ्य इति वक्तव्यम्**॥ (वा.२३७४) चोलः। शकः। द्व्यज्लक्षणस्याणो लुक्। केरलः। यवनः। अञो लुक्। कम्बोजाःसमरे इति पाठः सुगमः। दीर्घादिपाठे तु कम्बोजोऽभिजनो येषामित्यर्थः। 'सिन्धुतक्षशिलादिभ्योऽणञौ १४७३' इत्यण्॥ **११९५। स्त्रियामवन्तिकुन्तिकुरुभ्यश्च** ।४।१।१७६। तद्राजस्य लुक् स्यात्। अवन्ती। कुन्ती। कुरूः॥

---

अञादयः। जनपदेति सूत्रादारभ्य विहिताः अञ् अण्-ड्यण्-ञ्यङ्-इञ्-इत्येते। ननु तस्यापत्यमित्यण् अत इञ् इत्यादिभ्यो विहिता ये प्रत्यया अणिञादयस्तेऽपि एतत्प्रत्ययाभिन्ना एवेति तेषामपि तद्राजसंज्ञा स्यादिति चेन्मैवम्। जनपदशब्दादित्यारभ्य तद्राजसूत्रपर्यन्तं विद्यमानैसूत्रैः कृता ये अणादयस्तेषामेव तद्राजसंज्ञेति विवक्षितत्वात्।

संज्ञाफलमाह। तद्राजस्येति सूत्रेण ण्यक्षत्रियेति सूत्रादत्र लुकोऽनुवृत्तिः । क्रमेण तद्राजस्य लुक्स्यात् । तेनैव तद्राजप्रत्ययार्थेनैव कृते बहुषु बहुत्वे - तद्राज एव बह्वर्थाभिधायकश्चेत्तस्य लुक् इत्यर्थः। स्त्रियां स्त्रीवाचकत्वेन तादृशोऽपि तद्राजः। यदि स्त्रीवाचकः तदा न लुगित्यर्थः।

साधव इति कौरव्ये साधवः कौरव्याः। कौरव्यशब्दात्तत्र साधुरिति यति यस्येति लोपे आपतत्यस्येति यलोपः कुरोरपत्येत्यस्य विहितत्वात्।

काम्बोजशब्दादञ् तस्य लुक् । कथन्तर्हि काम्बोजास्समरे इति रघुवंशे अत आह कंबोजास्समरे इति पठितव्यमिति भावः अभिजनो वंशः।

स्त्रियामिति अस्त्रियामिति। स्त्रियां लुगप्राप्तेरयमारम्भः। अवन्तिकुन्तिभ्यामिदन्तलक्षणः। ञ्यङ् तस्य लुक् कु शब्दात्तुन्यह तस्य लुकि ऊङुत इत्यूङि कुरूः। ऊङुत इति सूत्र एवेदमुदाहृतमिति नात्र मूले पुनरुदाहृतम्। अवन्तेः, कुन्तेश्च अपत्यं स्त्री अवन्ती कुन्ती।

**११९६। अतश्च** ।४।१।१७७। तद्राजस्याकारस्य स्त्रियां लुक् स्यात्। शूरसेनी। मद्री। कथं माद्रीसुताविति। ह्रस्व एव पाठ इति हरदत्तः। भर्गादित्वं वा कल्प्यम्॥
**११९७। न प्राच्यभर्गादियौधेयादिभ्यः** ।४।१।१७८। एभ्यस्तद्राजस्य न लुक्। पाञ्चाली। वैदर्भी। आङ्गी। वाङ्गी। मागधी। एते प्राच्याः। भार्गी। कारूशी। कैकेयी। केकयीत्यत्र तु जन्यजनकभावलक्षणे पुंयोगे ङीष्। युधा। शुक्रा। 'आभ्यां द्व्यचः ११२४' इति ढक्। ततः स्वार्थे 'पर्श्वादियौधेयादिभ्योऽणञौ २०७०' इत्यञ्। 'शार्ङ्गरवाद्यञः-(सू.५२७) इति ङीन्। 'अतश्च ११९६' इति लुकि तु ढगन्तत्वात् ङीप्युदात्तनिवृत्तिस्वरः स्यात्। यौधेयी। शौक्रेयी॥

---

**अतश्च-तद्राजा** इत्यतस्तद्राजानुवृत्तिः । षष्ठ्येकवचनान्तत्वेन तस्य विपरिणामः। कम्बोजादिति सूत्राल्लुगिति स्त्रियामिति सूत्रात् स्त्रियामिति च अनुवर्तेते। तद्राजस्यावयवो य अत्-अकारः-तस्य लुक् स्त्रियामित्यर्थः। शूरसेनशब्दादपत्ये जनपदे त्यञ्-ञः इत्त्वेन लोपः-अतश्चेत्यनेन अल्लोपः । जातेरिति ङीषि यस्येति लोपे शूरसेनी। मद्रस्यापत्यमिति विग्रहे द्व्यच्लक्षणोण्-तस्य स्त्रियामनेन लुक् ङीष् मद्री । ननु अञादिषु तद्राजेषु दीर्घाकाराभावात्किं तपरकरणेनेति चेत् स्पष्टार्थमेव । ननु तद्राजस्य लुकमविधाय तदवयवस्य अतो लुग्विधानेन किम्। कौसल्या कोसलशब्दाद्वृद्धेरिति ञ्यङ्। ञ्ङ् अनयोरित्त्वेन लोपे अस्य अनेन लोपे य् इति शिष्यते यस्येति लोपे कौसल् य् यङश्चाप् ङ्ङतन्तवाच्चाप् प्रत्ययः चपयोरित्वेन लोपे आ इति शिष्यते अपत्यस्येति न यलोपः। आकारपरकत्वात्। चापः अतद्धितत्वाच्च। कौसल्या-(ञ्यङि- ङित्त्वं स्त्रियां चाबर्थमिति वृद्धेरिति सूत्रे बोध्यम्) कल्प्यम्। कल्पिते च भर्गादित्वे वक्ष्यमाणसूत्रेण तद्राजस्य लुगभावे वृद्धिः। अञन्तलक्षणो ङीप् माद्री इति।

प्राच्याः प्राग्देशाधिपतयः प्राग्देशा वा । पञ्चालस्यापत्यं स्त्री पाञ्चाली । अञो लुगभावाद्वृद्धिङीपौ । पञ्चालानां राज्ञी च पाञ्चाली। केकयमित्रय्विति इयादेशो ञि ङीप् कैकेयी । पुम्योगे पुंसा सह योगस्सबन्धः पुंयोग इति व्युत्पत्त्या पुत्रिकाया अपि जनकेन पुंसा जन्यजनकभावलक्षणस्संबन्धोऽस्तीति केकयस्य स्त्री केकयी इति पुंयोगे ङीषि रूपम्। युध-शुक्र-आभ्यामदन्तत्वप्रयुक्तष्टाप्। ततः द्व्यच इत्यपत्ये ढक् यौधेयः। शौक्रेयः । ततस्स्वार्थे योऽञ् स तद्राजः। वक्ष्यति स्वार्थिकेषु ञादयस्तद्राजा इति अञि कृते यस्येति लोपे यौधेय शौक्रेय इति रूपे, ताभ्यां स्त्रियामञन्तत्वात् ङीनि यौधेयी-शौक्रेयी

**११९८। अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ गोत्रे** ।४।१।७८।
त्र्यादीनामन्त्यमुत्तमं तस्य समीपमुपोत्तमम्। गोत्रे यावणिञौ विहितावनार्षौ तदन्तयोर्गुरूपोत्तमयोः प्रातिपदिकयोः स्त्रियां ष्यङादेशः स्यात्॥ (प) **निर्दिश्यमानस्यादेशा भवन्ति** इत्यणिञोरेव। षङावितौ। - 'यङश्चाप् ५२८'। कुमुदगन्धेरपत्यं स्त्री कौमुदगन्ध्या। वाराह्या। अनार्षयोः किम्। वासिष्ठी। वैश्वामित्री। गुरूपोत्तमयोः किम्। औपगवी। जातिलक्षणो ङीष्। गोत्रे किम्। अहिच्छत्रे जाता आहिच्छत्री॥

---

इति। ननु अञन्ततद्राजस्य लुक्यपि ढगन्तात् ठिड्ढाणेति ङीपि यथोक्तरूपसिद्धेः किमलुग्विधिना। अत आह उदात्तनिवृत्तिस्वरस्स्यात्। ननु लुक्यपि प्रत्ययलक्षणन्यायेन अञन्तत्वाङ्ङीन् स्यादेवेति चेन्मैवम्। "शार्ङ्गरवाद्यञो ङीन्" इति सूत्रे अञो योऽकारस्तस्माङ्ङीन् इति व्याख्यातत्वेन लुप्ताकाराञन्तान्न ङीन् इति। ननु अञोऽलुक्यपि टिड्ढाणेति ङीप् स्यादेवेति वाच्यम्। शार्ङ्गरवाद्यञो ङीनः परत्वात् टिड्ढाणेति ङीपं बाधित्वा ङीनेव स्यादिति। न चैवं टिड्ढाणेति सूत्रे ङीपग्रहणं व्यर्थमिति वाच्यम्। शार्ङ्गरवादिसूत्रे जातेरेव ग्रहणमिति जातिभिन्नस्य अञन्तस्य टिड्ढाण् सूत्रणैव ङीबति उक्तमिदं तत्वबोधिन्यां टिड्ढणसूत्रव्याख्यानावसर एव।

त्र्यादीनाम्। त्र्याद्यक्षरघटितानां पदानाम् अन्यमन्त्याक्षरः। उत्तमं उत्तमसंज्ञकः त्र्यक्षरके पदे अन्त्यस्तृतीयाक्षरः, चतुरक्षरके अन्त्यश्चतुर्थाक्षरः, पञ्चाक्षरके अन्त्यः पञ्चमाक्षरः इत्येवमादयोन्त्या उत्तमाभिधाः । द्व्यक्षरके अन्त्यस्य उत्तमत्वम्माभूदिति त्र्यादिग्रहणम्। अक्षरसंज्ञा च न केवले हलि किन्तु साच्के। केवलेप्यचि अक्षरसंज्ञा वर्तते । गुरु-गुरुसंज्ञकम् उपोत्तमं ययोस्तयोः गुरूपोत्तमयोः । कुमुदस्येव गन्धोऽस्यास्तीति कुमुदगन्धिः। उपमानाच्चेति गन्धस्येत् कुमुदगन्धेरपत्यमिति विग्रहे इतश्चाञय इति न ढक् बह्वच्कत्वात्। किन्त्वौसर्गिकोऽण्। अस्मिन्पदे उपोत्तमं गः। संयोगे गुरुरिति गुरुः। कुमुदगन्धिरयं न ऋषिरिति नायमण् आर्षः-(ऋषेरयमित्यार्षः शैषिकोऽण् ऋषेर्विहित इत्यर्थः) । अपत्यप्रत्ययस्यापि लौकिकगोत्रत्वाद्गोत्रे विहितोऽपि नायमण् । अतः स्त्रियामस्य ष्यङादेशः। आदिवृद्धिः। यस्येति लोपः । कौमुदगन्ध्य यङन्तत्वाच्चाप् कौमुदगन्ध्या । वराहस्यापत्यं स्त्री वाराह्या । वराहशब्दादत इञ् तस्य ष्यञ्। उपोत्तमस्य वा इत्यस्य दीर्घञ्च इति गुरुत्वात्। वराहस्य अनृषित्वाच्च इञः अपत्यात्मके गोत्रे विहितत्वाच्च-लक्ष्ये लक्षणसमन्वयः । सूत्रे गोत्रग्रहणं स्पष्टार्थम्। अनार्षयोरिति पर्युदासः। तेन ऋषिभिन्नादृषिसदृशात्प्रातिपदिकाद्विहितयोरिति गम्यते, तच्च विधानं गोत्रे एव।

**११९९। गोत्रावयवात्** ।४।१।७९। गोत्रावयवा गोत्राभिमताः कुलाख्यास्ततो गोत्रे विहितयोरणिञोः स्त्रियां ष्यङादेशः स्यात्। अगुरूपोत्तमार्थ आरम्भः। पौणिक्या। भौणिक्या॥ **१२००। क्रौड्यादिभ्यश्च** ।४।१।८०। स्त्रियां ष्यङ्प्रत्ययः स्यात्। अगुरूपोत्तमार्थोऽनणिञर्थश्चारम्भः। क्रौड्या। व्याड्या॥ (ग) **सूत युवत्याम्**॥ सूत्या॥ (ग) **भोज क्षत्रिये**॥ भोज्या॥

---

ऋषिवाचकादणिञोर्गोत्रे विधानात् इति–वासिष्ठी । वसिष्ठशब्दादृष्यणि अण्णन्तत्वात् ङीप्–आर्षोऽयमण्णिति नास्याणष्ष्यङ्। एवं वैश्वामित्रीत्यत्रापि विश्वामित्रस्यापत्यं स्त्री इति विग्रहः। औपगवि उपगुर्न ऋषिरिति नायमण् आर्षः। उपोत्तमस्य गस्य ह्रस्वं लघ्विति लघुत्वान्नाणष्ष्यङ् टिड्ढाणेति ङीपः परत्वात् जातेरिति ङीष्–उपगोरपत्यं स्त्री औपगवी। अहिच्छत्रन्नाम नगरं तत्र जात इत्यण् । जातार्थे ततः स्त्रिया ङीपि, वृद्धौ, आहिच्छत्री। नायमण् गोत्रे विहितः किन्तु जातार्थे इति न ष्यङ् ।

गोत्रावयवात् अत्र प्राक्सूत्रादणिञोः गोत्रे ष्यङ् इति स्त्रियामवन्तीति सूत्रात् स्त्रियामिति च अनुवर्तन्ते। गोत्रावयवो नाम अप्रधानं गोत्रम्। इदमेवाह गोत्राभिमता इति। गोत्रत्वेनाभिमताः। न तु वस्तुतो गोत्रभूता इत्यर्थः । यावदर्थमाह कुलाख्या इति अप्रधानं गोत्रं कुलमित्यभिधीयते इत्यर्थः। ततः गोत्रावयवकुलवाचकादित्यर्थः। प्रवराध्यायपठितमेव प्रधानं गोत्रमन्यदप्रधानमेवेति। भुणिकादीनां कुलानामप्रधानगोत्रत्वम्। सन्ततिरूपं गोत्रत्वं कुलेष्वपि वर्तत इति तेषां गोत्रव्यवहारः प्रसिद्धः। पुणिकस्यापत्यं स्त्री पौणिक्या। अत इञष्ष्यङ्। एवं भौणिक्या।

क्रौडच्या–क्रौडिशब्दादपत्येऽर्थे इतश्चानिञ इति ढक् । तस्य ष्यङ्। अत एव अनणिञर्थ इत्युक्तम्। अणीञ्भिन्नप्रत्ययानामपि ष्यङादेशार्थमित्यर्थः क्रोडस्यापत्यं क्रौडिरिति । इञन्तत्वे तु यञिञोश्चेति फक्–तस्य ष्यङ् यङश्चाप् क्रौडच्या। एवं व्याडच्या।

सूतयुवत्याम्। सूतेति लुप्तप्रथमाकं पदम्। स्त्रीप्रत्ययविधायकमिदं गणसूत्रम्। अदन्तत्वलक्षणटापोपवादः। सूतशब्दः स्त्रियां ष्यङं लभते। क्रौडच्यादिगणपठितत्वात् । गोत्रे एव सूत्रात् ष्यङ्स्त्रियामिति अर्थाश्रयणे तु युवत्यामिति व्यर्थम्। क्रौडच्यादिसूत्रे स्त्रियामित्यनुवृत्तेः। सूतस्यापत्यं स्त्री इति विग्रहे तु अत इञि–इतो मनुष्यजातेरिति ङीषि, सौती इति रूपम्। ननु युवत्यर्थे ष्यङि कृते कथं पुनस्त्रीप्रत्ययस्य यङश्चापः प्रसक्तिः। स्त्रीत्वस्याभिहितत्वादिति चेत् मैवम्। स्त्रीप्रत्ययाधिकारीये स्त्रीप्रत्यये उदिते पुनस्त्रीप्रत्यानुत्पत्तिः तद्धितात्तु स्त्रीप्रत्यय उत्पद्यत एवेति युवत्यर्थे उत्पन्नस्तद्धितो ह्ययम् । नन्वेवं कथं तद्धिताधिकारेऽस्य पठनं संगच्छते। अपत्याद्यर्थावबोधकत्वाभावात्। युवत्यर्थो न हि

तद्धितार्थः। गोपस्य स्त्री गोपी इत्यत्रैव सूतस्य युवतिस्सूत्या इति ष्यङः स्त्रियां विहितत्वेन स्त्रीप्रत्ययत्वात्। न ततश्चाबुत्पत्तिस्सुतरां संगच्छते । अत एव हि प्राचां ष्फस्तद्धित इति ष्फस्य तद्धितत्वं विहितम् इति चेदकिञ्चित्करोयं दोषः। ष्यङस्तद्धिततत्वे न चाबुत्पत्तिसंभवात्। अस्मादेव गणसूत्राद्यु,वत्यर्थोऽपि तद्धितार्थ एव। षित्वसामर्थ्याङ्ङीषिव ङ्ङित्त्वसामर्थ्यात् स्त्रीत्वे उक्तेऽपि ष्यङा चाप् लभ्यत एव। एवं सूतस्य स्त्री सूत्या–सूतस्यापत्यं स्त्री अपि सूत्या एव । अपत्यार्थे य इञ् अस्य ष्यङादेशोऽनेनेति एतावत स्त्रीप्रत्ययस्य टापो ङीपश्चापवादोऽयम् इति आपत्यस्य इञोऽपवादोऽपीति च द्वेधा फलितम्। ष्यङस्त्रीप्रत्ययत्वात्। तद्धितेषु पठितत्वाच्चेति।

ननु नेदं व्याख्यानं सम्यक्। तथा हि–सूतशब्दष्ष्यङं लभते स्त्रियामित्युक्तौ। ष्यङः प्रत्ययत्वेन आदेशत्वाभावात् सूतस्यापत्यं स्त्री इत्यत्र ञः न ष्यङ् इति सौतीत्येव रूपम्। न तु सूत्या इति। किञ्च अदन्तत्वप्रयुक्तं रूपं जातिलक्षणं ङीषञ्च ष्यङ् बाधत इति। जातिलक्षणे ङीषि सूत इति क्रियावाचिनष्टापि सूता इति च न सिद्ध्येत्। अपि च युवत्यामिति व्यर्थम् । स्त्रियामित्यनुवृत्तेः इति चेत् तर्हि सूतशब्दष्ष्यङं लभते। प्रकृतिप्रत्ययसमुदायेन युवत्यां वाच्यायामित्यर्थोऽस्तु । तथा च युवत्यां सूत्यां सूतजातौ सूती। क्रियावाचित्वे सूता (प्रसूतेत्यर्थः.) स्त्र्यपत्ये सौती इति सिद्ध्यन्ति। प्रयोगे च सूती इति। नेदं स्त्रीप्रत्ययविधायकं, किन्तु तद्धितप्रत्ययविधायकमेव। तद्धितप्रत्ययेनात्र केवलेनानेन न कोऽप्यर्थः प्रतीयते इति नात्र विग्रहवाक्यम्। युवत्यर्थाभिधायिना ष्यङन्तेन प्रकृतिभूतेन स्त्रीत्वेऽभिहितेऽपि ष्यङो ङित्त्वसामर्थ्यात् चाप् ।

भोज क्षत्रिये भोजशब्दष्ष्यङं लभते प्रकृतिसमुदायेन क्षत्रिये वाच्ये। अयञ्च ष्यङ् स्त्रियामेव क्रौत्यादिसूत्रे स्त्रियामित्यस्यानुवृत्तेः। अस्य च तद्गणसूत्रत्वात् । तेन पुम्सि न ष्यङ् । भोजः । क्षत्रियवाचकात् भोजशब्दात् स्त्रियां ष्यङ् स्यादिति। जातिलक्षणस्य स्त्रीप्रत्ययस्य ङीषोऽपवादः। स्त्रीप्रत्ययापवादोऽप्ययं न स्त्रीप्रत्ययः। तद्धिताधिकारस्थत्वात्। तेन इदमपि न स्त्रीप्रत्ययविधायकं गणसूत्रं इति। वस्तुतस्तु इदं गणसूत्रद्वयं स्त्रीप्रत्ययविधायकमेव । स्त्रियामेव ष्यङो विहितत्वात्। न च अङिञोरित्यादिषु सूत्रेष्वपि स्त्रीप्रत्ययविधायकत्वं शंक्यम्। तत्र ष्यङ्आदेशात्मकत्वात्। (अपत्यप्रत्ययानामणादीनां हि ष्यङ् तैरादिश्यते) । किञ्च अणिञादेशभूतेन ष्यङा यथा अपत्यार्थोऽभिधीयते तथाऽत्र ष्यङा प्रत्ययभूतेन न कश्चिदर्थस्स्वातंन्त्र्येण प्रतीयते। किन्तु समुदायेनैव कश्चिदर्थ इति नास्त्यत्र वृत्त्यर्थावबोधकं वाक्यमपि। स्त्रीप्रत्ययेष्वनयोरपठनन्तु तद्धितत्वलाभाय।

**१२०१। दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्डेविद्धिभ्योऽन्यतरस्याम्** ।४। १।८१। एभ्यश्चतुर्भ्यः ष्यङ्वा। अगोत्रार्थमिदं गोत्रेऽपि परत्वात्प्रवर्तते। पक्षे 'इतो मनुष्य ५२०' इति ङीष्। दैवयज्ञ्या। दैवयज्ञी। इत्यादि॥ **इत्यपत्याधिकारः** ॥

---

अन्यथा प्राचां ष्फ इत्यत्रेव तद्धितग्रहणमत्रापि कर्तव्यं स्यादिति।

अगोत्रार्थमिदं। ष्यङ् वा स्त्रियामिति स्त्रीप्रत्ययविधायकमिदं सूत्रम्। जातिलक्षणस्य ङीषोऽपवाद इति भावः। अत एव अन्यतरस्यां ग्रहणात् अपवादेन मुक्ते उत्सर्गो ङीष् । पक्षे देवयज्ञस्य अपत्यं स्त्री इति विग्रहे अत इञि इञन्तात् ष्यङ्प्रत्ययः। स्त्रियामित्युक्तत्वात् यङश्चाप् दैवयज्ञ्या । दैवयज्ञेर्गोत्रापत्यं स्त्री इति विग्रहे यञीञोश्चेति फक्-तं बाधित्वा परत्वादनेन ष्यङ् वादैवयज्ञा, ष्यङभावपक्षे जातिलक्षणे ङीषि दैवयज्ञायनी। यद्यपीदं स्त्रीप्रत्ययविधायकं तथाऽपि गोत्रधिकारपठितत्वात् गोत्रप्रत्ययाना मप्यपवादभूत एव। एवञ्च एभ्यश्चतुर्भ्यष्ष्यङ् वा स्त्रियामिति । एभ्यश्चतुर्भ्यो गोत्रे विहितानां ष्यङादेशो वा स्त्रियामिति च द्वेधाऽस्यार्थ इति फलितम्। अगोत्रार्थ गोत्रप्रत्ययादेशार्थ नेदं सूत्रं भवति । किन्तु स्त्रीप्रत्ययापवादार्थमिति तदर्थः । तथा च ङीषादीनां स्त्रीप्रत्ययानामपवादभूतत्वेन ष्यङः इदं सूत्रं स्त्रीप्रत्ययविधायकमिति फलितम्। अन्यथा चेदं व्याख्यायते। गोत्रे एव विहितानामणादीनां बाधनार्थं नेदं सूत्रं। किन्तु गोत्रागोत्रसाधारण्येन विहितानामिति। अत एव गोत्रेऽपि परत्वात् प्रवर्तत इति वक्ष्यमाणं सङ्गच्छते। गोत्रे विहितानामणादीनामपि बाधकमिदमिति भावः। देवयज्ञस्यापत्यं दैवयज्ञिः। पौत्रादीनामेव गोत्रत्वेन अनन्तरापत्यस्य शास्त्रीयगोत्रत्वाभावात्। गोत्रभिन्ने अगोत्रे अर्थादपत्येऽर्थे विहितस्यापीञः ष्यङादेशः। इञादेशे ष्यङि स्थानिवद्भावेन ञित्त्वमानीयते, तेन ञित्त्वादादिवृद्धिः। (एवमेव कौमुदीगन्ध्या इत्यत्रापि वृद्धिर्बोध्या) यङश्चाप् दैवयज्ञ्या ष्यङादेशाभावे तु इञन्तात् ङीप् दैवयज्ञी। इत्थमगोत्रस्य इञः ष्यङादेश उदाहृतः । गोत्रे तु देवयज्ञस्य गोत्रापत्यं दैवयज्ञिः। स्त्रियामस्यापीञः ष्यङ् दैवयज्ञ्येत्यादिपरत्वात् अञिञोरिति सूत्रात्परत्वाद्दैवयज्ञीति सूत्रस्येति भावः। अञिञोरिति सूत्रमप्रवर्तयित्वा अस्य प्रवृत्तौ फलन्तु विकल्प एव । ननु अञिञोरिति सूत्रे लौकिकमेव गोत्रं गृह्यत इत्युक्तम् । कथमत्रालौकिकगोत्राभिधायकत्वमाश्रित्य परत्वात्प्रवर्तत इत्युक्तिः सङ्गच्छते इति चेत्, सत्यम्। तत्सूत्रे शास्त्रीयमेव गोत्रं गृह्यत इति मूलकाराशयः। एतेन लौकिकगोत्रार्थमिदं सूत्रमारब्धमपि परत्वाच्छास्त्रीयगोत्रेऽपि प्रवर्तत इति फलितम्। अस्मिंस्तु

## अथ तद्धितेषु चातुरर्थिक प्रकरणम्

**१२०२। तेन रक्तं रागात्** ।४।२।१। रज्यतेऽनेनेति रागः। कषायेण रक्तं वस्त्रं काषायम्। माञ्जिष्ठम्। रागात्किम्। देवदत्तेन रक्तं वस्त्रम्॥ **१२०३। लाक्षारोचनाट्ठक्** ।४।२।२। लाक्षिकः। रौचनिकः॥ **शकलकर्दमाभ्यामुपसंख्यानम्**॥ शाकलिकः। कार्दमिकः। आभ्यामणपीति वृत्तिकारः। शाकलः। कार्दमः॥ **नील्या अन्**॥ नील्या रक्तं नीलम्॥ **पीतात्कन्**॥ पीतकम्॥ हरिद्रामहारजनाभ्यामञ्॥ हारिद्रम्। माहारजनम्॥ **१२०४। नक्षत्रेण युक्तः कालः** ।४।२।३। पुष्येण युक्तं पौषमहः। पौषी रात्रिः॥

---

पक्षे कुमुदगन्धेः गोत्रापत्यं स्त्री कौमुदगन्ध्या इत्यादीनि बोध्यानि अनन्तरापत्ये तु अणन्तात् ङीपि कौमुदगन्धी इत्येव अन्यथा चेदमिति व्याख्यानं प्रामाणिकम्। ततः प्रागुक्तन्तु प्रौढत्वकल्पितमेव। **इत्यपत्याधिकारः**

### तद्धितेषु चातुरर्थिकाः

तेन रक्तं रागात्। तेनेति लुप्तपञ्चमीकं पदं तृतीयान्तार्थबोधकं रागादित्यस्य विशेषणभूतञ्च रागादित्यर्थग्रहणम्। तृतीयान्ताद्रञ्जकद्रव्यवाचिनः यथा विहितम्। अणादयस्स्युः रक्तमित्यर्थे इति सूत्रार्थः। वस्त्रमिति विशेष्यं पदम्। कषायेण रक्तमिति विग्रहः। औत्सर्गिकः अण्। प्राग्दीव्यतोऽण् इत्यधिकारात्। कषाय–टा–अण्–सुब्लुकि वृद्धौ यस्येति लोपे काषायम् कषायो नाम रञ्जकद्रव्यविशेषः। तेनेति किम्। लाक्षायां रक्तो वर्णोऽस्ति अत्र लाक्षिको वर्ण इति माभूत्। ननु रञ्जेति कर्मणि क्तान्तोऽयं रक्तशब्दः। तत्सामर्थ्यात् तृतीयान्तमाक्षिप्यत इति किन्तेनेत्यनेनेति चेत्–तर्हि स्पष्टार्थमेवेति बोध्यम्। ननु तेनेत्यनेन तृतीयान्तात् रञ्जनक्रियायां करणभूतादित्यर्थोऽभिधीयते इति व्याख्यानात्स्वारस्याच्चेति रञ्जनक्रियानिरूपितकर्तृत्ववतो देवदत्तात्तृतीयान्ताद्रक्तमित्यर्थे अणादिप्रत्ययप्रसक्तिरेव नास्तीति। रागादिति किम्। इति चेत्–शलाकया रक्तं शालाकमिति माभूदिति। ननु साधकतमं करणमिति तमब्ग्रहणेन शलाकायां न करणत्वमिति चेन्मैवम्। रञ्जनांशे अनत्यन्तोपकारकत्वेऽपि क्रियांशे अत्यन्तोपकारकत्वं वर्तत एव शलाकायाम्। अन्यथा तत्र तृतीया एवानुदयापत्तेः इति।

**नक्षत्रेणेति** । नक्षत्रेण युक्त इत्यर्थे प्रत्ययाः स्युः। अर्थो नक्षत्रवाचकादेव। कालश्चेदभिधीयते कालाभिधायकत्वं केवलनक्षत्रयोगस्य नास्ति, सर्वदा सर्वेषां नक्षत्राणां सत्त्वात्। तेनात्र सचन्द्रनक्षत्रयोगः स्वीकर्तव्यः। चन्द्रो हि नित्यतारया संश्लिष्यति। प्रत्यहोरात्रं विद्यमाना तारा नित्यताराः। ताराश्च अश्विन्यादयः। अहन्यपि चन्द्रतारा वर्तन्ते । भानुदीप्त्यापविद्धाः परन्न दृश्यन्ते। इत्थं सचन्द्रनक्षत्रयोगे स्वीकृतेऽपि प्रत्ययाः

**१२०५। लुबविशेषे** ।४।२।४। पूर्वेण विहितस्य लुप्स्यात् षष्टिदण्डात्मकस्य कालस्यावान्तरविशेषश्चेन्न गम्यते। अद्य पुष्यः। कथं तर्हि पुष्ययुक्ता पौर्णमासी पौषीति। 'विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः १२२५' इति निर्देशेन पौर्णमास्यामयं लुब् नेति ज्ञापितत्वात्। श्रवणशब्दात्तु अतएव लुब् युक्तवद्भावाभावश्च। अबाधकान्यपि निपातनानि। श्रावणी॥

---

केवलनक्षत्रवाचकादेव। तेन च नक्षत्रवाचकेन कालाभिधायकत्वसामर्थ्यात्। सचन्द्रनक्षत्रं लक्षणयाऽभिधीयते । यथा पुष्येण युक्तमिति विग्रहे पुष्येणेत्यस्य चन्द्रसमीपस्थेन पुष्येणेत्यर्थः। एवं वृत्तावपि पौषम्। पुष्यशब्दादणि-वृद्धौ-यस्येति लोपे-तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यमिति यलोपः। पौषम्। कालवाचित्वद्योतनाय अह इति विशेष्यम्। अणन्तात् ङीप् । पौषी रात्रिः।

षष्टिदण्डात्मकस्य षष्टिघटिकात्मकस्य-अहोरात्ररूपस्येति यावत्। अवान्तरविशेषः प्रहरादिरूपः अद्य पुष्यः, श्व आश्लेषः इति अहोरात्रवाचकावमू पुष्याश्लेषशब्दौ। यद्यपि अस्मिन्नहोरात्रे पुष्य इति पुष्यशब्दो नक्षत्राभिधायक एव न तु तद्युक्तकालाभिधायकः, तथाऽपि अव्ययानामनेकार्थत्वेन अद्येत्येतस्य अयमित्यर्थः। पौर्णमासीतिथीना- महोरात्रात्मकत्वेन पौर्णमासी नाहोरात्रावान्तरविशेष इति तदभिधायकत्वे पुष्यशब्दाद्विहितस्याणः लुप्स्यादेवेति पुष्य इति भवितव्ये कथं पौषी इति रूपं इति शंकाशयः। पौर्णमास्यात्मकस्याहोरात्रस्य वाचकत्वे न लुबिति उत्तराशयः । ज्ञापकत्वात्-सास्मिन् पौर्णमासीति योऽण् स फाल्गुन्यादिभ्यः पक्षे विधीयत इति वक्ष्यति । तथा च फाल्गुनी पौर्णमासी अस्मिन्नस्तीति फाल्गुनो मास इति सिद्ध्यति। पौर्णमास्यभिधायकत्वे यदि नक्षत्राणां लुप् तर्हि सूत्रे फाल्गुनीत्यादयो निर्देशा न संगच्छेरन् । फल्गुनेन युक्ता फाल्गुनी (पौर्णमासी) इति फल्गुनाद्विहितस्याणोऽलुप्तत्वात् । तस्मादयं निर्देशो ज्ञापयति। पौर्णमास्यभिधायकत्वे (अहोरात्रावान्तरविशेषप्रतीत्यभावेति) अणो न लुबिति। तर्हि श्रवणशब्दात्पौर्णमास्यभिधायकात्कथं लुप् । येन सूत्रे श्रवणा इति निर्देशस्संगच्छेत इति शंकायामाह। अत एवेति। सूत्रे निर्देशादेवेत्यर्थः। नन्वेवं लुपि युक्तवद्व्यक्तिवचने इति वक्ष्यमाणेन लुपि प्रकृतिवल्लिंगवचनयोर्भवितव्यत्वात् श्रवणेन युक्ता पौर्णमासी श्रवणं इति क्लीबमेव श्रूयेत, कथं श्रवणा इति स्त्रीलिङ्गनिर्देशः? इति शंकाया अपि सूत्रनिर्देशादेवेत्युत्तरमित्याह। युक्तवद्भावाभावश्चेति। नन्वेवं श्रावणीति प्रयोगस्य का गतिरत आह अबाधकान्यपीति। ज्ञापकसिद्धं न सार्वत्रिकमिति न्यायात् इति भावः। निपातितरूपाणां साधकान्येव, न तु भवितव्यरूपाणां बाधकानीति मूलोक्तस्यार्थः प्रदर्शितन्यायसिद्धोऽयम्। विकल्पस्य फलितत्वात्।

**१२०६। संज्ञायां श्रवणाश्वत्थाभ्याम्**। ।४।२।५। विशेषार्थोऽयमारम्भः। श्रवणा रात्रिः। अश्वत्थो मुहूर्तः। संज्ञायां किम्। श्रावणी। आश्वत्थी॥ **१२०७। द्वन्द्वाच्छः** ।४।२।६। नक्षत्रद्वन्द्वाद्युक्ते काले छः स्याद् विशेषे सत्यसति च। तिष्यपुनर्वसवीयमहः। राधानुराधीया रात्रिः॥ **१२०८। दृष्टं साम** ।४।२।७। तेनेत्येव। वसिष्ठेन दृष्टं वासिष्ठं साम॥ **अस्मिन्नर्थेऽण् डिद्वा वक्तव्यः**॥ उशनसा दृष्टमौशनम्। औशनसम्॥ **१२०९। कलेर्ढक्** ।४।२।८। कलिना दृष्टं कालेयं साम॥ **१२१०। वामदेवाड्ड्यड्ड्यौ** ।४।२।९। वामदेवेन दृष्टं साम वामदेव्यम्॥ सिद्धे यस्येति लोपेन किमर्थं ययतौ डितौ। ग्रहणं माऽतदर्थे भूद्वामदेव्यस्य नञ्स्वरे ॥१॥ इति भाष्यम्॥

---

विशेषार्थः अहोरात्रस्य अवान्तरविशेषे गम्यमानेऽपि अणो लुबर्थमित्यर्थः। श्रवणेति रात्रेस्संज्ञा अश्वत्थ इति मूहूर्तात्मकस्य पौषस्य असंज्ञायान्तु श्रावणी। अश्वत्थी रात्रिः। अश्वत्थ इत्यश्विन्याः पर्यायः संज्ञायां वृत्त्यर्थप्राधान्यं नेति बोध्यम्। विग्रहवाक्यन्त्वस्त्येव। अन्यथा अण एवाप्रसक्तेः कुतस्तल्लोपः ?

तिष्यपुनर्वसवीयम्। तिष्यश्च पुनर्वसू च तिष्यपुनर्वसू । तिष्यपुनर्वस्वोरिति बहुत्वे द्वित्वम्। ततो युक्तार्थे अणि परत्वात्तं बाधित्वा छः। छस्य ईयादेशः । तिष्यपुनर्वसू ईय ओर्गुणः अवादेशः तिष्यपुनर्वसवीय अह्नो विशेष्यस्य क्लीबत्वादस्यापि क्लीबत्वेन सोरम्। अविशेषे त्वद्य तिष्यपुनर्वसवीयमित्युदाहर्तव्यम् । न चात्र लुबविशेष इति छस्य लुप् शंक्यः। मध्येऽपवाद इव मध्ये लुबपि पूर्वस्मिन्नेव प्रवर्तते न तूत्तरत्रेति अण एवायं लुप् न तु भस्येति।

डिद्वा-डित्वे तु डिति परे भस्य टेर्लोपः। टेरिति सूत्रात्। औशनम्। टेरसो लोपः।

वामदेवात्-ड्यड्ड्यौ-ड्यत्-च-ड्यः-च-ड्यड्ड्यौ। ड्यत्प्रत्ययः ड्यप्रत्ययश्च ष्टुना ष्टुरिति ष्टुत्वेन तस्य ढः। डतयोरित्त्वेन प्रत्ययद्वयेऽपि य इति शिष्यते वामदेव-य-डित्त्वाट्टिलोपः-वामदेव्य। ननु यस्येति लोपेन अकारलोपे कृतेऽपि वामदेव्येति सिद्ध्यत्येवेति किं डित्त्वेनेति शंकायामाह-सिद्धे इत्यादि। यस्येति सूत्रविहितावर्णलोपेन वामदेव्यमिति रूपे सिद्धे-य-यत्-प्रत्ययौ किमर्थ सूत्रकृता डितौ कृतौ। डः इत् ययोस्तौ डितौ । इत्संज्ञकडवर्णकावित्यर्थः। उत्तरार्थस्तत्वबोधिन्यां स्पष्टः। ययतोः पृथग्विधानमपि स्वरार्थमेवेति बोध्यम्। वामदेवस्येत्यत्र वामदेव्यस्येति पठितव्यम्। वामदेव्यस्य अतदर्थे नञ् स्वरे ग्रहणम्माभूदित्यन्वयात्।

पाण्डुकंबलादिनिः।अत्र रथ इति नानुवर्तते । परिवृत इत्येव। पाण्डुकम्बलीविष्टरः।

**१२११। परिवृतो रथः** ।४।२।१०। वस्त्रैः परिवृतो वास्त्रो रथः। रथः किम्। वस्त्रेण परिवृतः कायः। समन्ताद्वेष्टितः परिवृत्त उच्यते। तेनेह न। छात्रैः परिवृतो रथः॥ **१२१२। पाण्डुकम्बलादिनिः** ।४।२।११। पाण्डुकम्बलेन परिवृतः पाण्डुकम्बली। पाण्डुकम्बलशब्दो राजास्तरणवर्णकम्बलस्य वाचकः। मत्वर्थीयेनैव सिद्धे वचनमणो निवृत्त्यर्थम्॥ **१२१३। द्वैपवैयाघ्रादञ्** ।४।२।१२। द्वीपिनो विकारो द्वैपम्। तेन परिवृतो द्वैपो रथः। एवं वैयाघ्रः॥ **१२१४। कौमारापूर्ववचने** ।४।२।१३। कौमारेत्यविभक्तिको निर्देशः। अपूर्वत्वे निपातनमिदम्। अपूर्वपतिं कुमारीं पतिरुपपन्नः कौमारः पतिः। यद्वा। अपूर्वपतिः कुमारी पतिमुपपन्ना कौमारी भार्या॥

---

ननु पण्डुकम्बलोऽस्यास्तीति अस्मिन्नस्तीति वा विग्रहे मत्वर्थीय इनिप्रत्यये कृते पाण्डुकम्बलीति रूपं सिध्यत्येवेति किमनेन सूत्रेणेत्यत आह–अणो निवृत्त्यर्थमिति परिवृत ईत्यर्थे औत्सर्गिकोऽण् स्यादिति तद्बाधनयेदमिति भावः। तदस्यास्त्यस्मिन्निति विग्रहे इनिस्स्यादेव मत्वर्थीयः। तेन परिवृत इत्यर्थे तु औत्सर्गिकोऽण् स्यादिति तद्बाधनायेदमिति यावत् । ननु रथे वाच्ये सत्येव परिवृत इत्यण् विधीयते इति न त्वन्यत्रेति विधानाभावादेव न स्यादण् इति चेत् सत्यम्। पाण्डुकम्बली रथः । अत्रैव प्राप्तिरणो बोध्या। तस्यापि वारणायेदमावश्यकमिति। यद्वा रथ इति चारु वर्तते। तेन विष्टरादौ वाच्ये मत्वर्थीयेनिरेव इति।

द्वैपेति। परिवृतो रथ इत्येव सूत्रे तस्य विकार इत्यण् इत्याह । द्वीपिनो विकार इति विशेषेण आ जिघ्रतीति व्याघ्रः। घ्रा–गन्धोपादाने आङ्पूर्वत्वे तु प्रकृते हिंसार्थः। ततोऽणि नय्वाभ्यामित्यैच्। व्याघ्रस्य विकारो वैयाघ्रं चर्म।

कौमारेति–अपूर्ववचने अपूर्वत्वे वाच्ये कौमारेति निपात्यते। इदञ्चापूर्ववाचकत्वं प्रकृतिभूतायाः कुमार्या एव। तच्चापूर्वत्वं न स्वतः, किन्तु विशेषणीभूतपतिद्वारा स्वस्य स्वतोऽपूर्वत्वमसम्भवीति हेतोः प्रत्ययस्त्वण् द्वितीयान्तप्रकृतेरुपयन्तरि प्रथमान्तात्तु स्वार्थे भवति इत्युदाहरति। अपूर्वेत्यादिना। कुमारीमुपपन्न इत्येव विग्रहः। अपूर्ववचनत्वद्योतनाय अपूर्वपतिरिति विशेषणम्। विधिवदुपयन्तर्येव प्रत्ययः। न तु बलादुद्वहितरि (अपहर्तरि) चोरादाविति द्योतयितुं पतिरित्युपपन्नविशेषणम्। तेन यथाकथञ्चिदपूर्वपतिं कुमारीं प्राप्ते कौमार इति निपात्यते इति सिद्धम्। इत्थं द्वितीयान्तादुपयन्तर्यणमुदाहृत्य प्रथमान्तात्स्वार्थे तमाह कौमारीति कुमार्येव। कौमारीपतिमुपपन्ना कुमारी कौमारी इति तु फलितार्थपरतया विग्रहः कथञ्चिन्नेयः। यद्वा अपूर्ववचने प्रथमान्तात्कुमारीशब्दादण् स्यात् पतिमुपपन्नेत्यर्थे इति वाच्यम्। अस्मात्सूत्रादेवंविधविशेषार्थलाभो व्याख्यानादेव तथाविधप्रयोगदर्शनाद्वा

**१२१५। तत्रोद्धृतममत्रेभ्यः** ।४।२।१४। शराव उद्धृतः शाराव ओदनः। उद्धरतिरिहोद्धरणपूर्वके निधाने वर्तते। तेन सप्तमी। उद्धृत्य निहित इत्यर्थः॥ **१२१६। स्थण्डिलाच्छयितरि व्रते** ।४।१।१५। तत्रेत्येव। समुदायेन चेद्व्रतं गम्यते। स्थण्डिले शेते स्थाण्डिलो भिक्षुः॥ **१२१७। संस्कृतं भक्षाः** ।४।२।१६। सप्तम्यन्तादण् स्यात्संस्कृतेऽर्थे यत्संस्कृतं भक्षाश्चेत्ते स्युः। भ्राष्ट्रे संस्कृता भ्राष्ट्रा यवाः। अष्टसु कपालेषु संस्कृतोऽष्टाकपालः पुरोडाशः॥ **१२१८। शूलोखाद्यत्** ।४।२।१७। अणोऽपवादः। शूले संस्कृतं शूल्यं मांसम्। उखा पात्रविशेषः। तस्यां संस्कृतं उख्यम्॥ **१२१९। दध्नष्ठक्** ।४।२।१८। दध्नि संस्कृतं दाधिकम्॥ **१२२०। उदश्वितोऽन्यतरस्याम्** ।४।२।१९। ठक् स्यात्पक्षेऽण्॥ **१२२१। इसुसुक्तान्तात्कः** ।७।३।५१। इस् उस् उक् त् एतदन्तात्परस्य ठस्य कः स्यात्। उदकेन श्वयति वर्धते इत्युदश्वित्। तत्र संस्कृतः औदश्विकः। औदश्वितः।

---

(एवंविधार्थे कौमार इति कौमारी इति च प्राचां प्रयोगदर्शनादिति तदर्थः)।

शरावे उद्धृतः । नन्वत्र कथं सप्तमी शरावस्यानधिकारत्वादत आह निधाने इति। निधानक्रियाया अधिकरणत्वात्सप्तमी इति भावः। उद्धृतिक्रियायास्तु शरावोपदानम् स्यादविधित्वेनेति पञ्चमी प्रसज्यते। तस्मात्सूत्रे उद्धृतमित्यस्य उद्धृत्य निहितमित्यर्थो वाच्यः । शरावे उद्धृत इत्यस्य फलितार्थमाह उद्धृत्य निहित इति। अमत्रं पात्रं शरावादिकम्।

समुदायेन प्रकृतिप्रत्ययवैशिष्टयेन स्थाण्डिलः। स्थण्डिलशयनं व्रतमत्र गम्यते । भिक्षोरिदं व्रतमिति दर्शयितुं भिक्षुरिति।

यत्संस्कृतमिति सामान्ये नपुंसकम् ये (सप्तम्यन्ते)संस्कृता इत्यर्थः। ये संस्कृताः ते भक्षाः, भक्षितुं योग्याः स्युर्यदि भक्ष्यन्त इति भक्षाः। भ्राष्ट्रमम्बरीषः तत्राधिकरणे संस्कृता लाजाः भ्राष्ट्राः। भक्षाः किम्। पात्रे सस्कृतास्समिधः।

शूल्यम्। शूले निक्षिप्य अग्निना तप्तमित्यर्थः।

उदश्वित् तक्रम्। ततस्संस्कृतार्थे विहितस्य ठकः ठस्येक इतीकादेशे प्राप्ते तं बाधित्वा तान्तलक्षणः कः। औदश्वित्कः।

क्षैरेयी-क्षीरे संस्कृता यवागूः क्षैरेयी। टिड्ढेति ङीप्।

प्रज्ञादेरिति । प्रज्ञादिभ्यश्चेति प्रज्ञादिगणस्य आकृतिगणत्वेन आग्रहायनाशब्दादण्। अश्वत्थः निपातनाल्लुप्- लुपि युक्तवद्भावात्पुंस्त्वम्।

इसुसोः प्रतिपदोक्तयोर्ग्रहणान्नेह। आशिषा चरति आशिषिकः। उषा चरति औषिकः॥ **दोष उपसंख्यानम्**॥ दोर्भ्यां चरति दौष्कः॥ **१२२२। क्षीराड्ढञ्** ।४।२।२०। अत्र संस्कृतमित्येव संबध्यते नतु भक्षा इति। तेन यवाग्वामपि भवति। क्षैरेयी॥ **१२२३। सास्मिन्पौर्णमासीति** ।४।२।२१। इतिशब्दात्संज्ञायामिति लभ्यते। पौषी पौर्णमासी अस्मिन् पौषो मासः॥ **१२२४। आग्रहायण्यश्वत्थाट्ठक्** ।४।२।२२। अग्रे हायनमस्या इत्याग्रहायणी। प्रज्ञादेराकृतिगणत्वादण्। 'पूर्वपदात्संज्ञायाम्-८५७' इति णत्वम्। आग्रहायणी पौर्णमासी अस्मिन् आग्रहायणिको मासः। अश्वत्थेन युक्ता पौर्णमासी अश्वत्थः। निपातनात्पौर्णमास्यामपि लुप्। आश्वत्थिकः॥ **१२२५। विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः** ।४।२।२३। एभ्यष्ठग्वा। पक्षेऽण्। फाल्गुनिकः। फाल्गुनो मासः। श्रावणिकः। श्रावणः। कार्तिकिकः। कार्तिकः। चैत्रिकः। चैत्रः॥ **१२२६। साऽस्य देवता** ।४।२।२४। इन्द्रो देवताऽस्येति ऐन्द्रं हविः। पाशुपतम्। बार्हस्पत्यम्। त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता मन्त्रस्तुत्या च। ऐन्द्रो मन्त्रः। आग्नेयो वै ब्राह्मणो देवतयेति तु शैषिकेऽर्थे **सर्वत्राग्नि-इति ढक्**॥ **१२२७। कस्येत्** ।४।२।२५। कशब्दस्य इदादेशः स्यात्प्रत्ययसन्नियोगेन। 'यस्य-(सू.३११)' इति लोपात्परत्वादादिवृद्धिः। को ब्रह्मा देवतास्य कायं हविः। श्रीर्देवतास्य श्रायम्॥

---

सास्य देवता। सेति प्रथमान्तात्। अस्येति षष्ठ्यन्तार्थो प्रत्ययास्स्युः। प्रथमान्तोऽर्थश्चेद्देवतापदार्थमाह-उद्देश्यविशेष इति। यमुद्दिश्य हविरादिकं द्रव्यं त्यज्यते अग्न्यादौ सः देवतेत्यर्थः । मन्त्रः यं स्तौति स च देवतेत्याह मन्त्रस्तुत्या चेति मन्त्रेण स्तवनीयेत्यर्थः। तथा च इन्द्रो देवता अस्य हविषः ऐन्द्रं हविः। इन्द्रो देवतास्य मन्त्रस्य ऐन्द्रो मन्त्रः इति चोभयं सिद्ध्यति । ननु आग्नेयो वै ब्राह्मण इत्यत्र सास्य देवते कथमग्नेर्ढक्। ब्राह्मणस्य अत्यज्यमानद्रव्यत्वात् अमन्त्रत्वाच्च अत आह शैषिकेऽर्थे इति । अग्नेरयमाग्नेय इति शैषिको ढक्। सर्वत्राग्नीति सूत्रेणेति भावः।

कस्येत्। सास्य देवतेति प्रथमान्तात् कशब्दाद्यण् विहितः तत्सन्नियोगेन कस्य इदादेशश्च स्यात् । अलोन्त्यपरिभाषया अन्त्यस्यावर्णस्य इकारादेशः। कस्येति किं शब्दस्य षष्ठ्यन्तस्य नात्र ग्रहणम्। सास्य देवतेत्यधिकारेण देवतावाचकस्यैव प्रथमान्तस्य ग्रहीतुमुचितत्वात्। किंशब्दो न देवतावाचक इति षष्ठ्यन्तस्य कशब्दस्यैवेह ग्रहणम्। कशब्दादणि क आ इति स्थिते कस्येत्-कि-अ-वृद्धिः-कै-अ-आयादेशः-कायम्। ननु

क–अ–इत्यस्यामवस्थायां यस्येति लोपः प्राप्नोतीत्यत आह–पदत्वादादिवृद्धिरिति । ननु क–अ–अत्र–कस्य इत्वं प्राप्नोति यस्येति लोपः प्राप्नोति परत्वाल्लोप एव स्यादिति चेन्मैवम्। लोपे कृते इत्वविधेरनवकाश इति विधानसामर्थ्यादित्त्वमिति इत्त्वविधानानन्तरन्तु पुनः यस्येति इकारस्य लोपः प्राप्तः । तद्धितेष्विति वृद्धिः प्रप्ता उभयोः परत्वाद्वृद्धिः। ननु विधानासामर्थ्यादेव इकारस्य नलोप इति वाच्यभ्। किमिति परत्वाद्वृद्धिरित्युक्तम् इति चेत्–सत्यम्। श्रायमित्यत्र अवश्यं वक्तव्यस्य परत्वाद्वृद्धिरित्यस्य वचनस्य योग्यत्वादिहाप्युपन्यास इति। (उभयत्र उभयथा वचने गौरवमिति तदभावरूपं लाघवमेव योगत्वम्) विधानसामर्थ्यञ्चात्र इत्वविधानात्प्रागेव लोपे कर्तव्ये इत्त्वं विधाय पश्चाल्लोपकरणमिति यत् किमत्र फलमित्वविधानेनेति इत्वविधानस्य वैयर्थ्यात्सामर्थ्यम्। अस्मिन् शास्त्रे व्यर्थ हि बलवत्तरम् । ननु इत्त्वात्प्रागेव लोपः कर्तव्यः। न चेत्त्वस्यानवकाशः ककारस्येदादेशोऽभ्युपगम्यत इति। अयं भावः। क–अ–इति स्थिते परत्वाल्लोपे–क्–अ, इदानीमिदादेशः ककारस्येति, इति चेन्मैवम्। अलोन्त्यपरिभाषया कस्येदिति सूत्रस्य ककारोपर्यकारस्य इकारादेश इत्यर्थात्। अन्यथा कस्येश् इत्येव ब्रूयात्। शित्वात्सर्वादेशलोपप्रक्रियाभावरूपलाघवसद्भावात्। अभीप्सितस्य इवर्णशेषस्य लाभाच्च। अयं भावः क–अ लोपः क् अ इदादेशः इ–अ–इति प्रक्रियातः क अ इशादेशः इ–अ–इति प्रक्रियालाघवाच्छ्रेयसि इति। न च तत्कालार्थं तपरकरणमावश्यकमिति वाच्यम्। इकारस्य ईकारस्य वा अणि वृद्धिरैकारादेश एव इति विशेषाभावेन तपरकरणस्य अनावश्यकत्वात् । ननु इश् इति सर्वादेशे इ–अ–इति स्थिते यस्येति लोपस्स्यात्। इदादेशे तु लोपस्य प्रथमतः कृतकार्यत्वात् न पुनः प्रवृत्तिरिति चेत्नैष दोषः। लोपात्परत्वाद्वृद्धिरेव स्यादिति। एतावता इश् इत्यसूत्रयित्वा इदिति सूत्रणमेव इत्त्वात्प्राक् यस्येति लोपाप्रवृत्तौ ज्ञापकमिति फलितम्। ज्ञापनानन्तरन्तु अलोन्त्यपरिभाषया ककारोपरि यकारस्य इदादेशः। इदादेशानन्तरं न यस्येति लोपः। लोपे सति विहितस्य इदादेशस्य वैयर्थ्यात् इति सिद्धम्। वस्तुतस्तु क अ इति स्थिते ककारोपरि यकारस्य इदादेशः। यस्येति लोपः तद्धितेष्विति वृद्धिः इत्येतत्त्रयं प्राप्नोति । इदादेशात्परमपि लोपं बाधित्वा ततोऽपि परत्वाद्वृद्धौ प्राप्तायां विधानसामर्थ्यादिदादेशः (वृद्धौ कृतायां इदादेशस्य अनवकाशत्वेन वैयर्थ्यात्) कि–अ–इदानीं पुनर्लोपे प्राप्ते तं बाधित्वा परत्वाद्वृद्धिः कै–अ–आयादेशः कोऽयं इति। इदिति तपरकरणन्तु स्पष्टार्थमुच्चारणार्थं चेति बोध्यं फलाभावात्। श्रायम्। श्र–अ–इति स्थिते यस्येति लोपात्परत्वादादिवृद्धिः,

**१२२८। शुक्राद्धन्** ।४।२।२६। शुक्रियम्॥ **१२२९। अपोनप्त्रपान्नमृभ्यां घः** ।४।२।२७। अपोनप्त्रियम्। अपान्नप्त्रियम्। अपोनपात् अपान्नपाच्च देवते। प्रत्ययसंनियोगेन तूक्तं रूपं निपात्यते। अतएवापोनपाते अपान्नपातेऽनुब्रूहीति प्रैषः॥ **१२३०। छ च** ।४।२।२८। योगविभागो यथासंख्यनिवृत्त्यर्थः। अपोनप्त्रीयम्। अपान्नप्त्रीयम्॥ **शतरुद्राद्घश्च**॥ चाच्छः। शतं रुद्रा देवता अस्य शतरुद्रियम्। शतरुद्रीयम्। घच्छयोर्विधानसामर्थ्यात् 'द्विगोर्लुगनपत्ये १०८०' इति न लुक्॥ **१२३१। महेन्द्राद्घाणौ च** ।४।२।२९। चाच्छः। महेन्द्रियं हविः। माहेन्द्रम्। महेन्द्रीयम्॥ **१२३२। सोमाट्ट्यण्** ।४।२।३०। सौम्यम्। टित्वान्ङीप्। सौमी ऋक्॥

---

आयादेशः श्रायम्। न चान्तरङ्गत्वाल्लोप इति वाच्यम्। भस्य लोप इति भत्वस्य बह्वर्थाश्रयत्वेन लोपस्य बहिरंगत्वात् ।

शुक्राद्धन् । सास्य देवतेत्यर्थे शुक्रशब्दाद्धन् स्यात्। औत्सर्गिकस्याणोपवादः। अत एव प्रत्ययसन्नियोगे एव अपो नपादित्यस्य अपो नप्तृ इति अपान्नपादित्यस्य अपान्नप्तृ इति च रूपयोर्निपातनम् । न तु तदाभावे (तदभावे) इति उक्तत्वादेव इत्यर्थः। प्रैषेचतुर्थ्यन्ताविमौ प्रत्ययाभावान्न नप्त्रादेशाभाव इत्यर्थः । प्रैषो मन्त्रविशेषः। कयोश्चिदेव तयोसंज्ञाशब्दावमू-अपोनपात् देवता अस्येत्यपोनप्त्रियम्।

छ च-योगविभागाभावे अपोनप्तुर्घः । अपान्नप्तुश्छः यथासंख्येन स्यादिति भावः। चकारपूर्वसूत्रोक्तानुकर्षणार्थः। शतरुद्रीयम् । ननु तद्धितार्थेति । संख्यापूर्वस्य द्विगुत्वेन अनपत्ययोश्छघयोर्लुक् स्यादत आह विधानसामर्थ्यादिति। शतरूद्राद्घश्चेति वार्तिकं व्यर्थ स्यादिति भावः। ननु लोपेऽपि शतरुद्रदेवताकहविरर्थबोधकत्वाय वार्तिकमावश्यकमिति वाच्यम्। सास्य देवतेत्यौत्सर्गिकेनाणैव तदर्थसिद्धेरिति। अयं भावः। शतं रुद्राश्शतरुद्रा इति समासाद्धविरर्थबोधासम्भवेन तद्धित आवश्यकः। स च औत्सर्गिकोऽणस्त्येवेव । शतं रुद्रा अस्येति विग्रहे शतरुद्रशब्दादणि तस्य द्विगोर्लुगिति लुकि, शतरुद्रेति तद्धितान्तोयं हविरर्थबोधको भवत्येवेति किमर्थं घचयोर्विधानमिति वार्तिकं व्यर्थं सत् नात्र लुगिति ज्ञापयतीति भावः।

सोमाट्ट्यण् । सोमात् टयण् इति छेदः। ष्टुत्वेन तकाररस्य टकारः। टणयोरित्वेन लोपे य इति शिष्यते । सोमय-यस्येति लोपः-वृद्धिः। सौम्य-ङीप्-यस्येति लोपः। न च सकृद्गतिन्यायविरोधः प्रकृत्यकारस्य पुराप्रत्ययाकारस्याधुनेति लक्ष्यभेदात्-यलोपः। सौमी। । सोमो देवतास्या इति सौमी ऋक् मन्त्र इत्यर्थः । हविषि सौम्यं णित्त्वं वृद्ध्यर्थं, टित्वन्तु ङीबर्थम् । न च यण् इत्येवास्तु अणन्तत्वादेव ङीब् स्यादिति

**१२३३। वाय्वृतुपित्रुषसो यत्** ।४।२।३१। वायव्यम्। ऋतव्यम्॥ **१२३४। रीङ्ऋतः** ।७।४।२७। अकृद्यकारेऽसार्वधातुके यकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः स्यात्॥ 'यस्येति च ३११'। पित्र्यम्। उषस्यम्॥ **१२३५। द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च** ।४।२।३२। चाद्यत्। द्यावापृथिवीयम्। द्यावापृथिव्यम्। शुनासीरीयम्। शुनासीर्यम्॥ **१२३६। अग्नेर्ढक्** । ४।२।३३। आग्नेयम्॥

---

वाच्यम्। न ह्ययमणप्रत्ययान्तः । किन्तु यण्प्रत्ययान्त इति ङीप् न स्याट्टित्त्वाभावे। न च यण्णन्तेऽप्यण्णन्तत्वमस्तीति वाच्यम्। अर्थवद्ग्रहणपरिभाषया यण्गता ङीबनुदयात्।

वायुश्च ऋतुश्च पिता च उषश्च तेषां समाहारः वाय्वृतुपित्रुषस्–वायुऋतु, इको यण् वाय्वृतु–पितृ–उषस् इको यण् पित्रुषस्–) तस्य यत्प्रत्ययस्स्यात्सास्यदेवतेत्यर्थे–वायु यत् –ओर्गुणः–अवादेशः वायव्यः–वायुर्देवस्सास्येति वायव्यम् हविः। एवं ऋतव्यम् ऋतुशब्दस्तदभिमानिदेवतापरः ।

रीङृतः। अत्र अयङ्यिक्ङितीति सूत्रात् यि "अकृत्सार्वधातुकयोर्दीर्घ" इति सूत्रात् अकृत्सार्वधातुकयोः च्वौ चेति सूत्रं अनुवर्तन्तेऽयि इति विशेष्यं तेन तदादिविधिर्न "अकृत्सार्वधातुकयोरित्यत्र" नञ् द्वन्दावयवद्वयेऽप्यन्वेति । तेन अकृत् असार्वधातुकः च तयोरित्यर्थः। द्विवचनन्तु विशेषणापेक्षया विशेष्यस्य यि इत्यस्य एकत्वात् अकृतिअसार्वधातुके इति प्रत्येकं यि इत्यस्य विशेषणम्। कृन्न भवतीत्यकृत्। तस्मिन्नकृति। यि इति यकारस्य सप्तमी । यकारे परतः असार्वधातुके यकारे परतश्च च्वौ च परतः ऋत इत्यङ्गस्य अधिकृतस्य विशेषणम्। तेन तदन्तविधिः। ह्रदन्तस्याङ्गस्य रीङादेशस्स्यात्। ङिच्चेत्यन्तादेशः, अन्तस्य ऋवर्णस्य भवति रीइत्यादेश इत्यर्थः। तिङ्शित्सार्वधातुकमिति तिङन्तेषु सार्वधातुकसंज्ञां वक्ष्यति यथा–पितरो देवताः अस्येति पित्र्यं कव्यम्। पितृव्य इति स्थिते नायं कृद्यकारः। वाय्वृत्विति यत्प्रत्ययस्य तद्धितत्वेन तद्धितयकारत्वात् । न च कृदतिङिति तिङ्भिन्नस्य सर्वस्य कृत्त्वात् कृदेवायमिति वाच्यम्। सन्निहिते धात्वधिकारे ये तिङ्भिन्नाः प्रत्ययास्तेषां कृत्त्वस्य विहितत्त्वेन तद्धितानां धात्वधिकारस्य असन्निहितानामकृत्वात्। नाप्ययं सार्वधातुकः अतिङ्त्वात् अशित्त्वाच्च। अतः ये परे पितृ इत्यस्य अन्तावयवस्य ऋवर्णस्य रीइत्यादेशः पित्रीय। यस्येति च इति ईकारलोपः पित्र्य–उषस्यम्। उषस्–तदभिमानिदेवता अस्येति उषस्यं हविः। गृहमेधशब्दोऽपि देवविशेषवाचक एव।

मासप्रावृडादयो वृत्तिविषये तत्तदभिमानिनीं देवतां ब्रुवन्ति । अन्यथा सास्य देवतेत्यस्याप्रवृत्तेः।

**१२३७। कालेभ्यो भववत्** ।४।२।३४। मासिकम्। प्रावृषेण्यम्॥ **१२३८। महाराजप्रोष्ठपदाट्ठञ्** ।४।२।३५। माहाराजिकम्। प्रौष्ठपदिकम्॥ **१२३९। देवताद्वन्द्वे च** ।७।३।२१। अत्र पूर्वोत्तरपदयोराद्यचो वृद्धिः स्यात् ञिति णिति किति च परे। आग्निमारुतम्॥ **१२४०। नेन्द्रस्य परस्य** ।७।३।२२। परस्येन्द्रस्य वृद्धिर्न स्यात्। सौमेन्द्रः। परस्य किम्। ऐन्द्राग्नः॥ **१२४१। दीर्घाच्च वरुणस्य** ।७।३।२३। दीर्घात्परस्य वरुणस्य न वृद्धिः। ऐन्द्रावरुणम्। दीर्घात्किम्। आग्निवारुणीमनड्वाहीमालभेत॥ **तदस्मिन्वर्तत इति नवयज्ञादिभ्य उपसंख्यानम्**॥ नावयज्ञिकः कालः। पाकयज्ञिकः॥ **पूर्णमासादण् वक्तव्यः**॥ पूर्णो मासोऽस्यां वर्तते इति पौर्णमासी तिथिः।

---

देवताद्वन्द्वे च । हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेति सूत्रात्पूर्वपदस्य चेत्यत्रानुवर्तते। मृजेर्वृद्धिरित्यतो वृद्धिरिति पूर्वपदस्य चेति चादुत्तरपदस्य अचोञ्णिति किति च "तद्धितेष्वचामादेरि"ति सूत्रत्रयं चात्र संबध्नाति। तदेतत्सर्वमभिप्रेत्याह अत्रेत्यादि । अग्नि मरुतौ देवते अस्येति अग्निमारुतं हविः। औत्सर्गिकोऽण्मारुतशब्देन सः द्वन्द्वे तु तद्धितेष्वित्यादिवृद्ध्यैव अभीष्टं रूपं सिद्ध्यतीति बोध्यम्।

सोमेन्द्रौ देवते अस्य मन्त्रस्येति सौमेन्द्रः। औत्सर्गिकोऽण् परस्याप्यादिवृद्धौ सौमैन्द्र इति स्यात्

ऐन्द्रावरुणम् । इन्द्रश्च वरुणश्च इन्द्रावरुणौ । देवताद्वन्द्वे चेत्यानङ् । इन्द्रावरुणौ देवते अस्य ऐन्द्रावरुणं हविः। आग्निवारुणीम्। अग्निश्च वरुणश्च अग्निवरुणौ । ईदग्नेस्यामवरुणयोरिति ईत्वम् । अग्निश्च वरुणश्च देवते अस्येति विग्रहे सुब्लुकि अग्निवरुण–अण् इति स्थिते, ईदग्नेरिति ईत्वं बाधित्वा देवताद्वन्द्वे चेत्युभयपदवृद्धिः। आग्निवारुण–अ–यस्येति लोपे आग्निवारुणं। टिड्ढाणेति ङीप् आग्निवारुण इत्यवस्थायां ईदग्नेरितीत्वे प्राप्ते, तं बाधित्वा इद्वृद्धाविति इदादेशः। ननु इन्द्रवरुण–अण् इत्यत्रापि आनङं बाधित्वा प्रथमत एव उभयपदवृद्धिः। पश्चादानङ् इति ऐन्द्रावारुणमित्येव स्यादिति चेत् सत्यं । चिन्त्यमिदं उदाहरणम्। तथा हि आनङमेव बाधते वृद्धिः न त्वीत्वम्। ईत्वस्य प्रतिपदोक्तत्वेन अन्तरंगत्वादिति यद्युच्यते तर्हि अग्निवारुणमिति न स्यात्। ऐन्द्रावारुणमिति स्याच्च। ईत्वे कृते दीर्घाच्च। वरुण्स्येति– वरुणस्य वृद्ध्यभावेन

वृद्धिमदुत्तरपदपरकत्वाभावादग्नेरिदादेशो न स्यात्। आग्निवरुणमिति स्यात्। आनङं बाधित्वा प्रथमत एव वृद्धौ पश्चादानिनि ऐन्द्रावरुणमिति स्यात्। अथ आनङ् च ईच्च आवह्वाश्रयत्वेनान्तरङ्गत्वाद्वृद्धिं बाधते इति यद्युच्येत तर्हि आग्निमारुतम्। आग्निवारुणमिति न सिद्ध्येत्। किञ्च देवताद्वन्द्वे चेत्युभयपदवृद्धिरानङमीत्वञ्च बाधित्वा इति यदुक्तमिद्वृद्धाविति सूत्रे मूले तद्व्याहन्येत। अथ यदि देवताद्वन्द्वे चेति वृद्धिर्नानङं बाधते ईदग्नेरितीत्वन्तु बाधत एव इत्युच्येत तर्हि नात्र विनियामको हेतुरस्ति आग्नीवारुणमिति न सिद्ध्येदिति प्रागेवोक्तञ्च। तस्माच्चिंन्त्यम् इति। इन्द्रा इति काचन देवता स्त्री। सा च वरुणश्च देवते अस्येति विग्रहे तु ऐन्द्रावरुणमित्युदाहरणं संगच्छते। सा तु देवता चिन्त्या। वस्तुतस्तु ऐन्द्रावरुणमिति पाठस्सुगमः। वरुणो भगवान्विष्णुः। इन्दिरासाहचर्यात्। विष्णोस्सर्वशब्दवाच्यत्वात् सर्वान्तरात्मत्वाद्वा। इन्दिरावरुणौ देवते अस्येति ऐन्दिरावरुणम्। दीर्घात्परत्वान्नोत्तरपदवृद्धिः इति। अनड्वाहिम्। जातिलक्षणः पुंयोगलक्षणो वा ङीष् न प्राप्नोतीति गौरादिषु पठितमिदम्। अत्र गुरवः। ऐन्द्रावरुणमित्येव पाठः। परिहृत्यापवादविषयं तत उत्सर्गः इत्यादिस्थलं विहाय अन्यत्र इन्द्र–वरुण–अण्–इत्यादिषु उत्सर्गः सामान्यशास्त्रं देवताद्वन्द्वे चेत्यानङ्–ईदग्नेरितीत्वम् च प्रवर्तते इति इन्द्र–वरुण–अण् इत्यत्र आनङः प्रवृत्तौ दीर्घात्परत्वात् नोत्तरपदवृद्धिः। अग्नि–वरुण–अण् इत्यत्र तु (ईत्वात्परीभूतायां देवताद्वन्द्वे चेति वृद्धौ सत्यामिद्वृद्धावित्यस्य प्रवृत्तिरस्तीति) इद्वृद्धावित्यपवादविषयत्वं वर्तते इति उत्सर्गस्य ईत्वस्य प्रवृत्तिरेव नास्तीति दीर्घात्परत्वाभावेन उत्तरपदवृद्धिः।आग्निवारुणम्। अत्रेदं बोध्यम्। देवताद्वन्द्वे चेत्यानङ् ईदग्नेरिति च उत्सर्गः इद्वृद्धाविति तदपवादः। आग्नेरिद्विधानेन अग्निपूर्वके द्वन्द्वे ञिति णिति किति तद्धिते परत एव इद्वृद्धिप्रवृत्तियोग्यत्वं वर्तते इति तद्धितान्तः। अग्निपूर्वकद्वन्द्व एव इद्वृद्धिविषयः इति तत्र नोत्सर्गप्रवृत्तिः। न च वृद्धौ कृतायामेव इद्वृद्धिविषयत्वम्। वृद्धेः प्रागेवान्तरङ्गत्वादीदादेशे वृद्धिरेव नास्ति । दीर्घात्परत्वादुत्तरपदस्येति। अग्निवरुण अण् इत्ययं नेद्वृद्धिविषय इति वाच्यम्। इद्वृद्धिविषयत्वंनाम इद्वृद्धिसम्भावनायोग्यत्वमेव। अत्र उत्तरपदवृद्धिर्यदि स्यात्तर्हि इद्वृद्धिस्स्यादित्येष सम्भावना अत्रास्तीति । इन्द्रवरुण अण् इत्यत्र तु न सा सम्भावना।

तदस्मिन्निति पूर्णमासादिति च महाराजसूत्रस्थं वार्तिकम्। तदस्मिन् वर्तत इत्यर्थे नवयज्ञादिभ्यष्ठञ् वक्तव्य इति तदर्थः। यद्वा अस्मिन् वर्तत इत्यर्थे तदिति प्रथमान्तेभ्यः नवयज्ञादिभ्यष्ठञ् वक्तव्य इति। नवयज्ञा अस्मिन् काले सन्तीति नावयज्ञिकः

**१२४२। पितृव्यमातुलमातामहपितामहाः** ।४।३।२६। एते निपात्यन्ते॥ **पितुर्भ्रातरि व्यत्**॥ पितुर्भ्राता पितृव्यः॥ मातुर्डुलच्॥ मातुर्भ्राता मातुलः। **मातृपितृभ्यां पितरि डामहच्**॥ मातुः पिता मातामहः। पितुः पिता पितामहः॥ मातरि षिच्च॥ मातामही। पितामही॥ **अवेर्दुग्धे सोढदूसमरीसचो वक्तव्याः**॥ सकारपाठसामर्थ्यान्न षः। अविसोढम्। अविदूसम्। अविमरीसम्॥ **तिलान्निष्फलात्पिञ्जपेजौ**।। तिलपिञ्जः। तिलपेजः। वन्ध्यस्तिल इत्यर्थः॥ पिञ्जश्छन्दसि डिच्च॥ तिल्पिञ्जः॥ **१२४३। तस्य समूहः** ।४।२।३७। काकानां समूहः काकम्। बाकम्॥ **१२४४। भिक्षादिभ्योऽण्**।४।२।३८। भिक्षाणां समूहो भैक्षम्। गर्भिणीनां समूहो गार्भिणम्। इह भस्याढ इति पुंवद्भावे कृते॥

---

पाकयज्ञोऽस्मिन् देशे काले वाऽस्तीति पाकयज्ञिकः।

पूर्णमासात्प्रथमान्तादस्मिन् वर्तत इत्यर्थे अण् स्यादिति वार्तिकार्थः। तदस्मिन् वर्तत इत्यस्य अत्रानुवर्तनात्, पौर्णमासीमासशब्दोऽत्र लक्षणया तद्व्यवहारहेतुं चन्द्रमभिधत्ते । चान्द्रमानेन चन्द्रस्यैव हेतुत्वात् संपूर्णचन्द्रवतीत्यर्थः।

पितृव्येति । एतेष्वविशेषेण सूत्रकृता निपातितेषु विशेषार्थं व्यवस्थार्थं वार्तिकानि पितुर्भ्रातरि व्यदित्यादीनि पठ्यन्ते। मातुर्डुलच् इति वार्तिके पितुर्भ्रातरीति वार्तिकाद्भ्रातरीत्यनुवर्तते । डुलचो डित्त्वं टिलोपार्थम्। अदन्तोऽयमादेशः। डामवाचि डित्त्वं च टिलोपाय आमह इति शिष्यते। मातृ आमहि टेः ऋवर्णस्य लोपः मातामह (अत्र प्रत्ययेन भ्रात्राद्यर्थोभिधीयत इति बोध्यम्। मातरि षिच्च । अत्र मातृपितृभ्यां डामहजित्यनुवर्तते। मातृपितृभ्यां डामहच् स्यात् मातरि वाच्यायां स च डामहच् षित् स्यात्। डामहचि षित्वस्यातिदेशोऽयं ङीषर्थः। षिद्गौरादिभ्यश्चेति ङीष् ।

अवेः षष्ठ्यन्तादविशब्दाद्दुग्धेऽर्थे सोढादयः प्रत्ययाः स्युः। अवेर्दुग्धं अविसोढमित्यादि दुग्धं क्षीरम् ।

तिलादिति। तिलात्पिञ्जपेजौ स्तः। प्रत्ययसन्नियोगेन तिलस्य निष्फलत्वे वाच्ये इत्यर्थः। यद्वा तिलात्स्वार्थे पिञ्जपेजौ स्तः तच्चेत्तिलं निष्फलमिति।

तस्येति षष्ठ्यन्तात्समर्थात् समूहार्थे प्रत्ययास्स्युरिति सूत्रार्थः। काकानां समूहः काकम् औत्सर्गिकोऽण्। बकानां समूहो बाकम्।

शत्रन्तात् यौतेश्शत्रन्तात् ङीपि युवती इति यूनस्तिरिति सूत्रे मूले उक्तम्। युवतिशब्दादञि भस्याढ इति पुंवद्भावेन ङीपः निवृत्तिः वृद्धिः यौवतम्। पूर्वरूपे तिरिति स्त्रीप्रत्ययः ।

**१२४५। इनण्यनपत्ये** ।६।४।१६४। अनपत्यार्थेऽणि परे इन् प्रकृत्या स्यात्। तेन 'नस्तद्धिते ६७९' इति टिलोपो न। युवतीनां समूहो यौवनम्। शत्रन्तादनुदात्तादेरञि यौवतम्॥ **१२४६। गोत्रोक्षोष्ट्रोरभ्रराजन्यराजपुत्रवत्समनुष्याजाद्वुञ्** ।४।२।३९। एभ्यः समूहे वुञ् स्यात्। लौकिकमिह गोत्रं तच्चापत्यमात्रम्॥ **१२४७। युवोरनाकौ** ।७।१।१। यु वु एतयोरनुनासिकयोः क्रमादन अक एतावादेशौ स्तः। ग्लुचुकायनीनां समूहो ग्लौचुकायनकम्। औक्षकमित्यादि। 'आपत्यस्य च-१०८२' इति यलोपे प्राप्ते॥ प्रकृत्याऽके राजन्यमनुष्ययुवानः॥ राजन्यकम्। मानुष्यकम्॥ वृद्धाच्चेति वक्तव्यम्॥ वार्धकम्॥ **१२४८। केदाराद्यञ्च** ।४।२।४०। चाद्वुञ्। कैदार्यम्। कैदारकम्॥ **गणिकाया यञिति वक्तव्यम्**॥ गाणिक्यम्॥ **१२४९। ठञ्कवचिनश्च** ।४।२।४१। चात्केदारादपि। कवचिनां समूहः कावचिकम्। कैदारिकम्॥ **१२५०। ब्राह्मणमाणववाडवाद्यत्** ।४।२।४२। ब्राह्मण्यम्। माणव्यम्। वाडव्यम्॥ **पृष्ठादुपसंख्यानम्**॥ पृष्ठ्यम्॥

---

अस्मिंस्तु ईकारमात्रमेव इति भेदः

गोत्रान्तात् उक्षादिभ्यश्च समूहे वुञ् स्यात्। अणोपवादः ।

गोत्रस्योदाहरणम्। ग्लैचुकायनकम् प्राचामवृद्धात्फिन्बहुलमिति ग्लुचुकशब्दात्फिन्। इतो मनुष्यजातेरिति ङीष् । ग्लुचुकायनीतोत् वुञ्-वोरकः। (भस्याढ इति पुम्वद्भावः) यस्येति लोपः वृद्धिः ग्लौचुकायिनकम्। यद्वा ग्लुचुकायिनयः पुमांसः तेषां समूह इति इत्यादिऔष्ट्रकम्-औरभ्रकम्-राजकम् - इत्यादीनां ग्रहणमादिपदात्। राजपुत्रेत्येकं पदम्। राजपदस्य पृथक्ग्रहणात्। वत्सानां समूहो वात्सकम्। अजानां समूहः आजकम्।

वृद्धादिति स्वरूपग्रहणम् । ततो वुञ् स्यात् । वृद्धानां समूहो वार्धकम्।

गणिकायी इति लिङ्गविशिष्टग्रहणात्। गणिकशब्दादणेव गणयन्तीति गणकाः। तेषां समूहो गाणिकम्। गणिकाशब्दाद्वुञि-यस्येति लोपे वृद्धौ गाणिक्यम्। वेश्याबृन्द इत्यर्थः। पृष्ठचम् । ब्राह्मणेति सूत्रे केदारसुत्राद्यञमनुवर्त्त्य यञः प्रत्याख्याने तु पृष्ठादपि यञि स्यात्। वृद्धौ पार्ष्ठव्यमिति स्यात्। न च पृष्ठाद्यन्निति वार्तिकिम् फण्वतामिति वाच्यम्। लाघवाभावेन सूत्रे यनि कृतेऽपि अभीष्टसिद्धेः। यञनुवृत्तिक्लेशाभांवाच्च तललकारइत्संज्ञः। अदन्तत्त्वाटाप्। ग्रामतात इत्यदन्तः प्रत्ययः शिष्यते) सह अयन्ति गच्छन्तीति सहायाः पुरुषाः तेषां समूहो सहायता।

अह्नः । खः क्रतौ । अहन्शब्दात् षष्ठचन्तात्समूहार्थे खप्रत्ययस्स्यात् प्रकृतिप्रत्ययसमुदायेन क्रतुविशेषोऽभिधीयते चेत् खस्य ईनादेशः नस्तद्धित इति

**१२५१। ग्रामजनबन्धुभ्यस्तल्** ।४।२।४३। ग्रामता। जनता। बन्धुता॥ **गजसहायाभ्यां चेति वक्तव्यम्**॥ गजता। सहायता॥ **अह्नः खः क्रतौ**॥ अहीनः। अहर्गणसाध्यसुत्याकः क्रतुरित्यर्थः। क्रतौ किम्। आह्नः। इह खण्डिकादित्वादञ्।'अह्नष्टखोरेव-७८९' इति नियमाट्टिलोपो न॥ **पर्श्वा णस् वक्तव्यः** ॥ **१२५२। सिति च** ।१।४।१६। सिति परे पूर्वं पदसंज्ञं स्यात्। अभत्वादोर्गुणो न। पर्शूनां समूहः पार्श्वम्॥ **१२५३। अनुदात्तादेरञ्** ।४।२।४४। कापोतम्। मायूरम्॥ **१२५४। खण्डिकादिभ्यश्च** ।४।२।४५। अञ् स्यात्! खण्डिकानां समूहः खाण्डिकम्॥ **१२५५। चरणेभ्यो धर्मवत्** ।४।२।४६। काठकम्। छान्दोग्यम्॥ **१२५६। अचित्तहस्तिधेनोष्ठक्** ।४।२।४७। साक्तुकम्। हास्तिकम्। धैनुकम्॥

---

अहनष्टिलोपः । अहीनः ।अहर्गणेन साध्यासुत्याकः अखषवः अवबृधस्नानं सोमलतामर्दनं वा यस्मिन् सह शेषे बहुव्रीहाविति कप् । अहर्गणसाध्यसुत्याकः अवभृथान्तो हि क्रतुः । स चावबृथः यस्मिन् क्रतौ बहूनामह्नामन्ते क्रियते स क्रतुरहीन इति यावत्। अह्नां समूह इति विग्रहः। आह्न इत्यत्रापि – ननु आह्न इत्यत्रापि अहन्–अ–इति स्थिते नस्तद्धित इति टिलोपे आह इत्येव स्यादिति शंकायमाह। आह्नष्टखोरेवेत्यादिः।

पर्श्वाणस्वक्तव्यः । समूह इत्येव । णित्त्वं वृद्ध्यर्थम् । सिति चेति परत्वार्थं सित्त्वं अ इति शिष्यते।

सिति च । अत्र सुप्तिङन्त पदमिति सूत्रात्पदमिति यस्मात्प्रत्ययविधिरिति सूत्रात्प्रत्यये इति स्–सकारः इत् इत्संज्ञकः यस्य यस्मिन्वा सः सित् तस्मिन् सिति प्रत्यये परतः परसप्तम्या पूर्व (त्व) माक्षिप्यते। पूर्वं पदं स्यादिति सूत्रार्थः । पर्शू अ वृद्धि इको यणचिति यण् पार्श्वम् । पार्श्वभागे लसन्तीमित्यादौ तु पार्श्वशब्दः सन्निहितदेशे रूढः।

अनुदात्तः आदिः यस्य तस्य षष्ठ्यन्तस्य पदस्य समूहार्थे अञ्।

अचित्तेति न विद्यते चित्तं चेतना येषां ते अचित्ता इत्यर्थः। नात्र स्वरूपग्रहणम्। व्याख्यानात्। अचेतनेभ्यः हस्तिधेनुभ्याञ्च ष्ठक् स्यात्समूहे। सूत्रे समाहारद्वन्द्वः अचित्तस्य साक्तुकमित्युदाहरणम्। सक्तूनामचेतनत्वात् लाजचूर्णस्सक्तव इत्युच्यते । उसन्तवाट्ठस्य कादेशः सुपि कृते सक्तुस् इत्युसंतोऽयम्। हस्तिनां समूहो हास्तिकम्। नस्तद्धित इति टिलोपः। तस्येकादेशः । वृद्धिः। धैनुकं उसन्तत्वात्कः। ठस्य।

पक्षे यञ्चाभावपक्षे यथासंख्यम् ठगणौ। सास्येत्यादीनां स्त्रीत्वं लोकव्यवहारात् अदन्तत्वाट्टाप्। गोय अवादेशः गव्या।

**१२५७। केशाश्वाभ्यां यञ्छावन्यतरस्याम्** ।४।२।४८। पक्षे ठगणौ। कैश्यम्। कैशिकम्। अश्वीयम्। आश्वम्॥ **१२५८। पाशादिभ्यो यः** ।४।२।४९। पाश्या। तृण्या। धूम्या। वन्या। वात्या॥ **१२५९। खलगोरथात्** ।४।२।५०। खल्या। गव्या। रथ्या॥ **१२६०। इनित्रकट्यचश्च** ।४।२।५१। खलादिभ्यः क्रमात्स्युः। खलिनी। गोत्रा। रथकट्या॥ **खलादिभ्य इनिर्वक्तव्यः**॥ डाकिनी। कुटुम्बिनी। आकृतिगणोऽयम्॥ **१२६१। विषयो देशे** ।४।२।५२। षष्ठ्यन्तादणादयः स्युरत्यन्तपरिशीलितेऽर्थे स चेद्देशः। शिबीनां विषयो देशः शैबः। देशे किम्। देवदत्तस्य विषयोऽनुवाकः॥ **१२६२ राजन्यादिभ्यो वुञ्** ।४।२।५३ राजन्यकः ॥ **१२६३ भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ** ।४।२।५४। भौरिकीणां विषयो देशः भौरिकिविधम्। भौलिकिविधम्। ऐषुकारिभक्तम्। सारसायनभक्तम्॥

---

इनित्रेति पूर्वसूत्रस्यात्रानुवृत्तिः। इनिश्च त्रश्च कटचचिच् इनित्रकटचचः। चकारस्समुच्चयार्थः। इनौ नस्य इत्संज्ञया लोपो माभूदिति इकारस्य ग्रहणम्। इन् इति शिष्यते। ऋन्नेभ्य इति ङीप् खलिनी।

विषयो देशे। तस्येत्यनुवर्तते षष्ठ्यन्ताद्विषय इत्यर्थे प्रत्ययास्स्युः देशे वाच्ये इत्यर्थः। विषयो नाम अत्यन्तपरिशीलितः पदार्थः। विषय इति किं। शिबीनां गन्तव्यो देशश्शैबो माभूत्। न हि गन्तव्यो देशः। नात्यन्तपरिशीलितः शैबः औत्सर्गिकोऽण् (अत्यन्तपरिशीलनञ्च देशे निवासेन अनवरतसञ्चारेण वा)। राजन्यानां विषयो देशो राजन्यकः। समूहार्थे वुञि प्रागुदाहृतम्।

भौरिक्यादयः ऐषुकाद्यादयश्च। गणौ भौरिक्यादिगणपठितेभ्यः विषयो देशे विधल्प्रत्ययः। ऐषुकाद्यादिगणपठितेभ्यः भक्तल् प्रत्ययश्च स्याताम्। लकार इत्संज्ञः। सोऽस्यादिरिति स इति प्रथमान्तात् छंदसः पङ्ती गायत्री त्रिष्टुप् अनुष्टुप् इत्यादीनि यानि वृत्तरत्नाकरादौ प्रसिद्धानि छन्दांसि तद्वाचकात्समर्थाल्। अस्यादिरित्यर्थे अण् प्रत्ययस्स्यात्। प्रकृतिप्रत्ययसमुदायेन प्रगाथश्चेदभिधीयते प्रगाथो ग्रन्थसन्दर्भः। स्वार्थ इति छन्दोवाचकात्स्वार्थे अण् स्यादिति वक्तव्यमित्यर्थः। णः अणौ सिद्धे, ण इति पृथग्विधानफलं तु ङीबभावः। दाण्डौ अदन्तत्वात् टाप्।

घञः। सा अस्यां क्रिया इति ञः इति छेदः। प्रत्ययग्रहणे तदन्तविधिरिति घञः। घञन्तात्। सेति प्रथमान्तात्। क्रियेति क्रियावाचिनः। अस्यामिति सप्तम्यर्थे

**१२६४ । सोऽस्यादिरिति च्छन्दसः प्रगाथेषु** ।४।२।५५ अण् । पङ्क्तिरादिरस्येति पाङ्क्तः प्रगाथः ॥ **स्वार्थ उपसंख्यानम्** ॥ त्रिष्टुभेव त्रैष्टुभम् ॥ **१२६५ संग्रामे प्रयोजनयोद्धृभ्यः** ।४।२।५६। सोऽस्येत्यनुवर्तते । सुभद्रा प्रयोजनमस्य संग्रामस्येति सौभद्रः । भारता योद्धारोऽस्य संग्रामस्य भारतः ॥ **१२६६ तदस्यां प्रहरणमिति क्रीडायां णः** ।४।२।५७ । दण्डः प्रहरणमस्यां क्रीडायां दाण्डा । मौष्टा ॥ **१२६७ घञः सास्यां क्रियेति ञः** ।४।२।५८ घञन्तात्क्रियावाचिनः प्रथमान्तादस्यामिति सप्तम्यर्थे स्त्रीलिङ्गे ञप्रत्ययः स्यात् । घञ इति कृद्ग्रहणाद्गतिकारकपूर्वस्यापि ग्रहणम् ॥ **१२६८ श्येनतिलस्य पाते ञे** ।६।३।७१ श्येन तिल एतयोर्मुमागमः स्यात् ञप्रत्ययपरे पातशब्दे उत्तरपदे । श्येनपातोऽस्यां वर्तते श्यैनंपाता मृगया । तिलपातोऽस्यां वर्तते तैलंपाता स्वधा । श्येनतिलस्य किम् । दण्डपातोऽस्यां तिथौ वर्तते दाण्डपाता तिथिः ॥ **१२६९ तदधीते तद्वेद** ।४।२।५९ व्याकरणमधीते वेद वा वैयाकरणः ॥

---

(स्त्रीलिङ्गानिर्देशात् स्त्रीलिङ्गे इति च, सप्तम्यर्थविशेषणम्। ञप्रत्ययस्स्यात्। उदाहरणम्। श्यैनं पाता इति वक्ष्यति। ननु पात इघञन्तः क्रियावची च प्रथमान्तश्च पातोस्यामिति पाता इति स्यात्कथं श्येनं पातेति घञन्तान्तस्यापि ग्रहणमस्मिन् विधौ अत आह । कृद्ग्रहणादित्यादि। कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति परिभाषा। घञ् इति कृत्प्रत्ययः। तद्ग्रहणे सति प्रत्ययग्रहणात् तदन्तस्य गतिकारकपूर्वस्य च ग्रहणं भवति। कृदन्तस्य गतिकारकपूर्वकृदन्तस्य च ग्रहणं भवतीति यावत्। कारकपूर्वो घञन्तः श्येनपात इति। तस्मात् क्रियावाचिनः प्रथमान्तादस्यामित्यर्थे अण् । वृद्धिः श्यैनम्पाता–मुमागमः कथमत आह–श्येनतिलेति। अत्रोत्तरपदाधिकारः। ञप्रत्ययपरकत्वञ्च व्यवहितमेव। न त्वव्यवहितं पाताद् ञः विहितत्वेन श्येनस्य तदव्यवहितपरकत्वमसम्भवीति। तेन श्येनतिलयोर्मुस्स्यात् ञप्रत्ययपरके पातशब्दे उत्तरपदे परत इत्यर्थः फलितः। (अत्रर्द्विषदिति सूत्रान्मुमित्यत्रान्वेति ञे परे इति किं श्येनस्य पातः श्येनपातः।

तदधीते तद्वेद । तदिति द्वितीयान्तात् अधीते इत्यर्थे प्रत्ययास्स्युः। तदिति द्वितायीन्तात् वेदेत्यर्थे प्रत्ययास्स्युः इति वाक्यभेदेन व्याख्येयम्। तच्छब्दस्य द्विर्ग्रहणात् अध्ययनम् क्रियावाक्करणकावेदनं ज्ञानं मनःकरणकमित्युभयोर्भेदात्पृथग्ग्रहणम्। द्वितीयान्तात् गौणादपि प्रत्ययोत्पत्तिर्यथा स्यात्तदर्थं द्विस्तद्ग्रहणम्। अन्यथा मुख्यादेःस्यात् यथा आग्निष्टोमिकः। अग्निष्टोमशब्दः क्रतौ मुख्यः। तत्प्रतिपादकग्रन्थे लाक्षणिकः । अग्निष्टोममधीते वेद वा इत्यर्थद्वयेऽपि ठक्। क्रत्विति न स्वरूपग्रहणम्। व्याख्यानादित्याह क्रतुविशेषवाचिनामेवेति।

**१२७० क्रतूक्थादिसूत्रान्ताट्ठक्** ।४।२।६० क्रतुविशेषवाचिनामेवेह ग्रहणम्। तेभ्यो मुख्यार्थेभ्यो वेदितरि तत्प्रतिपादकग्रान्थपरेभ्यस्त्वध्येतरि । आग्निष्टोमिकः। वाजपेयिकः। उक्थं सामविशेषस्तल्लक्षणपरो ग्रन्थविशेषो लक्षणयोक्थम्। तदधीते वेद वा औक्थिकः ॥ **मुख्यार्थात्तूक्थशब्दाट्ठगणौ नेष्येते** । न्यायम्, नैयायिकः। वृत्तिम्, वार्तिकः । लोकायतम्, लौकायतिकः इत्यादि ॥ **सूत्रान्तात्त्वकल्पादेरेवेष्यते** । सांग्रहसूत्रिकः । अकल्पादेः किम् । काल्पसूत्रः॥ **विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम्** ॥ वायसविद्यिकः॥ गौलक्षणिकः । आश्वलक्षणिकः । पाराशरकल्पिकः ॥ **अङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्तान्नेति वक्तव्यम्** ॥ आङ्गविद्यः। क्षात्रविद्यः। धार्मविद्यः । त्रिविधा विद्या त्रिविद्या तामधीते वेद वा त्रैविद्यः **आख्यानाख्यायिकेतिहास-पुराणेभ्यश्च** ॥ यवक्रीतमधिकृत्य कृतमाख्यानमुपचाराद्यवक्रीतं तदधीते वेत्ति वा यावक्रीतिकः । वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता ।

---

क्रतवश्च उक्थादयश्च सूत्रान्ताश्च शब्दाः तेषां समाहारः क्रतूक्थादिसूत्रान्तम्। तस्मात् अधीते इत्यर्थे वेदेत्यर्थे च ठक् स्यात्। ननु क्रत्वादयो यदि मुख्यार्थवाचकास्तर्हि क्रतूनां क्रियात्वादध्येतरि प्रत्ययासम्भवः। यदि गौणार्थवाचकास्तर्हि ग्रन्थानामधीतिविषयत्वेन वेदितरि प्रत्ययासम्भव इति शंकायामाह तेभ्य इत्यादि। मुख्यगौणोभयार्थवाचित्वेन अध्येतृ वेदितृ प्रत्ययद्वयस्यापि सम्भव इति भावः।

नेति वाच्यम्। ठक् न स्यादित्यर्थः । अण् तु स्यादेवेति भावः। अङ्गविद्यामधीते वेद वा आङ्गविद्यः। वेदानामङ्गभूता विद्या अङ्गविद्या। व्याकरणादिकम्।

आख्यानं नाम प्रबन्धः कल्पनाकथेत्यर्थः। आख्यायिका प्रसिद्धकथा इतिहासो भारतादिः। पुराणं स्कान्दादिः । आख्यानाख्यायिकयोरर्थग्रहणमेव इतिहासपुराणयोस्तु स्वरूपग्रहणं व्याख्यानात्। सर्वादेः सर्वपदाद्यवयवकात् सादेः सशब्दाद्यवयवकाच्च द्वितीयान्ताद्विहितस्य अध्येतृवेदितृ प्रत्ययस्य लुक्स्यादित्यर्थः। ननु सादेरित्यनेनैव सर्वादेरपि प्रत्ययलुक्सिद्धेः किं पृथक् सर्वादेरिति निर्देशेन फलं इति चेन्मैवम्। अर्थवद्ग्रहणे नानर्थकस्य ग्रहणमिति परिभाषया अर्थवान्यस्सशब्दः तदादेरेव स्यात् न त्वनर्थको यस्सह सर्वशब्दाद्यवयवः तदादेस्स्यादिति। सादेरित्यस्य सकारादेरिति व्याख्याने तु यद्यपि नैषा परिभाषोपतिष्टत इति सर्वादेरिति त्यक्तुं शक्यम्, तथापि अर्थवद्ग्रहणपरिभाषाज्ञापनार्थं

'अधिकृत्य कृते ग्रन्थे १४६७' इत्यर्थे 'वृद्धाच्छः १३३७' तस्य लुबाख्यायिकाभ्यो बहुलमिति लुप् । ततोऽनेन ठक् । वासवदत्तिकः । ऐतिहासिकः । पौराणिकः ॥ **सर्वादेः सादेश्च लुग्वक्तव्यः** ॥ सर्ववेदानधीते सर्ववेदः । सर्वतन्त्रः । सवार्तिकः । 'द्विगोर्लुक्-१०८०' इति लुक् । द्वितन्त्रः ॥ **इकन्पदोत्तरपदाच्छतषष्टेः षिकन्पथः** ॥ पूर्वपदिकः । उत्तरपदिकः । शतपथिकः । शतपथिकी । षष्टिपथिकः । षष्टीपथिकी । **१२७१ क्रमादिभ्यो वुन्** ।४।२।६१ क्रमकः । क्रम, पद, शिक्षा, मीमांसा, क्रमादिः ॥ **१२७२ अनुब्राह्मणादिनिः** ।४।२।६२। 'तदधीते तद्वेद १२६९' इत्यर्थे ब्राह्मणसदृशो ग्रन्थोऽनुब्राह्मणं तदधीते अनुब्राह्मणी । मत्वर्थीयेनैव सिद्धे अण्बाधनार्थमिदम् । **१२७३ वसन्तादिभ्यष्ठक्** ।४।२।६३ वासन्तिकः । अथर्वाणमधीते आथर्वणिकः । 'दाण्डिनायन -११४५' इति सूत्रे निपातनाट्टिलोपो न । **१२७४ प्रोक्ताल्लुक्** ।४।२।६४ प्रोक्तार्थकप्रत्यात्परस्याध्येतृप्रत्ययस्य लुक् स्यात् ।

---

सर्वादिग्रहणमिति बोध्यम्। अपि च प्रकारादेरिति व्याख्याने समस्तवेदानधीते सामस्तवेदः इति न सिद्ध्येत् । वार्तिकस्यान्तं सवार्तिकमधीते वेद वा सवार्तिकः। द्वे तन्त्रे अधीते वेद वा द्वितन्त्रः । तद्धितार्थे विषये संख्यापूर्वो द्विगुरिति द्विगुः। तस्माद्विहितस्याणो लुक्।

इकन् षिकन् ।अनुवर्तमानस्य ठकष्ठस्य इकादेशेऽपि इक इति प्रत्ययशेषस्सिद्ध्यत्येव । तथापि कित्त्वाद्वृद्धिः स्यातन्वाभूदिति इकन् षिकन् इत्यनोर्विधानम्। उभयोरपि इक इत्येतावानेव शिष्यते इकना सिद्धे षिकनापि पृथग्विधानन्तु षिद्गौरादिभ्यश्चेति ङीषर्थम्। क्रमकः क्रममधीते वेद वा इत्यर्थे वुन् । तस्य अकादेशः। यस्येति च क्रमान्ताकारतो क्रमकः। अनुब्राह्मणी नकारान्ताःपुंलिङ्गोयम्। ननु अनुब्राह्मणमस्यास्तीति अत इनि ठनाविति मत्वर्थीये इनौ कृते सिद्ध्यत्येवेदं रूपमिति किमर्थमिदं सूत्रमत आह अण्बाधनार्थमिति । तदस्यास्तीत्यर्थे इना रूपसिद्धावपि तदधीते तद्वेदेत्यर्थे औत्सर्गिकोऽण् स्यादिति तद्बाधनार्थं सूत्रमिदमिति भावः। मत्वर्थीयेन च मत्वर्थीयेन एव इति मत्वर्थीयेन-एव- इति च छेदः एकत्र इनिनेत्यध्याहारः। अन्यत्र मत्वर्थीयो य इन् तेनेत्यर्थः। इन्निति शेषितप्रत्यय ग्रहणम्। **अथर्वन्शब्दात्** ठक् ठस्येकः। रषाभ्यामिति नस्य णत्वम्। आथर्वणिकः। टिलोपः आथर्वन् । इक इत्यस्यामवस्थायां नस्तद्धित इति टेरनो लोपः । प्रोक्ताल्लुक् प्रोक्तपदमुपचारात्तदर्थविहितप्रत्ययाभिधायि स च प्रत्ययः प्रकृतः अधीतृवेदित्रर्थ विहितः। इतीदमभिसन्धायाह प्रोक्तार्थकेत्यादि । अस्योदाहरणन्तु पाणिनीयमधीते वेद वा पाणिनीयः

पणनं पणः। घञर्थे कविधानमिति कः। सोऽस्यास्तीति पणी, तस्य गोत्रापत्यं पाणिनः **१२७५ गाथिविदथिकेशिगणिपणिनश्च** ।६।४।१६५। एतेऽणि प्रकृत्या स्युः इति टिलोपो न। ततो यूनि इञ्। पाणिनिः ॥ **१२७६ ण्यक्षत्रियार्षञितो यूनि लुगणिञोः** ।२।४।५८। ण्यप्रत्ययान्तात्क्षत्रियगोत्रप्रत्ययान्तादृष्यभिधायिनो गोत्रप्रत्ययान्ताद् ञितश्च परयोर्युवाभिधायिनोरणिञोर्लुक् स्यात्। कौरव्यः पिता। कौरव्यः पुत्रः। श्वाफल्कः पिता। श्वाफल्कः पुत्रः। वासिष्ठः पिता। वासिष्ठः पुत्रः। तैकायनिः पिता। तैकायनिः पुत्रः। एभ्यः किम्। शिवाद्यण्। कौहडः पिता। तत इञ्। कौहडिः पुत्रः। यूनि किम् वामरथ्यस्य छात्राः वामरथाः। इति अणो लुक् तु न भवति। आर्षग्रहणेन प्रतिपदोक्तस्य ऋष्यण एव ग्रहणात्। पाणिनिना प्रोक्तं पाणिनीयम्। 'वृद्धाच्छः १३३७'। 'इञश्च १३३३' इत्यण् तु न। गोत्रे य इञ् तदन्तादिति वक्ष्यमाणत्वात्। ततोऽध्येतृवेदित्रणो लुक्। स्वरे स्त्रियां च विशेषः। पाणिनीयः पाणिनीया ॥

---

इति वक्ष्यते। पाणिनिना प्रोक्तं पाणिनीयमिति प्रोक्तार्थकश्छप्रत्ययः। तस्मात्परोध्येतृवेदितृप्रत्ययोऽण् तस्य लुक्। यद्यप्यणो लुकि अलुकि वा न रूपे विशेषः। वृद्धत्वात्तथापि स्वरे विशेष इति वक्ष्यति। स्त्रियान्तु रूपे विशेषोऽपि अणन्तलक्षणङीबभावात् अदन्ताट्टाप् पाणिनीया। ननु पाणिना प्रोक्तमिति विग्रहे कथं पाणिनिरिति रूपमत आह। पणनं पण इत्यादि। पणव्यवहारे स्तुतौ चेति पणतेः कप्रत्यये पण इति रूपं व्यवहार इत्यर्थः। भावार्थे घञ् तत्रैवकश्च कप्रत्यये आ इति शिष्यते। अत इनि ठनाविति मत्वर्थे इनिः। पणी। पणिनो गोत्रापत्यं पाणिनः। तस्यापत्यमित्यौत्सर्गिकोऽण् ऋष्यण् वा। ननु पाणिन् अ इत्यत्र नस्तद्धित इति टिलोपस्स्यादत आह–गाधिविदधत्यादि। अत्र प्रकृत्या अक इति सूत्रात्प्रकृत्या इति इनणीति सूत्रादणीति चानुवर्तेते। इन्नन्ता इमे सूत्रोक्ताश्शब्दाः अपत्यत्वादिनण्यनपत्य इत्यस्याप्राप्तावयमारंभः। ततः पाणिनशब्दाद्यूनि युवापत्ये इञ्, अत इञ् एतावता सिद्धं रूपमाह पाणिनिरिति। अत्र यूनि इञो लुकमाशङ्कते–ण्यक्षत्रियेति न्यः क्षत्रियः आर्षः ञित् एतेषां समाहाररद्वन्द्वः। प्रत्ययग्रहणात्तदन्तग्रहणमिति ण्यप्रत्ययान्तात् इत्संज्ञकञ् कारवत्प्रत्ययान्ताच्च यूनीति वचनसामर्थ्यात् क्षत्रियार्षौ गोत्रप्रत्ययान्तावेव। गोत्राद्यूनो विहितत्वात् यद्वा या स्कादिभ्य इति सूत्रात् गोत्र इत्यस्यापकर्षः। क्षत्रियाभिधायि यद्गोत्रान्तं तस्मात्। ऋषिगोत्रप्रत्ययान्तमार्षम्। तस्माच्च एतेभ्यश्चतुर्भ्यो विहितयोर्युवाभिधायिनोरणञोर्लुक् स्यादित्यर्थः। कौरव्यो ब्राह्मणः कुर्वादिभ्य इति ण्यन्तः। श्वाफल्क इति क्षत्रियगोत्रान्तः।

**१२७७ सूत्राच्च कोपधात्** ।४।२।६५। सूत्रवाचिनः ककारोपधादध्येतृवेदितृप्रत्ययस्य लुक् स्यात् । अप्रोक्तार्थ आरम्भः । अष्टावध्यायाः परिमाणमस्य अष्टकं पाणिनेः सूत्रम् । तदधीते विदन्ति वा अष्टकाः ॥

---

कोहडस्यापत्यं कौडः कोहडो ब्राह्मणः । न तु ऋषिः, नापि क्षत्रियः । अणो लुक्तु न भवतीति अणः परस्य इञो लुक् न भवतीत्यर्थः इञोलुक्तु न भवतीति सुवचं। ननु पणिनो ऋषित्वात्पाणिन इति ऋषिगोत्रान्तमेवेति ततो व्यूनीयूनीञसा। देव लुक् इत्यत्र आह आर्षेत्यादि। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्तत् ग्रहणमिति परिभाषया ऋष्यन्धकेति । ऋषिपदं गृहीत्वा यो गोत्रप्रत्ययो विहितः तदन्तमेवेहार्षम्। ऋष्यणणन्तमेवार्षमिति यावत्। ननु पणिनीशब्दादौत्सर्गिकोऽण् ऋष्यण् वेत्युभयप्रसक्तिरस्त्येव । पणिनो ऋषित्वात् अत इञादीनामौत्सर्गिकोण्बाधकानां प्रत्ययानामत्राप्रसक्तेश्च। तस्मात् ऋष्यणपि स्यादेवेति चेत्सत्यम्। तथापि दाक्षीपुत्रस्य पाणिनेरिति भाष्यप्रयोगात् पणिन्शब्दादौत्सर्गिक एवाण् न तु ऋष्यण् इति ज्ञपितमिति नात्र ऋष्यण्। युक्तञ्चेदं ऋष्यणोबाधकबाधनार्थ विहितत्वेन प्रकृते औत्सर्गिकाणो बाधक एव न प्रसज्यते प्रत्यय इति औत्सर्गिक एवाण् । न तु ऋष्यण् इति वक्ष्यमाणत्वात् शैषिकेष्विति शेषः।

सूत्रादिति । सूत्रवाची यः कोपधः तस्मादित्यर्थः अलोन्त्यात्पूर्वमुपधा उपधा यस्य सकोपधः। अष्टकं तदस्य परिमाणमित्यधिकारे संख्याया इति कन् संख्यासंख्यावाचकाप्रकृतिर्यस्य तस्मादिति कोपधस्य विशेषणान्तरसमुच्चयो वाच्य इत्यर्थः। कलापकमित्यपपाठः। कालापकमिति पठितव्यम्। कलापिना प्रोक्तं कालापम्। तदधीते विदन्ति वा कालापाः । तेषामाम्नायः कालापकम्। छन्दांसि गायत्र्यादयः ब्राह्मणानि मन्त्राणां विनियोगप्रदर्शका ग्रन्थविशेषाः ते च चिरन्तनैः कृताः चिरन्तनत्वं च वक्त्रपेक्षया वक्ता सूत्रकारः पाणिनिः। अतः पाणिन्यपेक्षया वेति चिरन्तनास्तैः कृतान्येव ब्राह्मणानीह गृह्यन्ते। तद्विषयाणि तदनन्यभाविनी। तौ अध्येतृवेदितृप्रत्ययौ यत्र भवतः तत्रैव प्रोक्तान्तानि छन्दोब्राह्मणानि भवन्ति न त्वन्यत्र इत्यर्थः। (अन्यत्र भवन्तीत्यन्याभावीनि । तानि न भवन्तीत्यनन्यभावीनि ताभ्यामनन्यभावीनि तदनन्यभावीनि इति समासः। ताभ्यामन्यत्र न भवन्तीति समासार्थः।

णिनिः। कलापिवैशम्पायनान्तेवासिभ्यश्चेति सूत्रेण कठशब्दात्प्रोक्तार्थे णिनिः ततोऽण्। तस्मादध्येतृवेदित्रण्। कठ (प्रोक्तार्थे णिनिः (अध्येतरि वेदितरि वा) अण्। कठ–इ–अ

**१२७८ छन्दोब्राह्मणानि च तद्विषयाणि** ।४।२।६६। छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि तद्विषयाणि स्युः । अध्येतृवेदितृप्रत्य यं विना न प्रयोज्यानीत्यर्थः । कठेन प्रोक्तमधीयते कठाः । वैशम्पायनान्तेवासित्वाण्णिनिः। तस्य 'कठचरकात् – १४८७' इति लुक् । ततोऽण्, तस्य 'प्रोक्तालुक् १२७४'। **१२७९ तदस्मिन्नस्तीति देशे तन्नाम्नि** ।४।२।६७। उदुम्बराः सन्त्यस्मिन्देशे औदुम्बरः ॥ **१२८० । तेन निर्वृत्तम्** ।४।२।६८। कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी ॥ **१२८१ । तस्य निवासः** ।४।२।६९। शिबीनां निवासो देशः शैवः ॥ **१२८२ । अदूरभवश्च** ।४।२।७०। विदिशाया अदूरभवं नगरं वैदिशम्।

---

इत्यलौकिकविग्रहः। कठचरकादिति इनो लुक् प्रोक्ताल्लुगिति अणो लुक्। कठ जस्–कठाः। ब्राह्मणानीत्यस्योदाहरणमिदम्। छन्दसोऽपि कठप्रोक्तत्वे छन्दांसीत्यस्यापि तेन कठेन प्रोक्तम् ब्राह्मणं छन्दो वा अधीयते विदन्ति वा कठा इति विग्रहो बोध्यः।

तदस्मिन्निति। तदिति प्रथमान्तादस्मिन्नस्तीत्यर्थे प्रत्ययास्स्युः । यद्वा अस्तीत्युपाधिका तदिति प्रथमान्तादस्मिन्निति सप्तम्यर्थे प्रत्ययास्स्युः (अस्तीति पदमुपाधिर्विशेषणं यस्य तस्मात् तदस्तीत्यत्र तच्छब्दार्थं प्रति अस्त्यर्थस्य विशेषणत्वेन शाब्दबोधे भानात्। अस्तिक्रियाश्रयं तदिति।) प्रकृतिप्रत्ययसमुदायेन तन्नामादेशश्चेदभिधीयते। तत्प्रकृतिप्रत्ययसमुदायात्मकम्। नाम संज्ञाशब्दः यस्य स तन्नाम। प्रकृतिप्रत्ययसमुदायेन कस्यचिद्देशस्य संज्ञा चेदभिधीयत इत्यर्थः। प्रथमान्तात् सप्तम्यन्तार्थविहितो यः प्रत्ययः अणादिः तदन्तशब्दः योगरूढ्या यदि देशविशेषवाचकः स्यात् इति यावत्। औदुम्बरो देशविशेषः । देशे किम् । उदुम्बरास्सन्त्यस्मिन्वने। तन्नाम्नीति किं। उदुम्बरास्सन्त्यस्मिन्नङ्गदेशे।

तेन निर्वृत्तम्। देशे तन्नाम्नीत्यनुवर्तते। तेनेति तृतीयान्तान्निर्वृत्तमित्यर्थे प्रत्ययास्स्युः। प्रकृतिप्रत्ययसमुदायेन तन्नामादेशश्चेदभिधीयते निर्वृत्तम् निर्वर्तितं निर्मितमिति यावत् । देशे किम् । कुशाम्बेन निर्वृत्तस्तटाकः। तन्नाम्नि किम्। भरतेन निर्वृत्ता मधुरानगरी । अत्र भारती इति माभूत्।

तस्य निवासः। देशे तन्नाम्नीत्यत्राप्यनुवर्तते । तस्येति षष्ठ्यन्तान्निवास इत्यर्थे प्रत्ययास्स्युः। देशे तन्नाम्नि विषये देशे इत्यनेन सिद्धे अनत्यन्तपरिशीलनार्थोऽयमारम्भः। अतन्नामार्थं विषय इति सूत्रारम्भश्च अदूरभव इत्यर्थे तस्येति षष्ठ्यन्तात् प्रत्ययास्स्युः देशे तन्नाम्नि। नन्वत्र चकारो व्यर्थः । अनुवृत्त्यैव तस्य देशे तन्नाम्नीति

चकारेण प्रागुक्तास्त्रयोऽर्थाः संनिधाप्यन्ते। तेन वक्ष्यमाणप्रत्ययानां चातुरर्थिकत्वं सिध्यति ॥ **१२८३ ओरञ्** ।४।२।७१। अणोऽपवादः। कक्षे तु काक्षतवम् नद्यां तु परत्वान्मतुप्। इक्षुमती ॥ **१२८४ मतोश्च बह्वजङ्गात्** ।४।२।७२। बह्वच् अङ्गं यस्य मतुपस्तदन्तादञ् नाऽण्। सैध्रकावतम् ।बह्वजिति किम्। आहिमतम्। अङ्गग्रहणं बह्वजिति तद्विशेषणं यथा स्यान्मत्वन्तविशेषणं माभूत् ॥ **१२८५ बह्वचः कूपेषु** ।४।२।७३। अणोऽपवादः। दीर्घवरत्रेण निर्वृत्तो दैर्घवरत्रः कूपः ॥

---

त्रयाणामत्रान्वयसम्भवेन चकारस्य तदनुकर्षणार्थत्वाभावात् अत आह चकारेणेत्यादि। समुच्चयार्थकेन चकारेण तदस्मिन्नित्यादिसूत्रत्रयप्रतिपादितमर्थत्रयं समुच्चीयत इति भावः। सन्निधापनफलमाह तेनेत्यादिना। चतुर्ष्वप्यर्थेषु वक्ष्यमाणाः प्रत्ययास्सुरिति तत्फलमिति भावः चतुरर्थ्यां भवन्तीति चातुरर्थिकाः तेषां भावश्चातुरद्धिकत्वम्। चतुर्ष्वर्थेषु वक्ष्यमाण प्रत्ययानां भवनं सिद्ध्यतीत्यर्थः।

ओरञ्। उवर्णान्ताच्चतुरर्थ्यामञ्स्यादित्यर्थः। औत्सर्गिकस्याणोऽय–मपवादोऽञ्। कक्षतुना निर्वृत्तं कक्षतोरदूरभवः कक्षतुरस्त्वस्मिन् कक्षतोर्निवासः काक्षतवम्। नगरम्। कक्षतुर्नाम राजा देशश्च परत्वान्मतुप्। नद्याम्मतुप् इति वक्ष्यते तेनेत्यर्थः। इक्षु इति प्रकृतेश्चतुरर्थ्यामतुप्नद्यां वाच्यायामिति। इक्षवस्सन्त्यस्यामित्यादयोऽर्था ऊह्याः। उगित्वान्मतुबन्तात् ङीप् इक्षुमति। मतोश्चेति अङ्गस्यैव बह्वच्कत्वम् यथा विशेषणं स्यान्न तु मत्वन्तस्येत्येतर्थमिहाङ्गग्रहणम्। अङ्गपदाभावे बह्वचो मत्वन्तादिति बह्वच्कत्वम् मत्वन्तस्य विशेषणं स्यात्। तथा च आहिमतमित्यत्र अहयस्सर्पा अत्र सन्तीत्यर्थे अहिमत् इति मत्वन्तस्य बह्वच्कत्वात् अहिमता निर्वृत्तमित्याद्यर्थे अञ् स्यादिति दोषः। सति त्वङ्गग्रहणे मतौ परतो यदङ्गं अहीत्याकारकम्। (यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गमित्युक्तत्वात्) द्व्यच्कमेव न बह्वच्कमिति ततो मत्वन्ताच्चतुरर्थ्याम् नाञ्, किन्तु औत्सर्गिकोऽणेव। न च रूपे विशेषाभावादञि सत्यपि न दोष इति वाच्यम्। स्वरे भेदात्। बह्वजङ्गादिति बहुव्रीहिः। बह्वजङ्गो यो मतुप् तदन्ताच्चतुरर्थ्यामञ् स्यादिति सूत्रार्थः। बह्वजङ्गो यो मत्वन्तस्तस्मादिति व्याख्याने तु यस्य मत्वन्तस्य बह्वच्कमङ्गमवयवभूतम्। तस्मादिति बह्वाजङ्गादित्यस्य अर्थो वक्तव्यस्स्यात्। स च क्लिष्ट इति बोध्यम्। नाण्। औत्सर्गिकस्याणोपवाद इत्यर्थः। सैध्रकावतम्। सिध्रिका अस्यां सन्तीति सिध्रिकावती। तस्या अदूरभवं नगरं सैध्रकावतम्। मादुपधाया इति मतुपो मस्य वः। उदक्च।

**१२८६ उदक्च विपाशः** ।४।२।७४। विपाश उत्तरे कूले ये कूपास्तेष्वञ्। अबह्वजर्थ आरम्भः। दत्तेन निर्वृत्तो दात्तः कूपः। उदक् किम्। दक्षिणतः कूपेष्वणेव॥ **१२८७ सङ्कलादिभ्यश्च** ।४।२।७५। कूपेष्विति निवृत्तम्। सङ्कलेन निर्वृत्तं साङ्कलम्। पौष्कलम्। **१२८८ स्त्रीषु सौवीरसाल्वप्राक्षु** ।४।२।७६। स्त्रीलिङ्गेषु एषु देशेषु वाच्येष्वञ् सौवीरे, दत्तामित्रेण निर्वृत्ता दात्तामित्री नगरी। साल्वे, वैधूमाग्री। प्राचि, माकन्दी॥ **१२८९ सुवास्त्वादिभ्योऽण्** ।४।२।७७। अञोऽपवादः। सुवास्तोरदूरभवं सौवास्तवम्। वर्णु, वार्णवम्। अण्ग्रहणं नद्यां मतुपो बाधनार्थम् सौवास्तवी॥ **१२९० ।रोणी** ।४।२।७८। रोणीशब्दात्तदन्ताच्च अण्, कूपाञोऽपवादः। रौणः। आजकरोणः॥

---

विपाट् नदी। उदक् इत्युत्तरस्यामव्ययम्। योग्यत्वात् तटचामेव तदेतदाह उत्तरे कूले इति। उत्तरस्यां तटचामित्यर्थः। प्राक्सूत्रादत्र कूपेष्वित्यनुवृत्तिः। चादोरञ इत्यतोऽञोनुकर्षः। सुवास्तुवर्णू देशौ। तयोरदूरभवं नगरं सौवास्तवं वार्णवञ्च। ननु औत्सर्गिकेनाणा सिद्धे पृथगत्राण्ग्रहणं व्यर्थमत आह। नद्यां मतुपो बाधनार्थमिति। वस्तुतस्तु औत्सर्गिकमणं ओरञ् बाधते। तञ्च मतुप्-मतुपो बाधकमिदमिति अण्ग्रहण्स्य वैयर्थ्यशंकैव नास्ति। आतसिद्धार्थकथनमिदमिति बोध्यम्। सैवास्तवी नदी कूपाञः। रोणीशब्दान्तात् बह्वचः कूपेष्विति अञि प्राप्ते तदपवादोऽयमण्। रोणीनदीदेशो वा। एवमाजकरोणी इत्यपि रोण्या अदूरभवो रौणः कूपः। ननु चातुरर्थिकत्वेन रोण्या निवास इति रोणी। अस्मिन्नस्तीति रोण्या निर्वृत्त इति च त्रिष्वप्यर्थेषु रौणतिभवितव्यत्वेन भवत्येव इति चेन्मैवम्। प्रत्ययानां चतुरर्थबोधकत्वमस्तीत्येतावता न हि सर्वप्रकृतिभ्यश्चतुरर्थ्यामञादयस्स्युरिति वक्तुं शक्यते। किन्तु समर्थप्रकृतिभ्य एव याः प्रकृतयः प्रत्ययसन्नियोगेन यं यमर्थं बोधयितुं क्षमन्ते ताभ्यः तस्मिन्नर्थे स प्रत्ययो विधीयते। हि कूपे रोणीदेशो नदी वा वर्तितुं शक्नोति। तस्मात् सति सम्भवे चतुरर्थी प्रत्यया बोधयन्ति। असम्भवे तु यथासम्भवमेकं द्वौ त्रयो वा अर्थान्बोधयन्तीति ज्ञेयम्। अञोऽपवादः कर्णच्छिद्रकेन निर्वृत्तः कूपः कार्णच्छिद्रक इत्यत्र कूपाञः। कृकवाकूणां निवासः कार्कवाकवम्। नगरमित्यत्र ओरञः त्रिशङ्कुना निर्वृत्तं त्रैशङ्कवम्। त्रिशङ्कुरस्मिन्नस्तीति त्रैशङ्कवम्। त्रिविष्टपमिति वा अत्रापि ओरञः अपवादोऽयमण् इति भावः। युक्तवदिति। युज्यते प्रत्ययेनेति युक्तशब्दो योगरूढ्या प्रकृतिमभिधत्ते। तस्येवेति वतिः।

**१२९१ कोपाधाच्च** ।४।२।७९। अण् । अञोऽपवादः । कार्णच्छिद्रकः कूपः। कार्कवाकवम् । त्रैशङ्कवम् ॥ **१२९२ वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतङ्गम- प्रगदिन्वराहकुमुदादिभ्यः** । ।४।२।८०। एभ्यः सप्तदशभ्यः सप्तदश क्रमात्स्युश्चतुरर्थ्याम्। अरीहणादिभ्यो वुञ्- । अरीहणेन निर्वृत्तमारीहणकम् । कृशाश्वादिभ्यश्छण्। कार्शाश्वीयम्। ऋश्यादिभ्यः कः। ऋश्यकम्। कुमुदादिभ्यष्टच्। कुमुदिकम् । काशादिभ्य इलः । काशिलः । तृणादिभ्यः सः । तृणसम्। प्रेक्षादिभ्य इनिः । प्रेक्षी अश्मादिभ्यो रः । अश्मरः । सख्यादिभ्यो ढञ् । साखेयम्। सङ्काशादिभ्यो ण्यः। साङ्काश्यम्। बलादिभ्यो यः। बल्यम्। पक्षादिभ्यः फक् । पाक्षायणः । (ग) **पथः पन्थ च** ॥ पान्थायनः । कर्णादिभ्यः फिञ् । कर्णायनिः । सुतङ्गमादिभ्य इञ् । सौतङ्गमिः । प्रगद्यादिभ्योञ्यः । प्रगदिन्, प्रागद्यः । वराहादिभ्यः कक् । वाराहकः । कुमुदादिभ्यष्ठक् । कौमुदिकः ॥ **१२९३ । जनपदे लुप्** ।४।२।८१। जनपदे वाच्ये चातुरर्थिकस्य लुप्स्यात् ॥ **१२९४ लुपि युक्तवद्व्यक्तिवचने** ।१।२।५१ । लुपि सति प्रकृतिवल्लिङ्गवचने स्तः । पञ्चालानां निवासो जनपदः पञ्चालाः । कुरवः अङ्गाः। वङ्गाः। कलिङ्गाः ॥ **१२९५ तदशिष्यं संज्ञाप्रमाणत्वात्** ।१।२।५३। युक्तवद्वचनं न कर्तव्यं संज्ञानां प्रमाणत्वात् ॥

---

व्यक्तिर्लिङ्गम्। वचनं सङ्ख्या। प्रकृतेर्यल्लिङ्गं या संख्या विद्येते ते उभे लुपि सति अवशिष्टस्य स्यातामित्यर्थः। यथा पञ्चालाः जनपदः जनपदस्यैकत्वात्पञ्चालशब्देऽपि एकत्वे प्राप्ते पञ्चालानामिति प्रकृतिगतं बहुत्वमनेनातिदिश्यते। लुपि सतीति किम् । शिबीनां निवासो जनपदश्शैबः। कुरवः कुरूणां निवासो जनपदः कुरवः कुरुदेश इत्यर्थः। एषूदाहरणेषु संख्यातिदेश एव फलत्वेन श्रूयते। उभयोरपि पुंस्त्वाल्लिङ्गातिदेशो निष्फल एव। अश्वत्थेन युक्ता पौर्णमासी अश्वत्थ इत्यादौ संख्यातिदेशस्य निष्फलत्वेऽपि लिङ्गातिदेशः सफलः। कटुबदर्योऽत्र सन्तीति कटुबदरी इत्यादौ लिङ्गसङ्ख्योभयातिदेशस्सफलः । व्यक्तिवचने किम्। विभक्त्या अप्यतिदेशो मा भूत्। अन्यथा पञ्चालानां जनपदः पञ्चालानामिति स्यात्। **तदशिष्यं** संज्ञाप्रमाणत्वात्। संज्ञानां प्रमाणत्वं तस्मात् अयमेव निर्देशः। पूरणगुणेति गुणेन षष्ठीसमासस्य निषेधो नित्य इति ज्ञापयतीति तत्रैव प्रतिपादितं मूले।

**१२९६ लुब्योगाप्रख्यानात्** ।१।२।५४। लुबपि न कर्तव्योऽवयवार्थस्येहाप्रतीतेः ॥ **१२९७ योगप्रमाणे च तदभावेऽदर्शनं स्यात्** ।१।२।५५ यदि हि योगस्यावयवार्थस्येदं बोधकं स्यात्तदा तदभावे न दृश्येत ॥

---

संज्ञाशब्दानां वेदवत् स्वत एव प्रमाणत्वम्। न तु प्रमाणान्तरापेक्षत्वम्। संज्ञानां साधुत्वसंपादनार्थं व्याकरणरूपं प्रमाणान्तरं नापेक्षितव्यम्। यथा यथा संज्ञाः तथा तथा तेषां प्रमाणभूतत्वादिति भावः । यथा डित्थडपित्थादयः। न हि अनयोः प्रकृतिप्रत्यविधायकं शास्त्रमस्ति तथा प्रकृतेऽपि अङ्गाः वङ्गाः इत्यादयः केषाञ्चित् देशानां संज्ञाः। स्वत एव बहुवचनान्ततया तेषां व्यवहार इति तथैव ते प्रमाणभूता इति। तच्छब्देन पूर्वोक्तः प्रकृतिवल्लिङ्गवचनातिदेशः परामृश्यते। तदेतदाह युक्तवद्वचनमिति। युक्तवद्व्यक्तिवचने स्त इत्येतद्वचनं वाक्यमित्यर्थः। अशिष्यम्। शासनानर्हमेव। अकर्तव्यमिति यावत्। लोकत एव सिद्धेर्व्यर्थमिति भावः। लुब्योगेति। पञ्चाला इत्यादिभिः रूढ्या जनपदविशेषा अभिधीयन्ते, न तु पञ्चालानां निवास इति योगेन। संज्ञानां प्रायशो रूढत्वात् । अतः पञ्चालादिभ्यश्चातुरर्थिकस्यैवानुत्पत्तिरिति कुतस्तस्य लुबिति भावः।

योगप्रमाणेति। ननु योगाप्रतीतेर्लुबपि न कर्तव्य इत्युक्तं यत्तदसत्। योगप्रतीतम्सम्भवादिति शङ्कायामिदं सूत्रमवतारितम्। प्रमाणशब्दो भावार्थे औपचारिकः। योगस्यापि पामाण्ये इत्यर्थः। प्रामाण्यञ्चात्र प्रतीतिविषयः। प्रतीतिविषयकप्रामाण्ये सतीति यावत्। योगोऽप्यत्र प्रतीयत एवेति प्रामाण्ये सतीति भावः।

यद्वा–प्रपूर्वकमाङ्धातोर्बोधोऽर्थः। योगमवयवार्थं प्रमाति बोधयतीति योगप्रमाणम्। तस्मिन् पञ्चालादिपदे योगप्रमाणे सतीत्यन्वयः। इदमेवाह–यदि हीत्यादिना, तदा–बोधकत्वपक्षे–तदभावे योगाभावे अवयवार्थप्रतीत्यभावे इत्यर्थः। अवयवार्थसम्बन्धाभावे इति यावत्। (सम्बन्धाभावपूर्वकत्वादप्रतीतेः) अदर्शनं स्यात्। पञ्चालादिपदानां जनपदेषु प्रयोगो न स्यादित्यर्थः। इदमेवाह न दृश्येतेति न प्रयुज्येतेत्यर्थः।अयं भावः। पञ्चालानां क्षत्रियाणां निवासः पञ्चालं इत्यस्य क्षन्त्रियनिवासोऽवयवार्थः। इदानीं क्षन्त्रियनिवासाभावेऽपि तदितरवर्णनिवासे सत्यपि स देशः पञ्चालशब्देन व्यवह्रियते। पञ्चालादिशब्दस्य अवयवार्थपुरस्कारेण प्रयोगाभ्युपगमे तु अयं व्यवहारो विरुद्ध्येत। व्यवहारविरोधस्तु महाननर्थः। सर्वेषां व्यवहारमूलत्वात्। तस्मात् व्यवहारानुसारेण पञ्चालादयो रूढाः विनाप्यवयवार्थं प्रतीयमानत्वात्तेषामिति जनपदे लुबिति सूत्रेण न प्रयोजनमिति भावः।

**१२९८ प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्** ।१।२।५६। प्रत्ययार्थः प्रधानमित्येवंरूपं वचनमप्यशिष्यम् । कुतः अर्थस्य लोकत एव सिद्धेः ॥ **१२९९ कालोपसर्जने च तुल्यम्** ।१।२।५७ । अतीताया रात्रेः पश्चार्धेनागामिन्याः पूर्वार्धेन च सहितो दिवसोऽद्यतनः । विशेषणमुपसर्जनमित्यादिपूर्वाचार्यैः परिभाषितं तत्राप्यशिष्यत्वं समानम् । लोकप्रसिद्धेः ॥**१३०० विशेषणानां चाजातेः** ।१।२।५२। लुबर्थस्य विशेषणानामपि तद्वल्लिङ्गवचने स्तो जातिं वर्जयित्वा। पञ्चाला रमणीयाः। गोदौ रमणीयौ।

---

**प्रधानेति** प्रकृत्यर्थः। प्रत्ययार्थं प्रत्युपसर्जनमिति प्रत्ययार्थः । प्रधानमिति वचनस्याभिप्रायः. अन्यत् शास्त्रात् इतरत् प्रमाणं यस्य तत्त्वादन्यप्रमाणत्वात् शास्त्रादन्यल्लोक एवेति कृत्वाऽऽह–अर्थस्य लोकत एव सिद्धेरिति। प्रमाणाद्धि प्रमेयसिद्धिरिति लोकतस्सिद्धिरित्युक्तम्। प्रमाणभूतो लोक एव अर्थ शास्तीति भावः। प्रमाति शास्तीति प्रमाणमिति व्युत्पत्तिः। अत्रेदमवधेयम्। शिबीनां निवासश्शैब इत्यत्र प्रकृत्यर्थः । शिबयः प्रत्ययार्थो निवासः । शिबिकर्तृकनिवास इति शाब्दबोधः । शिबयो विशेषणम्। निवासो विशेष्यम्। विशेषणमप्रधानम्। विशेष्यं प्रधानम्. इति प्रत्ययार्थो विशेष्यत्वेन प्रधानम्। प्रकृत्यर्थो विशेषणत्वेन अप्रधानमिति लोकादेव ज्ञायते। किं शास्त्रेणेति। ननु प्रत्ययार्थः प्रधानमिति वचनं नार्थं शास्ति, किन्त्वर्थगतं प्राधान्यादिकमेवेति। अर्थस्यान्यप्रमाणत्वादिति हेतुः। तद्वचनाशासनेन हेतुरिति चेन्मैवम्। अर्थो यदा लोकतस्सिद्धः तदा अर्थगतमन्यदपि लोकतस्सिद्धमेव इति कालोपसर्जने इति। समाहारद्वन्द्वात्सप्तमी, कालश्च उपसर्जनञ्च कालोपसर्जनम्। तत्प्रतिपादकं वाक्यमपि लक्षणया कालोपसर्जनमित्युच्यते। तस्मिन् कालवचने उपसर्जनवचने च अकर्तव्यत्वं तुल्यम् । कालवचनमुपसर्जनवचनञ्च न वक्तव्यमिति भावः। यद्वा काले उपसर्जने च अशिष्यत्वं तुल्यम्। कालः उपसर्जनञ्च शास्त्रेण न शास्यमित्यर्थः। अस्मिन् व्याख्याने लक्षणापर्यन्तानुधावनक्लेशो नेति बोध्यम्। भावस्त्वेक एव। कालवचनं पठति अतीताया इत्यादि, उपसर्जनवचनं पठति विशेषणमुपसर्जनमिति। लोक प्रसिद्धेः एतादृशः कालोद्यतन इत्यादिकं लोकव्यवहारादेव ज्ञायते इति भावः। तदशिष्यमित्यादिना। एतावता पूर्वाचार्यमतखण्डनं व्याख्यातम्। अधुना युक्तवद्भावे पूर्वाचार्यैरुक्तशेषं व्याख्याति–विशेषणानामित्यादिना । ननु लुपि युक्तवदिति सूत्रानन्तरमेव विशेषणानामिति सूत्रं तत्स्थवार्तिकानि च पूर्वाचार्यपरिभाषितानि व्याख्याय

अजातेः किम्। पञ्चाला जनपदः। गोदौ ग्रामः॥ **हरीतक्यादिषु व्यक्तिः**॥ हरीतक्याः फलानि हरीतक्यः॥ **खलतिकादिषु वचनम्**॥ खलतिकस्य पर्वतस्यादूरभवानि खलतिकं वनानि॥ **मनुष्यलुपि प्रतिषेधः**॥ मनुष्यलक्षणे लुबर्थे विशेषणानां न, लुबन्तस्य तु भवतीत्यर्थः। चञ्चा अभिरूपः॥

---

पश्चात्तदशिष्यमित्यादिसूत्राणि व्याख्येयानीति सङ्गतिमतिक्रम्य व्याख्यानक्रमोऽयमसङ्गत इति चेत्–सत्यम्। तथाऽपि नेदं युक्तवद्भावस्यैव विधायकं सूत्रं किन्तु जातेर्युक्तवद्भावप्रतिषेधपरमपीति युक्तवद्भावप्रतिषेधपरसूत्रव्याख्यानान्तरमस्य व्याख्यानं सङ्गच्छते। अस्यापि युक्तवद्भावप्रतिषेधपरत्वादिति। वस्तुतस्तु प्राचां मते यदसहनं तेन लुपि युक्तवदिति आरम्भे एव तदशिष्यमिति तन्मतं खंडितम्। खण्डनानन्तरं सिंहावलोकितेन पुनः प्राचां मतमवशिष्टं व्याख्यातुमारब्धमिति सङ्गतिरिह बोध्या। गाः दत्त इति गोदौ, गोदयोर्निवासो जनपदः गोदौ जनपदे णो लुप्। (गोदश्च गोदा च गोदाविति, पुमान् स्त्रियेत्येकशेषः । योगरूढ्या राजवाचको गोदशब्दः) गोदावित्ययं लुब्वत्त्वेन लुबित्युच्यते उपचारात्। अस्य लुपोऽर्थः जनपदः। तं प्रति विशेषणं रमणीयार्थः। तद्वाचकश्शब्दो रमणीयेति । इदमपि विशेषणमेव। अर्थस्य विशेषणत्वे शब्दस्यापि विशेषणत्वात्। यद्वा–लुबर्थोऽस्यास्तीति लुबर्थः । तस्य गोदाविति शब्दस्य विशेषणभूतो यश्शब्दः रमणीयेति तद्वत् लुबर्थवत् तस्येवेति वतिः। प्रकृते गोदावित्यस्येव लिङ्गवचने– पुंस्त्वं लिङ्गः द्वित्वं वचनम् स्तः रमणीयौ इति। लुबर्थविशेषणं यदि जातिस्तर्हि विशेषणस्य न लुबर्थवल्लिङ्गवचने–यद्वा–गोदौ ग्रामः। ग्राम इति जातिवाचकश्शब्दः । आकृतिग्रहणात्मकजातित्वस्य ग्रामे सत्त्वात्। (सर्वेषां ग्रामविशेषाणां सामान्यवाचको हि ग्रमशब्दः) तस्मात् ग्रामशब्दस्य गोदावित्यस्येव द्वित्वं न इति लक्ष्यलक्षणसमन्वयः। अस्मिन् सूत्रे प्राक्सूत्रं सर्वमनुवर्तते। तेन लुपि सति विशेषणानामपि प्रकृतिवल्लिङ्गवचने स्तः । न तु जातेरिति सूत्राक्षरार्थः। लुपि सति या प्रकृतिःतद्वत्विशेषणानामपि लिङगवचने स्त इत्यन्वयः। विशेषणानि च अर्थात् लुबर्थस्यैव प्रकरणाच्चेति बोध्यम्। इदञ्च सूत्रमकर्तव्यम्। विशेष्यं यल्लिङ्गं यद्वचनं विशेषणमपि तल्लिङ्गं तद्वचनमेवेति लोकव्यवहारस्य सत्त्वात्। न च जातेः विशेष्यलिङ्गवचनाभावार्थमिदमिति वाच्यम्। जातेरेकत्वेन पञ्चालाः जनपद इत्यादौ जनपदे एकत्वस्य भानसम्भवात् इति सूत्रकाराशयः। **हरीतक्यादिषु** व्यक्तिः। विशेषणानामिति सूत्रस्थं वार्तिकमिदम्। हरीतक्यादिभ्यश्चेति तु ४–३–१६७ सूत्रं लेखकप्रमादेनात्र कौमुद्यां

**१३०१। वरणादिभ्यश्च** ।४।२।८२। अजनपदार्थ आरम्भः। वरणानामदूरभवं नगरं वरणाः॥ **१३०२। शर्कराया वा** ।४।२।८३। अस्माच्चातुरर्थिकस्य वा लुप्स्यस्यात्॥ **१३०३। ठक्छौ च** ।४।२।८४। शर्कराया एतौ स्तः। कुमुदादौ वराहादौ च पाठसामर्थ्यात्पक्षे ठच्ककौ। वाग्रहणसामर्थ्यात्पक्षे औत्सर्गिकोऽण् तस्य लुब्विकल्पः। षड् रूपाणि। शर्करा। शार्करम्। शार्करिकम्। शर्करीयम्। शर्करिकम्। शार्करकम्॥ **१३०४। नद्यां मतुप्** ।४।२।८५। चातुरर्थिकः। इक्षुमती॥ **१३०५। मध्वादिभ्यश्च** ।४।२।८६। मतुप् स्याच्चातुरर्थिकः। अनद्यर्थ आरम्भः। मधुमान्॥ **१३०६। कुमुदनडवेतसेभ्यो ड्मतुप्** ।४।२।८७। कुमुद्वान्। नड्वान्। वेतस्वान्।

---

वार्तिकेऽप्यस्मिन् ४-३-१६१ इति संख्या लिखिता। हरीतक्यः आदिर्येषान्तेषु हरीतक्यादिगणपठितेषु शब्देष्वित्यर्थः। लुपि युक्तवदित्यनुवृत्तिः। हरीतक्यादिभ्यश्चेति लुप्। तसिन् सति युक्तवद्व्यक्तिस्स्यात्। न तु वचनमिति वचननिषेधो वार्तिकारम्भस्य पलम्। खलति कारिष्वितीदमपि वार्तिकम्। व्यक्तिनिषेधार्थमस्यारम्भः। खलतिकः पर्वतः। **चञ्चा**। चञ्चेव मनुष्यश्चञ्चा। संज्ञायाञ्चेति इवार्थे कनः, लुम्मनुष्य इति लुप्। अतः मनुष्यलक्षणोऽयं लुबर्थः। लुबर्थो मनुष्य इति यावत्। तद्विशेषणमभिरूप इति। अस्य प्रकृतिवन्न लिङ्गवचने। लिङ्गानिषेधे तु अभिरूपा इति स्यात्। मनुष्यलुपीति वार्तिके विशेषणानामित्यनुवर्तते। तेन लुबन्तस्य न प्रतिषेध इति सिद्धम्। इदमेवाह-लुबन्तस्य तु भवतीति। अन्यथा चञ्च इति स्यात्। वरणादिभ्यश्च जनपदे लुबिति सूत्राल्लुबित्यत्रानुवर्तते। वरणादिभ्यः परस्य चातुरर्थिकस्य लप्स्यादित्यर्थः। जनपदो नाम ग्रामः। नगरं त्तनम्। अजनपदत्वेन नगरादौ वाच्ये लुबप्राप्तौ सूत्रमिदम्। * **शर्करा** अस्मिन्नस्तीत्यादिविग्रहेषु, शर्करा ठक्। वृद्धिः। इकादेश शार्करिकं नगरम्। छः शर्करीयम्। ठच् शर्करिकम्। ठक्ठचोरादिवृद्धिरेव भेदः। कित्त्वाठ्ठक् वृद्धिः। ठचि तु नेति-कक् कित्त्वाद्वृद्धिः। शार्करिकम्। अण् शार्करम्। चातुरर्थिकस्य लुपि प्रकृतिवल्लिङ्गवचने स्त इति शर्करा। * **नद्याम्मतुप्**। प्रकृतिप्रत्ययसमुदायेन नद्यां वाच्यायां चातुरर्थिको मतुप् स्यात्। इक्षुभिर्निर्वृत्ता इक्षुमती नदी- इत्यादि। मधोर्निवासो मधुमान् देशः। बिसहिमादयो ग्राह्या आदिपदात्। गणोयम्। हिमस्य निवासो हिमवान् पर्वतः। ***कुमुदेति**। एभ्यो ड्मतुप् स्याच्चातुरर्थिकः। डित्करणं टेरिति टिलोपार्थम्। झय इति झयन्तान्मतोर्मस्य वस्स्यादिति वक्ष्यमाणेन - कुमुद्-नन् इत्यनयोर्झयन्तत्वान्मस्य वत्त्वम्।

आद्ययोः 'झयः १८९८' इति अन्त्ये 'मादुपधायाः- १८९७' इति वक्ष्यमाणेन वः ॥ 'महिषाच्चेति वक्तव्यम्' ॥ **महिष्मान्नाम देशः** ॥ **१३०७ । नडशादाड्ड्वलच्** ।४ ।२ ।८८ । नड्वलः । शादो जम्बालघासयोः इत्यमरः शाद्वलः ॥ **१३०८ । शिखाया वलच्** ।४ ।२ ।८९ । शिखावलम् ।. **१३०९ । उत्करादिभ्यश्छः** ।४ ।२ ।९० । उत्करीयः ॥ **१३१० । नडादीनां कुक् च** ।४ ।२ ।९१ । नडकीयम् । (ग) **क्रुञ्चा ह्रस्वत्वं च** ॥ क्रुञ्चकीयः ॥ (ग) **तक्षन्नलोपश्च** ॥ तक्षकीयः ॥ **१३११ । बिल्वकादिभ्यश्छस्य लुक्** ।६ ।४ ।१५३ । नडाद्यन्तर्गता बिल्वकादयस्तेभ्यश्छस्य लुक् तद्धिते परे । बिल्वा यस्यां सन्ति सा बिल्वकीया । तस्यां भवा बैल्वकाः । वेत्रकीयाः । वैत्रकाः । छस्य किम् । छमात्रस्य लुग्यथा स्यात्कुको निवृत्तिर्माभूत् । अन्यथा (प.) **संनियोगशिष्टानामिति कुगपि निवर्तेत** । लुग्ग्रहणं सर्वलोपार्थम् । लोपो हि यमात्रस्य स्यात् ॥ **इति चातुरर्थिकाः** ॥

## तद्धितेषु शैषिकाः २८ ।

**१३१२ । शेषे** ।४ ।२ ।९२ । अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः शेषः तत्राऽणादयः स्युः । चक्षुषा गृह्यते चाक्षुषं रूपम् । श्रावणः शब्दः ।

---

कुमुदान्यस्मिन् सन्तीति कुमुद्वान् देशः। नडोस्त्यस्मिन्निति नड्वान् देशः (नडः आंध्रे "क्रालु कसवु") वेतस् इत्यस्य अदुपधत्वान्मादुपधाया इति मस्य वत्वम्। वेतसास्तरुविशेषाः। अस्मिन्सन्तीति वेतस्वान्-देशः * **शिखया** निर्वृत्तो देशश्शिखावलम् क्लीबत्वं लोकात्। शिखानां निवास इत्यादयोऽप्यत्र विग्रहा ऊह्याः।*उत्करादिभ्यश्चातुरर्थिकः। छस्स्यात्। उत्करेण निर्वृत्तो देशः उत्करीयः। ***नडादीनां कुगागमः**। चात् छः चातुरर्थिकम्। ***क्रुञ्चाशब्दस्य कुगागमः**। छः-ह्रस्वत्वञ्च स्यादित्यर्थः । *तक्षन्शब्दस्य कुक् छः-नलोपश्च-***यमात्रस्येति**। डेलोप इत्यतो लोपेऽनुवर्तमाने सूर्यतिष्येत्यतो य इत्यप्यनुवर्तेत। तथा च छादेशे यावयवयकारस्यैव लोपः स्यात्। न तु सर्वस्य छस्येति तदर्थं लुग्ग्रहणमिति भावः। समाप्ताश्चातुरर्थिकाः।

**शैषिकाः**

● **शेषे**। प्राग्दीव्यतोऽण् इति अणधिकारः। उक्तातिरिक्तः शेषः। अपत्यार्थः। रक्ताद्यर्थाः।

औपनिषदः पुरुषः। दृषदि पिष्टा दार्षदाः सक्तवः। उलूखले क्षुण्ण औलूखलो यावकः। अश्वैरुह्यत आश्वो रथः। चतुर्भिरुह्यते चातुरं शकटम्। चतुर्दश्यां दृश्यते चातुर्दशं रक्षः। 'शेषे १३१२' इति लक्षणं चाधिकारश्च। 'तस्य विकारः १५१४' इत्यतः प्राक् शेषाधिकारः॥ **१३१३। राष्ट्रावारपाराद्घखौ** ।४।२।९३। आभ्यां क्रमाद्घखौ स्तः शेषे। राष्ट्रियः। अवारपारीणः॥ **अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम्**॥ अवारीणः। पारीणः। पारावारीणः। इह प्रकृतिविशेषाद्घादयष्ट्युठ्युलन्ताः प्रत्यया उच्यन्ते तेषां जातादयोऽर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते॥

---

चतुरर्थी च एतावता व्याख्याताः। तेभ्योऽर्थेभ्योऽन्योऽर्थश्शेष इत्युच्यते । तत्राण् स्यात्। यथा विहितमन्येऽपि घादयस्स्युः। लक्षणसूत्रमधिकारसूत्रञ्चेदम्। अणो विधायकत्वाल्लक्षणसूत्रं विधिसूत्रमित्यर्थः। उत्तरत्र अधिक्रियमाणत्वादधिकारसूत्रञ्च। लक्षणत्वात् शेषे अण् स्यादिति अधिकारत्वात्। तत्तत्सूत्रैकवाक्यतया घादयस्स्युरिति च उक्तम्। इदमेवाभिप्रेत्य अणादयस्स्युरिति मूले प्रोक्तम्। अधिकारस्य अवधिमाह-तस्य विकार इत्यतः प्रागिति। एतेन तस्य विकार इत्यारभ्य वक्ष्यमाण अर्थाश्शेषत्वेन गृह्यन्ते इति बोध्यम्। शेष इत्यस्य लक्षणत्वे उदाहरणानि चाक्षुषमित्यादीनि अणणन्तानि।

राष्ट्रे जातः भवः। राष्ट्रादागतः इत्यादिविग्रहेषु राष्ट्रिय इति भवति। एवमन्यत्राप्यूह्यम्। विगृहीतात् व्यस्तात्। अवारश्च पारश्च अवारपारौ तयोस्समाहारः अवारपारम् तस्मात् खस्स्यादिति व्याख्याय अवारशब्दात्पारशब्दाच्च खो वक्तव्य इति वार्तिकाशयः। अवारीणः। पारीणः । विपरीताच्च । अवारपारेत्येकपदत्वेऽपि तदवयवयोरवारपारयोर्वैपरीत्येन पाठे खस्स्यादिति च वक्तव्यमिति वार्तिकाशयः। पारावारादपि खस्स्यादिति यावत् । राष्ट्रश्च अवारपारश्च ताभ्यामित्येकोऽर्थः। अवारपारयोस्समाहारः अवारपारम्। राष्ट्रश्च अवारपारञ्च ताभ्यामित्यन्योऽर्थः। वैपरीत्येन पारावार इति तु सूत्राक्षरैर्न लभ्यत इति वार्तिकं तत्रावश्यकमेवेति तत्त्वम्। ननु सर्वप्रकृतिभ्यस्सर्वविभक्त्यन्तेभ्यः सर्वेष्वर्थेषु शेषेषु घादयः अनियमेन स्युः किमत आह इहेत्यादि। इह शेषाधिकारे तत्र जात इत्यादिभिः जाताद्यर्थविशेषाः तत्र जात इत्यादिभिः जातात्यर्थविशेषाः तत्रेत्याद्यास्समर्थविभक्तयश्च वक्ष्यन्त इति समर्थात् यद्विभक्त्यन्तात् अस्मिन्नर्थे प्रत्ययोत्पत्तिस्तत्सर्वं वक्ष्यत इत्यर्थः। यद्वा-इह राष्ट्रावारेत्यादिसूत्रेषु इत्यर्थः। वक्ष्यन्ते। तत्र जातः तत्र भवः तत आगतः इत्यादिसूत्रैरिति शेषः।

**१३१४। ग्रामाद्यखञौ** ।४।२।९४। ग्राम्यः। ग्रामीणः॥ **१३१५। कत्र्यादिभ्यो ढकञ्** ।४।२।९५।कुत्सितास्त्रयः कत्र्यः।तत्र जातादिः कात्रेयकः।नागरेयकः।ग्रामादित्यनुवृत्तेः ग्रामेयकः॥ **१३१६। कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु** ।४।२।९६। कौलेयकः श्वा। कौलोऽन्यः। कौक्षेयकोऽसिः। कौक्षोऽन्यः। ग्रैवेयकोऽलङ्कारः। ग्रैवोऽन्यः॥ **१३१७। नद्यादिभ्यो ढक्** ।४।२।९७। नादेयम्। माहेयम्। वाराणसेयम्। **१३१८। दक्षिणापश्चात्पुरसस्त्यक्** ।४।२।९८।दक्षिणेत्याजन्तमव्ययम्।दाक्षिणात्यः।पाश्चात्त्यः पौरस्त्यः॥ **१३१९।कापिश्याः ष्फक्** ।४।२।९९।कापिश्यां जातादि कापिशायनं मधु।कापिशायनी द्राक्षा॥ **१३२०। रङ्कोरमनुष्येऽण्च** ।४।२।१००। चात् ष्फक्। राङ्कवो गौः। राङ्कवायणः। मनुष्य इति किम्। राङ्कवको मनुष्यः॥ **१३२१। द्युप्रागपागुदक्प्रतीचो यत्** ।४।२।१०१। दिव्यम्। प्राच्यम्। अप्राच्यम्। उदीच्यम्। प्रतीच्यम्॥

---

जात इत्यादिभिरर्थविशेषाः। तत्रेत्यादिभिस्समर्थविभक्तयश्चेति विवेकः। यद्विभक्त्यन्तात् प्रत्ययोत्पत्तिस्सा विभक्तिस्समर्थविभक्तिः। समर्थपरिभाषया समर्थादेव प्रत्ययोत्पत्तिरिति निर्णीतत्वात्। विभक्त्यन्तगतं सामर्थ्यं विभक्तावारोप्यसमर्थविभक्तिरिति व्यवहारः। प्राधान्याद्विभक्तिगतमेव सामर्थ्यमिति वा। प्रत्ययार्थः प्रधानमिति परिभाषितत्वात्। ***ग्राम्यः** ग्रामे जातः भवः ग्रामादागतः इत्यादयो विग्रहाः। ग्रामाद्यखञौ स्तश्शेषे–इति सूत्रार्थः। ***कत्रिशब्दं** निर्वक्ति कुत्सितास्त्रय इति। कोः कत्तत्पुरुषे चेति कदादेशः। कत्रिषु जातः कात्रेयकः। ***कुलादिभ्यश्श्वादिषु** वाच्येषु शेषे ढकञ् स्यादित्यर्थः। श्वादिभिन्नेषु वाच्येषु औत्सर्गिकोऽण्। कुले जातः कौलेयक इत्याद्यूह्यम्। नद्यां भवं नादेयं जलम्। मह्यां जातं माहेयं तृणम्। वाराणस्या आगतं वाराणसेयं वस्त्रम्। इत्यादि * **दक्षिणा** दक्षिणदिशि भवो जातः तत आगतो वा दाक्षिणात्यः। त्यकः कित्त्वाद्वृद्धिः पश्चाद्भवः पाश्चात्यः। पुरो जातः पौरस्त्यः। पुरस् इति सान्तमव्ययम्। ***उदीच्यम्।** उदक्छब्दात्सप्तम्यन्तात् यति कृते उद ईत् इति ईत्वम्। प्रत्यक्छब्दात्तु अच इति च लोपे, चौ चेति दीर्घः। प्रतीच्यम्। ***तसि त्रयोस्तदन्तविधिः।** तसिलन्तेभ्यस्त्रान्तेभ्यश्च इति। ततस्त्य इत्यत्र तत इति तसिलन्तः। तत्रत्य इत्यत्र तत्रेति त्रान्तः औपरिष्टः।

**१३२२। कन्थायाष्ठक्** ।४।२।१०२। कान्थिकः। **१३२३। वर्णौ वुक्** ।४।२।१०३। वर्णुर्नदस्तस्य समीपदेशो वर्णुः, तद्विषयार्थवाचिकन्थाशब्दाद्वुक् स्यात्। यथा हि जातं हिमवत्सु कान्थकम्॥ **१३२४। अव्ययात्त्यप्** ।४।२।१०४। **अमेहक्वतसित्रेभ्य एव**॥ अमाऽन्तिकसहार्थयोः। अमात्यः। इहत्यः। क्वत्यः। ततस्त्यः। तत्रत्यः। परिगणने किम्। उपरिष्टाद्भव औपरिष्टः॥ **अव्ययानां भमात्रे टिलोपः**॥ अनित्योऽयं बहिषष्टिलोपविधानात्। तेनेह न। आरातीयः॥ **त्यब्नेर्ध्रुव इति वक्तव्यम्**॥ **नित्यः**॥ **निसो गते**॥ **१३२५। ह्रस्वात्तादौ तद्धिते** ।८।३।१०१। ह्रस्वादिणः परस्य सस्य षः स्यात्तादौ तद्धिते। निर्गतो वर्णाश्रमेभ्यो निष्ट्यश्चाण्डालादिः॥ **अरण्याण्णः**॥ आरण्याः सुमनसः॥ **दूरादेत्यः**॥ दूरेत्यः॥ **उत्तरादाहञ्**॥ औत्तराहः॥ **१३२६। ऐषमोह्यःश्वसोऽन्यतरस्याम्** ।४।२।१०५। एभ्यस्त्यब्वा। पक्षे वक्ष्यमाणौ ट्युट्युलौ। ऐषमस्त्यम्। ऐषमस्तनम्। ह्यस्त्यम्। ह्यस्तनम्। श्वस्त्यम्। श्वस्तनम्। पक्षे शौवस्तिकं वक्ष्यते॥

---

ननु औत्सर्गिकेऽणि औपरिष्टाद इति स्यादत आह–अव्ययानां भमात्रे टिलोप इति अणि परतः पूर्वस्य भास्यतेः आद् इत्यस्य लोपेन औपरिष्ट इति भवतीति भावः। बहिर्भवं बाह्यमिति रूपसिद्ध्यर्थं बहिषः टिलोपो विहितः। बहिषः अव्ययत्वेन अव्ययानां भमात्र इति टिलोपे सति बहिषष्टिलोपविधानं व्यर्थं सत् अव्ययानामित्यस्य अनित्यत्वं ज्ञापयतीति भावः। आरात् भवः आरातीयः। आरात् इति तान्तमव्ययम् । दूरसमीपयोः ***त्यम्नो** रिति। नि इत्यव्ययात्त्यम् प्रत्ययस्स्यात् ध्रुवार्थे । त्यपोऽपवादः ***सुइत्युपसर्गात्** गतार्थे त्यम् स्यात्। निष्टचः निर्गत इत्यर्थः। योगरूढ्या चण्डालादिः। *अरण्यात् णप्रत्ययस्स्याज्जाताद्यर्थे। णित्वमादिवृध्यर्थम्। आरण्याः * **दूरशब्दादेत्यप्रत्ययस्स्याज्जाताद्यर्थे।** दूरे भवो दूरेत्यः। दूर एत्य इति स्थिते वृद्धिरेचीत्यस्मात्परत्वाद्यस्येति लोपः। ***उत्तरादागतः** औत्तराहः। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापीति उत्तरस्या दिशः आगतश्च औत्तराहः* अस्मिन्संवत्सरे ऐषम इति निपात्यते वक्ष्यते सद्यः परुत्परारीति सूत्रव्याख्यानावसरे मूले एव। ऐषमसादीनां समाहारद्वन्दः। अव्ययत्वादव्ययात्त्यप् इति नित्ये त्यपि प्राप्ते विभाषार्थमिदम्। टचुटचुलोर्न रूपे विशेषः। ऐषमस्तनम्। टस्य इत्संज्ञया लोपे योरनादेशः। सायं चिरमिति टचुटचुल्सन्नियोगेन तुट्च्य विधीयते। टित्वादनादेशस्याद्यवयवोऽयम्। तुटचुकार उच्चारणार्थः। ऐषमस्तनम् । अस्मिन्संवत्सरे भवमित्यर्थः। शौवस्तिकम्। श्वसस्तुट्चेति

**१३२७। तीररूप्योत्तरपदादञ्ञौ** ।४।२।१०६। यथासंख्येन। काकतीरम्। पाल्वलतीरम्। शैवरूप्यम्। तीररूप्यान्तादिति नोक्तम्। बहुच्पूर्वान्माभूत्। बाहुरूप्यम्॥ **१३२८।दिक्पूर्वपदादसंज्ञायां ञः** ।४।२।१०७।अणोऽपवादः।पौर्वशालः।असंज्ञायां किम्। संज्ञाभूतायाः प्रकृतेर्माभूत्। पूर्वेषुकामशम्यां भवः पूर्वैषुकामशमः। 'प्राचां ग्रामनगराणाम् १४००' इत्युत्तरपदवृद्धिः॥ **१३२९। मद्रेभ्योऽञ्** ।४।२।१०८। दिक्पूर्वपदादित्येव। 'दिशोऽमद्राणाम् १३९९' इति मद्रपर्युदासादादिवृद्धिः। पौर्वमद्रः। आपरमद्रः॥ **१३३०। उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्** ।४।२।१०९।अञ् स्यात्। शैवपुरम्। **१३३१। प्रस्थोत्तरपदपलद्यादिकोपधादण्** ।४।२।११० ।माहिकिप्रस्थः। पालदः। नैलीनकः॥

---

ठञस्तुडागमः। द्वारादिनाञ्चेति ऐजागमः। ***ञ्-यञ्** इत्येतौ स्तः। अञोञित्त्वफलप्रदर्शयितुं पाल्वलतीरमित्युदाहरणान्तरम्। पल्वलं ह्रदः । पल्वलतीरे जातादि पाल्वलतीरं ञित्वादादिवृद्धिः। शिवरूप्ये जातादि शैवरूप्यम्। रूपादाहतप्रशंसयोरिति यतिरूप्यं । ननु शिवरूप्यादपि अञेव विधीयतां किं यञा इति न च वाच्यम्। अञि यस्येति लोपे यलोपे शैवरूपमिति स्यादिति अनापत्यत्वादापत्येस्येति ईकारपरकत्वाभावात् हलस्तद्धितस्येति यलोपः। शैवरूपि इति स्यात्। यञन्तात्तु अदन्तत्वाट्टापि शैवरूप्या इति स्यादिति फलभेदाद्यञ्विधिः ***दिक्पूर्वपदादिति** असंज्ञायामिति पञ्चम्यर्थे सप्तमी । अत्र दिक्छब्दो दिशि दृष्टे शब्दे लाक्षणिकः। सहपूर्वपदम् यस्य तस्मात् जाताद्यर्थे अणि शेषे इति सूत्रात्प्राप्ते तदपवादत्वे ठञप्रत्ययः। ञ् इत्संज्ञः अ इति शिष्यते। पूर्वस्याम् शालायां भवः पौर्वशालः । ञाणोस्स्वरे विशेषः। स्त्रियाञ्च । ञान्ताट्टाप् (अदन्तत्वात्) अणणन्तात्तु ङीप् इति रूपे विशेषः। पूर्वशालावयवस्य पूर्वपदस्य प्रतिदिग्वाचकत्वाभावेदिदृष्टत्वात् पूर्वशालेति दिक्पूर्वपदम् पदम्। पूर्वेषु कामशमीति कस्याश्चित्पुरसंज्ञा। संज्ञात्वात् दिक्पूर्वपदत्वेप्यस्मान्न ञः प्रकृतेः जातिप्रत्ययं प्रति प्रकृतिभूतादित्यर्थः। उत्तरपदवृद्धिः। उत्तरपदस्य इषुकामशमीत्यस्य अचामादेरचोवृद्धिरित्यर्थः। ***मद्रपर्युदासात्** तेन हि उत्तरपदवृद्धिर्विधीयते।मद्रपर्युदासाभावे दिक्पूर्वान्मद्रादप्यञि उत्तरपदवृद्धौ पूर्वमाद्र इति स्यादिति भावः ***प्रस्थोत्तरपदः** पलद्याधिः कोपथः एतेषां समाहारः पलद्याधिर्गणः। प्रस्थेति पदम् उत्तरपदम् यस्य तस्मात्प्रस्थोत्तरपदात्-क् उपथा यस्य तस्मात् कोपधात् पलदीआदिर्यस्य तस्मात्पलद्यादेः एभ्यो जाताद्यर्थे अण्स्यात्। औत्सर्गिकाणपवादस्य

**१३३२। कण्वादिभ्यो गोत्रे** ।४।२।१११। एभ्यो गोत्रप्रत्ययान्तेभ्योऽण् स्यात्। कण्वो गर्गादिः। कण्वस्य छात्राः काण्वाः॥ **१३३३। इञश्च** ।४।२।११२। गोत्रे य इञ् तदन्तादण् स्यात्। दाक्षाः। गोत्रे किम्। सौतङ्गमेरिदं सौतङ्गमीयम्। गोत्रमिह शास्त्रीयं नतु लौकिकम्। तेनेह न। पाणिनीयम्॥ **१३३४। न द्व्यचः प्राच्यभरतेषु** ।४।२।११३। 'इञश्च १३३३' इत्यणोऽपवादः। प्राष्ठीयाः। काशीयाः। भरतानां प्राच्यत्वेऽपि पृथगुपादानमन्यत्र प्राच्यग्रहणे भरतानामग्रहणस्य लिङ्गम्॥

---

उदीच्या ञः अपवादोऽयमण्। महकि प्रस्थे पुरे जातादिर्माहकिप्रस्थः पलद्याम् भवादिः पालदः। निलीनके जातादिर्नैलीनकः * **छात्राः** तस्येदमिति वक्ष्यमाणेन अणश्छात्रार्थकत्वम्। इदमसर्वनाम्नः वक्तृविवक्षया छात्रादिसर्वार्थबोधकत्वसम्भवात्। कण्वस्यापत्यम् काण्व्यः। ततोऽणि यस्येति लोपे आपत्यस्येति यलोपः काण्वाः। काण्व्यस्यापत्यमिति विग्रहे तु यञञोश्चेति फक्। काण्वायन इति रूपम्। ञञोरित्यस्यापत्याधिकारस्थत्वादपत्ये एव फक् न तु शेषे इति। * **इञश्च**। अत्र गोत्रे इत्यनुवर्तते । प्रत्ययग्रहणे तदन्तविधिः । दक्षस्यापत्यम् दाक्षिः । तस्य च्छात्रा दाक्षाः । ननु शेषे इत्यनेन औत्सर्गिकेऽणि प्राप्ते कण्वादिभ्य इति इञश्चेति च सूत्रद्वयमण्विधायकं व्यर्थम् इति चेत् मैवम् । गोत्रे एवाणि ञौ न त्वन्यत्रेति नियमार्थम्। गोत्रप्रत्ययान्तेभ्य एव अणिञौ । कण्वादिभ्यः इञन्तेभ्यश्च अगोत्रेभ्यस्तु वृद्धाच्छ इत्यादीनि यथाप्राप्तं भवन्ति इति भावः। यथा युवप्रत्यये काण्वायनाः तस्य च्छात्राः वृद्धाच्छः। काण्वायनीयाः। दाक्षायणस्य च्छात्रा दाक्षायणीयाः। असति त्वस्मिन्सूत्रे अत्राप्यण् स्यादिति।

पाणिनीयम्। पणिनोऽपत्यं पाणिनिरिति । अनन्तरापत्योयम्। अपौत्रप्रभृतित्वान्न शास्त्रीयगोत्रान्तः। लौकिकगोत्रे ञन्तत्वान्नात्राण्। किन्तु वृद्धाच्छः। पाणिनिना प्रोक्तं पाणिनीयम्। न च काण्व्यस्य छात्राः काण्वाः । दाक्षेश्छात्रा दाक्षा इत्यत्रापि परत्वाद्वृद्धाच्छ्स्यादिति वाच्यम्। प्रतिपदोक्तत्वेन अनवकाशत्वेन च अपवादत्वादेतत्सूत्रद्वयोक्तस्याणः न द्व्यच इति। इञिति गोत्रे इति च अत्रानुवर्तते। प्राच्यगोत्रे भरतगोत्रे च य इञ् तदन्तो यो द्व्यच्कः तस्मान्नाण् इति सूत्रार्थः। द्व्यच्शब्दात् पञ्चमिद्व्यच इति प्रष्टस्य गोत्रापत्यं प्राष्टिः। तस्य च्छात्राः प्राष्टीयाः । वृद्धाच्छः कशस्य गोत्रापत्यं काशिः। तस्य च्छात्राः काशीयाः। प्राच्येति किं दाक्षीयाः । द्व्यचः किं । भरतस्य गोत्रापत्यं भारतिः। तस्येमे भारताः। लिङ्गम्। प्राच्यपदेनैव भरतग्रहणे सति

**१३३५। वृद्धिर्यस्याचामादिस्तद्वृद्धम्** ।१ ।१ ।७३। यस्य समुदायस्याचां मध्ये आदिर्वृद्धिस्तद्वृद्धसंज्ञं स्यात्॥ **१३३६। त्यदादीनि च** ।१ ।१ ।७४। वृद्धसंज्ञानि स्युः॥ **१३३७। वृद्धाच्छः** ।४ ।२ ।११४। शालीयः। मालीयः। तदीयः॥ **१३३८। एङ्प्राचां देशे** ।१ ।१ ।७५ एङ् यस्याचामादिस्तद्वृद्धसंज्ञं वा स्याद्देशाभिधाने। एणीपचनीयः। गोनर्दीयः। भोजकटीयः। पक्षे अणि। ऐणीपचनः। गौनर्दः। भौजकटः। एङ् किम्। आहिच्छत्रः। कान्यकुब्जः॥ **वा नामधेयस्य वृद्धसंज्ञा वक्तव्या**॥ दैवदत्तः। देवदत्तीयः।।

---

पृथग्भरतग्रहणं व्यर्थं सत् प्राच्यपदेन भरतानां ग्रहणं नेति ज्ञापयतीति भावः। अन्यत्रेति। इह प्राच्यानां भरतानाञ्च अण्निषेधरूपकार्यस्य समानत्वात्। प्राच्यपदेन भरतग्रहणे सत्यपि न फलवैषम्यमिति अन्यत्रेत्युक्तम्। वस्तुतस्तु तादृशज्ञापनेन प्राच्यानां योऽण्निषेधस्स भरतानां नैव स्यादिति इहापि ज्ञापनानन्तरं चरितार्थ एवेति बोध्यम्। ***वृद्धिः।** वृद्धिरादैजिति आदैजन्यतमः। * **वृद्धाच्छस्याज्जाताद्यर्थे।** देशवाचिनः पदस्याचाम्मध्ये आदिरच्। यदि एकारौकारौकारान्यतरः। तर्हि तत्पदवृद्धं स्याद्वेति निष्कृष्टार्थः। (एङो गुणत्वेन अवृद्धित्वात्-वृद्धिरिति सूत्रेण वद्धसंज्ञाऽप्राप्तावयमारंभः) यस्याचामादिस्तद्वृद्धमित्य—स्यात्रानुवृत्तेरयमर्थस्सूत्राल्लभ्यते। एणी पचनादयः देशाः। तत्र जातादिरेणी पचनीय इत्यादिः। गोनर्दीयः पतञ्जलिः। गोनर्द देशे पतञ्जलेरवतीर्णत्वात्। पक्षे प्राचां ग्रहणेन वृद्धसंज्ञाविकल्पस्य फलितत्वात्। संज्ञाया अभावपक्षे वृद्धाच्छस्याप्राप्तौ औत्सर्गिकोऽण् स्यादिति भावः। * **वा** नामधेयस्येत्यादिवार्तिकम् वृद्धिर्यस्येति सूत्रस्थम्। अत एव वा ग्रहणं कृतम्। एङ्सूत्रस्थत्वे नामधेयस्य चेत्येवालम् प्राचामित्यस्यानुवृत्त्या विकल्पस्य लब्धत्वात् अप्राप्तविभाषेयम्। तथा हि देवदत्तशब्दे आद्यचः अवृद्धित्वाद्वृद्धिरिति सूत्रात् एङ्त्वेऽपि अदेशवाचित्वादेङ्सूत्रात्। अत्यदादित्वात्त्यदादिसूत्राच्च वृद्धसंज्ञाया अप्राप्तावस्य वार्तिकस्यारम्भात्। अत्र वा नामधेयस्य इत्येतावदेव वार्तिकम्। वृद्धसंज्ञावक्तव्येति तु अनुवृत्त्या लब्धस्य वृद्धमित्यस्य अर्थकथनम्।नामधेयस्येति न स्वरूपग्रहणम्।नाम-धेयवाचिनः शब्दस्य वृद्धसंज्ञाविकल्पेन वक्तव्येति वार्तिकार्थः। नामभूतस्य शब्दस्येति। वस्तुतस्तु उभयत्र विभाषेयं देवदत्तादावप्राप्ते नारायणादौ प्राप्ते च विभाषात्वात् प्राप्तविभाषैवेति शंकां वारयितुं दैवदत्त इत्युदाहरणम्। तथा नारायणीयं धनुरिति नारायणमिति च तित्तिरिणा प्रोक्तं तैत्तिरीयमित्यादय उदाहर्तव्याः। * **जश्त्वम्।** झलाञ्जशोन्त इति सूत्रेणेति शेषः। ननु भवत् यी य इति स्थिते यचि भमिति भत्वान्न जश्त्वमिति

**१३३९। भवतष्ठक्छसौ** ।४।२।११५। वृद्धाद्भवत एतौ स्तः। भावत्कः। जश्त्वम्। भवदीयः वृद्धादित्यनुवृत्तेः शत्रन्तादणेव। भावतः॥ **१३४०। काश्यादिभ्यष्ठञ्ञिठौ** ।४।२।११६। इकार उच्चारणार्थः। काशिकी। काशिका। बैदिकी। बैदिका॥ (ग) **आपदादिपूर्वपदात्कालान्तात्**॥ आपदादिराकृतिगणः। आपत्कालिकी। आपत्कालिका॥ **१३४१। वाहीकग्रामेभ्यश्च** ।४।२।११७। वाहीकग्रामवाचिभ्यो वृद्धेभ्यष्टञ्ञिठौ स्तः। छस्यापवादः। कास्तीरं नाम वाहीकग्रामः। कास्तीरिकी। कास्तीरिका॥ **१३४२। विभाषोशीनरेषु** ।४।२।११८। एषु ये ग्रामास्तद्वाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ वा स्तः। सौदर्शनिकी। सौदर्शनिका। सौदर्शनीया॥ **१३४३। ओर्देशे ठञ्** ।४।२।११९। उवर्णान्ताद्देशवाचिनष्ठञ्। निषादकर्षूः। नैषादकर्षुकः। 'केऽणः ८३४' इति ह्रस्वः। देशे किम्। पटोश्छात्राः पाटवाः। ञिठं व्यावर्तयितुं ठञ्ग्रहणम्। वृद्धाच्छं परत्वादयं बाधते। दाक्षिकर्षुकः॥

---

चेन्मैवम्। सिति चेत्यस्य भत्वापवादत्वात्। छस् इत्यस्य णित्वात् भवत् इत्यस्य पदत्वमिति शत्रन्तादेव। भातेर्डवतुवति डवत्वन्तस्यैव त्यदादिषु पाठः। न तु भुवश्शत्रन्तस्येति अत्यदादित्वेन अवृद्धत्वादणिति भावः। भवतश्छात्रा भावतः औत्सर्गिकोऽण्। अणि पूर्वस्य भत्वान्न जश्त्वेन तकारस्य दकारः। ***ठञ्ञिठः**–ञ् इत्–ञिठे इकारश्च इत्। उभयत्रापि ठशिष्यते काश्यां जातादिः काशिकः इति पुंसि न रूपभेदः। स्त्रियान्तु टिड्ढाणसूत्रे ठञः ग्रहणात् ठयन्तात् ङीप् ञिठान्तात् अदन्तलक्षणष्टाप्। अमुमेव भेदं दर्शयितुं स्त्रियामुदाहरति काशिकी इत्यादि ञित्त्वफलं दर्शयितुं काश्यादिगणपठितात् वेदशब्दात् ठञ्ञिठा उदाहरति वैदिकी वैदिका इति।वेदस्येयं ऋक् वैदिकी वैदिकेति च ठस्य इकादेशः यस्येति लोपः आदिवृद्धिः ङीष्टापौ * **बाहीकेति** वृद्धाच्छ इति सूत्रान्मण्डूकप्लुत्या अत्र वृद्धादिति अन्वेति। बाह्लीक इति कश्चन देशः। तत्रस्था ग्रामाः कास्तीरादयः। छस्यापवादः। वृद्धाच्छस्येत्यर्थः। कास्तीराजस्तुन्द इति निपातनात्सुट्–कास्तीरम्। ***सौदर्शनीया** वा ग्रहणादपवादाभ्यां ठञ्ञिठाभ्याम्मुक्ते औत्सर्गिको वृद्धाच्छः। सुदर्शने जातादिस्सौदर्शनीया * **दाक्षीकर्षुरिति ग्रामः**। वृद्धत्वाच्छः । प्राप्तस्सन् परेणठञौ बाध्यते उगन्तत्वात्कः ठ्स्य दाक्षीकर्षुकः। (इसुसुक्तान्तादिति सूत्रे इस् उस् इत्यत्र सवर्णग्रहणेन ईस् ऊस्–इत्येतदन्तेभ्योऽपि परस्य ठस्य कादेशस्स्यादेवेति बोध्यम्।) वृद्धात्प्राचाम्।

**१३४४। वृद्धात्प्राचाम्** ।४।२।१२०। प्राग्देशवाचिनो वृद्धादेवेति नियमार्थं सूत्रम्। आढकजम्बुकः। शाकजम्बुकः। नेह। मल्लवास्तु, माल्लवास्तवः॥ **१३४५। धन्वयोपधाद्वुञ्** ।४।२।१२१। धन्वविशेषवाचिनो यकारोपधाच्च देशवाचिनो वृद्धाद्वुञ् स्यात्। ऐरावतं धन्व ऐरावतकः। साङ्काश्यकाम्पिल्यशब्दौ 'वुञ्छण्-१२९२' आदिसूत्रेण ण्यान्तौ। साङ्काश्यकः। काम्पिल्यकः॥ **१३४६। प्रस्थपुरवहान्ताच्च** । ४।२।१२२। एतदन्ताद्वृद्धाद्देशवाचिनो वुञ् स्यात्। छस्यापवादः। मालाप्रस्थकः। नान्दीपुरकः। पैलुवहकः। पुरान्तग्रहणमप्रागर्थम्। प्राग्देशे तूत्तरेण सिद्धम्॥ **१३४७। रोपधेतोः प्राचाम्** ।४।२।१२३। रोपधादीकारान्ताच्च प्राग्देशवाचिनो वृद्धाद्वुञ् स्यात्। पाटलीपुत्रः। ईतः, काकन्दकः॥

---

ओर्देशे ठञिति सूत्रं सर्वमत्रानुवर्तते। प्राग्देशवाचिनः उवर्णान्तात् वृद्धात् जाताद्यर्थे ठञ् स्यादिति सूत्रार्थः। ननु ओर्देश इत्यनेनैव प्राचां देशे वृद्धादौरपि ठञः प्राप्तौ किमनेनेत्यत आह–नियमार्थमिति। सिद्धे सत्यारभ्यमाणत्वं हि नियमस्य लक्षणम्। नियमशरीरमाह – प्राग्देशवाचिनो वृद्धादेवेति प्राग्देशवाचिनः ओर्यदि ठञ् तर्हि वृद्धादेव। अवृद्धात्तु न ठञिति तदर्थः। ***धन्वयोपधाद्वुञ्।** वृद्धादतिदेशे इति च अत्रानुवर्तेते । धन्वेत्यत्रार्थग्रहणम्। धन्वयोपधादिति समाहारः। धन्वनो योपधाच्चेत्यर्थः। धन्वविशेषवाची सन् यो देशवाची वृद्धः तस्मात् योपधो यो देशवाची वृद्धः तस्माच्च शेषेवुञ् स्यादित्यर्थः। धन्वशब्दो मरुभूमिवाचकः। ऐरावतशब्दो धन्वविशेषवाचको देशवाचकश्च। इरा आपस्सन्त्यस्मिन्निति इरावती नदी। नद्यां मतुप्। इरावत्यस्मिन् देशेऽस्तीति ऐरावतं देशः क्लीबत्वं लोकात् । तदस्त्यस्मिन् देशे तन्नाम्नीति औत्सर्गिकोऽण् तत्र जातादिः ऐरावतकः वोरकादेशः–यस्येति लोपः–दिशि दृष्टश्शब्दो दिक्छब्द इतिवत् ऐरावतशब्दः । सम्प्रति देशवाच्यपि पूर्वं मरुभूम्नि दृष्ट इति मरुविशेषवाचकत्वं देशवाचकत्वं च संगच्छते। यद्वा अनुवर्तितं देशे इति पदम्। धन्वनि नान्वेति। तेन धन्वविशेषवाचिनो वृद्धाद्वुञ् स्यात्। योपधाद्देशवाचिनो वृद्धाद्वुञ् स्यादिति च सूत्रार्थः। ऐरावतशब्दो रूढ्या धन्ववाचकः। अत एव ऐरावतं धन्व इति मूले धन्वनो देशत्वेन धन्वविशेष वाचिन इत्यनेनैव देशवाचित्वसम्भवे धन्वन इत्यस्वदेशे इति विशेषणं व्यर्थमिति। देशे इत्येतद्धन्वनि नान्वेतीत्युक्तम्। इदमेव व्याख्यानं सम्यक् लाघवात्। ***प्रस्थेति**। प्रस्थोत्तरपदादिति सूत्रे प्रस्थग्रहणमवृद्धे चरितार्थमिति वृद्धात् प्रस्थान्तात्तु परत्वादनेन वुञ्।

**१३४८। जनपदतदवध्योश्च** ।४।२।१२४। जनपदवाचिनस्तदवधिवाचिनश्च वृद्धाद्वुञ् स्यात्। आदर्शकः। त्रैगर्तकः॥ **१३४९। अवृद्धादपि बहुवचनविषयात्** । ४।२।१२५। अवृद्धाद्वृद्धाच्च जनपदतदवधिवाचिनो बहुवचनविषयात्प्रातिपदिकाद्वुञ् स्यात्। अवृद्धादणो वृद्धाच्छस्यापवादः। अवृद्धाज्जनपदात् आङ्गकः। अवृद्धाज्जनपदावधेः, आजमीढकः। वृद्धाज्जनपदात्, दार्वकः। वृद्धाज्जनपदावधेः।, कालञ्जरकः। विषयग्रहणं किम्। एकशेषेण बहुत्वे माभूत्। वर्तनी च वर्तनी च वर्तनी च वर्तन्यः, तासु भवो वार्तनः॥

---

ननु नान्दीपुरेत्यस्य रोपधत्वाद्रोपधे रोरिति वक्ष्यमाणेनैव वुञ् सिद्ध्यतीति पुरग्रहणं व्यर्थमत आह–अप्रागर्थमिति प्राग्देशातिरिक्तदेशार्थमित्यर्थः। प्राग्देशवाचिन एव रोपदाद्वुञो वक्ष्यमाणत्वादिति भावः। सूत्रे अन्तशब्दो द्वन्द्वान्ते श्रूयमाणः प्रत्येकं संबध्यते इति प्रस्थान्तात्पुरान्ताद्वहान्ताच्चेत्यर्थः। अमुमेवार्थं मनसि कृत्वाऽऽह पुरान्तग्रहणमिति। पुरान्तादित्यस्य ग्रहणमित्यर्थः। ***काकन्दकः**। काकन्दी इति देशः । तत्र जाताद्यर्थे वुञि यस्येति चेति ईलोपे वोरकादेशे काकन्दकः। * **बहुवचनविषयात्** बहुवचनमेव विषयो यस्य तस्मात् बहुवचनस्यैव विषयभूतादिति वा। बहुवचने बह्वर्थोक्तावेव यस्य प्रयोग उपलभ्यते न त्वेकवचने स बहुवचनविषय इत्युच्यते इत्यर्थः। नित्यबहुवचनान्तादिति यावत्। बहुवचनान्तादित्युक्तौ तु वर्तनीषु भवो वार्तन इत्यत्रापि वुञ् स्यात्। वर्तनीष्वित्यस्य बहुवचनान्तत्वात्। विषयग्रहणे तु न हि वर्तनी शब्दो नित्यबहुवचनान्त इति न तत्र वुञः प्रसक्तिरिति बोध्यम्। अन्तेति लघुनिर्देशं विहाय विषयेति गुरुनिर्देशादेव नित्यत्वं ज्ञाप्यत इति व्याख्यात्राशयानुगुण्येन बहुवचनविषयादित्यत्र समासेऽपि एवकारः प्रयुक्त इति च बोध्यम्। अङ्गानां निवासः अङ्गाः। जनपदे लुबिति लुपि युक्तवद्व्यक्तिवदने जनपदोऽयम् तत्र जातादिः आङ्गकः। अजमीढानान्निवासः अजमीढाः जनपदावधिभूतो जनपदोऽयम्। कस्य चिज्जनपदस्य प्रधानस्य सीमाभूतोऽयं जनपद इति बोध्यम्। तत्र जातादिराजमीढकः। दार्वेषु (जनपदे) जातादिर्दार्वकः। कालञ्जरेषु कालञ्जरकः। त्रिगर्तेषु जातादिः त्रैगर्तकः। अवृद्धादित्यस्यैवेदमुदाहरणम्। ननु वा नामधेयस्येति देशविशेषनाम्नः त्रिगर्तेत्यस्यापि वृद्धसंज्ञास्तीति जनपदेति सूत्रस्यैवेदमुदाहरणमिति चेन्मैवम्। नामकरणसंस्कारवतां मनुष्याणां देवानाञ्च यन्नामधेयं तस्यैव वृद्धसंज्ञाविधानमित्यभ्युपगमात्। * **कच्छाग्नीति**।

**१३५०। कच्छाग्निवक्त्रवर्तोत्तरपदात्** ।४।२।१२६। देशवाचिनो वृद्धादवृद्धाच्च वुञ् स्यात्। दारुकच्छकः। काण्डाग्नकः। सैन्धुवक्त्रकः। बाहुवर्तकः ॥ **१३५१। धूमादिभ्यश्च** ।४।२।१२७। देशवाचिभ्यो वुञ्। धौमकः। तैर्थकः॥ **१३५२। नगरात्कुत्सनप्रावीण्ययोः** ।४।२।१२८। नगरशब्दाद्वुञ् स्यात्कुत्सने प्रावीण्ये च गम्ये। नागरकश्चौरः शिल्पी वा। कुत्सनेति किम्। नागरा ब्राह्मणाः॥ **१३५३। अरण्यान्मनुष्ये** ।४।२।१२९। वुञ्। **अरण्याण्ण** इत्यस्यापवादः। **पथ्यध्यायन्याय- विहारमनुष्यहस्तिष्विति वाच्यम्**॥ आरण्यकः पन्थाः, अध्यायो, न्यायो, विहारो, मनुष्यो, हस्ती वा॥ **वा गोमयेषु**। आरण्यकाः आरण्या वा गोमयाः॥ **१३५४। विभाषा कुरुयुगन्धराभ्याम्** ।४।२।१३०। वुञ्। कौरवकः। कौरवः। यौगन्धरकः। यौगन्धरः॥ **१३५५। मद्रवृज्योः कन्** ।४।२।१३१। जनपदवुञोऽपवादः। मद्रेषु जातो मद्रकः। वृजिकः॥ **१३५६। कोपधादण्** ।४।२।१३२। माहिषिकः॥ **१३५७। कच्छादिभ्यश्च** ।४।२।१३३। देशवाचिभ्योऽण्। वुञादेरपवादः। काच्छः। सैन्धवः॥

---

बहुवचनविषयादिति निवृत्तम्। वृद्धादवृद्धाद्देशे वृञ् इत्येतेषामनुवृत्तिः। कच्छाद्यन्यतममुत्तरपदं यस्य तस्मात् इति समासार्थः। कच्छ-अग्नि-वक्त्र-वर्त-एतेषां द्वन्द्वः। कान्डाग्नौ जनपदे जातादिः कांडाग्नकः। अग्नेरिकारस्य यस्येति लोपः। * **नगरे** भवो नागरकश्चोरः। कुत्सने इदम् प्रावीण्ये तु नागरकश्शिल्पी। नगरे भवनेन शिल्पिनः प्रावीण्यं गम्यते कुत्सनेति किमित्यस्य कुत्सनप्रावीण्ययोरिति किमित्यर्थः। * **अध्यायो** वेदः आरण्यक इत्युपनिषत् बृहदारण्यक इति प्रसिद्धिः। तत्र बृहदिति विशेषणम्। आरण्यक इति कश्चिन्नचायः। वृक्षाणामन्योन्यसंघातेन वंशनाशादिरूपः। आरण्यको मनुष्यः (आन्ध्रेअडविमनिषिः आरण्यको विहारः मृगयेत्यर्थः। आरण्यको हस्ती वनगज इत्यर्थः एतेषु किम्। आरण्या मृगाः अरण्याण्ण इति णः*****मद्रवृज्योः** कन् मद्रे वुञि कृते माद्रक इति स्यात् वृजौ तु वार्जीक इति । अतः कन्विधिस्सार्थक इति ***वुञादेरपवादः**। आदिना ठञादीनां ग्रहणम्। कच्छाद्वुञ्सिन्धोस्थुवोर्देशे इति ठञ् । ननु जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधि इति जलप्रायदेशः । कच्छ इत्युच्यत इति अबहुवचनविषयत्वात् अवृद्धादिति न कच्छाद्वुञ् नापि धूमादिभ्यश्चेति कछ्छस्य तद्गणे पाठाभावात् इति चेत् मैवं, धूमादिषु कच्छः पठितव्यः।अत्र तदपाठस्तु प्रामादिक एव ।

**१३५८। मनुष्यतत्स्थयोर्वुञ्** ।४।२।१३४। कच्छाद्यणोऽपवादः। कच्छे जातादिः काच्छको मनुष्यः। काच्छकं हसितम्। मनुष्येति किम्। काच्छो गौः॥ **१३५९। अपदातौ साल्वात्** ।४।२।१३५। साल्वशब्दस्य कच्छादित्वाद्वुञि सिद्धे नियमार्थमिदम्। अपदातावेवेति। साल्वको ब्राह्मणः। अपदातौ किम्। साल्वः पदातिर्व्रजति॥ **१३६०। गोयवाग्वोश्च** ।४।२।१३६। साल्वाद्वुञ् कच्छाद्यणोऽपवादः। साल्वको गौः। साल्विका यवागूः। साल्वमन्यत्॥ **१३६१। गर्तोत्तरपदाच्छः** ।४।२।१३७। देशे। अणोऽपवादः। वृकगर्तीयम्। उत्तरपदग्रहणं बहुच्पूर्वनिरासार्थम्॥ **१३६२। गहादिभ्यश्च** ।४।२।१३८। छः स्यात्। गहीयः॥ (ग) **मुखपार्श्वतसोर्लोपश्च**॥ मुखतीयम्। पार्श्वतीयम्। अव्ययानां भमात्रे टिलोपस्यानित्यतां ज्ञापयितुमिदम्॥

---

अन्यथा कच्छस्य शेषे इत्यौत्सर्गिकेऽणि सिद्धे अणर्थम् कच्छादिषु कच्छग्रहणमनर्थकमिति। सिन्ध्वादिभ्य इत्येव वक्तव्यं स्यादिति बोध्यम्। * **मनुष्येति** तत्पदेन मनुष्यः परामर्शते तस्मिन् तिष्ठतीति तत्स्थम् मनुषे तत्स्थे च वाच्ये कच्छादिभ्यो वुञ् स्यादित्यर्थः। कच्छेभवं काच्छकं हसितं हसितस्य मनुष्यस्थत्वात्। तस्मिन्वाच्ये वुञ् । एवं सिन्धौ जातादिसैन्धवकः। सिन्धु वुञ् इति स्थिते वोरकादेशः। सिन्धु अक ओर्गुणः अवादेशः वृद्धिः सैन्धवकः मनुष्यः। सैन्धवकं हसितञ्च इत्यादि । मनुष्येति किम्। मनुष्येत्यादि किमित्यर्थः । मनुष्यतत्स्थयोरिति किमिति यावत् * **पदातिः** पादचारी योधः। चतुरङ्गबलस्य रथगजतुरगपदात्यात्मकत्वात् पादाभ्यामततीति व्युत्पत्तिः। पादस्य पदाज्यातिगोपहतेष्विति पादस्य पदेत्यदन्तादेशः। अपदाताविति पर्युदासः। तेन पदातिभिन्ने पदातिसदृशे अर्थात् मनुष्ये एव साल्वाद्वुञ् सिध्यति। साल्वो महिषः *__गोयवाग्वोर्वाच्ययोःसाल्वाद्वुञ्__ स्यात्। अपदातावित्यनेन अनयोर्वुञो प्राप्तावयमारम्भः। कच्छाद्यणोऽपवादः। कच्छाद्यणं बाधित्वा मनुष्यतत्स्थयोरिति वुञ्। अपदाताविति तस्य वुञो नियमः। गोयवाग्वोस्तु न वुञः प्रसक्तिः, नापि नियम इति कच्छादिभ्यश्चेत्यण् प्राप्नोति तदपवादोयं वुञिति भावः। यवागूः, आरनाळम्। (आन्ध्रे गंजि) * **अणोपवादः**। शेषे इत्यौत्सर्गिकस्याणः अपवादभूतोऽयं छ इत्यर्थः। *__मुखपाशर्वाभ्यां__ परो यस्तसिः तस्य लोपस्स्यात्। चात् तसंतेभ्यश्च प्रत्ययः शेषे अलोन्त्यस्येन्त्यस्य लोपः। ननु आदेः परस्येति आदिलोप एव स्यात्। मुखपाश्वर्भ्यां परस्य तसेर्लोप इति व्याख्यानादिति चेत् मैवम्। फलितार्थपरतयेदं व्याख्यानम्। वस्तुतस्तु मुखञ्च पाश्र्वश्च मुखपाश्र्वे ।

(ग) **कुग्जनस्य परस्य च** ॥ जनकीयम्। परकीयम्॥ (ग) **देवस्य च** ॥ देवकीयम्॥ (ग) **स्वस्य च** ॥ स्वकीयम्॥ (ग) **वेणुकादिभ्यश्छण्वाच्यः** ॥ वैणुकीयम्। वैत्रकीयम्। औत्तरपदकीयम्॥

---

तयोस्थसौमुखपार्श्वतसौतयोरिति शेषे षष्ठी प्रकृतिप्रत्यययोसर्यस्संबन्धस्तत्र द्योत्ये विहितात् द्वन्द्वान्ते श्रूयमाणं प्रत्येकं संबध्यत इति मुखतसः पाशर्वत सश्च लोप इत्यर्थः। यद्वा मुखपार्श्वेति लुप्तषष्ठीकं पदम्। तसोरित्यत्र विशेषणत्वात् प्रत्ययत्वाद्वा तदन्तविधिः । तसन्तयोर्मुखपार्श्वयोर्लोपस्यात्। चातसन्ताभ्यां मुखपार्श्वाभ्यां छप्रत्ययश्च स्यात् इति। एवमलनोन्त्यपरिभाषाया उपस्थितिसम्भवतीति मुखदीयमित्यादि। ननु अव्ययानां छमात्रे टिलोप इत्यनेनैव तसेरसो लोपेन इष्टसिद्धेः । किमनेन वार्तिकेनेत्यत आह–अनित्यतां ज्ञापयितुमिति। तस्य अनित्यत्वात्पक्षे मुखतसीयमित्याद्यनिष्टं स्यादिति नित्यार्थं वार्तिकमिदमिति। तदनित्यत्वे ज्ञापकञ्चेदमेवेति भावः। ननु बहिषष्टिलोपविधानात् ज्ञापकादिति अव्ययात्त्यबिति सूत्रव्याख्यानावसरे मूल एव प्रतिपादितमिति स्वोक्तव्याघात इति चेत् सत्यम् । अनित्यत्वान्नित्यार्थमिदमिति पठितव्यम्। यद्वा अनित्यत्वे इदमपि ज्ञापकमेवेति समुच्चयेन समाधेयम्। अथवा ज्ञापकस्य विशेषापेक्षत्वात् यादिप्रत्ययनिमित्तप्रयुक्तभमात्रे अव्ययानां टिलोपोऽनित्य इति बहिषष्ठिलोपयञ्चेत्यनेन ज्ञापितम्। अनेन तु अजादिप्रत्ययनिमित्तप्रयुक्तभमात्रे अव्ययानां टिलोपो नेति ज्ञाप्यत इतिकृत्वा नान्यतरस्यानर्थक्यमिति बोध्यम्। ***जनशब्दस्य** परशब्दस्य च कुगागमस्याच्छप्रत्ययसन्नियोगेन इति वार्तिकार्थः च सन्नियोगशिष्टत्वात्कुकः जनतेत्यादौ न कुक्। कुक्जनपरदेवस्वानामिति एकमेव वार्तिकं सूत्रयितुमुचितम्। अत्रेदमवधेयम्। स्वस्य चेति न गणसूत्रम्। गहादिभ्य इति गणे तदर्शनात्। न च स्वकीयमिति रूपासिद्धिः गहादीनामाकृतिगणत्वेन स्वकशब्दाद्गहादित्वात् छे कृते तत्सिद्धेः। न च स्वशब्दादपि छे स्वकीयमिति भवितव्यम्। तदर्थं स्वस्य चेति कुगागमः आवश्यक इति वाच्यम्। स्वशब्दादणि सौवमिति रूपस्य इष्टत्वे छस्यैवासम्भवात्। तस्मात् स्वस्य च स्वकीयमिति कौमुद्यामपपाठः। स्वकीयमित्येतावदेव पठितव्यम्। गहादीनामाकृतिगणत्वे न स्वकशब्दाच्छस्स्यादिति दर्शयितुं स्वकीयमित्युदाहृतमिति बोध्यम्। ***छण्वाच्यः।** छे कृते आदिवृद्धिर्न स्यादिति पुनश्छण्विधानम् वेणुकादिगणाभावात्। आदिशब्दोऽत्र प्रकारवचनः। वेणुक–वेत्रक–उत्तरपदक–इत्यादयः। * **कटादेः।** आदिपदमत्राप्यवयववाचकम्। कटशब्दः आदिःआदौ वा यस्य तस्मत्कटादेः कटपूर्वादित्यर्थाः। अणोपवादः ।

**१३६३। प्राचां कटादेः** ।४।२।१३९। प्राग्देशवाचिनः कटादेश्छः स्यात्। अणोऽपवादः। कटनगरीयम्। कटघोषीयम्। कटपल्वलीयम्॥ **१३६४। राज्ञः क च** ।४।२।१४०। वृद्धत्वाच्छे सिद्धे तत्सन्नियोगेन कादेशमात्रं विधीयते। राजकीयम्॥ **१३६५। वृद्धादकेकान्तखोपधात्** ।४।२।१४१। अक इक एतदन्तात्खोपधाच्च वृद्धाद्देशवाचिनश्छः स्यात्। ब्राह्मणको नाम जनपदो यत्र ब्राह्मणा आयुधजीविनस्तत्र जातो ब्राह्मणकीयः। शाल्मलिकीयः। आयोमुखीयः॥ **१३६६। कन्थापलदनगरग्रामह्रदोत्तरपदात्** ।४।२।१४२। कन्थादिपञ्चकोत्तरपदाद्देशवाचिनो वृद्धाच्छः स्यात्। ठञ्ञिठादेरपवादः। दाक्षिकन्थीयम्। दाक्षिपलदीयम्। दाक्षिनगरीयम्। दाक्षिग्रामीयम्। दाक्षिह्रदीयम्। **१३६७। पर्वताच्च** ।४।२।१४३। पर्वतीयः॥ **१३६८। विभाषाऽमनुष्ये** ।४।२।१४४। मनुष्यभिन्नेऽर्थे पर्वताच्छो वा स्यात्पक्षेऽण्। पर्वतीयानि पार्वतानि वा फलानि। अमनुष्ये किम्। पर्वतीयो मनुष्यः॥

---

औत्सर्गिकस्याण इत्यर्थः। राज्ञः क च राज्ञः कादेशस्स्यादित्यर्थः। वृद्धाच्छ इति छ सन्नियोगेन कविधानाच्च कारस्य ग्रहणम्। राज्ञ इदं राजकीयम्। अलोन्त्यस्येत्यन्त्यस्य नकारस्य ककारादेशः। *__वृद्धादिति।__ कच्छागीति सूत्रादर्वाचीनेषु वृद्धादवृद्धादित्यनयोरधिकारस्य निवृत्तत्वादत्र पुनर्वृद्धग्रहणम् । अकश्च इकश्च अकेकौ अन्ते यस्य तदकेकान्तम्। अकेकान्यतरान्तावयवकमित्यर्थः।अकेकान्तं च खोपधङ्चअनयोस्समाहारः अकेकान्तकोपधम्। तस्मात्। कुत्सिता ब्राह्मणा ब्राह्मणकाः। कुत्सितार्थे कन्। शस्त्रवृत्त्या जीवनम् ब्राह्मणानां कुत्सनावहम्। सङ्कटेऽपि क्षत्त्रवृत्तेरविहितत्वात्। ब्राह्मणकानां निवासो जनपदः ब्राह्मणकः। तस्य निवास इत्यण् अकान्तोऽयं वृद्धो देशवाची। तस्मात् जाताद्यर्थे छः। ब्राह्मणकीयः। शाल्मलिरेव शाल्मलिका–तरुः। स्वार्थे कन्। तया निर्वृत्तः तस्याः निवासो वा शाल्मलिको जनपदः। इकान्तोऽयं वृद्धः। तस्मात् छः शाल्मलिकीयः। आयोमुख इति रूढोऽयं देशे। यद्वा– अयोमखास्सन्त्यस्मिन्नित्यायोमुखः। तत्रभवमायोमखीयम्। * **कन्थेति।** वाक्षिकन्थादीनां बाहीकग्रामत्वात्। बाहीकग्रामेभ्यश्चेति ठञ्ञिठौ प्राप्तौ। दाक्षिनगरेत्यस्य रोपधत्वाद्रोपधेरोरिति वुञ् प्राप्तः। तेषामपवादोऽयं छः। ***पर्वताच्छस्स्याच्छेषे** इत्यर्थः। पर्वते भवः पार्वतीयो मनुष्यः। ***कृकणेति**। सूत्रे भरद्वाजशब्दस्तत्सम्बन्धिनि भाक्तः। भरद्वाजस्य मनुष्यत्वेन अदेशत्वात् इत्याह भारद्वाजेति। ***तस्मिन्नणि** चेति। ननु तस्मिन्नणि चाकङ् इति सूत्र्यताम् आकङि अकार उच्चरणार्थः ङित्त्वदन्त्यस्य अयमादेशः

**१३६९। कृकणपर्णाद्भारद्वाजे** ।४।२।१४५। भारद्वाजदेशवाचिभ्यामाभ्यां छः। कृकणीयम्। पर्णीयम्। भारद्वाजे किम्। कार्कणम्॥ **१३७०। युष्मदस्मदोरन्यतरस्यां खञ्च** ।४।३।१। चाच्छः। पक्षेऽञ्। युवयोर्युष्माकं वा अयं युष्मदीयः। अस्मदीयः॥ **१३७१। तस्मिन्नणि च युष्माकास्माकौ** ।४।३।२। युष्मदस्मदोरेतवादेशौ स्तः खञ्यणि च। यौष्माकीणः आस्माकीनः। यौष्माकः। आस्माकः॥ **१३७२। तवकममकावेकवचने** ।४।३।३। एकार्थवाचिनोर्युष्मद-स्मदोस्तवकममकौ स्तः खञ्यणि च। तावकीनः। तावकः। मामकीनः। मामकः। छे तु॥ **१३७३। प्रत्ययोत्तरपदयोश्च** ।७।२।९८। मपर्यन्तयोरेकार्थयोस्त्वमौ स्तः प्रत्यये उत्तरपदे च। त्वदीयः। मदीयः॥ **१३७४। अर्धाद्यत्** ।४।३।४। अर्ध्यः॥

---

युष्मद् अण् दकारस्य आकङ् सवर्णदिर्घः युष्माक् अ आदिवृद्धि यौष्माकः। खञि यौष्माकोः। एवम् अस्मदः आस्माकोऽणि आस्माकीन इति खञि च रूपसिद्धः इति चेत् सत्यम्। सुवच एवायं न्यासः। ***तावकीनः।*** न चात्र प्रत्ययोत्तरपदयोश्चेति खञि परतः परत्वात्तवकादेशं बाधित्वा मपर्यन्तस्य त्वादेशस्स्यादिति वाच्यम्। विशेषविहितत्वात्। (अव्ययसामान्यपरतस्त्वादेशः। खञणोस्तवकादेश इति तवकादेशो विशेषविहितः) विधानसामर्थ्याद्वा। (प्रत्ययमात्रे त्वादेशप्राप्तौ तवकादेशविधानं व्यर्थमिति) अनवकाशमूलकापवादत्वाद्वा। परमपि त्वादेशं बाधित्वा तवकादेश इति। एवं ममकादेशोऽपि मादेशं बाधते । छे तु खञणोरिव विशेषविधानाभावरूपवैलक्षण्यद्योतनाय तु शब्दः। ***प्रत्ययेति।*** त्वमावेकवचने इति प्राक्सूत्रम्। सर्वमत्रानुवर्तते। मपर्यन्तस्येत्यधिकारः तथा हि। त्वमावेकवचने। एकस्योक्तौ युष्मदस्मदोर्मपर्यन्तस्य त्वमादेशौ स्तः विभक्तौ परत इति तदर्थः मूले एव दर्शितः। एकस्योक्तावित्यस्य एकार्थवाचिनोरित्यर्थः। त्वमावेकस्मिन्निति वक्तव्ये वचनग्रहणसामर्थ्यादयमर्थो लब्ध इति तत्त्वबोधिनी। फलन्तु त्वां मां वा अतिक्रान्तान् अतित्वानतिमानिति रूपसिद्धिः। तथा हि समस्यमाने द्व्येकत्ववाचिनि युष्मदस्मदी समानार्थोन्यसंख्यश्चेत् स्तो युवावौ त्वमावपीति वचनात् समासार्थस्य बहुत्वेऽपि समस्यमानयुष्मदस्मच्छब्दयोरेकार्थवृत्तित्वादतित्वानित्यादौ त्वादेशादिः। अथायं त्वमावेकस्मिन्निति सूत्रयित्वा एकार्थबोधकविभक्तौ परत इति व्याख्यायेत तर्हि अतित्वानित्यादौ बह्वर्थबोधकशस्प्रत्ययपरतत्वसत्त्वात्त्वमादेशौ मा भूताम्। अतीष्मानत्यस्मानिति रूपे स्याताम्। तस्मादेकार्थवृत्त्योर्युष्मदस्मदोस्त्वमादेशौ स्तः। विभक्तौ परत इत्यर्थस्साधुः।

**१३७५। परावराधमोत्तमपूर्वाश्च** ।४।३।५। परार्ध्यम्। अवरार्ध्यम्। अधमार्ध्यम्। उत्तमार्ध्यम्॥ **१३७६। दिक्पूर्वपदाट्ठञ्च** ।४।३।६। चाद्यत्। पौर्वार्धिकम्। पूर्वार्ध्यम्॥ **१३७७। ग्रामजनपदैकदेशादञ्ठञौ** ।४।३।७। ग्रामैकदेशवाचिनो जनपदैकदशवाचिनश्च दिक्पूर्वपदादर्धान्तादञ्ठञौ स्तः। इमेऽस्माकं ग्रामस्य जनपदस्य वा पौर्वार्धाः। पौर्वार्धिकाः। ग्रामस्य पूर्वस्मिन्नर्धे भवा इति तद्धितार्थे समासः। ठञ्ग्रहणं स्पष्टार्थम्। अञ्चेत्युक्ते यतोऽप्यनुकर्षः संभाव्येत॥ **१३७८। मध्यान्मः** ।४।३।८। मध्यमः।

---

ननु अलौकिकविग्रहे अति–युष्मद्–अं–इति स्थिते त्वादेशात्प्रागन्तरङ्गत्वेन समासावयवस्य सुपो लुकि कृते अतियुष्मद् कृत्तद्धितेति समासस्य प्रातिपदिकत्वेन ङ्याप्प्रातिपदिकादिति पुनः सुबुत्पत्तिः। अतियुष्मद् शस् इति स्थिते इदानीं अन्तर्वर्तिनीलुका लुप्तां विभक्तिमाश्रित्य प्रत्ययलोपे प्रत्ययलक्षणन्यायेन त्वादेशस्स्यादेव। । तस्य एकार्थबोधकप्रत्ययत्वादिति चेन्मैवम्। न लुमतांगस्येति प्रत्ययलक्षणनिषेधात्। न च न लुमतांगस्येति निषेधस्यानित्यत्वात् हे वारे इत्यादौ पक्षे संबुद्धिनिमित्तगुण इवात्रापि विकल्पेन त्वादेशस्स्यादिति वाच्यम्। विकल्पस्यानिष्टत्वादत्र। न हि त्वामतिक्रान्तानिति विग्रहे तु अतित्वानिति अतियुष्मानिति च रूपद्वयमिष्टं तस्मात्त्वमावेकवचने इति यथासूत्रं रमणीयम्। ननु एकार्थवृत्त्योर्युष्मदस्मदोस्त्वमादेशौ विभक्तौ परतो विहितौ। प्रकृते तु विभक्तेर्लुकलुप्तत्वात्कथं त्वादेश इति चेन्मैवम्। समासाद्बहिरुत्पन्नां विभक्तिमाश्रित्य त्वादेशस्य जातत्वात् । अत एव हि बहिर्विभक्तेरन्यार्थत्वेऽपि युष्मदस्मदोरेकार्थवृत्तित्वं विवक्षितं इति। अथ सुप्तिङौ विभक्तिसंज्ञौ स्त इति सुप्तिङ्प्रत्ययपरकत्वेनैव युष्मदस्मदोस्त्वमादेशौ विहितौ प्रकृतसूत्रेणेति कृत्वा सूत्रान्तरं पठति। प्रत्ययोत्तरपदयोश्चेति प्रत्यये उत्तरपदे च परतस्त्वमादेशौ स्तः । यथा तवेदमित्यर्थे वृद्धाच्छ इति छे प्रत्यये युष्मद् ङस् छ इति स्थिते सुपो धात्विति सुब्लुकि (तद्धितान्तस्य प्रातिपदिकत्वात् तद्धितप्रक्रियागतसुक् प्रातिपदिकावयव एवेत्यर्थः)। युष्मद् छ इदानीं न लुमतेति प्रत्ययलक्षणनिषेधेन विभक्तिपरकत्वाभावात्त्वमाविति सूत्रेण न त्वादेशप्राप्तिः। किन्तु प्रत्ययेति सूत्रेण छप्रत्ययपरकत्वसत्वात् त्वादेशः। आयनेयीति छस्येयादेशः । त्वदीयम्। एवं मदीयं इति रूपसिद्धिः । उत्तरपदे तु त्वद्घटो मद्घट इत्युदाहार्यम्। अत्रापि युष्मद् ङस् घटा सु इति स्थिते न लुमतेत्यनेन प्रत्ययलक्षणाभावाद्विभक्तिपरकत्वाभाव इति त्वमावित्यनेन त्वादेशाप्राप्तेः। उत्तरपदे चेति त्वादेशः त्वद्घटः इति प्रक्रिया। ननु त्वमावेकवचने इति सूत्रे

**१३७९। अ संप्रतिके** ।४।३।९। मध्यशब्दादकारप्रत्ययः स्यात्सांप्रतिकेऽर्थे। उत्कर्षापकर्षहीनो मध्यो वैयाकरणः। मध्यं दारु। नातिह्रस्वं नातिदीर्घमित्यर्थः॥

---

विभक्तावित्यस्यानुवृत्तिमविधाय प्रत्ययोत्तरपदयोश्चेति सूत्रमप्यकृत्वा एकार्थवृत्त्योर्युष्मदस्मदोर्मपर्यन्तस्य त्वमादेशौ स्त इत्येतावानेवार्थो वाच्यः । अतित्वान् त्वदीयः त्वद्भट इत्यादिसर्वेष्टसिद्धिर्लाघवं चेति चेन्मैवम्। अधियुष्मद् अध्यस्मद् इति विभक्त्यर्थेऽव्ययीभावे रूपासिद्धेः। तथाहि त्वयीति सप्तम्यर्थे युष्मद् ङि अधि इत्यलौकिकं विग्रहवाक्यम्। सुपो धात्विति सुब्लुक्। अधियुष्मद्। निपातेनाभिहितेऽपि सप्तम्यर्थे वचनसामर्ध्यात्पुनः स्सप्तमी। अधि युष्मद् ङि अव्ययीभावश्चेत्यव्ययत्वादव्ययादाप्सुप इति सुपो लुक्। अधि युष्मद्। इदानीं न लुमतेति प्रत्ययलक्षणनिषेधेन विभक्तिपरकत्वाभावात्त्वादेशाभावः। अत एव मधुसुरभिमुखाब्जगंधलुब्धेरधिकमधित्वदनेन मानिपातीति माघे। अधित्वदिति प्रयोगश्चिन्त्य इति वल्लभः। तस्मात् त्वमावेकवचने इति सूत्रव्याख्यायाम्। विभक्तौ किम्। अधि युष्मद्। अध्यस्मदिति प्रत्युदाहार्यम् । ननु माघप्रयोगबलाद् विभक्तावित्यस्यैवाननुवृत्तिरित्यभ्युपगम्यतामिति चेन्मैवम् । अष्ट न आ विभक्ताविति सूत्रादनुवर्तमानस्य विभक्ताविति शब्दस्य योऽचीत्यादिषु पूर्वसूत्रेषु त्यदादीनामित्यादिषु परसूत्रेषु चानुवृत्तौ सत्याम् कथं पुनर्मध्यसूत्रे त्वमावेकवचने इत्यस्मिन्ननुवृतिर्न भवेत्। अतितु भवेदेव। तस्मात्प्रत्ययोत्तरपदयोश्चेति सूत्रमप्यावश्यकमेवेति बोध्यम्। ***ग्रामेति*** अत्र दिक्पूर्वपदादिति अर्थादिति चानुवर्तेते। अर्थशब्दे विशेषणत्वात् तदन्तविधिः। अर्थान्तादिति प्रातिपदिकादिति विशेष्यम्। ग्रामस्य जनपदस्य वेत्यत्र अवयवावयविभावसम्बन्धे षष्ठी। तेन अवयवानामेकदेशत्वात् ग्रामैकदेशा जनपदैकदेशा वा पौर्वार्था इत्यर्थस्सिध्यति। स्पष्टार्थम्। ननु अकर्तव्यमेव दिक्सूत्रात् ठञोऽनुवृत्तेरत आह अञ्चेत्यादि। दिक्सूत्रे ठञ् हि यदनुबद्ध इति ठञोऽनुवृत्तौ चात् ठञोऽनुकर्षे वा यदप्यनुवर्तेत अनुकृष्येत वेति इष्टार्थम् कर्तव्यमेवेति भावः।

असाम्प्रतिके इति छेदः । मध्यादित्यनुवर्तते। उत्कर्षादिहीनस्समसाम्प्रतिकः। न्याय्य इति यावत्। प्रत्ययेन जाताद्यर्थ एवाभिधीयते । समुदायेन तु साम्प्रतिकार्थः। मध्ये भवो मध्यः ***तद्विषयात्*** तदभिधायकादित्यर्थः। समुद्रसमीपे यो द्वीपस्तस्मादित्येव सूत्रार्थः। अर्थात्प्रत्ययासम्भवेन तद्विषयादित्युक्तम्। समुद्रसमीपस्थद्वीपवाचिन इत्युक्तौ सिंहळकादिभ्योऽपि यञ् स्यादतः तद्विषयात् द्वीपशब्दादित्युक्तम्। समुद्रसमीपस्थद्वीपात्मकपदार्थाभिधायकद्वीपशब्दादिति निष्कृष्टोर्थः। गङ्गादिनदीमध्यस्थद्वीपवाचकान्माभूदित्यनुसमुद्रमिति ***सायंप्रातर्भवस्सायम्प्रातिकः***

**१३८०। द्वीपादनुसमुद्रं यञ्** ।४।३।१०। समुद्रस्य समीपे यो द्वीपस्तद्विषयाद्वीपशब्दाद्यञ् स्यात्। द्वैप्यम्। द्वैप्या॥ **१३८१। कालाट्ठञ्** ।४।३।११। कालवाचिभ्यष्ठञ् स्यात्। मासिकम्। सांवत्सरिकम्। सायंप्रातिकः। पौनःपुनिकः। कथं तर्हि–शार्वरस्य तमसो निषिद्धये–इति कालिदासः, अनुदितौषसराग–इति भारविः, समानकालीनं प्राक्कालीनमित्यादि च। अपभ्रंशा एवैत इति प्रामाणिकाः। 'तत्र जातः १३९३' इति यावत्कालाधिकारः॥ **१३८२। श्राद्धे शरदः** ।४।३।१२। ठञ् स्यात्। ऋत्वणोऽपवादः। शारदिकं श्राद्धम्॥ **१३८३। विभाषा रोगातपयोः** ।४।३।१३। शारदिकः शारदो वा रोग आतपो वा। एतयोः किम् शारदं दधि॥ **१३८४। निशाप्रदोषाभ्यां च** ।४।३।१४। वा ठञ् स्यात्। नैशिकम्। नैशम्। प्रादोषिकम्॥ प्रादोषम्॥ **१३८५। श्वसस्तुट् च** ।४।३।१५। श्वस्शब्दाट्ठञ् वा स्यात्तस्य तुडागमश्च॥ **१३८६। द्वारादीनां च** ।७।३।४। द्वार, स्वर, स्वाध्याय, व्यल्कश, स्वस्ति, स्वर, स्फ्यकृत्, स्वादु, मृदु, श्वस्, श्वन्, स्व एषां न वृद्धिरैजागमश्च। शौवस्तिकम्॥ **१३८७। संधिवेलाद्यृतुनक्षत्रेभ्योऽण्** ।४।३।१६। संधिवेलादिभ्य ऋतुभ्यो नक्षत्रेभ्यश्च कालवृत्तिभ्योऽण् स्यात्। सन्धिवेलायां भवं सान्धिवेलम्।

---

अव्ययानां भमात्रे टिलोपः। एवं पौनःपुनिक–इत्यत्रापि। ननु शार्वरिकश्रीऔषसिकम्। कालिकमित्यादीनां रूपाणां भवितव्ये कथं शार्वरेत्यादयः प्रयोगास्सङ्गच्छेरन्। अत आह अपभ्रंशा एवेति दुष्टा इत्यर्थः। ***श्राद्धे** शरदश्शेषे ठञ् स्यात् श्राद्धे वाच्ये संधिवेलाद्वृत्विति वक्ष्यमाणस्य ऋतुलक्षणस्याणोयमपवादः। ***विभाषेति** अत्र शरद इति ठञिति नानुवर्तेते। ***निसेति**। अत्र विभाषेति ठञति च अनुवर्तेते। ठञभावपक्षे औत्सर्गिकोण्। ***शौवस्तिकम्**। श्वस् ठञठञः तुगागमः ठस्येकादेशः । श्वस् त् इक ऐजागमः नय्वाभ्यामिति वात्पूर्वमैच् शौवस्तिकः। ***संधिवेलादीति**। अत्र कालादित्यनुवर्तते कालाठ्ठाञोपवादोयम्। औत्सर्गिकस्य (अधिकृतस्य) अणः ठञा बाधितत्वात्तद्बाधनार्थमणग्रहणम्। संधिवेलादिर्गणः। नक्षत्राणां कालावाचित्वं चन्द्रसंयोगेनेति प्रतिपादितं प्रागेव। वेला समयः। सन्धिवेला सन्धिकाल इत्यर्थः। कालवाचिभ्य इति किम्। सन्ध्या नाम काचित् तत्र जाताद्यर्थे अण्माभूदिति। ननु वा नामधेयस्येति वृद्धसंज्ञाभावपक्षे स्यादेवण् इति चेत् तर्हि पौर्णमास्यां विहित इष्टिरूपचारात्पौर्णमासी। तत्र जाताद्यर्थे अण्माभूदिति

ग्रैष्मम्। तैषम्। सन्धिवेला, संध्या, अमावास्या, त्रयोदशी, चतुर्दशी, पौर्णमासी, प्रतिपत्॥ (ग) **संवत्सरात्फलपर्वणोः**॥ सांवत्सरं फलं पर्व वा। सांवत्सरिकमन्यत्॥ **१३८८। प्रावृष एण्यः** ।४।३।१७। प्रावृषेण्यः॥ **१३८९। वर्षाभ्यष्ठक्** ।४।३।१८। वर्षासु साधुवार्षिकं वासः। 'कालात्साधुपुष्प्यत्पच्यमानेषु १४१८' इति साध्वर्थे॥ **१३९०। सर्वत्राण् च तलोपश्च** ।४।३।२२। हेमन्तादण् स्यात्तलोपश्च वेदलोकयोः। चकारात्पक्षे ऋत्वण्। हैमनम्। हैमन्तम्॥ **१३९१। सायंचिरंप्राह्णप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च** ।४।३।२३। सायमित्यादिभ्यश्चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्यः ट्युट्युलौ स्तस्तयोस्तुट् च। तुटः प्रागनादेशः। 'अनद्यतने २१८५' इत्यादिनिर्देशात्।

---

इष्यते तु वृद्धाच्छः। ऋतूनां कालवाचित्वविशेषणन्तु ऋतुवाचकानां शिशिरादिशब्दानां सम्प्रतिशीतलाद्यर्थवाचकत्वे अण् माभूदिति। वस्तुतस्तु व्यर्थमेव। ऋतोः कालत्वेन ऋतुवाचकानां कालवाचिकत्वाव्यभिचारात्। न च दर्शितरीत्या व्यभिचारश्शंक्यः। तदानीं ऋतुवाचकत्वस्यैवाभावात्, इति। नक्षत्राणां कालविशेषणन्तु चन्द्रसम्बन्धस्पोरणाय तं विना तेषां स्वतः कालवाचित्वाभावादति सन्धिवेलादिगणं पठति। सन्धिवेला सन्ध्या इत्यादिना। संवत्सरादिति गणसूत्रम्। ***प्रावृषः** एण्यप्रत्ययस्स्यात् च्छेषे इत्यर्थः। प्रावृट् वर्षऋतुः। ***वर्षाशब्दःस्त्रीलिङ्गो** नित्यबहुवचनान्तः वर्षर्तुवाचकः वर्षाभ्यः ठक् स्याच्छेषे, स च शेषार्थस्साध्वर्थ एवात्र ग्राह्य इत्याह कालादित्यादिना। ***सर्वत्रेति**। अत्र हेमन्ताच्च इति पूर्वसूत्रात् हेमन्तादित्यनुवर्तते। सर्वत्रेत्यस्य लोकवेदयोरित्यर्थः। हेमन्तशब्दादण् स्यात् शेषे तलोपश्चेति सूत्रार्थः। ऋत्वणि सिद्धे पुनरण्विधानन्तु तलोपसन्नियोगार्थम्। तेन तलोपसन्नियुक्तः अण् स्यात् चात्पक्षे ऋत्वण् केवलोऽयम्। सर्वत्राणि हैमनम् ऋत्वणि हैमन्तं तलोपाभावात्। ***सायम्**–चिरम्–प्राह्णे–प्रगे अव्ययाः। एतेषां द्वन्द्वः। टच्युटच्युलोपः। टलयोरित्वेन लोपे यु इत्युभयत्रापि शिष्यते। हयम् यु इति स्थिते युवोरनाकाविति अकादेशः प्राप्तः तुडागमश्च प्राप्तः उभयोर्मध्ये अन्तरंगत्वात्तु टि कृते, त्य् इत्यस्य प्रत्ययतया यो विधीयमानो नादेशः त्यु इत्यस्यावयवभूतस्य योर्न स्यात्तस्य अप्रत्ययत्वात् तस्मात्प्रथमत एव अनादेशः पश्चात्तु ट् इत्याह तुटः प्रागनादेश इति। ननु अन्तरंगं तुटं कथमनादेशो बाधेत। अत आह निर्देशादिति अद्येत्यव्ययाटच्युटच्युलोपः कृतयोः– तुटः प्रागनादेशाभावे अद्यतन इति न स्यात्। न अद्यतनः अनद्यतन इति न निर्देशो न सङ्गच्छेतेतीदमेव ज्ञापकम्। अन्तरङ्गमपि तुटमनादेशो बाधते इति भावः।

सायन्तनम्। चिरन्तनम्। प्राह्णप्रगयोरेदन्तत्वं निपात्यते । प्राह्णेतनम्। प्रगेतनम्। दोषातनम्। दिवातनम्। **चिरपरुत्परारिभ्यस्त्नो वक्तव्यः**॥ चिरत्नम्। परुत्नम्। परारित्नम्॥ **अग्रादिपश्चाड्डिमच्**॥ अग्रिमम्। आदिमम्। पश्चिमम्॥ अन्ताच्च॥ अन्तिमम्॥ **१३९२। विभाषा पूर्वाह्णापराह्णाभ्याम्** ।४।३।२४। आभ्यां ट्युट्युलौ वा स्तस्तयोस्तुट् च। पक्षे ठञ्। पूर्वाह्णेतनम्। अपराह्णेतनम्। 'घकालतनेषु-९७५' इत्यलुक्। पूर्वाह्णः सोढोऽस्येति विग्रहे तु पूर्वाह्णतनम्। अपराह्णतनम्। पौर्वाह्णिकम्। आपराह्णिकम्॥

---

ननु तुगेव क्रियतां सायमित्यादेरङ्गस्य तुक्। योरनादेशः सायन्तन अनद्यतन इत्यादयस्सिद्ध्यन्तीति चेन्मैवम् । प्रातर् इत्यस्य तुकि कृते रेफस्य अपदान्तत्वात् खरवसानयोरविसर्जनयो न स्यात् (प्रातर् त् इति तान्तस्यैव पदत्वात्) प्रातर्तनमित्येव स्यान्न तु प्रातस्तनमिति। ( विसर्जनीयाभावेन विसर्जनीयसत्वाभावात्) इष्यते तु प्रातस्तनमिति। सायन्तनम् । सायमिति मान्तमव्ययं कालवाचि । एवं चिरं इत्यपि। अस्मिन् भाष्यमते अव्ययत्वादेव टचुटचुक्तुटां सिद्धौ सत्यामुभयोर्ग्रहणं सुत्यजम् । साय चिर इति अदन्तौ शब्दौ तयोः टचुटचुलोः कृतयोर्मुमागमस्सूत्रेण निपात्यते इति । वृत्तिकृन्मते तु उभयोर्ग्रहणमावश्यकमेव । सायंतन मोनुस्वारः परसवर्णं सायन्तनम् । साये भवम् सायम्भवमिति वा विग्रहः दोषादि वा इत्यादन्तावव्ययौ । परुत्नम् परुत्त्न मितिरूपद्वयम् । झरो झरि सवर्णे इति तलोपस्य वैकल्पिकत्वात् । सद्यश्चिरपरुत्परारीति वक्ष्यते चिरपरुदादिनां व्युत्पत्तिः अग्र आदि पश्चात् एतेषां द्वन्द्वः सौत्रः पञ्चम्या लुक् । अग्रादिपश्चाच्छब्देभ्यः जाताद्यर्थे डिमच् प्रत्ययस्स्यात् डिमचो डित्त्वं टेरिति टिलोपार्थम् इम इति शिष्यते, । ननु अग्रादिभ्यामिमचि कृतेऽपि यस्येति लोपेन अग्रिमं आदिमं इति रूपे सिध्यत एव । पश्चाच्छब्दादपि इमचि कृते अव्ययानां भमात्रे टिलोप इति टिलोपस्स्यादेवेति । डित्त्वं व्यर्थमत आह तत्वबोधिन्यां स्पष्टार्थमिति । अव्ययानामिति टिलोपस्यानित्यत्वेन अत्र टिलोपस्य नित्यत्वार्थं डित्करणमिति भावः । पौर्वाह्णि किम् ठञः न तुट् । तुटः टचुटचुल्सन्नियोगशिष्टत्वेन तयोरेव तुडिति । ठस्येकादेशः। ञित्त्वादादिवृद्धिः। प्रातिपदिकान्तेति नस्य णत्वम्। कालाट्ठञ् इति ठञ्। *तत्र जातः तत्रेति सप्तम्यन्तार्थः। समर्थाधिकारः। तदेतदाह सप्तमीसमर्थादिति। सप्तम्यन्तात्समर्धादित्यर्थः। प्राग्दीव्यतोणित्यौत्सर्गिकोऽण्। आदिपदेन दित्यदितीति द्यः। उत्सादिभ्य इत्यञ् इत्यादीनां ग्रहणम्। राष्ट्रावारपारादिति घः। आदिना खादीनां

**१३९३। तत्र जातः** ।४।३।२५। सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः। स्रुघ्ने जातः स्रौघ्नः। औत्सः। राष्ट्रियः। अवारपारीण इत्यादि॥ **१३९४। प्रावृषष्ठप्** ।४।३।२६। एण्यस्यापवादः। प्रावृषि जातः प्रावृषिकः॥ **१३९५। संज्ञायां शरदो वुञ्** ।४।३।२७। ऋत्वणोऽपवादः। शारदका दर्भविशेषा मुद्गविशेषाश्च। **१३९६। उत्तरपदस्य** ।७।३।१०। अधिकारोऽयं 'हनस्त-२५७४' इत्यस्मात्प्राक्॥ **१३९७। अवयवादृतोः** ।७।३।११। अवयववाचिनः पूर्वपदादृतुवाचिनोऽचामादेरचो वृद्धिः स्यात् ञिति णिति किति च तद्धिते परे।

---

ग्रहणम्। अणादयो घादयश्च स्युः। यथाविहितं प्रत्ययास्स्युरित्यर्थः। याभ्यः प्रकृतिभ्यो ये प्रत्यया अपत्याद्यर्थेषु विहितास्ताभ्यस्ते जाताद्यर्थेऽपि स्युरिति यावत्। स्रौघ्न इत्यत्र अण्। औत्स इत्यत्र उत्सादिभ्येऽञ्। राष्ट्रिय इत्यत्र घः। अवारपारीणमित्यत्र खः। ननु शेषे इत्यनेन लक्षणसूत्रेण अपत्यादि चतुरर्थ्यन्तभिन्नेषु जाताद्यर्थेषु यथाविहितमणादयो विहिता एव। राष्ट्रावारपारादिष्वपि शेषाधिकारसत्त्वात् घादयोऽपि विहिता एवेति-व्यर्थमिदं सूत्रमिति चेन्मैवम्। सप्तम्यन्तादेव जातार्थे प्रत्ययाः न तु तदन्यविभक्त्यन्तादिति नियमार्थमिदं सूत्रमिति। न च सामर्थ्यादेव सप्तम्यन्तत्वलाभ इति वाच्यम्। देवदत्तोस्माज्जात इत्यत्र प्रथमान्तात्समर्थाज्जातार्थे अणि दैवदत्त इति माभूदिति। नन्वेवं तत्र ग्रहणमस्तु । जात इति मास्तु-इति चेन्मैवम्। प्रावृषष्ठप् इत्यत्र जाताधिकारात्। जातार्थे एव प्रावृषष्ठप्। अन्यत्र तु प्रावृष एण्य इति तदर्थं जातग्रहणम्। ननु अत इञ् अपत्ये विहित इति जातार्थेऽप्यत इञ् स्यात्। तथा च स्रुघ्ने जातः स्रौघ्नः इति स्यादिति चेन्मैवम्। षष्ठ्यन्तादेवापत्ये अत इञ्विहित इति सप्तम्यन्तान्न तस्य प्रसक्तिरिति। वस्तुतस्तु अणादयो नाम अपत्यादिविकारान्तार्थसाधारणाः प्रात्यया एव गृह्यन्ते। एतदर्थमेव ते विभज्य प्रथमं प्रतिपादिताः अण्-ण्यः अञ् इतीमे सूत्रकारेणोक्तास्ते त्रयः। वार्तिककारेण तु ञाञादयोन्येपि प्रतिपादिताः तेन स्रुघ्नशब्दादणेव। उत्सादिष्वपाठान्नाञ्। दित्यादिलक्षणो नापि ण्यः। उत्सशब्दात्तु अणं बाधित्वा अञेव-इति बोध्यम्। ***अवयवादृतोः**। उत्तरपदस्येत्यधिकारः। अवयवादित्यत्यपञ्चमीविभक्ते इति पञ्चमी । अवयवादुत्तरपदस्य ऋतोरित्यन्वयः। ऋतोरुत्तरपदत्वे अवयवस्य पूर्वपदत्वमर्थात्सिद्धमिति कृत्वा अवयववाचिनः पूर्वपदादिति मूलम्। मूले परस्येति शेषः। अवयववाचिनः पूर्वपदात्परस्य ऋतुवाचिन इत्यन्वयो मूले। पूर्ववार्षिकः। वर्षाणां प्रावृषः पूर्वः पूर्ववर्षाः। तत्र जातार्थे पूर्ववर्षा-ठ-इति स्थिते पूर्वपदमवयववाचकञ्च पूर्वेति पदमिति ततः परस्य ऋतुवाचकस्य वर्षाशब्दस्य

पूर्ववार्षिकः। अपरहैमनः। अवयवात्किम्। पूर्वासु वर्षासु भवः पौर्ववार्षिकः। **ऋतोर्वृद्धिमद्विधाववयवानामिति** तदन्तविधिः पूर्वत्र। इह तु न। अवयवत्वाभावात्॥

---

अचामादे रचः वकारो पर्यकार्यस्य वृद्धिः ठस्येकादेशः। यस्येति लोपः। पूर्ववार्षिकः। वृद्धिविधायकमेवेदं सूत्रम्। प्रत्ययविधायकन्तु वर्षाभ्यष्ठक्। अपरहैमन इत्यत्र तु सर्वत्राण्सूत्रम्। पूर्वासु वर्षास्विति। शरदादिऋत्वपेक्षया वर्षाणां पूर्वत्वमत्र पूर्वशब्देनाभिधीयते। न तु वर्षाणां पूर्वावयव इति। अवयववाचकत्वाभावात् पूर्वशब्दस्य नोत्तरपदवृद्धिः। ननु वर्षाभ्यष्ठगिति ठक् – वर्षाशब्दादेव विहितः। न तु तदन्तादिति कथं पूर्ववर्षाशब्दात् ठक्। एवम् हेमन्तशब्दादेव अण्विहित इति अपरहेमन्तशब्दात् कथमण्। प्रकृतिग्रहणे तदन्तविध्यभावात्। प्रत्ययग्रहणे हि तदन्तविधिः इत्यत आह – ऋतोर्वृद्धिमद्विधावयवानामिति तदन्तविधिरिति। अवयवानां प्रयोजनमिति तु पाठः सूत्रपाठे। येन विधिस्तदन्तस्येति परिभाषासूत्रस्थमिदं वार्तिकम्। अतः परिभाषैवेयम्। ऋतोः वृद्धिमद्विधौ तदन्तविधिर्वाच्यः। अवयवानां चेत्प्रयोजनमित्यन्वयः। यन्निमित्तकत्वेन वृद्धिर्जायते स वृद्धिमान् ठगादिः प्रत्ययः ञिति णिति किति च परे पूर्वस्य वृद्धिसंभवात्। वृद्धिं प्रति ठगादिर्निमित्तमिति वृद्धिमत्त्वं ठगादेर्बोध्यम्। ऋतुवाचकाच्छब्दाद्वृद्धिमत्प्रत्ययविधाने तदन्तविधिः। यदा वर्षाभ्यष्ठक् – ऋतोर्वृद्धिमद्विधिरयम्। अतोऽत्र तदन्तविधिः। वर्षान्ताच्च ठक्स्यादिति। तथा च पूर्ववर्षाशब्दादपि ठक्सिद्धः। अवयवानाम्प्रयोजनम्। प्रकर्षेण योजनं प्रयोजनम्। प्रयोग इत्यर्थः। ऋतोः पूर्वं यद्यवयववाचिनां प्रयोगस्तर्हि तदन्तविधिरिति नियमः। अवयवप्रयोगाभावे तु वृद्धिमद्विधावपि न तदन्तविधिरिति भावः। ऋत्वन्तस्य पूर्वपदं यद्यवयवभूतम् अर्थादृतोरेव तर्हि तत्रैव तदन्तविधिरिति यावत्। तस्मात् वर्षाभ्यष्ठगिति ठक्। वर्षान्तादवयवपूर्वपदकाद्भवत्येव अनवयवपूर्वकात्तु न भवति। एवं सर्वत्राणपि बोध्यः। फलितमाह तदन्तविधिः पूर्वत्र इह तु नेति। इह तु नेत्यस्य हेतुः अवयवत्वाभावादिति। पूर्वकालिकः पूर्वहैमनः इत्यत्र अवयवपूर्वपरकत्वात्तदन्तविधिना वृद्धाभ्यष्ठक् सर्वत्राण् च भवति। पौर्ववर्षिक इत्यत्र तु अनवयवपूर्वपरकत्वेन तदन्तविध्यभावाद्वर्षाभ्य ष्ठगिति ठक् न। किन्तु कालाठ्ञेव। ठक्ठञोस्स्वरे भेदः–इति मूलकाराशयः। पूर्वकालिकः पूर्वहैमनः। पराभ्यष्ठक्। सर्वत्राण् च तलोपश्च ऋतोर्वृद्धिमद्विधाववयवानामिति तदन्तविधेरत्र सत्त्वात्। सूत्रे अवयवात्किम् । पूर्वासु वर्षासु भवः पौर्ववर्षिकः। कालाठ्ञ्। पूर्वपदस्य अवयवत्वाभावेन तदन्तविध्यभावान्न वर्षाभ्यष्ठक् इति विशेषपूरणेन मूले पठिते सति सुगमोऽर्थस्स्यात्।

**१३९८। सुसर्वार्धाज्जनपदस्य** ।७।३।१२। उत्तरपदस्य वृद्धिः। सुपाञ्चालकः। सर्वपाञ्चालकः। अर्धपाञ्चालकः। 'जनपदतदवध्योः-१३४८' इति वुञ्॥ **सुसर्वार्धदिक्शब्देभ्यो जनपदस्येति** तदन्तविधिः॥ **१३९९। दिशोऽमद्राणाम्** ।७।३।१३। दिग्वाचकाज्जनपदवाचिनो वृद्धिः। पूर्वपाञ्चालकः। दिशः किम्। पूर्वपञ्चालानामयं पौर्वपञ्चालः। अमद्राणां किम्। पौर्वमद्रः। योगविभाग उत्तरार्थः॥ **१४००। प्राचां ग्रामनगराणाम्** ।७।३।१४। दिशःपरेषां नगरवाचिनां ग्रामवाचिनामङ्गानामवयवस्य च वृद्धिः। पूर्वेषुकामशम्यां भवः पूर्वैषुकामशमः। नगरे, पूर्वपाटलिपुत्रकः॥

---

***सुसर्वार्थादिति** सूत्रे समाहारः–सु–सर्व–अर्थ–इत्येतेभ्यः उत्तरपदस्य परस्येत्यर्थः। जनपदस्य तद्विशेषवाचकस्य अचामादेरचो वृद्धिस्स्यादिति सूत्रार्थः। सुपञ्चालेषु जातः सुपाञ्चालकः। पञ्चालानां निवासः पञ्चाला जनपद इति अणः जनपदे लुप्–लुपि युक्तवद्भावः। अवृद्धादपि बहुवचनविषयादिति वुञ्। पञ्चालानां बहुवचनविषयत्वादवृद्धत्वाच्च। ननु अवृद्धादपीत्यनेन जनपदतदवध्योरेव वुञ् विधीयते, न तु तदन्तस्येति कथं सुपाञ्चालशब्दाद्वुञ्। अत आह सुसर्वार्थेति इदमपि येन विधिरिति सूत्रस्थ वार्तिकमेव। एभ्यः परस्य जनपदस्य तदन्तविधिर्वाच्य इत्यर्थः। एतत्पूर्वकाज्जनपदाद्वुञ् वाच्य इति यावत् । दिशो मद्राणाम्। अत्र जनपदस्येत्यनुवृत्तिः । दिश इति पञ्चमी। दिग्वाचकात्परस्य जनपदस्याचामादेरचो वृद्धिः स्यात्। न तु मद्राणामित्यर्थः। पूर्वेषु पञ्चालेषु जातः पूर्वपाञ्चालकः। दिग्वाचकोऽयं पूर्वशब्दः। पञ्चालानां पूर्वः पूर्वपञ्चालास्तेषां पूर्वपञ्चालानामयमिति विग्रहे तु पूर्वपञ्चाल इति भवति। पूर्वशब्दस्यात्र अवयववाचकत्वेन दिग्वाचकत्वात्। अदिक्शब्दत्वान्न तदन्तविधिस्सुसर्वार्थेत्यनेनेति। जनपदलक्षणो न वुञ्। किन्तु तस्येदमित्यौत्सर्गिकोऽण् इति। ननु सुसर्वार्थदिशोऽमद्राणां जनपदादित्येकसूत्रमेव कर्तव्यं योगविभागो व्यर्थ इत्यत आह उत्तरार्थ इति। प्राचामित्युत्तरसूत्रे दिश इत्यस्यैवानुवृत्तिर्यथास्यान्न तु सुसर्वादीनामित्येतदर्थं योगविभाग इति भावः। ***प्राचामिति** ग्रामनगराणामित्यस्य विशेषणम्। प्राचां देशे यानि ग्रामनगराणि तेषामित्यर्थः। यद्वा प्राक् प्राची–प्राञ्चि इति तेषां प्राचां पूर्वाणामित्यर्थः। प्राग्दिग्भवानामिति यावत्। अथ वा प्राग्देशवाचिनामित्यर्थः। प्राग्देशवाचित्वे सति ये ग्रामनगरवाचकास्तेषा मिति यावत्। अत्र सूत्रे दिश इत्यनुवृत्तिः। उत्तरपदस्येत्यधिकारः। अङ्गस्येति च। अचामादेरचो वृद्धिरिति चानुवर्तन्ते। उत्तरपदस्येति वचनविपरिणामेन ग्रामनगराणामित्यस्य

विशेषणम्। उत्तरपदानामिति। अस्यैव प्रतिपदं परेषामिति मूले। अङ्गस्येत्यस्य वचनविपरिणामेन अङ्गानामिति। अचामादेरच इत्यस्य अवयवस्याच इति आद्यवयवस्याच इत्यर्थः। अवयवस्य च इति पाठस्तु प्रामादिकः। सूत्रोक्तं प्राचामिति पदन्तु मूले प्रक्षेप्तव्यम्। दिशः परेषां प्राचामिति दिशः परेषां पाग्ग्रामवाचिनाम्। प्राङ्नगरवाचिनाञ्च अङ्गानामचामादेरचो वृद्धिः स्यादिति निष्कृष्टमूलार्थः। यथा पूर्वेषु कामशमी इषुकामशमीति प्राचां ग्रामः। पूर्वा च सा इषुकामशमी च पूर्वेषुकामशमी इति दिक्पूर्वपदकोऽयम्। दिश उत्तरपदस्य इषुकामीत्यस्य प्राग्देशस्य अचामादेरच इकारस्य वृद्धिरैकारः। अणि परतः पूर्वैषुकामशमः। अवयवस्य चेति पाठे चकारोऽनर्थावहः। अवयवस्यापि वृद्धिरित्यप्यर्थकेन चकारेण दिग्वाचकस्यापि वृद्धिसंभवात्। पौर्वैषुकामशम इति स्यादिति। अथ यदि दिक्पूर्वपदस्य जनपदस्य दिक्पूर्वपदानां प्राग्ग्रामनगराणामवयवस्य च वृद्धिरिति चकारो लक्ष्यसमुच्चयार्थक इति। तर्हि मूले अच इति विशेष्यमध्याहार्यम्। दिक्पूर्वपदका ये प्राग्ग्रामनगरवाचिनः दिक्पूर्वपदकत्वसन्नियोगेनैव तेषां तद्वाचित्वमिति भावः)। तेषामवयवस्य उत्तरपदस्य वृद्धिरिति व्याख्याने तु दिश इति पञ्चमीबलात्परेषामित्यस्य लाभः। (तस्मादित्युत्तरस्येति परिभाषावशात् अचामादेरच इति शेषः इति बोध्यम्। अस्मिन्पक्षे पूर्वेषु कामशमीत्ययं प्राग्ग्रामः। रूढोऽयं शब्दः। अपूर्वा च सा इषुकामशमी चेति विग्रहस्त्वस्त्येव। जहत्स्वार्थावृत्तिरिति पक्षाभ्युपगमात्। एवञ्च दिक्पूर्वपदकत्वं रूढ्या प्राग्ग्रामवाचित्वञ्च सम्भवति। पूर्वेषुकामशमीत्यस्य समस्तपदस्य अवयवउत्तरपदन्तु इषुकामशमी। तस्याचामादेरचो वृद्धिरणि परे। पूर्वैषुकामशमः। यथाश्रुतमूलानुगुणमपीदं व्याख्यानं न सङ्गच्छते। इषुकामशमी। पाटलिपुत्रः। इत्यनयोरेव प्राग्ग्रामनगरवाचित्वमिति दिक्छब्दसन्नियोगं विनापि ग्रामनगरप्रतीतौ सन्नियोगस्य आनर्थक्यात्। दिक्छब्दसन्नियोगं विना यदि ग्रामनगरार्था प्रतीतिस्तर्हि शक्येत वक्तुमेवम्। नैवं दृश्यते इति। किञ्च दिशः। परेषां ग्रामनगराणामित्यनेन दिक्छब्दसम्बन्धं विनैव ग्रामनगरवाचित्वं येषां वर्तते

**१४०१। पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन्** ।४।३।२८। पूर्वाह्णकः। अपराह्णकः। आर्द्रकः। मूलकः। प्रदोषकः। अवस्करकः॥ **१४०२। पथः पन्थ च** ।४।३।२९। पथि जातः पन्थकः॥ **१४०३। अमावास्याया वा** ।४।३।३०। अमावास्यकः। आमावास्यः॥

---

तेषामेव ग्रहणमिह सम्भाव्यते। अपि च अवयवार्थस्याप्राधान्ये दिक्पूर्वपदत्वं न घटते। प्राधान्ये तु ग्रामनगरवाचित्वं न घटते–इति द्वयोस्सन्निवेशस्य दुर्घटत्वात्। दिक्परत्वं ग्रामनगरवाचित्वञ्च नानयोश्शक्यते वक्तुम् इति। ननु सुसर्वार्धदिशोऽमद्राणां जनपदस्येति सूत्रयित्वा त्यक्तव्यमिदं प्राचामिति सूत्रमिति चेन्मैवम्।

जनपदो नाम देशः। ग्रामः पल्ली–नगरं पत्तनमित्यमीषां भेदात्। प्राग्जनपदस्यैव स्यान्न तु प्राग्ग्रामनगराणामिति तदर्थमिदं सूत्रम्। न च तत्रैव ग्रामनगराणामिति प्रक्षेप्तव्यमिति वाच्यम्। उदगवाक्प्रत्यग्ग्रामनगराणामपि उत्तरपदवृद्धिसम्भवात्। न च प्राचां ग्रामनगराणामित्यपि तत्सूत्रे एव पठितव्यमिति वाच्यम्। स्वादिभ्यः परेषामप्येषामुत्तरपदवृद्धिस्सम्भवेदिति। ***अवस्करकः।** वर्चस्केऽवस्कर इति निपातनादवपूर्वात्किरतेस्सुट्। अवकीर्यते इत्यवस्करः। पुरीष इत्यर्थः। तत्र जतोऽवस्करकः कीटादिः ***पन्थ** च। चाद्वुन्। अणोऽपवादः। पन्थेत्यदन्त आदेशः। अनेकाल्त्वात्सर्वादेशः। पथिन्शब्दात्सप्तम्यन्ताज्जातार्थे वुन् स्यात्। पथिन् इत्यस्य पन्थेत्यादेशश्च स्यादिति सूत्रार्थः। पथ इति पथिन्शब्दात्षष्ठी वोरकादेशः। पन्थ अक–यस्येति लोपः । पन्थकः। ननु पथोन्थङ् च इति सूत्र्यताम्। वुनि कृते, न स्तद्धित इति टिलोपानन्तरं। पथ् अक इति स्थिते, ङित्त्वादन्त्यस्य धकारस्यन्थादेशः। पन्थक इति भवतीति चेन्मैवम्। लाघवाभावात्। अपि च टिलोपप्रक्रियागौरवात्। किञ्चन्धङ्व्यनोस्सन्नियोगशिष्टत्वेन यदा वुन् तदैव न्थङ् स्यात्। तथा च नकारस्य न्थादेशः पतिन्थक इति स्यात्। पथो थोन्थ च इति सूत्रिते तु गौरवमेव। अतो यथासूत्रं रमणीयम्।

**१४०४। अ च** ।४।३।३१। अमावास्यः॥ **१४०५। सिन्ध्वपकराभ्यां कन्** ।४।३।३२। सिन्धुकः॥ कच्छाद्यणि मनुष्यवुञि च प्राप्ते॥ अपकरकः। औत्सर्गिकेऽणि प्राप्ते॥ **१४०६। अणञौ च** ।४।३।३३। क्रमात् स्तः। सैन्धवः। आपकरः॥**१४०७। श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखा-षाढाबहुलाल्लुक्** ।४।३।३४। एभ्यो नक्षत्रवाचिभ्यः परस्य जातार्थप्रत्ययस्य लुक् स्यात्॥ **१४०८। लुक् तद्धितलुकि** ।१।२।४९। तद्धितलुकि सत्युपसर्जनस्त्रीप्रत्ययस्य लुक् स्यात्। श्रविष्ठासु जातः श्रविष्ठः। फल्गुन इत्यादि॥

---

अच। अत्र अमावास्याया इत्यनुवर्तते। वस्तुतस्तु अमावास्याया अच इत्येकमेव सूत्रं कर्तव्यम्। च शब्दस्समुच्चयार्थः। सन्निहितस्य वुनः उत्सर्गस्य सन्धिवेलादि लक्षणाणश्च प्रकृतस्य अस्य च समुच्चयः। तेन अमावास्याशब्दाज्जातार्थे वुन्–अण्–अः इत्येते प्रत्ययास्स्युरिति सूत्रार्थः। योगविभागकर्तुराशयस्तु अमावास्याया अप्रत्ययस्स्यात् चात्सन्निहितो वुन् इति अण्न स्यादिति। अप्रत्यये अण्प्रत्यये च अङ्गस्य वृद्धितदभावाभ्यां भेद इति तयोः पृथग्विधानम्। अणि आमावास्यः। अप्रत्यये अमावास्यः इति। *सिन्धुकः। सिन्धुशब्दस्य कच्छादित्वेन मनुष्यतत्स्थभिन्नार्थे कच्छादिभ्यश्चेत्यण् प्राप्नोति। मनुष्यतत्स्थयोस्तु वुञ् प्राप्नोति। तदपवादोऽयं कन्। सिन्धौ जातस्सिन्धुको मनुष्यः। सिन्धुकं हसितम्। अपकरशब्दादौत्सर्गिकेऽणि प्राप्ते अनेन कन्। अपकरे जातः अपकरकः। सिन्धुको गौः इति। अथ कथं सैन्धवोऽश्व इति चेदुच्यते। सिन्धोरयं सैन्धव इति। तस्येदमित्यर्थे कच्छादिभ्यश्चेत्यण्। तत्र जात इत्यर्थे एव अणादेरपवादः कन् न त्वन्यत्रेति भावः। यद्वा अणञौ चेति वक्ष्यमाणसूत्रेण जाताद्यर्थेऽप्यण् स्यादिति न शङ्कावकाशः। ***अपकरशब्दादञि** ञित्त्वादादिवृद्धिः। अपकरे जातः आपकरः। अपकर इति तु प्रामादिकः। अणञोस्स्वरे भेदः। ***लुक्** तद्धित लुकि। अत्र गोस्त्रियोरुपसर्जनस्येति सूत्रात् स्त्रिय इति उपसर्जनस्येति च अनुवर्तेते। स्त्रियां विहितः प्रत्यय उपचारात् स्त्री, तस्याः स्त्रियः। श्रविष्ठासु जात इत्यर्थे सन्धिवेलात् ऋतुनक्षत्रेभ्योऽण् इति अणि, श्रविष्ठा। अ इति स्थिते। श्रविष्ठादिसूत्रेण जातार्थे विहितस्य अणो लुक्। श्रविष्ठा। लुक्तद्धितलुकीति स्त्रीप्रत्ययस्य टापः लुक् श्रविष्ठ इति। न च श्रविष्ठ टाप्। श्रविष्ठा इति एकादेशस्य परादिवद्भावेन टापो लुकि श्रविष्

**चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम्** ॥ चित्रायां जाता चित्रा। रेवती। रोहिणी। आभ्यां 'लुक्तद्धितलुकि १४०८' इति लुकि कृते पिप्पल्यादेराकृतिगणत्वात्पुनर्ङीष् ॥ **फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ** ॥ स्त्रियामित्येव। फल्गुनी। अषाढा ॥ **श्रविष्ठाषाढाभ्यां छण्वक्तव्यः** ॥ अस्त्रियामपि। श्राविष्ठीयः। आषाढीयः ॥

---

इति स्या दिति वाच्यम् श्रविष्ठ–आ–सुप्–अण्–इति प्रक्रिया। अत्र सुब्लुक्, पश्चात्तद्धितलुक्। ततः टाप इति सवर्णदीर्घात्प्रागेव टापो लुगिति। ननु गोस्त्रियोरित्युपसर्जनह्रस्वे कृते श्रविष्ठ इति स्यादेवेति व्यर्थमिदं सूत्रमिति चेन्मैवम्। गोस्त्रियोरिति सूत्रे शास्त्रीयमेवोपसर्जनं गृह्यते। विग्रहे यन्नियतविभक्तिकं तच्छास्त्रीयम्। अप्रधानलक्षणन्तु लौकिकमुपसर्जनम्। श्रविष्ठाभ्यः प्रभवति श्रविष्ठासु जात इत्यादिविग्रहसंभवान्न श्रविष्ठाशब्दो विग्रहे नियतविभक्तिक इति नात्र शास्त्रीयोपसर्जनं संभवति इति नात्र तेन ह्रस्वश्शक्यते वक्तुम्। एवं फल्गुन्यां जातः फल्गुन इत्याद्यूह्यम्। *__चित्रेति__ स्त्रियां वाच्यायां चित्रादिभ्यः परस्य जातार्थप्रत्ययस्य लुग्वक्तव्य इति वार्तिकार्थः। स्त्रियां किम्? चैत्रः। रैवतः, रौहिणः। नक्षत्रलक्षणोऽण् । अपत्यार्थे तु स्त्रीभ्यो ढक् रौहिणेय इत्यादि। लुक्तद्धितलुकीति लुगनन्तरं चित्रशब्दाददन्तत्वात्पुनष्टाप्। रेवतीनक्षत्रे रोहिणीनक्षत्रे इतिगौरादिषु पाठाद्रेवतरोहिणशब्दाभ्यां नक्षत्रङीष् निपातितः। वर्णादनुदात्तादिति रोहितशब्दात् ङीषि तस्य नकारादेशः। रोहिणी इति त्वन्योऽयं शब्दः। लुक्तद्धितलुकीति ङीषो लुकि तत्सन्नियोगशिष्टो नकारोऽपि लुप्यतीति वर्णवाचिरोहिणीशब्दे रोहित इति शिष्यते नक्षत्रवाचिनि महारोहिण इति। एवं रेवत इत्यपि। अधुना अदन्तलक्षणे टापि प्राप्ते तं बाधित्वा पुनर्ङीष्। ननु नक्षत्रे एव ङीषन्तौ निपातिताविति जातार्थे ङीष् न स्यादत आह–पिप्पल्यादेरिति। गौरादिगणसूत्रं पिप्पल्यादय इति। ननु पिप्पल्यादिषु न पठिताविमावत आह–अकृतिगणत्वादिति। रेवती–रोहिणी। तन्नक्षत्रजाता स्त्री इत्यर्थः। ट् इत् अ इति शिष्यते। एममन्यपि? न इत्। अ इति शिष्यते। टित्त्वं ङीबर्थम्। अन्नन्तात्तु अदन्तलक्षणष्टाबेव। फल्गुन्यां जाता स्त्री फल्गुनी। फल्गुनी–अ–इति स्थिते यस्येति लोपः। फल्गुन–टित्त्वात् ङीप्। पल्गुन–ई, यस्येति लोपः फल्गुनि। अषाढायां जाता स्त्री अषाढा, अषाढा–अन्। यस्येति लोपः। अषाढ टाप्, सवर्णदीर्घः अषाढा इति। *__श्राविष्ठीयः।__ श्रविष्ठासु जातः इत्यर्थे छण्। शित्त्वादादिवृद्धिः। छस्येयादेशः। ननु श्रविष्ठासूत्राज्जातार्थप्रत्ययस्य छणो लुक्स्यादिति चेन्मैवम्। विधानसामर्थ्यात्। लुकि

**१४०९। जे प्रोष्ठपदानाम्** ।७।३।१८। प्रोष्ठपदानामुत्तरपदस्याचामादेरचो वृद्धिः स्याज्जातार्थे ञिति णिति किति च। प्रोष्ठपदासु जातः प्रोष्ठपादो माणवकः। जे इति किम्। प्रोष्ठपदासु भवः प्रौष्ठपदः बहुवचननिर्देशात्पर्यायोऽपि गृह्यते। भाद्रपादः॥
**१४१०। स्थानान्तगोशालखरशालाच्च** ।४।३।३५। एभ्यो जातार्थप्रत्ययस्य लुक् स्यात्। गोस्थानः। गोशालः। खरशालः। 'विभाषा सेना-८२८' इति नपुंसकत्वे ह्रस्वत्वम्॥

---

सति छण्विधानं व्यर्थमिति लुङ्नेति भावः। स्त्रियामदनलक्षणे टापि श्राविषीया इति।
*****जे प्रोष्ठपदानाम्**। जायत इति जः अन्येष्वपि दृश्यते इति जनेर्डः। (अपिना सर्वोपाधिव्यभिचारस्य फलितत्वेन निरुपपदादपि जनेर्डः) एवं ज इत्यस्य जात इत्यर्थः। तस्मिन् जे जातेऽर्थे अचो ञिति किति च तद्धितेष्वचामादेरिति सूत्राणाम्। मृजेर्वृद्धिरिति सूत्राद्वृद्धेश्चात्रानुवृत्तिः। उत्तरपदस्येत्यधिकारः। जे जातार्थे विहितो यः ञित् णित् कित् च प्रत्ययस्तद्धितः तस्मिन्परे प्रोष्ठपदानामुत्तरपदस्य (अर्थात्पदेत्यस्य) अचामादेरचः (अर्थात्पकारोपर्यकारस्य) वृद्धिः (अर्थादाकारः) भवतीति सूत्रार्थः। भद्रपादः। प्रोष्ठपदभद्रपदशब्दौ नक्षत्रवाचिनौ पर्यायौ। भद्रपदनक्षत्रयुक्ता पौर्णमासी भाद्रपदपौर्णमास्यां लुप्नेति ज्ञापितत्वात् भाद्रपदी अस्मिन्नस्तीति भाद्रपदो मासः । औत्सर्गिकोऽण्। एवं प्रौष्ठपद इत्यपि पर्यायः। जातार्थे लुगित्युक्तत्वात् सास्मिन्पौर्णमासीत्यर्थेऽत्र न लुप्-अण्प्रत्ययस्येति बोध्यम्। भाद्रपद इत्यमरे प्रोष्ठपद नक्षत्रपर्यायः। तन्मतरीत्या तु भाद्रपाद इत्येव पाठस्सङ्गच्छते।

*****स्थानान्तेति।** स्थानशब्दः अन्ते यस्य तत्समस्तं पदम्। स्थानान्तम्। गोश्शाला-गोशालम्। ठाणा शाला खरशालम्। विभाषा सेनासुराच्छायाशालानिशानामिति शाखान्तस्य नपुंसकत्वम्। ह्रस्वो नपुंसके प्रातिपदिकस्येति ह्रस्वत्वञ्च। तेषां समाहारः स्थानान्तगोशालखरशालम्। तस्मात्। स्थानान्तस्योदारणम्। गोस्थान इति। गोस्थाने जात इति विग्रहे औत्सर्गिकस्याणो लुक्। एवं गोशाले खरशाले च जातः। गोशालः खरशालः। ***शातभिषजः** शतभिषक् इति नक्षत्रम्। तस्माज्जातार्थे सन्धिवेलाद्यृतुनक्षत्रेभ्य इत्यण्। न च औत्सर्गिकोऽण् स्यादिति वाच्यम्। कालाठ्ठञ् इति ठञा अण औत्सर्गिकस्य निवृत्तत्वात्। अयं भावः। शतभिषक्शब्दात् जातार्थे शेषे इत्यण् प्राप्तः। तं बाधित्वा कालाठ्ठञ् (नक्षत्रस्य कालवृत्तित्वात्) ठञं बाधित्वा नक्षत्राण् इति प्रक्रिया शतभिषक् अण् इति स्थिते अत्र वार्तिकम्। जातार्थ इति प्रतिप्रसूतः बाधकबाधनार्थं विहित

**१४११। वत्सशालाभिजिदश्वयुक्शतभिषजो वा** ।४।३।३६। एभ्यो जातार्थस्य लुग्वा स्यात्। वत्सशाले जातो वत्सशालः। वात्सशालः इत्यादि॥ **जातार्थे प्रतिप्रसूतोऽण्वा डिद्वक्तव्यः**॥ शातभिषः। शातभिषजः। शतभिषक्॥ **१४१२। नक्षत्रेभ्यो बहुलम्** ।४।३।३७। जातार्थप्रत्ययस्य बहुलं लुक् स्यात्। रोहिणः। रौहिणः ॥ **१४१३। कृतलब्धक्रीतकुशलाः** ।४।३।३८। तत्रेत्येव। स्रुघ्ने कृतो लब्धः क्रीतः कुशलो वा स्रौघ्नः॥ **१४१४। प्रायभवः** ।४।३।३९। तत्रेत्येव। स्रुघ्ने प्रायेण बाहुल्येन भवति स्रौघ्नः॥ **१४१५। उपजानूपकर्णोपनीवेष्ठक्** ।४।३।४०।

---

इत्यर्थः। बाधकस्य ठञो बाधनार्थं विहितत्वादयं नक्षत्राण् प्रतिप्रसूत इत्युच्यते। नक्षत्राणजाताद्यर्थेषु विहित इति जातार्थे प्रतिप्रसूत एवात्र गृह्यते। अणो डित्त्वे टिलोपः। शतभिषः। डित्त्वाभावपक्षे शातभिषजः वत्सशालेत्यनेन जातार्थप्रत्ययस्य लुक्पक्षे शतभिषक् इति। ***नक्षत्रेभ्य इति।*** श्रविष्ठाभिन्नान्येव नक्षत्राण्यत्र ग्राह्याणि। तेषां प्रतिपदोक्तत्वेन तेभ्यो विहितस्य नित्यं लुगिति। चित्रारेवतीरोहिणीभ्यस्स्त्रियान्तु नित्यं लुक् इति मत्वा रोहिणीशब्दज्जातार्थे पुंसि उदाहरति रोहिणः रौहिणः इति। उभयत्रापि वृद्धितदभावाभ्यां भेदः अणो लुकि लुक्तद्धितलुकीति स्त्रीप्रत्ययस्यापि लुक् रोहिणः। अशि तु यस्येति लोपः आदिवृद्धिः रौहिणः। ***कृतेति।*** स्पष्टार्थमिदं सूत्रम्। शेषे इत्यनेनैव कृतादिषु अणादिप्रत्ययोत्पत्तिसम्भवात्। शेषपदेन एते अर्था अपि ग्राह्या इति द्योतयितुं सूत्रमिति भावः। तत्रेत्यस्यात्रान्वयः। सप्तम्यन्तात्कृत इत्याद्यर्थेषु यथाविहितमणादयो घादयश्च स्युरिति सूत्रार्थः। स्रौघ्नः। एवमौत्सः राष्ट्रिय इत्यादि । ***सप्तम्यन्तात्प्राय** भव इत्यर्थे यथाविहितं प्रत्ययास्स्युरिति सूत्रार्थः। ***उपजान्वादयोऽव्ययीभावाः।** जानोस्समीपे उपजानु। इत्यादि। अव्ययं समीपेति समीपार्थे उपेत्यव्ययं जान्वादिभिस्समस्यते इत्यव्ययीभावत्वमेषाम् त्रयाणां समाहारः सूत्रे। एतेभ्यः प्रायभव इत्यर्थे ठक्स्यादिति सूत्रार्थः। अणोऽपवादः। उपजानु। प्रायभवः । औपजानुकः। उगन्तलक्षणः ठस्य कादेशः । एवमन्यत्रापि बोध्यम्। ***सप्तम्यन्तात्संभूत** इत्यर्थे प्रत्ययास्स्युरिति सूत्रार्थः। ***कौशेयम्।** कोशे सम्भूतं सम्भावितं वस्त्रं कौशेयम्। वस्त्रं हि तन्त्वात्मना कोशे वर्तत इति सम्भाव्यते। तस्मात् वस्त्रसंभावनाया आधारभूतात् कोशात्सप्तमी। ननु उत्पत्तेः प्राक्कार्यमसदेवेति असत्कार्यवादिनां नैयायिकानां मते कोशे वस्त्रस्थितिरसम्भावितैवेति चेद्भवतु नाम। सत्कार्यवादिनां वेदान्तिनां मते उत्पत्तेः प्राक्कार्यं कारणात्मना वर्तते इति तन्त्वात्मना वस्त्रं

औपजानुकः। औपकर्णिकः। औपनीविकः॥ **१४१६। संभूते** ।४।३।४१। स्रुघ्ने संभवति स्रौघ्नः॥ **१४१७। कोशाड्ढञ्** ।४।३।४२। कौशेयं वस्त्रम्॥ **१४१८। कालात्साधुपुष्प्यत्पच्यमानेषु** ।४।३।४३। हेमन्ते साधु हैमन्तः प्राकारः। वसन्ते पुष्प्यन्ति वासन्त्यः कुन्दलताः। शरदि पच्यन्ते शारदाः शालयः॥ **१४१९। उप्ते च** ।४।३।४४। हेमन्ते उप्यन्ते हैमन्ता यवाः॥ **१४२०। आश्वयुज्या वुञ्** ।४।३।४५। ठञोऽपवादः। आश्वयुज्यामुप्ता आश्वयुजका माषाः॥ **१४२१। ग्रीष्मवसन्तादन्यतरस्याम्** ।४।३।४६। पक्षे ऋत्वण्। ग्रैष्मकम्। ग्रैष्मम्। वासन्तकम्। वासन्तम्॥ **१४२२। देयमृणे** ।४।३।४७। कालादित्येव। मासे देयमृणं मासिकम्॥ **१४२३। कलाप्यश्वत्थयवबुसाद्वुन्** ।४।३।४८। यस्मिन् काले मयूराः कलपिनो भवन्ति स उपचारात्कलापी तत्र देयमृणं कलापकम्।

---

कौशेयं कोशे सम्भावितमेवेति न दोषः। यद्यपि क्रिमिकोशे तन्तव एव सम्भाव्यन्ते न तु वस्त्रम् तथापि लक्षणया तन्तुजन्यं वस्त्रमपि सम्भाव्यत एवेति बोध्यम्। कौशेयं क्रिमिकोशोत्थमित्यमरः। पट्टवस्त्रं कौशेयमित्युच्यते इति। *कालादिति। सप्तम्यन्तात्कालवाचकात्। साधुरिति। पुष्प्यन्तीति पच्यमान इति एष्वर्थेषु प्रत्ययास्स्युरित्यर्थः। वसन्तशब्दात् त्वणि स्त्रियां ङीपि बहुवचनम्। वासन्त्यः। शालीनां पुंस्त्वात् शारदाः। ***ठञोऽपवादः।** कालाठ्ठञ् इत्यर्थः। कालात्साधुपुष्प्यत्पच्यमानोप्तेष्विति सूत्रिते आश्वयुज्या वुञ् इति सूत्रे साध्वादीनां चतुर्णामनुवृत्तिस्स्यात्। तथा च आश्वयुज्यास्साध्वादिष्वर्थेषु वुञ् स्यादिति सूत्रार्थः। तस्मिन्सति आश्वयुज्यां साधुराश्वयुजक इति स्यात्। तच्चानिष्टम्। इष्यते तु कालाठ्ठञि आश्वयुजिक इति। तस्मात् उप्तार्थे एव आश्वयुज्या वुञ् इति निष्कर्षाय उप्ते चेति योगविभाग इति बोध्यम्। ***पक्षे ऋत्वण्।** वुञभावपक्षे कालाठ्ठञि प्राप्ते तं बाधित्वा सन्धिवेलादीति ऋत्वण् इत्यर्थः। उप्ते इत्येव। ग्रीष्मे उप्तम् ग्रैष्मकं ग्रैष्मम् इति। ***देयमिति।** सप्तम्यन्तात्कालाद्देयमित्यर्थे प्रत्ययास्स्युः तच्चेद्देयं ऋणम्। मासिकम्। अधमर्णेन उत्तमर्णाय पुनर्दातव्यस्य ऋणस्य मासोऽवधिरित्यर्थः। ***कलापीति।** कालाद्देयं ऋणमित्येवं सप्तम्यन्तेभ्यः कालवृत्तिभ्यः कलाप्यादिभ्यः देयमित्यर्थे वुन् स्यात्। तच्चेद्देयमृणमिति सूत्रार्थः। कालाठ्ठञोऽपवादोऽयं वुन्। ननु कलाप्यादीनां कालवृत्तित्वमसम्भवीत्यत आह स उपचारात्कलापीत्यादि। कलाप्यादीनामौपचारिकः प्रयोगः कालार्थे बोध्य इति भावः। कलापिनि देयं कलापकम्। कलापो बर्हः। मयूरा यदा कलापिनो भवन्ति तदा पुनस्ते दास्यामीति प्रतिज्ञया स्त्रीकृतमृणं

अश्वत्थस्य फलमश्वत्थस्तद्युक्तः कालोऽप्यश्वत्थः। यस्मिन् कालेऽश्वत्थाः फलन्ति तत्र देयमश्वत्थकम्। यस्मिन् यवबुसमुत्पद्यते तत्र देयं यवबुसकम्॥ **१४२४। ग्रीष्मावरसमाद्वुञ्** ।४।३।४९। ग्रीष्मे देयमृणं ग्रैष्मकम्। आवरसमकम्॥ **१४२५। संवत्सराग्रहायणीभ्यां ठञ्च** ।४।३।५०। चाद्वुञ्। सांवत्सरिकम्। सांवत्सरकम्। आग्रहायणिकम्। आग्रहायणकम्॥ **१४२६। व्याहरति मृगः** ।४।३।५१। कालवाचिनः सप्तम्यन्ताच्छब्दायत इत्यर्थे अणादयः स्युः यो व्याहरति स मृगश्चेत्। निशायां व्याहरति नैशो मृगः। नैशिकः॥ **१४२७। तदस्य सोढम्** ।४।३।५२। कालादित्येव। निशासहचरितमध्ययनं निशा तत्सोढमस्य नैशः। नैशिकः॥

---

कलापकमित्युच्यते। इत्यर्थः। वर्षासु मयूराः कलापमुद्धृत्य नृत्यन्तीति प्रसिद्धिः। सर्वदापि मयूराणां यद्यपि कलापोऽस्ति तथापि नर्तनोपयोगी विकसनशीलः कलापस्तदानीमेवेति वर्षासु कलापित्वम्। प्रशंसायामिनिरिति प्रशस्तकलापवत्त्वमित्यर्थात्। ***संवत्सरेति** तत्र देयमृणमित्येव। आग्रहायणी मृगशिरो नक्षत्रम्। तत्र देयमृणमाग्रहायणिकम्। ठस्येकादेशे यस्येति लोपः। वुञि आग्रहायणिकम्। ननु संवत्सराग्रहायणीभ्यां वा इति सूत्र्यताम्। वुञभावपक्षे कालाट्ठञ् स्यादिति चेन्मैवम्। पले ऋणत्वेन विवक्षिते संवत्सरात्फलपर्वणोरिति सन्धिवेलादिषु पठितत्वेन सन्धिवेलादिलक्षणो अण् स्यात् कालाट्ठञं बाधित्वेति काशिकाकाराशयः। तत्र देयस्य ऋणस्य तस्मै हितत्वं नास्तीति तद्धितस्याणो नात्र प्रसक्तिरिति सुवच एवायं न्यास इति नव्यानामाशयः। ऋणं हि न कालाय हितम्। किन्तु उत्तमर्णायैवेति। ननु तत्र साधुरित्यादीनां कथन्तस्मै हितत्वमिति चेत्। हैमन्तः प्राकार इत्यादौ प्राकारादीनां साधुत्वादिकं हेमन्तस्य गुणावहमिति तस्मै हितत्वमस्त्येवेति। ननु ग्रीष्मे देयमृणं ग्रैष्मकमित्यादौ वुञादेः कथं तद्धितत्वमिति चेत् तद्धितेषु पठनसामर्थ्यादेवेति बोध्यम्। ***तदस्य सोढम्।** तदिति प्रथमान्तात् कालवाचकात् आस्येत्युपाधिमतः सोढमित्यर्थे प्रत्ययास्स्युः। अस्य सोढमित्यर्थे वा। अथवा सोढमित्युपाधिमतः। तदिति प्रथमान्तात्कालात्। अस्येति षष्ठ्यन्तार्थे प्रत्ययास्स्युरिति। निशासोढमस्य नैशिकः। नैशः। निशाप्रदोषाभ्याञ्चेति वा ठञ्। रात्र्यध्ययनमयं सहते इत्यर्थः। सहतेः कर्मणि क्तः। सह्त इति स्थिते। होढः। झषस्तथोर्धः ष्टुत्वम्। ढोढे लोपः। स हि वहोरोदवर्णस्य सोढम्। केवलस्य कालस्य सोढत्वासोढत्वेन सम्भवत इति तत्सहचरिताध्ययनादिके कालवाचकस्य भाक्तत्वमिति मत्वा निशासहचरितमध्ययनं

**१४२८। तत्र भवः** ।४।३।५३। स्रुघ्ने भवः स्रौघ्नः। राष्ट्रियः॥ **१४२९। दिगादिभ्यो यत्** ।४।३।५५। दिश्यम्। वर्ग्यम्॥ **१४३०। शरीरावयवाच्च** ।४।३।६२। दन्त्यम्। कर्ण्यम्॥ **१४३१। प्राचां नगरान्ते** ।४।३।२४। प्राचां देशे नगरान्तेऽङ्गे पूर्वपदस्योत्तरपदस्य चाचामादेरचो वृद्धिर्ञिति णिति किति च। सुह्मनगरे भवः सौह्मनागरः। पौर्वनागरः। प्राचां किम्। मद्रनगरमुदक्षु तत्र भवो माद्रनगरः॥ **१४३२। जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम्** ।७।३।२५। जङ्गलाद्यन्तस्याङ्गस्य पूर्वपदस्याचामादेरचो वृद्धिरुत्तरपदस्य वा ञिति णिति किति च।

---

निशेत्युक्तं मूले ***तत्र भवः**। भवतीति भवः। भूसत्तायां सत्ताशालीत्यर्थः। सतो विद्यमानस्य भावस्सत्ता। विद्यमानत्वमित्यर्थः। एवं भव इत्यस्य विद्यमान इति फलितोऽर्थः। जातविद्यमानयोर्भेदात्। तत्र जात इत्यस्मात् पृथक् तत्र भव इति सूत्रं कृतम्। तत्रेति सप्तम्यन्तात् समर्थाद्भव इत्यर्थे प्रत्ययास्स्युरिति सूत्रार्थः। ***शरीरस्यावयवश्शरीरावयवः**। दन्तकण्ठादिः तस्मात् सप्तम्यन्तात् भवार्थे यत् स्यादिति सूत्रार्थः। दन्तेषु भवं दन्त्यम्। कण्ठे भवं कण्ठ्यम्।

***प्राचां** नगरान्ते। अत्र नेन्द्रस्य परस्येति सूत्राद्दीर्घाच्च वरुणस्य इति सूत्रेऽनुवृत्तो नञ् निवृत्तः। उत्तरपदस्येत्यधिकारः हृद्भगसूत्रात् पूर्वपदस्य चेति मण्डूकप्लुत्या अत्रान्वेति। मृजेर्वृद्धिरित्यतो वृद्धिः। अचो ञ्णिति किति च तद्धेष्वचामादेः इत्यनुयन्ति। अङ्गस्येत्यप्यधिकारः । तदेतदाह प्राचामित्यादिना। नगरेति शब्दः अन्ते यस्य तन्नगरान्तमङ्गं तस्मिन् नगरान्तोऽर्थाद्देशवाच्येव भवतीति देशे इत्यनुगुणं विशेष्यमध्याहृतम्। प्राग्देशवाचि नगरान्तं यदङ्गं तस्मिन् तदवयवयोः। पूर्वोत्तरपदयोरित्यन्वयः यद्वा प्राचां देशे यन्नगरान्तमङ्गं अर्थात् तन्नगरवाच्येव। तदवयवयोरिति सुह्मनगरमिति प्राग्देशे किञ्चिन्नगरम्। तत्र भवस्सौह्मनागरः। नगरान्ते किम्। पूर्वपाटलिपुत्रकः पाटलिपुत्रमिति नगरं प्राग्देशे। उदक्षु उत्तरदेशेषु ***विभाषितमुत्तरम्।** उत्तरमुत्तरपदं विभाषितं विभाषाऽस्य सञ्जाता विभाषितम्। सञ्जातविभाषमित्यर्थः। अर्थात् वृद्धिविषये एव। उत्तरपदस्य वृद्धिविषये विभाषा सञ्जातेति यावत्। तदेतदाह उत्तरपदस्य वा इति। उत्तरपदस्य विभाषितत्वे पूर्वनित्यत्वमर्थात्सिद्धमिति पूर्वपदस्य वृद्धिरित्युक्तं मूले। ***दृतीति।** एतेभ्यस्सप्तम्यन्तेभ्यः भवार्थे ढञ् स्यादित्यर्थः। ***ग्रैवेयम्।** कुलकुक्षिग्रीवाभ्यः श्वास्यलंकारेष्विति ढकञि ग्रैवेयकमित्यलङ्कारः। ग्रीवायां भव इत्येव विग्रहः। एवं ग्रैवम् ग्रैवेयं, ग्रैवेयकमिति रूपत्रयम्। ***परिमुखम्।** मुखात्परिहृत्य

कुरुजङ्गले भवं कौरुजङ्गलम्। कौरुजाङ्गलम्। वैश्वधेनवम्। वैश्वधैनवम्। सौवर्णवलजम्। सौवर्णवालजम्॥ **१४३३। दृतिकुक्षिकलशिबस्त्यस्त्यहेर्ढञ्** ।४। ३ ।५६। दार्तेयम्। कौक्षेयम्। कलशिर्घटः तत्र भवं कालशेयम्। वास्तेयम्। आस्तेयम्। आहेयम्॥ **१४३४। ग्रीवाभ्योऽण् च** ।४।३।५७। चात् ढञ्। ग्रैवेयम्। ग्रैवम्॥ **१४३५। गम्भीराञ् ञ्यः** ।४।३।५८। गम्भीरे भवं गाम्भीर्यम्॥ **पञ्चजनादुपसंख्यानम्**॥ पाञ्चजन्यः॥ **१४३६। अव्ययीभावाच्च** ।४।३।५९। परिमुखं भवं पारिमुख्यम्॥ **परिमुखादिभ्य एवेष्यते**॥ नेह। औपकूलः॥ **१४३७। अन्तःपूर्वपदाट्ठञ्** ।४।३।६०। अव्ययीभावादित्येव। वेश्मनि इति अन्तर्वेश्मम्। तत्र भवमान्तर्वेश्मिकम्। आन्तर्गणिकम्॥ अध्यात्मादेष्ठञिष्यते॥ अध्यात्मं भवमाध्यात्मिकम्॥ **१४३८। अनुशतिकादीनां च** ।७।३।२०। एषामुभयपदवृद्धिः स्यात् ञिति णिति किति च। आधिदैविकम्। आधिभौतिकम्। ऐहलौकिकम्। पारलौकिकम्। अध्यात्मादिराकृतिगणः॥

---

परिमुखम्। तस्मिन् परिमुखम्। नाव्ययीभावादित्यम्। एवं सप्तम्यन्तमिदमव्ययम्। ततो भवार्थे ञ्यः। ञित्त्वात् वृद्धिः. यस्येति लोपः पारिमुख्यं उपकूलं भव औपकूलः औत्सर्गिकोऽण् उपकूलमिति समीपार्थेऽव्ययीभावः। ***अन्तरिति** पदम्। पूर्वपदं समासपूर्वावयवः यस्य तस्मादन्तःपूर्वपदादव्ययीभावाद्भवार्थे ठञ् स्यादित्यर्थः अन्तर्वेश्मम्। शब्दाट्टचि नस्तद्धित इति टिलोपे अन्तर्वेष्मम्। गणे अन्तः अन्तर्गणम्। अव्ययमिति योगविभागात्समासः। ***अध्यात्मे** भवम् आत्मन्यध्यात्मम्। सप्तम्यर्थेऽव्ययीभावः। तृतीयासप्तम्योर्बहुलमित्यम्भावस्य वैकल्पिकत्वेन अध्यात्मे इति। सप्तम्यन्तोऽव्ययीभावः। अध्यात्मं भवमित्यपि विग्रहो वाच्यः। पक्षे सप्तम्याअम्भावात्। अध्यात्म–अधिदेव–अधिभूत– इत्यध्यात्मादिराकृतिगणः । आकृतिगणत्वादिह लोकपरलोकादयो गृह्यन्ते। अनुशतिकादिगणे च पठिताः अधिदेवादयः। तस्मात् अधिदेवादीनां ठञि उभयपदवृद्धिमाह अनुशतिकादीनाञ्चेति। ***दाविकम्।** देविकायां नद्यां भवं दाविकं जलम्। २–३–१० सूत्रमारभ्य उत्तरपदस्येत्यधिकारः। तस्मादुत्तरपदस्य न वृद्धिप्रसक्तिरिति नास्ति तदपवाद आदिति दर्शयितुं देविकाकूले भवा दाविका कूला इत्युदाहरणान्तरम्। दित्यवाट्शब्दादणि दित्यवाह् अ इति स्थिते वाह ऊठ् सम्प्रसारणाच्च एत्येधत्यूठ्सु दित्यौह आद्य च आत् दात्यौहम्। तस्येदमित्यण् दित्यवाट्चमे दित्यैही च मे इति वेदः। भवार्थे सप्तमी समर्थाभावाद्दित्यौह

**१४३९। देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्** ।७।३।१। एषां पञ्चानां वृद्धिप्राप्तावादेरच आत् स्यात् ञिति णिति किति च। दाविकम्। देविकाकूले भवा दाविकाकूलाः शालयः। शिंशपाया विकारः शांशपश्चमसः। 'पलाशादिभ्यो वा १५२१' इत्यञ्। दित्यौह इदं दात्यौहम्। दीर्घसत्रे भवं दार्घसत्रम्। श्रेयसि भवं श्रायसम्॥ **१४४०। ग्रामात्पर्यनुपूर्वात्** ।४।३।६१। ठञ् स्यात्। अव्ययीभावादित्येव। पारिग्रामिकः। आनुग्रामिकः॥ **१४४१। जिह्वामूलाङ्गुलेश्छः** ।४।३।६२। जिह्वामूलीयम्। अङ्गुलीयम्॥ **१४४२। वर्गान्ताच्च** ।४।३।६३। कवर्गीयम्॥ **१४४३। अशब्देयत्खावन्यतरस्याम्** ।४।३।६४। पक्षे पूर्वेण छः। मद्वर्ग्यः। मद्वर्गीणः, मद्वर्गीयः। अशबदे किम्। कवर्गीयो वर्णः॥ **१४४४। कर्णललाटात्कनलंकारे** ।४।३।६५। कर्णिका। ललाटिका॥

---

इदमित्युक्तम्। *__पर्यन्वन्यतरपूर्वकाद्ग्रामान्तादव्ययीभावाद्भवार्थे__ ठञ् स्यादिति सूत्रार्थः। ग्रामात् परिहृत्य परिग्रामम्। अपपरिबहिरञ्चवः पञ्चम्येत्यव्ययीभावः। ग्रामस्य समीपमनुग्रामम्। अनुर्यत्समयेत्यव्ययीभावः। तत्र भवः पारिग्रामिकः। आनुग्रामिकः। *__वर्गान्तात्प्रातिपदिकात्__ सप्तम्यन्तात् भवार्थे छः। कवर्गे भवं कवर्गीयम्। कादिकमक्षरम्। *__अशब्दे__ इति। वर्गान्ताद्यत्खावन्यतरस्यां स्तः भवार्थे–शब्दे–अवाच्ये सति प्रकृतिप्रत्ययसमुदायेन शब्दश्चेन्नाभिधीयते इत्यर्थः। अत्र शब्दो वर्णात्मकः न तु ध्वन्यात्मकः व्याख्यानात्। कवर्गीयादिपदानां ककारादिवर्णे सुप्रसिद्धप्रयोगाच्च। पक्षे यत्खाभावपक्षे मद्वर्गे भवो मद्वर्ग्यः इति यति, मद्वर्ग्यारसपाठगीतिगतिषु प्रत्येकमुत्कण्ठिन इति मुरारिः। मधुच्योतक इत्यर्थः। खे मद्वर्गीणः। छे मद्वर्गीयः। शब्दे तु मद्वर्गीय इत्येकमेवरूपम्। *__कर्णे__ विद्यमानोऽलङ्कारः कर्णिका। ताटङ्क इत्यर्थः। ललाटिका चित्रकमित्यर्थः। कनि नकार इत्। अदन्तत्वाट्टाप् स्त्रियाम्। अनलङ्कारे तु शरीरावयवाद्यत् कर्ण्यमित्यादि।

*__तस्येति__। तस्येति षष्ठचन्ताद्व्याख्यान इत्यर्थे चात्तत्रभव इत्यर्थे व्याख्यातव्य नाम्नः व्याख्यातव्यप्रतिपादकात् प्रत्ययास्स्युरिति सूत्रार्थः। सूत्रे चकाराभावे विशेषविहितत्वेन तस्य व्याख्यान इत्यर्थस्तत्र भव इत्यर्थस्यापवादस्स्यात्। तथा च व्याख्यातव्यात् भवार्थे प्रत्ययानुत्पत्तिर्भवेदिति सुप्सुभवं सौपमिति न सिद्ध्येत् व्याख्यातव्यादित्यनेनैव सिद्धे नामग्रहणं प्रसिद्धिद्योतनार्थम्। व्याख्यातुं योग्योऽयमिति यत्र प्रसिद्धिस्स एवेह व्याख्यातव्यनामा अर्थाद् ग्रन्थ एव । तत्रैव व्याख्येयत्वप्रसिद्धेः। ननु व्याख्यातव्यंनाम्न

**१४४५। तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः** ।4-3-66 सुपां व्याख्यानः सौपो, कर्गीय॥ सौपो ग्रन्थः। तैङः। कार्तः। सुप्सु भवं सौपम्॥ **१४४६। बह्वचोऽन्तोदात्ताट्ठञ्** ।४।३।६७। षत्वणत्वयोर्विधायकं शास्त्रं षत्वणत्वम्। तस्य व्याख्यानस्तत्र भवो वा षात्वणत्विकः॥ **१४४७। क्रतुयज्ञेभ्यश्च** ।४।३।६८। सोमसाध्येषु यागेष्वेतौ प्रसिद्धौ। तत्रान्यतरोपादानेन सिद्धे उभयोरुपादानसामर्थ्यादसोमका अपीह गृह्यन्ते। अग्निष्टोमस्य व्याख्यानस्तत्र भवो वा आग्निष्टोमकः। वाजपेयिकः। पाकयज्ञिकः। नावयज्ञिकः। बहुवचनं स्वरूपविधिनिरासार्थम्। अन्तोदात्तार्थ आरम्भः॥

---

इत्यपनीय ग्रन्थादिति वक्तव्यमिति चेत् मैवम्। अव्याख्येयग्रन्थादपि प्रत्ययोत्पत्तिप्रसङ्गात्। तस्मात् व्याख्येयग्रन्थाभिधायिनष्षष्ठ्यन्तात् व्याख्यानार्थे सप्तम्यन्ताद्भवार्थे च प्रत्ययास्स्युरिति निष्कृष्टार्थः।

बह्वच इति। पूर्वसूत्रस्यात्रानुवृत्तिः। अन्तोदात्ताद्बह्वचष्षष्ठ्यन्ताद्व्याख्या इत्यर्थे सप्तम्यन्ताद्भवार्थे च प्रत्ययास्स्युः। तच्चेद्बह्वच्व्याख्यातव्यनाम इत्यर्थः। षात्वणत्वम् । तस्येदमित्यणि आदिवृद्धिः। (षत्वणत्वयोरिदं विधायकमिति लक्ष्ये लक्षणस्य तस्येदमित्यस्य समन्वयः)। षत्वणत्वमिति पाठे तु षत्वणत्वयोस्समाहारष्षत्वणत्वम्। तद्विधायकं शास्त्रमप्युपचारात् षत्वणत्वमिति कथञ्चित् समाधेयम्। ***क्रत्विति**। क्रतुवाचिभ्यः यज्ञवाचिभ्यश्च व्याख्यातव्यनामभ्यः व्याख्यानार्थे भवार्थे च ठञ् स्यादिति सूत्रार्थः। ये क्रतुवाचिनश्शब्दास्त एव ग्रन्थवाचिनोऽपि क्रतुप्रतिपादिकग्रन्थे क्रतुवाचकशब्दप्रयोग स्यौपचारिकत्वात्। यथा अग्निष्टोमः क्रतुः तत्प्रतिपादिकग्रन्थोप्यग्निष्टोम इति। एवं क्रतुप्रतिपादकत्वं ग्रन्थप्रतिपादकत्वञ्च एकत्र सिद्ध्यति। एतौ क्रतुयज्ञौ। सोमसाध्यः। सोमवान् यागः क्रतुरिति यज्ञ इति च अभिधीयते इत्यर्थः। ननु क्रतुयज्ञयोः पर्यायत्वेन उभयोरेकं सुत्यजमत आह–असोमका अपीह गृह्यन्ते इति। ससोमकानामसोमकानाञ्चोभयविधानां यागानां ग्रहणाय द्वयोरुपादानमिति भावः। एवञ्च यागेभ्यश्चेति न्यासस्सुवचः इति फलितम्। ननु क्रतुयज्ञाच्चेत्येवास्तु किं बहुत्वनिर्देशेन अत आह। स्वरूपविधिनिरासार्थमिति। क्रतुयज्ञशब्दाभ्यां माभूदिति तदर्थः। स्वरूपात् विधिस्स्वरूपविधिः। विधिरत्र ठञो विधानम्। ननु बह्वच इति पूर्वेणैव सिद्धे किमर्थमिदमत आह–अनन्तोदात्तार्थ इति। ***अध्यायः** ग्रन्थस्य विच्छेदः। सर्गस्कन्धादयोऽस्य पर्यायाः ***पौरोडाशेति**। अत्रापि तस्य व्याख्यानसूत्रस्यानुवृत्तिरस्ति। पुरोडाशप्रतिपादकग्रन्थोऽपि

**१४४८। अध्यायेष्वेवर्षेः**। ४।३।६९। ऋषिशब्देभ्यो लक्षणया व्याख्येयग्रन्थवृत्तिभ्यो भवे व्याख्याने चाध्याये ठञ् स्यात्। वसिष्ठेन दृष्टो मन्त्रो वसिष्ठस्तस्य व्याख्यानस्तत्र भवो वा वासिष्ठिकोऽध्यायः। अध्यायेषु किम्। वासिष्ठी ऋक्॥ **१४४९। पौरोडाशपुरोडाशात्ष्ठन्** ।४।३।७०। पुरोडाशसहचरितो मन्त्रः पुरोडाशः स एव पौरोडाशः। ततष्ठन्। पौरोडाशिकः॥ **१४५०। छन्दसो यदणौ** ।४।३।७१। छन्दस्यः। छान्दसः॥ **१४५१। द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक्** ।४।३।७२। द्व्यच्। ऐष्टिकः। पाशुकः। ऋत्। चातुर्होतृकः। ब्राह्मणिकः। आर्चिकः। इत्यादि॥ **१४५२। अणृगयनादिभ्यः** ।४।३।७३। ठञादेरपवादः। आर्गयनः। औपनिषदः। वैयाकरणः॥ **१४५३। तत आगतः** ।४।३।७४। स्रुघ्नादागतः स्रौघ्नः॥ **१४५४। ठगायस्थानेभ्यः** ।४।३।७५। शुल्कशालाया आगतः शौल्कशालिकः॥

---

पुरोडाश एव। उपचारात्। तस्य व्याख्याने तत्र भवे वा ष्ठनि पुरोडाशिकः। पुरोडाश एव पौरोडाश इति स्वार्थिकोऽण्। ***छन्दसो** यदणौ स्तः। तस्य व्याख्याने तत्र भवे च। छन्दःप्रतिपादको ग्रन्थश्छन्दः। ततोऽणि छान्दसः। यति छन्दस्यः ***द्व्यच्-द्वौ** अचौ यस्मिंस्तत् द्व्यच्। ऋत् ऋदन्तम्। एतेषां समाहारः। द्व्यजादिभ्यः व्याख्याने भवे च ठक्स्यादिति सूत्रार्थः। द्व्यचः। उदाहरणमिति शेषः। ऐष्टिकः। इष्टिः दर्शादिर्यागः, तत्प्रतिपादको ग्रन्थोऽपीष्टिः। तस्य व्याख्यानः। तत्र भवो वा ऐष्टिकः पशुः। तन्नामा कश्चन यागः-चतुर्होता मन्त्रः। ऋदन्तोयम्। तद्ग्रर्थोऽपि चतुर्होता, ततष्ठकि ठस्य कादेशः उगन्तत्वात् इसुसुक्तान्तादिति सूत्रे उक् इति प्रत्याहारः। तेन उ-ऋ-ऌ इत्येतदन्ताट्ठस्य कादेशः। (न च इसुसोर्ग्रहणं व्यर्थमिति वाच्यम्। सर्पिस्-धनुस्-इत्यादीनां सान्तानां तत्र इसुसन्तत्वेन (ग्रहणात्) ऋच उदाहरणं आर्चिकः।ऋच् ठक्-इति स्थिते, ठस्येकादेशः आदिवृद्धिः। आर्चिकः। चोः कुरिति कुत्वन्न भवति, भत्वात् । ***तत इति** पञ्चम्यन्तात्समर्थादागत इत्यर्थे प्रत्ययास्स्युरित्यर्थः। ***शुल्कशाला**। घट्टादिदेय शुल्कोस्त्री इत्यमरः। घट्टादिषु यद्देयं द्रव्यं तच्छुल्कमित्यर्थः। घट्टो नाम शुल्कशाला शुल्कस्य राज्ञे देयद्रव्यस्य (आंध्रे सुंकमु) शाला शुल्कशाला आयस्थानमिदम्। आयो नाम शुल्कम् तस्य स्थानं आयस्थानम्। यत्र गृहे स्थित्वा राजभटाः प्रजाभ्यस्सकाशात् शुल्कं गृह्णन्ति तच्छुल्कशालेत्युच्यते। ***शुण्डिकेति**। आयस्थानवाचिभ्यः शुण्डिकादिभ्यः आगत इत्यर्थे

**१४५५। शुण्डिकादिभ्योऽण्** ।४।३।७६। आयस्थानठकश्छादीनां चापवादः । शुण्डिकादागतः शौण्डिकः। कार्कणः। तैर्थः॥ **१४५६ विद्यायोनिसंबन्धेभ्यो वुञ्** ।४।३।७७। औपाध्यायकः । पैतामहकः। **१४५७। ऋतष्ठञ्** ।४।३।७८। वुञोऽपवादः। हौतृकम्। भ्रातृकम्॥

---

अण् स्यादिति सूत्रार्थः। ठगायस्थानेभ्य इति ठगः। चादीनाञ्च अपवादोऽयम्। तीर्थशब्दात् धूमादित्वाद्वुञि प्राप्ते तदपवादोऽण् तैर्थः। आय इत्यर्थः। यथा पुमान् स्नातो विवक्ष्यते तदा वुञेव तैर्थकः। यद्वा–तत आगत इत्यर्थे अण्–तत्र भव इत्याद्यर्थे तु वुञादिः। स च आगतो यो वा को वा भवतु आय एव भवेदिति नाग्रहः। पञ्चम्यन्तस्य आयोत्पत्तियोग्यतामात्रेण आयस्थानत्वात्। शुण्डिकादिषु भूमिशब्दः पठ्यते, भूमेरागतं शुल्कं भौमम्। शुल्कस्थानाद्भूमेरागतः पुमान्वा भौमः। ठगायः इति सूत्रिते पञ्चम्यन्ताट्ठक्स्यादागतार्थे स चेदागत आयः इत्यर्थस्स्यात्। तथा च भौमः पुमान् इति न स्यात्। आयस्थान इत्युक्ते तु प्रजानीह्यायोत्पत्तिस्थानमिति न दोष इत्येतदर्थं स्थानग्रहणम्। ननु छादीनामपवाद एवायं ठगिति ठगपवादोऽयमित्येव वक्तव्यं। कथं छादीनामपवाद इति चेदुच्यते। प्रतिपदोक्तत्वेन ठगपवादभूत एव। कृकणपर्णादिति छः। धूमादिभ्य इति वुञ् इति ठक्छादीनामपवाद इत्युक्तम्। यद्वा शुण्डिकादिभ्यः पञ्चम्यन्तेभ्य आगत इत्यर्थे अण् स्यादित्येतावानेव सूत्रार्थः। एवञ्च शुण्डिकाया आयस्थानलक्षणष्ठक्। कृकणाच्छः। तीर्थात् वुञ् इत्येवमादिषु प्राप्तेषु तदपवादोऽयमण् इति भावः। अस्मिंस्तु पक्षे आयस्थानत्वस्य विवक्षाधीनत्वेन कृकणादिषु आयस्थानत्वाविवक्षायाम् चादयः प्राप्नुवन्तीति बोध्यम्। तद्विवक्षायान्तु ठगेवेति शुण्डिककृकणस्थण्डिलउदपानउपलतीर्थ भूमितृणपर्णशुण्डिकादिः। एतेषामायस्थानत्वयोग्यानामेव गणे पाठात् पूर्वोक्तार्थ एव श्रेयान्। ***विद्यायोनीति**। पञ्चम्यन्तेभ्य एतेभ्यः आगत इत्यर्थे वुञ्। औत्सर्गिकस्याणोपवादः। उपाध्यायादागत औपाध्यायकः। आयस्थानेभ्य इति निवृत्तम्। ***ऋतष्ठञ्।** ऋदन्तात् ठञ्स्यादागतार्थे विद्यायोनिसंबन्धादेव। तेन कर्तुरागतं कार्त्रमित्यण्।वुञोऽपवादः विद्यायोनिसंबन्धेभ्यो वुञित्यस्य अपवादोऽयमित्यर्थः। विद्यासम्बन्धो योनिसम्बन्धश्च शब्दशक्त्या यत्राभिधीयते स शब्दः विद्यासम्बन्धवाची योनिसम्बन्धवाची च – यथा उपाध्यायः उपसमीपे अधीयते शिष्या अस्येत्युपाध्याय इति व्युत्पत्त्या विद्यासम्बन्धोस्य द्योत्यते। एवं पितुः पिता पितामह इत्यनेन योनिसम्बन्धः। एतेन शुकादागतं शौककं भागवतमिति न भवतीति फलितम्। शुकस्य विद्वत्त्वेऽपि शुकशब्दशक्त्या विद्यासम्बन्धो

**१४५८। पितुर्यच्च** ।४।३।७९। चाट्ठञ्। 'रीङ् ऋतः १२३४'। 'यस्य ३११' इति लोपः। पित्र्यम्। पैतृकम्॥ **१४५९ गौत्रादङ्कवत्** ।४।३।८०। बिदेभ्य आगतं बैदम्। गार्गम्। दाक्षम्। औपगवकम्॥

---

नाभिधीयत इति, किन्तु वृद्धाच्छः शुकीयम्। देवदत्तस्य पितामहाद्यज्ञदत्तादागतं धनं यज्ञदत्तकमिति न स्यात्। यज्ञदत्तशब्दाद्योनिसम्बन्धाप्रतीतेः। वृद्धाच्छः यज्ञदत्तीयम्। हूयतेऽनेन होतेति होतृशब्दाद्विद्यासम्बन्धोऽभिधीयते। अविदुषः होतृत्वासम्भवात्। होतुरागतं हौतृकं उगन्तलक्षणस्थस्य कादेशः। ***पित्र्यम्।** पितृ यत् रीङृत इति यादिप्रत्ययपरकत्वेन ऋतो रीङादेशः पित्रीय-यस्येति चेति ईलोपः-पित्र्-ठञि कादेशः पैतृकम्। ***गोत्रादिति** गोत्रप्रत्ययान्तादागत इत्यर्थे अङ्कार्थे इव प्रत्ययास्स्युः। सङ्घाङ्कलक्षणेष्वञ्यञिञामण् इति वक्ष्यति। अञन्तेभ्यः यञन्तेभ्यः इञन्तेभ्यश्च सङ्घाङ्कलक्षणेष्वर्थेषु अण्स्यादिति तदर्थः। तेन आगतार्थेऽपि अञ्यञिङामण् भवति इति क्रमेणोदाहरति। बैदम्। बदस्यापत्यं बैदः षिद्बिदादिभ्योऽञ्-बहुत्वे तु यञञोश्चेति लुक् बिदाः। बिदेभ्य आगतवं बैदम्। एकत्वे तु बैदादागतं बैदम्। बैद अण् यस्येति लोपः। पर्जन्यवल्लक्षणप्रवृत्त्या आदिवृद्धिः बैदम्। गर्गेभ्यः। गार्ग्याद्वा आगतं गार्गम्। गार्ग्य अयस्येति लोपः अपत्यस्येति यलोपः गार्गम्। यञन्तादण इदमुदाहरणम्। (गर्गादिभ्यो यञि गार्ग्यः) इञन्तादागतार्थे अण् दाक्षम्। दक्षस्यापत्यं दाक्षिः। अत इञ् दाक्षेरागतं दाक्षं इति। ननु गोत्रादण् इति सूत्र्यतामिति चेन्मैवम्। शाकलाद्वा इति अङ्कार्थे अणभावपक्षे गोत्रचरणाद्वुञिति वुञपि विधीयते इति। इदमेव दर्शयितुमाह-औपगवकमित्युदाहरणान्तरम्। औपगवस्येदमौपगवकमित्यर्थे गोत्रचरणाद्वुञिति वुञ् विहितः। (औपगवस्य गोत्रत्वात्) अङ्कार्थे तु औपगवान्न वुञ्। शाकलादेव पक्षे वुञ् अङ्के विधीयते। इत्थं वुञोपि अङ्कार्थत्वं लब्धम्। तस्मात् औपगवादागत इत्यर्थेऽपि गोत्रलक्षणो वुञ् स्यादेव। वुञोऽङ्कार्थत्वादिति। अङ्कार्थे ये प्रत्यया दृष्टाः ते गोत्रदागतार्थेऽपि स्युः इत्यनेन औपगवशब्दादण्वुञोः प्राप्तौ गोत्रलक्षणो वुञिति। ननु परत्वादणेव स्यात् यदि अङ्कार्थे याभ्यः प्रकृतिभ्यः ये प्रत्यया दृष्टास्ते गोत्रादागतेऽपि स्युरित्युच्येत, तर्हि अञ्यञिञन्तत्वाभावेन औपगवादणोऽप्राप्तावपि शाकलादेव अण् वुञौविहिताविति। औपगवान्न वुञ्, नाप्यण्, किन्तु शाकलादागतश्शाकलक इतीदमेव सिद्ध्यतीति चेत् सत्यं। अत एव तत्त्वबोधिन्यामङ्के दृष्टस्य सर्वस्यातिदेश इत्युक्तम्। अङ्कार्थे यद्दृष्टं तत्सर्वं गोत्रादागतार्थे स्यादिति सूत्रार्थः। तेन अञ्यञिञामण् शाकलाद्वा-वेति विकल्पेन अणभावपक्षे गोत्रचरणात् वुञ् इत्येतत्सर्वमङ्के दृष्टमिति गोत्रचरणात् वुञपि अङ्के दृष्टत्वेन आगतार्थे स्यादिति औपगवकमिति सिद्धम्। ननु

**१४६० नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्** ।७।३।३०। नञः परेषां शुच्यादिपञ्चानामादेरचोवृद्धिः पूर्वपदस्य तु वा ञिदादौ परे । आशौचम्। अशौचम्। आनैश्वर्यम्। अनैश्वर्यम्। आक्षैत्रज्ञम् अक्षैत्रज्ञम्। आकौशलम्। अकौशलम्। आनैपुणम्। अनैपुणम्। **१४६१ हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः** ।४।३।८१। समादागतं समरूप्यम्। विषमरूप्यम्। पक्षे गहादित्वाच्छः समीयम्। विषमीयम्। देवदत्तरूप्यम्। देवदत्तीयम्। दैवदत्तम् ॥

---

अङ्कार्थे गोत्रचारणात् वुञ् साक्षान्न दृष्टः। किन्तु वेति विकिल्पेन अनुकृष्ट इति चेद्भवतु। साक्षाद्दृष्ट एव ग्राह्य इति नात्राभिनिवेशः कार्यः इति तेषामाशयः। गोत्रात्किम्। पौर्वार्थाः। ग्रामजनपदेत्यञ् द्वैप्यम्। द्वीपादनुसमुद्रमिति यञ् इत्यादिभ्यः आगतार्थे अण् माभूदिति। इष्यते तु वृद्धाच्छः। पौर्वार्थीयम्। द्वैपीयमिति। अङ्कवदिति किम्। तिकादिभ्यः फिञ् तैकायनिः। तत आगतं तैकायनिकम्। अत्राप्यणि तैकायनमिति माभूत्। (गोत्रादण् इति सूत्रिते इति भावः) औपगवकमित्यपि प्रत्युदाहरणमेव। ***ञिदादौ** ञिति किति णिति च तद्धिते इत्यर्थः। अनीश्वरशब्दो ब्राह्मणादिषु पठ्यते तेन गुणवचनब्राह्मणादिभ्यश्चेति ष्यञ्–भावे कर्मणि च विधीयते। स एवागतार्थेऽपि। तत आगत इति यथाविधिप्रत्ययविधानात् अनीश्वरादागतमनैश्वर्यम्। अशुच्यादिभ्यस्त्वणेव। अक्षेत्रज्ञशब्दोऽपि ब्राह्मणादिषु पठ्यते। ष्यञो वैकल्पिकत्वादण् आक्षैत्रज्ञम्। ष्यञि तु आक्षेत्रज्ञ्यम् इत्यूह्यम्। कुशलनिपुणशब्दौ यद्यपि ब्राह्मणादिषु पठितौ तथापि नञ्पूर्वकत्वेन तत्रापठनात् अकुशलानिपुणाभ्यामणेव। कौशल्यनैपुण्याभ्यां साकं नञ् तत्पुरुषे कृते तु अकौशल्यमनैपुण्यमिति स्यादेव। गुणवचनादिसूत्रे पूर्वसूत्रात् ष्यञित्येवानुवर्तते। न तु पृथ्वादिसूत्राद्वेति पदमिति विकल्पस्यात्र अन्याय्यत्वात्। आक्षैत्रज्ञ्यम्। आक्षैत्रज्ञ्यमित्येव कौमुद्यां पाठः कर्तव्यः अणणन्तपाठन्तु प्रामादिक इति केचित्। ***हेतुभूतेभ्यः** मनुष्यवाचकेभ्यश्च पञ्चम्यन्तेभ्यः आगत इत्यर्थे रूप्यप्रत्ययो वा स्यादिति सूत्रार्थः। समादागतम्। समादिति हेतौ पञ्चमी समाद्धेतोरित्यर्थः। देवदत्तादागतम्। देवदत्तो मनुष्यः। अपादाने पञ्चमी। अत एव अहेतुत्वादप्राप्ते मनुष्येभ्य इति हेतोः पृथग्ग्रहणम्। ***मयट्** च हेतुमनुष्येभ्ये इत्येव। रूप्यादीनां समुच्चयार्थश्चकारः। अन्यथा (चकाराभावे) रूप्याभावपक्षे मयडेव स्यादणादिबाधित्वेति। समीयं दैवदत्तमित्यादीनामसिद्धिः। ***प्रभवति** तत आगत इति सूत्रात् ठगादिसूत्रेषु क्रमादनुवर्तमानस्य तत इत्यस्य अत्राप्यनुवृत्तिः।

**१४६२ । मयट् च** । ४ ।३ ।८२ । सममयम् । विषममयम् । देवदत्तमयम् । **१४६३ प्रभवति** । ४ ।३ ।८३ । तत इत्येव । हिमवतः प्रभवति हैमवती गङ्गा ॥ **१४६४ विदूराञ्ञ्यः** । ४ ।३ ।८४ । विदूरात्प्रभवति वैदूर्यो मणिः ॥ **१४६५ तद्गच्छति पथिदूतयोः** ।४ ।३ ।८५ । स्रुघ्नं गच्छति स्रौघ्नः पन्था दूतो वा ॥ **१४६६ अभिनिष्क्रामति द्वारम्** । ४ ।३ ।८६ । तदित्येव स्रुघ्नमभिनिष्क्रामति स्रौघ्नं कान्यकुब्जद्वारम् ॥ **१४६७ अधिकृत्य कृते ग्रन्थे** ।४ ।३ ।८७ । तदित्येव । शारीरकमधिकृत्य कृतो ग्रन्थः शारीरकीयः । शारीरकं भाष्यमिति त्वभेदोपाचारत् ॥

---

पञ्चम्यन्तात्प्रभवत्यर्थे प्रत्ययास्स्युरिति सूत्रार्थः। अणन्तात् ङीप् हैमवती। पार्वत्यान्तु हिमवति जातेति विग्रहो बोध्यम्। ***वैदूर्यः।** वालवायात्प्रभवतीत्यर्थे ञ्यप्रत्ययः। प्रकृतेर्विदूरादेशश्च इति पक्षे प्रक्रियाक्लेशोऽस्तीति ध्वनयन् विदूरात्प्रभवतीति मूले उदाहृतम्। वालवायं विदूर इति वैयाकरणा व्यवहरन्ति इति भाष्यकाराणामाशयः। ***पथिदूतयोः**। पन्थाश्च दूतश्च पथिदूतौ तयोः। पथिन् सु दूत सु सुब्लुक्। नलोपः प्रातिपदिकान्तस्य पथि दूत द्वित्वविवक्षया औस् पथि दूतयोः वाच्ययोस्सतोः तदितिद्वितीयान्ताद्गच्छतीत्यर्थे प्रत्ययास्स्युरिति सूत्रार्थः। कुत्रायं पन्थाः गच्छतीत्यादिव्यवहारेषु करणस्यापि पथः कर्तृत्वदर्शनात्। पन्थाः गच्छतीत्यविवादः। ***कान्यकुब्जं** नगरं तस्य द्वाराणां मध्ये येन द्वारेण स्रुघ्नं नगरमभिनिष्क्रामति आभिमुख्येन गच्छतीत्यर्थः। जन इति शेषः। तद्द्वारं स्रौघ्नमित्युच्यते। एवं द्वारस्य करणत्वेऽपि स्वातन्त्र्यविवक्षया कर्तृत्वमिति स्रुघ्नमभिनिष्क्रामति द्वारमित्युक्तम्। द्वारं किम्? स्रुघ्नमभिनिष्क्रामति सेना स्रौघ्नीति माभूत्। एवं प्राक्सूत्रेऽपि। पथिदूतयोः किम्। स्रुघ्नं गच्छति राजा स्रौघ्न इति माभूत्। तदिति (द्वितीयान्तादिति) किम्। (सुघ्नं गच्छति दूतः दौत इति माभूत्। एवं दौवारमित्यपि माभूदित्यस्मिन्सूत्रे तच्छब्दानुवृत्तिः। ***क्लीबत्वं** निपातनात्। सभाराजाऽमनुष्यपूर्वेति राजविशेषपूर्वस्य सभान्तस्य तत्पुरुषस्य क्लीबत्वाविधानात्। यमो राजविशेष इति यमस्य सभा यमसभेत्येव स्यान्न तु यमसभमिति मत्वा निपातनादित्याह – द्वन्द्वे दिनस्वरूपग्रहणम्। किरातश्चार्जुनश्च किरातार्जुनाविति द्वन्द्वः। तस्मादधिकृत्य कृते ग्रन्थे छः। भारविकृतं काव्यम्। ***सोस्येति** तस्य निवास इति चतुर्थ्यां गतम्। षष्ठ्यन्तान्निवास इत्यर्थे प्रत्ययविधानपरं तत्। इदन्तु प्रथमान्तादिति छेदः। अभिजनशब्दात् अभिजन इति यश्शब्द्यते सोभिऽजनशब्दः। तस्मात् अभिजनभूतादित्यर्थः। यद्वा–अभिजनश्शब्दः उपाधिः

**१४६८ शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः** ।४।३।८८। शिशूनां क्रन्दनं शिशुक्रन्दः , तमधिकृत्य कृतो ग्रन्थ शिशुक्रन्दीयः । यमस्य सभा यमसभम् । कल्लीबत्वं निपातनात् । यमसभीयः । किरातार्जुनीयम् । इन्द्रजननादिराकृतिगणः । इन्द्रजननीयम् । विरुद्धभोजनीयम् । **१४६९ सोऽस्य निवासः** । ४ ।३ ।८९ । स्रुघ्नो निवासोऽस्य स्रौघ्नः ॥ **१४७० अभिजनश्च** । ४ ।३ ।९० । स्रुघ्नोऽभिजनोऽस्य स्रौघ्नः ॥ यत्र स्वयं वसति स निवासः । यत्र पूर्वैरुषितं सोऽभिजन इति विवेकः ॥ **१४७१ आयुधजीविभ्यश्छः पर्वते** । ४ ।३ ।९१ । पर्वतवाचिनः प्रथमान्तादभिजन शब्दादस्येत्यर्थे छः स्यात् । हृद्गोलः पर्वतोऽभिजनो येषामायुधजीविनां ते हृद्गोलीयाः । आयुधेति किम् । ऋक्षोदः पर्वतोभिजनो येषां ते आर्क्षोदा द्विजाः ॥ **१४७२ शण्डिकादिभ्यो ञ्यः** ।४ ।३ ।९२ । शण्डिकोऽभिजनोऽस्य शाण्डिक्यः ॥ **१४७३ सिन्धुतक्षशिलादिभ्योऽणञौ** । ४ ।३ ।९३ । सिन्ध्वादिभ्योऽञ् स्यादुक्तेऽर्थे । सैन्धवः । तक्षशिला नगरी अभिजनोऽस्य ताक्षशिलः । **१४७४ तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः** ४ ।३ ।९४ । तूदी अभिजनोऽस्य तौदेयः । शालातुरीयः वार्मतेयः । कौचवार्यः ।

---

विशेषणमिति यावत्। यस्य तस्मादित्यर्थः। सोऽस्याभिजन इति वाक्ये स इति विशेष्यम् अभिजन इति विशेषणमिति व्यवहारात्। ***गणिकेति** सोस्याभिजन इत्यत्रानुवर्तन्ते। प्रथमान्तेभ्यः अभिजनशब्देभ्यः शण्डिकादिभ्यः अस्येत्यर्थे ञ्यप्रत्ययस्स्यादिति सूत्रार्थः। औत्सर्गिकस्याणोऽयमपवादः ***तूदीति** अत्र यथासंख्येन तूदीशब्दात् ढक् शलातुराल्छण्वर्मत्याः ढञ् कूचवारात्ञ्यक् ञ्यक इति तु बहुवचनम्। द्वन्द्वात् सोस्याभिजन इत्येव। कूचवारोभिजनोस्य कौचवारः। ञ्क् अनयोरित्त्वेन लोपे य इति शिष्यते।ञित्त्वकित्त्वयोरन्यतरेणैव आदिवृद्धौ सिद्धायामन्यतरत् चिन्त्यप्रयोजनम्। यद्वा ञ्यक इत्यदन्तः प्रत्ययः कौचवार्यकः इति रूपम्। ***भक्तिः**। सेव्य इत्यर्थः। प्रथमान्ताद्भक्त्युपाधिकात्षष्ठ्यर्थे प्रत्ययास्स्युरित्यर्थः। भक्तिरिति भावसाधनोऽप्यस्ति। तदा प्रीतिरर्थः। अत्र कर्मसाधनोऽयम्। स्रौघ्नः स्रुघ्न सेवी–इत्यर्थः। ***अचित्तादचेतनात्** अदेशकालात् देशकालभिन्नवाचकात् प्रथमान्ताद्भक्त्युपाधिकात् अस्येत्यर्थे ठक् स्यादित्यर्थः। अणादेरपवादः। अपूपशब्दादण् प्राप्नोति। पायसशब्दात्तु वृद्धाच्छः। दैवदत्तः। वा नामधेयस्येति वृद्धसंज्ञा पक्षे तु देवदत्तीयः। ग्रैष्मः। ऋत्वण्।

**१४७५ । भक्तिः** ४ ।३ ।९५ । सोऽस्येत्यनुवर्तते । भज्यते सेव्यते इति भक्तिः । स्रुघ्नो भक्तिरस्य स्रौघ्नः ॥ **१४७६ ।अचित्तादेशकालाट्ठक्** ।४ ।३ ।९६ । अपूपा भक्तिरस्य आपूपिकः । पायसिकः । अचित्तात्किम् । दैवदत्तः अदेशात्किम् । स्रौघ्नः । अकालात्किम् । ग्रैष्मः ॥ **१४७७ महाराजाट्ठञ्** ४ ।३ ।९७ । माहाराजिकः ॥ **१४७८ । वासुदेवार्जुनाभ्यां वुन्** ४ ।३ ।९८ । वासुदेवकः । अर्जुनकः ॥ **१४७९ ।गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ्** ४ । ३ ।९९ । अणोऽपवादः । परत्वाद्वृद्धाच्छं बाधते । ग्लुचुकायनिर्भक्तिरस्य ग्लौचुकायनकः । नाकुलकः । बहुलग्रहणान्नेह । पाणिनो भक्तिरस्य पाणिनीयः ॥ **१४८० ।जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने** ४ ।३ ।१०० । जनपदस्वामिवाचिनां

---

ग्रीष्मे भक्तिरस्य ग्रैष्मः। एवमन्यत्रापि द्रष्टव्यम्। ***महाराजेति** अणोऽपवादष्ठञ्। ठस्य कादेशः। ञित्त्वादादिवृद्धिः। ***वासुदेवः** भक्तिरस्य वासुदेवकः (वृद्धाच्छे प्राप्ते तदपवादोऽयं वुन्।) वासुदेवभक्त इत्यर्थः। अर्जुनो भक्तिरस्य अर्जुनकः। ऋष्यन्धकेति कुरुलक्षणोऽण् प्राप्तः तदपवादोऽयं ठक् । वसुदेवस्य अपत्यं वासुदेवः। ऋष्यन्धकवृष्णेत्यण् इति वासुदेवशब्दो नात्र गृह्यते। उत्तरसूत्रेणैव तस्माद्वुञि वासुदेवक इति रूपसिद्धेः। किन्तु वसतीति वासुः वासुश्चासौ। देवश्च वासुदेवः इति व्युत्पन्नश्शब्दो गृह्यते। वुञो बाहुलकत्वेन नित्यार्थमणणन्ताद्वासुदेवादपि वुन्विधिस्सार्थक इति। अर्जुनशब्दसाहचर्याच्च अणणन्तोऽयं वासुदेव इत्युक्तावपि न दोष इति मम मतम्।
ग्लुचुकायनिर्गोत्रम्। ग्लुचुकस्यापत्यं ग्लुचुकायनिरिति । प्राचामवृद्धात्फिन् बहुलम् इति फिन् नकुलः क्षत्रियः, क्षत्रियः आख्यायते यैस्ते क्षत्रियाख्याश्शब्दाः । क्षत्रियविशेषवाचका इत्यर्थः। पणिनो गोत्रापत्यं पाणिनः। क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिरिति नात्र गोत्रलक्षणस्य वुञः प्रवृत्तिरिति भावः। ***जनपदिनामिति**। जनपदः एषामस्तीति जनपदिनः अत इनि ठना इति मत्वर्थीय इनिः। विग्रहे एषामिति स्वस्वामिभावसम्बन्धविवक्षायां शेषे षष्ठी। एतत्स्वामिको जनपदः जनपदस्वामी वा अयमिति विग्रहशाब्दबोधः। एवं जनपदस्वामिनो जनपदिन इति लब्धं अर्थात्प्रत्ययासंभवात् तद्वाचकश्शब्दो गृह्यते। तदेतदाह जनपदस्वामिवाचिनामिति मूलम्। विशेष्यमिदम्। बहुवचने जनपदेन समानशब्दानामिति विशेषणम्। समाना अभिन्ना श्रुतिश्श्रवणं येषां तेषां समानश्रुतीनाम् जनपदवाची शब्दो यथाश्रूयते तथाश्रूयमाणानामित्यर्थः। समानः अभिन्नः शब्दः प्रतिपादकत्वेन येषां ते समानशब्दास्तेषामिति जनपदिनामित्यर्थस्य विशेषणम्। जनपदवाचकशब्दाभिन्नशब्दप्रतिपाद्यानां

बहुवचने जनपदवाचिनां समानश्रुतीनां जनपदवत्सर्वं स्यात्प्रत्ययः प्रकृतिश्च । 'जनपदतदवध्योश्च १३४८' इति प्रकरणे ये प्रत्यया उक्तास्तेऽत्रातिदिश्यन्ते । अङ्गा जनपदो भक्तिरस्याङ्गकः । अङ्गाः क्षत्रिया भक्तिरस्याङ्गकः । जनपदिनां किम् । पञ्चाला ब्राह्मणा भक्तिरस्य पाञ्चालः । जनपदेनेति किम् । पौरवो राजा भक्तिरस्य पौरवीयः ॥

---

जनपदस्वामिनामिति सूत्रस्य पलितार्थः। अर्थात्प्रत्ययासम्भवे जनपदवाचकशब्दाभिन्नानां जनपदस्वामिवाचकानां शब्दानामिति निष्कर्षः। जनपदवाचक– शब्दाभिन्नत्वस्योपाधिमाह–बहुवचने इति। एकत्वे दित्वे च जनपदिशब्दानां जनपदशब्दाभिन्नत्वमस्तु वा मा वा। बहुत्वे अस्ति चेत्तर्हि जनपदवत्कार्यं स्यादित्यर्थः। जनपदस्येव जनपदवत् जनपदवाचिनः यद्यत्कार्यं विधीयते तत्सर्वं तादृशानां जनपदवाचिनां स्यादित्यर्थः। यथा आङ्गकः। अङ्गानां क्षत्रियाणां निवासः अङ्गाः तस्य निवास इत्यणि, तस्य जनपदे लुबिति लुप्। लुपि लुप्तवद्भावः। एवं अङ्गाः जनपदः तत्स्वामिनः क्षत्रियाश्च इति। अङ्गा इतीदं पदम्। जनपदिवाचकम्। जनपदवञ्कञ्च इति। प्रकृतसूत्रस्य लक्ष्यम्। जनपदवाचकादस्मादवृद्धादपीति वृञ् विहित इति। जनपदिवाचकादपि वृञ् । अङ्गाः क्षत्रियाः भक्तिरस्य आङ्गक इति। अङ्गाः जनपदः भक्तिरस्य आङ्गक इति तु अवृद्धादपेत्यनेनैव सिद्धम्। तत्र शेषाधिकारे भक्तचर्थेपि वुञ् विहित इति। अङ्गाः क्षत्रिया इति तु अङ्गशब्दात् वङ्गमगधेत्यणि अङ्गानां राजानः अङ्गाः। तद्राजस्य बहुष्विति लुक्। एकत्वे दित्वे तु आङ्गः। अङ्गा इति भवति । एकद्विवचनान्तयोर्न जनपदसमानशब्दत्वम्। एकत्वे द्वित्वे च जनपदवाचकत्वे अङ्गाः इत्येव भवति लुपि युक्तवद्भावस्योक्तत्वात् बहुत्वे तु उभयत्राप्यङ्गा इत्येव। अत एव बहुवचने इत्युक्तं सूत्रे। बहुवचनपदाभावे जनपदसमानशब्दत्वं जनपदिनोऽङ्गशब्दस्य न लभ्येतेति। आङ्गक इति न सिद्ध्येचेदेवेति बोध्यम्। ननु प्रत्ययः प्रकृतिश्च स्यादित्युक्तम्। प्रत्ययातिदेश एवात्रोपलभ्यते। क्व पुनः प्रकृत्यतिदेश इत्यत आह–तत्त्वबोधिन्यामत्र वार्तिककार इत्यादिना। अयं भावः।

मद्राणां राजानो मद्राः। तद्राजस्य बहुषु लुक्। भक्तिरस्येति विग्रहे मद्रवृज्योःकन् इति कनि कृते मद्रक इति भवतीति । अत्र प्रकृत्यतिदेशस्य निष्फलत्वेऽपि माद्रो भक्तिरस्येति विग्रहे कनि कृते माद्रक इति माभूदिति प्रकृत्यतिदेशः। माद्रेति प्रकृतेर्मद्रेति ह्रस्वत्वमतिदिश्यत इति भावः। पञ्चाला इति। जनपदेन समानशब्द एवायं तथापि जनपदिवाचको न भवति। ब्राह्मणानां पञ्चालदेशाधिपतित्वासम्भवात्। तस्मात् पञ्चालानां

**१४८१ । तेन प्रोक्तम्** ।४ ।३ ।१०१ । पाणिनिना प्रोक्तं पाणिनीयम् ॥ **१४८२ तित्तिरिवरतन्तुखण्डिकोखाच्छण्** ४ ।३ ।१०२ । 'छन्दोब्राह्मणानि – १२७८' इति तद्विषयता । तित्तिरिणा प्रोक्तमधीयते तैत्तिरीयाः ॥ **१४८३ काश्यपकौशिकाभ्यामृषिभ्यां णिनिः** ।४ ।३ ।१०३ । काश्यपेन प्रोक्तमधीयते काश्यपिनः ॥ **१४८४ । कलापिवैशम्पायनान्तेवासिभ्यश्च** ।४ ।३ ।१०४ । कलाप्यन्तेवासिभ्यः, हरिद्रुणा प्रोक्तमधीयते हारिद्रविणः । वैशम्पायनान्तेवासिभ्यः, आलम्बिनः ॥ **१४८५ पुराणप्रोक्तेषु ब्राह्मणकल्पेषु** ४ ।३ ।१०५ । तृतीयान्तात्प्रोक्तार्थे णिनिः स्यात् यत्प्रोक्तं पुराणप्रोक्ताश्चेद्ब्राह्मणकल्पास्ते

---

राजानः पञ्चाला इति नात्र वृत्तिः, किन्तु देशस्थानामभेदोपचारेण पञ्चालशब्दः तद्देशस्थब्राह्मणेषु वर्तते इति बोध्यम्। पौरवः पूरोरण्वक्तव्य इत्यण् जनपदस्वाम्येवायं पौरव इति तु न जनपदसमानशब्दः। पूरुदेशस्याभावात्। तस्मात् पौरवशब्दात् वृद्धाच्छ एव पौरवीयः। ***तेनेति** तृतीयान्तात्प्रोक्तार्थे प्रत्ययास्स्युः। **प्रकर्षेणोक्तं** प्रोक्तम्। अध्यापनादिना प्रकाशितमित्यर्थः। वृद्धाच्छः पाणिनीयम्। ***तित्तिर्यादयो** मुनयः तत्रोक्तानि छन्दांसि (ब्राह्मणानि च अध्येतृप्रत्ययं विना न प्रयुज्यन्ते छन्दोब्राह्मणानीति तद्विषयस्योक्तत्वात्। ननु तत्प्रोक्तेषु छन्दोब्राह्मणभिन्नेषु अध्येतृप्रत्ययं विना प्रयोगस्सङ्गच्छते–एवेति चेन्मैवम् । शौनकादिभ्यश्छन्दसीति सूत्राच्छंदसीत्यस्य अत्रापकर्षात्तित्तिर्यादिभ्यश्छन्दस्येव प्रोक्ते प्रत्यय इति । ननु तैत्तीरीयोपनिषदिति । तित्तिरिणा प्रोक्ता उपनिषत्तैत्तिरीयेति कथं प्रयोग इति चेदुच्यते। तैत्तिरीयाणामुपनिषदित्येव समासः। तैत्तिरीयञ्छन्द इति यदि प्रयोगस्तर्हि तैत्तिरीयाणामिदं तैत्तिरीयमिति तस्येदमित्यणि रूपं बोध्यम्। तित्तिरिः। वरतन्तुः–खण्डिकः। उखः–इति च्छेदः । एतेषां समहारस्सूत्रे। ***पुराणेति** । ब्राह्मणानि च कल्पाश्च ब्राह्मणकल्पाः। पुराणेन मुनिना प्रोक्ता ये ब्राह्मणकल्पाः तेषु वाच्येषु तृतीयान्तात्प्रोक्तार्थे णिनिस्स्यादित्यर्थः। भाल्लविनः। भल्लुना प्रोक्तं ब्राह्मणमधीयत इति विग्रहः। अध्येतृप्रत्ययस्य लुक् प्रोक्तप्रत्ययः णिनिः। णकारेकारयोरित्त्वे नलोपः। इन् इति शिष्यते। भल्लु इन्–ओर्गुणः–णित्त्वादादिवृद्धिः अवादेशः भाल्लविन्–जसि भाल्लविनः। शाटचायन इन् यस्येति लोपः। शाट्यायिनिन्। पैङ्गीकल्पः छन्दोब्राह्मणानि च तद्विषयानीति कल्पस्य तद्विषयत्वाभावात् अध्येतृप्रत्ययं विनापि प्रयोग इति भावः। याज्ञवल्क्यस्य पाणिन्यपेक्षया अपुरातनत्वात्। तत्प्रोक्तेषु ब्राह्मणेषु न णिणिः किन्त्वण्। याज्ञवल्क्येन प्रोक्तानि याज्ञवल्ल्क्यानि छन्दोब्राह्मणान्यपि पुराणप्रोक्तान्येव

भवन्ति । पुराणेन चिरन्तनेन मुनिना प्रोक्ताः। भल्लु, भाल्लविनः। शाठ्यायनः, शाठ्ययनिनः । कल्पे, पिङ्गेन प्रोक्तः पैङ्गी कल्पः । पुराणेति किम् । याज्ञवल्क्यानि ब्राह्मणानि, आश्मरथः कल्पः । अणि आपत्यस्य - १०८२ इति यलोपः ॥ **१४८६ शौनकादिभ्यश्छन्दसि** ४।३।१०६। छन्दस्यभिधेये एभ्यो णिनिः। शौनकेन प्रोक्तमधीयते शौनकिनः ॥ **१४८७ कठचरकाल्लुक्** ४।३।१०७। कलापिना प्रोक्तप्रत्ययस्य लुक् स्यात्। कठेन प्रोक्तमधीयते कठाः। चरकाः॥ **१४८८ । कलापिनोऽण्** ४।३।१०८। कलापिना प्रोक्तमधीयते कालापाः ॥ **नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकौथुमितै-तिलिजाजलिला ङ्गलिशिलालिशिखण्डि-सूकरसद्मसुपर्वणामुपसंख्यानम्** इत्युपसंख्यानाट्टिलोपः ॥

---

तद्विषयाणीत्युक्तत्वादध्येतृप्रत्ययं विनापि प्रयोगः। यज्ञवल्कस्यापत्यं याज्ञवल्क्यः। गर्गादित्वाद्यञ्-आश्मरथः अश्मरथस्यापत्यमाश्मरथ्यः । गर्गादित्वाद्यञ् तेन प्रोक्तार्थे कण्वादिभ्यो गोत्रे इत्यण् (गर्गाद्यन्तर्गणः कण्वादिः) आश्मरथ्य अ-यस्येति लोपः-पत्यस्येति यलोपः। आश्मरथः। आश्मरथ्यस्य अपुराणत्वान्नणि णिः। ***कठाः** कठेन प्रोक्तं छन्द इत्यर्थे कठ णिनिः, ततः अध्येतृप्रत्ययः। अण्-कठ-इन्-अ इति स्थिते, प्रोक्ताल्लुगित्यणो लुक्। कठचरकादिति प्रोक्तप्रत्ययस्य णिनेर्लुक्। कठ-जस् कठाः। एवं चरकेण प्रोक्तं छन्दोऽधीयते चरकाः। शौनकादिभ्य इति सूत्राच्छन्दसीत्यस्यात्रान्वयात्। प्रोक्तं यदि छन्दस्तर्ह्येव लुक् । नान्यत्र। तेन कठेन प्रोक्ताश्श्लोकाः काठका इत्यादि। छन्दोब्राह्मणभिन्नत्वात् श्लोकानां न तद्विषयतापि। ***कालापाः।** ननु कलापिन् अण् (वैशम्पायनान्तेवासित्वात्प्रोक्तार्थे प्राप्तस्य णिनेरपवादोऽयमण्) ततोऽध्येतरि अण्, प्रोक्ताल्लुगित्यणोऽस्य लुक्। कलापिन्। अ-इति स्थिते-नस्तद्धित इति टिलोपः प्राप्तः। इनण्यनपत्ये इति टिलोपापवादः। प्रकृतिवद्भावः। कालापिन जस् कालापिनाः इति भवितव्यमित्यत आह-नान्तस्येत्यादि। नस्तद्धित इति टिलोपप्रकरणे सब्रचारीत्यादीनामुपसङ्ख्यानं कर्तव्यमिति वार्तिकाशयः। नन्वेवमपि इनणीति । प्रकृतिभावस्स्यादेवेति चेन्मैवम्। नान्तत्वादेव टिलोपे सिद्धे पुनरेषामुपसङ्ख्यानं बाधकस्य प्रकृतिभावस्य बाधनार्थमिति। ***ढिनुक्।** उकार उच्चारणार्थः। ककारो वृद्ध्यर्थः । ढिन् इति शिष्यते। ढ् इत्यस्य आयनेयीनीति एय्आदेशः। एयिन्छगलिन् एयिन्, अण्येव इनः

**१४८९ छगलिनो ढिनुक्** ४।३।१०९। छगलिना प्रोक्तमधीयते छागलेयिनः। **१४९० पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः** ४।३।११०। पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीयते पाराशरिणो भिक्षवः। शैलालिनो नटाः ॥ **१४९१ कर्मन्दकृशाश्वादिनिः** ४।३।१११। भिक्षुनटसूत्रयोरित्येव। कर्मन्देन प्रोक्तमधीयते कर्मन्दिनो भिक्षवः। कृशाश्विनो नटाः॥ **१४९२ तेनैकदिक्** ४।३।११२। सुदाम्ना अद्रिणा एकदिक् सौदामनी ॥ **१४९३ तसिश्च** ४।३।११३। स्वरादिपाठादव्ययत्वम्। पीलुमूलेन एकदिक् पीलुमूलतः ॥ **१४९४ उरसो यच्च** ४।३।११४। चात्तसिः। अणोऽपवादः उरसा एकदिक् उरस्यः। उरस्तः। **१४९५ उपज्ञाते** ४।३।११५। तेनेत्येव। पाणिनिना उपज्ञातं पाणिनीयम् ॥

---

प्रकृतिभावविधानान्नात्र। किन्तु नस्तद्धित इति टिलोपः। आदिवृद्धिः। छागलेयिन् जस् छागलेयिनः। तृतीयान्ताच्छगलिनः प्रोक्तार्थे ढिनुक्स्यात् छन्दसीति सूत्रार्थः। छन्दस्त्वात्तद्विष यता। तेन छगलिना प्रोक्तं छागलेयीति न स्यादिति बोध्यम्।* **पाराशर्येति**। भिक्षुश्च नटश्च भिक्षुनटौ। तयोस्सूत्रे भिक्षुनटसूत्रे, द्वन्द्वान्ते श्रूयमाणं प्रत्येकं सम्बध्यते। इति भिक्षुसूत्रे नटसूत्रे चेत्यर्थः। पाराशर्यशिलालिभ्यां प्रोक्तार्थे णिनिस्स्यात्। तच्चेत्प्रोक्तं यथासंख्येन भिक्षुसूत्रं नटसूत्रं च भवेत्। पाराशर्यः। पराशरस्यापत्यम्। गर्गादित्वाद्यञ्। भिक्षुसूत्रम्। शारीरकसूत्रम्। शिलालिना प्रोक्तं नटसूत्रमधीयते शैलालिनः। नटसूत्रं भरतशास्त्रम्। ***इनिः**। णिनिना सिद्धे वृद्ध्यभावार्थं पृथगिनिग्रहणम्। ***तेनेति** एका समाना अभिन्ना दिक् यस्य स एकदिक्। अभिन्नदिक्क इत्यर्थः। यस्यां दिशि तृतीयान्तार्थो वर्तते तस्यामेव दिशि वर्तमाने प्रथमान्तार्थे वाच्ये तृतीयान्तात्प्रत्ययास्स्युरिति निष्कृष्टार्थः। सुदामन् अण् इति स्थिते। अन्निति प्रकृतिवद्भावः। आदिवृद्धिः अणन्तात्स्त्रियां ङीप्। सैदामनी सौदामिनी इति त्वपपाठः। ***कृते** ग्रन्थे तेनेत्येव। तृतीयान्तात्कृतार्थे यथाविहितं प्रत्ययाः स चेत्कृतो ग्रन्थः। वररुचिशब्दादौत्सर्गिकोऽण्। वाररुचः। व्यासशब्दात्तु वृद्धाच्छ एवं वैयासीयः। स्त्रियां वैयासीया। न च व्यासवरुडेत्यकङादेशः इञ्प्रत्ययश्च स्यादिति वाच्यम्। तत्सूत्रस्य अपत्याधिकारस्थत्वात्। न च यथाविहितं प्रत्ययास्स्युरित्युक्तत्वेन व्यासादकङिञौ विहिताविति स्यातामेवात्रापीति वाच्यम्। राष्ट्रावारपारेत्यादिना शेषे यस्याः प्रकृतेः यः प्रत्ययो विहितः तस्याः स प्रत्ययः जाताद्यर्थेषु स्यादिति तदर्थत्वात्। युक्तञ्चेदम्। अपत्यादिचतुरर्थ्यन्तार्थातिरिक्तोऽर्थश्शेषः। शेष इति सामान्येनोक्तानामर्थानां

**१४९६ कृते ग्रन्थे** ४।३।११६। वररुचिना कृतो वाररुचो ग्रन्थः ॥ **१४९७ संज्ञायाम्** ४।३।११७। तेनेत्येव । अग्रन्थार्थमिदम् । मक्षिकाभिः कृतं माक्षिकं मधु ॥ **१४९८ कुलालादिभ्यो वुञ्** ४।३।११८। तेन कृते संज्ञायाम् । कुलालेन कृतं कौलालकम् । वारुडकम् ॥ **१४९९ । क्षुद्राभ्रमरवटरपादपादञ्** ४।३।११९। तेन कृते संज्ञायाम् । क्षुद्राभिः कृतं क्षौद्रम् । भ्रामरम् । वाटरम् । पादपम् ॥

---

विशेषविधिः। तत्र जात इत्यादिः। तेन जाताद्यर्थानां शेषत्वाव्यभिचारात्। शेष इत्यधिकारस्थ सूत्रपरम्परया यस्माद्यो विहितस्स, तस्माज्जातादिषु स्यादिति सिद्धम्। एवं अपत्यादि विकारान्तार्थेष्वपि यस्माद्यस्माद्यो यः प्रत्ययो विहितस्सोऽपि तस्माज्जाताद्यर्थेषु भवति। अपत्यादिविकारान्तार्न्थेषु जाताद्यर्थानामन्तर्भावात्। तस्मात्प्राग्दीव्यतीयेष्वर्थेषु शेषे च यथाविहितस्तथा जाताद्यर्थेषु स्यादिति फलितम्। उक्तमपीदं प्राक्पुनर्दर्शितं सौकर्याय। नन्वेवम् वैयासीया इति भवितव्ये कथं वैयासिकी इति प्रयोगस्संहितायां संगच्छते इति चेत् आर्ष एव। व्यासस्यापत्यं स्त्री वैयासकी इति पुमान् वैयासकिः इति च भवतीति संहितायामौपचारिके स्त्रीत्वे अङ्गीकृतेऽपि वैयासकी इति न स्यात्। व्यासशब्दात् तकि वैयासिकी इति यदुक्तं मया पूर्वं व्यासवरुडेति वार्तिकव्याख्यानावसरे तस्यापि आर्षत्वाभिप्राय एव। ठग्विधायकसूत्राभावात्। यद्वा तेन दीव्यति खनतीति वक्ष्यमाणेन व्यासेन दीव्यतीत्यर्थे ठक् वैयासिकी इति कथञ्चित्समाधेयम्। व्यासेन प्रकाशितत्वात् । ग्रन्थस्य प्रकाशनहेतुभूतेन व्यासेन संहिता दीव्यति प्रकाशते इति नार्थस्यासाङ्गत्यम्।
***संज्ञायाम्** । तेन कृत इत्यर्थे प्रत्ययास्स्युः । प्रकृतिप्रत्ययसमुदायेन संज्ञायां वाच्यायाम्। ग्रन्थे तु पूर्वेणैव सिद्धमिति अग्रन्थार्थमिदमिति मूले। सा चेत्संज्ञाग्रन्थस्य भवति, तर्हि कृते ग्रन्थे इत्यनेनैव सिद्ध्यति। यदि ग्रन्थेतरस्य तर्हि अनेन सिद्ध्यतीति भावः। योगविभागात्संज्ञा संज्ञासाधारण्येन कृते ग्रन्थे प्रत्ययोत्पत्तिरिति। अग्रन्थे तु संज्ञाभूते एव प्रत्ययोत्पत्तिरिति च द्वयं सिद्धम्। माक्षिकम्। औत्सर्गिकोऽण्।

***तस्येदम्।** षष्ठ्यन्तादिदमित्यर्थे णादयो घादयश्च स्युः। अणादयो महोत्सर्गाः पञ्चप्राग्दीव्यतोऽण्। प्राग्वहतेष्ठक्। प्राग्घिताद्यत् प्राक्क्रीताच्छः। प्राग्वतेष्ठञ् इति अणि औपगवम्। ठकि कन्थाया इदं कान्थिकम्। यति प्राच इदं प्राच्यम्। छे पाणिनेरिदं पाणिनीयम्। ठञि काश्या इयं काशिकी। घे राष्ट्रस्यायं राष्ट्रियः। खे पारस्यायं पारीणः इत्यादि। अण्घादयस्स्युरित्येवालम्। घादिषु अणिभन्नानां महोत्सर्गाणाञ्चतुर्णां

**१५०० तस्येदम्** ४।३।१२०। उपगोरिदमौपगवम् ॥ **वहेस्तुरणिट् च** ॥ संवोढुः स्वं सांवहित्रम् ॥ **अग्नीधः शरणे रण् भं च** ॥ अग्निमिन्धे अग्नीत्, तस्य स्थानमाग्नीध्रम्। तात्स्थ्यात्सोऽप्याग्नीध्रः ॥ **समिधामाधाने षेण्यण्** ॥ सामिधेन्यो मन्त्रः सामिधेनी ऋक् ॥

---

पठितत्वात्। अणपि पठित एवेति घादय एवालमिति वा।

***वहेरिति।** तृशब्दस्य षष्ठी तुः। वहेः परस्य तृ इति कृत्प्रत्ययस्य इडागमस्स्यात्। अण्प्रत्ययसन्नियोगेनेति वार्तिकफलितार्थः। वहेः परस्य तुः इडागमः अण्प्रत्ययश्चेति यथाश्रुतार्थः। त्रन्तो यो वहिस्तस्मादण् तस्येडागमः। इति वा। इक्श्तिपौ धातुनिर्देशे इति धातुनिर्देशे इक् वहिः तस्य पञ्चमी वहेः वह्धातोरित्यर्थः। ण्वुल्तृचौ धातोरेतौ स्तः कर्त्रर्थे इति सम्पूर्वकात् वहतेः कर्तरि तृच् सवह् तृ इति स्थिते तस्येदमित्यणि वहेस्तुरिट् संवह् इतृ अ आदिवृद्धिः सांवहितृ अ–यण्–सांवहित्रम्। लौकिकविग्रहे परिनिष्ठितस्यैव प्रयोग इति संवोढुरिदमित्युक्तम्। संवह् तृ ङस् अण् इत्यलौकिकविग्रहः। वह् तृ ङस् ऋत उत् वह् तुस्। होढः। झषस्तथोर्धः। ढोढे लोपः। सहिवहोरोदवर्णस्य वोढुः ***अग्नी धश्शरण इति।** अग्नीध् शब्दात् शरणे वाच्ये रण्प्रर्ययस्स्याद्भत्वञ्चाग्नी थ्शब्दस्येति वार्तिकार्थः। शरणं स्थानम्। अग्निमिन्थे अग्नीध् जश्त्वचर्त्वे अग्नित् । अग्निधः स्थानमिति लौकिकविग्रहः। अग्नीथध्। अग्निधः । अग्नीथध् ङस् रण् इत्यलौकिकः। भत्वाद्धस्य जश्त्वचर्त्वे न भवतः। णित्त्वादादिवृद्धिः। आग्नीध्रम्आग्नी ध्र इत्यौपचारिकः प्रयोगः। ***समिधामिति।** षष्ठ्यन्तात्समिध्शब्दादाधानार्थे षेण्यण्प्रत्ययस्स्यात्। आधानं नाम निधानं निक्षेप इति यावत्। षेण्यणि षकारणकारौ इतौ। षोङीषर्थः। णः आदिवृद्ध्यर्थः। निमित्तापाये नैमित्तिकस्याप्यपाय इति षलोपे णत्वस्यापि नाशः एन्य इति शिष्यते। (षी एन्यण् इति स्थिते रषाभ्यामिति नस्य णत्वं षेण्यण्) समिध् एन्य आदिवृद्धिः सामिधेन्य स्त्रियामणणन्तात् ङीप्। हल्स्तद्धितस्येति यलोपः। यस्येति लोपानन्तरं भवति, सामिधेनी। ***रथाद्यत्।** तस्येदमित्यिर्थे षष्ठ्यन्ताद्रथशब्दादिदमित्यर्थे यत्स्यात्। रथस्येदं रथ्यम् । रथस्येति अवयवायविभावसम्बन्धे शेषे षष्ठी। रथावयव इत्यर्थः। ***पत्रेति।** रथादित्यस्यात्रानुवृत्तिः। पत्रं पत्रेति न स्वरूपस्य ग्रहणं किन्त्वर्थस्य वाहनभूतोऽश्वादिरित्यर्थः। पत्रं पूर्वं यस्य सः पत्रपूर्वः। पत्रार्थवाचकपदपूर्वावयवक इत्यर्थः। तस्माद्रथशब्दादिदमर्थे अञ्। यतोपवादः । न च रथान्ताद्यत एवाप्राप्तिरिति वाच्यम्। रथसीताहलेभ्यो यद्विधाविति तदन्तविधेरत्रानुसृतत्वात्। ***वाह्यं** वहनीयं भार इति यावत्।

**१५०१। रथाद्यत्** ।४।३।१२१। रथ्यं चक्रम्॥ **१५०२। पत्रपूर्वादञ्** ।४।३।१२२। पत्रं वाहनम्। अश्वरथस्येदमाश्वरथम्॥ **१५०३। पत्राध्वर्युपरिषदश्च** ।४।३।।१२३। अञ्॥ पत्राद्वाह्ये॥ अश्वस्येदं वहनीयमाश्वम्। आध्वर्यवम्। पारिषदम्॥ **१५०४। हलसीराट्ठक्** ।४।३।१२४। हालिकम्। सैरिकम्॥ **१५०५। द्वन्द्वाद्वुन्वैरमैथुनिकयोः** ।४।३।१२५। काकोलूकिका। कुत्सकुशिकिका॥ **वैरे देवासुरादिभ्यः प्रतिषेधः**॥ दैवासुरम्॥ **१५०६। गोत्रचरणाद्वुञ्** ।४।३।१२६। औपगवकम्॥ **चरणाद्धर्माम्नाययोरिति वक्तव्यम्**॥ काठकम्॥ **१५०७। सङ्घाङ्कलक्षणेष्वञ्यञिञामण्** ।४।३।१२७। **घोषग्रहणमपि कर्तव्यम्**॥ अञ्, गार्गः। गार्गम्। इञ्, दाक्षः। दाक्षम्। परम्परासंबन्धोऽङ्कः साक्षात्तु लक्षणम्॥

---

*__द्वन्द्वादिति__ षष्ठ्यन्ताद्द्वन्द्वाद्वुन् स्यादिदमर्थे तच्चेदिदं वैरं मैथुनिका वा। इदम्पदेन वैरो मैथुनिका वा विवक्ष्यते चेदित्यर्थः। मैथुनिका मिथुनस्य कर्म विवाहः। काकोलूकयोर्वैरं काकोलूकिका । कुत्स्थकुशिकयोर्मैथुनिका कुत्सकुशिकिका देवासुराणां वैरं दैवासुरम्। वुनोपवादोऽत्र वार्तिकम्। वैरे देवासुरादिभ्यः प्रतिषेध इति। वैरे वाच्ये देवासुरादिभ्यो वुनः प्रतिषेधो वाच्य इत्यर्थः। द्वन्द्वे देवासुरादिभ्यः प्रतिषेध इत्यप्यन्यद्वार्तिकमस्ति। शिशुक्रन्देति सूत्रस्थं तत्। मूले प्रकृतसूत्रव्याख्यानावसर एव द्वन्द्वे इति वार्तिकं पठितम्। तत्तु प्रामादिकम्। किञ्च सूत्रपाठे वार्तिकद्वयमप्यस्मिन् सूत्रे एव लिखितम्। तदपि प्रामादिकम्। द्वन्द्वे इत्यादिवार्तिकस्य शिशुक्रन्दसूत्रे लिखितव्यत्वात् इति बोध्यम्। *__गोत्रेति__। गोत्रान्तात् चरणाच्छाखाध्येतृवाचकाच्च षष्ठ्यन्तादिदमर्थे वुञ् । अणोऽपवादः। कठेन प्रोक्तमधीयते कठाः। शाखाध्येतारः तेषां धर्मः आम्नायो वा काठकम्। अन्यत्तु काठम्। आम्नायो वेदः। *__सङ्घाङ्केति__। अञ्यञिञामिति पञ्चम्यर्थे षष्ठी। अञ्ञिञ्भ्य इत्युक्ते गौरवात्। सङ्घाङ्कलक्षणेषु इदमर्थेषु सत्सु अञन्तात् इञन्तात् यञन्ताच्च षष्ठ्यन्तादण् स्यात्। गोत्रलक्षणस्य वुञोऽपवादः। अञ्यञिञ्सु गोत्रे एव विहितत्वात्। यद्यपि द्वीपादसमुद्रं यञ् इत्यादिषु गोत्रेतरेभ्योऽपि यञादयो विहिताः, तथाऽपि प्राक्सूत्राद्गोत्रपदमनुवर्त्य सप्तम्यन्तत्वेन विपरिणमय्य गोत्रे ये अञादयः तदन्तादण् इति व्याख्यानात्। गोत्रे विहितानामेव अञादीनामिह ग्रहणमिति गोत्रलक्षणस्य वुञोऽपवाद इति सुस्थम्। *__घोषेति__। सङ्घाङ्कलक्षणघोषेष्विति सूत्रं पठितव्यमिति भावः। अञन्तादण्। बैदः।

**१५०८। शाकलाद्वा** ।४।३।१२८। अण् वोक्तेऽर्थे, पक्षे चरणत्वाद्वुञ्। शाकलेन प्रोक्तमधीयते शाकलास्तेषां सङ्घोऽङ्को घोषो वा शाकलः। शाकलकः। लक्षणे क्लीबता॥ **१५०९। छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः** ।४।३।१२९। छन्दोगानां धर्म आम्नायो वा छान्दोग्यम्। औक्थिक्यम्। याज्ञिक्यम्। बाह्वृच्यम्। नाट्यम्॥ **चरणाद्धर्माम्नाययोः** इत्युक्तं तत्साहचर्यान्नटशब्दादपि तयोरेव॥ **१५१०। न दण्डमाणवान्तेवासिषु** ।४।३।१३०। दण्डप्रधाना माणवा दण्डमाणवास्तेषु शिष्येषु च वुञ् न स्यात्। दाक्षा दण्डमाणवाः शिष्या वा॥

---

बिदादिभ्योऽञ्। बिदस्य गोत्रं बैदः। तस्येदमित्यणि यस्येति लोपे बैदः। क्लीबत्वे बैदम्। स्त्रियां बैदी। संहतिः संघपर्यायशब्दोऽयम्। ***शाकलाद्वा** ।अत्र पूर्वसूत्रात्सङ्घाङ्कलक्षणेष्वणित्यनुवर्तते। शाकलशब्दात्सङ्घाद्यर्थेषु अण् वा स्यादित्यर्थः। अणभावपक्षे तु गोत्रचरणादिति वुञ्। शाकलस्य चरणत्वात्। ननु चरणाद्धर्माम्नाययोरिति वृत्तिनियमात्पक्षे सङ्घाद्यर्थेषु शाकलाद्वुञ् दुर्लभ इति चेन्मैवम्। वाग्रहणवैयर्थ्यान्यथानुपपत्त्या सङ्घादिष्वपि शाकलाद्वुञस्सुलभत्वात्। ***लक्षणे** क्लीबता। लक्षणास्य क्लीबत्वेन तस्मिन् वाच्ये शाकलस्य क्लीबत्वम्। शाकलं शाकलकं वा लक्षणमिति । ***छन्दोगेति** नटादिति समाहारद्वन्द्वैकवद्भावः। नटात् ञ्यः इति स्थिते यरोऽनुनासिक इत्यनुनासिकः नकारः। नश्चापदान्तस्येत्यनुस्वारः। यादौ तद्धिते पूर्वस्य भत्वेन पदत्वाभावादपदान्त एवायं नकारः। अनुस्वारस्य ययि परसवर्णः। नटाञ्ञ्यः। ञित्त्वं वृद्ध्यर्थः। य इति शिष्यते छन्दोगादिभ्यषष्ठ्यन्तेभ्यः ञ्यस्स्याद्धर्माम्नाययोः। चरणाद्धर्माम्नाययोरिति वार्तिकात्। ननु नटस्य अचरणत्वाद्धर्माम्नायभिन्नार्थेष्वपि नटाञ्ञ्यस्स्यादत आह–साहचर्यादिति। तेन नटस्य धर्म आम्नायो वा नाट्यम्। आम्नायोऽत्र भरतशास्त्रम्। ***दण्डमारावाः**। उत्तरपदलोपी समासः। मनोरिमे मानवा इत्यण्। ब्राह्मणमाणवेति निपातनान्नस्य णत्वम्। अबाधकान्यपि निपातनानीति। मानवा इत्यपि। दक्षस्यापत्यं दाक्षिः। दाक्षेरिमे इत्यर्थे गोत्र लक्षणो वुञ् प्राप्तः। तस्य निषेधेन औत्सर्गिकोऽण्। दाक्षाः। दण्डमाणवाः भटा इत्यर्थः। ***इहैव** निपातनादण् इति। ननु कौपिञ्जलीत्येव सूत्र्यतां लाघवाभावादिति चेन्मैवम्। कौपिञ्जलिहास्तिपदिभ्यामण् इति सूत्रयितव्यत्वात्। वस्तुतस्तु कौपिञ्जलिहास्तिपदेरण् इति सूत्रितेन गौरवदोषः। तथापि कुपिञ्जलहास्तिपदाभ्यामत इञ् माभूदिति अणन्तनिपातनमिदम्। तेन कुपिञ्जलस्यापत्यं कौपिञ्जलिरित्यादि न भवति। औत्सर्गिकेऽणि सिद्धेऽपि वुञा तस्य बाधितत्वात्पुनरत्राणग्रहणम्। ***आथर्वणिकस्येति** षष्ठ्यन्तादाथर्वणिकाद्धर्माम्नाययोरण् स्यात्। प्रकृतेरिकलोपश्च। इकस्य लोपः इकलोपः। आथर्वणिकस्य चरणत्वेन

**१५११। रैवतिकादिभ्यश्छः** ।४।३।१३१। तस्येदमित्यर्थे। वुञोऽपवादः। रैवतिकीयः। बैजवापीयः॥ **१५१२। कौपिञ्जलहास्तिपदादण्** ।४।३।१३२। कुपिञ्जलस्यापत्यम्। इहैव निपातनादण् तदन्तात्पुनरण्। कौपिञ्जलः। गौत्रवुञोऽपवादः। हस्तिपादस्यापत्यं हास्तिपादस्यायं हास्तिपदः॥ **१५१३। आथर्वणिकस्येकलोपश्च** ।४।३।१३३। अण् स्यात्। आथर्वणिकस्यायमाथर्वणः धर्म आम्नायो वा। चरणाद्वुञोऽपवादः॥

**समप्ताः शैषिकाः॥**

## तद्धितेषु प्राग्दीव्यतीयाः २९।

**१५१४। तस्य विकारः** ।४।३।१३४। **अश्मनो विकारे टिलोपो वक्तव्यः**॥ अश्मनो विकार आश्मः। भास्मनः। मार्तिकः॥ **१५१५। अवयवे च प्राण्योषधिवृक्षेभ्यः**। ४।३।१३५। चाद्विकारे। मयूरस्यावयवो विकारो वा मायूरः। मौर्वं काण्डं भस्म वा। पैप्पलम्॥

---

चरणाद्धर्माम्नाययोरिति वार्तिकस्यात्रोपस्थितिः। आधर्वणिक अण् इति स्थिते इकलोपः। आधर्वण्। अ आधर्वण। गोत्रचरणादिति चरण लक्षणस्य वुञ्योऽयमपवादो बाधकबाधनार्थ इति भावः। ।। समाप्ताश्शैषिकाः।।

### प्राग्दीव्यतीयाः

*__मार्तिकः__। मृत्तिकाया विकारः–प्राग्दीव्यतोऽण्। आदेरच ऋकारस्य वृद्धिरार्। *__प्राणिनाम्__। ओषधीनाम् वृक्षाणाञ्च वाचका ये शब्दास्तेभ्यष्षष्ठचन्तेभ्यः अवयवार्थे विकारार्थे च अणादयस्स्युः। काण्डं दूर्वाया अवयवः भस्मविकार इति कृत्वा काण्डं भस्म वेत्युदाहृतम्। एवं पैप्पलमित्यत्रापि काण्डं भस्म वेति बोध्यम्। पिप्पल्या इदं पैप्पलम्। वृक्षेभ्य इदमुदाहरणम्। *__बिल्वादिभ्योऽण्__। ननु वृक्षेभ्य इत्यने नैव औत्सर्गिकेऽणि सिद्धे व्यर्थमिदं सूत्रमिति चेन्मैवम्। अनुदात्तादेश्चेत्यञि मयड्वैतयोरिति मयटि च प्राप्ते तदपवादार्थमिदम्। *__कोपधाच्च__। वृक्षेभ्य इत्येव। वृक्षवाची यः कोपधः तस्मादण्स्याद्विकारावयवयोरित्यर्थः। अनुदात्तादेश्चेत्यञोऽपवादः। तिन्तिडीकस्य विकारोऽवयवो वा तैन्तिडीकम्। *__त्र प्विति__। अप्राण्यादित्वाद्विकारे एव प्रत्ययः। प्रकृतेरणसन्नियेगेन षुक्। षुकः कित्त्वादन्त्यावयवः उकार उच्चारणार्थः। ष् इति शिष्यते। ननु अस्मिन् सूत्रे अणनुवृत्तिर्व्यर्था। तस्य विकार इत्यनेनैव अणि सिद्धे तस्मात् षुगागमार्थमिदं सूत्रमिति चेन्मैवम्। ओरङ्

**१५१६। बिल्वादिभ्योऽण्** ।४।३।१३६। बैल्वम्॥ **१५१७। कोपधाच्च** ।४।३।१३७। अण्। अञोऽपवादः। तर्कु, तार्कवम्। तैत्तिडीकम्॥ **१५१८। त्रपुजतुनोः षुक्** ।४।३।१३८। आभ्यामण् स्याद्विकारे एतयोः षुगागमश्च। त्रापुषम्। जातुषम्॥ **१५१९। ओरञ्** ।४।३।१३९। दैवदारवम्। भाद्रदारवम्॥ **१५२०। अनुदात्तादेश्च** ।४।३।१४०। दाधित्थम्। कापित्थम्॥ **१५२१। पलाशादिभ्यो वा** ।४।३।१४१। पालाशम्। कारीरम्॥ **१५२२। शम्याः ष्लञ्** ।४।३।१४२। शामीलं भस्म। षित्वान्ङीष्। शामीली स्रुक्॥ **१५२३। मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः** ।४।३।१४३। प्रकृतिमात्रान्मयड्वा स्याद्विकारावयवयोः। अश्ममयम्। आश्मनम्। अभक्ष्येत्यादि किम्। मौद्गः सूपः। कार्पासमाच्छादनम्॥

---

इत्यञ्। औत्सर्गिकाणं बाधते इति अत्राण्विधानस्यावश्यकत्वेन अणनुवृत्तिस्सफलेति ओरञ्। अवर्णान्तादञ् स्याद्विकारे प्राण्यादेरवयवे च इत्यर्थः। *अनुदात्तादेश्च। अनुदात्तः आदिः यस्य सः अनुदात्तादिः अनुदात्तसंज्ञकाद्यच्क इत्यर्थः। तस्मात् विकारे प्राण्यादेरवयवे च अञ् स्यादिति सूत्रार्थः। ***शम्या इति।** शमीशब्दाद्विकारावयवयोः ष्लञ् प्रत्ययस्स्यात्। षोङीषर्थः। ञित्त्वादादिवृद्धिः। ल इति शिष्यते। शम्या विकारश्शामीलं भस्म। शम्या अवयवश्शामीली स्रुक्। शम्याः ट् लञ् इति पठित्वा टित्त्वात् ङीबिति माधवः। ***मयडिति।** तस्येत्यनुवर्तते। षष्ठ्यन्तान्मयट् स्यादेतयोर्भाषायाम्। प्रकृतिप्रत्ययसमुदायेन भिक्षाच्छादनयोरवाच्ययोरित्यर्थः। एतयोरित्यस्यार्थमाहविकारायवयोरिति। भाषायां लोके प्रकृतिमात्राद्विकारावयवयोरित्यनेन प्राण्यादिभ्योऽवयवे चेति नियमोऽत्र नाश्रियते इति गम्यते। तथा च प्राण्योषधिवृक्षेभ्यः तदितरेभ्यश्च सर्वेभ्योऽपि विकारावयवयोर्मयट् स्यादिति फलितम्। अश्मनोऽवयवः आश्ममयम् आश्मनमिति मयडभावे औत्सर्गिकेऽणि अन्निति प्रकृतिभावान्नस्तत्तद्धित इति न टिलोपः। विकारे तु अश्मनो विकारे टिलोप इति प्रकृतिभावं बाधित्वा टिलोपे आश्म इति भवतीति तस्य विकार इति सूत्रे एवोदाहृतम्। विकारार्थे मयटि कृतेऽपि आश्ममयमित्येव। नलोपः प्रातिपदिकान्तस्येति नलोपात्। न चात्रान्निति प्रकृतिभावश्शङ्क्यः। अण्येव तद्विधानात्। मुद्गानां विकारो मौद्गः। अनुदात्तादेश्चेत्यञं बाधित्वा बिल्वादित्वादण्। सूपस्य भक्षत्वेन मुद्गमय इति न। कर्पास्या विकारः कार्पासम्। बिल्वादित्वादण्। कर्पासीमय इति पक्षे न। ***नित्यमिति** मयड्वेति सूत्रेण मयटो विकल्पे प्राप्ते नित्यार्थमिदम्। वृद्धेभ्यश्शरादिभ्यश्च षष्ठ्यन्तेभ्यः

**१५२४। नित्यं वृद्धशरादिभ्यः ।४।३।१४४।** आम्रमयम्। शरमयम्॥ एकाचो नित्यम्॥ त्वङ्यम्। वाङ्मयम्। कथं तर्हि आप्यमामयमिति। तस्येदम् १५०० इत्यणणन्तात्स्वार्थे ष्यञ्॥

---

विकारावयवयोर्मयट् नित्यं स्यादित्यर्थः। ***भाषायामभक्षाच्छादनयोरित्येव**। वृद्धादुदाहरणम्। आम्रमयम्। ननु भाषायामित्युक्तत्वेन वेदे विकारावयवयोर्न मयट् इति अन्योन्तर आत्माऽऽनन्दमय इति श्रुतौ आनन्दमयशब्दस्य आनन्दस्य विकार आनन्दमय इति विकारे मयडिति कथमुक्तं शङ्करभगवत्पादैरानन्दमयाधिकरणे इति शङ्कायान्तत्त्वबोधिनी। अथ वा हेतुमनुष्येभ्य इत्यादि। अयं भावः। श्रुतावानन्दमय इत्यत्र नित्यं वृद्धेति न मयट् किन्तु मयट् चेति सूत्रेण मयट्। तथा च आनन्दादागतः आनन्दमयः इति विग्रहः। आगतार्थे मयडिति यावत्। न चैवं विकारे मयडिति तदुक्तस्य व्याघातश्शङ्क्यः। विकारो नाम कार्यम्। तथा च प्रसिद्धिः मृद्विकारो घट इति। कार्यं हि कारणादागच्छति। बीजाद्यथाङ्कुरः। एवं य आगतः स कार्यभूतः। यत्कार्यं तद्विकारभूतम् इति। आगतविकारयोर्नार्थकृतो भेदः। अतः आगत इत्यस्य योऽर्थः विकारः तत्र मयट्। इति अर्थात्सिद्धस्य अर्थस्य कथनपरं शङ्करवाक्यमिति। (आनन्दाद्ब्रह्मण आगतः आनन्दमयः–आनन्दविकारः–आनन्दकार्यमिति यावत्) इति भावः।

***एकाचो** नित्यम्। षष्ठ्यन्तादेकाचः विकारावयवयोर्नित्यं मयट् इति वार्तिकार्थः। इदञ्च शक्यमकर्तुम्। नित्यं वृद्धशरादिभ्य इति सूत्रे नित्यग्रहणाद्ज्ञापितत्वात्। तथा हि मयड्वैतयोरित्यनेनैव वृद्धशरादिभ्योऽपि विकल्पेन मयटि सिद्धे वृद्धशरादिभ्य इति सूत्रारम्भो व्यर्थस्सन् वृद्धशरादिभ्यो मयण्नित्यं स्यादिति ज्ञापयतीति आरम्भसामर्थ्यादेव। वृद्धशरादिभ्यो नित्यंमयडिति लब्धे सति नित्यग्रहणं व्यर्थं भवति। व्यर्थीभूय क्वचिदन्यतोऽपि मयण्नित्यं स्यादिति ज्ञापयतीति। ज्ञापनसिद्धस्य अर्थस्य कथनपरमिदं वार्तिकमिति बोध्यम्। वाचां विकारः वाङ्मयम्। ननु एकाच्त्वात् अप्शब्दान्नित्यमेव मयडिति अम्मयमित्येव स्यात् न तु आप्यमिति। कथमाप्यमिति प्रयोगस्सङ्गच्छते इति शङ्कते कथन्तर्हीत्यादिना। तस्येदमित्यादिसमाधानस्यायं भावः। अपामिदमापम्। तस्येदमिति विकाराद्यविवक्षायां सामान्येनाण् आपमेव आप्यम् इति। ***गोश्चेति**। षष्ठ्यन्ताद्गोशब्दादिदमित्यर्थे मयट् स्यात्। तच्चेदिदम्। पुरीषः। यद्वा–षष्ठ्यन्ताद्गोशब्दात् पुरीषार्थे मयट्स्यादित्यर्थः। ***सामन्यविवक्षायाम्।** पिष्टस्य विकार इति विग्रहमविवक्ष्य पिष्टस्येयमिति विवक्षायामित्यर्थः। ***संज्ञायामिति** पिष्टाद्विकारे कन्स्यादिति प्रकृतिप्रत्ययसमुदायेन संज्ञायां वाच्यायां इति सूत्रार्थः। पिष्टकः। कस्यायं संज्ञा अत आह–पूपोऽपूप इति।

**१५२५ । गोश्च पुरीषे ।४ ।३ ।१६४ ।** गोः पुरीषं गोमयम् ॥ **१५२३ । पिष्टाच्च ।४ ।३ ।१४६ ।** मयट् स्याद्विकारे । पिष्टमयं भस्म । कथं पैष्टी सुरेति । सामान्यविवक्षायां तस्येदं १५०० इत्यण् ॥ **१५२७ । संज्ञायां कन्** ।४ ।३ ।१४७ । पिष्टादित्येव । पिष्टस्य विकारविशेषः पिष्टकः । पूपोऽपूपः पिष्टकः स्यात् ॥ **१५२८ । व्रीहेः पुरोडाशे** ।४ । ३ ।१४८ । मयट् स्यात् । बिल्वाद्यणोऽपवादः । व्रीहिमयः पुरोडाशः । व्रैहमन्यत् ॥ **१५२९ । असंज्ञायां तिलयवाभ्याम् ।४ ।३ ।१४९ ।** तिलमयम् । यवमयम् । संज्ञायां तु तैलम् । यावकः ॥ **१५३० । तालादिभ्योऽण् ।४ ।३ ।१५२ ।** अञ्मयटोरपवादः । **( ग ) तालाद्धनुषि ॥** तालं धनुः । अन्यत्तालमयम् । ऐन्द्रायुधम् । **१५३२ । जातरूपेभ्यः परिमाणे ।४ ।३ ।१५३ ।** अण् । बहुवचनात्पर्यायग्रहणम् । हाटकः तापनीयः सौवर्णो वा निष्कः । परिमाणे किम् । हाटकमयी यष्टिः ॥ **१५३२ । प्राणिरजतादिभ्योऽञ् ।४ ।३ ।१५४ ।** शौकम् । बाकम् । राजतम् ॥

---

पूपस्य संज्ञा इत्यर्थः। पूपादयस्त्रयः पर्यायाः। ***व्रीहेरिति**। विकारे इत्येव। पुरोडाशस्य व्रीह्यवयवत्वासम्भवात् व्रैहम्। व्रीहिविकारओदनादिकमित्यर्थः। व्रीह्यवयव इत्यर्थेऽपि स्यादेव। ओषधित्वेन अवयवे चेति प्रत्ययविधानात्। तेन व्रीह्यवयवः काण्डमपि व्रैहमिति भवति। ***तैलम्**। तिलस्य विकारस्तैलम्। अप्राण्यादित्वात्तिलस्यावयवस्तैलमिति न स्यात्। एवं यावक इत्यत्रापि। मयटि तु तिलस्य अवयवस्तिलमयमिति अवयवार्थोऽपि प्रतीयते। मयड्वैतयोरिति विकारावयवयोर्मयड्विधानात्। ***तालाद्धनुषि**। तालाद्विकारावयवयोरणस्यात् धनुषि वाच्ये इत्यर्थः। मयडपवादोऽयमण्। इति विकारावयवयोर्मयड्विधानात्तदपवादोऽप्यण् विकारावयवयोरेव। ***ऐन्द्रायुधम्**। अनुदात्तादेरित्यञोऽपवादोऽयमण्। मयड्वैतयोरिति मयटश्च । ***परिमाणे**। प्रकृतिप्रत्ययसमुदायेन परिमाणे वाच्ये हाटकस्य विकारः हाटकमयी टित्त्वान्ङीप्। ***ञितश्चेति** पूर्वसूत्रादञनुवर्तते। तत्पदेन विकारावयवौ परामृश्येते प्रकृतित्वात्तयोरर्थयोरिति। तयोर्विहितः प्रत्ययः तत्प्रत्ययः। शामीलस्य विकारोऽवयवो वा शामीलमित्यादि। बैल्वमयम्। बैल्व इति णित्तत्प्रत्ययान्तः। बिल्वादिभ्योऽण् इति विकारावयवयोर्बिल्वादणो विहितत्वात्। ***येनोपाधिना** येन शास्त्रेण परिमाणात् परिमाणवाचकात् ***ठष्ट्राद्वुञ्** स्याद्विकारावयवयोरित्यर्थः। ***अणञौ**। उमाशब्दात्तस्य विकार इत्यौत्सर्गिकोऽण्। उर्णाशब्दादनुदात्तादेश्चेत्यञ् उमेयं लता। न तु पार्वती। एण्या ढञ्। एणस्य ढञ् इति सूत्रिते प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति एण्या अपि ढञ् सिद्ध्यत्येव।

**१५३३। ञितश्च तत्प्रत्ययात्** ।४।३।१५५। ञिद्यो विकारावयवप्रत्ययस्तदन्तादञ् स्यात्तयोरेवार्थयोः। मयटोऽपवादः। शामीलस्य शामीलम्। दाधित्थस्य दाधित्थम्। कापित्थम्। ञितः किम्। बैल्वमयम्॥ **१५३४। क्रीतवत्परिमाणात्**।४।३।१५६। प्राग्वहतेष्ठञ् १५४८ इत्यारभ्य क्रीतार्थे ये प्रत्यया येनोपाधिना परिमाणाद्विहितास्ते तथैव विकारेऽतिदिश्यन्ते। अणादीनामपवादः। निष्केण क्रीतं नैष्किकम्। एवं निष्कस्य विकारोऽपि नैष्किकः। शतस्य विकारः शत्यः। शतिकः॥ **१५३५। उष्ट्राद्वुञ्** ।४।३।१५७। प्राण्यञोऽपवादः। औष्ट्रकः॥ **१५३६। उमोर्णयोर्वा** ।४।३।१५८। औमम्। औमकम्। और्णम्। और्णकम्। वुञभावे यथाक्रममणञौ॥ **१५३७। एण्या ढञ्** ।४।३।१५९। ऐणेयम्। एणस्य तु ऐणम्॥ **१५३८। गोपयसोर्यत्** ।४।३।१६०। गव्यम्। पयस्यम्॥ **१५३९। द्रोश्च** ।४।३।१६१। द्रुर्वृक्षस्तस्य विकारोऽवयवो वा द्रव्यम्॥ **१५४०। माने वयः** ।४।३।१६२। द्रोरित्येव। द्रुवयम्। यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम्॥ **१५४१। फले लुक्** ।४।३।१६३। विकारावयवप्रत्यस्य लुक् स्यात् फले। आमलक्याः फलमामलकम्॥

---

एण्या इति लिङ्गविशिष्टनिर्देशे तु एणस्य न ढञ् इत्याह–एणस्य त्विति। प्राणिरजतादेरित्यञि ऐणम्। ***गोपयसोरिति।** मयटोऽपवादोऽयं यत्। पयश्शब्दादणश्च। गोशब्दादणन्तु। सर्वत्र गोरजादिप्रसङ्गे यत् इति यत् बाधते एव। *द्रोश्च योगविभाग उत्तरार्थः। माने वय इत्युत्तरसूत्रे द्रोः द्रोरित्यनुवर्त्त्य कार्यविधानात् द्रुशब्दषष्ठी द्रोः । द्रु यत्–ओर्गुणः अवादेशः द्रव्यम्। द्रव्यं गुणस्तथा कर्मेत्यत्र द्रव्यशब्दस्तु रूढः। माने परिमाणे वाच्ये द्रोर्विकारे वयप्रत्ययस्स्यात्। क्लीबत्वं लोकात्। द्रुवयम्। द्रुवयशब्दस्य मानार्थकत्वे प्रमाणमाह यौवतमित्यादि। मानार्थकं परिमाणवाचकमित्यर्थः। ***फले लुक्।** विकारत्वेन अवयवत्वेन वा फले विवक्षिते सति षष्ठचन्ताद्विकारावयवयोर्विहितो यः प्रत्ययः तस्य लुक्स्यादिति पलितार्थः। ञितश्च। तत्प्रत्ययादिति सूत्रात् तत्प्रत्ययादित्यस्य मण्डूकप्लुत्या अत्रान्वयः। अनुवृत्तस्य च षष्ठचन्तत्वेन विपरिणामः। फले वाच्ये तत्प्रत्ययस्य लुक्स्यादिति यथाश्रुतार्थः। **प्लक्षादीति।** अत्र फले इत्यनुवर्तते। प्लक्षादिभ्यः फले वाच्ये विकारावयवयोरण् स्यादित्यर्थः। फले लुगित्यणो लुकमाशङ्क्य निराकरोति। विधानसामर्थ्यान्न लुगिति। फले एव अण्विधायकमिदं सूत्रमिति। फले लुकि कृते व्यर्थमण्विधानमिति भावः। ***न्यग्रोधेति।** अत्र नय्वाभ्यामिति सूत्रात् न–पूर्वौ तु ताभ्यामैच्

**१५४२। प्लक्षादिभ्योऽण्** ।४।३।१६४। विधानसामर्थ्यान्न लुक्। प्लाक्षम्॥ **१५४३। न्यग्रोधस्य च केवलस्य** ।७।३।५। अस्य न वृद्धिरैजागमश्च। नैयग्रोधम्॥ **१५४४। जम्ब्वा वा** ।४।३।१६५। जम्बूशब्दात्फलेण् वा स्यात्। जाम्बवम्। पक्षे ओरञ् तस्य लक् जम्बु॥ **१५४५। लुप् च** ।४।३।१६६। जम्ब्वाः फलप्रत्ययस्य लुप् वा स्यात्। लुपि युक्तवत्–१२९४ जम्ब्वाः फलं जम्बूः॥ **फलपाकशुषामुपसंख्यानम्**॥ व्रीहयः। मुद्गाः॥ **पुष्पमूलेषु बहुलम्**॥ मल्लिकायाः पुष्पं मल्लिका। जात्याः पुष्पं जाती। विदार्या मूलं विदारी। बहुलग्रहणान्नेह। पाटलानि पुष्पाणि। साल्वानि मूलानि। बाहुलकाक्वचलुक्। अशोकम्। करवीरम्॥

---

इति मृजेर्वृद्धिरिति सूत्राद्वृद्धिरिति चानुवर्तन्ते। पदाङ्गाधिकारे तस्य च तदन्तस्य चेति अङ्गाधिकारीयत्वेन तदन्तस्यापि निषेधे प्राप्ते केवलस्येति समासाघातस्येत्यर्थः। वृद्ध्यभावैजागमयोस्सन्नियोगशिष्टत्वेन चकारः मूले प्रोक्तः। (व्याख्यानभूतस्यास्य (ग्रन्थस्य मूलभूता कौमुदी मूलमित्युच्यते। न तु सूत्रम्) न वृद्धिः वृद्ध्यभावः। ऐजागमश्च स्यादित्यर्थः। वृद्धिर्न स्यादैजागमश्च नस्यादिति तु न भ्रमितव्यम्। ऐजागमश्च वृद्ध्यभाव सन्नियोगशिष्टत्वात् ऐजागमश्च ताभ्याम् पूर्वादिति यकारात्पूर्व एव। न्यग्रोधस्य फलं नैयग्रोधम्। प्लक्षादित्वादण्। पत्रे अनुदात्तलक्षणे ञि नैयग्रोधमित्येव। ***ओरञ्** तस्य लुक्। ओरञः फले एव विहितत्वाभावादारम्भसामर्थ्यान्न लुगिति वक्तुं न शक्यत इति भावः। ***लुप्च** तदनुबन्धकस्येति लुपि युक्तवद्भावः लुकि न भवतीति लुप्चेति सूत्रारम्भः। पूर्वसूत्राज्जम्ब्वा इति फले लुगिति सूत्रात्फले इति तत्प्रत्ययस्येति च अनुवर्तन्ते तदेतदाह। जम्ब्वाः फलेत्यादिना। ***फलपाकशुषां** फलप्रत्ययस्य लुप्स्यादिति वक्तव्यमिति वार्तिकार्थः। फलपाकः फलपरिपाकः। तेन शुष्यन्तीति फलपाकशुषः। तेषां व्रीह्यादीनामित्यर्थः। व्रीह्यादीनां फलपाकेनैव शुष्यमाणत्वात्। व्रीहीनां फलनि व्रीहयः। फलप्रत्ययस्य बिल्वाद्यणो लुप्। युक्तवद्भावान्न क्लीबत्वम्। ***पुष्पेषु** मूलेषु च वाच्येषु तत्प्रत्ययस्य बहुलं लुप्स्यादिति वार्तिकार्थः। बहुलग्रहणात् क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेवेति। क्वचिदप्रवृत्तिः पाटलानीत्यादौ बाहुलकात्। चतुर्विधं बाहुलकं वदन्तीति चतुर्विधबाहुलकेषु क्वचिदन्यदेवेत्यर्थे क्वचिल्लुगपि भवतीति भावः। लुकः लुबपेक्षया अन्यत्वात्। अशोकस्य पुष्पमशोकम्। लुपि तु अशोक इति स्यात्। ***कंसीयेति**। पञ्चम्यर्थे षष्ठी। षष्ठ्यन्ताभ्यां कंसीयपरशव्याभ्यां विकारावयवयोर्यञञौ

**१५४६। हरीतक्यादिभ्यश्च** ।४।३।१६७। एभ्यः फलप्रत्ययस्य लुप्स्यात्। हरीतक्यादीनां लिङ्गमेव प्रकृतिवत्। हरीतक्याः फलानि हरीतक्यः॥ **१५४७। कंसीयपरशव्ययोर्यञञौ लुक् च** ।४।३।१६८। कंसीयपरशव्यशब्दाभ्यां यञञौ स्तश्छयतोश्च लुक्। कंसाय हितं कंसीयम्, तस्य विकारः कांस्यम्। परशवे हितं परशव्यम्, तस्य विकारः पारशवः॥ **इति प्राग्दीव्यतीयाः॥**

---

यथासङ्ख्यं स्तः लुक्च अयं लुक् न यञञोः विधानसामर्थ्यात्। नापि प्रकृत्योः तत्प्रत्ययस्येति प्रत्ययलोपप्रकरणात्। अथापि प्रकृत्योरेव लुगित्याग्रहे यशशौ स्त इति प्रकृत्योर्यश् अशि इत्यादेशे य-अ-इति रूपे शिष्येते एवेति यञञौ लुक्चेति निर्देशस्य गौरवात्। तस्मात् प्रत्यययोर्लुगिति सिद्धम्। तौ च प्रत्ययौ कंसीयशब्दे छः परशव्यशब्दे यत् च श्रूयेते इति कृत्वा छयतोश्च लुगित्युक्तम्। यद्वा-कंसीयपरशव्याभ्यां यञञौ। एतयोः प्रत्ययस्य लुक्च स्यादित्यन्वयः। तत्प्रत्ययादित्यतः प्रत्ययस्येत्यनुवृत्तेः। कंसीयपरशव्यावयवप्रत्यययोर्लुगित्यर्थः। कंसीयपरशव्योरिति षष्ठ्या अवयवावयविभावसम्बन्धे गम्यमाने शेषे इत्यनेन विहितत्वात्। तयोरवयवौ प्रत्ययौ छयतावेवेति छयतोर्लुगित्युक्तम्। अस्मिंस्तु पक्षे सूत्रे कंसीय परशव्ययोरित्यस्यावृत्तिः। आवर्तिते चैकत्र पञ्चम्यन्तत्वेन विपरिणामः। तथा च कंसीयपरशव्याभ्यां यञञौ स्तः। कंसीयपरशव्ययोर्लुक्च प्रत्यययोरित्यर्थः सिद्ध्यतीति बोध्यम्। कांस्यम्। कंस ङे-छ-इति प्रक्रिया-सुब्लुक्-छस्य लुक्। कंस यञ् आदिवृद्धिः यस्येति लोपः कांस्यम् । लोहविशेषः । पारशवः परशुः खड्गः। परशु ङस् यत् अञ् इति प्रक्रिया। यतो लुक् सुब्लुक् परशु अ-ओर्गुणः। अवादेशः आदिवृद्धिः पारशवः। यद्यप्यञन्नियोगेनैव यतो लुगिति प्रक्रियायाम् परशु ङस् अञित्येव वर्तते न तु यत् अञ् इति तथापि प्रक्रियादर्शनार्थ तथोक्तमिति बोध्यम्।

**प्राग्दीव्यतीयास्समाप्ताः**

प्राग्वहतीया व्याख्यायन्ते

***तदाहेति**। तदित्यनेन सर्वनाम्ना वाक्यार्थभूतं कर्ममात्रं निर्दिश्यते। गच्छति पश्येत्यादौ पश्येत्यस्य तद्गमनरूपस्य वाक्यार्थस्यैव कर्मत्वमिति व्यवहारात्। वाक्यार्थस्य कर्मत्वे न विवादः। तस्मात् कर्मभूताद्वाक्यार्थात् (वाक्यार्थवाचकाद्वाक्यादित्यर्थः) इत्याहेत्यर्थे ठक्प्रत्ययस्योपसङ्ख्यानं कर्तव्यम् तच्चेद्वाक्यं माशब्दादिरूपमिति वार्तिकार्थः। यथा माशब्द इत्याह माशब्दिकः। विग्रहस्यार्थकथनं माशब्दः कारि इति य आहेति। इति नामाशब्द इति वाक्यार्थस्य कर्मत्वमभिधीयते। शब्दो माकारीतीदं वाक्यमाहेति तदर्थपर्यवसानात्।

# तद्धितेषु ठगधिकारः ३०।

**१५४८।प्राग्वहतेष्ठक्** ।४।४।१।तद्वहतीत्यतः प्राक् ठगधिक्रियते॥ तदाहेति माशब्दादिभ्य उपसंख्यानम्॥ माशब्दः कारि इति य आह स माशब्दिकः॥ **१५४९।स्वागतादीनां च** ।७।३।७।ऐच् न स्यात्।स्वागतमित्याह स्वागतिकः।स्वाध्वरिकः।स्वाङ्गस्यापत्यं स्वाङ्गिः।व्यङ्गस्यापत्यं व्याङ्गिः।व्याडस्यापत्यं व्याडिः॥ व्यवहारेण चरति व्यावहारिकः।स्वपतौ साधु स्वापतेयम्॥ **आहौ प्रभूतादिभ्यः** ॥ प्रभूतमाह प्राभूतिकः। पार्यासिकः॥ **पृच्छतौ सुस्नातादिभ्यः** ॥ सुस्नातं पृच्छति सौस्नातिकः।सौखशायनिकः अनुशतिकादिः॥ **गच्छतौ परदारादिभ्यः** ॥ पारदारिकः।गौरुतल्पिकः॥

---

न माङ्योगे इत्यडागमनिषेधात्। कारि इति। ***शोभनमागतं** स्वागतम् इति वाक्यमिदम्। तव स्वागतं किमिति शेषपूरणेन कुशलप्रश्नवाक्यत्वादस्य। यद्वा सु इति पृथक्पदमव्ययम्। त्वया सुसुखेन सुखं यथा तथेत्यर्थः। आगतं किमिति त्वया किमावत्र शेषे। एवं सु। आगतं इति पदद्वयघटितद्वाक्यमिदम्। अथ वा वाक्यार्थपर्यवसायि समस्तपदमेवास्तु। अस्मात्समस्तपदादपि वाक्यार्थः प्रतीयते इति। कर्मभूतवाक्यार्थवाचकत्वमस्मिन्नपि समस्तपदे वाक्ये इव वर्तते इति न कापि क्षतिः। एवम् स्वागतमित्याहेत्यर्थे तदाहेति ठकि कृते स्वागत–ठक्–इति स्थिते कित्त्वाद्वृद्धौ प्राप्तायां नय्वाभ्यामित्यनेन तन्निषेधः। सु आगतम्। यण् स् व्–आगतमिति वकारस्य पदान्तत्वात्। वात्पूर्वमैजगमश्च प्राप्तः। तन्निषेधार्थमिदम्। स्वागतादीनाञ्चेति। बाधकबाधनार्थमिदमिति भावः। एवमैजागमे निषिद्धे तत्सन्नियोगशिष्टो वृद्धिनिषेधोऽपि निषिद्ध इति औत्सर्गिकाया वृद्धेरत्र प्राप्तिः। न च स्वा इति। वृद्धिराकार प्रथमत एव सिद्ध इति। वृद्धिप्राप्तिरत्र अनर्थकत्वेन न स्यादिति वाच्यम्। पर्जन्यवल्लक्षणप्रवृत्त्या अनर्थकेऽपि शास्त्रस्य प्रवर्तनीयत्वात्। (स्वाध्वरिक इत्यत्र तु वृद्धिस्सार्थक्येव) स्वागत–ठक्–ठस्येकादेशः। यस्येति लोपः–स्वागतिकः। शोभनोऽध्वरस्स्वध्वरः। स्वध्वर इति य आह स स्वाध्वरिकः। स्वध्वरे स्वागते इव वाक्यार्थवाचकत्वं बोध्यम्। अस्यापि प्रश्नरूपत्वाद्वाक्यस्य समस्तपदस्य वा इति प्रसङ्गात् ऐजागमनिषेधविषयाणि स्वागतादिगणपठितानि कानि चिल्लक्ष्याणि दर्शयति। स्वङ्गस्यापत्यं स्वाङ्गिरित्यादीनि। सति त्वैजागमे सौवङ्गिरिति स्यादित्याद्यूह्यम्। स्वागत स्वध्वर, स्वङ्ग, व्यङ्ग, व्यड, व्यवहार, स्वपति इति स्वागतादिः। व्यवहारशब्दात् चरतीति वक्ष्यमाणेन ठक्

**१५५० । तेन दीव्यति खनति जयति जितम्** ।४ ।४ ।२ । अक्षैर्दीव्यति आक्षिकः । अभ्र्या खनति आभ्रिकः । अक्षैर्जयति आक्षिकः । अक्षैर्जितमाक्षिकम् ॥ **१५५१ । संस्कृतम्** ।४ ।४ ।३ । दध्ना संस्कृतं दाधिकम् । मारीचिकम् ॥ **१५५२ । कुलत्थकोपधादण्** ।४ ।४ ।४ । ठकोऽपवादः । कुलत्थैः संस्कृतं कौलत्थम् । तैत्तिडीकम् ॥

---

व्यावहारिकः। ***आहौ इति।** अवाक्यार्थोऽयमारम्भः। आहेति धातोरिका निर्देशः। आहिः। ङौ–आहौ। आहेत्यर्थे प्रभूतादिभ्यः ठक उपसङ्ख्यानं कर्तव्यमिति वार्तिकार्थः। पर्याप्तमाह पार्याप्तिकः। इदमस्माकं प्रभूतं पर्याप्तं वेत्यर्थाश्रयणेन स्वागतादिवत् वाक्यार्थवाचकत्वं प्रभूतादीनामस्तीति तदाहेत्यनेनैव यद्यप्यत्र ठकः प्राप्तिस्तथापि प्रभूतादीनामप्रश्नार्थत्वेन वाक्यार्थाक्षेपासम्भवमभिप्रेत्य पूर्वेण ठगप्राप्तावयमारम्भः। अपि च प्रभातादीनां केवलानामेवात्र कर्मत्वं न तु वाक्यार्थस्य इतीदं वैलक्षण्यं द्योतयितुमेव इति पदं विग्रहे न प्रयुक्तं मूले। एवं प्राभूतिको नाम प्रभूतेति शब्दवक्ता इत्यर्थः। प्रभूतमित्याहेति विग्रहे तु पूर्वेणैव ठक् इति विवेकः। ***पृच्छतामिति।** सुस्नातादिभ्यः तृतीयान्तेभ्यः पृच्छत्यर्थे ठक्स्यादिति वार्तिकार्थः। सौखशायनिकः। ननु आदिवृद्धौ सौखशयनिक इत्येव स्यात्कथमुत्तरपदवृद्धिरत आह–अनुशतिरादिरिति। अनुशतकादिषु सुखशयनस्य पाठादुभयपदवृद्धिरित्यर्थः। ***परदारादिभ्यः** द्वितीयान्तेभ्यः गच्छत्यर्थे ठक्स्यात्। तदाहेति वार्तिकात्तच्छब्दस्यानुवृत्तिः। तस्य च द्वितीयान्तोऽर्थ इति कृत्वा द्वितीयान्तेभ्य इत्युच्यते। दाराशब्दस्य पुंबहुत्वात् परदारान्गच्छति पारदारिक इति। तल्पं नाम भार्या। गुरुतल्पं गच्छतीति गौरुतल्पिकः। गुरुभार्यासङ्गीत्यर्थः। ***तेनेति।** तृतीयान्तात् दीव्यति–खनति–जयति–जितम्। इत्यर्थचतुष्टये ठक्स्यादिति सूत्रार्थः। दिवु क्रीडादिषु। ***संस्कृतम्।** तेनेत्येव। ठगित्यधिकारः संस्कृतं भक्षा इति तु सप्तम्यन्तादणादिकम् । इह तु तृतीयान्तादिति भेदः। अत्र भक्षा इति न नियमः। ***कुलुत्थेति**। संस्कृतमिति। तेनेति च अनुवृत्तिः। तेन दीव्यति खनति जयति जितं संस्कृतमित्येकसूत्रे कृते कुलुत्थेति सूत्रे दीव्यत्यादीनामप्यनुवृत्तिस्स्यादिति संस्कृतमिति योगो विभक्तः। ***तरति**। तेनेत्येव। ठगधिकारः। तॄ–प्लवनतरणयोः उडुपेन तरति करणे तृतीया तरणक्रियायामुडुपस्य प्रकृष्टोपकारकत्वात्। उडुपो नौः। तृतीयान्तात्तरतीत्यर्थे ठगिति सूत्रार्थः। तृतीया चात्र करणे तृतीयैव। सामर्थ्यात्। ***ठञ्** ठकोऽपवादः । स्वरे विशेषः। गोपुच्छमवलम्ब्य नदीतरणस्य प्रसिद्धत्वात्। गोपुच्छेन तरतीति करणे तृतीया ***नौ** इति। नौशब्दात् द्व्यचश्च तृतीयान्तात्तरत्यर्थे ठन् स्यात्। ठकोऽपवादः। वृद्ध्यभावविडिको भेदः। बाहुका स्त्रियां ठकि ठञि वा कृते ङीप्स्यादिति ङीबभावोऽपि

१५५३। **तरति** ।४।४।५। उडुपेन तरति औडुपिकः॥ १५५४। **गोपुच्छाट्ठञ्** ।४।४।६। गौपुच्छिकः॥ १५५५। **नौ द्व्यचष्ठन्** ।४।४।७। नाविकः। घटिकः। बाहुभ्यां तरति बाहुका स्त्री॥ १५५६। **चरति** ।४।४।८। तृतीयान्ताद्गच्छति भक्षयतीत्यर्थयोष्ठक् स्यात्। हस्तिना चरति हास्तिकः। शाकटिकः। दध्ना भक्षयति दाधिकः॥ १५५७। **आकर्षात् ष्ठल्** ।४।४।९। आकर्षो निकषोपलः। आकषादिति पाठान्तरम्। तेन चरति आकर्षिकः। षित्वान्ङीष्। आकर्षिकी॥ १५५८। **पर्पादिभ्यः ष्ठन्** ।४।४।१०। पर्पेण चरति। पर्पिकः पर्पिकी। येन पीठेन पङ्गवश्चरन्ति स पर्पः। अश्विकः। रथिकः॥ १५५९। **श्वगणाट्ठञ्च** ।४।४।११। चात् ष्ठन्॥ १५६०। **श्वादेरिञि** ।७।३।८। ऐच् न। श्वभस्त्रस्यापत्यं श्वाभस्त्रिः। श्वादंष्ट्रिः। तदादिविधौ चेदमेव ज्ञापकम्॥ **इकारादाविति वाच्यम्**॥ श्वागणेन चरति श्वागणिकः। श्वागणिकी। श्वगणिकः। श्वगणिकी।

---

ठनः फलमिति दर्शयितुं बाहुकेत्युदाहृतम्। अदन्तत्वाट्टाप्। *चरति । चरगतिभक्षणयोरिति चरतेरुभयार्थकत्वादाह गच्छति भक्षयतीति ***आकर्षादिति***। ननु निकषोपलो न गतिसाधनं नापि भक्षणसाधनमिति कथं ततः प्रत्ययः असामर्थ्यादिति चेदुच्यते। आकर्षेणेति हेतौ तृतीया अध्ययनेन वसतीत्यादिवत्फलमपीह हेतुः। आकर्षफलाय गच्छतीत्यर्थः। ***पर्पः***। स्त्रियान्तु षित्त्वाद् ङीषि पर्पी इत्यादि। ***श्वगणात्*** श्वगणेति शब्दात् तृतीयान्तात् चरत्यर्थे ठञ्। चकारात्पूर्वसूत्रादनुकृष्टः ष्ठन् च स्यादित्यर्थः। ***श्वादेरिञि***। श्वशब्दः आदिर्यस्य सः श्वादिः। श्वपूर्वपदक इत्यर्थः। तस्य इञि परतो नैजागमः। श्वाभस्त्रिः। अत इञ् ञित्वाद्वृद्धिः। तां बाधित्वा द्वारादीनाञ्चेत्यैजागमः वृद्ध्यपवादस्य ऐजागमस्य श्वादेरित्यनेन निषेधे सति पुनरुत्सर्गस्य वृद्धेः प्रवृत्तिः । अपवादेन मुक्ते पुनरुत्सर्गः प्रवर्तते इति न्यायात्। ननु द्वारादिषु श्वन्शब्द एव पठ्यते न तु श्वभस्त्रीत्यादिः। श्वादिशब्द इति। द्वारादीनाञ्चेति श्वभस्त्रीत्यत्र ऐजागमप्रसक्तिरेव नास्तीति श्वादेरिञीति सूत्रमिदं व्यर्थमत आह–तदादिविधावित्यादि। द्वारादिषु तदादिविधेस्सत्त्वात्। श्वन्शब्दग्रहणेऽपि श्वादेरैजागमो लभ्यत एवेति तदादिविधिसत्त्वं प्रति इदमेव सूत्रं व्यर्थीभूय ज्ञापकमिति च भावः। ननु अप्रकृतस्तमिदं श्वादेरिञीति सूत्रस्यात्र कथनम्। श्वगणे ठञ् स्यादित्युक्त्वा श्वादेरिञि ऐच् नेति किन्तदुक्त्या, ठञि ऐजागमनिषेधस्य अभावादत आह–वार्तिकम्. इकारादाविति वाच्यमिति श्वादेरिकारादौ इति पठनीयम् सूत्रमिति भावः। एवम् ठस्य इकादेशे इकारादिरेवायमिति ऐजागमनिषेधप्रसङ्गः। श्वागणिकः। श्वगणेनेति सहार्थे

**१५६१। पदान्तस्यान्यतरस्याम्** ।७।३।९। श्वादेरङ्गस्य पदशब्दान्तस्यैज्वा। श्वापदस्येदं श्वापदम्। शौवापदम्॥ **१५६२। वेतनादिभ्यो जीवति** ।४।४।१२। वेतनेन जीवति वैतनिकः। धानुष्कः॥ **१५६३। वस्नक्रयविक्रयाट्ठन्** ।४।४।१३। वस्नेण मूल्येन जीवति वस्निकः। क्रयविक्रयग्रहणं संघातविगृहीतार्थम्। क्रयविक्रयिकः। क्रयिकः। विक्रयिकः॥ **१५६४। आयुधाच्छ च** ।४।४।१७। चाट्ठन्। आयुधेन जीवति आयुधीयः। आयुधिकः॥

---

तृतीया। ठञ इदमुदाहरणम्। स्त्रियान्तु ङीपि श्वागणिकी । ष्ठनि तु वृद्ध्यभावात् श्वगणिकः। षित्त्वात् ङीषि श्वगणिकी इति । ***पदान्तस्येति।** अत्र श्वादेरित्यनुवर्तते। अङ्गस्येत्यधिकारः। इञीति तु नानुवर्तते। शौवापदम्। श्वपद अण्। वकारस्य अपदान्तत्वेऽपि द्वारादिषु श्वन्शब्दपाठादैजागमः वकारस्यान्तरतमः औकारः वात्पूर्व भवति। श् व् अ पद औ इत्यागमः। श् औव् अ पद शौवपद। शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्य इति दीर्घः। शौवापदम्। यद्वा-शुनः पदमिति षष्ठीसमासे शुनः इव पादौ यस्य स इति बहुव्रीहौ वा दीर्घः। श्वापदः। तस्येदमित्यणि श्वापदम्। शौवापदमिति च श्वपदस्येदमिति मूले पाठस्तु प्रामादिकः। श्वपदस्येत्यत्र दीर्घाभावस्य अन्याय्यत्वादिति।***वेतनादिभ्यस्तृतीयान्तेभ्यः** जीवत्यर्थे ठक्स्यात्। वेतनं भृतिः। (आंध्रे कूलि) धनुषा जीवति धानुष्कः। जीवनक्रियायां प्रकृष्टोपकारकत्वात्करणे तृतीया। ***सङ्घातविगृहीतार्थम्।** सङ्घातः क्रयविक्रयेति समस्तम्पदम् विगृहीतः क्रयविक्रय इति व्यस्ते पदे समस्ताद्व्यस्तादपि ठनर्थमित्यर्थः । क्रयविक्रयाभ्यां जीवति क्रयविक्रयिकः। डुक्रीञ् द्रव्यविनिमये इति धातुः। द्रव्यविनिमयस्य आत्मसात्करणपरसात्करणाभ्यां भेदात्क्रयविक्रययोर्भेदः। द्रव्यस्य आत्मसात्करणरूपो विनिमयः क्रयः। परसात्करणरूपो विनिमयः विक्रय इति विवेकः। ***आयुधादित्यत्र** स्वरूपग्रहणम्। तस्माज्जीवत्यर्थे छ प्रत्ययः। चात् ठन्। छस्येयादेशे यस्येति लोपे आयुधीयः। ***हरति** हृञ्हरणे हरणमुपादानम् नयनं वा। ***भस्त्रादिभस्त्रा**-भरट-भरण शीर्षभार-शीर्षे भार। अंसभार। अंसेभार-भस्त्रादिः। शिरसि भारश्शीर्षभारः। शिरसश्शीर्षादेशो निपातनात्। तत्पुरुषे कृति बहुलमिति वा अलुक्। शीर्षे भारः। एवमंसभारः। अंसेभारः। तेन हरति शीर्षभारिकः शीर्षेभारिक इत्यादि। विभाषेति। ष्ठन् स्याद्वेत्यर्थः। अप्राप्तविभाषेयम्। एकदेशविकृतमनन्यवद्भवतीति परिभाषया विवधात् वीवधशब्दः एकदेशे-इकारस्थानिकदीर्घांशे एव विकृतः। भिन्न इति। वीवधादपि ष्ठन् स्यादिति भावः। ***कर्माठः।** नाडिन्धमः। तदुपकरणभूतं लोहं लोहमयं

**१५६५ हरत्युत्सङ्गादिभ्यः** ।४।४।१५। उत्सङ्गेन हरत्यौत्सङ्गिकः॥ **१५६६। भस्त्रादिभ्यः ष्ठन्** ।४।४।१६। भस्त्रया हरति भस्त्रिकः। पित्वान्ङीष्। भस्त्रिकी॥ **१५६७। विभाषा विवधात्** ।४।४।१७। विवधेन हरति विवधिकः। पक्षे ठक्। वैवधिकः। एकदेशविकृतस्यानन्यत्वाद्वीवधादपि ष्ठन्। वीवधिकः। वीवधिकी। विवधवीवधशब्दौ उभयतो बद्धशिक्ये स्कन्धवाह्ये काष्ठे वर्तेते। **१५६८। अण् कुटिलिकायाः** ।४।४।१८। कुटिलिका व्याधानां गतिविशेषः कर्मारोपकरणभूतं लोहं च। कुटिलिकया हरति मृगानङ्गारान्वा कौटिलिको व्याधः कर्मारश्च॥ **१५६९। निर्वृत्तेऽक्षद्यूतादिभ्यः** ।४।४।१९। अक्षद्यूतेन निर्वृत्तमाक्षद्यूतिकं वैरम्॥ **१५७०। त्रेर्मम्नित्यम्** ।४।४।२०। त्रिप्रत्ययान्तप्रकृतिकात्तृतीयान्तान्निर्वृत्तेऽर्थे मप्स्यान्नित्यम्। कृत्या निर्वृत्तं कृत्रिमम्। पक्त्रिमम्॥ **भावप्रत्ययान्तादिमब्वक्तव्यः**॥ पाकेन निर्वृत्तं पाकिमम्। त्यागिमम्॥

---

वस्तु इत्यर्थः। (आंध्रे कारु) ***निर्वृत्ते** इति। अक्षद्यूतादिभ्यस्तृतीयान्तेभ्यो निर्वृत्तार्थे अण्स्यात्। निर्वृत्तं निर्मितं कृतमिति यावत्। ***त्रेः**–मम्–नित्यम्। इति छेदः। यरोऽनुनासिके इति पकारस्य सूत्रे मकारः। त्रिरिति प्रत्ययः। प्रत्ययग्रहणे तदन्तविधिः तेनेत्यधिकारः। निर्वृत्ते इत्यनुवर्तते। त्रप्रत्ययान्तात्तृतीयान्तान्निर्वृत्ते मम् नित्यं स्यादित्यर्थः। त्र्यन्तत्वं तृतीयान्तत्वञ्च एकत्र न घटते इति त्र्यन्तप्रकृतिकात्तृतीयान्तादित्युक्तं मूले। त्र्यन्तं प्रकृतिर्यस्य तस्मादिति समासः। त्र्यन्ताद्विहिता या तृतीया तदन्तादिति यावत्। यथा डुकृञ् करणे इति कृञः ड्वित्वात् ड्वितः क्त्रिः। अयं प्रत्ययः। भावार्थे एव। सिद्धावस्थापन्नो धात्वर्थो भावः। एवं कृञो भावे क्त्रिः। ककार इत्। त्रि इति शिष्यते। कृत्रिनिर्वृत्तार्थे मपि कृत्रिमम्। क्रिययानिर्वृत्तमिति विग्रहः। कृत्या निर्वृत्तमिति वा। कृञः क्तिन्प्रत्यये कृते कृतिरिति भवति। कृतिः क्रिया। कृत्र्या निर्वृत्तमिति तु न विग्रहः। नित्यग्रहणात्। नित्यसमासेषु यथा अस्वपदविग्रहः तथा अत्रापीति। अपि च मपं विना त्र्यन्तस्य क्वापि न प्रयोग इति कृत्रिरिति शब्द एवासाधुः। वक्ष्यति च ड्वितः क्त्रिरिति सूत्रव्याख्यानावसरे मूले एव नित्यग्रहणात् क्त्रेर्मब्विषयः। अत एव क्त्रयन्तेन न विग्रह इति। मप्सन्नियोगशिष्ट एवायं क्त्रिरिति मबभावे न क्त्रिरिति तदाशयः। सन्नियोगशिष्टत्वद्योतनाय चकाराभावेऽपि नित्यग्रहणमेव द्योतयतीति बोध्यम्। अत्रेदं तत्त्वम्। समर्थानां प्रथमाद्वेति पदत्रयस्य तद्धितेष्वधिक्रियमाणत्वेन तद्धितानां वैकल्पिकत्वं तावत्सिद्धम्। तद्धिताभावपक्षे समासः। तत्रापि विभाषाधिकारेण समासानामपि

**१५७१। अपमित्ययाचिताभ्यां कक्कनौ** ।४।४।२१। अपमित्येति ल्यबन्तम्। अपमित्य निर्वृत्तं आपमित्यकम्। याचितेन निर्वृत्तं याचितकम्॥ **१५७२। संसृष्टे** ।४।४।२२। दध्नो संसृष्टं दाधिकम्॥ **१५७३। चूर्णादिनिः** ।

---

वैकल्पिकत्वात्। समासाभावपक्षे वाक्यम् इति। यथा कुटिलिकया हरतीति वाक्यम्। कुटिलिकाहर इति समासः। कौटिलिक इति तद्धितः। क्त्रेर्मम्नित्यमिति नित्यग्रहणेन विकल्पस्य बाधितत्वात् कृत्रिममित्येव भवति, न तु समासः नापि वाक्यमिति। कृत्त्र्या निर्वृत्तमिति वाक्यं कदापि न स्यात्। एवं कृत्त्र्या निर्वृत्तमिति वाक्यस्य प्रयोगानर्हत्वे (अपरिनिष्ठितत्वादिति भावः) तदवयवभूतं कृत्र्या इति पदमपि प्रयोगानर्हमेवेति। कृत्रिरिति शब्दोऽसाधुः (अपरिनिष्ठितत्वादिति भावः) इति मप्सन्नियोगेनैव त्र्यन्तस्य प्रयोग इति फलितमिति भावः। कृत्त्र्या निर्वृत्तमिति मूले पाठस्तु प्रामादिकः। कृत्या निर्वृत्तमिति पठितव्यम्। ***भावे** विहितः यः प्रत्ययः घञादिः तदन्तात्तृतीयान्तान्निर्वृत्तार्थे इमप् इति प्रत्ययस्स्यादिति वार्तिकार्थः। पचतेर्घञि पाकः। भावप्रत्ययान्तोऽयम्। भावे घञो विधानात्। पाक–इम–यस्येति लोपः पाकिमम्। एवं त्यजतेर्घञि त्यागः। ततः इमपि त्यागिमम्। नन्वनेन वार्तिकेणैव कृत्रिममित्यादिसिद्धे सूत्रं व्यर्थम्। तथा हि कृञो भावे क्त्रिः। भावप्रत्ययान्तः कृत्रीति तत इमपि यस्येति लोपे कृत्रिमम्। इति शङ्कायां तत्त्वबोधिनी प्रवृत्ता तथाहीत्यादिना। तत्तु तत्रैव द्रष्टव्यम्। ***अपमित्य–**मेङ्प्रणिदाने प्रणिदानं विनिमयः प्रत्यर्पणञ्च। इति अपमित्य विनिमय्य प्रत्यर्पयित्वा इति वार्थः। अपमित्येत्यत्र तेनेति नान्वेति। अव्ययानामुत्सर्गतः प्रथमायां वर्तमानत्वात्। अपमित्यशब्दात् तृतीयान्ताद्याचिताच्च निर्वृत्तार्थे यथासङ्ख्यं कक्–कन् इत्येतौ प्रत्ययौ स्त इत्यर्थः। कित्त्वाद्वृद्धिः आपमित्यकम्। ***संसृष्टेऽर्थे**। तृतीयान्तात् ठक् ***चूर्णादिनिः** । संसृष्टे इत्येव। ठकोऽपवादः। इनाविकार उच्चारणार्थः इन् इति शिष्यते। जसि चूर्णिनः। लवणात्संसृष्टप्रत्ययस्य लुगित्यर्थः। ***मुद्गादण्** संसृष्टे ठकोऽपवादोऽयमण्। मुद्गैस्संसृष्टः मौद्गः। ***व्यञ्जनैरिति** पञ्चम्यर्थे तृतीया। लाघवात्तृतीयान्तप्रयोगः। तृतीयान्तार्थग्रहणद्योतनाय वा। अस्मिंस्तु पक्षे तेनेति नानुवर्तनीयम्। उपसिक्तं नाम आर्द्रीकृतम्। अतएव संसृष्टात्पृथङ्निर्देशः। व्यञ्जनैः किम्। जलेनोपसिक्तं वस्त्रम्। ***वर्तते** इत्यर्थे तृतीयान्तात् ओज आदेष्ठक् स्यात् ओजस्सहोम्भभस्तमसस्तृतीयायामिति तद्धिताभावपक्षे अलुक्। ओजसा वर्तते इति समस्तं पदम्। ओजसेत्यादौ हेतौ तृतीया। वृत्तिर्जीवनमत्र विवक्षितम्। तेन अम्भसा वर्तते जीवतीति आम्भसिकः। एवञ्चोरादीनामपि

४।४।२३। चूर्णैः संसृष्टाश्चूर्णिनोऽपूपाः॥ **१५७४। लवणाल्लुक्** ।४।४।२४। लवणेन संसृष्टो लवणः सूपः। लवणं शाकम्॥ **१५७५। मुद्गादण्** ।४।४।२५। मौद्ग ओदनः॥ **१५७६। व्यञ्जनैरुपसिक्ते** ।४।४।२६। ठक्। दध्ना उपसिक्तं दाधिकम्॥ **१५७७। ओजःसहोऽम्भसा वर्तते** ।४।४।२७। ओजसा वर्तते औजसिकः शूरः। साहसिकश्चौरः। आम्भसिको मत्स्यः॥ **१५७८। तत्प्रत्यनुपूर्वमीपलोमकूलम्** ।४।४।२८। द्वितीयान्तादस्माद्वर्तत इत्यस्मिन्नर्थे ठक् स्यात्। क्रियाविशेषणत्वात् द्वितीया। प्रतीपं वर्तते प्रातीपिकः। आन्वीपिकः। प्रातिलोमिकः। आनुलोमिकः। प्रातिकूलिकः। आनुकूलिकः॥ **१५७९। परिमुखं च** ।४।४।२९। परिमुखं वर्तते पारिमुखिकः। चात्पारिपार्श्विकः॥

---

साहसादिना जीवनमिति बोध्यम्। न चैवं जीवतीत्येव सूत्रे वक्तव्यमिति वाच्यम्। उत्तरसूत्रे अनुवृत्तस्य वर्तते इत्यस्य स्थितिमात्रविवक्षातः। ***तत्प्रतीति**। तेनेति निवृत्तम्। तदित्यस्य ग्रहणात्। तदिति तृतीयान्तम्। पञ्चम्या अलुक्। तस्यापत्यमित्यादाविव द्वितीयान्तादित्यर्थः। प्रतिश्च–अनुश्च प्रत्यनू तयोरन्यतरत् पूर्वं यस्य तत्प्रत्यनुपूर्वम्। प्रतिपूर्वमनुपूर्वञ्चेत्यर्थः। ईपलोमकूलमिति समाहारद्वन्द्वः। पतिपूर्वमनुपूर्वञ्च यदीपलोपमकूलम्। तस्मादिति पञ्चम्यां विषये सौत्वं द्वितीयान्तत्वम्। द्वितीयान्तात्प्रत्यनुपूर्वदीपलोपकूलादित्यर्थः। प्रतिपूर्वाद्दीपात् प्रतिपूर्वाल्लोमात् प्रतिपूर्वात्कूलात्। एवं अनुपूर्वाद्दीपात् अनुपूर्वाल्लोमात् अनुपूर्वात्कूलाच्चेति यावत्। वर्तते इत्यस्मिन्नर्थे ठक्। अच् प्रत्यनुपूर्वात्सामलोम्न इति प्रतिलोमन् अनुलोमन् इति शब्दाभ्यां समासान्तः अच्प्रत्ययः । नस्तद्धित इति टिलोपः। प्रतिलोमम्। अनुलोमम्। प्रतिकूलिकः । एवमानुकूलिक इत्यपि बोध्यम्। ***परिमुखम्।** इत्यस्मादव्ययात् वर्तते इत्यर्थे ठक्। चात्परिपाश्र्वमित्यव्ययादपि ठक्। (चकारस्यान्यतो विधानार्थकत्वादत्रेति भावः)

***द्विगुणार्थं** द्रव्यं द्विगुणम्। गुणः आवृत्तिः। द्वयोर्गुणयोस्समाहारः द्विगुणम्। समाहारे द्विगुः । द्विगुरेकवचनम् स नपुंसकम् इति। द्विगुणायेदं द्विगुणार्थम्। अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यमिति वार्तिकान्नित्यसमासः। चतुर्थीतत्पुरुषः। द्विगुणायेति तादर्थ्ये चतुर्थी। द्विगुणार्थे द्विगुणशब्दप्रयोग औपचारिकः। द्वैगुणिकः। स्वदत्ताद्द्विगुणं धनमादातुं यो ददाति स द्वैगुणिक इत्युच्यते। उत्तमर्णो हि शतपरिमितमृणमधमर्णाय दत्वा पुनरधमर्णाद्द्विशतमादत्ते। शतमूलं शतं वृद्धिरिति अत एवेदमृणं गर्ह्यम् दत्तस्य पुरादानमेवायुक्तमिति ततोऽपि द्विगुणादाने गर्ह्यत्वंप्रति न विवदितव्यम्। गर्ह्यं किम्। गृहीतादद्द्विगुणं द्रव्यं पुनर्ददात्यधमर्णमुत्तमर्णाय। अत्र द्विगुणं प्रयच्छति द्वैगुणिक इति

**१५८०। प्रयच्छति गर्ह्यम्** ।४।४।३०। द्विगुणार्थं द्विगुणं तत्प्रयच्छति द्वैगुणिकः। त्रैगुणिकः॥ वृद्धेर्वृधुषिभावो वक्तव्यः॥ वार्धुषिकः॥ **१५८१। कुसीददशैकादशात् ष्ठन्ष्ठचौ** ।४।४।३१। गर्ह्यार्थाभ्यामाभ्यामेतौ स्तः प्रयच्छतीत्यर्थे। कुसीदं वृद्धिस्तदर्थं द्रव्यं कुसीदं तत्प्रयच्छति कुसीदिकः । कुसीदिकी। एकादशार्थत्वादेकादश ते च ते वस्तुतो दश चेति विग्रहेऽकारः समासान्त इहैव सूत्रे निपात्यते। दशैकादशिकः। दशैकादशिकी। दशैकादशान्प्रयच्छतीत्युत्तमर्ण एवेहापि तद्धितार्थः॥

---

माभूत्। शतं प्रयच्छत्युत्तमर्णश्शतिक इति न भवति। शतशब्दाद्गर्ह्यत्वाप्रतीतेः। न हि द्रव्यस्य स्वतो गर्ह्यत्वमिति वृद्धेरिति गर्ह्याद्वृद्धेः प्रयच्छत्यर्थे ठक्स्यात् * **वृद्धेर्वृधुष्यादेशश्च** इति वार्तिकार्थः। वृद्धेर्गर्ह्यत्वाय वृद्ध्यर्थम् द्रव्यं वृद्धिरिति व्युत्पत्तिर्वक्तव्या । वृद्ध्युद्देश्यकदानक्रियाकर्मभूतत्वेन द्रव्यस्य गर्ह्यत्वम्। गर्ह्यात् किम्। वृद्धिं प्रयच्छत्यधमर्ण उत्तमर्णाय। अत्र वार्धुषिक इति माभूत् ***कुसीदेति।** यथासंख्यं ष्ठन्ष्ठचौ स्तः। ठकोऽपवादः। प्रयच्छति गर्ह्यमित्यत्रानुवर्तते। षोडीषर्थः। कुसीदकी। दशैकादशः। एकादशार्थं दीयमानं दशपरिमितं द्रव्यं दशैकादशेत्युच्यते। अलौकिकविग्रहे। एकादशन् जस् दशन्। जस् इति स्थिते सुब्लुक् संख्याया अल्पीयस्या इति पूर्वनिपातः। दशन् एकादशन् नलोपः प्रातिपदिकान्तस्येति दशनो नलोपः (उत्तरपदत्वे चापदादि विधाविति एकादेशन् शब्दे एव पदत्वधिप्रतिषेध इति) वृद्धिरेचि। दशैकादशन् समासस्य प्रातिपदिकत्वात्सुबुत्पत्तिः। ष्णान्तत्षडिति षड्भ्यो लुगिति जश्शसोर्लुक्। नलोपः प्रातिपदिकान्तस्येति नलोपः। दशैकादश इति विशेषणसमासः। तान् दशैकादशप्रयच्छतीति दशैकादशिकः इति रूपसिद्धौ सत्यां विग्रहे दशैकादशान् प्रयच्छतीति प्रयोगसिद्ध्यर्थमाह–समासान्तोकार इति। दशैकादशन् इत्यस्मादप्रत्ययः दशैकादशन्–अ–नस्तद्धित इति टिलोपः। दशैकादश। ततो जश्शसोर्न लुक्। ष्णान्तत्वाभावात्। (अप्रत्यये सति अदन्तत्वादिति भावः) सवर्णदीर्घः। तस्माच्छसो नः पुम्सि, दशैकादशान्–प्रयच्छतौ ष्ठच्–ठस्येकादेशः। अवयवस्य शसो लुक्। दशैकादश इक यस्येति लोपः। दशैकादशिकः इति। ननु विग्रहवाक्येऽपि दशैकादशेत्येवास्तु किमनेन निपातनक्लेशेनेति चेन्मैवम्। सूत्रे कुसीद–सु–दशैकादशन् जस्–इति द्वन्द्वे सुब्लुकि कुसीददशैकादशन् ततस्समाहारस्यैकत्वेन ङसि कुसीदशैकादशनः इति प्रयोक्तव्ये कुसीददशैकादशादिति प्रयोगस्यासाङ्गत्यप्रसङ्गात् । कुसीददशैकादशन् आत् इति स्थिते पूर्वस्य भत्वेन

**१५८२। उञ्छति** ।४।४।३२। बदराण्युञ्छति बादरिकः॥ **१५८३। रक्षति** ।४।४।३३। समाजं रक्षति सामाजिकः॥ **१५८४। शब्ददर्दुरं करोति** ।४।४।३४। शब्दं करोति शाब्दिकः। दार्दुरिकः॥ **१५८५। पक्षिमत्स्यमृगान्हन्ति** ।४।४।३५॥ स्वरूपस्य (पर्यायाणां) विशेषाणां च ग्रहणम्॥ मत्स्यपर्यायेषु मीनस्यैव (भाष्येष्टिः)॥ पक्षिणो हन्ति पाक्षिकः। शाकुनिकः। मायूरिकः। मात्स्यिकः। मैनिकः। शाकुनिकः। मार्गिकः। हारिणिकः। सारङ्गिकः॥

---

पदत्वाभावान्न लोपो न स्यादिति भावः) तस्मात् सूत्रे समासान्तप्रत्ययस्य अकारस्य प्रयोगः कृत इति निपातनादकार इत्युक्तं मूले इति। ***उञ्छति।** तदित्येव। द्वितीयान्तादुञ्छत्यर्थे ठक्स्यात्। एवं रक्षति सूत्रेऽपि बोध्यम्। ***शब्ददर्दुरयोस्समाहारः** शब्ददर्दुरम्। द्वितीयान्ताच्छब्दाद्दर्दुरात्करोत्यर्थे ठक्। दर्दुरं करोति दार्दुरिकः। ***स्वरूपस्य।** पक्षिमत्स्यमृगशब्दानाम्। पर्यायाणाम्। पतंगशकुनिपतत्रिपत्त्यादयः पक्षिपर्यायाः। मीनवैसारिणादयः मत्स्यपर्यायाः। पशुचतुष्पादादयो मृगपर्यायाः न भवन्ति। आरण्यकानां पश्वादीनामेव मृगत्वव्यवहारात्। अतः स्वरूपपर्याययोर्मृग इत्येक एव। मृगे कुरंगवातायुहरिणाजिनयोनय इति हरिणवाची मृगशब्दो मृगपर्यायः। एवञ्च मृगान् हन्तीति व्युत्पत्तौ हरिणादीन् सर्वान्मृगानित्यर्थविवक्षायां मृगस्वरूपस्योदाहरणम्। हरिणानेवेत्यर्थविवक्षायां मृगपर्यायस्योदाहरणमिति मार्गिक इत्येवोभयत्राप्युदाहरणम्। यद्वा मृग इत्यनेन हरिणवाचिनो मृगशब्दस्यैव ग्रहणम्। एतेन कुरङ्गवाताय्वादयो मृगपर्यायाः कृष्णसाररुरुसारंगादयो मृगविशेषाः। मयूरहंसादयः पक्षिविशेषाः शकुलरोहितराजीवतिम्यादयो मत्स्यविशेषा इति बोध्यम्। स्वरूपपर्यायविशेषाणां त्रयाणां क्रमेण उदहरणत्रयं दर्शयति। पाक्षिक इत्यादि। मृगान् हरिणान्हन्तीति मार्गिकः इति मृगस्वरूपस्योदाहरणम्। हरिणान्हन्तीति हारिणिक इति मृगपर्यायस्योदाहरणम्। सारङ्गो हरिणजातिविशेषः। आरण्यकपशुषु अवान्तरजातिर्मृगः । न त्वारण्यकचतुष्पाज्जातिरिति द्वितीयव्याख्यानस्य फलितम्। आरण्यकचतुष्पाज्जातिर्मृग इति प्रथमव्याख्यानस्य। संप्रदायानुसारेण उभययोर्मध्ये यद्ग्राह्यं तद्ग्राह्यम् ***परिपन्थञ्च** चकारेण पूर्वसूत्रोक्तो हन्तिरनुकृष्यते। परिपन्थं तिष्ठति पारिपन्थिकः। पन्थानं व्याप्य वर्जयित्वा वा परिपन्थम्। अव्ययीभावोऽयम्। ***माथ** इत्यस्यार्थमाह मन्था इति। वैशाखमन्थ मन्थान मन्थानो मन्थदण्डके इत्यमरः। मन्थ विलोडने इति धातोर्मन्थमन्थानादयः। मथेति विलोडने इति धातोर्माथशब्दः निष्पन्नः। मथनसाधनमित्यर्थः। मथनोपकरणं यद्यपि दण्डाकारम् तथापि स्वरूपप्रदर्शनपरस्पष्टार्थो दण्डशब्दप्रयोगः दण्डमाथ इति । मन्थदण्ड इतिवत् माथोत्तरपद-पदवी-अनुपद-एतेषां

**१५८६। परिपन्थं च तिष्ठति** ।४।४।३६। अस्माद्द्वितीयान्तात्तिष्ठति हन्ति चेत्यर्थे ठक् स्यात्। पन्थानं वर्जयित्वा व्याप्य वा तिष्ठति पारिपन्थिकश्चौरः। परिपन्थं हन्ति पारिपन्थिकः॥ **१५८७। माथोत्तरपदपदव्यनुपदं धावति** ।४।४।३७। दण्डाकारो माथः पन्थाः दण्डमाथः। दण्डमाथं धावति दाण्डमाथिकः। पादविकः। आनुपदिकः॥ **१५८८। आक्रन्दाट्ठञ्च** ।४।४।३८। अस्माट्ठञ् स्याच्चाट्ठक् धावतीत्यर्थे। आक्रन्दं दुःखिनां रोदनस्थानं धावति आक्रन्दिकः॥ **१५८९। पदोत्तरपदं गृह्णाति** ।४।४।३९। पूर्वपदं गृह्णाति पौर्वपदिकः। औत्तरपदिकः॥ **१५९०। प्रतिकण्ठार्थललामं च** ।४।४।४०। एभ्यो गृह्णात्यर्थे ठक् स्यात्। प्रतिकण्ठं गृह्णाति प्रातिकण्ठिकः। आर्थिकः। लालामिकः॥ **१५९१। धर्मं चरति** ।४।४।४१। धार्मिकः॥ **अधर्माच्चेति वक्तव्यम्**॥ अधार्मिकः॥ **१५९२। प्रतिपथमेति ठंश्च** ।४।४।४२। प्रतिपथमेति प्रातिपथिकः॥

---

समाहारस्सूत्रे। माथेति पथमुत्तरपदं यत्र स माथोत्तरपदशब्दः एभ्यस्त्रिभ्यो द्वितीयान्तेभ्यः धावत्यर्थे ठक्स्यादिति सूत्रार्थः। अनुपदमित्यव्ययीभावत्वेनाव्ययम्। असंभवात्तत्र प्रथमान्तादेव प्रत्ययः। अनुपदं धावति आनुपदिकः। पदान्यनतिक्रम्य अनुसृत्य वा अनुपदम्। ***आक्रन्दनिकः।** आक्रन्दं प्रति यो धावति स एव मुच्यते। धावति शीघ्रं गच्छतीत्यर्थः। ***द्वितीयान्तात्पदोत्तरपदाद्गृह्णात्यर्थे** ठक्। पदोत्तरपदप्रतिकण्ठार्थललामं गृह्णातीत्येकसूत्रं सुकरम्। ***अधर्माच्चेति।** धर्माधर्मञ्चरतीति सूत्रयितव्यमित्यर्थः। द्वितीयान्ताद्धर्माधर्माच्च चरत्यर्थे ठक्। ***प्रतिपथमेति** तदित्यनुवर्तते। ठकोऽधिकारः। द्वितीयान्तात्प्रतिपथादीत्यर्थे ठक्। इण् गतौ। ***समवायानिति** समवायशब्दोऽत्र न स्वरूपपरः किन्त्वर्थपरः। तेन समवायात्। पर्यायोभ्यश्च द्वितीयान्तेभ्यस्समवैत्यर्थे ठक्स्यादित्यर्थः। समवायं समवैतीति सामवायिकः। समवायसमूहसंघसमाजादयः पर्यायाः। यस्समवाये प्रविश्य तदेकदेशी भवति स सामवायिक इत्युच्यते। समवायैकदेशभूत इत्यर्थः। एवं सामूहिकादीनामप्ययमेवार्थः। सामुदायिकः। सांघिकः। सामाजिकः इत्यादीन्यूह्यानि। ***परिषद** इति। परिषच्छब्दस्य समवायपर्यायत्वेन समवायान् समवैतीत्यनेन ठकि प्राप्ते तदपवादोऽयं ण्यः। ***सेनाया वा।** अप्राप्तविभाषेयम्। पूर्वसूत्रात् ण्योऽनुवर्तते। समवैतीति च समवैत्यर्थे सेनायाण्यस्स्याद्वा। अपवादेन ण्येन मुक्ते उत्सर्गः ठक्प्रवर्तते इति मत्वा आह।

**१५९३। समवायान्समवैति** ।४।४।४३। सामवायिकः। सामूहिकः॥ **१५९४। परिषदो ण्यः** ।४।४।४४। परिषदं समवैति पारिषद्यः॥ **१५९५। सेनाया वा** ।४।४।४५। ण्यः स्यात्पक्षे ठक्। सैन्याः। सैनिकाः॥ **१५९६। संज्ञायां ललाटकुक्कुट्यौ पश्यति** ।४।४।४६। ललाटं पश्यति लालाटिकः सेवकः। कुक्कुटीशब्देन तत्पातार्हः स्वल्पदेशो लक्ष्यते॥ कौक्कुटिको भिक्षुः॥ **१५९७। तस्य धर्म्यम्** ।४।४।४७। आपणस्य धर्म्यमापणिकम्॥ **१५९८। अण् महिष्यादिभ्यः** ।४।४।४८। महिष्या धर्म्यं माहिषम्। याजमानम्॥ **१५९९। ऋतोऽञ्** ।४।४।४९। यातुर्धर्म्यं यात्रम्॥ **नराच्चेति वक्तव्यम्**॥ नरस्य धर्म्या नारी॥ **विशसितुरिड्लोपश्चाञ्च वक्तव्यः**॥

---

पक्षे ठगिति। ***संज्ञायां** किम्। प्रेयस्या ललाटं पश्यति कामी। अत्र माभूत्। लालाटिककौक्कुटिकशब्दौ योगरूढ्या सेवकसन्यासिनावभिदधाति इति संज्ञाभूताविमौ शब्दौ। ***तस्येति।** तदिति निवृत्तम्। षष्ठ्यन्ताद्धर्म्यार्थे ठक्। तदस्य पण्यमिति सूत्रपर्यन्तम्। तस्येत्यस्यानुवृत्तिः। ***महिषी**–प्रजापतिप्रजावती इत्यादिर्महिष्यादिगणः। महिषी अण् यस्येति लोपः। आदिवृद्धिः माहिषम्। महिषी राजभार्या। प्रजापतेर्धर्म्यं प्राजापतम्। ***ऋतोऽञ्।** ऋदन्तस्य धर्म्ये अञ् स्यात्। ठकोऽपवादः। यातेति ऋदन्तश्शब्दः। यातृ–ङस्–अञ्–सुब्लुक्–इको यणचि यात्रम्। नृशब्दस्य षष्ठी–नरः। नरो धर्म्या नारी। नृ अञ्। ञित्त्वाद्वृद्धिः नार, अञन्तत्वात् ङीप्–नारी। एवं नृप्रकृतेर्नारीरूपसिद्धौ अपि नरप्रकृतेस्तत्सिद्ध्यर्थं वार्तिकम्। नराच्चेति। अदन्तत्वेन अप्राप्तावयमारम्भः। नराद्धर्म्ये अञ् वक्तव्य इति वार्तिकार्थः। नर–अ। वृद्धिः यस्येति लोपः ङीप् नारी ***विशसितुरिति।** विशसितृशब्दोऽयम्। ऋतोऽञि त्यञि प्राप्ते इड्लोपार्थमिदं वार्तिकम्। सन्नियोगशिष्टत्वमिड्लोपाञोर्ज्ञापयितुं चकारः। विशसितुरिड्लोपश्चेत्येवालम् । विपूर्वकाच्छस् धातोः हिंसार्थकात् तृनि तृचि वा कृते आर्धधातुकस्येड्वलादेरितीडागमः। विशसित्व अञ् इटो लोपः । विशस्तृ अ वृद्धिः यणादेशः वैशस्त्रम्। ***वैभाजित्रम्।** विपूर्वकाद्भजसेवायामिति धातोः हेतुमण्णिचि विभाजयति। तृनि तृचि वा कृते विभाजयिता। वि–भज्–णि–तृ–इडागमः। विभज्–इ–इ–तृ। णित्त्वाद्वृद्धिः।विभाजि–इ–तृ–सार्वधातृकार्धधातुकयोरिति आर्धधातुकेणिन–मित्तो गुणः। अयादेशः। विभाजयितृ अञ्। विभाज् इ इ–तृ–अ इति स्थिते णिलोपः। विभाज् इतृ–अ, विभाजित्र–वृद्धिः वैभाजित्रम्। ननु अत्रापि इड्लोप एव कर्तव्यः। यथोक्तरूपसिद्धेः।

विशसितुर्धर्म्यं वैशस्त्रम्॥ **विभाजयितुर्णिलोपश्चाञ्च वाच्यः**॥ विभाजयितुर्धर्म्यं वैभाजित्रम्॥ **१६००। अवक्रयः** ।४।४।५०। षष्ठ्यन्ताट्ठक् स्यादवक्रयेऽर्थे। आपणस्यावक्रय आपणिकः। राजग्राह्यं द्रव्यमवक्रयः॥ **१६०१। तदस्य पण्यम्** । ४।४।५१। अपूपाः पण्यमस्य आपूपिकः॥ **१६०२। लवणाट्ठञ्** ।४।४।५२। लावणिकः॥ **१६०३। किसरादिभ्यः ष्ठन्** ।४।४।५३। किसरं पण्यमस्य किसरिकः। षित्वान्ङीष्। किसरिकी। किसर, उशीर, नलद, इत्यादि। किसरादयः सर्वे सुगन्धिद्रव्यविशेषवाचिनः॥ **१६०४। शलालुनोऽन्यतरस्याम्** ।४।४।५४। ष्ठन्स्यात् पक्षे ठक्। शलालुकः। शलालुकी। शालालुकः। शालालुकी। शलालुः सुगन्धिद्रव्यविशेषः॥ **१६०५ शिल्पम्** ।४।४।५५। मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः॥

---

विशसितृविभाजयित्रोरिड्लोपश्चेति वचने लाघवादिति चेन्मैवम्। इड्लोपे विभाजितृ--अ इति स्थिते त्रोरार्धधातुकत्वेन सार्वधातुकार्धधातुकयोरितीगन्ताङ्गस्य गुणे कृते वैभाजेत्रमिति स्यादिति। (ण्यन्तस्याङ्गत्वेन विभाजि-इतीगन्ताङ्गम्) णिलोपे तु इडागमः। तृ इत्यस्येति। इतृ इति प्रत्ययः। विभाज् इत्यङ्गमिति। अनिगन्ताङ्गत्वान्न गुण इति बोध्यम्। उपसर्गेण धात्वर्थो बलादन्यत्र नीयते, प्रहाराहारसंहारविहारपरिहारवदिति वचनात्। विभाजयिता नाम विभागकर्ता। सेवार्थकस्यापि भजधातोर्वीत्युपसर्गवशाद्विभागार्थकत्वमिति। ***अवक्रयः।*** कर इत्यर्थः (आंध्रे पन्नु) ***तदस्येति*** तस्येति निवृत्तम्। तदिति प्रथमान्तं पदम्। प्रथमान्तात्पण्योपाधिकादस्येत्यर्थे ठक्। पणव्यवहारे पण्यं व्यवहर्तव्यम् । व्यवहारश्चात्र क्रयविक्रयात्मकः। विक्रेयं पणितव्यञ्च पण्यमित्यमरानुसारेण पण्यं नाम विक्रेयं द्रव्यमेव, न तु क्रेयमपीति बोध्यम्। आपूपिको वणिक्। विक्रेयद्रव्यस्वामित्वाद्वणिजः (अस्येतिस्विस्वामिभावसंबन्धे शेषे षष्ठी) ***शिल्पम्*** तदस्मैदीयते इति सूत्रपर्यन्तं तदस्येत्यधिकारः। अनुवृत्तिर्वा। प्रथमान्ताच्छिल्पोपाधिकादस्येत्यर्थे ठक्। ***मड्डुकझर्झरौ*** वाद्यविशेषौ। शिल्पोपाधिकाभ्यां प्रथमान्ताभ्यामेताभ्यामस्येत्यर्थे अण् वा स्यात्। अणभावपक्षे औत्सर्गिकष्ठक्। ***धानुष्कः।*** उसन्तलक्षणः ठस्य कः। ***परश्वधादिति।*** तदस्य प्रहरणमित्यत्रानुवर्तन्ते। प्रहरणोपाधिकात्प्रथमान्तात्परश्वधादस्येत्यर्थे ठञ्, चात् ठक्। परश्वधः प्रहरणमस्य पारश्वधिकः। ठक्ठञोर्न रूपभेदः। ***शक्तियष्ट्योरिति।*** प्रहरणोपाधिकाभ्यां प्रथमान्ताभ्यां शक्तियष्टिभ्यामस्येत्यर्थे ईकक्प्रत्ययः। कित्त्वाद्वृद्धिः। शाक्तीकः। ***अस्तीति।*** प्रहरणमिति निवृत्तं तदस्येति त्वनुवर्तते। मत्युपाधिकेभ्यः प्रथामान्तेभ्यः। अस्ति-नास्ति-दिष्टम् इत्येतेभ्यः अस्येति षष्ठचन्तार्थे ठक्। अस्तिमतिरस्य

**१६०६। मड्डुकझर्झरादणन्यतरस्याम्** ।४।४।५६। मड्डुकवादनं शिल्पमस्य माड्डुकः। माड्डुकिकः। झार्झरः। झार्झरिकः॥ **१६०७। प्रहरणम्** ।४।४।५७। तदस्येत्येव। असिः प्रहरणमस्य आसिकः। धानुष्कः॥ **१६०८। परश्वधाट्ठञ् च** ।४।४।५८। पारश्वधिकः॥ **१६०९। शक्तियष्ट्योरीकक्** ।४।४।५९। शाक्तीकः। याष्टीकः॥ **१६१०। अस्ति नास्ति दिष्टं मतिः** ।४।४।६०। तदस्येत्येव। अस्ति परलोक इत्येवं मतिर्यस्य स आस्तिकः। नास्तीति मतिर्यस्य स नास्तिकः। दिष्टमिति मतिर्यस्य स दैष्टिकः॥ **१६११। शीलम्** ।४।४।६१। अपूपभक्षणं शीलमस्य आपूपिकः॥ **१६१२। छत्रादिभ्यो णः** ।४।४।६२। गुरोर्दोषाणामावरणं छत्रं तच्छीलमस्य छात्रः॥

---

नास्ति मतिरस्य-दिष्टम्मतिरस्य इति विग्रहत्रयम्। इति शब्दस्तु विग्रहे। मतिसामानाधिकरण्यमस्त्यादीनाम्मास्त्विति भावेन मूले प्रयुक्तः। सति तु सामानाधिकरण्ये मतिरस्यास्तीति मतिमान्। तदस्यास्त्यस्मिन्निति मतुप् स्यादिति बोध्यम्। ननु अस्त्यादिसमानाधिकरणं किमत्रेत्यत आह-अस्ति परलोक इति। एवं नास्ति परलोकः। दिष्टं संपद्विपत्प्रदम्। इति च ऊह्यम्। न च परलोक इत्येव कोऽयं नियमः. असिवृक्ष इति मतिरस्य इत्यर्थेऽपि आस्तिक इति स्यादिति वाच्यम्। योगरूढ्या आस्तिकादयश्शब्दाः परलोकास्तित्वादिरूपबुद्धिशालिन एवाभिदधते इति। अतएव नास्तिको बौद्धः । आस्तिकः वैदिकः इत्येवं व्यवहारस्सङ्गच्छते। ***शीलम्।** स्वभावः। अपूपशब्दस्तद्भक्षणे लाक्षणिकः । अपूपादीनां द्रव्यवाचकत्वेन स्वभावस्य गुणवाचकत्वेन च परस्परं सामानाधिकरण्यासम्भवेन शीलोपाधिकत्वमपूपस्य न सम्भवतीति लक्षणा इहाश्रयणीया। एवं अपूपः अपूपभक्षणं शीलमस्य आपूपिक इति सिद्धम्। प्रथमान्ताच्छीलोपाधिकादस्येत्यर्थे ठगिति सूत्रार्थः। ***छत्रादि।** छत्र-शिक्षा-प्ररोह-स्था-ऋभुक्षा-चुरा-इत्यादिश्छत्रादिगणः। अतापवारकस्य छत्रस्य शीलत्वासंभवात् छत्रशब्देनात्र गुरुदोषावरणं लक्ष्यते। आवरकत्वसाम्यात्। रूढ्या अभिधीयते इति वा। णेणत्वं वृद्ध्यर्थम्। अ इति शिष्यते। यस्येति लोपः छात्रः शिष्यः। चुरा शीलमस्य चौरः। चुरस्तेये, षिद्भिदादिभ्योऽङ् इति स्त्रियामङ्भि अदन्तत्वाट्टाप्। चुरास्तेयमित्यर्थः। ***कार्म** इति। तच्छीलं यस्य स तच्छीलः। तस्य भावस्ताच्छील्यम्। तस्मिन् ताच्छील्ये। तदस्य शीलमित्यर्थे इति यावत्। कर्मशीलत्वे इति वा। तत्पदेन कर्मणः प्रकृतस्य परामर्शात्। ननु कर्मन्शब्दस्य छत्रादित्वेन णप्रत्यये कृते, कर्मन् अ इति स्थिते, नस्तद्धित इति टिलोपः। वृद्धिः। कार्मिक इति भवत्येवेति। कार्म इति निपातनं व्यर्थमत आह-अण्कार्य ताच्छीलिकेणेऽपीति। अयं भावः। अन् इति

**१६१३। कार्मस्ताच्छील्ये** ।६।४।१७२। कार्म इति ताच्छील्ये णे टिलोपो निपात्यते। कर्मशीलः कार्मः। 'नस्तद्धिते ६७९' इत्येव सिद्धे अण्कार्यं ताच्छीलिके णेऽपि। तेन चौरी तापसीत्यादि सिद्धम्। ताच्छील्ये किम्। कार्मणः॥ **१६१४। कर्माध्ययने वृत्तम्** ।४।४।६३। प्रथमान्तात्षष्ठ्यर्थे ठक् स्यादध्ययने वृत्ता या क्रिया सा चेत्प्रथमान्तस्यार्थः। ऐकान्यिकः। यस्याध्ययने प्रवृत्तस्य परीक्षाकाले विपरीतोच्चारणरूपं स्खलितमेकं जातं सः॥

---

सूत्रेण नस्तद्धित इति टिलोपं बाधित्वा अणि प्रकृतिवद्भावो विहितः। ताच्छीलिकेऽणे अण्कार्यातिदेशेन णेपरतोऽपि अण्णिति प्रकृतिवद्भावे प्राप्ते टिलोपार्थमिदं निपाप्तनमिति तदस्य शीलमित्याह ताच्छीलिकः। तदाहेति ठक्। अणाश्रयं कार्यमण्कार्यम्। तेन अणाश्रयं कार्यं ताच्छीलिकेऽणेऽपि स्यादिति वचनेन इत्यर्थः। चौरी णान्तादपि स्त्रियामणन्तलक्षणो ङीप्। कर्मणि सक्तः कार्मणः शेषे इत्यण्। ताच्छील्ये इत्यनेनैव सामर्थ्यात् णस्य लाभः। कर्मन्शब्दात्ताच्छील्ये णस्यैव विहितत्वात् ताच्छील्यपदाभावे अण्यपि कार्म इति स्यादिति भावः। ***कर्माध्ययने** वृत्तम्। अध्ययने वृत्तं यत्कर्म तद्वाचकात्प्रथमान्तादस्येत्यर्थे ठक्। एकञ्च तदन्यच्च एकान्यत्। अन्यशब्दोऽत्र प्रदोषपरः। अध्ययनं वाग्व्यापारः। तत्र वृत्तं प्रवृत्तं जातमिति यावत्। कर्मक्रियाविपरीतोच्चारणात्मकं स्खलितम्। तच्चाध्ययने दोषः। अत एव अन्यशब्देन दोषाभिधायिना स्खलितमभिधीयते। एवं अध्ययने वृत्तम् कर्म प्रकृतेस्खलितम्। तद्वाचकं प्रथमान्तं पदमन्यदिति। एकान्यदिति च। (एकेत्यन्यविशेषणम्। एकत्वसंख्याविशिष्टस्य अध्ययने वृत्तकर्मणः वाचकं प्रथमान्तमेकान्यदिति) ततष्ठकि-एकान्य-इक-वृद्धिः यस्येति लोपः एकान्विकः। न च एकान्यत् ठक् तान्तलक्षणः क इति भ्रमितव्यम्। अन्यशब्दात्त्वमोरद्डादेशेन निष्पन्नोऽयमन्यदिति शब्दः; न तु तान्त इति। अलौकिक विग्रहे तु एक सु, अन्य सु-ठक् इति स्थिते, अद्डादेशात् प्रागेव सुब्लुक्, एकान्य ठक् इति। अद्डादेशे कृतेऽपि सुब्लुकौ अ द् ड् लुप्यते एवेति नाद्डादेशः कार्यः। ***बह्वजिति**। अत्र तदस्य-कर्माध्ययने वृत्तमित्यनुवर्तन्ते। अध्ययनवृत्तकर्मवाचकात् प्रथमान्तात् बह्वच्पूर्वपदादस्येत्यर्थे ठञ्। ठकोऽपवादः। बहवोऽचः यत्र तद्बह्वच्। अनेकाच्कमित्यर्थः। तादृशं पदं पूर्वपदं यस्य तद्बह्वच्पूर्वपदम्। पूर्वपदशब्दस्समानपूर्वावयवे रूढः। यथा द्वादशान्यान्यस्य द्वादशाह्निकः। द्वादशान्येति समस्तपदे द्वादशेति पूर्वपदं बह्वच्कम्। मूले विग्रहवाक्ये कर्माण्यध्ययने वृत्तानीति प्रविष्टम्।

**१६१५। बह्वच्पूर्वपदाट्ठञ्** ।४।४।६४। प्राग्विषये। द्वादशान्यानि कर्माण्यध्ययने वृत्तान्यस्य द्वादशान्यिकः। द्वादशापपाठा अस्य जाता इत्यर्थः॥ **१६१६। हितं भक्षाः** ।४।४।६५। अपूपभक्षणं हितमस्मै आपूपिकः॥ **१६१७। तदस्मै दीयते नियुक्तम्**।४।४।६६। अग्रभोजनं नियतं दीयते अस्मै आग्रभोजनिकः॥ **१६१८। श्राणामांसौदनाट्टिठन्**।४।४।६७। श्राणा नियुक्तं दीयतेऽस्मै श्राणिकः। श्रणिकी। मंसौदनग्रहणं संघातविगृहीतार्थम्। मांसौदनिकः। मांसिकः। ओदनिकः॥ **१६१९। भक्तादणन्यतरस्याम्**।४।४।६८। पक्षे ठक्। भक्तमस्मै नियुक्तं दीयते भाक्तः। भाक्तिकः॥ **१६२०। तत्र नियुक्तः** ।४।४।६९। आकरे नियुक्त आकरिकः॥

---

तच्च प्रवेशनं द्वदशान्यपदमध्ययनवृत्तकर्मवाचकमिति बोधयितुम्मूलकारेण कृतमिति ज्ञेयम्। ***हितमिति**। भक्षवाचाकात्प्रथमान्ताद्धितोपाधिकादस्मै इति चतुर्थ्यन्तार्थे ठक्। यः प्रथमान्तार्थस्स चेद्भक्ष इति वा अर्थः। ***तदस्मै** इति। तदस्येति सूत्रादनुवर्तमानयोस्तदस्ययोर्मध्ये अस्येति निवृत्तौ तदपि निवर्तते इति कृत्वा तदिति पुनरत्र तच्छब्दोपादानं कृतम्। तदस्येति निवृत्तमिति भावः। वस्तुतस्तु अस्येति निवृत्तम्। तदित्यनुवर्तते इति व्याख्याय तद्ग्रहणमिह सुत्यजम्। तदिति प्रथमान्तात् नियतं दीयते इति पदद्वयोपाधिकात् अस्मै इति चतुर्थ्यन्तार्थे ठक्। नियतं नियमेनेत्यर्थः। श्राणेति। पूर्वसूत्रं सर्वमिहानुवर्तते। प्रथमान्तेभ्यः नियतं दीयते इत्युपाधिमद्भ्यः श्राणादिभयः अस्मै इत्यर्थे टिठन्।

औदनिक इति प्रामादिकः। टिठनि वृद्ध्यभावात् ओदनिक इति पठितव्यम्। ठञमकृत्वा टिठन्करणे इदमेव फलम्। टिड्ढाणेति टिति टञि च ङीप् स्यादिति तद्विशेषाभावात्। मांसओदनवृद्धिरेचि मांसौदनततष्टिठनि मांसौदनिकः। ***भक्तम्**। भिस्सा स्त्री भक्तमंधोऽन्नमित्यमरः। अणभावे औत्सर्गिकष्ठन्। भाक्तिकः। ***तत्रेति** तदस्मै इति निवृत्तम्। सप्तम्यन्तान्नियुक्त इत्यर्थे ठक् नियुक्तः। अधिकृतः (नियोगः अधिकारः) ***अगारान्तात्** ठन्। तत्र नियुक्त इत्यनुवर्तते। अगारेति पदमन्ते यस्य तदगारान्तम्। तस्मात्सप्तम्यन्तान्नियुक्ते ठन्। ठकोऽपवादः। अगारं गृहम्। ***अध्यायिनीति**। अध्यायोध्ययनमस्यास्तीति अध्यायी, तस्मिन्नध्यायनि। अध्येतरीत्यर्थः। सप्तम्यन्तादध्यायनि ठक्स्यात्। स चेत्सप्तम्यन्तार्थः निषिद्धदेशकालस्वरूपः। निषिद्धदेशः निषिद्धकालो वेत्यर्थः। देशकालयोस्समाहारः देशकालम् नञोऽत्र निषेधोऽर्थः। न देशकालमदेशकालम्। निषिद्धदेशकालमित्यर्थः। देशकालेति न स्वरूपस्य ग्रहणम् नापि पर्यायाणाम्। तेषु निषेधाप्रतीतेः। किन्तु देशकालविशेषाणां ग्रहणम्। ***कठिनान्तेति**। कठिनेति पदमन्ते यस्य तत्कठिनान्तम् । प्रस्तारः संस्थानम्।

१६२१। **अगारान्ताट्ठन्** ।४।४।७०। देवागारे नियुक्तो देवागारिकः ॥ **१६२२। अध्यायिन्यदेशकालात्** ।४।४।७१। निषिद्धदेशकालवाचकाट्ठक् स्यादध्येतरि। श्मशानेऽधीते श्माशानिकः। चतुर्दश्यामधीते चातुर्दशिकः ॥ **१६२३। कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति** ।४।४।७२। तत्रेत्येव। वंशकठिने व्यवहरति वांशकठिनिकः। वंशा वेणवः कठिना यस्मिन्देशे स वंशकठिनस्तस्मिन्देशे या क्रिया यथानुष्ठेया तां तथैवानुतिष्ठतीत्यर्थः। प्रास्तारिकः। सांस्थानिकः ॥ **१६२४। निकटे वसति** ।४।४।७३। नैकटिको भिक्षुः ॥ **१६२५। आवसथात् ष्ठल्** ।४।४।७४। आवसथे वसति आवसथिकः। षित्वान्ङीष्। आवसथिकी। आकर्षात्पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च। आवसथात्किसरादेः षितः षडेते ठगधिकारे॥१॥ षडिति सूत्रषट्केन विहिता इत्यर्थः। प्रत्ययास्तु सप्त ॥ **ठकोऽवधिः समाप्तः ॥**

---

एतेभ्यस्सप्तम्यन्तेभ्यः व्यवहरतीत्यर्थे ठक्। व्यवहारोऽत्र यथायोग्यमाचरणम्। ***निकट इति।** सप्तम्यन्तान्निकटाद्वसत्यर्थे ठक्। भिक्षावेव नैकटिक इति प्रयोग इति न वाच्यम्। संज्ञायामित्यस्याभावात्। किन्तु यः निकटे समीपे वसति स सर्वोपि नैकटिक इत्युच्यते। भिक्षुरिति तु प्राधान्येन तत्र प्रयोगाभिप्रायेणोक्तम्। ***आवसथादिति।** वसतीत्यनुवर्तते। तत्रेति च। आवसथो गृहम्। आकर्षात् ष्ठल्। पर्पादिभ्यष्ठन्–भस्त्रादिभ्यष्ठन्। कुसीददशैकादशात् ष्ठन्ष्ठचौ। आवसथात् ष्ठल्। किसरादिभ्यः ष्ठन् इति षट्सूत्र्यां प्रत्ययाष्षित इत्यर्थः। ननु प्रत्ययानां सप्तत्वेन षितष्षडिति वचनमनुपपन्नमत आह षडित्यादि। षट्छब्दस्य सूत्रषट्कविहिते लक्षणा। प्रदर्शितसूत्रषट्केन विहिताः प्रत्ययाष्षडित्युच्यन्ते इति भावः। प्रत्ययास्तु सप्तसु कुसीदसूत्रे ष्ठन्ष्ठचोर्द्वयोर्ग्रहणादिति भावः। **इति ठगधिकारः**

तद्वहतीति। द्वितीयान्ताद्रथयुगप्रासङ्गाद्वहत्यर्थे यत्प्रत्ययस्स्यात्। युगशब्दोऽत्र सामर्थ्याद्रथादिसाहचर्याच्च स्कन्धवाह्यदारुविशेषवाची (आंध्रे काडिमानु) वत्यानां बालानडुहां दमनकाले शिक्षाकाले अभ्यासकाले इत्यर्थः। ***धुर इति।** धुर इति पञ्चमी। तद्वहतीत्येव। धुरं वहतीति विग्रहे धुर्–य इति स्थिते हलि च रेफवान्तस्य धातोरुपधाया इको दीर्घस्स्याद्धलीति। क्विबन्तत्वेन धुरित्यस्य रेफान्तधातुत्वादुपधादीर्घे प्राप्ते नभकुर्छुरामिति दीर्घनिषेधः। धुर्यः। (भत्वाद्धुरित्यस्य यतिपरतः) भस्य दीर्घनिषेधे इदमुदाहरणम्। कुरस्तु कुर्वाण इत्यादि। कुरशब्दे इत्यस्य तु न ग्रहणमिति मूल एव तुदादिषु वक्ष्यति। छुर–छेदने नभकुर्छुरामिति न दीर्घः। छुर्यीति इति छ। ढकि एयादेशः।

## तद्धितेषु प्राग्घितीयाः ३१।

**१६२६। प्राग्घिताद्यत्** ।४।४।७५। 'तस्मै हितम् १६६५' इत्यतः प्राक् यदधिक्रियते॥ **१६२७। तद्वहति रथयुगप्रासङ्गम्** ।४।४।७६। रथं वहति रथ्यः ।युग्यः। वत्सानां दमनकाले स्कन्धे काष्ठमासज्यते स प्रासङ्गः। तं वहति प्रासङ्ग्यः॥ **१६२८। धुरो यड्ढकौ** ।४।४।७७। 'हलि च ३५४' इति दीर्घे प्राप्ते॥ **१६२९। न भकुर्छुराम्** ।८।२।७९। भस्य कुर्च्छुरोश्चोपधाया दीर्घो न स्यात्। धुर्यः। धौरेयः॥ **१६३०। खः सर्वधुरात्** ।४।४।७८। सर्वधुरां वहतीति सर्वधुरीणः॥ **१६३१। एकधुराल्लुक्च** ।४।४।७९। एकधुरां वहति एकधुरीणः। एकधुरः॥ **१६३२। शकटादण्** ।४।४।८०। शकटं वहति शाकटो गौः॥ **१६३३। हलसीराट्ठक्** ।४।४।८१। हलं वहति हालिकः। सैरिकः॥ **१६३४। संज्ञायां जन्याः** ।४।४।८२। जनी वधूः तां वहति प्रापयति जन्याः॥

---

कित्त्वाद्वृद्धिः । धौरेयः । ***खस्सर्वधुरात्।** ऋक्पूरब्धूः पथामानक्षे इति समासान्तो प्रत्ययः। सर्वा च सा धूश्च सर्वधुरम्। तस्मात्सर्वधुरादिति। सर्वधुराशब्दाद्वहतौ खप्रत्ययः। सर्वधुरां वहतीति सर्वधुरीणः। सर्वधुरमिति तु मूले प्रामादिकः। समासान्तेऽप्रत्यये कृते स्त्रियां टापि सर्वधुरा –अम् सर्वधुराम् इति सूत्रे क्लीबत्वन्तु शब्दस्वरूपापेक्षयेति बोध्यम्। सर्वधुरा–ख–खस्य ईनादेशः यस्येति लोपः। रषाभ्यामिति नस्य णत्वं सर्वधुरीणः। ***लुक्च।** औत्सर्गिकस्य यतो लुक्। चात्खप्रत्ययः। चकारो न सन्नियोगशिष्टार्थः। किन्तु खप्रत्ययानुकर्षणार्थः। ***शकटादण्।** यतोपवादः। सञ्ज्ञायां जन्येति यत्प्रत्ययान्तस्त्रियां निपात्यते। जन्य इत्युक्ते तु लिङ्गविशिष्टपरिभाषया स्त्रियामपि स्यादिति जन्यः जन्या इति रूपद्वयसिद्धिस्स्यादिति बोध्यम्। टापमविवक्ष्य पुंस्यपि जन्येति निपातमङ्गीकृत्य जन्यान् इति कालिदासः प्रायुङ्क्त।

***विध्यतीति**। द्वितीयान्ताद्विध्यतीत्यर्थे यत्स्यात्। अधनुषेत्यत्र नञः प्रसज्यप्रतिषेधः। तृतीयायाः करणत्वमर्थः। धनुःकरणकं न चेत्तद्वेधनम्। प्रकृतत्वाद्वेधनस्य विशेष्यत्वम्। पद्या इत्यत्र पादकर्मकं वेधनमर्थः। इदं धनुःकरणकं वा नवेति तु निर्णयाय धनुष्पदप्रयोगरूपा सामग्री नास्ति। तस्मात् धनुःकरणकत्वं संभावयितुं शक्यञ्चेत्तदा न यदिति बोध्यम्। सम्भावयितुमत्राशक्यमिति द्योतयितुं शर्करा इति विशेष्यमुपन्यस्तम्। न हि अचेतनानां शर्कराणां धनुर्ग्रहणवेधनसामर्थ्यं संभावयितुं शक्येतेति। पादौ विध्यन्ति

**१६३५। विध्यत्यधनुषा** ।४।४।८३। द्वितीयान्ताद्विध्यतीत्यर्थे यत्स्यान्न चेत्तत्र धनुः करणम्। पादौ विध्यन्ति पद्याः शर्कराः॥ **१६३६। धनगणं लब्धा** ।४।४।८४। तृन्नन्तमेतत्। धनं लब्धा धन्यः। गणं लब्धा गण्यः॥ **१६३७। अन्नाण्णः** ।४।४।८५। अन्नं लब्धा आन्नः॥ **१६३८। वशं गतः** ।४।४।८६। वश्यः परेच्छानुचारी॥ **१६३९। पदमस्मिन्दृश्यम्।** ।४।४।८७। पद्यः कर्दमः। नातिशुष्क इत्यर्थः॥ **१६४०। मूलमस्याबर्हि** ।४।४।८८। आबर्हणमाबर्ह उत्पाटनं तदस्यास्तीत्याबर्हि। मूलमाबर्हि येषां ते मूल्या मुद्गाः॥ **१६४१। संज्ञायां धेनुष्या** ।४।४।८९। धेनुशब्दस्य षुगागमो यप्रत्ययश्च स्वार्थे निपात्यते संज्ञायाम्। धेनुष्या बन्धके स्थिता॥

---

भटा इत्यत्र तु पद्या इति न भवति। भटकर्तृकवेधने धनुष्करणकत्वस्य सम्भावनीयत्वात्। एवमधनुषेत्यस्य धनुःकरणकत्वन्तत्र वेधने असम्भावितञ्चेदित्यर्थः फलितः। ***धनगणमिति।** धनगणयोस्समाहारः धनगणम्। द्वितीयान्ताभ्यामाभ्यां लब्धेत्यर्थे यत्। लब्धेति लुडन्तो न धातुरित्याह–तृन्नन्तमिति ***अन्नाण्णः।** अन्नात् णः इति छेदः। ***वशङ्गतः।** द्वितीयान्ताद्वशशब्दाद्गत इत्यर्थे यत्। वशं गत इति विग्रहः। वश्य इति वृत्तिः। अधीन इत्यर्थः। ***पदमिति।** दृश्योपाधिकात्प्रथमान्तात्पदशब्दादस्मिन्निति सप्तम्यर्थे यत्। पदमस्मिन् दृश्यमित्येव विग्रह इति मत्वा मूले विग्रहो नोक्तः। ***मूल्यमुद्गा** इति प्रामादिकः पाठः। मूल्याः मुद्गाः इति पठितव्यम्। मूल्या इति वृत्तिः। मुद्गा इत्यर्थकथनम्। विशेष्योपन्यासो वा। आबर्हीत्युपाधिमतः। प्रथमान्तान्मूलशब्दादस्येति षष्ठ्यन्तार्थे यत्स्यादिति सूत्रार्थः। ***सञ्ज्ञायां** धेनुष्येति निपात्यते। इति निपात्यते। इति सूत्रार्थः। निपातनविषयान्विवृणोति। धेनुशब्दस्येत्यादिना। यप्रत्यय इति पठितव्यम्। यत्प्रत्यय इति तु प्रामादिकः पाठः। बन्धके स्थिताया धेनोऽस्य संज्ञा इयम् बन्धकम्। (आंध्रे वाकट्टु) धेनुरेव धेनुष्या इति विग्रहवृत्ती। ***गृहपतिनेति** तृतीयान्तनिर्देशात्तृतीयान्तादेव गृहपतिशब्दात्संयुक्तेऽर्थे यदपवादः ञ्यप्रत्ययः ञित्त्वं वृद्ध्यर्थम्. ***नौ वय इति।** अत्र यथासङ्ख्यमाश्रियतेः प्रकृतीनामर्थानाञ्च अष्टत्वानतिरेकात्। यथासङ्ख्यार्थमेव। अर्थद्वये मूलेति प्रकृतिद्वयं पठितम्। मूलेत्येकपाठे तु यथासङ्ख्यं हन्येतेति। तेन मूलशब्दादानम्ये समे चार्थे यत्स्यादिति फलितम्। मूलेनानम्यम्मूल्यम्। समूला वृद्धिरित्यर्थः। समूलो लाभो वा। मूलन्नाम प्रधानद्रव्यम्। वणिग्भिर्व्यापारे प्रथमं प्रवेशितं द्रव्यमित्यर्थः। (आंध्रे असलुसोम्मु) तुलाघटी । (आंध्रे त्रासु) ***धर्मपथीति।** धर्म–पथिन्–अर्थ–न्याय–एतेषां समाहारः। पञ्चम्यन्तनिर्देशात्

**१६४२। गृहपतिना संयुक्ते ञ्यः** ।४।४।९०। गृहपतिर्यजमानस्तेन संयुक्तो गार्हपत्योऽग्निः ॥**१६४३। नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्य-प्राप्यवध्यानाम्यसमसतमसम्मितेषु**। ४।४।९१। नावा तार्यं नाव्यम्। वयसा तुल्यो वयस्यः। धर्मेण प्राप्यं धर्म्यम्। विषेण वध्यो विष्यः। मूलेन आनाम्यं मूल्यम्। मूलेन समो मूल्यः। सीतया संमितं सीत्यं क्षेत्रम्। तुलया संमितं तुल्यम्॥ **१६४४। धर्मपथ्यर्थन्यायादनपेते** ।४।४।९२। धर्मादनपेतं धर्म्यम्। पथ्यम्। अर्थ्यम्। न्याय्यम्॥ **१६४५। छन्दसो निर्मिते** ।४।४।९३। छन्दसा निर्मितं छन्दस्यम्। इच्छया कृतमित्यर्थः॥ **१६४६। उरसोऽण् च** ।४।४।९४। चाद्यत्। उरसा निर्मितः पुत्र औरसः। उरस्यः॥

---

पञ्चम्यन्तेभ्य एतेभ्यः अनपेतार्थे यत्। अनपेतः। अनपगतः। अभ्रष्ट इति यावत्। ***छन्दस** इति। तेनेत्येव व्याख्यानात्। तृतीयान्तात् छन्दश्शब्दान्निर्मितार्थे यत्। छदेर्घञि छन्द इत्यदन्तः। असुनि–छन्दस् इति सान्तः। उभावपि इच्छायां वर्तेते। अदन्तस्य इच्छापर्यायत्वम्प्रसिद्धमेव। सान्तस्य तु इच्छापर्यायत्वे इदमेव प्रमाणम्। त्रिष्टुभादिषु च सान्तो वर्तते। तस्यात्र न ग्रहणम्। सञ्ज्ञायामिति सूत्रादारभ्य पठितसूत्रेषु संज्ञा-यामित्यधिकारात्। अनुष्टुभादयो हि संज्ञाशब्दाः न छन्दश्शब्द इति तद्वाचक च्छन्दश्शब्दस्य न सञ्ज्ञात्वम्। इच्छायास्तु छन्द इति सञ्ज्ञानिर्विवादा इति। ***उरस** इति तेन निर्मिते इत्येव। हृदयस्येति निर्देशसामर्थ्यात् षष्ठ्यन्ताद्धृदयशब्दात् प्रिय इत्यर्थे यत्। हृदादेशः। शस्प्रभृतिष्वित्यत्र प्रभृतिग्रहणं प्रकारार्थमित्युक्तत्वाद्यद्यपि हृदः प्रिय इति सूत्रिते यद्यपि हृद्य इति सिद्ध्यति तथापि हृदयशब्देन विग्रहे हृद्य इति न सिद्ध्यति किन्तु हृदयप्रिय इति समास एवेति। हृदयस्य प्रिय इति सूत्रम्। ***ऋषिर्वेदः।** सञ्ज्ञाशब्दोऽयम्। संज्ञायामित्यत्राधिकारात्। सञ्ज्ञाशब्दस्यैव ऋषेरत्र ग्रहणम्। न तु सामान्यशब्दस्य ऋषिशब्दो हि ऋषित्वजात्या क्तान्तान्वसिष्ठादीनभिदधत्सामान्यशब्द इत्युच्यते। ***मतेति।** मतादिभ्यस्त्रिभ्यष्षष्ठ्यन्तेभ्यः क्रमेण करणादिषु तेष्वर्थेषु यत्स्यात्। जपजल्पव्यक्तायां वाचि, जल्पः भाषणमित्यर्थः। ***तत्रेति** सप्तम्यन्तात्साधुरित्यर्थे यत्। कर्मणि साधुरिति विग्रहे कर्मन् य इति स्थिते न स्तद्धित इति टिलोपे प्राप्ते ये चाभावेति अनः प्रकृतिवद्भावः (यत्प्रत्ययस्य अत्र भावकर्मणोरविहितत्वात्) रषाभ्यामिति णत्वं कर्मण्यः। एवं सामान्य इत्यत्रापि। सामन्निति नान्तोयं शब्दः। प्रतिजनादिभ्यस्सप्तम्यन्तेभ्यस्साधौ

**१६४७। हृदयस्य प्रियः** ।४।४।९५। हृद्यो देशः। 'हृदयस्य हृल्लेख-९८८' इति हृदादेशः ॥ **१६४८। बन्धने चर्षौ** ।४।४।९६। हृदयशब्दात् षष्ठ्यताद्बन्धने यत्स्याद्वेदेऽभिधेये। हृदयस्य बन्धनं हृद्यो वशीकरणमन्त्रः ॥ **१६४९। मतजनहलात्करणजल्पकर्षेषु** ।४।४।९७। मतं ज्ञानं तस्य करणं भावः साधनं वा मत्यम्। जनस्य जल्पो जन्यः। हलस्य कर्षो हल्यः ॥ **१६५०। तत्र साधुः** ।४।४।९८। अग्रे साधुः अग्र्यः। सामसु साधुः सामन्यः। 'ये चाभावकर्मणोः ११५४' इति प्रकृतिभावः। कर्मण्यः। शरण्यः ॥ **१६५१। प्रतिजनादिभ्यः खञ्** ।४।४।९९। प्रतिजनं साधुः प्रातिजनीनः। सांयुगीनः। सार्वजनीनः। वैश्वजनीनः ॥ **१६५२। भक्ताण्णः** ।४।४।१००। भक्ते साधवो भाक्ताः शालयः ॥ **१६५३। परिषदो ण्यः** ।४।४।१०१। पारिषद्यः। परिषद इति योगविभागाण्णोऽपि। परिषदः। पर्षद इति पाठः। पार्षदः ॥ **१६५४। कथादिभ्यष्ठक्** ।४।४।१०२। कथायां साधुः काथिकः ॥

---

खञ्। यतोपवादः। जनो जनः प्रतिजनम्। तस्मिन्प्रतिजनम्। अम्भावस्य वैकल्पिकत्वात्। प्रतिजने इति च भवति। विश्वजने साधुर्विश्वजनीनः। विश्वजनाय हितं विश्वजनीनमित्यपि भवति। आत्मन्विश्वजनेति तस्मै हितमित्यधिकारे वक्ष्यमाणत्वात्। ***भक्तात्** णः इति छेदः। सामर्थ्याद्व्याख्यानाद्वा भक्तशब्दोऽयमन्नवाची शाल्यन्नस्य साधुत्वादन्ने साधुत्वं शालीनाम्। ***परिषद** इति। समवैत्यर्थे परिषदोण्य इति गतमेकं सूत्रम्। साध्वर्थे ण्यविधानार्थमिदं ततोण्यत्। अत्र परिषदः। ण्यः। इति योगविभागः। परिषद इति सूत्रे पूर्वसूत्राण्ण इत्यस्यानुवृत्तिः। ण्य इति सूत्रे परिषद इति सूत्रस्यानुवृत्तिः। एतेन परिषच्छब्दात्साध्वर्थे णः ण्यश्च भवत इति फलितम्। तथा च पारिषद्यः। पारिषदः इति रूपद्वयसिद्धिः। ***कथादि।** कथा-ऽतिकथा-विश्वकथा-संकथा-वितण्डा इत्यादिः। कथादिः। षित्वात् स्त्रियां ङीष् काथिकी। *पथिन् - अतिथि -वसति स्वपति-एतेषां समाहारः पथ्यतिथिवसतिस्वपति। तस्मात् सप्तम्यन्तात्साधौ ढञ्। स्वस्य धनस्य पतिस्स्वपतिः आडचः-इभ्य आडचो धनी स्वामी इत्यमरः। वसतिर्निवासः। पाथेयम्। बिसकिसलयच्छेदपाथेयवन्त इति मेघदूतः। ***सभायाः** यः इति पदविभागः। सभाया इति पञ्चमी। सभाशब्दादित्यर्थः।***समानेति।** तत्रेत्येव। सप्तम्यन्तात्समानतीर्थशब्दाद्वासी इत्यर्थे यत्। ***समानोदरेति।** सप्तम्यन्तात्समानोदरशब्दाच्छयित इत्यर्थे यत्। ओकारश्च उकारो भवतीत्यर्थः। (नकारोपरि स्थितो य ओकारस्स उदात्तस्यादिति भावः) विभाषोदरे इति समानस्य सभावाभावपक्षे समानोदर्य इति। सभावपक्षे तु ***सोदराद्यः।** सोदरशब्दाद्यप्रत्ययः।

१६५५। **गुडादिभ्यष्ठञ्** ।४।४।१०३। गुडे साधुर्गौडिक इक्षुः। साक्तुका यवाः॥ १६५६। **पथ्यतिथिवसतिस्वपतेर्ढञ्** ।४।४।१०४। पथि साधुः पाथेयम्। आतिथेयम्। वसनं वसतिस्तत्र साधुर्वासतेयी रात्रिः। स्वापतेयं धनम्॥ १६५७। **सभाया यः** ।४।४।१४५। सभ्यः॥ १६५८। **समानतीर्थे वासी** ।४।४।१०७। साधुरिति निवृत्तम्। वसतीति वासी। समाने तीर्थे गुरौ वसतीति सतीर्थ्यः॥ १६५९। **समानोदरे शयित ओ चोदात्तः** ।४।४।१०८। समाने उदरे शयितः स्थितः समानोदर्यो भ्राता॥ १६६०। **सोदराद्यः** ।४।४।१०९। सोदर्यः। अर्थः प्राग्वत्॥ **इति प्राग्घितीयाः॥**

## तद्धितेषु छयद्विधिः ३२।

१६६१। **प्राक् क्रीताच्छः** ।५।१।१। 'तेन क्रीतम् १७०२' इत्यतः प्राक् छोऽधिक्रियते॥

---

सोदर्यः। समानमुदरं यस्य स इति बहुव्रीहावेव। समानस्य सभावविकल्पात्। समानोदरः सोदरः इति च रूपद्वयसिद्धिः। समानञ्च तदुदरञ्च समानोदरम् इति विशेषणसमासे तु समानस्य सभावे सोदरमिति च। शयितार्थे विशेषणसमासस्यैव ग्रहणम्। न तु बहुव्रीहेः असामर्थ्यात्। एतेन समानमुदरं समानोदरं तत्र शयितस्समानोदर्यः। समानमुदरं सोदरं तत्र शयितस्सोदर्यः। समानमुदरं यस्य सः (उत्पादकत्वेन समानोदरः सोदरः इति च सिद्धम्। उत्पादकमुदरं अर्थान्मातुः अभिन्नमिति बहुव्रीह्यर्थः। ***इति प्राग्घितीयाः।**

### तद्धितेषु छयद्विधिः

***एवं** चातुर्थिकान्समाप्य अथ पाञ्चमिकान् व्याख्यातुमारभते। (प्राक्क्रीताच्छ इत्यादीनां पञ्चमाध्यायस्थत्वात्पाञ्चमिकत्वम्।) (चतुर्थाध्याये पठिताश्चातुर्थिकाः) (समाप्ताश्चातुर्थिका इति तु तत्त्वबोधिन्यां प्रामादिकः पाठः)

***प्राक्क्रीताच्छः** प्राक्क्रीतीयेष्वर्थेषु छोधिक्रियते इत्यर्थः। मूलोक्तयथाश्रुतार्थाश्रयणे तु तेन क्रीतमिति सूत्रात्प्रागार्हादगोपुच्छेति सूत्रादूर्ध्वञ्च ठगधिकारेण छाधिकाराभावात् । न च छस्यापवादष्ठगिति वाच्यम्। प्राग्वते ष्ठञिति ठञोपवादो मध्ये ठगधिकार इति मूले एव वक्ष्यमाणत्वात्। परिखाया ढञिति सूत्रव्याख्यानानन्तरमेव छयतोः पूर्णोऽवधिरिति स्वोक्तव्याघातात्। तेन क्रीतमित्यतः प्राक्छस्याधिकार इत्यत्रोक्त्वा प्राग्वतेरिति सूत्रात्प्रागेव छाधिकारः पूर्ण इति वक्ष्यमाणत्वात्। अथ यदि प्राग्वतेरित्यारभ्य ठञोठञपवादेन ठका

**१६६२। उगवादिभ्यो यत्** ।५ ।१ ।२। प्राक् क्रीतादित्येव। उवर्णान्ताद्गवादिभ्यश्च यत्स्याच्छस्यापवादः ।(ग) नाभिनभंच॥ नभ्योऽक्षः। नभ्यमञ्जनम्। रथनाभावेवेदम्। (ग) **शुनः संप्रसारणं वा च दीर्घत्वम्**। शून्यम्। शुन्यम् (ग)। **उधसो नङ् च**। ऊधन्यः॥ **१६६३।कम्बलाच्च संज्ञायाम्**।५ ।१ ।३। यत्स्यात्। कम्बल्यमूर्णापलशतम्। संज्ञायां किम्। कम्बलीया ऊर्णा॥

---

च बाधितत्वान्न तत्र छाधिकार इति मत्वा प्राग्वतेरित्यतः प्रागेव छाधिकारः पूर्ण इति मूलोक्ताशय इत्युच्येत तर्हि प्राक्क्रीतादित्यपनीय प्रागार्हाच्छ इति सूत्रयितव्यम्। आर्हादिति सूत्रात्प्राक्छोधिक्रियते इति तदूर्ध्वं न छाधिकारः। नापि तदपवाद इति बोध्यम्। प्राक्क्रीतीयेष्वर्थेष्वित्युक्तौ तु आर्हादित्यारभ्य येष्वर्थेषु प्रत्यया विहितास्ते ह्यार्हीया अर्थाः। तेन क्रीतमित्यारभ्य तदर्हतीति पर्यन्तमुक्ताः क्रीताद्यर्था एव। न तु प्राक्क्रीतीयाः। आर्हादित्यारभ्य तेन क्रीतमिति मध्ये सूत्राणामर्थविधानाभावात्। तस्मात् प्राक्क्रीतीयेषु छः, प्रागार्हतीयेषु ठक्। प्राग्वतीयेषु ठञ्, इति व्यवस्था सिद्धा। वस्तुतस्तु प्रागार्हाच्छ इति न्यासस्सुवचः। आर्हादिति सूत्रात्प्राक्छाधिकारः। प्रागार्हीयेषु छोधिक्रियते इति वा। *__उगवादीति__। प्राक्क्रीतीयेष्वर्थेषु उवर्णान्तात् गवादिगणपठितेभ्यश्च यत्स्यात् छस्यापवादः । विशेषविहितत्वाद्यत्प्रत्ययस्येति भावः। ओर्यतमुदाहरति। शङ्कवे हितं शङ्कव्यमिति। तस्मै हितमिति (प्राक्क्रीतीयानामर्थानां मध्ये) हितार्थेयं यत् शङ्कुयं ओर्गुणः अवादेशः शङ्कव्य–नाभिः (आंध्रे बंडिगालुकुंड) शरीरस्य मध्ये यथा नाभिस्तिष्ठति तथा चक्रस्य मध्ये वर्तमानत्वान्नाभिरिति तस्य व्यवहारः। *__शुन इति__। श्वन् शब्दात्प्राक्क्रीतीये यति कृते संप्रसारणं श्वन्शब्दस्य वाच्यं दीर्घत्वञ्च विकल्पेन संप्रसारणं नित्यमेव। दीर्घत्वन्तु वैकल्पिकमिति विवेकः। श्वन् य संप्रसारणं वस्योत्वम् संप्रसारणाच्चेति पररूपम् । शुन् य दीर्घत्वमुकारस्य संप्रसारणस्य शून्यम्। शुने हितमिति विग्रहः । शून् य इति स्थिते नस्ताद्धित इति न टिलोपः। सति तु टिलोपे ऊन् इति लुप्यते इति। संप्रसारणविधिरेव व्यर्थेति। दीर्घाभावे शुन्यम् इति। *__ऊधसः__। नङ्–च इति छेदः। प्राक्क्रीतीयेऽर्थे ऊधसोऽनङादेशः। चाद्यत्प्रत्ययः नङः ङित्त्वात् ङिच्चेत्यन्तस्य सकारस्यादेशः, नङि अकार उच्चारणार्थः। ऊधन्य अत्र ऊधसो नश्चेत्येव वक्तव्यम् । ऊधसः नः च इति छेदः ऊधसो नादेशस्स्यात्। अलोऽन्त्यस्येत्यन्त्यस्य सस्यैव ऊधन्य इति सिद्ध्यतीति मनोरमायामुक्तम्। *__कंबळाय__ हिता कम्बलीया। ऊर्णा मेषलोम। तैर्मेषलोमभिः कम्बळस्य क्रियमाणत्वान्मेषरोमाणि। कम्बलाय हितानीति भावः। ऊर्णा इति जात्येकवचनम्। एकेन रोम्णा न हि कम्बलो निर्वत्यते। काम्यते शीताळुभिरिति कम्बलः।

**१६६४। विभाषा हविरपूपादिभ्यः** ।५ ।१ ।४। आमिक्ष्यं दधि। आमिक्षीयम्। पुरोडाश्यास्तण्डुलाः। पुरोडाशीयाः। अपूप्यम्। अपूपीयम्॥ **१६६५। तस्मै हितम्** । ५ ।१ ।५। वत्सेभ्यो हितो वत्सीयो गोधुक्। शङ्कवे हितं शङ्कव्यं दारु। गव्यम्। हविष्यम्॥ **१६६६। शरीरावयवाद्यत्** ।५ ।१ ।६। दन्त्यम्। कण्ठ्यम्॥ **नस् नासिकायाः** ॥ नस्यम्। नाभ्यम्॥ **१६६७। ये च तद्धिते** ।६ ।१ ।६१। यादौ तद्धिते परे शिरश्शब्दस्य शीर्षन्नादेशः स्यात्। शीर्षण्यः। तद्धिते किम्। शिर इच्छति शिरस्यति॥

---

*__विभाषेति__ अप्राप्तविभाषेयम्। हविर्विशेषवाचिभ्यः अपूपादिभ्यश्च प्राक्क्रीतीये ष्वर्थेषु यद्वा पक्षे छः आमिक्षापुरोडाशौ हविर्विशेषौ। आमिक्षा सा शृतोष्णेया क्षीरे स्याद्दधियोगत इत्यमरः। उष्णे क्षीरे दधियोगतः या विकृतिस्स्यात्सा आमिक्षेत्युच्यते। तस्यै हितमामिक्ष्यम्। यति। यस्येत्यालोपः। छे-छस्येयादेशे यस्येत्यालोपे आमिक्षीयम्। दधियोगत एव आमिक्षाया उत्पद्यमानत्वादामिक्षायै दधिहितम्भवति। *__तस्मै__ हितम्। चतुर्थ्यन्ताद्धितार्थे छस्स्यादित्यर्थः। (उगवादिभ्यस्तु यदेव) छस्यैवाधिक्रियमाणत्वात्। दोग्दि गोधुक् गोपः । स हि वत्सान् क्षीरं पाययति इति वत्सेभ्यो हितः। हविषे हितं हविष्यम्। प्रत्ययावयवत्वात्सस्य षत्वम्। *__शरीरेति।__ उवर्णान्तत्वाभावात्। गवादित्वाभावाच्च । दन्तकण्ठादिभ्य उगवादिभ्यो यदिति यदप्राप्तावयवारम्भः। छापवादोऽयं यत्। उगवादिसूत्रं विधिसूत्रमेव। न त्वधिकारसूत्रमिति। तत्स्थस्य यतो नात्राधिकार इति पुनर्यद्ग्रहणम्। तस्मै हितमिति छविधायकसूत्रेण यदनुवृत्तेर्विच्छिन्नत्वादु-गतादिसूत्राद्यदनुवर्तते इत्यपि वक्तुमयुक्तम्। मण्डूकप्लुत्याश्रयणे तु गौरवं स्यादिति *__शिरसे हित__ इत्यर्थे शिरस् यत् इति स्थिते शिरसश्शीर्षन्नादेशः। शीर्षस्य रषाभ्यामिति णत्वं शीर्षण्यः। सुप आत्मनि क्यच् । शिर आत्मन इच्छति शिरस्यति। क्यचि क इत्। य इत्येव शिष्यते। यादिरयं प्रत्ययः। तद्धितग्रहणाभावे अत्रापि शीर्षन्नादेशे शीर्षण्यतीति स्यादिति बोध्यम्। ननु शिरस् यदिति स्थिते ससजुषोरुरिति पदान्तसस्य रुत्वं स्यादिति चेन्मैवम्। नः क्ये इति क्येनान्तमेव पदं नान्यदिति सान्तस्यास्य पदत्वाभावात्। *__वेति।__ प्रकृतिप्रत्ययसमुदायेन केशेषु वाच्येषु यादितद्धितप्रत्ययनिमित्तकः शिरसश्शीर्षन्नादेशो वा स्यादिति वार्तिकार्थः। *__स्थौलशीर्षम्।__ तस्येदमित्यण्। न च अणि नस्तद्धित इति टिलोपे शीर्षन्नादेशे कृतेऽपि इष्टं सिद्ध्यतीति वाच्यम्। अन्निति अणि अनः प्रकृतिभावात्।

**वा केशेषु** ॥ शीर्षण्याः शिरस्या वा केशाः ॥ **अचि शीर्ष इति वाच्यम्** ॥ अजादौ तद्धिते शिरसः शीर्षादेशः। स्थूलशिरस इदं स्थौलशीर्षम् ॥ **१६६८। खलयवमाषतिलवृषब्रह्मणश्च** ।५।१।७। खलाय हितं खल्यम्। यव्यम्। माष्यम्। तिल्यम्। वृष्यम्। ब्रह्मण्यम्। चाद्रथ्या ॥ **१६६९। अजाविभ्यां थ्यन्** ।५।१।८। अजथ्या यूथिः। अविथ्या ॥ **१६७०। आत्मन्विश्वजनभोगोत्तरपदात्खः** ।५।१।९। **१६७१। आत्माध्वानौ खे** ।६।४।१६९। एतौ खे प्रकृत्यास्तः। आत्मने हितमात्मनीनम्। विश्वजनीनम् ॥ कर्मधारयादेवेष्यते ॥ षष्ठीतत्पुरुषाद्बहुव्रीहेश्च छ एव। विश्वजनीयम् ॥

---

अत एव येऽचि च तद्धिते यचि च तद्धिते इति वा न सूत्रितम्। ये चेत्यत्र यकारोपर्यकार उच्चारणार्थः। य इति सप्तम्यन्तम्। तद्धिते इत्यस्य विशेषणम्। अतः यस्मिन्विधिस्तदादावल्ग्रहणे इति तदादिविधिः। य् इत्यस्यैव अलः विवक्षितत्वात्। (अकारस्य उच्चारणार्थत्वादिति भावः) यच तद्धिते इति तु न्यासस्सुवचः। वान्तो यि प्रत्यये इत्यत्रैव य् शब्दस्य सप्तमी यि इति तदादिविधेस्सुगमत्वात्। ***खलेति।** अत्र चकारोऽन्यतो विधानार्थः। तेन रथशब्दादपि यतिरथ्या इति सिद्धम्। ये चाभावकर्मणोरिति प्रकृतिभावः। ब्रह्मण्यम्। तस्मै हितमित्यर्थे एवायं यद्विधिः। ***अजथ्या।** थ्यनः अजन्तत्वाट्टाप्। थ्यनि नकार एक एवेत्। थ्य इति शिष्यते। ***आत्मन्निति।** आत्मन्–विश्वजन–भोगोत्तरपद–एतेषां समाहारः। भोगशब्द उत्तरपदं समासचरमावयवः यस्य तत् भोगोत्तरपदम्। आत्मने हितमिति विग्रहे छापवादे खे कृते खस्येनादेशे। आत्मन्। ईन इति स्थिते नस्तद्धित इति टिलोपः। अन्निति तु न प्रकृतिभावशङ्कयः। अण्येव तद्विधनात्। टिलोपबाधनार्थं सूत्रम्। (प्रकृतिभावे विहिते टिलोपो बाध्यते इति भावः।) आत्माध्वानौ खे इति। खे खप्रत्यये परतः प्रकृत्या इति अनुवर्तते। स्यातामिति शेषः इति प्रकृतिभावः। स्थानिवद्भावेन ईनादेशस्य खत्वात्। प्रकृतिभावानन्तरमेव खस्येनादेशः कर्तव्य इति वा। आत्मनीनम्। विश्वजनशब्दात्तु कर्मधारयादेव खः व्याख्यानात्। विश्वस्मै जनाय हितं विश्वजनीनम् । ***भोगोत्तरपदात्खमुदाहरति।** मातृभोगीण इत्यादिना। मतृभोगीत्यादयः षष्ठीसमासप्रकृतयः। मातृभोगाय हितो मातृभोगीणः। निमित्तानधिकरणनिमित्त मत्पघटितत्वमखण्डपदत्वमिति रषाभ्यामिति सूत्रव्याख्याने तत्त्वबोधिनीकारकृतपरिष्कारानुसारेण प्रत्ययस्थत्वादत्र नस्य रषाभ्यामित्यनेन णत्वम्। राजाभोगीन इत्यत्र तु न णत्वम्।

**पञ्चजनादुपसंख्यानम्** ॥ पञ्चजनीनम् ॥ **सर्वजनाट्ठञ् खश्च** ॥ सार्वजनिकः । सर्वजनीनः ॥ **महाजनाट्ठञ्** ॥ माहाजनिकः । मातृभोगीणः । पितृभोगीणः । राजभोगीणः । (ग) **आचार्यादणत्वं च** ॥ आचार्यभोगीनः ॥ **१६७२ । सर्वपुरुषाभ्यां णढञौ** । ५ ।१ ।१० ॥ **सर्वाण्णो वेति वक्तव्यम्** ॥ सर्वस्मै हितं सार्वम् । सर्वीयम् ॥ **पुरुषाद्वधविकारसमूहतेनकृतेषु** ॥ भाष्यकारप्रयोगात्तेनेत्यस्य द्वन्द्वमध्ये निवेशः । पुरुषस्य वधः पौरुषेयः । 'तस्येदम् १५००' इत्यणि प्राप्ते । पुरुषस्य विकारः पौरुषेयः । 'प्राणिरजतादिभ्योऽञ् १५३२' इत्यञि प्राप्ते समूहेऽप्यणि प्राप्ते । एकाकिनोऽपि परितः पौरुषेयवृता इवेति माघः । तेन कृते ग्रन्थेऽणि प्राप्ते अग्रन्थे तु प्रासादादावप्राप्त एवेति विवेकः ॥

---

अट्कुप्वाङ्नुम्नि भिन्नजकारेण व्यवधानात्। ***आचार्यादणत्वञ्च**। इन्द्रवरुणभवेति सूत्रस्थमिदं वार्तिकम्। आचार्यानी इति स्त्रीप्रत्ययेषूदाहृतम् । आचार्यपदस्थरेफान्निमित्तभूतात्परस्य नस्य णत्वं नेति वार्तिकार्थः। ***सर्वाण्णो** वेति। सूत्रे सर्वाण्णः पुरुषाड्ढञ् स्यादित्युक्त प्रायम् । तत्र सर्वात्पाक्षिकश्छस्स्यादिति वक्तुम्। णो वेति वार्तिकम्। छे यस्येति लोपे सर्वीयम्। ननु ङसिङोस्स्मात्स्मिनौ इति सर्वस्माण्णो वेति वक्तव्यमिति वार्तिके पठितव्ये सर्वादित्यपपाठ इति चेन्मैवम्। अनुकरणशब्दोऽयम्। सूत्रे यस्सर्वशब्दस्तस्माण्णो वेत्यर्थात्। पुरुषशब्दात्तस्मै हितमित्यर्थे ढञि प्राप्ते वधाद्यर्थेष्वपि ठञर्थ भाष्यकारेष्टिं पठति पुरुषाद्वधेत्यादिना। ननु तेन कृत इत्यस्य वाक्यस्य कथं समासान्तः प्रवेशः असामर्थ्यादिति शङ्कायामाह भाष्यकारप्रयोगादिति। भाष्यकारोक्त्या तेन कृत इत्यलुक्समासः। अतो न दोष इति ज्ञेयमिति भावः। वधाद्यर्थानुसारेण समर्थविभक्तय ऊह्या इत्याशयेनाह–पुरुषस्य वध इत्यदि। अणि प्राप्ते तदपवादोऽयं ढञ् इति शेषः। एवं सर्वत्राप्यूह्यम्। पुरुषाय हितं पौरुषेयमिति हितार्थे बोध्यम्। पुरुषेण कृतः पौरुषेयः प्रासादः। अत्र अग्रन्थत्वात्कृते ग्रन्थे इत्यनेन नाणः प्राप्तिः इत्यस्मिन् ढञो विधिरेव। ***भ्याङ्** खञ्भ्याम्। खञ् मोऽनुस्वारः। अनुस्वारस्य ययि परसवर्णः, भाङ्खञ्। ***तदर्थमिति।** तस्मै इदं तदर्थम्। चतुर्थी तदर्थार्थेति चतुर्थीसमासः, अर्थेन सह नित्यसमास इति वार्तिकादस्वपद विग्रहः। विकृतिः कार्यम्। प्रकृतिः कारणम्। अङ्गारेभ्य एतान्यङ्गारीयाणि काष्ठानि। काष्ठानां विकारा अङ्गारा इति। विकृतिवाचकोङ्गारशब्दः प्रकृतीनां काष्ठानां विकृत्यर्थत्वं बोधयितुं विग्रहे एतानीति। तद्धितानां वैकल्पिकत्वेन छाभावपक्षे अङ्गारार्थानीति चतुर्थीसमासः। शङ्कवे इदमिति विग्रहे छापवादः। उगरवादिभ्य इति यत्। शङ्कव्यम्।

**१६७३। माणवचरकाभ्यां खञ्** ।५।१।११। माणवाय हितं माणवीनम्। चारकीणम्॥ **१६७४। तदर्थं विकृतेः प्रकृतौ** ।५।१।१२। विकृतिवाचकाच्चतुर्थ्यन्तात्तदर्थायां प्रकृतौ वाच्यायां छप्रत्ययः स्यात्। अङ्गारेभ्य एतानि अङ्गारीयाणि काष्ठानि। प्राकारीया इष्टकाः। शङ्कव्यं दारु॥ **१६७५। छदिरुपधिबलेर्ढञ्** ।५।१।१३। छादिषेयाणि तृणानि। बालेयास्तण्डुलाः॥ **उपधिशब्दात्स्वार्थे इष्यते**॥ उपधीयत इत्युपधी रथाङ्गं तदेव औपधेयम्॥ **१६७६। ऋषभोपानहोर्ञ्यः** ।५।१।१४। छस्यापवादः। आर्षभ्यो वत्सः। औपानह्यो मुञ्जः। चर्मण्यप्ययमेव पूर्वविप्रतिषेधेन। औपानह्यं चर्म॥

---

शङ्कवीयमिति गुरुभिरन्यथा लिखितम्मूले। तत्तु प्रामादिकम्। यतश्छापवादत्वात्। तदर्थमिति सूत्रे यदि पुनश्छग्रहणं कृतं स्यात् तर्हि बाधकबाधनार्थत्वेन छस्य यद्बाधकत्वं स्यात्। न त्वेवं दृश्यते। तस्मै हितमिति हितार्थे यथा–छापवादे यदि शङ्कव्यमितिरूपं तथैवात्रापीति शङ्कव्यमिति निर्दुष्टम्। ***छदिरिति**। छदिर्–उपधि–बलि–एतेषां समाहारः। एतेभ्यश्चतुर्थ्यन्तेभ्यः विकृतिभूतेभ्यः तदर्थायां प्रकृतौ वाच्यायां ढञ् – छस्यापवादः। पूर्वसूत्रस्य सर्वस्येहानुवर्तनादयमर्थो लब्धः। ससजुषोरुरिति रुत्वं कृत्वा निर्दिष्टं छदिर् इति। वस्तुतस्तु छदिस् इति सान्तोयम्। अत एव प्रत्ययावयवस्य सस्य षत्वे कृते छदिषे इमानि छादिषीयानि इति रूपं सिद्ध्यति। छदिः पटलम्। (आंध्रे यिंटिकप्पु) तृणैर्गृहं छाद्यते इति। छदिकारणं तृणानीति तृणानां छदिप्रकृतित्वम्। बलये इमे बालेयाः। तण्डुलैर्बलिः क्रियते इति बलिप्रकृतित्वन्तण्डुलानाम्। इष्यते भाष्यकारैरिति शेषः। ऋषभेति तदर्थं विकृतेः प्रकृतावित्येव ***ऋषभायायमार्षभ्यः**। ञित्त्वाद्वृद्धिरार्। ऋषभो महोक्षः वृषभराडिति यावत्। ऋषभीकर्तुमुद्दिष्टो वर्ष आर्षभ्य इत्युच्यते। ऋषभत्वं हि विकारः। वत्से आविर्भूयमानत्वात्। औपानह्यः। उपानहौ पादरक्षे तयोर्मुञ्जः क्रियमाणत्वादुपानहोरयमौपानह्यो मुञ्ज इत्युच्यते। मुञ्जो दारुविशेषः। ननु विकृतिभूतादुपानहोशब्दात्प्रकृतिभूते चर्मणि वाच्यायां चर्मणो ञिति अञि औपानहमिति स्यात्। चर्मणोञः परत्वादत आह पूर्वविप्रतिषेधेनेति। विप्रतिषेधे सति पूर्वस्यैवेष्टत्वेन बलवत्त्वमत्रेति पूर्वः ञ्य एव स्यादिति भावः। यञ्यावञः पूर्वविप्रतिषिद्ध ढञ्च इति वार्तिकमत्र पूर्वविप्रतिषेधविधायकम्। पूर्वविप्रतिषेधेन यत्प्रत्ययः ञ्यप्रत्ययश्च ढञ्च परमप्यञं बाधन्ते इति वार्तिकार्थः। औपानह्यं चर्म। चर्मणा दारुणा च उपानहौ क्रियेते इति चर्मापि प्रकृतिः। ***वर्ध्रे इदं वार्ध्रम्**। वध्रश्चर्म तस्य विकारो वाध्री।

**१६७७। चर्मणोऽञ्** ।५।१।१५। चर्मणो या विकृतिस्तद्वाचकादञ् स्यात्। वर्ध्रै इदं वार्ध्रं चर्म। वारत्रं चर्म॥ **१६७८। तदस्य तदस्मिन् स्यादिति** ।५।१।१६। प्राकार आसामिष्टकानां स्यात्प्राकारीया इष्टकाः। प्रासादीयं दारु। प्रकारोऽस्मिन् स्यात् प्रकारीयो देशः। इतिशब्दो लौकिकीं विवक्षामनुसारयति। तेनेह न। प्रासादो देवदत्तस्य स्यादिति॥

---

वृध्वृद्धाविति धातोरौणादिके ष्ट्रनि वर्ध्री ववर्ध्रैष्ट्रनि वध्री नह्यते अनयेति नध्री व्रियते अनयेति वरत्रा इति व्युत्पादिताः। वाध्री–वध्रा–वर्ध्री–नध्री–वरत्रा इति पञ्चपर्यायाः। चर्मरज्जुवाचकाः। तत्र वाध्र्यै इदं वाध्रम्। अञि यस्येति ईकारलोपात्। वध्र्यैइदं वाध्रम्। ञित्त्वादादिवृद्धेः। वर्ध्रै इदं वार्ध्रम्। नध्र्यै इदं नाध्रम्। वरत्रा इदं वारत्रम्। इति रूपपञ्चकं भवति। चर्मेति विशेष्यं पञ्चस्वपि। चर्मणा क्रियमाणत्वाद्रज्जोः। चर्मप्रकृतिः वध्र्यादयश्चर्मविकृतयः। मूले तु वर्ध्रीशब्दात् वरत्राशब्दाश्च अञि वार्ध्रम् वारत्रम्। इति द्वे एव उदाहृते। अवशिष्टा ऊह्या इति धिया। एवं स्थिते वध्रीशब्दादेवाञुदाहृतः। न तु वर्ध्रीशब्दादिति कृत्वा वर्ध्रै इदं वार्ध्रमिति परिमृज्य वध्र्यै इदं वाध्रमिति गुरुभिर्लिखितम्। तत्तु कौमुदीपाठसंप्रदायानुसारेणैव। न तु दोषधियेति बोध्यम्। ***तदस्येति।** अत्र वाक्यद्वयम्। तदस्य स्यादिति। तदस्मिन् स्यादिति च। तदिति प्रथमा। छस्याधिकारः। प्रथमान्तादस्येत्यर्थे अस्मिन्नित्यर्थे च छस्स्यात्। उगवादिभ्यस्तु यदेव। शङ्कुरस्मिन्स्याच्छङ्कव्यो देशः इत्यादि। तदस्य तदस्मिन् स्यादिति सांप्रदायिकः पाठः। सूत्रपाठेऽपि तथैव वर्तते। एतदनुगुणमेव मया वाक्यद्वयमत्रेत्युक्तम्। द्विस्तच्छब्दग्रहणादित्याशयात्। वस्तुतस्तु तदस्य तस्मिन् स्यादिति न्यासस्सुवच एव। तदस्यास्त्यस्मिन्नित्यत्रेवेति तत्त्वबोधिनी। प्राकार आसामिष्टकानां स्यात्। आभिरिष्टकाभिः प्रासादो निर्वर्त्येतेत्यर्थः। अनुसारयति व्याख्यातॄनिति शेषः। प्रयोक्तॄनिति वा। लौकिकी विवक्षा लोकोक्तिः। अयं देशः प्राकारस्थितियोग्य इत्येवमादिलोकास्संघीभूय व्यवहरन्ति। प्रथमान्तार्थस्तत्रास्तु वा मा वा। योग्यतामात्रे प्रत्ययोत्पत्तिरिति फलितम्। तेन प्राकारीयः प्राकारयोग्य इत्यर्थः पर्यवस्यति । *परिखेति। छस्यापवादः। परिखा अस्यां स्यात् पारिखेयी। परिखायोग्या इत्यर्थः। सप्तम्यन्तार्थमाह भूमिरिति। छयतोः पूर्णोवधिः छस्यापवादत्वेन यत्प्रत्ययस्य छावधिरेव अवधिर्भवतीति छयतोरवधिः पूर्ण इत्युक्तम्। ***प्राग्वतेष्ठञ्।** प्राग्वतीयेष्वर्थेषु ठञधिक्रियते इति फलितार्थः। ***आर्हादिति।** आ–अर्हात्। अगोपुच्छसङ्ख्यापरिमाणात्। ठक्। इति छेदः।

**१६७९। परिखाया ढञ्** ।५।१।१७। परिखेयी भूमिः॥ छ्यतोः **पूर्णोऽवधिः**॥

## तद्धितेष्वार्हीयाः ३३

**१६८०। प्राग्वतेष्ठञ्** ।५।१।१८। 'तेन तुल्यम् १७७८' इति वतिं वक्ष्यति ततः प्राक् ठञधिक्रियते॥ **१६८१। आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्** ।५।१।१९। 'तदर्हति १७२८' इत्येतदभिव्याप्य ठञधिकारमध्ये ठञोऽपवादष्ठगधिक्रियते गोपुच्छादीन्वर्जयित्वा॥ **१६८२। असमासे निष्कादिभ्यः** ।५।१।२०। आर्हादित्येतत् 'तेन क्रीतम् १७०२' इति यावत्सप्तदशसूत्र्यामनुवर्तते। निष्कादिभ्योऽसमासे ठक् स्यादार्हीयेष्वर्थेषु। नैष्किकम्। समासे तु ठञ्॥

---

सति तु समासे आर्हमिति स्यादिति बोध्यम्। आङ्मर्यादाभिविध्योरिति अभिविध्यर्थकोयमाङ् असमस्तः। अर्हादभिव्याप्येत्यर्थः। तदर्हतीति सूत्रे अर्हतावेकदेशस्यानुकरणशब्दोयमर्हेति। तदेतत्फलितमाह तदर्हतीत्यभिव्याप्येति। प्राग्वतेरिति ठञधिकारमध्ये ठ-गधिकारोयम्। विशेषविहितत्वात्तदपवादभूतः। ठक्ठञोर्न समुच्चय इति भावः। गोपुच्छेति स्वरूपग्रहणम्। सङ्ख्यापरिमाणयोरर्थग्रहणम्। सङ्ख्यावाचकान् परिमाणवाचकान् गोपुच्छशब्दञ्च वर्जयित्वेत्यर्थः। तेषु ठञधिकार एवेति यावत्। नञः प्रसज्यप्रतिषेधेन तान्वर्जयित्वेत्यर्थलाभः। आर्हाठ्ठगित्यस्य आर्हीयेष्वर्थेषु ठगधिक्रियते इति फलितोर्थः। अर्थे प्रत्ययविधानेन अर्हादभिव्याप्य येर्थास्तेषु ठगिति सिद्धत्वात्। अत एव उत्तरसूत्रे अनुवृत्तस्य आर्हादित्यस्य आर्हीयेष्वर्थेष्वित्यर्थस्योक्तिर्मूले सङ्गच्छते। ***असमासे इति**। आर्हादित्यनुवर्तते। कियत्पर्यन्तस्यानुवृत्तिरत आह। तेन क्रीतमिति यावदिति। तेन क्रीतमिति सूत्रपर्यन्तमित्यर्थः। मध्यस्थसूत्रसंङ्ख्यामाह। सप्तदशसूत्र्यामिति। सप्तदशानां सूत्राणां समाहारस्सप्तदशसूत्री। अदन्तो द्विगुस्स्त्रियामिष्ट इति वार्तिकाद्द्विगोरिति ङीप्। *परिमाणेति। उत्तरपदस्येत्यधिकारः। तद्धितेष्वचामादेः। अचोञ्णिति किति च। मृजेर्वृद्धिरित्यतो वृद्धिः। एते अनुवर्तन्ते। परिमाणं परिमाणवाचकम्पदमन्ते यस्य तत्परिमाणान्तम्। तस्य (तदवयवं) यदुत्तरपदन्तस्याचामादेरचो वृद्धिः। ञिति णिति किति च तद्धिते न तु सञ्ज्ञाशाणयोः परिमाणवाचकं तदुत्तरपदं यदि संञ्ज्ञा यदि च शाणन्तर्हि तस्य न वृद्धिः। परमनिष्केण क्रीतः परमनैष्किकः। असमासे इति निषेधादत्र ठञ्। परिमाणवाची निष्कशब्दः। परिमाणं परिच्छेदकम्। निष्केण हि सुवर्णं परिच्छिद्यते । इतः प्राक्-असमासे निष्कादिभ्य इति सूत्रात्प्राक्।

**१६८३ परिमाणान्तस्यासंज्ञाशाणयोः** ।७।३।१७। उत्तरपदवृद्धिः स्यात् ञिदादौ । परमनैष्किकः । असंज्ञेति किम् । पञ्च कलापाः परिमाणमस्य पाञ्चकलापिकम्। 'तदस्य परिमाणम् १७२३' इति ठञ् । असमासग्रहणं ज्ञापकं भवति इतः प्राक् तदन्तविधिरिति। तेन सुगव्यम्। यवापूप्यमित्यादि ॥ इत उर्ध्वं तु ॥ **संख्यापूर्वपदानां तदन्तग्रहणं प्राग्वतेरिष्यते तच्चालुकि** ॥ पारायणिकः। द्वैपारायणिकः। अलुकीति किम्। द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम्। द्विशूर्पेण क्रीते 'शूर्पादञ् १६९१' माभूत्। किंतु ठञ्। द्विशौर्पिकम् ॥ **१६८४ अर्धात्परिमाणस्य पूर्वस्य तु वा** ।७।३।२६। अर्धात्परिमाणवाचकस्योत्तरपदस्यादेरचो वृद्धिः पूर्वपदस्य तु वा

---

इत ऊर्ध्वमित्यारभ्य तच्चालुकीत्यन्तमसमाससूत्रस्थं वार्तिकम्। वार्तिकस्यायमर्थः। असमासे निष्कादिभ्यि इति सूत्रादुपरि तेन तुल्यमिति सूत्रपर्यन्तम्। तदन्तविधिरिष्यते। संख्यावाचकश्चेत्पूर्वपदमिति। सोऽपि तदन्तविधिरलुक्ये वेति च। यथापारायणतुरायणचान्द्रायणं वर्तयतीति पारायणात् ठञ्। तदन्तविधिना द्विपारायणादपि ठञ्–संख्यापूर्वपदत्वात्। परमपारयणात्तु न ठञ्। असङ्ख्यापूर्वपदत्वेन तदन्तविध्यभावात्। सङ्ख्यापूर्वपदं येषान्तेषां तदन्ते ग्रहणम्। तदन्तग्रहणम्। तदन्ते तदन्तविधौ संख्यापूर्वपदानां ग्रहणमिष्यते इत्यक्षरार्थः केवलाध्योविधिस्स तदन्ताद्यस्यात् तर्हि संख्यापूर्वपदादेवेति यावत्। तर्हि संख्या। पूर्वपदं यदि लुग्युक् (लुका युज्यते इति लुग्युक् लुग्भागित्यर्थः) तर्हि न तस्मात्स विधिस्स्यादिति । तच्चालुकीत्यस्य यावदर्थः। यदि लुगन्तं तर्हि न तस्मादिति वा। द्विशूर्पादञ्। द्वाभ्यां शूर्पाभ्यां क्रीतमित्यर्थे शूर्पाद्विहितोऽप्यञ् तदन्तविधिना द्विशूर्पाद्भवति, संख्यापूर्वत्वात्। तस्याञः अध्यर्धपूर्वेति लुकि लुगन्तं द्विशूर्पमिति पदम्। तस्मात्पुनः क्रीतार्थे ठञेव भवति नाञ्। लुगन्तत्वादिति भावः। ***अर्धादिति।** अर्धशब्दादित्यर्थः। परस्येति शेषः। पूर्वपदन्नाम अर्धात् अर्धपदमेव। द्रोणस्यार्धम् अर्धद्रोणम्। अर्धन्नपुंसकमिति एकदेशिसमासः। अर्धद्रोणशब्दात् तेन क्रीतमित्यर्थे ठकि कृते उत्तरपदस्य नित्यं वृद्धिः पूर्वपदस्य विकल्पेन द्रोणः परिमाणविशेषः । ***नातः परस्य**। न–अतः परस्य इति व्यासः। पूर्वसूत्रं सर्वमिहानुवर्तते, तेन अर्धात्परस्येत्यादिमूलोक्तार्थलाभः। परिमाणाकारस्य परिमाणवाचकस्य पदस्य अचाम्मध्ये आदिर्योकारस्तस्येत्यर्थः। अन्यस्य प्राप्त्यभावात्। (परिमाणस्यात इति पदद्वयस्यार्थः परिमाणाकारस्येति) आर्धकौडविकम्। अर्धकुडवशब्दाठ्ठकि उत्तरपदस्य परिमाणस्य कुडवेत्यस्य आदिरुकार एव नाकार इति न तस्य वृद्धिनिषेधः।

ञिति णिति किति च। अर्धद्रोणेन क्रीतम् आर्धद्रौणिकम्। अर्धद्रौणिकम्॥ **१६८५ नातः परस्य** ।७।३।२७। अर्धात्परस्य परिमाणाकारस्य वृद्धिर्न पूर्वपदस्य तु वा ञिदादौ। आर्धप्रस्थिकम्। अर्धप्रस्थिकम्। अतः किम्। आर्धकौडविकम्। तपरः किम्। अर्धखार्यां भवा अर्धखारी। अर्धखारीभार्य इत्यत्र 'वृद्धिनिमित्तस्य–८४०' इति पुंवद्भावनिषेधो न स्यात्॥ **१६८६ शताच्च ठन्यतावशते** ।५।१।२१। शतेन क्रीतं शतिकम्। शत्यम्। अशते किम्। शतं परिमाणमस्य शतकः सङ्घः। इह प्रत्ययार्थो वस्तुतः प्रकृत्यर्थान्न भिद्यते। तेन ठन्यतौ न किंतु कनेव। असमास इत्येव। द्विशतेन क्रीतं द्विशतकम्॥

---

किन्तु अर्थात्परिमाणस्येति नित्यमेव वृद्धिः। पूर्वपदस्य विकल्पेन वृद्धिरिति अर्थकौडविकमिति च रूपान्तरम्। आर्धखारी। तत्र भव इत्यणि आदिवृद्धिः। अणन्तात् ङीप्। ननु खारी इत्युत्तरपदस्य वृद्धत्वेन पुनर्वृद्धौ सत्यामसत्यां वा न रूपभेद इत्यत आह–अर्थखारी भार्य इत्यादि। अयं भावः। वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे इति वृद्धिशब्दविहितवृद्धिहेतुतद्धितान्तायास्स्त्रियः पुंवद्भावो निषिद्धः। पूर्वपदस्य वृद्धयभावपक्षे उत्तरपदपरिमाणआकारस्यापि वृद्धिनिषेधे वृद्धिहेतुर्नायं तद्धितोण् इति पुंवद्भावनिषेधो न घटते। सति तु पुंवद्भावे अर्थखारभार्य इति स्यात्। पूर्वपदस्य वृद्धिपक्षे तु अणो वृद्धिनिमित्तत्वमस्तीति पुंवद्भावनिषेधस्स्यादेवेति। आर्थखारी भार्य इति न प्रत्युदाहृतम्मूले। वृद्धिनिमित्तत्त्वञ्च वृद्धिम्प्रति फलोपहितत्वमित्युक्तं प्राक्तत्सूत्रव्याख्याने एवेति। अणः वृद्धिहेतुत्वे सत्यपि वृद्धयभावे वृद्धिनिमित्तत्वन्नेति बोध्यम्। ***शतादिति** असमासे इति पूर्वसूत्रादत्रानुवर्तते। आर्हादिति सप्तदशसूत्र्यामनुवर्तते इति प्रागेवोक्तम्। ठगधिकारः। तदपवादोऽयं ठन्। यच्च असामसे इत्येतदिहानुवर्तते इति ज्ञापनार्थश्चकारः। असमासे इत्यस्य स्वरितत्वाभावेन नानुवृत्तिस्सम्भवतीति असमासे इत्येतस्यानुकर्षणार्थश्चकार इति वा। शतादार्हीयेषु ठस्य तौ स्तः। प्रकृतिप्रत्ययसमुदायेन शतभिन्नेर्थे अभिधेये सतीत्यर्थः। शते अनभिधेये सतीति वा। शते अभिधेयेनेतीति वा। (नेति ठन्यतौ न स्त इत्यर्थः) ननु प्रत्ययआर्हीये विहित इति स्वार्थे प्रत्ययस्याविधानात् प्रकृत्यर्थ एव शतं भवति, न तु प्रकृतिप्रत्ययसमुदायार्थः। प्रकृतिप्रत्ययाभ्यां शतस्य आर्हीयस्य च अभिधीयमानत्वादिति अशतेः इति निषेधो व्यर्थः इति शङ्कायामाह। अशते किम् इति। ननु शतक इत्यत्रापि तदस्य परिमाणमिति परिमाणार्थे संख्याया अतिशदन्ताया इति कनो विहितत्वेन शतेति प्रकृत्या शतार्थः। कन्प्रत्ययेन परिमाणार्थश्च अभिधीयते इति प्रकृतिप्रत्ययसमुदायेन

**१६८७ संख्याया अतिशदन्तायाः कन्** ।५ ।१ ।२२। संख्यायाः कन् स्यादार्हीयेऽर्थे नतु त्यन्तशदन्तायाः। पञ्चभिः क्रीतः पञ्चकः। बहुकः। त्यन्तायास्तु, साप्ततिकः। शदन्तायाः, चात्वारिंशत्कः॥

---

अभिहितस्य शतपरिमाणरूपार्थस्य शतभिन्नार्थत्वमस्त्येवेति स्यादेवात्रापि ठन्। एतावता आह इहेत्यादि। अयं भावः। संख्याया अपि परिच्छेदकत्वधर्मेण परिमाणशब्दवाच्यत्वमस्ति। अन्यथा शतमस्य परिमाणमिति शतपरिमाणयोर्विशेषण– विशेष्यभावेनाभेदान्वयो न घटेत। एवं शतस्य परिमाणत्वं सिद्धम्। परिमीयतेऽनेनेति परिमाणं परिच्छेदकम् इति व्युत्पत्त्या शतादिः परिमाणमित्युच्यते। इति परिमाणस्य शतत्वञ्च सिद्धमिति शतपरिमाणयोर्न वस्तुतो भेदः। (वस्तुतः विचारिते सतीत्यर्थः) तस्मात्प्रकृतिप्रत्ययाभ्यां वस्तुतोऽभिन्नाभ्यां शतपरिमाणाभ्यां योऽभिधीयते सोऽर्थः शताद्भिन्नो न भवतीति। शतकशब्देन शतार्थ एवाभिधीयते। अतो न ठन्यताविति भावः। यद्वा – शतादार्हीयेषु ठन्यतौ स्तः। प्रत्ययेन शते अनभिधेये सतीति सूत्रार्थः। अस्मिंस्तु पक्षे परिमाणे विहितेन कना योऽभिधीयते परिमाणार्थः स वस्तुतश्शतादनतिरिक्त एवेति प्रत्ययेन शतस्याभिधेयत्वं (सुखेन ऊह्यम्) सुगमम्। अथवा शतशब्दस्य परिमाणविशेषाभिधायकत्वे आग्रहं परित्यज्य परिमाणसामान्ये लक्षणाभ्युपगन्तव्या। तथा च शते परिमाणे अनभिधेये सति अर्थात्प्रत्ययेनैव इत्यर्थो वाच्यः। अस्मिंस्तु व्याख्याने सर्वः क्लेशः परिहृतः। ***संख्यायाः।** अतिशदन्तायाः कन् इति व्यासः। तिश्च शच्च तिशतौ अन्ते यस्यास्सा तिशदन्ता तिशदन्यतरान्तेत्यर्थः। सा न भवतीत्यतिशदन्ता तिस्याः अतिशदन्यतरान्तात्संख्यावचकाच्छब्दादार्हीये कन् स्यादित्यर्थः। ठञोऽपवादः कन्। (अगोपुच्छसंख्यापरिमाणादिति संख्यायाः। पर्युदासेन ठगपवादः कन् इति तु न वाच्यम् । बहुकः बहुगणवतिडतिसंख्या इति बहोस्संख्यात्वम्। एतच्छास्त्रसङ्केतितायाः लौकिक्याश्च संख्याया इहाविशेषेण ग्रहणम्। तेन पञ्चकः बहुकः इत्युभयं सिद्ध्यति। बहुभिः क्रीतो बहुकः ***वतोरिति।** यत्तदेतेभ्यः परिमाणे वतुप्। इति वत्वन्ता या संख्या तस्याः परस्य कन इड्वेत्यर्थः। इडित्यागमः। टित्त्वात्कन आद्यवयवस्सन् भवति। वतोरिति प्रत्ययग्रहणात्तदन्तविधिः। प्राक्सूत्रादनुवृत्तस्य कनषष्ठ्यन्तत्वेन विपरिणामः। तावच्छब्दात्संख्याया अतिशदन्ताया इति कनि तस्य इडागमे तावतिकः। एवं यावतिकः एतावतिकः इति। इडभावपक्षे तावत्क इत्यादि। तावता क्रीत इत्यादयो विग्रहा ऊह्याः। ***विंशतित्रिंशद्भ्याम्** इत्येकं सूत्रम्। ड्वुन् संज्ञायामित्यन्यत्। विंशतीति सूत्रे संख्याया इति सूत्रात्कन् मण्डूकप्लुत्या अन्वेति। आभ्यामार्हीये कन् स्यादिति तदर्थः। ड्वुनिति सूत्रे विंशतीति सूत्रं सर्वमनुवर्तते।

**१६८८ वतोरिड्वा** ।५।१।२३। वत्वन्तात्कन इड्वा स्यात् । तावतिकः तावत्कः ॥ **१६८९ विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम्** ।५।१।२४। योगविभागः कर्तव्यः। आभ्यां कन् स्यात्। असंज्ञायां तु ड्वुन् स्यात्कनोऽपवादः। विंशकः। त्रिंशकः। संज्ञायां तु विंशतिकः त्रिंशत्कः । **१६९० कंसाट्टिठन्** ।५।१।२५। टो डीबर्थः। इकार उच्चारणार्थः। कंसिकः। कंसिकी॥ **अर्धाच्चेति वक्तव्यम्**॥ अर्धिकः। अर्धिकी **कार्षापणाट्टिठन्वक्तव्यः ॥ प्रतिरादेशश्च वा** ॥ कार्षापणिकः । कार्षापणिकी। प्रतिकः । प्रतिकी ॥ **१६९१ शूर्पादञन्यतरस्याम्** ।५।१।२६। शौर्पम् । शौर्पिकम् ॥ **१६९२ शतमानविंशतिकसहस्रवसनादण्** ।५।१।२७। एभ्योऽण् स्याट्ठञ् ठक्नामपवादः। शतमानेन क्रीतं शातमानम्। वैंशतिकम्। साहस्रम्। वासनम्॥ **१६९३ अध्यर्धपूर्वाद्द्विगोर्लुगसंज्ञायाम्** ।५।१।२८। अध्यर्धपूर्वाद्द्विगोश्च परस्यार्हीयस्य लुक् स्यात्। अध्यर्धकंसम्। द्विकंसम् । संज्ञायां तु पाञ्चकलापिकम्॥

---

आभ्यामसञ्ज्ञायां ड्वुन्स्यादिति तदर्थः। इति मत्वा आह योगविभागः कर्तव्यः इति। संज्ञाचात्र वैवक्षिकीति मन्तव्यम् ड्वुनो डित्करणन्तु टेरिति त्रिंशत ष्टिलोपार्थम्। विंशतेर्डितीति विंशतेस्तिलोपर्थञ्च। वोरकादेशः, यस्येति लोपः, विंशकः त्रिंशकः ***प्रतिरादेशश्च वा।** कार्षापणशब्दस्य टिठनि कृते प्रति इत्यादेशो वास्यादित्यर्थः। (आदिश्यते इत्यादेशः प्रतिः आदेशस्स्यादिति। प्रतिः इति प्रथमान्तश्शब्दः। इकारान्त एव। प्रतिर् आदेश इति छित्वा रेफान्तआदेशस्स्यादिति तु न भ्रमितव्यम्। प्रतिरिक इत्याद्यनिष्टरूपापत्तेः। ***शतमानं** शतस्य पर्यायशब्दोऽयम्। वसनं वस्त्रम्। ***अध्यर्धपूर्वद्विगोर्लुगसंज्ञायामिति** सूत्रपाठः। पूर्वाद्द्विगोरिति तु प्रामादिकः। अध्यर्धपूर्वद्विगोरिति पञ्चमीसामर्थ्यात्परस्येत्यस्य लाभः। (तस्मादित्युत्तरस्येति परिभाषाया इति भावः) आर्हीये विहितः प्रत्यय आर्हीयः। उपचारात् तत्र जात इत्यणा वा तस्य आर्हीयस्य। आहार्दिति पदानुवृत्त्या लब्धमार्हीयस्येति। (आर्हादिति पदस्य आर्हीये इत्यर्थः पुरैव निर्दिष्टः। अर्थस्य लुगसंभवेन आर्हीये जातस्येत्यर्थोऽधुनाभिधेय इति हेतोः) अध्यर्धेन कंसेन क्रीतमध्यर्धकंसम्। अध्यर्धेत्यस्य संख्यावाचित्वात्तद्धितार्थे द्विगुः। आर्हीयस्य ठञो लुक्। अलुकि तु आध्यर्धकंसिकमिति स्यात्। ननु अध्यर्धस्य संख्यावाचित्वेन तत्पूर्वस्य द्विगुत्वाव्यभिचारात् द्विगोर्लुगित्यनेनैव अध्यर्धकंसमिति सिद्धौ व्यर्थमध्यर्धपूर्वग्रहणमिति

शङ्कायामाह तत्त्वबोधिनी। सङ्ख्याकार्यमेतस्य किञ्चिन्नेति ज्ञापनार्थमिति। संख्याया यावत्कार्यं तावत्कार्यमध्यर्थस्य नास्तीति ज्ञापयितुमध्यर्थ पूर्वग्रहणमिति भावः। संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् इति संख्याकार्यं कृत्वसुच् अध्यर्थान्न स्यात्। अध्यर्थकृत्वः करोतीति प्रयोगो न स्यात्। किन्तु अध्यर्थकं करोतीत्येव। संख्याया अतिशदन्ताया इति कन् तु भवत्येव। यत्किञ्चिन्नेत्यनेन यत्किञ्चित्स्यादिति सिद्धत्वात्। द्विकंसम्। द्वाभ्यां कंसाभ्यां क्रीतमिति विग्रहे क्रीतार्थस्य ठञो लुक्। अत्रेदमवधेयम् । द्विगोः परस्य लुगिति। द्विगोर्निमित्तस्य च लुगिति च मतद्वयम्। द्विगोः परस्य लुगिति मते अध्यर्थपूर्वग्रहणस्य न वैयर्थ्यशङ्का। तद्धितान्तस्य द्विगुत्वेन अध्यर्थेन कंसेन क्रीतमिति विग्रहे अध्यर्थकंस ठञ् इत्यलौकिके च विग्रहे अध्यर्थकंस इत्यस्य अद्विगुत्वेन तस्मात्परत्वं ठञो न स्यादिति न ठञो लुक्। अध्यर्थकांसिकमित्येव स्यादिति द्विगोः परस्येत्यनेन अत्र ठञोऽलुकि लुगर्थमध्यर्थपूर्वग्रहणमावश्यकमिति। अध्यर्थञ्च तत्कंसञ्च अध्यर्थकंसमिति तत्पुरुषः। तस्मात्परस्यार्हीयस्य अध्यर्थकंसेन क्रीतमिति विग्रहे प्राप्तस्य ठञो लुक्। अध्यर्थकंसमिति तद्धितार्थे परतः पूर्वं द्विगुरिति यदीष्येत तर्हि अध्यर्थकंसेत्येतत् ठञि परतो द्विगुस्स्यान्न तु तथेष्टम्। तद्धितार्थे विषये इत्युक्तत्वात्। अस्मिंस्तु पक्षे द्वयोः कंसयोस्समाहारः द्विकंसम्। तेन क्रीतं द्विकंसमिति विग्रहो वक्तव्यः। द्वाभ्यां कंसाभ्यां क्रीतमिति विग्रहे तु दर्शितरीत्या द्विगोः परत्वं तद्धितस्य न स्यादिति। पञ्चानां कलापानां समाहारः पञ्चकलापम्। पञ्चकलापं परिमाणमस्य पाञ्चकलापिकमिति विग्रहः। द्विगोः परत्वं ठञोस्त्येव पाञ्चकलापिकमिति कस्यचित्सञ्ज्ञा। तेनात्र नार्हीयस्य लुगिति। द्विगोर्निमित्तस्येति द्वितीयपक्षे तु अध्यर्थपूर्वग्रहणं व्यर्थमेव । अध्यर्थेन कंसेन क्रीतमिति विग्रहे तद्धितार्थे विषये द्विगुरिति ठञः द्विगुनिमित्तत्वात्। एवं द्वाभ्यां कंसाभ्यां क्रीतं द्विकंसमित्येव। अस्मिंस्तु पक्षे असञ्ज्ञाग्रहणं व्यर्थम्। पञ्चानां कलापानां समाहारः पञ्चकलापं तेन क्रीतं पाञ्चकलापिकमिति वृत्तौ पञ्चकलापमित्यस्य समाहारे द्विगुत्वात्। द्विगुनिमित्तत्वं न ठञ इति सञ्ज्ञायामार्हीयस्य लुक एवाप्राप्तेः इति। वस्तुतस्तु द्विगोः परस्येति मतेऽपि अध्यर्थपूर्वग्रहणं व्यर्थमिति शङ्का घटते एव। तथा हि–तद्धितार्थे विषये सङ्ख्यापूर्वस्तत्पुरुषो द्विगुस्स्यादिति। तद्धितान्तस्य न द्विगुत्वम्। समासापवादत्वात्तद्धितानाम् इति तद्धितापवादत्वान्न द्विगोः। किन्तु तत्पुरुषापवादत्वमेव। पूर्वस्यां शालायाम्भव इति विग्रहे तद्धितार्थे विषये पूर्वशालेत्यस्य यथा तत्पुरुषत्वं तथा अध्यर्थेन कंसेन क्रीतमिति विग्रहेऽपि अध्यर्थकंसेत्यस्य ठञः प्रकृतिभूतस्य तत्पुरुषत्वे प्राप्ते तदपवादो द्विगुरिति

**१६९४ विभाषा कार्षापणसहस्राभ्याम्** ।५।१।२९। लुग्वा स्यात्। अध्यर्धकार्षापणम्। अध्यर्धकार्षापणिकम् द्विकार्षापणम्। द्विकार्षापणिकम्। औपसंख्यानिकस्य टिठनो लुक्। पक्षे अध्यर्धप्रतिकम्। द्विप्रतिकम्। अध्यर्धसहस्रम्। अध्यर्धसाहस्रम्। द्विसहस्रम्। द्विसाहस्रम्।

---

द्विगुत्वम्। एवं अध्यर्थ टा कंस टा, ठञ् इति अलैकिक विग्रहे सुब्लुकि अध्यर्धकंस ठञ् इति स्थिते तद्धितार्थविषयत्वस्य सत्त्वादध्यर्थकंस इत्ययं द्विगुः। तत्परत्वं ठञस्सुघटमेवेति द्विगोर्लुगित्यनेन लुक्। ठञः अध्यर्थकंस इति तद्धितान्तः। तद्धितान्तत्वेन कृत्तद्धितेति प्रातिपदिकत्वात्सुबुत्पत्तिः अध्यर्धकंसम् इति। *विभाषेति। प्राक्सूत्रं सर्वमिहानुवर्तते। अध्यर्थपूर्वाभ्यां द्विग्ववयवाभ्याञ्च कार्षापणसहस्राभ्याम्परस्य आर्हीयस्य लुग्वा स्यादसंज्ञायामिति सूत्रार्थः। नन्वत्रार्हीयः प्रत्ययः क इत्यत आह–औपसङ्ख्यानिकस्येत्यादिकार्षापणाट्टिठन्वक्तव्य इति वार्तिककारेण उपसंख्यातस्य टिठन्प्रत्ययस्यार्हीयस्यात्र लुगिति भावः। कार्षापणादयं टिठन्। सहस्रात्तु शतमानसूत्रेणार्हीयोऽण् इति बोध्यम्। पक्षे लुगभाव पक्षे इति न। अध्यर्थकार्षापणमित्यादेर्दर्शितत्वात्। किन्तु प्रत्यादेशपक्षे इत्यर्थः। अध्यर्थप्रतिकम्। नात्र टिठनो लुक्। प्रतिरादेशश्च वा इति। प्रत्यादेशस्य टिठन्सन्नियोगशिष्टत्वात्। न चैवम् प्रत्यादेश एव। अध्यर्थपूर्वस्य द्विग्ववयवस्य च कार्षापणस्य टिठनो लुकि माभूदिति वाच्यम्। विभाषा कार्षापणादिति कार्षापणशब्दादेव टिठनो लुक् विधीयते नत्वादेशात्प्रतेर्विहितस्येति। ननु प्रतेष्टिठन्न विहित एव। किन्तु कार्षापणाट्टिठन्। कार्षापणस्य तु प्रत्यादेश इति अध्यर्थप्रतिकमित्याद्युदाहरणं न सङ्गच्छते इति चेन्मैवम्। कार्षापणाद्यदा टिठनो विहितस्य लुक् तदा न प्रत्यादेशः। यदा त्वलुक् तदा तु प्रत्यादेशः पाक्षिक इति अध्यर्धकार्षापणिकमध्यर्थप्रतिकमिति रूपद्वयसिद्धेः। अध्यर्थप्रतीति तु न भवति। टिठनो लुकि प्रत्यादेशाभावादिति सर्वमनवद्यम्। *द्विनैष्किकम्। लुगभावे प्राग्वतेष्ठञ्। अगोपुच्छेति परिमाणस्य पर्युदस्तत्वेन परिमाणान्न ठक् इति। निष्कादिभ्य इत्यपि न ठक्। असमासे इति समासस्य पर्युदस्तत्वात्। ननु ऊर्ध्वमानं किलोन्मानं परिमाणन्तु सर्वतः इति प्रस्थादिपरिमाणविशेषवाच्ये वात्र परिमाणशब्दः न तु परिच्छेदकमात्रवाची संभवति। विशेषे सामान्यग्रहणस्य अनौचित्यत् इति चेन्मैवम्। संख्यापरिमाणयोः पृथग्ग्रहणेनापि यद्यपि विशेषपरिग्रह एव न्याय्य इति ज्ञाप्यते। तथापि संख्याभिन्नं परिच्छेदकमात्रमेवात्र गृह्यते। उन्मानादिवाचिभ्यो निष्कादिभ्यः ठञः प्राप्तौ (परिमाणस्य पर्युदस्तत्वेन उन्मानादीनाम्परिमाणत्वात् ठञेव प्राप्नोतीति) असमासे

**१६९५ द्वित्रिपूर्वान्निष्कात्** ।५ ।१ ।३० । लुग्वास्यात् । द्विनिष्कम् । द्विनैष्किकम् । त्रिनिष्कम् । त्रिनैष्किकम् ।। **बहुपूर्वाच्चेति वक्तव्यम्** । बहुनिष्कम् । बहुनैष्किकम् ॥ **१६९६ बिस्ताच्च** । ५ ।१ ।३१ । द्वित्रिबहुपूर्वाद्बिस्तादार्हीयस्य लुग्वा स्यात् । द्विबिस्तम् । द्विबैस्तिकमित्यादि ॥

---

इति सूत्रेण विधीयमानत्वादनर्थक इति। एवम् आर्हादिति सूत्रे परिमाणशब्देन परिच्छेदकमात्रमेवाभिधीयते इत्येकः पक्षः, परिमाणशब्देन प्रस्तादिविशेष एवाभिधीयते। अत एव उन्मानादिपरिमाणविशेषवाचिभ्यः निष्कादिभ्यः ठकः पूर्वसूत्रेणैव प्राप्तौ (परिमाणस्यैव पर्युदस्तत्वेन उन्मानादिभ्यः प्राग्वतेरिति ठञ् न प्राप्नोति किन्तु ठगेवेति भावः) समासे ठक् माभूदिति। किन्तु निषेधार्थमसमासे इति सूत्रं सङ्गच्छते इति द्वितीयः पक्षः। एतदानुगुण्येन द्विनैष्किक इत्यत्र ठगेव प्राप्नोति निष्कस्य उन्मानत्वेन (अगोपुच्छेति परिमाणस्यैव पर्युदस्तत्वात्परिमाणादेव ठञ् न तून्मानादिति) आर्हादिति सूत्रात् ठगिति मनोरमा। एतवता ग्रन्थसन्दर्भेण आर्हादिति सूत्रे पर्युदस्तस्य परिमाणशब्दस्य सामान्यविशेषवाचित्वाभ्याम्पक्षद्वयं प्रवृत्तम्। सामान्यवाचित्वे द्विनैष्किकमित्यत्र ठञ्। विशेषवाचित्वे ठक् इति सिद्धम्। सामान्यपक्षे असमासे इति विधिसूत्रम्। विशेषपक्षे नियमसूत्रमिति विवेकः। द्वित्रिपूर्वान्निष्कान्ताद्द्विगोः परस्य निमित्तस्य वा आर्हीयस्य लुग्वेति सूत्रार्थः। बहुगणेति बहोस्सङ्ख्यात्वात्। बहुभिर्निष्कैः। क्रीतं बहुनिष्कमिति तद्धितार्थे द्विगुः। लुगभावपक्षे ठञि ठकि वा संख्यायास्संवत्सरसंख्यस्य चेत्युत्तरपदवृद्धिः। बहुनैष्किकम् । नन्विह ठक् दुर्लभः विशेषवाचित्वपक्षे स्यादिति न वाच्यम्। असमासे इति सूत्रेण समासे न ठक् इति सिद्धत्वादिति चेत् सत्यम् चिन्त्यैषा मनोरमा । द्वि नैष्किकमित्यत्र मतान्तरे तु ठगिति । तथाहि सामान्यवाचित्वपक्षे असमासे निष्कादिभ्यष्ठग्विधीयते इत्यर्थात्। समासे ठञेव। विशेष वाचित्वपक्षेपि असमासे एव निष्कादिभ्यष्ठगिति नियमार्थेऽपि समासे ठञेवेति द्विनैष्किकमित्यस्य समासत्वाट्ठञन्तत्वमेव न तु ठगन्तत्वमिति। एवं बहुनिष्कशब्दादपि ठञेव न तु ठक्। ***विंशतिकात्खः।** विंशतिशब्दात्संख्याया अतिशदन्ताया इति कनस्त्यन्तत्वेन अप्राप्तौ विंशतित्रिंशद्भ्यामिति कन्। अध्यर्धः विंशतिः परिमाणमस्य अध्यर्धविंशतिकः। तेन क्रीतमित्यर्थे खः विधानसामर्थ्यान्नास्य अध्यर्धपूर्वेति लुक्। एवं द्वे विंशती प्रमाणमस्यद्विविंशतिकः तेन क्रीतं द्विविंशतिकीनम्। अध्यर्धपूर्वात् द्विग्ववयवाच्च विंशतिकादार्हीये खः इति सूत्रार्थः। ***खार्या ईकन्।** पूर्ववदर्थः। अध्यर्ध

**१६९७ विंशतिकात्खः** ।५ ।१ ।३२ ।अध्यर्धपूर्वाद्द्विगोरित्येव । अध्यर्धविंशतिकीनम् । द्विविंशतिकीनम् ॥ **१६९८ खार्या ईकन्** ।५ ।१ ।३३ । अध्यर्धखारीकम् । द्विखारीकम् ॥ **केवलायाश्चेति वक्तव्यम्** ॥ खारीकम् ॥ **१६९९ पणपादमाषशताद्यत्** ।५ ।१ ।३४ । अध्यर्धपण्यम् । द्विपण्यम् । अध्यर्धपाद्यम् । द्विपाद्यम् । इह 'पादः पत् ४१४' इति न । 'यस्य -३११' इति लोपस्य स्थानिवद्भावात् । 'पद्यत्यतदर्थे ९९१' इत्यपि न । प्राण्यङ्गार्थस्यैव तत्र ग्रहणात् । **१७०० शाणाद्वा** ।५ ।४ ।३५ । यत्स्यात्पक्षे ठञ् । तस्य लुक् । अध्यर्धशाण्यम् । अध्यर्धशाणम् ॥

---

खारी प्रमाणमस्येत्यर्थे अध्यर्थखारिशब्दादीकन् अध्यर्थखारीकम्। एवं द्वे खार्यौ प्रमाणमस्य द्विखारीकम्। परिमाणमेवानयोरार्हीयोऽर्थः। केवलायाः अपूर्वाया इत्यर्थः। समासानवयवीभूताया इति यावत्। ***पणेति।** अत्राप्यध्यर्थपूर्वद्विगोरित्यस्यान्वयोस्ति तेनार्थः प्राग्वत्। पणादयः परिमाणवाचिनः। अध्यर्थः पादः परिमाणमस्येति विग्रहे यति कृते अध्यर्धपाद-य-यस्येति लोपः। अद्यर्थपात्-य। इदानीं पादः पदादेशः प्राप्तः पादः पत् पाच्छब्दान्तं यदङ्गं भम् तदवयवस्य पादः पदादेश इति सूत्रार्थः) स न भवति। अचः परस्मिन्पूर्वविधाविति यादितद्धितनिमित्तकः अचस्स्थानिको लोपादेशः स्थानिवद्भवति। स्थानिभूतादचः पूर्वत्वेन दृष्टस्य पाद् इत्यस्य पदादेशे कर्तव्ये इति स्थानिवद्भावेन अङ्गस्य पादशब्दान्तत्वात्। ननु पद्यत्यतदर्थे पादस्य पत्स्यात्। अतदर्थे यति परे इति सूत्रेण पादेत्यदन्तस्य पदादेशस्याद्यत्परकत्वस्य सत्त्वात्। न च यस्येति लोपे कृते अदन्तत्वन्नास्तीति वाच्यम्। दर्शितरीत्या स्थानिवद्भावेन अदन्तत्वात् इति शङ्कायामाह-प्राण्यङ्गार्थस्यैव तत्र ग्रहणादिति। पद्यतीति सूत्रे अनुवृत्तो यः पादशब्दः सः प्राण्यङ्गस्य अंघ्रेः पर्यायभूत एव। न तु परिमाणवाचक इति भावः। ***शाणाद्वेति।** अध्यर्धपूर्वद्विगोरित्येव यदनुवर्तते पक्षे ठञ् यदभावपक्षे ठञित्यर्थः। परिमाणस्य विशेषवाचित्वमते तु अगोपुच्छेति परिमाणस्यैव पर्युदासः न तून्मानस्येति। उन्मानाच्छाणादार्हीदिति ठगेवेति बोध्यम् । न च असमासे निष्कादिभ्य इति समासे ठञेवेति न ठगिति वाच्यम्। निष्कादिषु शाणस्यापाठात्। मतान्तरे तु ठगिति मनोरमा । यद्यत्र पठचते तर्हि सफला स्यात्। तस्य लुक्। यतस्तु न लुक् विधानसामर्थ्यात्। अन्यत्र चरितार्थत्वान्न विधानसामर्थ्य ठञ इति अध्यर्थपूर्वेत्यनेन ठञो लुक्स्यादिति भावः। अध्यर्थश्शाणम्परिमाणमस्येत्यध्यर्धशाण्यमिति वृत्तिः। ***त्रैरूप्यम्।**

**१७०१ । द्वित्रिपूर्वादण् च** । ५ ।१ ।३६ । शाणादित्येव । चाद्यत् । तेन त्रैरूप्यम्। 'परिमाणान्तस्यासंज्ञाशाणयोः १६८३' इति पर्युदासादादिवृद्धिरेव। द्वैशाणम्। द्विशाण्यम्। द्विशाणम्। इह ठञादयस्त्रयोदशप्रत्ययाः प्रकृतास्तेषां समर्थविभक्तयोऽ - र्थाश्चाकाङ्क्षितास्त इदानीमुच्यन्ते॥ **१७०२ ।तेन क्रीतम्** ।५ ।१ ।३७ । ठञ्। गोपुच्छेन क्रीतं गौपुच्छिकम् साप्ततिकम्। प्रास्थिकम्। ठक्। नैष्किकम्॥ **१७०३ इद्गोण्याः** ।१ ।२ ।५० । गोण्या इत्स्यात्तद्धितलुकि । लुकोऽपवादः । पञ्चभिर्गोणीभिः क्रीतः पटः पञ्चगोणिः ॥

---

रूपत्रयमित्यर्थः। त्रयाणां रूपाणां समाहारस्त्रिरूपं ततस्स्वार्थे ष्यञ् त्रैरूप्यम्। त्रयोदशप्रत्ययाः। ठञ्-ठक्-ठन्-यत्। कन्-ड्वुन्-टिठन्-अञ्-अण्-खः, ईकन् इत्येकादश। शताच्चेति सूत्रे पणमाषेति सूत्रे च द्विर्यत्प्रत्ययग्रहणात्। विधायकसूत्रभेदेन यतोर्भेद इति यता द्वितीयेन सह द्वादश उक्तन्यायेन शतमानसूत्रेण द्वित्रिपूर्वादित्यनेत विधीयमानमण्द्वयमिति अणा द्वितीयेन सह त्रयोदश इति। ननु एते प्रत्ययाः किं विभक्तचन्तेभ्यः केषु केष्वर्थेषु विधीयन्ते इत्याकांक्षा अत्रोदेतीत्याह-आकांक्षिता इति। उच्यन्ते सूत्रकारेणेति शेषः। पूर्वमेवोक्ता अपि व्याख्यानदशामाश्रित्य वर्तमाननिर्देशः। यद्वा-उच्यन्ते व्याख्यायन्ते मयेति शेषः। उच्यन्ते इति प्रतिज्ञा। ***ठक् असमासे** निष्कादिभ्य इति केवलान्निष्काट्ठक्। नैष्किकम्। सप्ततिस्संख्या-प्रस्थः परिमाणः सामान्यविशेषपक्षद्वयसाधारण्येन प्रास्थिक इत्युदाहृतम्। ठञि ठकि वा रूपभेदाभावात्। ***इद्गोण्याः**। लुक्तद्धितलुकीति प्राक्सूत्रात्तद्धितलुकीत्यस्यानुवृत्तिः। गोणशब्दात् स्त्रियां जातेरस्त्रीविषयादिति ङीष्। गोणी पञ्चभिर्गोणीभिः क्रीत इत्यर्थे अगोपुच्छेति संख्यायाः पर्युदासात् ठञ्। तस्य अध्यर्धपूर्वद्विगोरिति लुक्। पञ्चगोणी इति स्थिते इद्गोण्याः। अलोऽन्त्यस्येतीदादेशोन्त्यस्य भवति। पञ्चगोणि। ननु इतस्तपरकरणं व्यर्थम्। न च इकारस्यापि ग्रहणमिति वाच्यम्। ईकारस्थाने ईकारविधानस्य वैयर्थ्यात्। न दीर्घग्रहणमिति चेन्मैवम्। लुगपवादाय ईकारस्थाने ईकारविधिरपि सार्थ एव। अन्यथा लुक्स्यात् इति। गोणः परिमाणविशेषः । ***तस्येति।** षष्ठ्यन्तान्निमित्तमित्यर्थे प्रत्ययः। तच्चेन्निमित्तं संयोग उत्पातो वा। शतिकश्शत्यः। शताच्च ठन्यतावशते इति ठन्यतौ। शतस्य निमित्तमिति विग्रहः। संयोगोऽत्र निमित्तमित्याह । धनपतिसंयोग इति धनपतिना संयोग इति तृतीयासमासः। धनपतिना सह संयोगश्शतस्य निमित्तभूत इति निमित्तमत्र संयोग इति भावः। दक्षिणाक्षिस्पंदनस्य पुंसां शुभसूचकत्वेन

**१७०४ तस्य निमित्तं संयोगोत्पातौ** ।५।१।३८। संयोगः संबन्धः । उत्पातः शुभाशुभसूचकः । शतिकः शत्यो वा धनपतिसंयोगः। शतिकं शत्यं वा दक्षिणाक्षिस्पन्दनम्। शतस्य निमित्तमित्यर्थः॥ **वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम्**।। वातस्य शमनं कोपनं वा वातिकम्। पैत्तिकम्। श्लैष्मिकम्॥ **संनिपाताच्चेति वक्तव्यम्**॥ सान्निपातिकम्॥ **१७०५। गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत्** ।५।१।३९। गोर्निमित्तं संयोग उत्पातो वा गव्यः। द्व्यचः, धन्यः। यशस्यः। स्वर्ग्यः। गोद्व्यचः किम्। विजयस्य वैजयिकः। असंख्येत्यादि किम्। पञ्चानां पञ्चकम्। सप्तकम्। प्रास्थिकम्। खारीकम्। अश्वादि, आश्विकम्। आश्मिकम्॥ **ब्रह्मवर्चसादुपसंख्यानम्**॥ ब्रह्मवर्चस्यम्॥

---

उत्पातत्वम्। दक्षिणाक्षिस्पंदनं शतस्य निमित्तभूतमिति शतिकमित्युच्यते । ठनि यति तु शत्यमिति। ***वातेति** प्रकृतीनां त्रित्वादर्थयोर्द्वित्वाच्च नात्र यथासंख्यम्। तेन वातात् पित्तात् श्लेष्माच्च शमनकोपनयोः प्रत्ययाः। शमनं शान्तिकरम्। कोपनमुद्दीपकम्। वातिकमित्यादौ आर्हीदिति ठक्। सान्निपातिकम्। ***गोद्व्यच इति** गोशब्दात् द्व्यच्काच्च शब्दात् षष्ठ्यन्तान्निमित्तमित्यर्थे यत्प्रत्ययः। तच्चेन्निमित्तं संयोग उत्पातो वा तच्चेद्द्व्यच्कम्। संख्यापरिमाणवाचकम् अश्वादिगणपठितञ्च न भवति इति सूत्रार्थः। पञ्चन् सप्तन् शब्दौ द्व्यच्कावपि संख्यावाचकाविति प्रस्थखारीशब्दौ द्व्यच्कावपि परिमाणवाचकौ इति। अश्व-अश्मन् शब्दौ द्व्यच्कावपि अश्वादिगणपठिताविति। न तेभ्यो निमित्तार्थे यत्। किन्तु पञ्चन् सप्तन् भ्याम्। संख्याया अतिशदन्ताया इति कन्। प्रस्थात् प्राग्वतेष्ठञ्। विशेषवाचिपरिमाणपर्युदासपक्षे आर्हीदिति ठक्। खार्या ई कन्। केवलायाश्चेति वार्तिकात्। अश्व-अश्मन्-भ्याम्आर्हीदिति ठक्-इति विवेकः। ***ब्रह्मवर्चसशब्दात्** निमित्तार्थे यदुपसंख्यातव्यमित्यर्थः। ब्रह्महस्तिभ्यां वर्चस इति समासान्तोऽच् ब्रह्मवर्चसम्। तस्य निमित्तं ब्रह्मवर्चस्यम्। यज्ञादिकं कर्म-ज्ञानं वा। पुत्रस्य निमित्तं पुत्रीयः पुत्र्यः पुत्रकामेष्टिर्वा। ***पृथिव्या** निमित्तं धनपतिसंयोगः पार्थिवः। पृथिवीशब्दादञि ञित्त्वाद्वृद्धिरार्। ननु आदिवृद्धौ सार्वभूम इति भवितव्ये कथं सार्वभौम इति शङ्कायामाह-अनुशतिकेति। अनुशतिकादित्वादुभयपदवृद्धिरिति भावः। ***तस्येश्वरः**। षष्ठ्यन्तादीश्वर इत्यर्थे प्रत्ययाः। ***तत्रेति**। सप्तम्यन्ताद्विदित इत्यर्थे च प्रत्ययाः-तस्येश्वरस्तत्र विदितः इति। एकमेव सूत्रं कर्तुमुचितम्। यद्यपि तथापि उत्तरसूत्रे तत्र विदित इत्यस्यानुवृत्तिर्यथास्यात्तस्येश्वर इत्यस्य यथा न स्यात् तदर्थं योग विभागः।

**१७०६। पुत्राच्छ च** ।५।१।४०। चाद्यत्। पुत्रीयः। पुत्र्यः॥ **१७०७। सर्वभूमिपृथिवीभ्यामणञौ** ।५।१।४१। सर्वभूमेर्निमित्तं संयोग उत्पातो वा सार्वभौमः पार्थिवः। सर्वभूमिशब्दोऽनुशतिकादिषु पठ्यते॥ **१७०८। तस्येश्वरः** ।५।१।४२। **१७०९। तत्र विदित इति च** ।५।१।४३। सर्वभूमेरीश्वरः सर्वभूमौ विदितो वा सार्वभौमः पार्थिवः॥ **१७१०। लोकसर्वलोकाट्ठञ्** ।५।१।४४। तत्र विदित इत्यर्थे। लौकिकः। अनुशतिकादित्वादुभयपदवृद्धिः। सार्वलौकिकः॥ **१७११। तस्य वापः** ।५।१।४५। उप्यते अस्मिन्निति वापः। क्षेत्रम्। प्रस्थस्य वापः प्रास्थिकम्। द्रौणिकम्। खारीकम्॥

---

विदितः प्रसिद्धः सर्वभूमेरीश्वरस्सार्वभौमो राजा। सर्वभूमौ विदितः सार्वभौमः पण्डितः राजा धनी वा। एवमीश्वरे विदितत्वं यद्यप्यस्ति तथापि विदिते ईश्वरत्वन्नैकान्तिकमिति ईश्वरविदितयोर्भेदः। सर्वभूमिपृथिवी-भ्यामणञाविति अणञौ भवतः। सर्वभूमिपृथिवी-शब्दाभ्यामीश्वरविदितयोः। न च तस्य निमित्तमित्येवाणञौ न तु ईश्वर विदितयोर्विधायकाभावादिति वाच्यम्। सर्वभूमीति सूत्रमेव विधायकमिति सर्वभूमिपृथिवीभ्यामणञौ स्तः। आर्हीये इति तदर्थात्। ननु आर्हादित्येतत्सप्तदशसूत्र्यामनुवर्तते इति प्रागुक्तंमूले। तत्कथमधुना आर्हीये इत्यर्थलाभ इति चेत्सत्यम्। तस्येश्वरस्तत्र विदित इति सूत्रद्वये सर्वभूमीति सूत्रं सर्वमनुवर्तते। तथा च षष्ठ्यन्ताभ्यामाभ्यामीश्वर इत्यर्थे सप्तम्यन्ताभ्यां विदित इत्यर्थे च अणञौ स्त इति सूत्रयोरर्थः। सर्वभूमीति सूत्रस्य तु षष्ठ्यन्ताभ्यामाभ्यान्निमित्तमित्यर्थे अणञौ स्त इत्यर्थः इति। ***लोकेति।** अत्र तत्र विदित इत्यनुवर्तते। लोकात्सर्वलोकाच्च सप्तम्यन्ताद्विदिते ठञ्। आर्हादिति ठकोपवादः। ***तस्य वापः**। षष्ठ्यान्ताद्वाप इत्यर्थे प्रत्ययाः। प्रस्थादिभ्यः सामान्यवाचिपरिमाणपर्युदासपक्षे ठञ्, विशेषवाचित्वपक्षे ठक्। द्रोणशब्दात्तु असमासे इति उभयथाऽपि ठक्। वापो बीजनिक्षेपः। प्रस्थादयस्तत्परिमितधान्ये भाक्ताः। अन्यथा असामर्थ्यादेव तद्धितानुत्पत्तेः। न हि प्रस्थादय उप्यन्ते भूमौ। ***ष्ठन्।** ठञः ठको वा अपवादः। पात्रस्य प्रस्थादिवत्परिमाणविशेषत्वात्। षो ङीषर्थः। पात्रिकी। भक्तिर्भागः। षष्ठ्यन्तात्पात्राद्वापे ष्ठन्निति सूत्रार्थः। ***तदस्मिन्निति।** प्रथमासमर्थाद्दीयते इत्युपाधिमतः सप्तम्यर्थे प्रत्ययाः। स चेत्प्रथमान्तार्थः। वृद्ध्याद्यन्यतमः । पञ्च अस्मिन् दीयते पञ्चकः। संख्यावाचिना पञ्चन् शब्देन वृद्ध्यादिरत्र विवक्ष्यते, तेन पञ्चसंख्याके पञ्चन् शब्दस्य लक्षणा वक्तव्या। विंशतिरस्मिन् दीयते इत्यत्र तु विंशतेर्न लक्षणा। "विंशत्याद्यास्सदैकत्वे संख्यास्संख्येयसंख्ययो" रित्यमरोक्त्या

**१७१२। पात्रात् ष्ठन्** ।५।१।४६। पात्रस्य वापः क्षेत्रं पात्रिकम्। पात्रिकी क्षेत्रभक्तिः ॥ **१७१३। तदस्मिन्वृध्द्यायलाभशुल्कोपदा दीयते** ।५।१।४७। वृद्धिर्दीयत इत्यादि क्रमेण प्रत्येकं संबन्धादेकवचनम्। पञ्चास्मिन् वृद्धिः आयः लाभः शुल्क उपदा वा दीयते पञ्चकः। शतिकः। शत्यः। साहस्रः। उत्तमर्णेन मूलातिरिक्तं ग्राह्यं वृद्धिः। ग्रामादिषु स्वामिग्राह्यो भाग आयः। विक्रेत्रा मूल्यादधिकं ग्राह्यं लाभः। रक्षानिर्वेशो राजभागः शुल्कः। उत्कोच उपदा॥ **चतुर्थ्यर्थे उपसंख्यानम्**॥ पञ्चास्मै वृद्ध्यादिर्दीयते पञ्चको देवदत्तः। सममब्राह्मणे दानमितिवदधिकरणत्वविवक्षा वा॥ **१७१४। पूरणाध-र्द्ठन्** ।५।१।४८। यथाक्रमं टक्टिठनोरपवादः। द्वितीयो वृद्ध्यादिरस्मिन् दीयते द्वितीयिकः। तृतीयिकः। अर्धिकः। अर्धशब्दो रूपकस्यार्धे रूढः॥

---

संख्येयस्याप्यभिधायकत्वात्। एवं लक्षणया पञ्चसंख्याकेत्यर्थसिद्धौ का सा पञ्चसंख्याकेति विशेष्याकांक्षायां वृद्ध्यादिर्विशेष्यत्वेन विवक्षणीया इति। यदि वृद्ध्यादिपञ्चकं विवक्ष्यते तदा तद्धितोत्पत्तिः। यदा तु तद्भिन्नं तदा नेति सिद्धम्। पञ्चरूपिकाः दीयन्तेऽस्मिन् यज्ञे इत्यत्र पञ्चक इति माभूदिति वृद्ध्यादिपञ्चकग्रहणम्। पञ्चपञ्चसंख्याका वृद्धिः दीयते अस्मिन्निति पञ्चको ऋणः। पञ्चन्शब्दस्य नित्यबहुत्वेऽपि तत्संख्याकवृद्ध्यादीनामेकत्वेन दीयते इत्येकवचनम्। विग्रहे प्रयुक्तमिति बोध्यम्। यद्वा–पञ्चास्मिन् दीयन्ते इति बहुवचनान्तत्वेन विपरिणमय्य विगृहीतव्यम्। अर्थस्तु एकत्वमेव। पञ्चेत्यादीनां संख्येयवाचकत्वमित्युक्तत्वात्। उत्कोचः बलिः, रक्षानिर्वेशः। प्रजाभ्यस्स्काशात्तद्रक्षणार्थं राज्ञा गृह्यमाणं द्रव्यमेवमुच्यते। ***चतुर्थीति**। सप्तम्यर्थे इव चतुर्थ्यर्थेऽपि प्रथमान्तात्पूर्वोक्तात्प्रत्ययो वक्तव्य इत्यर्थः। ननु अब्राह्मणाय दानमिति वक्तव्ये सम्प्रदानस्य अधिकरणत्वविवक्षया अब्राह्मणे दानमिति यथाप्रयोगः तथा पञ्चअस्मिन् दीयते पञ्चको देवदत्त इति अधिकरणत्वविवक्षया सम्प्रदानेऽपि सप्तमी इति अस्मिन्नित्यस्य अस्मै इत्येवार्थः। विग्रहे तु अस्मिन्नित्येव प्रयोगः। तथा च सूत्रादेव प्रत्ययसिद्धौ व्यर्थमिदं वार्तिकमिति शङ्कायामाह–सममित्यादि। वार्तिकवैयर्थ्यमिष्टमेवेति भावः। अधिकरणविवक्षया वा पञ्चको देवदत्त इति सिद्ध्यति वार्तिकाभावेऽपीति तदर्थः। ***पूरणेति**। पूरणार्धयोस्समाहारः पूरणार्धं तस्मात् प्रथमान्तात्पूरणान्तात्। अर्धाच्च। दीयते इत्युपाधिमतः सप्तम्यर्थे ठन्। स चेत्प्रथमान्तार्थः वृद्ध्याद्यन्यतमः इति सूत्रार्थः। द्वेस्तीयः त्रेस्सम्प्रसारणञ्च इति तीयः पूरणप्रत्ययः तदन्तौ द्वितीयतृतीयशब्दौ अर्धो वृद्ध्यादिरस्मिन् दीयते अर्धिकः। रूपकस्य रूपिकाया इत्यर्थः। अर्धः (आंध्रे अर्धरूपायि) संख्याया एव पर्युदासः न तु संख्येयस्येति। संख्येयस्येति। संख्येयत्वादद्वितीयतृतीयाभ्यामाहीदिति ठक्।

**१७१५। भागाद्यच्च** ।५।१।४९। चाट्ठन्। भागशब्दोऽपि रूपकस्यार्धे रूढः। भागो वृद्ध्यादिरस्मिन् दीयते भाग्यं भागिकं शतम्। भाग्या भागिका विंशतिः॥ **१७१६। तद्धरति वहत्यावहति भाराद्वंशादिभ्यः** ।५।१।५०। वंशादिभ्यः परो यो भारशब्दस्तदन्तं यत्प्रातिपदिकं तत्प्रकृतिकाद्द्वितीयान्तादित्यर्थः। वंशभारं हरति वहत्यावहति वा वांशभारिकः। ऐक्षुभारिकः। भाराद्वंशादिभ्य इत्यस्य व्याख्यान्तरं भारभूतेभ्यो वंशादिभ्य इति। भारभूतान्वंशान् हरति वांशिकः। ऐक्षुकः॥ **१७१७। वस्त्रद्रव्याभ्यां ठन्कनौ** ।५।१।५१। यथासंख्यं स्तः। वस्त्रं हरति वहत्यावहति वा वस्त्रिकः। द्रव्यकः॥

---

***भागिकं** शतम्। शतस्य वृद्धिः। भागपरिमितो धीयते इत्यर्थः (नूटिकि अर्धरूपायिवड्डी)।

***तद्धरतीति**। तदिति द्वितीयेत्याह–द्वितीयान्तादिति। हरति–वहति–आवहति इत्यर्थत्रये प्रत्ययास्स्युरिति शेषः। वंश–कुटज–बल्बज–मूल–स्थूण–अक्ष–अश्मन्। अश्व–श्लक्ष्ण–इक्षु–खट्वा–वंशादिः। अन्या व्याखा व्याख्यान्तरम्। मयूरव्यंसकादित्वात्समासः। वंशान् हरति वांशिकः। भारद्योतनाय बहुवचनम्। तेन वंशं हरतीति विग्रहे तद्धितो न भवति। वंशस्यापि दीर्घस्थूलस्य भारभूतत्वमस्तीति तद्विवक्षायाम्। एकत्वेऽपि वांशिक इति स्यादेवेति बोध्यम्। ***वस्त्रेति**। अत्र तद्धरति वहत्यावहतीत्येतावदनुवर्तते। द्वितीयान्ताभ्यामाभ्यां हरत्यादिषु ठन्कनौ स्तः। ठकोऽपवादः। (भ्याम्–ठन् इति स्थिते, मोऽनुस्वारः, अनुस्वारस्य ययि परसवर्णः। भ्यांठन् इति सूत्रे संधिः।) वास्निक इति प्रामादिकः पाठः। वृद्धिहेत्वभावात्। तत्त्वबोधिन्यामपि वस्निक इत्येव प्रटीकायां स्वीकृतम्। वस्न ठन् ठस्य कः, यस्येति लोपः वस्निकः सम्भेति तदित्यत्रानुवर्तते । सम्भवति धरतीत्यर्थः। प्रास्थिकः, ठञ्। पक्षे ठक्। उभयथापि टिड्ढेति ङीप्। प्रास्थिकी। अवहरति उपसंहरति प्रस्थशब्दः एष्वर्थेषु प्रस्थपरिमितधान्ये भाक्तः। तेन कटाहस्य प्रस्थपरिमितधान्यधारणम्। ब्राह्मण्याः। प्रस्थपरिमितधान्योपसंहारश्च पचनञ्च सङ्गच्छते। अत्र मूले अवहरतीत्यनन्तरं उपसंहरतीति केषुचित्पाठः। उपसंहारस्सञ्चयनम्। ***पक्षे ठञ्**। परिमाणस्य सामान्य वाचित्वविशेषवाचित्व–रूपद्विमतानुसारेणेदमुक्तम्। आढकादीनाम्परिमाणन्तु सर्वत इत्युक्तलक्षणपरिमाणत्वात्।

**१७१८। संभवत्यवहरति पचति** ।५।१।५२। प्रस्थं संभवति प्रास्थिकः कटाहः। प्रस्थं स्वस्मिन्समावेशयतीत्यर्थः। प्रास्थिकी ब्राह्मणी। प्रस्थमवहरति पचति वेत्यर्थः॥ **तत्पचतीति द्रोणादण् च**॥ चाट्ठञ्। द्रोणं पचतीति द्रौणी। द्रौणिकी॥ **१७१९। आढकाचितपात्रात्खोऽन्यतरस्याम्** ।५।१।५३। पक्षे ठञ्। आढकं संभवति अवहरति पचति वा आढकीना। आढकिकी। आचितीना। आचितिकी। पात्रीणा पात्रिकी॥ **१७२०। द्विगोः ष्ठंश्च** ।५।१।५४। आढकाचितपात्रादित्येव। आढकाद्यन्ताद्द्विगोः संभवत्यादिष्वर्थेषु ठन्खौ वा स्तः। पक्षे ठञ् तस्य 'अध्यर्ध-१६९३' इति लुक्। षित्वान्ङीष्। द्व्याढकिकी। व्याढकीना। द्विगोः ४७९ इति ङीप्। द्व्याढकी। द्व्याचितिकी। व्याचितीना। 'अपरिमाण-४८०' इति ङीप्निषेधात्। व्द्व्याचिता। द्विपात्रिकी। द्विपात्रीणा। द्विपात्री॥ **१७२१। कुलिजाल्लुक्खौ च** ।५।१।५५। कुलिजान्तादिद्वगोः संभवत्यादिष्वर्थेषु लुक्खौ वा स्तः। चात् ष्ठंश्च। लुगभावे ठञः श्रवणम्। द्विकुलिजी। द्वैकुलिजिकी। द्विकुलिजीना। द्विकुलिजिकी॥

---

षित्वान् ङीप् ष्ठनीति भावः। द्वे आढके संभवतीति तद्धितार्थे द्विगुः। ष्ठनि द्व्याढकिकी। खे-अदन्तत्वाट्टाप्। द्व्याढकीना। ठञि तस्य लुकि द्व्याढकी। द्व्याचितशब्दात् ठञि तस्य लुकि द्विगोरिति ङीपि प्राप्ते अपरिमाणबिस्ताचितकंबल्येभ्यो न तद्धितलुकि। आचितान्तादद्विगोर्ङीप्निषेधः। अपरिमाणान्तान्न ङीबिति। परिमाणान्तात्तु स्यादेवेति द्व्याढकात् ङीप् द्व्याढकी। न च द्व्याचितस्यापि परिमाणान्तत्वात्स्याद् ङीबिति वाच्यम्। आचितान्न स्यादिति विशिष्य उक्तत्वात्। ***कुलिजेति।*** लुग्वा स्यात् खो वा स्यादिति वाक्यद्वयम्। अधिकृतस्य ठञो लुक्। कुलिजशब्दः प्रस्थादिवत्परिमाणवाची। लुकि द्विकुलिजी। ठञि द्वैकुलिजिकी। खे द्विकुलिजीना। ष्ठनि द्विकुलिजिकी। ***स इति*** प्रथमान्तादंशाद्यन्यतमोपाधिमतः अस्येति षष्ठ्यर्थे प्रत्ययाः। वस्नो मूल्यम्। पञ्च अस्य पञ्चकः। संख्याया इति कन्। ***तदिति*** प्रथमान्तात्परिमाणोपाधिकात् षष्ठ्यर्थे प्रत्ययाः। प्रास्थिकः। प्राग्वतेरिति ठञ्। ***संख्याया*** इति पूर्वसूत्रमनुवर्तते। अत एव सोस्यांशवस्नभृतिपरिमाणानीति नैकसूत्रं कृतमिति बोध्यम्। प्रकृतिप्रत्ययसमुदायेन संज्ञादिषु वाच्येषु संख्यावाचकप्रथमान्तात्परिमाणोपाधिकात् षष्ठ्यर्थे प्रत्ययास्स्युः। तदस्य परिमाणमित्यनेनैव सिद्धे नियमार्थमिदम्।

**१७२२। सोऽस्यांऽशवस्नभृतयः** ।५ ।१ ।५६। अंशो भागः। वस्नं मूल्यम्। भृतिर्वेतनम्। पञ्च अंशो वस्नो भृतिर्वास्य पञ्चकः॥ **१७२३। तदस्य परिमाणम्**। ।५ ।१ ।५७। प्रस्थं परिमाणमस्य प्रास्थिको राशिः॥ **१७२४। संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु** ।५ ।१ ।५८। पूर्वसूत्रमनुवर्तते। तत्र॥ **संज्ञायां स्वार्थे प्रत्ययो वाच्यः**॥ यद्वा द्व्येकयोरितिवत्संख्यामात्रवृत्तेः परिमाणिनि प्रत्ययः। पञ्चैव पञ्चकाः शकुनयः। पञ्च परिमाणमेषामिति वा। सङ्घे पञ्चकः। सूत्रे अष्टकं पाणिनीयम्। सङ्घशब्दस्य प्राणिसमूहे रूढत्वात्सूत्रं पृथगुपात्तम्। पञ्चकमध्ययनम्॥

---

संख्यावाचकप्रथमासमर्थात्परिमाणे यदि प्रत्ययस्तर्हि सञ्ज्ञादिष्वेवेति। ननु संख्येयपर्यवसायिन्यास्संख्यायास्सामर्थ्याभावादेव परिमाणे प्रत्ययो न स्यादिति। संज्ञायामिति दुरुपपादम्। अयं भावः। पञ्चकाश्शकुनय इति, शकुनीनां पञ्चका इति संज्ञा। पञ्चसंख्याका इत्यर्थः। पञ्चन् शब्देनैव संख्येयपर्यवसायिना पञ्चसंख्याका इत्यर्थलाभेन कन् प्रत्ययो व्यर्थः। अपि च पञ्चपरिमाणमेषामिति विग्रहे पञ्च-पञ्चसंख्याकाः परिमाणमित्यर्थो संगतः। शकुनीनामेव पञ्चसंख्याकत्वेन पञ्चसंख्याकत्वं परिमाणस्यासंभवीति। एवं संख्येयवाचिनः पञ्चन्शब्दात् परिमाणार्थे प्रत्ययो न स्यात्संज्ञायामुक्तरीत्या असामर्थ्यात्। न हि पञ्चकाश्शकुनय इत्यत्र पञ्चसंख्याक परिमाणवदभिन्नाश्शकुनय इति शाब्दबोधः प्रतीयते। किन्तु पञ्चसंख्याकवदभिन्ना इत्येव। अन्यथा पञ्चकशब्देन संज्ञाया एवानवगमादिति। अत्रोत्तरतया वार्तिकं पठति। तत्र संज्ञायामित्यादि। पञ्चैव पञ्चका इति विग्रहः। पञ्चैवेत्यस्य पञ्चसंख्याका एवेत्यर्थः। अथ वार्तिकं प्रत्याख्याय स्वमतमाह-यद्वेत्यादिना। संख्येयपर्यवसायित्वमत्र संख्याया मास्तु, किन्तु संख्यापर्यवसायित्वमेव। एवम् पञ्चपरिमाणमेषामिति पञ्चकाः। पञ्चसंख्यात्मकपरिमाणवदभिन्ना इति परिमाणार्थे प्रत्ययस्सुघट इति भावः। परिमाणिनीति मत्वर्थो विवक्षितः। परिमाणे इत्यर्थः। यद्वा - परिमाणवति सज्ञायां प्रत्यय इत्यर्थः। परिमाणवदभिन्नसंज्ञावाचकत्वे प्रत्ययो भवतीति यावत्। वस्तुतस्तु परिमाणे प्रत्यय इति पठितव्यम्। परिमाणिनीत्यपपाठः। प्रत्ययश्च संख्याया अतिशदन्ताया इति कन्। पञ्चपरिमाणमस्य संघस्य पञ्चकस्संघः। अष्टावध्यायाः परिमाणमस्य अष्टकं पाणिनेस्सूत्रम्। सूत्रमिति जात्येकवचनम्। (पाणिनेः सूत्रं पाणिनीयं। वृद्धाच्छः) ननु अष्टौ परिमाणमस्य संघस्य अष्टकः पाणिनिसूत्रसंघः इति। अत्रापि संघ एवाभिधीयते इति तेनैव सिद्धौ सूत्रे पृथक्सूत्रग्रहणं व्यर्थमत आह- संघशब्दस्येत्यादि। प्राणिसंघे वाच्ये एवात्र प्रत्ययस्संघेति विधीयते। न त्वप्राणिसंघे

**स्तोमे डविधिः** ॥ पञ्चदश मन्त्राः परिमाणमस्य पञ्चदशः । सप्तदशः । एकविंशः । सोमयागेषु छन्दोगैः क्रियमाणा पृष्ठ्यादिसंज्ञिकास्तुतिः स्तोमः ॥ **१७२५ । पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्य-शीतिनवतिशतम्** ।५ ।१ ।५९ । एते रूढिशब्दा निपात्यन्ते ॥ **१७२६ । पञ्चद्दशतौ वर्गे वा** ।५ ।१ ।६० । पञ्च परिमाणमस्य पञ्चद्वर्गः । दशत् । पक्षे पञ्चकः । दशकः ॥ **१७२७ । त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण्** ।५ ।१ ।६२ । त्रिंशदध्यायाः परिमाणमेषां ब्राह्मणानां त्रैंशानि । चात्वारिंशानि ब्राह्मणानि ॥

---

वाच्ये। संघः प्राणिसमूह इति रूढ्या संघस्य केवलसमूहवाचकत्वे अपर्यवसानात्। योगाद्रूढिर्बलीयसी इति न्यायात्। सूत्राणामप्राणित्वेन तत्समूहे वाच्ये प्रत्ययो न स्यादिति। सूत्रग्रहणमिति। न च योगमाश्रित्य सूत्रपदं प्रत्याख्येयमिति वाच्यम्। नवानां मणीनां सङ्घो नवक इत्यत्र नवपरिमाणमेषामिति विग्रहो मा भूदिति। (समूहार्थे कन्प्रत्ययस्स्यादेव। परिमाणार्थे कन्माभूदिति भावः।) ननु तस्य समूह इत्यधिकारे कन्विधायकसूत्राभावात्समूहा कथं कन् स्यादिति चेत् उच्यते। तस्येदमित्यनेन महोत्सर्गा अणादयो विधीयन्ते इत्युक्तम्। नवानामयमिति सामान्यविवक्षायामणादिषु प्राप्तेषु तदपवादस्संख्याया इति कन् इति। (ठञो महोत्सर्गत्वेन प्राप्तौ तदपवादः कन् इति भावः) ***स्तोमे** वाच्ये परिमाणे संख्यायाः प्रत्ययो विधीयते इत्यर्थः। (डस्य विधिर्डविधिः) ***पञ्चदिति**। एतौ रूढिशब्दौ वने अभिधेये इत्यर्थः। वर्गस्समूहः। पञ्चपरिमाणमस्य पञ्चत्। दशपरिमाणमस्य दशत्। ***त्रिंशदिति।** छन्दोब्राह्मणानीत्यत्रेव अत्रत्यब्राह्मणशब्दः वेदविवरणरूपब्राह्मणाख्यग्रन्थपरः। ब्राह्मणे संज्ञायामित्यलुक्सप्तम्याः षष्ठ्यर्थे चेयं सप्तमी। ब्राह्मणस्य संज्ञायामित्यर्थः। प्रकृतिप्रत्ययसमुदायेन ब्राह्मणसंज्ञा वाच्या चेदित्यर्थः। संज्ञायां गम्यमानायां ब्राह्मणेऽभिधेये सतीति वा अर्थः। डणो डित्त्वाट्टिलोपः। णित्त्वादादिवृद्धिः। अ इति शिष्यते। ***तदिति** अर्हतीत्यस्यार्थमाह–लब्धयोग्यो भवतीति। योग्यो भवतीत्येतावांस्तु नार्थः। द्वितीयान्तेन सह असामर्थ्यात्। तदिति द्वितीयेत्याह द्वितीयान्तादिति। ठञादयः प्राग्वतेष्ठञ् आर्हादिति ठक् इत्येवमादयः यथाविहितं प्रत्ययाः स्युः इत्यर्थः। ***नित्यमिति।** तदर्हतीत्यनेनैव। छेदमर्हति छैदिक इत्यादिसिद्धौ नित्यमर्हतीत्यर्थे प्रत्ययविध्यर्थमिदं सूत्रम्। अर्हतीत्यर्थे छेदादिभ्यः प्रत्ययो माभूदित्येतदर्थञ्च। नित्यमर्हतीत्यर्थे एव यथा स्यात्। अर्हतीत्यर्थे यथा न स्यात् छेदादिभ्यः प्रत्ययः तदर्थमिदं सूत्रमिति भावः। छेदादिभ्योप्यर्हत्यर्थे प्रत्ययोत्पत्ताविष्टापत्तिं कृत्वा प्रत्याख्यातमिदं सूत्रम् भाष्ये। छेदादिभ्यः नित्यमर्हतीत्यर्थे प्रत्ययस्स्यादिति सूत्रार्थः। छैदिक

**१७२८। तदर्हति** ।५।१।६३। लब्धुं योग्यो भवतीत्यर्थे द्वितीयान्ताट्ठञादयः स्युः। श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः॥ **१७२९। छेदादिभ्यो नित्यम्** ।५।१।६४। नित्यमाभीक्ष्ण्यम्। छेदं नित्यमर्हति छैदिको वेतसः। छिन्नप्ररूढत्वात्॥ (ग) **विरागविरङ्गं च**॥ विरागं नित्यमर्हति वैरागिकः। वैरङ्गिकः॥ **१७३०। शीर्षच्छेदाद्यच्च** ।५।१।६५। शीर्षच्छेदं नित्यमर्हति शीर्षच्छेद्यः। शैर्षच्छेदिकः। यट्ठकोः संनियोगेन शिरसः शीर्षभावो निपात्यते॥ **१७३१। दण्डादिभ्यो यत्** ।५।१।६६। एभ्यो यत् स्यात्। दण्डमर्हति दण्ड्यः। अर्घ्यः। वध्यः॥

---

इति ठक्। ननु वेतसस्य कथं नित्यं छेदार्हत्वमत आह छिन्नप्ररूढत्वादिति। छिन्नस्सन् प्रकर्षेण रोहतीति छिन्नप्ररूढः। छेदनात्प्राक् यथा वर्तते छेदनानन्तरं ततोऽपि प्राबल्येन वर्तते इति हेतोः पुनःपुनश्छिद्यते वेतस इति भावः। ***विरागेति।** विरागशब्दाद्द्वितीयान्तान्नित्यमर्हतीत्यर्थे ठक् स्यात्। विरागशब्दो विरङ्गादेशं च लभते इति गणसूत्रस्यार्थः। वैरङ्गिक इत्युदाहरणम्। विरागन्नित्यमर्हतीति विग्रहः। वैरागिक इति तु प्रामादिकः पाठः। चकारस्य विकल्पार्थत्वे तु विरागः विरंगादेशं वा लभते इति वैरागिक इति यद्यपि सिद्ध्यति, तथापि विरंगादेशस्य प्रत्ययसन्नियोगशिष्टत्वबोधकत्वार्थं चकाराभावे विराग इत्यर्थे विरंग इत्यपि प्रयोगस्स्यात्। तच्च नेष्टमिति बोध्यम् । (विराग इति लुप्तप्रथमाकं पदम्) ***शीर्षेति।** शिरश्छेदशब्दाद्द्वितीयान्तान्नित्यमर्हतीत्यर्थे यत्प्रत्ययः। चाद्यथाप्राप्तष्ठक्। शिरसश्शी (षदिशनिपातनञ्च) र्षभावश्च स्यादित्यर्थः। शीर्षभावश्च स्यादित्यर्थस्तु शीर्षछेदेति निपातनादेव लभ्यते इति बोध्यम्। ***(छेदशब्देन** व्यवधानाद्यति परतोऽपि ये च तद्धिते इत्यनेन शिरसश्शीर्षभावो न भवति) ***दण्डेति**। नित्यमिति निवृत्तम्। अर्हतीतित्वनुवर्तते। तदिति च ठकोऽपवादोऽयम् प्रत्ययः। अत्र दण्डादिभ्यः इत्येतावदेवसूत्रम्। यदिति पूर्वसूत्रादनुवर्तते। एभ्यो यत्स्यादित्यर्थः। इतिकृत्वा कौमुद्यां दण्डादिभ्यः एभ्यो यत्स्यादिति परिष्कर्तव्यमिति तत्त्वबोधिनीकारः। ***घंश्च** घन् च इति छेदः। नकार इत्। घस्येयादेशः। यस्येति लोपः, पात्रियः। ***निपातनात्खच्।** मेघर्तिभयेषु कृञ इति मेघाद्युपपदकात्कृञः खच् विधीयते। कडोपपदकात्तु विधानाभावान्न खच् इति। कडङ्करेत्यस्मान्निपातनादेव कडोपपदकात्कृञः खच् इति भावः। खचि कृते तु अरुर्द्विषदजन्तस्य मुम् इति मुमागमे कडङ्करः इति रूपसिद्धिः। कडङ्करं मदकरमित्यवयवार्थः । माषमुद्गादिकाष्ठमिति समुदायार्थः. ***स्थाल्याबिलं** स्थालीबिलम्। बिलं रन्ध्रः । स्थालीपात्रम्। पाकार्थं पात्ररन्ध्रं प्राप्तुं योग्याः स्थलीबिलीया इत्युच्यन्ते न

**१७३२। पात्राद्घंश्च** ।५।१।६८। चाद्यत् तदर्हतीत्यर्थे। पात्रियः। पात्र्यः॥ **१७३३। कडङ्करदक्षिणाच्छ च** ।५।१।६९। चाद्यत्। कडं करोतीति विग्रहे अतएव निपातनात् खच्। कडङ्करं माषमुद्गादिकाष्ठमर्हतीति कडङ्करीयो गौः। कडङ्कर्यः। दक्षिणामर्हतीति दक्षिणीयः। दक्षिण्यः॥ **१७३४। स्थालीबिलात्** ।५।१।७०। स्थालीबिलमर्हन्ति स्थालीबिलीयास्तण्डुलाः। स्थालीबिल्याः। पाकयोग्या इत्यर्थः॥ **१७३५। यज्ञर्त्विग्भ्यां घखञौ** ।५।१।७१। यथासंख्यं स्तः। यज्ञमृत्विजं चार्हति यज्ञियः। आर्त्विजीनो यजमानः॥ **यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम्**॥ यज्ञियो देशः। आर्त्विजीन ऋत्विक्॥ **आर्हीयाणां ठगादीनां द्वादशानां गतोऽवधिः**॥ अतः परं ठञेव॥

---

हि सतुषं धान्यं स्थालीबिलमर्हतीति वितुषं शुभ्रं धान्यं तण्डुलात्मकमेवं स्थालीबिलीयमित्युच्यते। ***आर्त्विजीनः**। ऋत्विजं प्राप्तुं योग्य इत्यर्थे ऋत्विज्। अम्। ख-इति स्थिते सुब्लुकि ऋत्विज् ख-खस्येनादेशः। ञित्त्वादादिवृद्धिरार् आत्विजीनः। यज्ञार्थमृत्विगुपसरणयोग्य इत्यर्थः। (अर्थादिसामग्रीमत एव तद्योग्यत्वात्) ***तत्कर्मार्हति।** तस्य यज्ञसम्बन्धि-ऋत्विक्सम्बन्धि वा कर्म तत्कर्म, द्वितीयान्तमिदम्। तत्कर्म प्राप्तुं योग्य इत्यर्थे यज्ञर्त्विग्भ्यां क्रमेण घखयोरुपसङ्ख्यानं कर्तव्यमित्यर्थः। यज्ञकर्मार्हति यज्ञीयो देशः। ऋत्विक्कर्मार्हति आर्त्विजीनो ऋत्विक्। ऋत्विक्कर्म निर्वहणचण इत्यर्थः। अत्र ऋत्विज इति यज्ञस्येति च षष्ठीसमर्थात् कर्मार्हतीत्यर्थे प्रत्यय इति बोध्यम्। अर्हति क्रियाम्प्रति कर्मणः कर्मीभूतत्वेन यज्ञर्त्विजोः कर्मत्वासम्भवेन असामर्थ्याद्द्वितीयानुत्पत्तिरिति। ठगादीनां द्वादशानामिति। ठञादयस्त्रयोदशेत्युपपादितं प्राक्। तत्र प्राग्वतेरिति ठञधिकारश्शिष्यते इति मत्वा ठगादीनामित्युक्तम्। **इत्यार्हीयाः।**

*श्रीहयग्रीवाय नमः*

अतः परं ठञेव। तदर्हतीत्येतदभिव्याप्य ठञोऽपवादः ठगधिक्रियते इत्युक्तं प्राक्। तदर्हतीत्येतद्यावदनुवर्तते तावन्ति सूत्राणि व्याख्यातानीति ठगधिकारस्य पूर्णत्वेन अपवादेन मुक्ते तत उत्सर्ग इति न्यायात्। पारायणेति सूत्रमारभ्य तेन तुल्यमिति सूत्रपर्यन्तं ठञ एवाधिकार इति भावः। अधिक्रियते इति शेषः। अतः परं ठञेवाधिक्रियते इत्यन्वयः। *वर्तयति निर्वर्तयति करोतीति यावत्। वृतु वर्तने भ्वादिरयम्। ततो हेतुमण्णिचि वर्तयति। वृतु वृधु भाषायामिति दण्डकपठितः चुरादिरपि धातुरस्ति। तस्य नेह ग्रहणम्। अभाषार्थत्वादत्रत्यधातोः। यद्यपि शिष्यः पारायणं स्वयमेव करोतीति हेतुमण्णिजनर्थकस्तथापि

## तद्धितेषु ठञधिकारः ३४।

**१७३६। पारायणतुरायणचान्द्रायणं वर्तयति** ।५।१।७२। पारायणं वर्तयति पारायणिकश्छात्रः। तुरायणं यज्ञविशेषः, तं वर्तयति तौरायणिको यजमानः। चान्द्रायणिकः॥ **१७३७। संशयमापन्नः** ।५।१।७३। संशयविषयीभूतोऽर्थः सांशयिकः॥ **१७३८। योजनं गच्छति** ।५।१।७४। यौजनिकः॥ **क्रोशशतयोजनशतयोरुपसंख्यानम्**॥ क्रोशशतं गच्छति क्रौशशतिकः। यौजनशतिकः॥ **ततोऽभिगमनमर्हतीति च वक्तव्यम्।** क्रोशशतादभिगमनमर्हतीति क्रौशशतिको भिक्षुः। यौजनशतिक आचार्यः॥ **१७३९। पथः ष्कन्** ।५।१।७५। षो ङीषर्थः। पन्थानं गच्छति पथिकः। पथिकी॥

---

वाचा करणेन वर्तयतीति णिजर्थस्सुसङ्गत एवेति बोध्यम्। अत एव करोतीति यावदिति मयोक्तम्। करणाद्यविवक्षायां स्वस्यैव कर्तृत्वादिति। एवं तुरायणं वर्तयति ऋत्विगादिभिर्निर्वर्तयति तौरायणिको यजमानः। चान्द्रायणं वर्तयति मनसा चान्द्रायणिकिस्तपस्वी। ***संशयमिति** द्वितीयान्तनिर्देशात्समर्थविभक्तिर्द्वितीया। एवं पूर्वसूत्रेऽपि बोध्यम्। आपन्न इत्यस्य विषय इत्यर्थः। संशयमापन्नः संशयस्य विषयः पदार्थः सांशयिक इत्युच्यते। द्वितीयान्तात्संशयादापन्नार्थे ठञ् इति सूत्रार्थः ***तत इति**। पञ्चम्यन्तादभिगमनमर्हतीत्यर्थे ठञ्। अभितः आभिमुख्येन गमनं गतिः अभिगमनम् (आंध्रे एदुर्कोनुट) क्रौशशतिकः. क्रोशशतादभिगमनीय इत्यर्थः। क्रोशशततदूरे भिक्षुं दृष्ट्वा भिक्षोरभिमुखं यथातथा गन्तव्यं न तु भिक्षुं पृष्ठतः कुर्यादिति भावः। स्वम्प्रत्याभिमुख्येन परकर्तृकं गमनं लब्धुमर्हतीति अभिगमनार्हत्वं भिक्ष्वादीनाम् इति। आचार्यो गुरुः। ***पथ इति।** अत्र गच्छतीत्यनुवर्तते। तच्च गमनं पूर्वसूत्रे द्वितीयान्तसम्बद्धमिति इहापि द्वितीयान्तलाभः। द्वितीयान्तात्पथिन्शब्दाद्गच्छत्यर्थे ष्ठन्। ठञोऽपवादः। षो ङीषर्थः। षिद्गौरादिभ्यश्चेति षित्वात् ङीष्। ***पन्थ इति।** प्रथमान्तोयम्। पथ इति गच्छतीति च अनुवर्तते। पान्था। अदन्तत्वाट्टाप्। ताच्छीलिके णे एव अण्कार्यं न त्वन्यस्मिन् णे इति नात्राण्कार्य ङीबिति दर्शयितुं पान्थेत्युदाहृतम्। उत्तरपथेनेति तृतीयान्तादुत्तरपथशब्दात् आहृतमित्यर्थे चाद्गच्छत्यर्थे ठञ् स्यात्। उत्तरः पन्था उत्तरपथः। ऋक्पूरब्धूः पथामानक्षे इति समासान्तोकारः आहृतमानीतमित्यर्थः। ***आहृतेति।** आहृञ्चेति प्रकरणे वारि–जंगल –स्थल–कान्तार इत्येतत्पूर्वात्पथिन्शब्दात्तृतीयान्तात् ठञ् स्यादित्यर्थः। आहृतप्रकरणस्य गच्छत्यर्थसमुच्चयसाहित्यात्। आहृते गच्छतावपि च वारिपथादिभ्यः ष्ठञ् । ***कालात्।** अधिकारसूत्रमिदम्।

**१७४०। पन्थो ण नित्यम्** ।५।१।७६। पन्थानं नित्यं गच्छति पान्थः। पान्थी॥ **१७४१। उत्तरपथेनाहृतं च** ।५।१।७७। उत्तरपथेनाहृतं औत्तरपथिकम्। उत्तरपथेन गच्छति औत्तरपथिकः॥ **आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वादुपसंख्यानम्।** वारिपथिकम्॥ **१७४२। कालात्** ।५।१।७८। 'व्युष्टादिभ्योऽण् १७६१' इत्यतः प्रागधिकारोऽयम्॥ **१७४३। तेन निर्वृत्तम्** ।५।१।७९। अह्ना निर्वृत्तमाह्निकम्॥ **१७४४। तमधीष्टो भृतो भूतो भावी** ।५।१।८०। अधीष्टः सत्कृत्य व्यापारितः। भृतो वेतनेन क्रीतः। भूतः स्वसत्तया व्याप्तकालः। भावी तादृश एवानागतः कालः। मासमधीष्टो मासिकोऽध्यापकः। मासं भृतो मासिकः कर्मकरः। मासं भूतो मासिको व्याधिः। मासं भावी मासिक उत्सवः॥

---

अधिकारस्यावधिमाह–व्युष्टादिभ्यः प्रागिति। ***तेनेति**। तृतीयान्तात् कालाभिधायकान्निर्वृत्तमित्यर्थे ठञ्। अहन्। इक अल्लोपो नः। अहान् इक, वृद्धिः। आह्निकम्। ***तमिति** । अधिक्रियमाणं कालादिति पदं द्वितीयान्तत्वेन विपरिणमितव्यमिति बोधयति तमिति द्वितीयानिर्देशः। द्वितीयान्तात्कालविशेषवाचकाच्छब्दात् अधीष्टभृतभूतभाविषु चतुर्ष्वर्थेषु ठञ् स्यादित्यर्थः। मासमधीष्ट इत्यादौ कालाध्वनोरत्यन्तसंयोगे चेति द्वितीया। व्यापारितः व्यापारं कारितः। सत्कारपूर्वकमन्येन प्रेरितस्सन् यो व्याप्रियते कर्मणि अर्थादन्यस्यैव। सः अधीष्ट इत्युच्यते। भूतः भू–सत्तायामिति धातोः भूतार्थे क्तः भूतः। अस्यैव फलितार्थमाह–स्वसत्ताया व्याप्तकाल इति। व्याप्तकाल इति बहुव्रीहिः। भावी स्वसत्तया व्यापिष्यमाणकाल इत्यर्थः। इदमेवाह तादृश एवानागत काल इति। स्वसत्तया व्याविष्यमाणम्। अत एव अनागतं कालं यस्य स इत्यर्थः। तादृशः स्वसत्तया व्याप्तकाल एवेत्यर्थः। अत्र व्याप्तेत्यस्य भविष्यदर्थो वाच्यः। भूतार्थत्वे अनागतकाल इत्यनेन सह विरोधात्। मासिकोध्यापकः। मासे अध्ययनकर्मणि ससत्कारं यजमानेन प्रेरितोध्यापकः मासिक इत्युच्यते इत्यर्थः। कर्मकरः (आन्ध्रे कूलिवाडु) मासिको व्याधिः। व्याधिः स्वसत्तया व्याप्तमासपरिमितकालश्चेन्मासिक इत्युच्यते। एकंमासमविच्छेदेन वर्तमानो व्याधिरित्यर्थः। उत्सवः। उत्सूते हर्षमित्येष उत्सवः परिकीर्तितः। अयमुत्सवः एकं मासमविच्छेदेन भविष्यतीति यो निर्दिश्यते स मासिक उत्सवः इति। ***मासादिति।** तं भूतयोरत्रानुवृत्तिः। द्वितीयान्तान्मासाद्भूतार्थे यत् खञ् इत्येतौ स्तः। वयसि गम्यमाने सति इत्यर्थः। मास्यो मासीनश्शिशुः। मासपरिमित इत्यर्थः। शिशुः स्वसत्तया (स्वविद्यमानत्वेन) व्याप्तमासकाल

**१७४५। मासाद्वयसि यत्खञौ** ।५।१।८१। मासं भूतो मास्यः। मासीनः॥ **१७४६। द्विगोर्यप्** ।५।१।८२। मासाद्वयसीत्यनुवर्तते। द्वौ मासौ भूतो द्विमास्यः॥ **१७४७। षण्मासाण्ण्यच्च** ।५।१।८३। वयसीत्येव। यबप्यनुवर्तते। चाट्ठञ्। षण्मास्यः। षाण्मासिकः॥ **१७४८। अवयसि ठंश्च** ।५।१।८४। चाण्ण्यत्। षण्मासिको व्याधिः षाण्मास्यः॥ **१७४९। समायाः खः** ।५।१।८५। समामधीष्टो भृतो भूतो भावी वा समीनः॥ **१७५०। द्विगोर्वा** ।५।१।८६। समायाः ख इत्येव। 'तेन परिजय्य–१७५७' इत्यतः प्राङ्निर्वृत्तादिषु पञ्चस्वर्थेषु प्रत्ययाः।द्विसमीनः। द्वैसमिकः॥ **१७५१। रात्र्यहः संवत्सराच्च** ।५।१।८७। द्विगोरित्येव। द्विरात्रीणः। द्वैरात्रिकः। द्व्यहीनः। द्वैयह्निकः। समासान्तविधेरनित्यत्वान्न टच्। द्विसंवत्सरीणः॥

---

इति मासिक इत्युच्यते। अनेन मासपरिमितं शिशोर्वय इति गम्यते। वयसि किम्। मासिकः कर्मकरः। मासात्किम्। सांवत्सरिकः। ठञन्तोयम्। ****द्विगोर्यत्।** मासान्ताद्द्विगोर्द्वितीयान्ताद्भूते यप् वयसि द्योत्ये इत्यर्थः । द्विमास्यः। संख्यापूर्वत्वात्तद्धितार्थे द्विगुरयम्। मासद्वयपरिमितवयस्कशिशुरित्यर्थः। ***वयसीत्येव।** अत एव भूतेऽर्थे एव प्रत्ययः। अधीष्टादिषु वयोगमकत्वाभावात्। ***अवयसीति** षण्मासादित्यस्यात्रानुवृत्तिः। अधीष्टादिचतुरर्थ्याम्प्रत्ययौ वयस्यवाच्ये सतीत्यर्थः। ***द्विगोर्वा।** तमधीष्टेति। समाया इति च सूत्रद्वयमत्रानुवर्तते। समान्ताद्द्विगोरित्यन्वयः। तेन निर्वृत्तमित्यप्यत्रान्वेति। तेन द्वितीयान्तादधीष्टादिषु तृतीयान्तान्निर्वृत्ते च प्रत्ययावित्याशयेनाह। निर्वृत्तादिषु पञ्चस्विति। पञ्चानामर्थानां कियत्पर्यन्तमनुवृत्तिरिति आकांक्षायामाह। तेन परिजय्येत्यतः प्रागिति द्वाभ्यां समाभ्यां निर्वृत्तः द्वे समे। अधीष्टो भृतो भूतो भावी वा द्विसमानः। द्वैसमिकः ।***रात्रीति।** पूर्वसूत्रं सर्वमत्रानुवर्तते। रात्र्यहस्संवत्सरान्ताद्द्विगोः पञ्चस्वर्थेषु खो वा। खाभावपक्षे औत्सर्गिकष्ठञ्। द्वाभ्यामहोभ्यां निर्वृत्तः क्रतुद्वर्यहानः। द्व्यहन्। ख– इति स्थिते। अह्नष्टखोरेवेति टिलोपः। खस्येनादेशः द्व्यहानः। अत्र तद्धितार्थे परे द्विगुरित्यनुक्त्वा तद्धितार्थे विषये द्विगुरित्युक्तत्वेन द्वाभ्यामहोभ्यान्निर्वृत्त इति तद्धितार्थे विषये द्वि अहन् शब्दयोस्समासः। द्व्यहन्। इदानीं राजाहस्सखिभ्यष्टच् सासान्तः प्राप्नोति। रात्र्यहस्संवत्सराच्चेति खश्च प्राप्नोति। उभयोः परत्वात् टचि कृते द्व्यहन। अहस्सर्वैकदेशेति सूत्रे चात्संख्याव्ययादेरित्युक्तम्। अह्नोह्न एतेभ्य इत्यत्रापि सर्वादिभ्य इत्यनेन संख्यादेर्लाभः। न संख्यादेस्समाहारे इति निषेधात् ज्ञापनात् वा। चानुकृष्टं

**१७५२। संख्यायाः संवत्सरसंख्यस्य च** ।७।३।१५। संख्याया उत्तरपदस्य वृद्धिः स्यात् ञिदादौ। द्विसांवत्सरिकः। द्वे षष्टी भृतो द्विषाष्टिकः। संख्यायाः परिमाणान्तस्येत्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणे कालपरिमाणस्याग्रहणार्थम्। तेन द्वैसमिक इत्युत्तरपदवृद्धिर्न॥

---

नानुवर्तते इति न्यायात्पक्षान्तरोपन्यासः। संख्यादेरहन्शब्दस्य अह्नादेशः समासान्ते परे। द्व्यह्न। इदानीं खे कृते यस्येति लोपे नाकारलोपे द्व्यह्नीन इति स्यादिति शङ्कित्वा वदति–समासान्तविधेरनित्यत्वान्न टच् इति। ननु रात्र्यह इति अहश्शब्दान्तादेव द्विगुर्विधीयते न त्वह्नशब्दान्तादिति। द्व्यह्नशब्दात्खस्यैवानुत्पत्तिरिति द्व्यह्नीन इति न स्यादिति शङ्कायान्तत्त्वबोधिनी। टचि सत्यह्नादेशे तस्य स्थानिवत्त्वाद्राजाह इति समासान्तस्य अहश्शब्दान्तसमासग्रहणेन ग्रहणाच्च रात्र्यहस्संवत्सराच्चेति खप्रत्यय इति। स्थानिवद्भावेन अहश्शब्दान्तत्वात्खप्रत्ययोपपत्तिरिति तदाशयः। न च अनित्यत्वान्न टजित्यनेन पक्षे टचि द्व्यह्नीन इति स्यादिति वाच्यम्। अनित्यत्वञ्च व्यवस्थितमिति पक्षेपि नात्र टजिति। *__संख्याया__ इति। अत्र उत्तरपदस्येत्यधिकारः। मृजेर्वृद्धिरिति सूत्राद्वृद्धिः। अचोञ्णिति, किति च, तद्धितेष्वचामादेः इत्येषामन्वयः। संख्याया इति पञ्चमी। संख्याया उत्तरपदस्य संख्यायाः परस्येत्यर्थः। संवत्सरश्च संख्या च तयोस्समाहारः। संवत्सरसंख्यम् तस्य संवत्सरस्य संख्यावाचकशब्दस्य चेत्यर्थः। संख्यायास्संख्यस्योदाहरणम् द्विषाष्टिक इति। षष्टिशब्दो हि पङ्क्तिविंशतीति सूत्रे निपातितः। विंशत्याद्यास्सदैकत्वे संख्यासंख्येयसंख्ययोरिति षष्टिशब्दस्य संख्यासंख्येयोभयवाचकत्वेन प्रकृते द्वे षष्टी (दिनानां मासानां संवत्सराणां वा) भृत इति संख्येयवाचित्वम्। षष्टिस्संवत्सरा इत्यत्र संवत्सराणां बहुत्वेऽपि षष्टिशब्दस्यैकत्वात्सदैकत्वे इत्युक्तममरेण। स्वगतं बहुत्वादिकन्तु अस्यैव। द्वे षष्टी संवत्सराणामिति। एवमन्यत्रापि। संवत्सरास्सहस्रम्। सहस्राणां शतमित्यादिषु सहस्रस्य सदैकत्वं स्वगतं बहुत्वञ्च इति। द्वे षष्टी इति। संख्यावाचकमिति वचने तु तमधीष्टो भृत इति कालवाचकादेव भृतार्थे प्रत्यय इति। द्वे षष्टी भृत इत्यर्थे ठञि द्विषाष्टिक इति माभूदिति। ननु संख्यास्येति सूत्रे संख्यावाचकत्वमेव प्रतिपादितमिति चेन्नैष दोषः। संख्यावाचकस्यापि संख्येयवाचकत्वात्। ननु परिमाणान्तस्यासंज्ञाशाणयोरिति वक्ष्यमाणेन संवत्सरस्य परिमाणत्वात्। (परिच्छेदकत्वात्मकमिदं परिमाणत्वम्) संख्यायाः परस्य संवत्सरस्य द्विसंवत्सरेत्यस्य परिमाणान्तत्वात्। उत्तरपदवृद्धौ सिद्धायामिह संवत्सरग्रहणं व्यर्थम् इत्यत आह परिमाणग्रहणे कालपरिणामस्याग्रहणार्थमिति।

**१७५३। वर्षाल्लुक् च** ।५।१।८८। वर्षशब्दान्ताद्विगोर्वा खः। पक्षे ठञ् वा च लुक्। त्रीणि रूपाणि। द्विवर्षीणो व्याधिः। द्विवर्षः॥ **१७५४। वर्षस्याभविष्यति** ।७।३। १६। उत्तरपदस्य वृद्धिः स्यात्। द्विवार्षिको मनुष्यः। भविष्यति तु द्वैवर्षिकः। अधीष्टभृतयोरभविष्यतीति प्रतिषेधो न। गम्यते हि तत्र भविष्यत्ता न तु तद्धितार्थः।

---

परिमाणान्तस्येत्यनेन कालपरिमाणान्तस्योत्तरपदवृद्धिर्माभूदिति ज्ञापनार्थं संवत्सरग्रहणमिति भावः। ननु संख्याया अपि परिच्छेदकत्वेन परिमाणत्वात्परिमाणान्तस्येत्यनेन संख्यान्तस्याप्युत्तरपदवृद्धिर्भवेदिति संख्य ग्रहणं व्यर्थमिति चेन्मैवम्। संख्याभिन्नं परिच्छेदकमात्रं परिमाणशब्देन गृह्यते इति असमासे निष्कादिभ्य इति सूत्रव्याख्यायां तत्त्वबोधिनीकारेण प्रतिपादितत्वात्। अत्र संख्यायाः परिमाणान्तस्येति न्यासेनैव सिद्धे इत्यर्थः प्रतीयते। तदीषत्करम्। परिमाणान्तस्येति सूत्रेणैव तत्सिद्धेः पृथक्न्यासस्यापि वैयर्थ्यात्। परिमाणान्तस्येत्यनेनैव संख्याया उत्तरपदस्य वृद्धौ सिद्धायामिति तदर्थः। द्वैसमिकः। परिमाणान्तस्येत्यनेन। अत्र वृद्धिरुत्तरपदस्य प्राप्ता न भवति। समायाः कालपरिमाणत्वात्। न च संख्याया इति सूत्रेण स्यादिति वाच्यम्। संवत्सरेत्यनेन स्वरूपस्यैव ग्रहणं न पर्यायाणां नापि विशेषाणामिति। ***वर्षादिति।*** अत्र समाया इति सूत्रात्ख इति, द्विगोर्वेति चानुवर्तन्ते। वर्षेति स्वरूपग्रहणम्। समायाः पृथगुपादानात्। वर्षसमाशब्दौ हि पर्यायौ। वर्षान्ताद्द्विगोः पञ्चस्वर्थेषु लुक् खो वा। वेत्यस्यावृत्तिः। लुग्वा खो वा इति। औत्सर्गिकस्य ठञो लुक्। तदभावपक्षे ठञ्। खश्च यद्वा – खो वा स्यात्। खाभावपक्षे ठञ् तस्य वा लुगिति। खठञ्–लुकां क्रमेणोदाहरणानि द्विवर्षीण इत्यादीनि।

ननु द्विवार्षिक इति ठञन्ते कथं वृद्धिरित्यतस्सूत्रमुपक्षिपति ***वर्षस्याभविष्यतीति।*** उत्तरपदस्य वर्षस्य ञितिणिति किति च तद्धिते अचामादेरचो वृद्धिस्स्यात्। न तु भविष्यदर्थे इति सूत्रार्थः। भविष्यदर्थो भाव्यर्थः। अनागतकालस्य भावित्वात्। भूतस्यातिक्रान्तकालत्वेन न भविष्यत्त्वमनागतकालत्वलक्षणमिति कृत्वा अधीष्टभृतयोर्भविष्यत्त्वं शङ्क्यते। गम्यते हि तत्र भविष्यते इति। अयं भावः। प्रत्ययेन यत्र भविष्यदर्थोऽभिधीयते तत्रैवायं निषेधः। यत्र पुनः गम्यते तत्र न निषेध इति। भविष्यति मासे ममायं भृतः, मयायं भृत इति वा। भृते भविष्यति मासे मयायमध्ययने ससत्कारं प्रेरित इति। अधीष्टे च। भविष्यत्त्वं वक्तृविवक्षया गम्यते इति। अधीष्टभृतयोर्भविष्यत्त्वस्य गमकत्वं दर्शयति कर्मकरिष्यतीति। अस्मिन् वर्षे देवदत्तेन यज्ञदत्तः (कर्मणि) अधीष्टः भृतश्च सन्–भविष्यति वर्षद्वये

द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यतीति द्विवार्षिको मनुष्यः। 'परिमाणान्तस्यासंज्ञाशाणयोः १५८३' द्वौ कुडवौ परिमाणमस्य द्विकौडविकः। द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकम्। द्विनैष्किकम्। असंज्ञेति किम्। पञ्च कलापाः परिमाणमस्य पाञ्चकलापिकम्। तद्धितान्तः संज्ञैषा। द्वैशाणम्। कुलिजशब्दमपि केचित्पठन्ति। द्वैकुलिजिकः॥ **१७५५। चित्तवति नित्यम्** ।५।१।८९। वर्षशब्दान्ताद्विगोः प्रत्ययस्य नित्यं लुक् स्यात् चेतने प्रत्ययार्थे। द्विवर्षो दारकः॥

---

देवदत्तस्य कर्म करिष्यतीति भावः। ***परिमाणेति।** असमासे निष्कादिभ्य इति सूत्रानन्तरं व्याख्यातमिदं सूत्रं मूले एव। पाञ्चकपालिकमिति कस्य चित्संज्ञावस्तुनः। तदस्य परिमाणमिति ठक्। द्वैशाणम् । द्वित्रिपूर्वादण्च इत्यण्। परिमाणान्यस्या संज्ञाशाणकुलिजानामिति केषां चित्पाठ इत्याह कुलिजेत्यादिना। तेषां मते द्वैकुलिजिकः। अन्येषान्तु द्विकौलिजिकः। द्विकौडविक इत्यत्र प्रयोजनमिति वक्ष्यमाणसूत्रेण ठञ्। परिमाणग्रहणेन कालस्य न ग्रहणमित्युक्तत्वात्। तद्भिन्नपरिमाणान्तस्य वृद्धिं दर्शयितुं सूत्रमत्रोपन्यस्तम्। परिमाणशब्देन प्रस्थादेर्विशेषस्यैव ग्रहणमिति शङ्कायामुन्मानान्तादपि दर्शयति। द्विसौपर्णिकम्। सुवर्णशब्दः कार्षापणात्मकपरिमाणे रूढः। ***चित्तवतीति।** चित्तञ्चेतना। अत्र वर्षाल्लुगित्यनुवर्तते। द्विगोर्वेति सूत्राद्द्विगोरित्यप्यनुवर्तते। वेति निवृत्तम्। प्रतियोगिनो नित्यस्य ग्रहणात्। (प्रतियोगी प्रतिबन्धी–विरोधीति यावत्)। प्रत्ययस्येत्याक्षेपाल्लभ्यते। न हि द्विगोर्लुक्संभवति। चेतने प्रत्ययार्थे प्रकृतिप्रत्ययसमुदायेन चेतने वाच्ये सतीत्यर्थः। यद्वा प्रत्ययार्थे। अधीष्टभृतभूतभाविनिर्वृत्तात्मके चेतने चेतनविशेषणभूते सतीत्यर्थः। अधीष्टादीनां प्रत्ययार्थानां विशेष्यत्वेन चेतने अभिधित्सिते सतीति यावत्। चेतन एव प्रत्ययार्थ इति तु न वाच्यम्। द्वे वर्षे भूतो द्विवर्षो दारक इत्यत्र भूतार्थस्य प्रत्ययार्थत्वात्। चेतनार्थे प्रत्ययविधानाभावाच्च। प्रत्ययार्थस्य चेतनविशेषणत्वे चित्तवतीत्यनेन नित्यं लुक्स्यादिति कृत्वा द्विवर्षीणो व्याधिरिति प्राग्विशेष्योपन्यासः कृतः । चित्तवति अभिदित्सिते सति इति सूत्रे अन्वयः। ***षष्टिकेति।** षष्टिरात्रेण पच्यन्ते इत्यर्थे षष्टिका इति निपात्यते इत्यर्थः। तृतीयान्तात् षष्टिरात्रिशब्दात्पच्यन्ते इत्यर्थे कन्प्रत्ययः। रात्रिशब्दलोपश्च निपातनाल्लभ्यते इत्याह तृतीयान्तादित्यादि। षष्टेः रात्रीणां समाहारः षष्टिरात्रम्। (अहस्सर्वैकदेशेति सूत्रेण चात्संख्याव्ययादेः परस्य रात्रिशब्दस्य समासान्तष्टच्। यस्येति च इति इकारलोपः षष्टिरात्रम्।)

**१७५६। षष्टिकाः षष्टिरात्रेण पच्यन्ते** ।५।१।९०। बहुवचनमतन्त्रम्। षष्टिको धान्यविशेषः। तृतीयान्तात्कन् रात्रशब्दलोपश्च निपात्यते॥ **१७५७। तेन परिजय्यलभ्यकार्यसुकरम्** ।५।१।९३। मासेन परिजय्यो जेतुं शक्यो मासिको व्याधिः। मासेन लभ्यं कार्यं सुकरं वा मासिकम्॥ **१७५८। तदस्य ब्रह्मचर्यम्** ।५।१।९४। द्वितीयान्तात्कालवाचिनोऽस्येत्यर्थे प्रत्ययः स्यात्। अत्यन्तसंयोगे द्वितीया। मासं ब्रह्मचर्यमस्य स मासिको ब्रह्मचारी। आर्धमासिकः। यद्वा प्रथमान्तादस्येत्यर्थे प्रत्ययः। मासोऽस्येति मासिकं ब्रह्मचर्यम्॥ **महानाम्न्यादिभ्यः षष्ठ्योन्तेभ्य उपसंख्यानम्**॥ महानाम्न्यो नाम विदामघवन्नित्याद्या ऋचः।

---

**तेनेति** तृतीयान्तात्कालात्समर्थात् परिजय्यः लभ्यः कार्यः सुकरः(सुखेन कर्तुं योग्यस्सुकरः) इत्यर्थ चतुष्टये ठञ् स्यात् सूत्रे तु चतुर्णां समाहारद्वन्द्वः स नपुंसकत्वम्। लब्धुं योग्यो लभ्यः. कर्तुं शक्यो योग्यो वा कार्यः।) *__तदस्येति__। द्वितीयान्तात् ब्रह्मचर्याधिकरणभूतात् कालवाचिनः अस्येति षष्ठ्यर्थे ठञ्। अधिकरणस्य कथं द्वितीयान्तत्वमिति शङ्कायामाह – अत्यन्तेति। कालाध्वनोरत्यन्तसंयोगे द्वितीया इति। ब्रह्मचर्याधिकरणत्वञ्च कालस्य वैवक्षिकम्। अर्धमासं ब्रह्मचर्यमस्य आर्धमासिकः। परिमाणान्तस्येत्यनेन नोत्तरपदवृद्धिः। कालपरिमाणस्याग्रहणादिति आदिवृद्धिरेव। सूत्रस्य व्याख्यान्तरमाह यद्वेत्यादिना। प्रथमान्तात् षष्ठ्यर्थे प्रत्ययः। प्रकृतिप्रत्ययसमुदायेन ब्रह्मचर्य चेदभिधीयते। स चेत्षष्ठ्यर्थो ब्रह्मचर्यमिति वा। प्रत्ययार्थो ब्रह्मचर्यस्य विशेषणं चेदिति वा। *__महानाम्नीति__। अस्य ब्रह्मचर्यमित्यर्थे ठञ उपसंख्यानं कर्तव्यमित्यर्थः। महन्ति नामानि यस्यास्सा महानाम्नी। ऋन्नेभ्य इति नान्तलक्षणो ङीप्। अल्लोपो न इत्यकारलोपः। आन्महतस्समानाधिकरणे इति महत आत्वम्। महानाम्नी आदिर्येषान्ते शब्दाः महानाम्न्यादयः। महानाम्नीनां ब्रह्मचर्यम्। ब्रह्म वेदः। तच्चरतीति पठतीति ब्रह्मचरः । तस्य भावः ब्रह्मचर्यम्। वेदपठनमित्यर्थः। महानाम्नीति ऋक्संबन्धिवेदपठनम्। तदृक्पठनमिति यावत्। माहानाम्निकः। केण इति ह्रस्वः। महानाम्नीशब्दो रूढो ऋचि। ऋक्छब्दश्च स्त्रीवाचक इति स्त्रियां रूढोऽयमिति भाषितपुंस्कत्वाभावात्। भस्याढे तद्धिते इत्यनेन न पुंवद्भाव इति भट्टोजिदीक्षिताशयः। दर्शितव्युत्पत्त्या यौगिकोऽयं शब्दः। भाषितपुंस्क एवेति। पुम्वद्भावमिच्छति हरदत्त इत्याह हरदत्तस्त्विति। सति तु पुम्वद्भावे महानामन्। इक, नस्तद्धित इति टिलोपः आदिवृद्धिः माहानामिकः। इह अल्लोपो न इति अल्लोपे प्राप्ते परत्वात् टिलोपः। (ङीपि तु महानामन् ई इति स्थिते ङीपः

तासां ब्रह्मचर्यमस्य माहानाम्निकः। हरदत्तस्तु भस्याढ इति पुंवद्भावान्माहानामिक इत्याह ॥ **चतुर्मासाण्ण्यो यज्ञे**। तत्र भव इत्यर्थे ॥ चतुर्षु मासेषु भवन्ति चातुर्मास्यानि यज्ञकर्माणि ॥ **संज्ञायामण्** ॥ चतुर्षु मासेषु भवति चातुर्मासी आषाढी। अण्णन्तत्वान्ङीप् ॥ **१७५९। तस्य च दक्षिणा यज्ञाख्येभ्यः** ।५।१।९५। द्वादशाहस्य दक्षिणा द्वादशाहिकी। आख्याग्रहणादकालादपि। आग्निष्टोमिकी। वाजपेयिकी ॥ **१७६०। तत्र च दीयते कार्यं भववत्** ।५।१।९६। प्रावृषि दीयते कार्यं वा प्रावृषेण्यम्। शारदम् ॥ ठञधिकारे कालाधिकारस्य पूर्णोऽवधिः ॥

---

अतद्धितत्वेन टिलोपाप्राप्तौ अल्लोप इति बोध्यम्।) ***चतुरिति**। प्रकृतिप्रत्ययसमुदायेन यज्ञे वाच्ये प्रत्ययार्थे यज्ञविशेषणीभूते इति वा। चतुर्मासात्सप्तम्यान्ताद्भावार्थे ण्यप्रत्ययस्स्यात्। यज्ञे इत्यनेन साक्षाद्यज्ञे वाच्ये इति नाग्रहः, किन्तु यज्ञसम्बन्धिनि वाच्येऽपि प्रत्यय इति दर्शयितुं चातुर्मास्यानि यज्ञकर्माणीत्युदाहृतम्। ***अणिति** चतुर्मासात्तत्र भवे अण् स्यात्। प्रकृतिप्रत्ययसमुदायेन संज्ञा चेद्गम्यते इत्यर्थः। आषाढी आषाढनक्षत्रेण युक्ता पौर्णमासी पूर्णिमा चातुर्मासीति शब्द्यते ***तस्येति**। यज्ञ आख्यायते अभिधीयते एभिरिति यज्ञाख्याश्शब्दाः द्वादश अहानि अस्य सन्तीति द्वादशाह इति बहुव्रीहिः। समासान्ते टचि, अह्नष्टखोरेवेति टिलोपः। ननु यज्ञेभ्य इति सूत्रितेऽपि कालाधिकारेण कालवाचिभ्यो यज्ञेभ्य इत्यर्थोदिष्टं सिध्यतीति आख्याग्रहणं व्यर्थमत आह – अकालादपीति। यज्ञवाचिनां शब्दानां कालवाचित्वमस्तु वा मा वा। तेभ्यः प्रत्ययस्स्याद्दक्षिणार्थे इति आख्याग्रहणेन ज्ञाप्यते इति भावः। अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकी ठञि टिड्ढाणेति ङीप्। यद्यपि तस्येदमित्यनेन अग्निष्टोमस्येयं दक्षिणा इति विग्रहस्सिद्ध्यति तथापि वृत्तौ अण् स्यात्। न तु ठञ्। अण्णन्तात्ङीपि आग्निष्टोमी इति स्यादिति बोध्यम्। ***तत्रेति**। कर्तुं योग्यं कार्यम्। दीयते इत्यर्थे कार्यमित्यर्थे च सप्तम्यन्तात्कालात् भावार्थे इव प्रत्ययास्स्युः। शरदि दीयते शारदम्। शरदि कार्यं शारदमिति च। ***इति कालाधिकारः***

**व्युष्टेति**। प्राक्सूत्रात् तत्र च दीयते कार्यमित्यत्रानुवर्तते। सप्तम्यन्तेभ्यः व्युष्टादिभ्यः दीयते कार्यम् इत्यर्थद्वये अण् स्यात्। ठञोऽपवादः। व्युष्टन्नाम प्रत्यूषः। अहर्मुखमिति यावत्। ***तेनेति**। यथाकथाच। हस्तश्च यथा कथा च हस्तौ ताभ्याम्। यथा, कथा, च इत्यव्ययानां त्रयाणां संघातः यथाकथाच इति। अत एव निपातनाद्यथाकथाचेति समासं वाक्यं वा। तेन यथाकथाचेत्यस्माच्छब्दाद्वाक्याद्वा तृतीयान्तादिति नात्र सम्बध्यते। अनन्वयात्। अव्ययानां हि न विभक्तयः। णप्रत्ययस्स्यादित्यर्थः। यथाकथञ्चिदित्यर्थे

**१७६१। व्युष्टादिभ्योऽण्** ।५।१।९७। व्युष्टे दीयते कार्यं वा वैयुष्टम् व्युष्ट, तीर्थ, संग्राम, प्रवास इत्यादि॥ **अग्निपदादिभ्य उपसंख्यानम्**॥ अग्निपदे दीयते कार्यं वाग्निपदम्। पैलुमूलम्॥ **१७६२। तेन यथाकथा च हस्ताभ्यां णयतौ** ।५।१।९८। यथाकथा चेत्यव्ययसंघातात्तृतीयान्ताद्धस्तशब्दाच्च यथासंख्यं णयतौ स्तः॥ **अर्थाभ्यां तु यथासंख्यं नेष्यते**॥ यथाकथा च दीयते कार्यं वा याथाकथाचम्। अनादरेण देयं कार्यं वेत्यर्थः। हस्तेन दीयते कार्यं वा हस्त्यम्॥ **१७६३। संपादिनि** ।५।१।९९। ठञ्। तेनेत्येव। कर्णवेष्टकाभ्यां संपादि कार्णवेष्टकिकं मुखम्। कर्णालंकाराभ्यामवश्यं शोभत इत्यर्थः॥ **१७६४। कर्मवेषाद्यत्** ।५।१।१००। कर्मणा संपादि कर्मण्यं शौर्यम्। वेषेण संपादी वेष्यो नटः। वेषः कृत्रिम आकारः॥ **१७६५। तस्मै प्रभवति संतापादिभ्यः** ।५।१।१०१। संतापाय प्रभवति सांतापिकः। सांग्रामिकः॥ **१७६६। योगाद्यच्च** ।५।१।१०२। चाट्ठञ्। योगाय प्रभवति योग्यः यौगिकः॥ **१७६७। कर्मण उकञ्** ।५।१।१०३। कर्मणे प्रभवति कार्मुकम्॥ **१७६८। समयस्तदस्य प्राप्तम्** ।५।१।१०४। समयः प्राप्तोऽस्य सामयिकम्॥

---

यथाकथाचेत्यव्ययसङ्घातो वर्तते। यथाकथाचाद्दीयते णः। हस्तात्कार्ये यदिति दीयते कार्ययोर्न यथासंख्यं वाच्यमनिष्टत्वादित्याह अर्थाभ्यामित्यादिना। यथाकथाचाद्दीयते कार्ययोर्णः। तृतीयान्ताद्धस्ताच्च दीयते कार्ययोर्यत् इति सूत्रस्य फलितार्थः। ***संपादिनि।** संपाद्यते अवश्यं शोभते इति संपादी। तस्मिन् तृतीयान्तात्सम्पादिन्यर्थे ठञ्। कर्मवेषयोस्समाहारः कर्मवेषं तस्मात्। कर्मणो वेषाच्चेत्यर्थः। तेन सम्पादिनीत्यत्रान्वेति। ये चाभावकर्मणोरिति प्रकृतिवद्भावः। कर्मण्यम्।***तस्मै** इति। चतुर्थ्यन्तेभ्यः सन्तापादिभ्यः प्रभवत्यर्थे ठञ्। *योगादिति। तस्मै प्रभवतीत्यत्रानुवर्तते। उत्तरसूत्रे च। ***कार्मुकम्।** नस्तद्धित इति टिलोपः। ञित्त्वाद्वृद्धिः। ***समय** इति। तदिति प्रथमा। प्रथमान्तात् प्राप्तोपाधिकात् समयशब्दादस्येत्यर्थे ठञ् ***ऋतोरिति।** तदस्यप्राप्तमित्यनुवर्तते। प्रथमान्तात् ऋतोरित्यन्वयः। ***आर्तवम्।** ऋतु अण्, ओर्गुणः। अवादेशः। आदिवद्धिः। ***कालादिति।** अत्रापि तदस्य प्राप्तमित्येव। कालेति स्वरूपग्रहणम्। प्रथमान्तात्कालशब्दादित्यन्वयः। प्रकृष्टे इति। प्रकृष्टे इत्युक्ते पूर्वसूत्रस्थः यदत्रान्वेतीति शङ्कया ठञ् ग्रहणम्। (कालादित्यस्य अनुवृत्तत्वाद्यदप्यनुवर्तते इति भावः) प्रकृष्टस्यार्थमाह दीर्घ इति। ***प्रयोजनम्।** प्रथमान्तात्प्रयोजनोपाधिकात् अस्येत्यर्थे ठञ्।

**१७६९। ऋतोरण्** ।५।१।१०५। ऋतुः प्राप्तोऽस्य आर्तवम्॥ **उपवस्त्रादिभ्य उपसंख्यानम्**॥ उपवस्ता प्राप्तोऽस्य औपवस्त्रम्। प्राशिता प्राप्तोऽस्य प्राशित्रम्॥ **१७७०। कालाद्यत्** ।५।१।१०७। कालः प्राप्तोऽस्य काल्यं शीतम्॥ **१७७१। प्रकृष्टे ठञ्** ।५।१।१०८। कालादित्येव। तदस्येति च। प्रकृष्टो दीर्घः कालोऽस्येति कालिकं वैरम्॥ **१७७२। प्रयोजनम्** ।५।१।१०९। तदस्येत्येव। इन्द्रमहः प्रयोजनमस्य ऐन्द्रमहिकम्। प्रयोजनं फलं कारणं च॥ **१७७३। विशाखाषाढादण्मन्थदण्डयोः** ।५।१।११०। आभ्यामण्स्यात्प्रयोजनमित्यर्थे क्रमान्मन्थदण्डयोरर्थयोः। विशाखा प्रयोजनमस्य वैशाखो मन्थः। आषाढो दण्डः॥ **चूडादिभ्य उपसंख्यानम्**। चूडा, चौडम्। श्रद्धा, श्राद्धम्॥ **१७७४। अनुप्रवचनादिभ्यश्छः** ।५।१।१११। अनुप्रवचनं प्रयोजनमस्य अनुप्रवचनीयम्॥ **१७७५। समापनात्सपूर्वपदात्** ।५।१।११२। व्याकरणसमापनं प्रयोजनमस्य व्याकरणसमापनीयम्॥ **१७७६। ऐकागारिकट् चौरे** ।५।१।११३। एकमसहायमगारं प्रयोजनमस्य मुमुषिषोः स ऐकागारिकश्चौरः॥ **१७७७। आकालिकडाद्यन्तवचने** ।५।१।११४। समानकालावाद्यन्तौ यस्येत्याकालिकः।

---

मह इत्यकारान्तश्शब्द उत्सववाची तेजोवाची च। सकारान्तनपुंसकम्महश्शब्दः कश्चनास्ति। इन्द्रमह इत्यत्र न तेजोवाचिनो ग्रहणम्। ऐन्द्रमहसिकमिति स्यादिति। *__वैशाखो मन्थः__ वैशाखमन्थमन्थानमन्थानो मन्थदण्डक इत्यमरः। आषाढः प्रयोजनमस्य आषाढो दण्डः। *__समापनादिति।__ तदस्य प्रयोजनम्। प्राक्सूत्रात् छ इति च अत्रानुवर्तन्ते। समापनं समाप्तिः। *__ऐकेति।__ चोरे ऐकागारिकट् इति निपात्यते इत्यर्थः। टइत्। तदस्य प्रयोजनमित्यर्थे एवेदं निपातनमित्याह एकमित्यादिना। मुषस्तेये तस्मात्सन्नन्तादुप्रत्ययः। मुमुषिषुः । चौर्यं कर्तुमिच्छन् पुरुष इत्यर्थः। *__आकालिकडिति__ आद्यन्तवचने आकालिकडिति निपात्यते इत्यन्वयः। आद्यन्तावुच्येते यस्मिन्नर्थे स आद्यन्तवचनः तस्मिन् आद्यन्तावित्यर्थे इति यावत्। समानकालशब्दात्प्रथमान्तादस्याद्यन्तावित्यर्थे इकट्प्रत्ययः। समानकालस्य आकालआदेशश्च निपात्यते इत्यर्थः। यद्वा आद्यन्तावित्युपाधिमतः अस्येत्यर्थे इकट्। अस्मिंस्तु पक्षे आद्यन्तवचने आद्यन्तोपाधावित्यर्थः। अथवा आद्यन्तयोर्वचनमाद्यन्तवचनम् आद्यन्तोक्तावित्यर्थः । आद्यन्तरूपार्थप्रतिपादकत्वे इति यावत्। समानः अभिन्नः कालो ययोस्तौ समानकालौ। ऐककालिकावित्यर्थः।

समानकालस्याऽऽकाल आदेशः। आशुविनाशीत्यर्थः। पूर्वदिने मध्याह्नादावुत्पद्य दिनान्तरे तत्रैव नश्वर इति वा॥ **आकालाट्ठंश्च॥** आकालिका विद्युत्॥ **ठञः पूर्णोऽवधिः॥**

## तद्धितेषु नञ्स्नञधिकारः ३५।

**१७७८। तेन तुल्यं क्रिया चेद्वतः।** ।५।१।११५। ब्राह्मणेन तुल्यं ब्राह्मणवदधीते। क्रिया चेदिति किम्। गुणतुल्ये मा भूत्। पुत्रेण तुल्यः स्थूलः॥

---

तुल्यकालावित्यप्यर्थः प्रतीयते इति कृत्वा पूर्वदिने इत्यादिकमुक्तम्मूले । तत्रैव मध्याह्ने एवेत्यर्थः। आदिकालेन पूर्वदिनमध्याह्नेन अन्तकाल एतद्दिनमध्याह्नस्तुल्य इति समानकालत्वमाद्यन्तयोः। यस्मिन् क्षणे जातः तस्मिन्नेव क्षणे नष्ट इति आदिनाशयोरैककालिकत्वञ्चेति विवेकः। *__आकालादिति__। चात् इकट्। समानकालावाद्यन्तावस्या इत्यर्थे समानकालस्याकालादेशे कृते आद्यन्तवचने तस्मात् ठन् – आकालिका–आशुविनाशनी इत्यर्थः। अत एव तदनुगुणं विशेष्यमाह विद्युदिति। (विद्युतः क्षणिकत्वात्) ठनि इकटि च पुंसि न रूपभेद इति। स्त्रियामुदाहृतम्। ठनि अदन्तत्वाट्टाप्। इकटि कृते टित्त्वात् ङीप् आकालिकी विद्युत्। समानकालाट्ठंश्चेत्युक्तौ आकालादेशो न स्यादिति आकालादित्युक्तं वार्तिककृता। **इति। ठञः पूर्णोऽवधिः।**

### तद्धितेषु नञ्स्नञधिकारः

*__तेनेति__। तृतीयान्तात्तुल्यमित्यर्थे वतिः। तच्चेद्वृत्यन्तं क्रियाविशेषणम् इति सूत्रार्थः। तकारस्य हलन्त्य मितीत्संज्ञा माभूदिति वति इति इकारान्तोच्चारणम्। अनुकरणत्वात्सुबुत्पत्तौ वतिः इति प्रथमान्तः वत् इति प्रत्ययशिशष्यते। यथा ब्राह्मणवदधीते क्षत्त्रियः। अत्र ब्राह्मणेन तुल्यं यथा तथा क्षत्त्रियोऽधीते इत्यर्थः प्रतीयते। ब्राह्मणो यथाधीते तथा क्षत्त्रियोऽधीते इत्यर्थः प्रतीयते। ब्राह्मणो यथाधीते तथा क्षत्त्रियोऽधीते इति यावत्। ब्राह्मणवदिति क्रियाविशेषणमव्ययमिदम्। तद्धितश्चासर्वविभक्तेरिति सूत्रे तसि वति इत्यादीनां परिगणितत्वाद्वृत्यन्तस्याव्ययत्वम्। तृतीयान्तात्तुल्यमित्यर्थे वतिः। यत्तुल्यं क्रिया चेत्सा इति व्याख्यानान्तरम्। ब्राह्मणवदधीते क्षत्त्रिय इत्यत्र क्षत्त्रियकर्तृकं ब्राह्मणतुल्यमध्ययनमिति शाब्दबोधे अध्ययनस्य क्रियात्वेन यत्तुल्यं तदिह क्रियैवेति ब्राह्मणेन तुल्यमित्यर्थे वतिः ब्राह्मणवत्। अस्मिंस्तु पक्षे ब्राह्मणेनेत्यस्य ब्राह्मणकर्तृकाध्ययनेनेति लक्षणयाऽर्थो वाच्यः। अन्यथा अध्ययनस्य ब्राह्मणतुल्यत्वाभावात्। पुत्रेण तुल्यः स्थूलः। पुत्रसदृशं स्थौल्यमर्थः। स्थौल्यं हि गुणः। यत्तुल्यं तदिह गुण एव। न तु क्रियेति

**१७७९। तत्र तस्येव** ।५।१।११६। मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः। चैत्रस्येव चैत्रवन्मैत्रस्य गावः॥ **१७८०। तदर्हम्** ।५।१।११७। विधिमर्हति विधिवत्पूज्यते। क्रियाग्रहणं मण्डूकप्लुत्यानुवर्तते। तेनेह न। राजानमर्हति छत्रम्॥

---

पुत्रवत्स्थूल इति न भवति। चन्द्रवन्मुखमित्यादौ तु भासते इति क्रियाध्याहारेण वतेस्साधुत्वं बोध्यम्। चन्द्रतुल्यं मुखकर्तृकं भासनमित्यर्थः। क्रियाया अप्रयोगे तु मुखस्य द्रव्यत्वेन यत्तुल्यम्मुखं न तत्क्रियेति वतेरसंभव एवेति भावः। न च गुणतुल्ये माभूदित्येतदर्थं क्रियाचेदिति पदं सूत्रे न्यस्तमिति द्रव्यतुल्ये स्यादिति वाच्यम्। क्रिया चेदित्यनेन गुणो यथा निरस्तः तथा द्रव्यादिकमपीति सिद्धत्वात्। अत एव गुणतुल्ये इति मूलस्य अक्रियातुल्ये इत्यर्थोऽफाणि तत्त्वबोधिनीकारेण। क्रियाभिन्नतुल्ये तृतीयान्ताद्वतिर्माभूदित्येतदर्थं क्रिया चेदिति पदमिति भावः। गुणतुल्ये गुणे तुल्ये सतीत्यर्थः। यत्तुल्यं स गुणश्चेदिति यावत्। प्रथमप्रदर्शितव्याख्यानानुसारेण तच्चेद्वत्यन्तं गुणवाचकपदविशेषणम् तर्हि माभूदिति वा। (सांभाविकीं वृत्तिमाश्रित्य वत्यन्तमिति प्रोक्तम्। अन्यथा वतेः प्राक्कथं वत्यन्तत्वमिति)। *तत्रेति। वाक्यद्वयमिदम्। तत्रेव वतिः तस्येव वतिरिति। तुल्यमित्यस्यानुवर्तने क्रिया चेदित्यप्यनुवर्तेत। तुल्यस्य तत्र क्रियाया सम्बद्धत्वादिति कृत्वा इवग्रहणमत्र कृतम्। इव वद्वादयस्तुल्यार्थाः। इव इवार्थे इत्यर्थः। *तदिति। द्वितीयान्तादर्हमित्यर्थे वतिः। अर्हतीत्यर्हमिति। अर्हमित्यर्थो नाम अर्हतीत्यर्थ एवेति कृत्वा विधिमर्हतीत्युक्तम्मूले। मण्डूकप्लुत्या तत्रेति सूत्रे क्रियाग्रहणस्याननुवृत्त्या क्रियाया नात्रानुवृत्तिश्शक्यते वक्तुम् इति मण्डूकप्लुत्येत्युक्तम्। राजानमर्हति छत्रम् राजवच्छत्रमिति – न स्यादिति भावः। राजिकं छत्रमिति छत्रमर्हति छात्रिको राजा इति च स्यादेव तदर्हतीति ठञ्। छत्रवद्राजेति तु न भवतीति बोध्यम्। न च विधिमर्हतीत्यत्रापि वैधिकः। पूज्यते इति भवेदिति वाच्यम्। क्रियासमभिव्याहारे परत्वाद्वतिरेव स्यादिति। अपि च तदर्हतीति सूत्रस्थस्य अर्हतेः लब्धुं योग्यो भवतीत्यर्थः। अत्रत्यस्य तु योग्यो भवतीत्येतावानेवेति विशेषः। *तस्येति। षष्ठ्यन्ताद्भावार्थे त्व तत् इत्येतौ प्रत्ययौ स्तः भावं विवृणोति प्रकृतीत्यादिना। प्रकृतिः यस्मात्प्रत्ययो विधीयते प्रकृतिरित्युच्यते। यथा गोशब्दात्त्वतलोर्विधित्सितयोर्गोशब्दः प्रकृतिः (गौः इति शब्दः गोशब्दः) तज्जन्यो बोधः अर्थः सास्नादिमान् चतुष्पाद्गौः गोशब्देनाभिधीयमानश्चतुष्पाद्विशेषः। तस्मिन्नर्थे प्रकारः तत्र विद्यमानो धर्मः भाव इत्युच्यते। प्रकृत्यर्थगतासाधारणधर्मो भाव इति निष्कर्षः। अमुमेव भावं जातिं वदन्ति नैयायिकाः। नित्यमेकमनेकानुगतं सामान्यमिति तल्लक्षणम्। गोत्वादिकं जातिः। गोत्वं

**१७८१। तस्य भावस्त्वतलौ** ।५।१।११९। प्रकृतिजन्यबोधे प्रकारो भावः। गोर्भावो गोत्वम्। गोता। 'त्वान्तं क्लीबं (लि. १२०)' 'तलन्तं स्त्रियाम् (लि. १७)'॥

**१७८२। आ च त्वात्** ।५।१।१२०। ब्रह्मणस्त्व इत्यतः प्राक् त्वतलावधिक्रियेते। अपवादैः सह समावेशार्थं। गुणवचनादिभ्यः कर्मणि विधानार्थं चेदम्। चकारो नञ्स्नञ्भ्यामपि समावेशार्थः। स्त्रियो भावः स्त्रैणम्। स्त्रीत्वम्। स्त्रीता। पौंस्नम्। पुंस्त्वम्। पुंस्ता॥

---

हि गोषु नश्यत्स्वपि न नश्यतीति नित्यम्। अनेकेषु गोषु अनुगतमिति अनेकानुगतम्। अत एव एकम्। न ह्यनेकानि गोत्वानि सन्ति। एवम् गोरसाधारणो धर्मः (भावः जातिरिति यावत्) गोत्वम् गोतेति सिद्धम्। अत्र गवादिप्रकृतिजन्यो यो बोधश्शाब्दबोधः गोत्ववानित्यादिः तत्र प्रकारो विशेषणम्। गोत्वं भाव इत्युच्यते इत्यर्थकथने आत्माश्रयरूपदोषस्स्यात्। गोत्ववानिति शाब्दबोधगतगोत्वावयवत्वप्रत्ययस्य भावे विहितत्वात् इति बोध्यम्। प्रकृत्यर्थगतासाधारणधर्मो भाव इत्युक्तम्। तत्र असाधारणधर्मो भाव इत्येतावदुक्तौ घटस्य भावो घटत्वमिति पदं पृथिवीत्वरूपार्थमपि बोधयेत्। पृथिवीत्वस्याप्यसाधारणधर्मत्वात्। घटसम्बन्धित्वाच्च (घटस्य पृथिव्यात्मकत्वात् घटस्य पृथिवीत्वमिति प्रयोगः सङ्गच्छते एवेति) प्रकृत्यर्थगतो धर्मो भाव इत्युक्तौ खण्डत्वमुण्डत्वादिष्वपि गोत्वपदप्रयोगस्स्यात्। खण्डत्वादीनां गोधर्मत्वात्। वस्तुतस्तु प्रकारो भाव इत्येवालम् (प्रकारो साधारणधर्मः) कस्य प्रकारोऽयमित्याकाङ्क्षाया-मर्थात्सन्निहितषष्ठ्यन्तस्यैवेति। प्रकारस्य प्रकृत्यर्थगतत्वं लभ्यते एवेति। अत्र प्रकृतिजन्यबोधे इत्ययं प्रयोगोपाधिरित्युक्तं तत्त्वबोधिन्याम्। स्पष्टार्थं तत्प्रयोग इति तदाशयः। एतावता गोरसाधारणो धर्मः गोत्वं गोता इति प्रागुक्तमविवादमिति सिद्धम्। लिङ्गन्तु लोकतो ज्ञेयमिति त्वान्तस्य लोके क्लीबत्वेन तलन्तस्य स्त्रीत्वेन च व्यवहारात् त्वन्तं क्लीबं तलन्तं स्त्रियामित्युक्तम्मूले। तलिल इत्। अदन्तत्त्वाट्टप् गोता। ***आ च त्वात्।** पञ्चम्यपाङ्परिभिरिति आङ्योगे पञ्चमी। चकारेण व्यवधाने सत्यपि सौत्रत्वान्न पञ्चम्यनुपपत्तिः। आङ्मर्यादाभिविध्योरिति अभिविधावयमाङ् असमस्तः। समासशास्त्रस्य वैकल्पिकत्वात्। आत्वात् त्वमभिव्याप्येत्यर्थः। कुत्र वर्तते त्वशब्द इत्यत आह। ब्रह्मणस्त्व इति। पूर्वसूत्रात्त्वतलोरनुवृत्तिः। अधिकारसूत्रत्वादधिक्रियते इति आङः अभिविधित्वद्योतनाय अतः प्रागिति तत्सूत्रपर्यन्तमित्यर्थः। ननु किमर्थमिदं सूत्रम्। त्वतलोरुत्तरत्रानुवृत्त्यैव सिद्धे इति शङ्कायामाह–अपवादैरित्यादि। अयं भावः। अपवादेषु उत्सर्गाणां न प्रवृत्तिरिति।

**१७८३। न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटयुधकतरसलसेभ्यः ।५।१। १२१।** इतः परं ये भावप्रत्ययास्ते नञ्तत्पुरुषान्न स्युश्चतुरादीन्वर्जयित्वा।

---

पृथ्वादिभ्यस्त्वतलोरप्राप्तयोस्सतोः विधानार्थमिदमिति। न च त्वतलोरनुवर्तमानयोर्यथा अपवादेन बाधः तथा अधिक्रियमाणयोरपीति कोऽर्थस्सूत्रेणेति वाच्यम्। अत एव वैयर्थ्यात् बाधकेष्वप्यनयोः प्रवृत्तिरिति। ननु पृथ्वादिभ्य इमनिज्वा इति वा ग्रहणात्। अपवादेन इमनिचामुक्ते उत्सर्गयोस्त्वतलोः प्रवृत्तिस्स्यादेवेति त्वतलोरनुवृत्त्यैव सिद्धे आचत्वादिति व्यर्थमित्याशङ्क्य फलान्तरमुपन्यस्यति गुणवचनादिभ्य इति। गुणवचनब्राह्मणादिभ्यः कर्मणि चेति कर्मण्यर्थे चाद्भावार्थेष्यञादिकं विधीयते। तत्र त्वतलौ तु भावे एव स्यातां न तु कर्मणि। तस्य भाव इत्यतः अनुवृत्तयोस्त्वतलोः पृथगधिकारपक्षे तु न तयोर्भावसम्बद्धत्वमिति कर्मण्यपि त्वतलौ स्यातामिति भावः। न च आचत्वादिति सूत्रे अनुवर्तितयोस्त्वतलोर्भावसंबद्धत्वादेवमपि न कर्मणि त्वतलोस्सिद्धिरिति वाच्यम्। अधिकारसूत्रं हीदम्। त्वतलोः केवलयोरेवाधिकारं ब्रूते न तु भावसंबद्धयोः। अन्यथा अधिकारस्यैव वैयर्थ्यादिति। नन्वेवं सूत्रे चकारो व्यर्थ इति शङ्कायां वदतिचकार इत्यादिना। स्त्रीपुम्साभ्यां नञ्स्नञौ भवनादिति। धान्यानां भवन इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यंनञ्स्नञौ विहितौ। भावार्थोऽपि ततः प्रागर्थ एवेति भावार्थे च नञ्स्नञौ प्राप्तौ। तावेव भवतः न तु त्वतलाविति स्त्रीपुम्साभ्यां त्वतलौ च स्यातामित्येतदर्थं चकारग्रहणमिति। ननु परत्वात्त्वतलावेव स्यातामिति भावार्थे नञ्स्नञोरप्राप्तिरेवेति चेन्मैवम्। प्रतिपदोक्तत्वेनान्तरङ्गत्वात्तयोर्न त्वतल्भ्यां बाध इति। परन्तु त्वतलोरेव बाधः। नञ्स्नञ्भ्यामिति तद्बाधाभावार्थं चग्रहणमिति बोध्यम्। नञ्स्नञ्भ्यां सह त्वतलोस्समावेशं दर्शयति स्त्रैणमित्यादिना। ***नेति।** भावप्रत्ययप्रकरणस्थत्वादस्य निषेधस्यापि भावप्रत्ययविषयत्वमेवेति कृत्वा सूत्रगत "न" पदस्य भावप्रत्यया न स्युरित्यर्थ इत्यभाणि मूले। आचत्वादित्यधिकारसूत्रसामर्थ्यात्त्वतलौ स्यातामेवेति इतः परं ये भावप्रत्यया इत्युक्तम्। न नञिति सूत्रात्प्राग्ये भावप्रत्यया विहितास्ते नञ्तत्पुरुषात्स्युरेव पश्चाद्ये विधीयन्ते इमनिजादयस्ते तु न स्युरिति भावः। इतः परमित्युक्तत्वेन नञ्स्नञावपि स्यातामेव तयोरितः प्रागेव विहितत्वात्। तेन अपतित्वम् अपटुता। अस्त्रैणम्। अपौस्नम् इति। इतः परं किमित्यस्योदाहरणचतुष्टयं बोध्यम्। न पतिरपतिः तस्य भावः अपतित्वम्। न विद्यते पतिर्यस्यास्सा अपतिः तस्या भावः अपतित्वम्। पत्यन्तेति यकि अपत्यमित्यपि स्यादेव। नञ्तत्पुरुषादितः परं न स्युरित्युक्तत्वात्। बृहस्पतिशब्दाद्ब्राह्मणादित्वात् ष्यञि बार्हस्पत्यम्।

अपतित्वम्। अपटुत्वम्। नञ्पूर्वात्किम्। बार्हस्पत्यम्। तत्पुरुषात्किम्। नास्य पटवः सन्तीत्यपटुस्तस्य भाव आपटवम्। अचतुरेति किम्। आचतुर्यम्। आसङ्गत्यम्। आलवण्यम्। आवट्यम्। आयुध्यम्। आकत्यम्। आरस्यम्। आलस्यम्॥ **१७८४। पृथ्वादिभ्य इमनिज्वा** ।५।१।१२२। वावचनमणादिसमावेशार्थम्॥ **१७८५। र ऋतो हलादेर्लघोः** ।६।४।१६१। हलादेर्लघोर्ऋकारस्य रः स्यात् इष्ठेमेयस्सु॥ **१७८६। टेः** ।६।४।१५५। भस्य टेर्लोपः स्यादिष्ठेमेयस्सु। पृथोर्भावः प्रथिमा। पार्थवम्। म्रदिमा। मार्दवम्॥ **१७८७। वर्णदृढादिभ्यः ष्यञ्च** ।५।१।१२३। चादिमनिच्। शौक्ल्यम्।

---

***पृथ्विति**। पृथ्वादिभ्यो भावे इमनिच् वा स्यात्। च इत्। इकार उच्चारणार्थः। इमन् इति शिष्यते। पृथु इमन् इति स्थिते ***र ऋत इति**। र ऋतः इति छेदः। र इति लुप्तप्रथमाकम्पदम्। ऋत इति तकार उच्चारणार्थः। लघोरित्यनेनैव ॠकारनिषेधात्। न च लघोरिति त्यक्तव्यम्। तपरकरणे न ॠत इति गुरोर्निषेधादिति वाच्यम्। संयोगे गुरु इति संयुक्ते परतः ह्रस्वस्यापि गुरुत्वात्। हल् आदिर्यस्य तस्य हलादेः र इति रेफादेशो न(किन्त्वदन्तस्यादेशः)। अकारस्य रेफोपरिस्थस्य उच्चारणार्थत्वाभावात् तुरिष्टेमेयस्सु इति सूत्रादिष्टेमेयस्सु इत्यस्यान्वयः। इष्ठन्–इमनिच्। ईयसुन् – इति प्रत्ययत्रये परत इत्यर्थः। इष्ठ इमा ईयस् इति। शेषितप्रत्ययस्वरूपाणामितरेतरद्वन्द्वः। इमा–इति कृतनलोपदीर्घस्यानुकरणं पदम्। एतेन प्रथु इमन् इति जाते। ***टेः**। भस्येत्यधिकारः। इष्ठेमेयस्स्वित्यनुवर्तते। ढेलोपोऽकद्र्वा इत्यतो लोप इत्यन्वेति। टेरुकारस्य लोपे प्रथिमन्। उपधादीर्घः। नलोपः प्रथमा। इगन्ताच्च लघुपूर्वादित्यनेन भावार्थे अणि कृते पार्थवम्। त्वतलोः कृतयोः पृथुत्वं पृथुता इत्यपि भवति। पृथ्वादिभ्य इति सूत्रे वाग्रहणाभावेऽपि त्वतलोरपवादैस्सह समावेशस्य आचत्वादिति सूत्रेण लब्धत्वाद्रूपत्रयं यद्यपि सिद्ध्यति तथापि अणणन्तं न सिद्ध्येदिति वावचनमणादिसमावेशार्थमित्युक्तम्मूले। ***वर्णेति**। वर्णवाचकेभ्यः दृढादिभ्यश्च भावे ष्यञ्। चादिमनिच्। अधिकारात्त्वतलौ स्युः। पृथुमृद्विति। र ऋत इति सूत्रेण विधीयमानं रत्वं पृथुमृद्वादीनां परिगणितानामेवेति दृढस्य परिगणितत्वाद्रत्वं भवतीति भावः। षित्त्वफलं दर्शयितुमुदाहरति। औचिती। याथाकामी इति। ब्राह्मणादेराकृतिगणत्वादुचितयथाकामाभ्यां भावे ष्यञ्। षिद्गौरादिभ्यश्चेति ततो ङीषि हलस्तद्धितस्येति यलोपः ञित्त्वादादिवृद्धिः। गुणवचनेति सूत्रे यद्यपीदं द्वयमुदाहर्तव्यं तथापि षित्त्वफलदर्शनायात्रैवोदाहृतमिति बोध्यम्। यथाकामी इति त्वपपाठ एव। आदिवृद्ध्या

शुक्लिमा। दार्ढ्यम्॥ **पृथुमृदुभृशकृशदृढपरिवृढानामेव रत्वम्**॥ द्रढिमा। षो ङीषर्थः। औचिती। याथाकामी॥ **१७८८। गुणवचनब्राह्मणादिभ्यः कर्मणि च** ।५।१।१२४। चाद्भावे। जडस्य कर्म भावो वा जाड्यम्। मूढस्य भावः कर्म वा मौढ्यम्। ब्राह्मण्यम्॥ **अर्हतो नुम् च**॥ अर्हतो भावः कर्म वा आर्हन्त्यम्। आर्हती। ब्राह्मणादिराकृतिगणः॥ **१७८९। यथातथायथापुरयोः पर्यायेण** ।७।३।३१। नञः परयोरेतयोः पूर्वोत्तरपदयोः पर्यायेणादेरचो वृद्धिर्ञिदादौ। अयथातथाभाव आयथातथ्यम्। अयाथातथ्यम्। आयथापुर्यम्। अयाथापुर्यम्। आ पादसमाप्तेर्भावकर्माधिकारः॥

---

भाव्यत्वात्। क्लीबत्वे तु औचित्यम्। याथाकाम्यमिति भवति। ***गुणा** उच्यन्ते यैस्ते गुणवचनाश्शब्दास्तेभ्यः ब्राह्मणादिभ्यश्च। भावकर्मणोष्ष्यञ्। त्वतलौ च–जडो मूढ इतीमौ गुणवचनौ। यद्यपि गुणिवचनौ तथापि गुणवाचित्वे एव अनयोरभिनिवेशः। गुणवद्द्रव्यवाचित्वात्। यद्वा–लक्षणया गुणवाचित्वं बोध्यम् । अथवा–गुणवचनेति सूत्रस्थपदस्यैव गुणवद्द्रव्यवाचिभ्य इत्यर्थो जहल्लक्षणया वक्तव्यः। केवलगुणवाचिभ्यः भावकर्मणोरसम्भवात्। न हि जाड्यं न्नाम गुणः। किञ्चित्कर्म कर्तुमीष्टे अचेतनत्वात्। कर्मणश्चेतनसाध्यत्वात्। गुणस्य धर्मत्वात्। न हि गुणे कश्चिदपरो धर्मोऽभ्युपगम्यते। अभ्युपगम्यते इत्याग्रहे तु जाड्ये जाड्यत्वं तस्मिन् जाड्यत्वत्वमित्येवमनवस्थारूपदोषापत्तेः। ***अर्हत इति**। ष्यञ्सन्नियोगेनायं नुमागमः तेन त्वतलोः परयोः अर्हतो न नुम्। अर्हत्त्वमर्हत्ता–नुमो मित्त्वात्। मिदचोन्त्यात्पर इति अन्त्यादचः परस्सन् भवति। आर्हन्त्यम् क्लीबम्। स्त्रियान्तु ङीषि यलोपे आर्हन्ती। ***यथा तथेति**। अत्र नञश्शुचीश्वरेति प्राक्सूत्रान्नञोऽनुवृत्तिः। हृद्भगसिन्ध्वन्त इत्यतः पूर्वपदस्येति च उत्तरपदस्येत्यधिकारः। मृजेर्वृद्धिरित्यतो वृद्धिः। अचोञ्णिति, तद्धितेष्वचामादेः किति च इत्यनुयन्ति । तदेतदाह–नञः परयोरित्यादिना । वृद्धिर्ञिदादौ इति मूले पठितव्यम्। वृद्धिर्यथादाविति त्वपपाठः। यथा तथा च। यथा पुरा च । यथातथा यथापुरे – तयोः। अत एव निपातनादव्ययद्वयस्य समासः न यथातथा। (नलोपो नञ इति नलोपात्) अव्ययानामविभक्तिकवात् नास्मात् षष्ठी तस्य अयथातथाभावः इति विग्रहः। अर्थस्तु षष्ठ्यन्तार्थ एव। अन्यथा तस्य भाव इति षष्ठ्यन्तादेव भावस्य विहितत्वेन भावार्थप्रत्ययानुत्पत्तिप्रसङ्गात्। ब्राह्मणादिराकृतिगण इत्युक्तत्वाद्भावे ष्यञ्। ञित्त्वात्पूर्वोत्तरपदयोः पर्यायेण वृद्धिः। यथापूर्वस्य वृद्धिः तदा नोत्तरपदस्य– यदा उत्तरपदस्य वृद्धिः तदा न पूर्वस्येति पर्यायेणेत्यस्यार्थः। यस्येति लोपः।

**चतुर्वर्णादीनां स्वार्थ उपसंख्यानम्**॥ चत्वारो वर्णाश्चातुर्वर्ण्यम्। चातुराश्रम्यम्। त्रैस्वर्यम्। षाड्गुण्यम्। सैन्यम्। सांनिध्यम्। सामीप्यम्। औपम्यम्। त्रैलोक्यमित्यादि। सर्वे वेदाः सर्ववेदास्तानधीते सर्ववेदः॥ **सर्वादेः**-इति लुक्। स एव सार्ववैद्यः॥ (ग) **चतुर्वेदस्योभयपदवृद्धिश्च**॥ चतुरो वेदानधीते चतुर्वेदः। स एव चातुर्वैद्यः। चतुर्विद्यस्येति पाठान्तरम्। चतुर्विद्य एव चातुर्वैद्यः॥ **१७९०। स्तेनाद्यन्नलोपश्च** ।५।१।१२५। नेति संघातग्रहणम्। 'स्तेन चौर्ये' पचाद्यच्। स्तेनस्य भावः कर्म वा स्तेयम्। स्तेनादिति योगं विभज्य स्तैन्यमिति ष्यञन्तमपि केचिदिच्छन्ति॥

---

आयथातथ्यम्। अ इति पूर्वपदम्। यथातथेत्युत्तरपदम्। नञ् समासे। नञ एव समासपूर्वावयवत्वात्। उत्तरपदवृद्धौ आयाथातथ्यम्। एवम् अयथापुराभावः आयथापुर्यम्। अयाथापुर्यमिति च। भावे कर्मणि चेत्येतद्द्वयं पञ्चमाध्यायप्रथमपादपरिसमाप्तिपर्यन्तं गुणवचन सूत्रमारभ्य अधिक्रियते इत्याह-आपादेत्यादिना। ***उपसंख्यानम्***। ष्यञ्प्रत्ययस्येति शेषः। चत्वारो वर्णा एव चातुर्वर्ण्यम्। गणसूत्रमिदम्। ***स्तेनादिरिति***। स्तेनाद्भावकर्मणोर्यत्प्रत्ययस्स्यात्। नलोपश्च-नेति संघातग्रहणं नकाराकारयोर्लोप इत्यर्थः। स्तेन। य - नलोपः। स्तेयम् । स्तेनः चोरः। ननु नकारलोपेऽपि स्ते अय इति स्थिते यस्येति लोपः स्तेयमिति सिद्ध्यत्येवेति चेन्मैवम्। अचः परस्मिन् पूर्वविधाविति यप्रत्ययनिमित्तः अल्लोपः स्थानिवद्भवति। (यस्येति चेत्यल्लोपस्य तद्धितनिमित्तकत्वेन परनिमित्तत्वात्।) स्थानिभूतादचः पूर्वत्वेन दृष्टस्य स्ते इत्येकारस्य अयादेशे कार्ये कर्तव्ये इति स्तय्यमिति स्यादिति। नन्वेवमपि नस्य लोपो नलोपः। नस्य लोपस्स्यादित्यर्थः। अलोन्त्यस्येति अन्त्यस्यैवायं लोप इति नकारोपर्यकारस्यैव लोपः स्स्यादिति स्येन्यमिति स्यादिति चेन्मैवम्। नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे इति स्तेनावयवोऽयं नः अनर्थक इति तत्र अलोन्त्यपरिभाषा नोपतिष्ठते। किन्तु निर्दिश्यमानपरिभाषया न इति संघातस्यैव लोप इति। अत्र स्तेनात् यन्न लोपश्च इति योगविभागः। स्तेनादिति सूत्रे ष्यञनुवर्तते।यन्न लोपश्चेति सूत्रे स्तेनादित्यनुवर्तते । उभयत्रापि भावकर्माधिकारः। तथा च स्तेनाद्भावकर्मणोष्ष्यञ् स्यादिति। स्तेनाद्भावकर्मणोर्यन्नलोपश्च स्यातामिति च सूत्रद्वयस्यार्थः। एवं स्तैन्यमिति रूपमपि साधु इति केचित्। ***सख्युर्यः***। सखिन्शब्दात् षष्ठ्यन्ताद्भावकर्मणोर्यः। नस्तद्धित इति टिलोपः। सख्यम्। त्वतलोरधिकृतत्वात् सखित्वं सखिता इत्यपि। ***वाणिज्यमपि***। वणिक्शब्दात् ष्यञ ञित्त्वादादिवृद्धिरिति भावः। ***पत्यन्तेति***। पतिः । पतिशब्दः अन्ते

**१७९१। सख्युर्यः** ।५।१।१२६। सख्युर्भावः कर्म वा सख्यम्॥ **दूतवणिग्भ्यां च**॥ दूतस्य भावः कर्म वा दूत्यम्। वणिज्यमिति काशिका। माधवस्तु वणिज्याशब्दः स्वभावात्स्त्रीलिङ्गः। भाव एव चायं प्रत्ययो न तु कर्मणीत्याह। भाष्ये तु दूतवणिग्भ्यां चेति नास्त्येव। ब्राह्मणादित्वाद्वाणिज्यमपि॥ **१७९२। कपिज्ञात्योर्ढक्** ।५।१।१२७। कापेयम्। ज्ञातेयम्॥ **१७९३। पत्यन्तपुरोहितादिभ्यो यक्** ।५।१।१२८। सैनापत्यम्। पौरोहित्यम्॥ (ग) राजाऽसे॥ राजशब्दोऽसमासे यकं लभत इत्यर्थः। राज्ञो भावः कर्म वा राज्यम्। समासे तु ब्राह्मणादित्वात्ष्यञ्। आधिराज्यम्॥ **१७९४। प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्** ।५।१।१२९। प्राणभृज्जाति, आश्वम्। औष्ट्रम्। वयोवचने, कौमारम्। कैशोरम्। औद्गात्रम्। औन्नेत्रम्। सौष्ठवम्। दौष्ठवम्॥ **१७९५। हायनान्तयुवादिभ्योऽण्** ।५।१।१३०। द्वैहायनम्। त्रैहायनम्। यौवनम्। स्थाविरम्।

---

येषान्ते पत्यन्ताश्शब्दाः। तेभ्यः पुरोहितादिभ्यश्च षष्ठ्यन्तेभ्यः भावकर्मणोर्यक्। कित्त्वाद्वृद्धिः। सेनापतेर्भावः सैन्यापत्यम्। ***राजाऽसे।*** स इति समासाद्यक्षरेण समासो गृह्यतेऽभिधीयते वा। गौरावस्कन्दिन्नित्यत्र गौ इत्याद्यक्षरेण समासो गृह्यतेऽभिधीयते वा। गौरावस्कन्दन्नित्यत्र गौः इत्याद्यक्षरेण गौतमो यथा न सः असः तस्मिन् असे असमासे इत्यर्थः। आधिराज्यम्। राज्ञि अधिराजम्। विभक्त्यर्थेऽव्ययीभावः। हरौ अधिहरि इतिवत्। राजाहस्सखिभ्य इति समासान्तष्टच्। नस्तद्धिते इति टिलोपः। अव्ययीभावस्य नपुंसकत्वादम् सोः। अधिराजम्। भावः आधिराज्यम्। (नाव्ययीभावादतोम्त्वपञ्चम्या इति षष्ठ्या अम्भावः। अधिराजम्। अर्थस्तु षष्ठ्यन्तार्थ एव) यद्यपि यकि कृतेऽपि अधिराज्यमिति रूपं सिद्ध्यतीति राजाऽसे इति वार्तिकं व्यर्थम्, तथापि स्वरे विशेषः। * **प्राणभृज्जातिवाचिभ्यः** गुणवचनेभ्यः उद्गात्रादिभ्यश्च भावकर्मणोरञ्। उद्गातृ-उन्नेतृ-होतृ-पोतृ-इत्यादयः उद्गात्रादयः। ***यलोपश्च।*** य इति संघातग्रहणम्। यकाराकारयोर्लोप इत्यर्थः। चादण्। अण्सन्नियोगे एवायं यलोपः। तेन त्वतलोर्न। श्रोत्रियत्वं श्रोत्रियता। श्रोत्रिय-अण् - यलोपः - आदिवृद्धिः - श्रौत्रि - अ - इको यणचि श्रौत्रम्। कौशल्यं ब्राह्मणादित्वात् ष्यञ्। कौशलं युवादित्वादण्। ***इगन्तादिति।*** इक् (प्रत्याहारः) अन्ते यस्य तस्मादिगन्तात् लघुः ह्रस्वं लघु इति। लघुसंज्ञको ह्रस्ववर्णः पूर्वः पूर्वावयवो यस्य तस्माल्लघुपूर्वात्। यस्य प्रातिपदिकस्य अन्तावयव इक् पूर्वावयवो लघुश्च तदिगन्तलघुपूर्वमित्युच्यते इति निष्कर्षः।

**श्रोत्रियस्य यलोपश्च** ॥ श्रौत्रम्। कुशलचपलनिपुणपिशुनकुतूहलक्षेत्रज्ञा युवादिषु ब्राह्मणादिषु च पठ्यन्ते। कौशल्यम्। कौशलमित्यादि ॥ **१७९६। इगन्ताच्च लघुपूर्वात्** ।५।१।१३१। शुचेर्भावः कर्म वा शौचम्। मौनम्। कथं काव्यम्। कविशब्दस्य ब्राह्मणादित्वात्ष्यञ् ॥ **१७९७। योपधाद्गुरूपोत्तमाद्वुञ्** ।५।१।१३२। रामणीयकम्। आभिधानीयकम् ॥ **सहायाद्वा** ॥ साहाय्यम्। साहायकम् ॥

---

अन्तावयवभूतेगपेक्षयैव लघोः पूर्वत्वमाश्रयितव्यम्। एवं लघुपूर्वो य इक् तदन्तात्प्रातिपदिकादिति सिद्धम्। लघुः पूर्वं यस्मात्स लघुपूर्व इति समासः। यद्यपि शुचि–मुनि–इत्यादिषु लघुव्यवहितपूर्वकत्वमिको न सम्भवति तथाऽपि येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादिति व्यञ्जनेन व्यवधाने सत्यपि लघुपूर्वत्वमिकोस्तीति बोध्यम्। यद्वा–पूर्वत्वेन दृष्टः पूर्व इत्युच्यते। इकः पूर्वत्वेन लघुर्दृश्यते चेत् तर्हि लघुपूर्वत्वमिकस्सम्भवति। एतेन शुचीत्यत्र इकः पूर्वत्वेन चो यथा दृश्यते तथा लघुरपि दृश्यत एव। अव्यवहितपूर्वत्वमेवात्र पूर्वत्वमित्यनुक्तत्वात्। न चैवम्। अतिपाण्डुशब्दादपि अणः प्रसक्तिः। इकः पूर्वत्वेन लघोः तकारोपरीकारस्य दृश्यमानत्वादिति वाच्यम्। इकः पूर्वत्वेन लघुरेव यदि दृश्यते न तु गुरुः तर्हि लघुपूर्वत्वमिकस्संभवतीति वचनात्। ***योपधादिति।** अन्त्यस्य समीपो वर्ण उपोत्तममित्युच्यते। उत्तमशब्दस्य अन्त्ये रूढत्वात्। उत्तमस्य समीपे उपोत्तममित्यव्ययीभावः। लक्षणया तत्स्थवर्णोऽभिधीयते। अलोन्त्यात्पूर्व उपधा। योपधत्वं गुरूपोत्तमत्वञ्च न प्रत्येकं वुञुत्पत्तिम्प्रति हेतुः। किन्तु समुच्चयेन। तेन योपधो गुरूपोत्तमश्च यष्षष्ठचन्तस्तस्माद्भावकर्मणोर्वुञ् इत्यर्थस्सिद्ध्यति। यथा रमणीयस्य कर्म भावो रामणीयकम्। रमणीयशब्दे अन्त्यवर्णः अकारः, ततः पूर्व उपधा यकारः तस्मात्पूर्वमुपोत्तमम्। णकारोपरि ईकारो गुरुः इति योपधत्वं गुरूपोत्तमत्वञ्च रमणीयशब्दे वर्तते इति ततो वुञ्। ननु अन्त्यसमीपस्थितिः यकारस्यैव वर्तते न तु ईकारस्येति, गुरूपोत्तमत्वं नात्रेति चेन्मैवम्। अन्त्यात्पूर्वमुपोत्तममिति नोक्तम्। किन्तु अन्त्यस्य समीपमिति यकारेण व्यवधाने सत्यपि ईकारस्य अन्त्यसामीप्यं वर्तते एव। अन्यथा योपधादिति योपधत्वं वदन् गुरूपोत्तमत्वमपि कथं वदेत्सूत्रकारः, असम्भवात् इति बोध्यम्। अभिधानीयस्य भाव आभिधानीयकम्। ***सहायाद्वा**–वुञभावपक्षे गुणवचनत्वात् ष्यञ्। साहाय्यम्। सहाय्यमिति त्वपपाठः। ***द्वन्द्वात्** – मनोज्ञादिभ्यश्च भावकर्मणोर्वुञ्। शिष्योपाध्याययोर्भावः कर्म वा शैष्योपाध्यायिका। इत्त्वाद्वृद्धिः। वोरकादेशः। यस्येति लोपः, स्त्रियामदन्तत्वाट्टाप्। (स्त्रीत्वन्तु लोकात्) प्रत्ययस्थात्कात्पूर्वस्येति

**१७९८। द्वन्द्वमनोज्ञादिभ्यश्च** ।५।१।१३३। शैष्योपाध्यायिका। मानोज्ञकम्॥ **१७९९। गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु** ।५।१।१३४। अत्याकारोऽधिक्षेपः तदवेतस्ते गोत्रचरणयोर्भावकर्मणी प्राप्तः। अवगतवान्वा। गार्गिकया श्लाघते। गार्ग्यत्वेन विकत्थत इत्यर्थः। गार्गिकयाऽत्याकुरुते। गार्गिकामवेतः॥ **१८००। होत्राभ्यश्छः** ।५।१।१३५। होत्राशब्द ऋत्विग्वाची स्त्रीलिङ्गः। बहुवचनाद्विशेषग्रहणम्। अच्छावाकस्य भावः कर्म वा आच्छावाकीयम्। मैत्रावरुणीयम्॥ **१८०१। ब्रह्मणस्त्वः** ।५।१।१३६। होत्रावाचिनो ब्रह्मशब्दात्त्वः स्यात्। छस्यापवादः। ब्रह्मत्वम्। नेति वाच्ये त्ववचनं तलो बाधनार्थम्। ब्राह्मणपर्यायाद्ब्रह्मन्शब्दात्तु त्वतलौ। ब्रह्मत्वम्। ब्रह्मता॥

**नञ्स्नञोरधिकारः समाप्तः॥**

---

अत इत्वम्। ***गोत्रेति।** श्लाघादिषु विषयभूतेषु भावार्थम्प्रति श्लाघादीनां केनचित्सम्बन्धेन विषयभूतत्वम्। यथा गार्ग्यस्य भावो गार्गिका। तया श्लाघते। अत्र श्लाघाहेतुर्भावार्थ इति भावश्लाघयोर्हेतुहेतुमद्भावस्सम्बन्धः। एवं गार्गिकात्याकारयोरपि। गार्गिकाया अवेत्यस्य तु कर्मत्वं सम्बन्धः। गार्गिका। कर्मकावगतेरर्थत्वात्। गार्ग्य वुञ् - वोरकादेशः। यस्येति लोपः। अपत्यस्य च तद्धितेनाति इति यलोपः। गार्गकस्त्रियां - प्रत्ययस्थादितीत्वम्। गार्गिका। ***होत्रेति।** होतृशब्दात् स्त्रियां ऋन्नेभ्य इति ङीपि कृते होत्री इति स्यात्र तस्य ग्रहणम्। किन्तु जुहोतेस्त्रन् होत्रः। स्त्रियामदन्तत्वाट्टाप्। होत्रा इति रूपम्। होत्राशब्दात् ऋत्विग्विशेषवाचिभ्यश्च भावार्थे कर्मणि च छस्स्यात्। होत्राया भावः कर्म वा होत्रीयम्। विशेषवाचिभ्य आह - अच्छावाकीयमित्यादि। अच्छावाकमित्रावरुणादयो ऋत्विग्विशेषाः। ऋत्विग्भूतानामृषीणां नामानि अच्छावाकादीनीति बोध्यम्। ***ब्रह्मणस्त्वः।** अत्र पूर्वसूत्राद्धोत्राभ्य इत्यनुवर्तते। वचनविपरिणामेन होत्राया इति ब्रह्मणो विशेषणम्। तदेतदाह होत्रा वाचिन इति। ऋत्विक्पर्यायाद्ब्रह्मन् शब्दादिति यावदर्थः। ननु ब्रह्मण्य इति सूत्र्यताम् त्वतलोरधिकारादेव त्वप्रत्ययस्सिद्ध्यतीति शङ्कायामाह - भस्यापवाद इति। ननु होत्राविशेषाणामेव ग्रहणं बहुवचनादित्युक्तम्मूले। कथमत्र होत्रापर्यायाच्छस्य प्राप्तिर्येन छस्यापवादस्त्वस्स्यादिति चेन्मैवम्। विशेषग्रहणमित्यनेन पर्यायग्रहणमप्युपलक्ष्यते। विशेषाणामेवेह ग्रहणमिति नियमादर्शनात्। तथा च होत्राभ्य इति बहुवचनात्पर्यायविशेषाणां ग्रहणमिति सिद्धम्। ननु होत्राभ्य इत्यनेनैव ब्रह्मणश्छसिद्धौ ब्रह्मण इति पृथक्सूत्रकरणं व्यर्थं सत् त्वतलावधिक्रियमाणौ विधत्ते इति चेन्मैवम्।

## तद्धितेषु मत्वर्थीयाः ३६।

**१८०२। धान्यानां भवने क्षेत्रे खञ्** ।५।२।१। भवन्त्यस्मिन्निति भवनम्। मुद्गानां भवनं क्षेत्रं मौद्गीनम्॥ **१८०३। व्रीहिशाल्योर्ढक्** ।५।२।२। व्रैहेयम्। शालेयम्॥ **१८०४। यवयवकषष्टिकाद्यत्** ।५।२।३। यवानां भवनं क्षेत्रं यव्यम्। यवक्यम्। षष्टिक्यम्॥

---

त्वतलोरपवादैस्सह समावेशस्य उक्तत्वात्। त्वतलौ स्यातां चोपि स्यादिति छाभावत्वग्रहणमावश्यकमिति। ननु छाभावचेत्त्वग्रहणं तर्हि ब्रह्मणो न - इति सूत्र्यताम्। तथा च ब्रह्मणश्छो न स्यादित्यर्थात् छाभावस्सिद्ध्यति। त्वविधेश्नविधिर्हि लाघवात् सुष्ठु इति शङ्कायामाह नेति वाच्ये इत्यादिना। त्वतलोरुभयोरधिकृतत्वेन छनिषेधे त्वतलावुभावपि स्यातामिति त्वग्रहणम्। कृते तु त्वग्रहणेनात्र त्वतलोरधिकारः त्वस्य पुनर्ग्रहणादिति ज्ञाप्यते इति भावः। **इति नञ्स्नञोरधिकारस्समाप्तः।** ननु त्वतलोरेवाधिकारस्समाप्तः आ चत्वादित्युक्तत्वादिति कथं नञ्स्नञोरधिकारस्समाप्त इत्युच्यते। अपि च स्त्रीपुम्साभ्यामेव नञ्स्नञौ विहिताविति न नञ्स्नञोरधिकारोऽप्यस्मिन् शास्त्रे इति चेदुच्यते। धान्यानाम्भवन इत्यतः प्रागर्थेषु स्त्रीपुम्साभ्यान्नञ्स्नञौ भवत इत्युक्तम्। स्त्रीपुम्साभ्यान्नञ्स्नञौ येष्वर्थेषु भवन्ति तेऽर्थास्समाप्ता इति नञ्स्नञोरधिकारस्समाप्त इत्युक्तम्। धान्यानाम्भवन इति सूत्रात्प्राक् ये ये अर्थास्तेषु सर्वेषु स्त्रीपुम्साभ्यान्नञ्स्नञोर्विधीयमानत्वेन तत्तदर्थेष्वनयोरधिकार इति फलितत्वादिति भावः **इति। नञ्स्नञोरधिकारः समाप्तः।।**

**अथ मत्वर्थीयाः।** ***धान्यानामिति।** धान्यविशेषवाचकात् षष्ठ्यन्ताद्भवने खञ् यद्भवनं तच्चेत् क्षेत्रम्। भवन्त्यस्मिन्निति व्युत्पत्त्या भवनन्नाम उत्पत्तिस्थानम्। ***व्रीहीति।** प्राक्सूत्रं सर्वमत्र उत्तरसूत्रद्वये चानुवर्तते खञं विना। ढकः खञपवादत्वात्। धान्यविशेषवाचिभ्यां व्रीहिशालिभ्यां भवने ढक् तच्चेद्भवनं क्षेत्रम् इत्यर्थः। ***यवेति।** सूत्रे समाहारद्वन्द्वः। षष्टिकाष्षष्टिरात्रेण पच्यन्ते ये ते शालयः। ***पक्षे खञ्।** यतः खञपवादत्वेन यदभावपक्षे औत्सर्गिकः खञिति भावः। तिल - माष - उमा भङ्ग - अणु इत्येते धान्यविशेषाः। ***सर्वेति।** सर्वचर्मन्शब्दात्तृतीयान्तात् खखञौ स्तः कुत इत्यर्थे। सर्वचर्मण इति यद्यपि पञ्चमीनिर्देशात् समर्थविभक्तिरपि पञ्चमीति वक्तुं शक्यते तथापि कृत इत्यर्थेन सह पञ्चम्यन्तार्थस्य नास्ति सामर्थ्यम्। कृञः कर्मणि क्ते कृते कृत इति रूपस्य निष्पन्नत्वेन तृतीयान्तार्थ एव करणक्रियायां कर्ता भवितुमर्हति करणं वेति सामर्थ्यात्। समर्थविभक्तिस्तृतीयेति

**१८०५। विभाषा तिलमाषोमाभङ्गाणुभ्यः** ।५।२।४। यत् वा स्यात् पक्षे खञ्। तिल्यम्। तैलीनम्। माष्यम्। माषीणम्। उम्यम्। औमीनम्। भङ्ग्यम्। भाङ्गीनम्। अणव्यम्। आणवीनम्॥ **१८०६। सर्वचर्मणः कृतः खखञौ** ।५।२।५। असामर्थ्येऽपि निपातनात्समासः। सर्वश्चर्मणा कृतः सर्वचर्मीणः। सार्वचर्मीणः॥ **१८०७। यथामुखसंमुखस्य दर्शनः खः** ।५।२।६। मुखस्य सदृशं यथामुखं प्रतिबिम्बम्। निपातनात्सादृश्येऽव्ययीभावः। समं सर्वं मुखं संमुखम्। समशब्दस्यान्तलोपो निपात्यते। यथामुखं दर्शनः यथामुखीनः। सर्वस्य मुखस्य दर्शनः संमुखीनः॥ **१८०८। तत्सर्वादेःपथ्यङ्गकर्मपत्रपात्रं व्याप्नोति** ।५।२।७।

---

बोध्यम्। सा च तृतीया चर्मणोऽचेतनत्वेन करणे तृतीयैवेति च। सर्वचर्मणा कृत इति विग्रहे सर्वपदं कृते अन्वेति। न तु चर्मणीति सर्वश्चर्मणा सर्वचर्मणा इति समास एव नोदीयात्। असामर्थ्यादिति तृतीयान्तस्सर्वचर्मन् शब्द एव असाधुरिति शङ्कायामाह – निपातनात्समास इति। न च सर्वेण चर्मणा कृत इति विग्रहो वाच्य इति वाच्यम्। भाषादावस्य विग्रहस्य अदृष्टत्वेन अनिष्टत्वात्। खखञोरादिवृद्धितदभावाभ्यां भेदः। ***यथामुखसम्मुखयोस्समाहारः** यथामुखसम्मुखम्। तस्मात् षष्ठ्यन्ताद्दर्शने खः। (सम्मुखस्येति षष्ठ्यन्तनिर्देशादिह समर्थविभक्तिष्षष्ठी) यथामुखमिति सादृश्येऽव्ययीभावः। समम्मुखं सम्मुखमिति तत्पुरुषः। समस्सर्वपर्यायः तुल्यपर्यायस्तु नेह गृह्यते व्याख्यनात् इत्याह समं सर्वमिति। ननु समं मुखं सममुखमिति भवितव्ये कथं सम्मुखमित्यत आह – निपातनादन्त्यलोप इति। अन्त्यस्य अवर्णस्य लोप इत्यर्थः। यथामुखीनः। प्रतिबिम्बमस्मिन् दृश्यते इति बिम्बग्राहि दर्पणादिरर्थः। सम्मुखीनः। सर्वम्मुखमत्र दृश्यते इति सर्वमुखदर्शनो दर्पणादिरर्थः। समम्मुखमिति व्यस्ते समशब्दात्सर्वार्थाप्रतीतिरिति कृत्वा नित्यसमासत्वादस्वपदविग्रहः सर्वस्य मुखस्येति। नित्यसमासत्वे प्रमाणाभावात्। समस्य मुखस्येति पठितव्यमिति केचित्। ***तदिति।** पथ्यादेस्समाहारः। सौत्रम्प्रथमान्तत्वम्। पात्रादित्यर्थः। सर्वस्सर्वशब्दः आदिः पूर्वावयवः यस्य तस्मात्सर्वादेः। पूर्वसूत्रात् खोऽनुवर्तते। सर्वाङ्गीणः। तथा च मुरारिः। सर्वाङ्गीणवलीविलुप्तनयनव्यूहः कथं वर्तते प्रत्ययस्थत्वान्नस्य रषाभ्यामिति णत्वम्। सर्वकर्मीणः। सर्वकर्मन् इन। नस्तद्धिते इति टिलोपः। णत्वम्। पत्रं पर्णं दळश्छदः। ***आप्रेति।** द्वितीयान्तादाप्रपदीशब्दाद्व्याप्नोत्यर्थे खः। आप्रपदादाप्रपदम्। आङ्मर्यादाभिविध्योरिति। मर्यादायामाङ्स्समासः। प्रेत्यग्रार्थकमव्ययम्. नित्यसमासत्वात्प्रादिष्वस्वपदविग्रहः। अग्रम्पादस्य अग्रम्पाद इति वा विग्रहः। अग्रशब्दो नित्यं क्लीबे। प्रपाद। अजिति योगविभागात्समासान्तोऽच्।

सर्वादेः पथ्याद्यन्ताद् द्वितीयान्तात्खः स्यात्। सर्वपथान्व्याप्नोति सर्वपथीनः। सर्वाङ्गीणः। सर्वकर्मीणः। सर्वपत्रीणः। सर्वपात्रीणः॥ **१८०९। आप्रपदं प्राप्नोति** ।५।२।८। पादस्याग्रं प्रपदं तन्मर्यादीकृत्य आप्रपदम्। आप्रपदीनः पटः॥ **१८१०। अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु** ।५।२।९। अनुरायामे सादृश्ये च। अनुपदं बद्धा अनुपदीना उपानत्। सर्वान्नानि भक्षयति सर्वान्नीनो भिक्षुः। अयानयः स्थलविशेषः तं नेय आयानयीनः शारः॥ **१८११। परोवरपरम्परपुत्रपौत्रमनुभवति** ।५।२।१०। परांश्चावरांश्चानुभवतीति परोवरीणः। अवरस्योत्वं निपात्यते। परांश्च परतरांश्चानुभवति परम्परीणः। प्रकृतेः परम्परभावो निपात्यते। पुत्रपौत्राननुभवति पुत्रपौत्रीणः। परम्पराशब्दस्तु अव्युत्पन्नं शब्दान्तरं स्त्रीलिङ्गं तस्मादेव स्वार्थे ष्यञि पारम्पर्यम्। कथं पारोवर्यवदिति। असाधुरेवायम्। खप्रत्ययसन्नियोगेनैव परोवरेति निपातनात्॥

---

अचि परतः पूर्वस्य भत्वात् पादः पत्। प्रपद – सु – नाव्ययीभावादिति सोरम्। प्रपदम्। अपञ्चम्या इति पर्युदासात् पञ्चम्यानाम्भाव इति आप्रपदात्– आप्रपदम् इति अव्ययीभावेन सह पुनरव्ययीभावः। मूले तु अग्रम्पादस्येति मदुक्तं विग्रहमेव व्यत्ययेनोक्तवान् पादस्याग्रमिति। ***अनुपदेति**। अनुपद – सर्वान्न – अयानय – एतेषां समाहारः। बद्धा – भक्षयति। नेयः एतेषामितरेतरद्वन्द्वः। प्रकृतीनामर्थानाञ्च त्रित्वादत्र यथासंख्यम्। भिक्षुः। परमहंसः। तस्य विधिनिषेधाभावात्सर्वजात्यन्नभक्षणं सङ्गच्छते। शारः पक्षिविशेषः। बद्धेति टाबन्तनिर्देशादनुपदं बद्ध इत्यत्र षो न भवति। अन्यथा बद्ध इति। अदन्तेनैव निर्दिशेत्। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषया बद्धायामपि खलाभादिति बोध्यम्। ***परोवरपरम्परपुत्रपौत्र** एतेषां समाहारः। तदिति ख इति च अत्रानुवर्तेते। द्वितीयान्तात् परोवरादेःअनुभवत्यर्थे खः। पराः स्वापेक्षया प्राचीनाः उत्तमा वा। अवराः स्वापेक्षया पराचीनाः नीचा वा। अनुभवति साक्षात्करोति। ननु परांश्चावरांश्च अनुभवति परावरीण इति भवितव्ये कथं परोवरेति। अवरस्यादेरकारस्य उत्वमत आह–निपातनादिति। अवरशब्दाद्यकारस्य उकारादेशे कृते, पर–उ–वर–ईन, आद्गुणः परोवर – ईन, यस्येति लोपः। रषाभ्यामिति णत्वम्। परोवरीणः। परम्परभावः। परम्पर इत्ययमादेशः। परपरतरेति पृकृतेर्निपातनाद्भवति। ननु प्रत्ययसन्नियोगेनैव परम्परभावो निपात्यते इति कथं प्रत्ययानां परम्परा इत्यत्र परम्पराशब्द इत्यत

**१८१२। अवारपारात्यन्तानुकामं गामी** ।५।२।११। अवारपारं गामी अवारपारीणः। अवारीणः। पारीणः। पारावारीणः। अत्यन्तं गामी अत्यन्तीनः। भृशं गन्तेत्यर्थः। अनुकामं गामी अनुकामीनः। यथेष्टं गन्तेत्यर्थः। **१८१३। समांसमां विजायते** ।५।२।१२। यलोपोऽवशिष्टविभक्तेरलुक् च पूर्वपदे निपात्यते। समांसमीना गौः। समांसमीना सा यैव प्रतिवर्षं प्रसूयते॥ **खप्रत्ययानुत्पत्तौ यलोपो वा वक्तव्यः**॥ समांसमां विजायते। समायां समायां वा॥

---

आह–शब्दान्तरमिति। आदेशभूतपरम्परशब्द एकः, परम्पराशब्दः अन्य इत्यर्थः । तस्मादेव परम्पराशब्दात् पारोवर्यवत्। पराश्च अवराश्च परोवराः तेषां भावः पारोवर्यम्। तस्येव पारोवर्यवत्। (ब्राह्मणादेराकृतिगणत्वात् ष्यञ् पारोवर्यमिति) पारावर्यवदिति तु साधुः *__अवारेति।__ राष्ट्रावारपारादिति सूत्रे वार्तिकम्। अवारपाराद्विगृहीताद्विपरीताच्चेति तदिहाप्याश्रियते व्याख्यानादिति मत्वा उदाहरति अवारपारीण इत्यादि। अवारपार – अत्यन्त – अनुकाम – एतेषां समाहारः। द्वितीयान्तादेतस्मात् गामी इत्यर्थे खः। गामी गमनशीलः *__समामिति।__ तदिति निवृत्तम्। सप्तम्यन्तनिर्देशात्समर्थविभक्तिरिह सप्तमी। समांसमामित्यस्मात्सप्तम्यन्ताद्विजायते प्रसूयते इत्यर्थे खः। समायां समायामिति वक्तव्ये निपातनाद्यलोपः। समां समामिति। समायां समायां विजायते समां समीनां, समायां समायाम्। ईन इति प्रक्रियायाम् सुपो धात्विति सुब्लुकि पूर्वोत्तरपदयोः प्राप्ते पूर्वपदे सुपो लुक्। यमात्रस्य लोपः समाम्। समा–ईन, यस्येति लोपः टाप् समां समीना । अत्र पूर्वपदस्य मुमागमो निपात्यते इति यद्यपि सुवचं तथापि समां समामिति निर्देशादेव सप्तमी समर्थविभक्तेर्लाभ इति वक्तुमनवकाशस्स्यादिति यलोपो निपात्यते इत्युक्तम्। तथा सति समां समा विजायते इत्येतावदेव सूत्र्येत न तु समां समामिति। अत्रेदं बोध्यम्। समा ङि समा ञि ईन इति स्थिते (अलौकिकविग्रहे) ङेराम्न द्याम्नीभ्यः, याडापः इत्युभयम्प्राप्नोति। सुपो धात्विति सुब्लुगपि प्राप्नोति। परत्वादाम्याटौ। न च अकृतव्यूहपरिभाषया न स्यातां तौ इति वाच्यम्। यस्य सुपो लुग्भविष्यति तस्यैव ङेरिमे कार्ये इति निर्मित्तभूत एवात्र सुप् न तु निमित्तभूतमिति। समायाम् समायाम् ईन इति स्थिते अवशिष्टं दर्शितरीत्या बोध्यम्। *__अद्येति।__ विजायते इत्यत्रान्वेति। अनुवृत्तस्य च तस्य कृदन्तत्वेन विपरिणामः। धात्वर्थमात्रपर्यवसानं वा। विजायते इति धातोर्गर्भमोचनमर्थः। वीत्युपसर्गवशात् धात्वर्थस्य गर्भमोचनमित्यस्य सप्तम्यन्तत्वेन विपरिणामः। अवष्टब्धे आसन्ने गर्भमोचने अर्थे अद्यश्वीना इति निपात्यते इत्यर्थः।

**१८१४। अद्यश्वीनावष्टब्धे** ।५।२।१३। अद्य श्वो वा विजायते अद्यश्वीना वडवा। आसन्नप्रसवेत्यर्थः। केचित्तु विजायत इति नानुवर्तयन्ति। अद्यश्वीनं मरणम्। आसन्नमित्यर्थः॥ **१८१५। आगवीनः** ।५।२।१४। आङ्पूर्वाद्गोः कर्मकरे खप्रत्ययो निपात्यते। गोः प्रत्यर्पणपर्यन्तं यः कर्म करोति स आगवीनः॥ **१८१६। अनुग्वलंगामी** ।५।२।१५। अनुगु गोः पश्चात्पर्याप्तं गच्छति अनुगवीनो गोपालः॥ **१८१७। अध्वनो यत्खौ** ।५।२।१६। अध्वानमलं गच्छति अध्वन्यः। अध्वनीनः। 'ये चाभावकर्मणोः ११५४'। 'आत्माध्वानौ खे १६७१' इति सूत्राभ्यां प्रकृतिभावः॥ **१८१८। अभ्यमित्राच्छ च** ।५।२।१७। चाद्यत्खौ।

---

अद्य श्वो वा अद्यश्वः। ततः खप्रत्यये कृते खस्येनादेशे अद्यश्वस्-ईन - निपातनाट्टिलोपः अद्यश्वीन इति रूपनिष्पत्तिः। अद्यश्वशब्द आसन्नार्थकः। प्रत्ययस्तु गर्भमोचनार्थः। प्रकृतिप्रत्ययसमुदायेन आसन्नप्रसवार्थश्च अभिधीयते इति विवेकः। अवष्टब्धेऽर्थे अद्यश्वीना इति निपात्यते इति केषाँचिन्मते सूत्रार्थ इत्याह केचित्त्वित्यादिना।बडबा नाम स्त्र्यश्वः (स्त्री अश्वः (स्त्र्यश्वः)***गोः** कर्मकरे। गोशब्दात् गोसम्बन्धिपालनरूपकर्म कर्मकर्तरि गोपे इत्यर्थः प्रत्ययस्य कर्म कर्तृत्वमर्थः। प्रकृतेः (आगोः आ गु इति प्रकृतिः) गोप्रत्यर्पणपर्यन्तमित्यर्थः। (आ गु इति आङ्मर्यादाभिविध्योरित्यव्ययीभावः) प्रकृति प्रत्ययसमुदायेन तु गोपोऽर्थः। ***अन्विति।** अनुगु इति प्रकृतेरर्थमाह गोः पश्चादिति। अलंगामीत्यस्यार्थमाह-पर्याप्तं यथागच्छतीति। अलं भूषणपर्याप्ति शक्तिवारणवाचकमित्यमरः। पर्याप्तं यथा तथा गच्छतीत्यर्थः। यथामुखेति सूत्रादत्र खस्यान्वयः। गोः पश्चादनुगु इति अव्ययविभक्तीत्यादिषु पश्चात्पाठात्पश्चादर्थेऽव्ययीभावः। गोस्त्रियोरुपसर्जनस्येति ह्रस्वः। नाव्ययीभावादित्यनेन अदन्तत्वाभावान्न सोरम्। स्वमोर्नपुम्सकादिति लुक्। अनुगु। अलं गामी अनुगवीनः। ओर्गुणः अवादेशः इदमारभ्य गोष्ठादिसूत्रपर्यन्तं प्रत्ययोऽलं गामिनि। विभक्तिस्समर्था तु द्वितीया। ***अभ्यमित्रात्।** न मित्रममित्रमभिलक्ष्य अभ्यमित्रम्। इत्यव्ययीभावः। ***गौष्ठीनः।** यस्मिन् देशे पूर्वं गावस्तिष्ठन्ति स भूतपूर्वो गोष्ठः गौष्ठीन इत्युच्यते। पूर्वमयं देशो गोष्ठीभूत इति गौष्ठीन इत्युच्यते इति यावत्। ***एकं** च तदहश्च एकाहम्। राजाह इति समासान्तष्टच् । तेन एकाहेन एकेनाह्ना इत्यर्थः। एकाहेन यावानध्वा अश्वेन गम्यते स मार्ग आश्वीन इत्युच्यते। अश्वशब्दात् षष्ठ्यन्तादेकाहगम इत्यर्थे खञ् इति सूत्रार्थः। खञोऽनुवृत्तिः। ***शालीनेति**। अधृष्टाकार्ययोः वाच्ययोः क्रमेण शालीनकौपीने निपात्येते।

अभ्यमित्रीयः । अभ्यमित्र्यः । अभ्यमित्रीणः । अमित्राभिमुखं सुष्ठु गच्छतीत्यर्थः ॥ **१८१९।**
**गोष्ठात्खञ् भूतपूर्वे** ।५ ।२ ।१८। गोष्ठो भूतपूर्वः गौष्ठीनो देशः ॥ **१८२०।**
**अश्वस्यैकाहगमः** ।५ ।२ ।१९ । एकाहेन गम्यते इत्येकाहगमः । आश्वीनोऽध्वा ॥ **१८२१।**
**शालीनकौपीने अधृष्टाकार्ययोः** ।५ ।२ ।२० । शालाप्रवेशमर्हति शालीनः अधृष्टः । कूपपतनमर्हति कौपीनं पापम् । तत्साधनत्वात्तद्वद्गोप्यत्वाद्वा पुरुषलिङ्गमपि । तत्संबन्धात्तदाच्छादनमपि ॥

---

शालाशब्दात्कूपशब्दाच्च निपातनात्खञि आदिवृद्धिः। प्रत्ययस्यार्थमाह। प्रवेशमर्हति पतनमर्हतीति। समर्थविभक्तिस्तु सप्तमी बोध्या। शालायां प्रवेशमर्हति, कूपे पतनमर्हतीति विग्रहौ। पापस्य अकार्यजन्यत्वेन लक्षणया अकार्यत्वात्। पापशब्दोऽपि लक्षणया पापहेत्वकार्यपर इति वा। शस्तं चाथ त्रिषु द्रव्ये पापपुण्यसुखानि च। इत्यमरोक्त्या पापस्य द्रव्यपरत्वेन पापमस्मिन्नस्तीति व्युत्पत्त्या पापं पापवत् अकार्यमित्यर्थाद्वा। कौपीनं पापमित्युक्तं मूले। ननु कौपीनशब्दो ह्यकार्ये निपातितः कथं शिश्ने। शिश्नाच्छादनवस्त्रखण्डे च (गोची) लौकिकः प्रयोगस्सङ्गच्छते इत्यत आह – तत्साधनत्वादित्यादिना। तस्य पापस्य (अकार्यस्य) साधनत्वात्–पद्भ्यामुदरेण शिश्ना इति मन्त्रोक्तप्रामाण्येन शिश्नेनाप्यकार्य क्रियते इति पापहेतुत्वं शिश्नस्य अविवादम् (शिश् – शिश्नौ – शिश्नः, इति नान्तोऽपि शिश्नार्थकशिश्न् शब्दश्छन्दसि वर्तते, तस्य तृतीयायां शिश्ना इति रूपम् ) तद्वद्गोप्यत्वात्। लोके यथा कश्चिद्दुर्जनः स्वाकार्यं प्राणिहिंसादिकं राजभिया प्रच्छादयति तथा सर्वैर्जनैरपि त्यक्तशैशवैः स्वलिङ्गं प्रच्छाद्यते इति हेतुनापि अकार्यतुल्यत्वं पुंलिङ्गे वर्तते इति भावः। एवम् अकार्यार्थकस्य कौपीनस्य अकार्यहेतुपुंलिङ्गवाचकत्वं गौण्या वृत्त्या लक्षणया वा सङ्गच्छते इत्युक्तं भवति। (तद्वद्गोप्यत्वादिति गौणीवृत्तिः तत्साधनत्वादिति लक्षणा इति विवेकः) ।अथ वस्त्रखण्डबोधकत्वमुपपन्नं प्रतिपादयति, तत्सम्बन्धादिति। शिश्न सम्बन्धादित्यर्थः। लक्षितलक्षणया वस्त्रखण्डवाचकत्वं कौपीनस्येति भावः। (लक्षणया शिश्नः लक्षितेन च तेन सम्बन्धे लक्षणया वस्त्रखण्डमिति) तदाच्छादनमपि तस्य शिश्नस्य आच्छादनमित्यर्थः। ***व्रातेनेति।** व्रातशब्दात् निर्देशादेव तृतीयान्ताज्जीवतीत्यर्थे खञ्। ननु शरीरायासं विना लोके कोऽपि न जीवति। अन्नचर्वणदन्तधावनमलोत्सर्जनादीनामपि शरीरायाससाध्यत्वादिति शङ्कायामाह – न तु बुद्धिवैभवेनेति। अयं भावः। जीवनं नाम अत्र न प्राणधारणम्। किन्तु जीविका, वृत्तिरिति यावत् । शरीरायास एव यस्य जीविका न तु मतिवैशारद्यं स व्रातीन इत्युच्यते। व्रातीनः भृतकः कर्मकर इति यावत्। ***साप्तपदीनमिति** निपात्यते सख्येऽर्थे इत्यर्थः। सप्तपदन्यासपरिमितकाले यदुदेति तत्सख्यं

**१८२२। व्रातेन जीवति** ।५।२।२१। व्रातेन शरीरायासेन जीवति नतु बुद्धिवैभवेन स व्रातीनः॥ **१८२३। साप्तपदीनं सख्यम्** ।५।२।२२। सप्तभिः पदैरवाप्यते साप्तपदीनम्॥ **१८२४। हैयङ्गवीनं संज्ञायाम्** ।५।२।२३। ह्योगोदोहस्य हियङ्गुरादेशः विकारार्थे खञ् च निपात्यते। दुह्यत इति दोहः क्षीरम्। ह्योगोदोहस्य विकारो हैयङ्गवीनं नवनीतम्॥ **१८२५। तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ** ।५।२।२४। पीलूनां पाकः पीलुकुणः। कर्णस्य मूलं कर्णजाहम्॥ **१८२६। पक्षात्तिः** ।५।२।२५। मूलग्रहणमात्रमनुवर्तते। पक्षस्य मूलं पक्षतिः॥ **१८२७। तेन वित्तश्चुञ्चुप्चणपौ** । ५।२।२६। यकारः प्रत्यययोरादौ लुप्तनिर्दिष्टस्तेन चस्य नेत्संज्ञा। विद्यया वित्तो विद्याचुञ्चुः। विद्याचणः॥

---

साप्तपदीनमित्युच्यते। सप्तशब्दप्रयोगजन्यं वा। ***हैयङ्गवीनम्।*** सञ्ज्ञायां वाच्यायामिदं निपात्यते। ह्यो गतेऽनागतेऽह्नि श्व इत्यमरात्। ह्यः गताहः अव्ययमिदम्। ह्यः गतेह्नि गोदोहः ह्यो गोदोहः खञो निपातितस्य विकारोऽर्थः। हियं गु ईन इति स्थिते वृद्धिराद्यचः ऐकारः। ओर्गुणः अवादेशः हैयंगवीनम्। ***तस्येति।*** षष्ठ्यन्तेभ्यः पील्वादिभ्यः कर्णादिभ्यश्च यथासंख्यं कुणप् जाहच् इत्येतौ स्तः। पाकमूलयोः (प्रत्ययेन) वाच्ययोस्सतोरित्यर्थः। गणयोरर्थयोः प्रत्ययश्च यथासम्ख्यम्। तेन पील्वादिभ्यः पाके कुणप्–कर्णादिभ्यो मूले जाहच् इति सिद्ध्यति। प्रत्यययोः पचावितौ। कुण–जाहा–इत्यदन्तौ शिष्येते। पीलवः फलवृक्षाः। तेषां पलानि पीलूनि। फले लुगिति ओरञो लुक्। तेषां पीलूनां पाकः परिणतिः पीलुकुणः। मूलस्य नपुंसकत्वात्तत्स्थानिकादेशभूतजाहच्प्रत्ययस्यापि क्लीबत्वं कर्णजाहम्। ***पक्षात्तिः।*** तस्य मूलमित्यनुवर्तेते। षष्ठ्यन्तात्पक्षान्मूलेर्थेऽति प्रत्ययः। पक्षस्य पक्षिपक्षस्य शुक्लकृष्णात्मकस्य पक्षस्य वा मूलं पक्षतिः। ***तेनेति।*** तृतीयान्ताद्वित्त इत्यर्थे चुञ्चुप् – चणप् – इत्येतौ स्तः। वित्तः प्रतीतः प्रसिद्ध इति यावत्। चुटू इत्यनेन चुंचुप्छणपोरादिचकारस्य इत्त्वमाशङ्क्य वदति। पकारः प्रत्यययोरादौ लुप्तनिर्दिष्ट इति। तेन वित्तः प् चुञ्चुप्। प्चणप् – इति पदच्छेदः। सन्धौ झरो झरि सवर्णे इत्यनेन पकारयोर्लोपः। चपयोस्स्थानत आन्तर्याभावेन असवर्णत्वेऽपि सौत्रत्वाल्लोपो बोध्यः। लुप्तश्चासौ निर्दिष्टश्च लुप्तनिर्दिष्टः। लोपेन निर्दिष्ट इत्यर्थः। पूर्वं निर्दिष्टः उक्तः पश्चाल्लुप्त इति तु नार्थः। निर्दिष्टस्य पूर्वनिपातापत्तेः। तेन चस्य नेत्सञ्ज्ञा। पकारस्य लुप्तनिर्दिष्टत्वेन प्रत्ययादित्वाभावाच्चस्य चुटू इत्यनेन इत्संज्ञा न भवतीति भावः। ***विनञ्भ्यामिति।*** न सह न सह। नञर्थकोऽयं नशब्दः सुप्सुपेति समासः।

**१८२८। विनञ्भ्यां नानाञौ नसह** ।५।२।२७। असहार्थे पृथग्भावे वर्तमानाभ्यां स्वार्थे प्रत्ययौ। विना। नाना॥ **१८२९। वेः शालच्छङ्कटचौ** ।५।२।२८। क्रियाविशिष्टसाधनवाचकात्स्वार्थे। विस्तृतम्। विशालम्। विशङ्कटम्॥

---

अव्ययमिदम्। असहार्थे इत्यर्थः। पृथग्भावे इति यावत्। अधिकरणे सप्तम्या विहितत्वेन सप्तमीसामर्थ्याद्वर्तमानाभ्यामित्याक्षिप्यते। विनञ्भ्यामिति पञ्चमी। न सहवर्तमानाभ्यां विनञ्भ्यान्नानाञौ स्त इत्यन्वयः। प्रत्यययोः प्रकृत्यतिरिक्तार्थाकथनेन स्वार्थिकत्वं सिद्धमित्याह स्वार्थे इति। स्वस्य प्रकृतेर्योऽर्थस्तस्मिन्नित्यर्थः । वि – नञ् – इति प्रकृत्योः ना – नाञ्–इति प्रत्यययोश्च द्वित्वेन यथासंख्यमिष्यते। तेन वेस्स्वार्थे नाप्रत्ययः। विना, नञस्स्वार्थे नाञ्प्रत्ययः ञित्त्वाद्वृद्धि राकारः। नाना इति। ***वेरिति।** वेः शालच् – शङ्कटच् – इति छेदः। विशब्दात्स्वार्थे शालच् शंकटच् इत्येतौ स्त इत्यर्थः। असहार्थे वर्तमानो नायं विः। किन्तु क्रियाविशिष्टसाधनवाचको व्याख्यानप्रामाण्यादित्याह – क्रियेत्यादि। क्रियायां यद्विशिष्टं प्रकृष्टं साधनं साधकतमं करणं तद्वाचकात्तदभिधायकादिति यद्यप्यर्थस्तर्हि विशालां वेदीमध्यास्ते इत्यादावधिकरणादिवाचकाद्विशब्दाच्छालच्प्रत्ययो न स्यात्। अथ यदि क्रियया प्रकृतिवाच्यया विशिष्टं यत्साधनं प्रत्ययार्थः करणं तद्वाचकादित्यर्थः। (करणे यो विद्वुख्वतिप्रत्ययेन करणमप्यभिधीयते साधनं करणे लिङ्गसैन्ययोर्मेहनेऽपि च इत्यमरशेषः) तर्हि क्रियाविशिष्टेति व्यर्थम्। साधनवाचकादित्युक्तेऽपि क्रियावाचकादेव करणे प्रत्ययो विधीयते इति केवलप्रत्ययस्य प्रयोगानर्हत्वात्साधनवाचीस्तम्बघ्न इत्यादौ घ्न इत्यादिश्शब्दः क्रियाविशिष्टसाधनवाच्येव भवतीति। न च साधनवाचकादित्युक्तौ करणे विहिताद्विप्रत्ययादित्यर्थस्स्यादिति वाच्यम्। वेः करणे अविहितत्वात्। अपि च क्रियाविशिष्टसाधनवाचित्वं घ्न इत्यादीनामस्तु नाम, हन्तेः करणे अप्प्रत्ययस्य विहितत्वेन हननक्रियाविशिष्टसाधनवाचित्वस्य सत्त्वात्। (घ्न् इति प्रकृतिः क्रियावाचका। तदुत्तरः अप्प्रत्ययः करणवाची च इति) विशब्दे तु नैवं दृश्यते। वकारस्य क्रियावाचित्वाभावात्। तदुत्तरस्य इकारस्य करणे अविहितत्वाच्च इति। अत्रोच्यते – क्रियायां प्रकृष्टसाधनमित्येवार्थः। तथा च व्युत्पादितः गुरुबालप्रबोधिकायाम्। विस्तीर्यतेऽनेनेति विशालमिति विशङ्कटमिति च विस्तरणक्रियासिद्धौ यत्करणं तद्विशालं विशङ्कटमिति च उच्यते इति तदाशयः। अनेन कटेन विस्तरणक्रियासिद्धौ साधकतमेन विस्तीर्यते स्थलमिति विशालं कटम्। एवं विशालं वस्त्रमित्यादि। साधनवाचकादिति किम्? विस्तीर्यते कटेनेदं स्थलमिति विशालं स्थलमिति माभूत्। न च विशालं स्थलमिति प्रयोगस्यासाङ्गत्यं शङ्क्यम्। विस्तीर्यतेऽनेन स्थलेन खमिति व्युत्पत्त्या तस्य सङ्गतत्वात्। नन्वेवं विस्तीर्यतेऽनेनेति विस्तृतमिति स्यात्।

**१८३०। संप्रोदश्च कटच्**।५।२।२९। सङ्कटम्। प्रकटम्। उत्कटम्। चाद्विकटम्॥ **अलाबूतिलोमाभङ्गाभ्यो रजस्युपसंख्यनम्**॥ अलाबूनां रजः अलाबूकटम्। तिलकटम्॥ **गोष्ठजादयः स्थानादिषु पशुनामभ्यः**॥ गवां स्थानं गोगोष्ठम्॥ **संघाते कटच्**॥ अवीनां सङ्घातोऽविकटः॥ **विस्तारे पटच्**॥ अविपटः॥ **द्वित्वे गोयुगच्**॥ द्वावुष्ट्रौ उष्ट्रगोयुगम्॥

---

विपूर्वकात् स्तृणोतेः करणे क्ते कृते रूपसिद्धेः। तथा च विस्तरणक्रियायां यद्विशिष्टं साधनं कटादिकं तद्वाचकम्पदं विस्तृतमितीदमेव। न तु वीति पदमिति कथं वेः क्रियाविशिष्टसाधनवाचकत्वमिति चेदुच्यते। निपातानामनेकार्थकत्वाद्वीति पदमपि तद्वाचकमेवेति। न च केवलस्य वेस्तथाविधार्थे प्रयोगश्शङ्क्यः। प्रत्ययसन्नियोगेनैव तस्य तद्वाचकत्वाभ्युपगमात्। तस्मात् विस्तीर्यतेऽनेनेति वि-वि च तत्कटञ्च विकटम्। विशालकटमित्यर्थे विकटमिति न स्यादेव। एतावता क्रियाविशिष्टसाधनवाचकादित्यस्य करणवाचकादिति लब्धम् साधकतमं करणमिति क्रियासिद्धौ प्रकृष्टोपकारकं साधकतममिति च व्याख्यातत्वात्। करणवाचकत्वं दर्शयितुमेव विस्तृतमित्युक्तं मूले। (विस्तीर्यतेऽनेन विस्तृतमिति विस्तृतस्य करणप्रत्ययान्तत्वेन करणवाचकत्वात्) विस्तृतमेव इति विग्रहः। विरेव विशालमिति तु न वाच्यम् । वेः केवलस्य करणवाचकत्वाभावात्। अत एव मूले विस्तृतमित्युक्तः विग्रहः। एव इति पदन्तु शेषः। स्वार्थबोधनार्थक एवकारो विग्रहे प्रयोक्तव्यः। ***समिति।** सम् - प्र - उत् - एषां द्वन्द्वः सम्प्रोत् तस्मात् सम्प्रोदः। क्रियाविशिष्टवाचकेभ्यः सम्प्रोद्भ्यः स्वार्थे कटच् स्यात्। चाद्वेरपि कटच्। संहन्यते इति संहतम्. संहतमेव संकटम्। एवं प्रज्ञायतेऽनेनेति प्रज्ञातम्। प्रज्ञातमेव प्रकटम्। उद्धूयतेऽनेनेति उद्धूतम्। उद्धूतमेव उत्कटम्। विक्रीयतेऽनेनेति विकृतम् विकृतमेव विकटम् इति। ***गोष्ठजिति।** पशुवाचकेभ्यः षष्ठ्यन्तेभ्यः गोष्ठच् इत्यादयः प्रत्ययास्स्युः स्थानादिषु वाच्येषु इत्यर्थः। आदिशब्दोक्तं प्रकारद्वयं विवृणोति सङ्घाते कटजित्यादिना। गोष्ठच्। कटच् - पटच् इत्यादयो गोष्ठादयः । स्थानं संङ्घातः विस्तारः इत्यादयः। स्थानादय इत्यादिशब्दार्थ इति भावः। ***द्वित्व** इति। प्रकृत्यर्थगतद्वित्वे द्योत्ये स्वार्थे प्रत्ययः। उष्ट्रावेव उष्ट्रगोयुगमिति। द्वावुष्ट्राविति तु प्रकृत्यर्थगतं द्वित्वं प्रकटयितुं मूले विग्रहो दर्शितः। यद्वा - प्रत्यय एव प्रकृत्यर्थगतं द्वित्वं द्योतयतीति द्वित्वद्योतकत्वमेव प्रत्ययार्थः इति मत्वा द्वावुष्ट्राविति विग्रहः प्रोक्तो मूले। ***षट्त्वे** इति। पशुनामभ्य इत्येव। पशुनामभ्यः षड्गवच् स्यात्। प्रत्ययेन प्रकृत्यर्थगते षट्त्वे द्योत्ये इत्यर्थः। अत्र विचार्यते। गवोर्युगं गोयुगम् उष्ट्रयोर्गोयुगमुष्ट्रगोयुगम् इति समासे गोशब्दस्य अविवक्षितार्थकत्वेन उष्ट्रद्वयमित्यर्थस्सिद्ध्यति। एवम् षण्णां गवां समाहारष्षड्गवम्। अश्वानां षड्गवमश्वषड्गवम्। अश्वषट्कमित्यर्थः

**षट्त्वे षड्गवच्** ॥ अश्वषड्गवम् ॥ **स्नेहे तैलच्** ॥ तिलतैलम् । सर्षपतैलम् ॥ **भवने क्षेत्रे शाकटशाकिनौ** ॥ इक्षुशाकटम् । इक्षुशाकिनम् ॥ **१८३१ । अवात्कुटारच्च** ।५ ।२ । ३० । चात्कटच् । अवाचीनोऽवकुटारः । अवकटः । **१८३२ । नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः** ।५ ।२ ।३१ ।

---

इति सिद्धौ किमाभ्यां वार्तिकाभ्यामिति चेत् – मैवम् – पञ्चानां गवां समाहारः पञ्चगवम्। अश्वानां पञ्चगवमश्व- पञ्चगवमित्यादयः प्रयोगा माभूवन्निति वार्तिकविधिरिति। उष्ट्रगोयुगमित्यादिसमासमध्यपतितगोशब्दस्य अविवक्षितार्थकत्वेनापि प्रमाणं विद्यते इति हेतोरपि वार्तिकद्वयमावश्यकमिति बोध्यम्। ***स्नेहौ इति।*** अत्र पशुनामभ्य इति नान्वेति। असामर्थ्यात्। किन्तु स्नेहद्रव्यवाचिभ्य एव। तिलानां स्नेहस्तिलतैलम्। तिलानां विकारस्तैलमित्यन्यत्पदम्। स्नेहने तैलजिति पाठस्तु सूत्रपाठे न दृश्यते। स्नेहनं स्नेह इति उभयोरेकार्थत्वात्सोऽपि पाठो न दुष्टः। स्नेहन स्नेहे वाच्ये सति तैलच्प्रत्ययस्स्यादत्यिर्थो वार्तिकस्य। ***भवन इति।*** भवन्त्यस्मिन्निति भवनं तस्मिन्नर्थे शाकटशाकिन इत्येतौ प्रत्ययौ स्तः। तच्चेद्भवनं क्षेत्रमित्यर्थः । प्रकृतिरत्र धान्येतरवाची धान्यवाचिनस्तुः। धान्यानामिति खञ्विधानात्। समर्थविभक्तिस्तु षष्ठचेव। औचित्यात् । इक्षूणाम्भवनम् इक्षुशाकटम्। इक्षुशाकिनं वा क्षेत्रम्। इक्षूणामधान्यत्वान्नात्र धान्यानामिति खञः प्राप्तिः। न च परत्वाद्धान्येभ्योऽपि शाकटशाकिनयोरापत्तिश्शङ्क्या। धान्यानामित्यस्य विशेषविहितत्वेनापवादत्वात्। (सर्वप्रकृतिसामान्येन शाकटशाकिनविधायकमिदं वार्तिकमिति सामान्यशास्त्रम्। धान्यप्रकृतिभ्य एव खञो विधायकमिति धान्यानामिति विशेषशास्त्रम्) ***अवादिति।*** क्रियाविशिष्टसाधनवाचिनः अवशब्दात्स्वार्थे कुटारच्प्रत्ययः। अवाचीयते अवगम्यते वा अनेनेति अवाचीनः अवगतश्च। अवाचीन एव अवगत एव वा इति विग्रहः। वेरिव अवस्यापि केवलस्य न क्रियाविशिष्टसाधनवाचित्वमिति अवाचीनो अवगतो वेत्युक्तो मूले विग्रहः। मूलाविग्रहयोरेवकारश्शेषेण पूरणीयः। ***न ते इति।*** अवादित्यनुवर्तते। अवशब्दात् नासिकाया नते अभिधेये सति टीटच्–नाटच्–छ्रटच् इत्येते स्युः संज्ञायां गम्यमानायामित्यर्थः। अत्र प्रकृतेर्नासिका नतमर्थः। प्रत्ययस्य तु स्वार्थ एव इति बोध्यम्. प्रकृतिप्रत्ययसमुदायेनैव संज्ञा गम्यते। न तु केवलप्रकृतिनेति नासिकानमनवाचित्वन्नावशब्दस्य इति कृत्वा अवैव अवटीटमिति नोक्तं मूले विग्रहवाक्यम्। किन्तु नासिकानमनमेव अवटीटमिति विग्रहः। नासिकानमनस्यैवेयं संज्ञा अवटीटमित्यादिका। संज्ञायां किम् नासिकानमनार्थे अवेत्यस्य प्रयोगो माभूत् । तद्योगात् नासिकानमनसम्बन्धात् नासिकानमनसम्बन्धिन्यां नासिकायाम्, नासिकानमनसम्बन्धवति पुरुषे च लाक्षणिकः

अवादित्येव। नतं नमनम्। नासिकाया नतं अवटीटम्। अवनाटम्। अवभ्रटम्। तद्योगान्नासिका अवटीटा। पुरुषोऽप्यवटीटः॥ **१८३३। नेर्बिडज्बिरीसचौ** ।५।२।३२। निबिडम्। निबिरीसम्॥ **१८३४। इनच्पिटच्चिकचि च** ।५।२।३३। नेरित्येव। नासिकाया नतेऽभिधेये इनच्पिटचौ प्रत्ययौ प्रकृतेश्चिकचि इत्यादेशौ च॥ **कप्रत्ययचिकादेशौ च वक्तव्यौ**॥ चिकिनम्॥ चिपिटम्। चिक्कम्॥ **क्लिन्नस्य चिल्-पिल्-लश्चास्य चक्षुषी**॥ क्लिन्ने चक्षुषी अस्य चिल्लः। पिल्लः॥ **चुल् च**॥ चुल्लः॥

---

अवटीटप्रयोग इति। अवटीटं नासिकानमनमस्या अस्य वा अस्तीति अवटीटा नासिका। अवटीटः पुरुष इति अर्श आद्यजन्तौ शब्दौ इति वा भावः। अस्मिंस्तु पक्षे तद्योगादित्यस्य तत्सम्बन्धात्तद्वत्त्वादिति यावदर्थः। (तदस्यास्तीति तदस्या अस्तीति वा तद्वान् तद्वती वा। तद्भावः तद्वत्त्वं तस्मात्तद्वत्त्वात् तद्युक्तत्वादित्यर्थः। *__सूत्रे टीटञ्__ नाटजित्यत्र टीटञ् नाटच् इति स्थिते। यरोऽनुनासिकेऽनुनासिको वा इति अनुनासिकः च स्यञ् कारः। टीटञ् नाटजिति सन्धिः। न च टीटञ् इत्येव छेद इति वाच्यम्। कटच्। कुटारच् - एटच् - नाटच् - भ्रटच् इत्यादीनामत्र चानुबन्धकत्वात्प्रत्ययानामयमपि चानुबन्धक एवेति। व्याख्यानाद्विशेषप्रतिपत्तिरिति वा। *__निबिडमिति।__ नासिकाया नमनमर्थः। सान्द्रपर्यायस्तु निबिडशब्दोऽन्यः अव्युत्पन्न इति बोध्यम्। *__इनच्__ इति। इनच् पिटच् - अनयोस्समाहारः इनच्पिटच् - चिक - चि अनयोस्समाहारः चिकचि। नेरित्यनुवर्तितमावर्त्यते। एकं पञ्चम्यन्तम्। अन्यत् षष्ठचन्तम्। निशब्दान्नासिकानमनवाचिनः स्वार्थे इनच्पिटचौ प्रत्ययौ स्तः। निशब्दस्य चिक - चि इतीमावादेशौ च स्तः। व्याख्यानप्रामाण्यादिनच्पिटचोः प्रत्ययत्वम्। चिकच्योरादेशत्वमिति च विवेको लभ्यते। इनच्पिटच् - चिकचि - च पदच्छेदः। चकारः प्रत्ययसन्नियोगशिष्टत्वमादेशयोर्ज्ञापयति। प्रत्यययोरादेशयोश्च द्वित्वाद्यथासंख्यम्। तेन इनचि चिकादेशः, पिटचि च्यादेशः। चिक। - इन यस्येति लोपः। चिकिनम् चिपिटम्। नासिकाया नमनमित्येव विग्रहः। *__कप्रत्ययेति।__ नासिकाया न तेऽभिधेये नेः कप्रत्ययः। नेश्चिक् इत्ययमादेशः। चिक्आदेशः इत्यत्र जश्त्वाभावः। अयं कान्त एवादेशो न तु गान्त इति स्पष्टं प्रतिपादयितुमिति बोध्यम्। चिक इत्यदन्तादेश इति तु न भ्रमितव्यम्। सूत्र एव चिकादेशस्योक्तत्वेन - कश्चचिके इत्येव वक्तव्यत्वात्। (चिकादेशे चेः कप्रत्ययश्च स्यादिति तदर्थः) चिक्कम्। क्लीबत्वं लोकात्। तद्योगात् चिकिनश्चिपिटश्चिक इत्यादयोऽपि भवन्ति। इनच्पिटचोश्चिकच्योश्च यथासंख्यं

**१८३५। उपाधिभ्यां त्यकन्नासन्नारूढयोः** ।५।२।३४। संज्ञायामित्यनुवर्तते। पर्वतस्यासन्नं स्थलमुपत्यका। आरूढं स्थलमधित्यका॥ **१८३६। कर्मणि घटोऽठच्** । ५।२।३५। घटत इति घटः पचाद्यच्। कर्मणि घटते कर्मठः पुरुषः॥ **१८३७। तदस्य संजातं तारकादिभ्य इतच्** ।५।२।३६। तारकाः संजाता अस्य तारकितं नभः। आकृतिगणोऽयम्॥ **१८३८। प्रमाणे द्वयसज्दघ्नञ्मात्रचः** ।५।२।३७।

---

यथास्यात्तदर्थं योगविभागः। अन्यथा नेर्बिडज्जिरसजिनच्पिटच्चिकचिचेत्येकमेव सूत्रं कृतं स्याल्लाघवादिति। * **क्लिन्नस्य** चिल्पिलावादेशौ स्तः। क्लिन्नाल्लप्रत्ययश्च। अस्य चक्षुषी इति प्रत्ययार्थः। चिल्पिलोरनेकाल्त्वात्सर्वादेशः। ***चुल्च** क्लिन्नस्य अस्य चक्षुषीत्यर्थे चुलादेशस्स्याल्लप्रत्ययसन्नियोगेनेत्यर्थः। ***उपेति** आसन्नारूढयोरभिधेययोरुपाधिभ्यां त्यकन् स्यादित्यर्थः। प्रकृत्योरर्थयोश्च यथासंख्यम्। आसन्नारूढौ प्रकृत्यर्थौ। प्रत्ययस्तु स्वार्थे एव। प्रकृतिप्रत्ययसमुदायेन संज्ञायां वाच्यायामेव त्यकन् प्रत्ययः। तेन गुरोरासन्नश्शिष्य उपत्यक इति न भवति। कट्वामारूढः पुमान् अधित्यक इति च न भवति। उपत्यकेति पर्वतासन्नस्थलसंज्ञा। अधित्यका इति पर्वतारूढस्थलसंज्ञा। अत एव पर्वतस्यासन्नं स्थलमिति मूले प्रोक्तम्। आरूढं स्थलमित्यत्रापि मूले पर्वतस्येत्यस्यान्वयो बोध्यः। आसन्नमेव–आरूढमेव – इति विग्रहद्वयम्। केवलयोरुपाध्योरसत्त्ववाचित्वेन आसन्नारूढात्मकद्रव्यवाचित्वासम्भवाद्विग्रहयोर्न प्रयोगः। तेन उपैव – अध्येव–इति न विग्रहौ स्याताम्। उपत्यक–अधित्यक – इत्येताभ्यामदन्तलक्षणष्टाप्। स्त्रीत्वन्तु लोकात्। ***कर्मणि–** घटः। अठच्–इति छेदः। निर्देशादेवेह सप्तमीसमर्थविभक्तिः। घटचेष्टायामिति धातुः। कर्मन् – अठ – नस्तद्धित इत टिलोपः। कर्मठः। कर्मनिष्ठ इत्यर्थः। ***तदस्येति।** तदिति प्रथमान्तेभ्यस्तारकादिभ्यः सञ्जातोपाधिकेभ्यः अस्येति षष्ठ्यर्थे इतच्प्रत्ययः। अस्य सञ्जातमित्यर्थे इति वा। पण्डाशब्दस्तारकादिषु पठ्यते । यस्येति लोपः। पण्डितः। पण्डा निश्चयबुद्धिः । आकृतिगणः। अत एव सुधितमित्यादिसिद्धिः। ***प्रमाणे** इति। प्रथामान्तात्प्रमाणोपाधिकादस्येत्यर्थे अस्य प्रमाणमित्यर्थे वा प्रत्ययाः। द्वयसच्–दघ्नञ्–मात्रच्–इति त्रयः प्रत्ययाः। ऊरुद्वयसमूरुदघ्न मिति सूत्रमतानुरोधेनोदाहृतम्। प्रमाणे परिछेदकमात्रे त्रयः प्रत्ययास्स्युरिति सूत्रमतम्। भाष्यमतन्तु प्रमाणे मात्रच्। द्वयसच्। दघ्नचौ तु ऊर्ध्वमाने एव भवत इति। एतन्मतरीत्या ऊरुद्वयसमूरुदघ्नमिति द्वयमप्रामाणिकमेव। ऊर्वोरनूर्ध्वमानत्वात्। पलद्वयसंपलदघ्नमिम्याद्युदाहार्यम्। पलादेरूर्ध्वमानत्वात्। तुलायामारोपितेन येन वस्त्वन्तरं परिच्छिद्यते, तदूर्ध्वमानमिति प्रतिपादितं तत्त्वबोधिन्याम्। आर्हादगोपुच्छपरिमाणेति सूत्रव्याख्यानावसरे। ऊर्ध्वमानं

तदस्येत्यनुवर्तते। ऊरू प्रमाणमस्य ऊरुद्वयसम्। ऊरुदघ्नम्। ऊरुमात्रम्॥ **प्रमाणे लः**॥ शमः। दिष्टिः। वितस्तिः॥ **द्विगोर्नित्यम्**॥ द्वौ शमौ प्रमाणमस्य द्विशमम्॥ **प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रज्वक्तव्यः**॥ शममात्रम्। प्रस्थमात्रम्। पञ्चमात्रम्॥ **वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम्**॥ तावदेव तावद्द्वयसम्। तावन्मात्रम्॥

---

किलोन्मानं परिमाणन्तु सर्वतः। आयामस्तु प्रमाणं स्यात्तत्संख्यानाह्या तु सर्वत इति श्लोकवार्तिकमपि तत्रैवोदाहृतम्। न चात्र प्रमाणशब्देन आयामो ग्राह्य इति वाच्यम्। आयामग्रहणस्य अव्याख्यातत्वेन अप्रामाण्यात्। व्याख्यानस्यैवात्र प्रामाण्यात्। (प्रमीयतेऽनेनेति प्रमाणम् परिच्छेदकमात्रम्) ***प्रमाणे लः**। ल इति लुकस्संज्ञा प्राचाम्। प्रमाणे इति पञ्चम्यर्थे सप्तमी। प्रमाणाल्लुक् इत्यन्वयः। प्रमाणत्वेन प्रसिद्धाः कालादय एव। न तु ऊर्वादय इति ऊरुद्वयसमित्यत्र द्वयसचो न लुक्। प्रसिद्धाप्रसिद्धसाधारण्येन प्रमाणमात्राल्लुगित्युक्तौ तु द्वयसजादिप्रत्ययत्रयविधानमनर्थकं स्यात्। तेषामन्यतमे कृतेऽपि तस्य लुकि रूपे विशेषाभावेन अन्यतमेनैवालमिति किं त्रिकविधानेन, विशेषानुपलम्भादिति। सम इति त्वपपाठः। शम इति तत्त्वबोधिनी। प्रस्थादिवत्परिमाणविशेषश्शमः। दिष्टिर्दिष्टम्। दैवमपि प्रमाणभूतमेवेति दिष्टेः प्रसिद्धमेव प्रमाणत्वम् । दिष्टचा वर्धते भवानिति। दैवं दिष्टं भागधेयमिति च। दिष्टिशब्दस्स्त्रियां दिष्टशब्दः क्लीबे च वर्तते। वितस्तिर्द्वादशाङ्गुलमायामप्रमाणविशेषः। शमो दिष्टिर्वितस्तिः प्रमाणमस्येत्यर्थे। एतेभ्यो विहितस्य मात्रचो लुक्। समा शरत्सवत्सरः प्रमाणमस्येति विग्रहे तु मात्रचि कृते, तस्य लुकि, गोस्त्रियोरिति ह्रस्वे कृते, यद्यपि सम इति भवति तथाऽपि द्वौ शमौ प्रमाणमस्य द्विशमम्। शममात्रमिति वक्ष्यमाणोदाहररणद्वये ताल्वादेरेव ग्रहणादत्रापि तस्यैवेति। न च तत्रापि दन्त्यादेरेव ग्रहणमिति वाच्यम्। समा इत्यस्य आबन्तत्वेन द्वौ समौ प्रमाणमिति विग्रहे द्वे समे इति वक्तव्ये द्वौ समौ इति पुंनिर्देशस्यासाङ्गत्यापत्तेः। न च द्वे समे इति वक्तव्ये द्वौ समौ इत्युक्तिरपपाठ इति वाच्यम्। तथात्वे शममात्रमित्यपि अपपाठस्स्यात्। सममात्रमिति पाठे तु समा परिमाणमस्येति विग्रहे मात्रचि कृते तसिलादिषु मात्रचोपरि गणितत्वात्पुंवद्भावाभावे सममात्रमित्यस्य अप्रामाणिकत्वात्। न च तदपि समामात्रमिति पठितव्यमिति वाच्यम्। अप्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रज्वक्तव्य इति वार्तिकस्य क्रमेणोदाहरणानि दर्शयति हि – शममात्रमित्यादीनि। तथा च। प्रमाणस्योदाहरणं शममात्रमिति लब्धम्। समामात्रमिति पठिते तु आयामस्तु प्रमाणं स्यादिति लक्षितप्रमाणत्वं न हि समायां वर्तते, समायाः कालपरिमाणवाचित्वेन हस्तादिवदायामवाचकत्वाभावात्। न च प्रमाणवार्तिके प्रमाणशब्देन परिच्छेदकमात्रं गृह्यते इति समामात्रमित्युदाहरणं सङ्गच्छते इति

**१८३९। पुरुषहस्तिभ्यामण् च** ।५।२।३८। पुरुषः प्रमाणमस्य पौरुषम्। पुरुषद्वयसम्। हास्तिनम्। हस्तिद्वयसम्॥ **१८४०। यत्तदेतेभ्यः परिमाणे वतुप्** ।५।२।३९। यत्परिमाणमस्य यावान्। तावान्। एतावान्॥

---

वाच्यम्। प्रमाणपरिमाणयोः पृथग्ग्रहणेन विशेषग्रहणस्य ज्ञापितत्वात् । अन्यथा प्रमाणादित्येवालम् इति। एतावता शमो दिष्टिर्वितस्तिरिति। द्वौ शमौ प्रमाणमस्य द्विशममिति – शममात्रमिति च तत्वबोधिन्यनुसारेण मूले पाठः परिष्कर्तव्य इति सिद्धम्। आयामवाची समशब्दोऽपि कश्चन वर्तते इति प्रामाण्ये तु दन्त्यादिपाठोऽपि साधुरेव। ***प्रमाणेति**। आयामात्मकप्रमाणवाचिभ्यः सर्वतो मानात्मकपरिमाणवाचिभ्यः संख्यावाचिभ्यश्च प्रथमान्तेभ्यः संशयविषये अस्य प्रमाणमित्यर्थे मात्रच्प्रत्ययस्स्यादित्यर्थः। शमोऽस्य प्रमाणं वा न वा शममात्रम्। एवं प्रस्थमात्रमित्यादावूह्यम्। प्रमाणपरिमाणसंख्याभ्यः यथाक्रममुदाहरणत्रयम्। प्रमाणे इति सूत्रेण संशयविषयप्रमाणेऽर्थे मात्रचो विहितत्वाद्वार्तिकमारब्धमिदम्। प्रमाणे ल इत्यनेन तु नास्य मात्रचो लुक्–प्रमाणार्थमात्रे विहितस्यैव तेन लुक्। न तु पुनः संशयविषयप्रमाणार्थः हि तस्येति। द्वौ शमौ स्यातां न वा इत्यत्र द्विशम इति लुग्भवत्येव। द्विगोर्नित्यमित्यत्र नित्यग्रहणेन व्यर्थेन ज्ञापितत्वात्। न हि विकल्पप्रकरणमिदं येन नित्यग्रहणं सार्थकं स्यात् । ***पुरुषेति**। प्रमाणे इत्यनुवर्तते। चाद्द्वयसच्। न च दघ्नच् मात्रच् इत्येतावपि स्यातामिति वाच्यम्। तयोरस्वरितत्वात्। इतिकृत्वोदाहरति पुरुषद्वयसमिति। यद्वा द्वयसजादिकं त्रयमपि चेनानुकृष्यते । पुरुषद्वयसमिति तूपलक्षणम्। तेन पुरुषदघ्नं पुरुषमात्रमित्यप्यूह्यम्। भाष्यमतानुरोधेन तु चान्मात्रजित्येव वक्तव्यं प्रथमयोरूर्ध्वमाने मतत्वात् इति। ***यत्तदिति।** यत्–तत्–एतत्–इति शब्देभ्यः प्रथमान्तेभ्यः अस्य परिमाणमित्यर्थे वतुप् प्रत्ययः। पकार इत्। उकार उच्चारणार्थः उगित्कार्यार्थश्च। परिमाणमत्र न परिच्छेदकमात्रं गृह्यते, किन्तु सर्वतो मानात्मकमेव। अन्यथा प्रमाणे इत्यनुवर्त्य परिमाणग्रहणमकर्तव्यमेव स्यात्। प्रमाणसूत्रस्थप्रमाणपदस्य परिच्छेदकमात्रार्थत्वात्। तेन यत् प्रस्थादिपरिमाणमस्य यावान् धान्यराशिः इति प्रस्थादिप्रमेये एव यावदादिशब्दत्रयं वर्तते न तु हस्ताद्युन्मानप्रमेये रज्ज्वादाविति। यावती रज्जुरित्यादयः प्रयोगा असङ्गता एवेति लब्धम्। प्रमेयत्वात्मकसादृश्यगुणनिमित्तत्वेन गौणा इति। उपचाराल्लाक्षणिका इति वा तेषां प्रयोगाणां गतिः कल्पनीयेति केचित्। एवं तन्मात्रं यन्मात्रमेतन्मात्रं धान्यमित्यादिषु परिमाणवाचिभ्यः यत्तदेतेभ्यः परत्वाद्विशेषविहितत्वाच्च वतुपः प्राप्तौ मात्रचो बाधितत्वेन तावद्यावदेतावद्धान्यमित्येव स्यान्न तु तन्मात्रमित्यादि। इति हेतोः तेऽपि प्रयोगा गौणा लाक्षणिका वा बोध्याः। यत्तदादीनां परिमाणत्वस्याविवक्षितत्वादिति वा।

**१८४१। किमिदम्भ्यां वो घः** ।५।२।४०। आभ्यां वतुप्स्याद्वस्य च घः। कियान्। इयान्॥

---

ननु किमनेन क्लेशेन यत्तदेतेभ्यो वतुप्च प्रमाणे इत्यनुवर्तते। चान्मात्रच्। यन्मात्रं धान्यं यावद्धान्यमित्यादि सिद्ध्यति। यावती रज्जुरित्यपि सिद्ध्यति। परिछेदकमात्रे वतुपः विहितत्वादिति चेत्, मैवम्। यावन्मात्रं तावन्मात्रमित्याद्यसिद्धेः। यत्प्रमाणमस्य यावत्। यावत्प्रमाणमस्य यावन्मात्रमिति विग्रहः। न हि प्रमाणप्रत्ययान्तात्पुनः प्रमाणप्रत्योत्पत्तिरिष्यते इष्टत्वे तु पुनस्तस्मान्मात्रच् इत्येवं मात्रच्प्रत्ययमालादोषस्स्यात्। कृते तु परिमाणग्रहणे परिमाणस्य सर्वतो मानार्थकत्वात् विभिन्नविषयत्वमिति। परिमाणान्तात्प्रमाणप्रत्ययोत्पत्तिर्घटते, यत्परिमाणमस्य यावत्। यावत्प्रमाणमस्य यावन्मात्रमिति। (अत एव हि प्रमाणान्तात्प्रमाणप्रत्ययासम्भवेन वत्वन्तात्स्वार्थे द्वयसच्मात्रचौ वार्तिकेन विहितौ। तत्प्रमाणस्य तावत्। तावदेव तावन्मात्रमिति। प्रौढिवादमात्रमिदम्। वस्तुतस्तु परिमाणान्तात्प्रमाणे प्रमाणसूत्रेण प्रत्ययो विधीयते। स्वार्थे तु वार्तिकं विधायकमिति बोध्यम्। ***किमिदमिति।** अत्र पूर्वसूत्रात्परिमाणे वतुप् इति पदद्वयमनुवर्तते। किमिदम्भ्याम्परिमाणे वतुप् स्यात् वतुपो वस्य च घादेशः। सूत्रे व इति व्शब्दषष्ठी। किमिदमावनुकरणशब्दौ। अत एव किमिदम्। भ्यामिति स्थिते अनाप्यकः। हलि लोपश्च न भवतः। अन्यथा किमाभ्यामिति स्यात्। घस्य आयनेयिति इयादेशः। किम् इयत् इति स्थिते इदं किमोरीश्की इति किमः की इत्ययमादेशः –दृग्दृशवतुषु–स्थानिवद्भावेन इयादेशे घादेशे च कृतेऽपि इयति मतुप्त्वमस्ति–की–इयत्–यस्येति लोपः। कियत्। उगिदचामिति नुम्। संयोगान्तलोपोपधादीर्घौ कियान्। किम्परिमाणमस्येति विग्रहः। इदम् इयत् इदम ईश्–शित्वात्सर्वादेशः। ई – इयत् यस्येति चेति प्रकृतेरीकारस्य लोपः। प्रत्ययमात्रं शिष्यते। न च केवलप्रत्ययस्य प्रयोगानर्हत्वादियदिति पदमसाध्विति वाच्यम्। नायं केवलः प्रत्ययः। किन्तु लुप्तप्रकृतिकः प्रत्यय इति साध्वेव। (उपचारादियदितीदमेव प्रकृतिप्रत्ययोभयात्मकमिति प्रयोगार्हत्वमस्यास्तीति भावः) उदितवतीति तत्त्वबोधिनीपठितश्लोकस्यायमर्थः। शास्त्रयोनौ–शास्त्रम् – किमिदम्भ्यां वो घ इति सूत्रं योनिर्विधायकं यस्य तस्मिन् परस्मिन् प्रकृतेः परीभूते – प्रत्यये वतुपि उदितवति सति अर्थादिदं शब्दात् – इदं शब्दाद्वतुपि कृते सतीत्यर्थः। प्राकृते प्रकृतिसम्बन्धिनि प्रपञ्चे अक्षरात्मके स्वरूपे इदं इत्येतस्मिन् विलयं लोपं गतवति सति इदम ईशादेशे तस्य यस्येति लोपे च कृते इदमितीदं न दृश्यते–इति भावः। सपदि तत्काले केवलः प्रत्ययः केवलप्रत्ययात्मकं यत्पदमुदीतमुत्पन्नं परिनिष्ठितमिति यावत्। तत्पदं पण्डितः कोऽपि हृदा मनसा मिमीते चिन्तयति जानातीत्यर्थः। किमिति। इयदिति, तत्पदमियदितीदं भवतीति पण्डितिः कोऽपि वेत्तीत्यर्थः। अपण्डितस्य प्रकृतिप्रत्ययानवगमात्। इति वैयाकरणानामर्थः। औपनिषदानान्तु शास्त्रमुपनिषच्छास्त्रम् योनिः प्रतिपादकं यस्य तस्मिन् शास्त्रयोनौ

**१८४२। किमः संख्यापरिमाणे डति च** ।५।२।४१। चाद्वतुप्। तस्य च वस्य घः स्यात्। का संख्या येषां ते कति। कियन्तः॥ **१८४३। संख्याया अवयवे तयप्** ।५।२।४२। पञ्चावयवा अस्य पञ्चतयं दारु॥ **१८४४। द्वित्रिभ्यां तयस्यायज्वा** ।५।२।४३। द्वयम्। द्वितयम्। त्रयम्। त्रितयम्॥ **१८४५ । उभादुदात्तो नित्यम्**।५।२।४४। उभशब्दात्तयपोऽयच् स्यात् स चाद्युदात्तः। उभयम्॥

---

परस्मिन्विलक्षणे प्रत्यये ज्ञाने ब्रह्मात्मसाक्षात्कारे इत्यर्थः। ज्ञानमेव हि ब्रह्म। ब्रह्मणश्शास्त्रयोनित्वञ्च शास्त्रयोनित्वादिति सूत्रितं व्यासेन शारीरकमीमांसायाम्। उदितवति जाते सति प्राकृते प्रकृतिर्माया तज्जन्यः प्राकृतः तस्मिन् प्रपञ्चे – मायामये जगतीत्यर्थः। विलयं नाशं गतवति सति भानावुदिते तमसीव, प्रत्यये उदिते जगति विलीने सतीत्यर्थः। जगत्यननुभूयमाने सतीति यावत्। ब्रह्मात्मसाक्षात्कारशालिना पुम्सा न हि जगदनुभूयते परस्परविरोधादिति भावः। सपदि साक्षात्कारक्षणे एव केवलः प्रत्ययः केवलात्मा – आत्मा हि ज्ञानस्वरूपः। तदात्मकं पद्यते गम्यते इति पदं स्वस्वरूपः। उदितं आविर्भूतम्। औपनिषद ज्ञानोदयसमनन्तरमेव केवलात्मस्वरूपसाक्षात्कार आसीदित्यर्थः। यत्पदमुदितं तत्केवलात्मस्वरूपम्। पण्डितोऽपि कः पुमान् हृदापि – इयदिति इदम्परिमाणमस्य इयत्। एतत्परिमाणकमिति मिमीते मातुं शक्नोति – न कोपि तत्स्वरूपमियत्त्वेन परिच्छेत्तुमर्हतीत्यर्थः। मनसापि गन्तुमशक्यत्वादात्मनः इति। ***किमिति।** इदमोऽप्यनुवृत्तिस्स्यादिति किम्ग्रहणमत्र कृतम्। किमस्संख्यायां डति चेति न्यासस्सुवचः। संख्यायां परिछेदकत्वात्परिमाणपदमत्रानुवर्ततां वा – मा वा। संख्यात्मकपरिमाणो-पाधिकात्किंशब्दाड्डुति प्रत्ययः। संख्योपाधिकात्किंशब्दाड्डुति प्रत्यय इति वा–अर्थः। संख्यायास्त्रीत्वाल्लौकिकविग्रहे का संख्येति प्रयुक्तम्। अलौकिके तु किम् डति इति स्थिते। डित्त्वाट्टिलोपः ।कति डति चेति कतेष्षट्संज्ञा – षड्भ्यो लुगिति जश्शसोर्लुक् – कति। किं संख्याका इत्यर्थः। ***पञ्चतयम्।** नलोपः प्रातिपदिकान्तस्येति नलोपः। स्वादिष्विति तयपि पञ्चन्नित्यस्य पदत्वात्। ***द्वित्रीति।** द्वित्रिभ्याम्परस्य तयस्य संख्याया अवयवे विहितस्य तयप इत्यर्थः। अयजादेशो वा स्यात्। अयचि यस्येति लोपः। द्वयत्रयम् । द्वौ अवयवौ यस्य द्द्वयं द्वितयञ्च। उभादिति। अत्र तयस्यायजित्यनुवर्तते। वाधिकारबाधनार्थं नित्यग्रहणम्। स च अयच्प्रत्ययश्च – उभौ अवयवौ अस्येति विग्रहः। ननु द्वित्रिभ्यामवयवे अयच्प्रत्ययो वा स्यात्तयपोऽपवादः। अयजभावपक्षे तयप्–द्वयं द्वितयमिति रूपद्वयं सिद्ध्यति। उभात्सूत्रेऽपि उभादवयवे अयच् नित्यं स्यादिति व्याख्यातव्यमिति चेत्। मैवम्। अनुदात्तौ सुप्पितौ इति इत्संज्ञकपकारवति प्रत्यये अनुदात्तस्वरः। चितः अन्त उदात्तस्स्यात् – चिति प्रत्यये सति प्रकृतिप्रत्ययसमुदायस्य अन्नउदात्तो वाच्य इत्यर्थः, इति अयचि प्रत्यये कृते चित्स्वरोऽन्तोदात्तस्स्यात्। तयपो यजादेशे तु पित्स्वरोऽनुदात्तस्स्यादिति स्वरे भेदात्। अयच्प्रत्ययोऽत्र न कर्तव्यः।

**१८४६। तदस्मिन्नधिकमिति दशान्ताड्डः** ।५।२।४५। एकादश अधिका अस्मिन्नेकादशम्॥ **शतसहस्त्रयोरेवेष्यते**॥ नेह। एकादश अधिका अस्यां विंशतौ॥ **प्रकृतिप्रत्ययार्थयोः समानजातीयत्व एवेष्यते**॥ नेह। एकादश माषा अधिका अस्मिन् सुवर्णशते॥ **१८४७। शदन्तविंशतेश्च** ।५।२।४६। डः स्यादुक्तेऽर्थे। त्रिंशदधिका अस्मिन् त्रिंशं। विंशम्॥

---

***तदस्मिन्निति**। दश इति पदमन्ते यस्य तस्मात् – तदिति प्रथमान्ताद्दशान्तादस्मिन्नधिकमित्यर्थे डप्रत्ययः। अधिकोपाधिकादस्मिन्नित्यर्थे ड इति वा। एकादशन् – ड–डित्त्वाट्टिलोपः। एकादशं – शतं – सहस्रं वा – यद्दशान्ताधिकं तच्छतं वा सहस्रं वा यदि भवति तर्ह्येव प्रत्यय इष्यते। (दशान्तम्पदमधिकमस्मिन्निति बहुव्रीहिर्दशान्ताधिकम्) एकादशं शतम्। एकादशाधिकं शतमित्यर्थः । समानायामभिन्नायां एकस्यामित्यर्थः जातौ भवं समानजातीयं तस्य भावस्समानजातीयत्वम्। सजातीयत्वमित्यर्थः। दशान्तशब्दवाचः प्रकृत्यर्थः। आधिक्यं प्रत्ययार्थः, तच्चाधिक्यं शतसहस्रान्यतरसम्बन्ध्येव। तेन शतसहस्रान्यतरः प्रत्ययार्थ इति फलितम्। येषां शतं विवक्षितं तेषामेव यदि दशान्ताधिक्यं विवक्ष्यते तर्ह्येव प्रत्यय इति भावः। तेन एकादशरूपिका अधिका अस्मिन् रूपिकाशते एकादशमिति भवति। प्रकृतेरेकादेशेत्यस्य योऽर्थः रूपिकात्मकः, स एव शतार्थोऽपीति सजातीयत्वस्य सत्त्वात्। एकादश माषा अस्मिन् सुवर्णशते इत्यत्र तु न भवति। प्रकृत्यर्थो माषाः। प्रत्ययार्थस्सुवर्णमिति विजातीयत्वात्। (शतमुन्मानविशेषः) ***शदन्तेति।** शदन्तात् विंशतेश्च अस्मिन्नधिका इत्यर्थे डः। त्रिंशत् चत्वारिंशत् पञ्चाशत् इति शदन्ता निपातिताः । पङ्क्तिविंशतीति सूत्रे संख्याया इति सूत्रात्सङ्ख्याग्रहणानुवृत्तेः। विंशतिसाहचर्याद्वा संख्यावाच्ये वशदन्तो गृह्यते – विंशतिरधिका अस्मिन्मते – विंशम्। विंशति। अ–इति स्थिते – यस्येति लोपः–पश्चाट्टिलोपः। विंश् – अ विंशम्। न च परत्वाद्यस्येति लोपे कृते पुनष्टिलोपो न स्यादिति वाच्यम्। डित्त्वसामर्थ्यस्य अनुपक्षीणत्वाड्डप्रत्ययनिमित्तकं कार्यद्वयमपि स्यादेवेति। न च नित्यत्वाट्टिलोप एव प्रथमतस्स्यात्। (यस्येति लोपे कृतेऽप्यकृतेऽपि टिलोपप्रसङ्ग सत्त्वाट्टिलोपस्य नित्यत्वम्) इति विंशतमित्येव रूपमिति वाच्यम्। अप्रत्यये कृतेऽपि यस्येति लोपेन उक्तरूपसिद्धौ डित्करणसामर्थ्यस्य अनुपक्षीणत्वात्। ननु त्रिंशमित्यादौ डित्करणं चरितार्थमिति नास्ति तस्य सामर्थ्यमिति चेत् सत्यम्। अत एव ति विंशतेर्डतीति पृथक्सूत्रं कृतं विंशतेस्तिलोपार्थम्। तेन नित्यत्वाद्यस्येति लोपं बाधित्वा टेरिति यष्टिलोपः तमपि तिलोपं बाधते। विशेषविहितत्वेनापवादत्वात्। तिलोपानन्तरं विशं–अ–इति स्थिते–अतो गुणे इति पररूपम्। यस्येत्यलोपश्च प्राप्नोति परत्वाद्यस्येति लोपः – विंश–***संख्याया इति।** गुणस्येत्यस्यार्थः भागस्येति। न माने इत्यस्यार्थः मूल्ये इति। अधिकरणसप्तमी – बलाद्वर्तमानादित्यस्याक्षेपः। संख्याया इति पञ्चमी। अर्थग्रहणम् अर्थात्प्रत्ययासंभवेन

**१८४८। संख्याया गुणस्य निमाने मयट्** ।५।२।४७। भागस्य मूल्ये वर्तमानात्प्रथमान्तात्संख्यावाचिनः षष्ठ्यर्थे मयट् स्यात्। यवानां द्वौ भागौ निमानमस्योदश्विद्भागस्य द्विमयमुदश्विद्यवानाम्। गुणस्येति किम्। द्वौ व्रीहियवौ निमानमस्योदश्वितः। निमाने किम्। द्वौ गुणौ क्षीरस्य एकस्तैलस्य द्विगुणं क्षीरं पच्यते तैलेन॥

---

तद्वाचिशब्दो गृह्यते इति कृत्वाह–संख्यावाचिन इति। तदस्येत्यत्रानुवर्तते। तदेतदाह–प्रथमान्तात् षष्ठ्यर्थे इति। मयट्प्रत्ययेटो ङीबर्थः। संख्याया अवयवे तयबिति सूत्रादनुवर्तमाने सति संख्याया इति पदे अस्मिन्सूत्रे संख्याया इति पदं सुत्यजमेव। यथा – द्वियवम्। अत्र द्विशब्दस्संख्यावाची। भागद्वयार्थबोधकः। सर्वनामशब्दा हि विवक्षितमर्थं बोधयन्ति। यथा अयमित्युक्ते पुरोवर्ती मनुष्यो हस्ती अश्वो वा इत्यादि। भागद्वयञ्च ससम्बन्धिकम्। किं सम्बन्धि भागद्वयमित्याकांक्षाया उत्थितत्वात्–तच्च सम्बन्धिवस्तु वैवक्षिकमेव। तेन द्विशब्दात् यवानां द्वौ भागौ इत्यर्थ उदेति यवानां भागद्वयसम्बन्धित्वेन विवक्षितत्वात्। एवं यवद्विभागर्थबोधकोऽयं द्विशब्दः। भागनिमाने वर्तते – एतत्सूत्रप्रामाण्यात् इत्याह – निमानमस्योदश्विद्भागस्येति। अस्येति षष्ठ्यर्थो भाग एव। ससम्बन्धिकत्वात्सोऽपि भागः कस्यचिद्वस्तुनो भवतीति तद्वस्त्विह उदश्वि द्विवक्षितम्। (उदश्वित्तक्र सजलम् उदकेन श्वयति वर्धते इति व्युत्पत्तेः) द्वौ यवभागौ अस्योदश्विद्भागस्य निमानं भवत इति उदश्वित् यवानां द्विमयमित्युच्यते (भागद्वयबोधकद्विशब्देन यवभागद्वयमेव विवक्षितमिति दर्शयितुं यवानामित्युक्तम्। एकस्योदश्विद्भागस्य द्वौ यवभागौ मूल्यं भवत इति तदर्थः। न च यवानां द्वौ भागौ निमानमस्येति विग्रहे यवानां द्विमयमिति भवतीति भ्रमितव्यम्। सुब्लुकि यवद्विमयमिति भवितव्यत्वात्। अपि च द्विशब्दाद्यवभागद्वयार्थाप्रतीतौ असामर्थ्यादेव तद्धितो नोदीयात्। भागद्वयस्य ससम्बन्धिकत्वेन सम्बन्धिना यवपदेन सह तस्य नित्यसापेक्षत्वात्। निरपेक्षं हि पदं समर्थमित्युच्यते–समर्थाच्च तद्धितोत्पत्तिरिति। तस्मात् द्विमयमित्येवोदाहरणम्। यवानामिति उदश्विदिति सम्बन्धिवस्तुबोधनार्थमुक्तम्। ननु उदश्विद्भागस्य द्विमयत्वेन उदश्विद्द्विमयमिति विरुद्धम्। (अस्येति षष्ठ्यर्थो हि भागः – द्वौ भागौ निमानमस्य भागस्येति द्विमयो भाग एव भवति न तु भागवदिति प्रश्नाभिप्रायः) इत्यत आह – तत्त्वबोधिन्यां भागेऽपि विधीयमानः प्रत्ययः अभिधानस्वाभाव्याद्भागवन्तमाचष्टे इति। अयं भागप्रत्ययो मयट् स्वभावाद्भागवत्पदार्थमेवाभिधत्ते इति भावः। द्वौ व्रीहियवौ भागवन्ताविमौ न तु भागौ। षष्ठ्यर्थश्चोदश्वित्भागवदेव न तु भागः इति नात्र मयट्। अर्थस्तु एकस्योदश्विद्भागस्य व्रीहिभागो यवभागश्चेति भागद्वयम्मूल्यं भवतीत्येव। भागस्य निमाने यद्वर्तते तदपि भाग एव भवेत्। (संख्यावाच्यपि भागार्थबोधक एव भवेदिति तदर्थः) षष्ठ्यर्थोऽपि भाग एव भवेत्। एवं यदि तर्हि मयडुदेति। नोचेन्न। अत एव द्वौ व्रीहियवौ अस्योदश्वित इति मूले प्रोक्तम्। द्वौ यवभागौ अस्योदश्वित इत्यत्रापि न मयट्। तैलेन

**१८४९। तस्य पूरणे डट्** ।५।२।४८। एकादशानां पूरण एकादशः ॥ **१८५०। नान्तादसंख्यादेर्मट्** ।५।२।४९। डटो मडागमः स्यात्। पञ्चानां पूरणः पञ्चमः। नान्तात्किम्। विंशः। असंख्यादेः किम्। एकादशः ॥

---

तिलानां विकारस्तैलमेकत्वादेको भागस्तैलस्येति गम्यते। द्वौ गुणौ अस्येति विग्रहे संख्यावाची भागार्थबोधक एवायं द्विशब्दः। प्रत्ययार्थस्तु षष्ठ्यर्थ एव। द्विशब्दस्त्वयं न भागनिमाने वर्तते इति नात्रमयट्। द्विमयं क्षीरमिति न भवति । किन्तु द्वौ गुणौ अस्य इति बहुव्रीहिः। द्विगुणम्। एकस्तिलस्येति मूले। एकस्तैलस्येति पठितव्यम्। न ह्येकेन तिलबीजेन क्षीरं पच्यते ***तस्येति।** सङ्ख्याया इत्यनुवर्तते। षष्ठ्यन्तात्सङ्ख्यावाचिनः पूरणार्थे डट्प्रत्ययस्स्यात् । पूरणः पूरकः। एकादशानां पूरण एकादशः। टित्त्वात् एकादशी। डित्त्वाट्टिलेपः। यया चरमया एकादशतिथयः पूर्यन्ते सा तिथिरेकादशीत्युच्यते। एकादशसु तिथिषु यद्धर्म एकादशत्वं वर्तत तद्धि एकादशतिथिना पूर्यते । तस्यैव चरमत्वात् । तदभावे एकादशत्वस्यैवाभावात्। न च दशमादिनापि पूर्यते एकादशत्वम् । दशमादेरेकस्याप्यभावे एकादशसंख्याकत्वाभावात्। एकेन हीनेष्वतिरिक्तेषु तिथिषु दशत्वमेव वर्तते इति। एकादशानां पूरणातिथिरेकादशीति संज्ञा दशमीतिथेरपि स्यादिति वाच्यम्। यो हि यत्समुदाये चरमः स एव तत्समुदाये पूरणः इति सिद्धान्तात्। एकादशतिथिसमुदाये चरमः यः एकादशतिथिः स एव तत्र पूरणः न तु दशमादिः। अचरमत्वादिति। चरमस्य पूरणत्वञ्च न्यायसिद्धमेव। दृश्यते हि चरमः पादश्श्लोकपूरणः। चरमोऽक्षरः पादपूरण इति। ***नान्तादिति।** संख्या आदिर्यस्य तस्मात्संख्यादेः। तद्भिन्नादसङ्ख्यादेः। संख्यावाचकशब्दपूर्वो न भवति यस्तस्मादित्यर्थः। नकारः अन्ते यस्य तस्मान्नान्तात्– सङ्ख्यावाचिनष्षष्ठ्यन्तात्पूरणे विहितो यो डट् तस्य मडागमस्स्यादित्यर्थः। सङ्ख्यायास्तस्य पूरणे डट् इत्यमीषामत्रानुवृत्त्या लब्धोऽयमर्थः। षष्ठ्यन्तत्वेन डटो विपरिणामः। असङ्ख्यादेरित्यस्य सङ्ख्याभिन्नादेरिति तु नार्थः पञ्चम इत्यसिद्धेः। किन्तु संख्यादिर्न भवति यस्तस्मादिति प्रसज्यप्रतिषेधः। संख्यादिभिन्नादिति पर्युदासेऽपि न क्षतिः। संख्यादिभिन्नो हि संख्येतरपूर्वः केवलश्च भवत्येवेति। मटष्टित्त्वादाद्यन्तौ टकिताविति आद्यवयवस्सन् मकारो भवति। मटि अकार उच्चारणार्थः। म्ट् इत्युच्चारणस्य कृच्छ्रत्वात् म् इति शिष्यते। डटि अ इति शिष्यते। एवम् अकारस्य मकार आद्यवयवस्सन् भवतीति लब्धम्। म् – अ–म, पञ्चन् – म – इति स्थिते – डित्त्वाट्टिलोपः। (म इत्यस्मिन्मकारोपर्यकारः डटोऽवयव एवेति तस्मिन् डित्त्वं वर्तते) इति टिलोपो न भवति। टेः डिति परे भस्य टेर्लोपः। यचि भम् । यकारादिष्वजादिषु च पूर्वं भं स्यादिति म इत्ययं न यादिकम्, नाप्यजादिकमिति पञ्चन्नित्यस्याभत्वात्। किन्तु नलोपः प्रातिपदिकान्तस्येति नलोपः – पञ्चमः। ननु नान्तादसंख्यादेर्मट् इति सूत्रस्य असङ्ख्यादेर्नान्तसङ्ख्यायाः पूरणे मट्प्रत्ययस्स्यादित्येवार्थो वाच्यः लाघवात्। किं डटो मडागमेन इति शङ्का तत्त्वबोधिन्यामुत्तारिता। एकादशः

**१८५१। षट्कतिकतिपयचतुरां थुक्** ।५।२।५१। एषां थुगागमः स्याड्डटि। षण्णां पूरणः षष्ठः। कतिथः। कतिपयशब्दस्यासंख्यात्वेऽप्यतएव ज्ञापकाड्डट्। कतिपयथः। चतुर्थः॥ **चतुरश्छयतावाद्यक्षरलोपश्च**॥ तुरीयः। तुर्यः॥ **१८५२। बहुपूगगणसङ्घस्य तिथुक्** ।५।२।५२। डटीत्येव। पूगसङ्घयोरसंख्यात्वेऽप्यतएव डट्। बहुतिथ इत्यादि॥

---

– एकादशन् शब्दोऽयं नान्तः। सङ्ख्यावाचकैकशब्दपूर्व इति नातः परस्य डटो मट्। ***षडिति।** षडिति स्वरूपग्रहणम्। न तु षट्संख्यानाम्। षट्कत्योः पृथग्ग्रहणात् ज्ञापकात्। डति चेति कतेष्षट्संज्ञा वर्तते हि। प्रकृतीनामन्तावयवस्सन्भवति धुगागमः। कित्त्वात्। उकार उच्चारणार्थः। ध् इति शिष्यते। संख्यायास्तस्य पूरणे डट् इत्यत्रानुवर्तन्ते। एभ्यः पूरणे डट्। यस्तस्य पूरणे इत्यनेन विधीयते तस्मिन् डटि परतः एषां धुगागमोऽनेन विधीयते। यद्वा–डट् इत्येवानुवर्तते। एषां डटि धुगागम इत्येवार्थः। डट्तु तस्य पूरणे इत्यनेनैव विहित इति पूर्वसूत्रेऽपि बोध्यम्। कतिशब्दस्य असंख्यावाचित्वेऽपि (प्रश्न र्थकत्वात्) बहुगणवति डति संख्या इति कृत्रिमसंख्यात्वस्य सत्त्वात् तस्य पूरणे इति कतेर्डट्। कतीनां पूरणः कतिथः। ननु केचिदर्थबोधकात्कतिपयशब्दात् कथं डट् – असंख्यात्वादिति। डटोऽभावे धुग्विधानं व्यर्थमत आह–अत एव ज्ञापकादपि कतिपयाड्डटोऽभावे डटि धुग्विधानं व्यर्थं सत् कतिपयाड्डटं विधाय चरितार्थं भवतीति भावः। ***चतुर्णां** पूरणश्चतुर्थः। स्त्रियां चतुर्थी। ***चतुर इति।** चतुरः पूरणे छप्रत्ययो यत्प्रयश्च स्यात्। तत्प्रत्ययद्वयसन्नियोगेन आद्यक्षरलोपस्स्यात्। आदिरक्षरः च इत्ययम्। तस्य लोपः। चतुरश्छयतौ च लोपश्चेत्युक्तौ चकारमात्रस्यैव लोपस्स्यात् इतिकृत्वा आद्यक्षरलोप इत्युक्तम्। वस्तुतस्तु स्तेनाद्यन्नलोपश्चेत्यत्र नेति संघातग्रहणमिति यथोक्तं तथात्रापि चेति संघातग्रहणमिति व्याख्याय चलोपश्चेति वक्तुं युक्तम्। अच्सहितं व्यञ्जनमक्षरः–क–ख–ग इत्यादि। **प्रकृते छे कृते छस्येयादेशे** – चतुरीय इत्यत्र चत्वारोक्षराः। च–तु–री–य इति। एषामक्षराणामादिरक्षरः च – तस्य लोपः – तुरीयः। चतुर्णाम्पूरण इत्येव विग्रहः। च्–अत्–उ–र्–ई–य्–अ–इति अल्क्रमः। अच्सहितं व्यञ्जनमित्युक्तौ अकारेण सहितश्च कारः। उकारेण सहितस्तकारः ईकारेण सहितो रकारः अकारेण सहितो यकारश्च। च–तु–री–य इति चत्वारोक्षरसंज्ञा भवन्ति। व्यञ्जनसहितोऽच् अक्षर इत्युक्तौ तकारेण सहितोकारः। रेफेन सहित उकारः। यकारेण सहित ईकारः इति च्–अत् – उर् – ईय् –अ इत्येषां मध्ये, अत् – उर् – ईय् इति त्रयोऽक्षराः। तेषामाद्यक्षरस्य अतो लोपस्स्यात्। चुरीय इति रूपापत्तिरिति विवेकः। ***बह्विति।** बहु–पूग – गण – संघ एतेषां समाहारस्य डटिति धुक् इत्ययमागमस्स्यात्–क–इत्। उरुच्चारणार्थः। तिथ् इति शिष्यते। बहुगणवतुडतीति बहुगणयोः कृत्रिमसङ्ख्यात्वं वर्तते इति ताभ्यां तस्य पूरणे इति डट्। बहूनां पूरणो बहुतिथः। गणस्य पूरणो गणतिथः। अत एव डट् – ज्ञापकादिति शेषः। अस्मादेव

१८५३। **वतोरिथुक्** ।५।२।५३। डटीत्येव। यावतिथः॥ १८५४। **द्वेस्तीयः** ।५।२।५४। डटोऽपवादः। द्वयोः पूरणो द्वितीयः॥ १८५५। **त्रेः संप्रसारणं च** ।५।२।५५। तृतीयः॥ १८५६। **विंशत्यादिभ्यस्तमडन्यतरस्याम्** ।५।२।५६। एभ्यो डटस्तमडागमो वा स्यात्। विंशतितमः। विंशः। एकविंशतितमः। एकविंशः॥ १८५७। **नित्यं शतादिमासार्धमाससंवत्सराच्च** ।५।२।५७। शतस्य पूरणः शततमः। एकशततमः। मासादेरतएव डट्। मासतमः॥ १८५८। **षष्ट्यादेश्चाऽसंख्यादेः** ।५।२।५८।

---

ज्ञापकाड्डुट् इत्यर्थः। ***वतोरिति।** वत्वन्तस्य डटि इथुक् इत्ययमागमः। यावत् डट् – इथ् – यावतिथ् – अ – यावतिथः यावतां पूरणो यावतिथः। इथुकि पूर्वस्य भत्वात्। तस्य न जश्त्वेन दकारः। वत्वन्तस्य बहुगणेति कृत्रिमं सङ्ख्यात्वमस्ति ***द्वेरिति।** तस्य पूरणे इत्यनयोरत्रान्वयः। सङ्ख्यायाश्च–षष्ठयन्तात्सङ्ख्यायाः द्विशब्दात्पूरणे तीयप्रत्ययस्स्यात्।

***त्रेरिति।** चात्तीयप्रत्ययः। तस्य पूरणे इत्येव। इग्यणस्सम्प्रसारणमिति रेफस्थाने ऋकारः। त्रि–तीय – त् – ऋ–इ–तीय। संप्रसारणाच्चेति पूर्वरूपम्। त् – ऋ – तीय – तृतीय। ननु त्रेस्तृच इति सूत्रयितव्यम्। त्रेः तृ इत्ययमादेशः। अनेकाल्त्वात्सर्वस्य। चात्तीयप्रत्यय इति चेन्मैवम्। द्वेस्तीय इति वत्त्रेस्त्रपि प्रत्यय एव स्यात्। चात्तीय इति तृप्रत्ययः। तीयप्रत्ययश्चेत्युभयं त्रिशब्दात्प्राप्नोतीति। वस्तुतस्तु व्याख्यानतो विशेषप्रतिपत्तिरिति व्याख्यानादेव तृ इत्ययमादेश इति लाभे सति न्यासस्सुवच इति बोध्यम्। ***विंशतीति।** मण्डूकप्लुत्या डटित्यत्रान्वेति। तस्य षष्ठया विपरिणामः। तमट् – इत्ययमागमः। अकार उच्चारणार्थः। टित्त्वादाद्यवयवः। तम् इति शिष्यते । विंशतेः पूरणः। विंशतितम् – डट् – विंशतितम – डटि – ति विंशतेर्डितीति टिलोपे विंशः। तमडागमे तु डितीति न टिलोपः। अभत्वात्पूर्वस्य – वितिरादिर्योषामेकविंशत्यादीनायन्ते विंशत्यादयः। विंशतिः। तदुपरितनाश्च सङ्ख्या एकविंशति, द्वाविंशत्यादयः। न तु एकान्नविंशत्यष्टादशादय इति बोध्यम्। वृत्तिकृन्मतमिदम्। भाष्यमतन्तु पङ्क्तिविंशतीति सूत्रस्थः। विंशतिः आदिर्येषां त्रिंशदादीनां ते विंशत्यादयः। विंशति–त्रिंशच्चत्वारिंशदित्यादयः तत्सूत्रस्था एव गृह्यन्ते इति। तदन्तविधेरेकविंशतितम इति । ***नित्यम् इति।** शतमादिर्येषामेकशतादीनां ते शतादयः। मासः – अर्धमासः – संवत्सरः – एतेषां समाहारात्परो यो डट् तस्य नित्यं तमडागमः। अन्यतरस्यामिति विकल्पबाधनार्थं नित्यग्रहणम्। (बाधनार्थमननुवर्तनार्थमित्यर्थः) ननु सङ्ख्यावाचित्वाच्छताड्डुटस्तु नाम कथं मासादिभ्यो डट् – येन तस्य विहितस्तमडागमस्सार्थो भवेदित्यत आह–अत एवेति। अस्मादेव ज्ञापनादित्यर्थः। मासस्य पूरणो मासतमः। अर्धमासस्य अर्धमासः। तस्य पूरणः अर्धमासतमः। ***षष्टीति।** पङ्क्त्यादिसूत्रे यष्षष्टिस्स इह गृह्यते। षष्टिरादिर्येषां सप्तत्यादीनामन्ते षष्ट्यादयः। सङ्ख्यापूर्वका न भवन्ति ये षष्ट्यादयः तेभ्यो डटो नित्यं तमट्।

षष्टितमः। संख्यादेस्तु 'विंशत्यादिभ्य-१८५६' इति विकल्प एव। एकषष्टः। एकषष्टितमः॥ **१८५९। मतौ छः सूक्तसाम्नोः** ।५।२।५९। मत्वर्थे छः स्यात्। अच्छावाकशब्दोऽस्मिन्नस्ति अच्छावाकीयं सूक्तम्। वारवन्तीयं साम॥ **१८६०। अध्यायानुवाकयोर्लुक्** ।५।२।६०। मत्वर्थस्य छस्य। अतएव ज्ञापकात्तत्र छः। विधानसामर्थ्याच्च विकल्पेन लुक्। गर्दभाण्डः। गर्दभाण्डीयः॥

---

तदन्तविधेरेकषष्टितमः। षष्टि-सप्तति-अशीति-नवति-इत्येतेषामेव असङ्ख्यादित्वनिषेधः। शतस्य तु न। नित्यं शतादीति सूत्रे शतादेर्ग्रहणात्। अन्यथा षष्ट्यादित्वादेव शतादपि डटस्तमटि सिद्धे शतादिग्रहणन्तत्र व्यर्थः स्यात्। तस्मात् सङ्ख्यादेरपि शतादेर्डटस्तमट् स्यादेव। नित्यमिति शतादिग्रहणादिति सुस्थम्। विंशत्यादिभ्यः शतादर्वाचीनेभ्यस्तु संख्यादिभ्यः विंशत्यादिभ्य इति सूत्रेण तमटो विकल्प एव। विंशत्यादिसूत्रेणैव यद्यपि षष्ट्यादेरपि विकल्पेन तमट् सिद्ध्यति तथाऽपि संख्यादेष्षष्ट्यादेस्तेन विकल्पे सिद्धेऽपि असंख्यादेष्षष्टादेर्विकल्पो माभूदिति सूत्रमिदम्। ***मताविति।** मत्वर्थे छस्स्यात्। सूक्तसाम्नो र्वाच्ययोरित्यर्थः। मतुप् यस्मिन्नर्थे क्रियते स मत्वर्थः। तदस्यास्त्यस्मिन्निति मतुप् इति वक्ष्यति। प्रथमान्तादस्तीत्युपाधिकात् षष्ठ्यर्थे सप्तम्यर्थे च मतुप् इति तदर्थः। एवञ्च प्रथमान्तादस्तीत्युपाधिकात् षष्ठ्यर्थे सप्तम्यर्थे च छस्स्यात्। सूक्तसाम्नोर्वाच्ययोरिति सूत्रस्य निष्कृष्टार्थः। मत्वर्थो नाम (तदअ) स्यास्त्यस्मिन्नित्यर्थ इति फलितम्। वारवन्तशब्दोस्मिन्नस्तीति वारवन्तीयम्। * **मतौ च्छ इति।** पदान्तद्वेत्यनेन दीर्धस्य तुक्। तस्य श्चुत्वेन चकारः। तुको वैकल्पिकत्वात्। मतौ छ इत्यपि भवति। एवं मूले मत्वर्थे च्छ इत्यत्रापि बोध्यम्। प्रत्ययस्तु छ एव न तु च्छः। फ ढ ख छ घा मिति छस्यैवेया देशः न तु च्छस्येति। अच्छावाकीयमित्यादिरूपासिद्धेः। ***अध्यायेति।** मतौ छ इत्यत्रानुवर्तते। छष्षष्ठ्या विपरिणम्यते। मतौ मत्वर्थे यश्छः विहितस्तस्येत्यर्थः। मत्वर्थे विहितस्य छस्य मत्वर्थकत्वमर्थात्सिद्धम्। यस्मिन्नर्थे यः प्रत्ययो विहितस्तत्प्रत्ययस्य तदर्थकत्वात्। एवञ्च मतोर्योऽर्थस्स एव छस्यापीति लब्धम्। तदेतदाह मत्वर्थस्य छस्येति। मतोरिव अर्थः यस्य तस्य मत्वर्थस्य अध्यायानुवाकयोर्वाच्ययोर्मतौ छस्य लुगित्यन्वयः। ननु सूक्तसाम्नोरेव मतौ चो विहित इति कथमध्यायानुवाकयोर्मतौ छस्य लाभः। येन तस्य विधीयमानो लुक् सार्थकस्स्यात् (प्रत्ययादर्शनं हि लुक्। प्रत्ययस्यैवाविहितत्वे कथन्तत्प्रतियोगिकमदर्शनम्। प्राप्तिपूर्वकत्वान्निषेधस्य। अदर्शनं नाम दर्शनस्याभावो हि। अभावो निषेधः नञर्थत्वात्। दर्शनस्यैव प्राप्त्यभावे कथन्तन्निषेध इति भावः)। अत आह अत एवेत्यादि। तत्र तयोरर्थयोः अध्यायानुवाकयोरित्यर्थः। ननु मास्त्विदं सूत्रम्।

**१८६१। विमुक्तादिभ्योऽण्** ।५।२।६१। मत्वर्थेऽण् स्यादध्यायानुवाकयोः। विमुक्तः शब्दोऽस्मिन्नस्ति वैमुक्तः। दैवासुरः॥ **१८६२। गोषदादिभ्यो वुन्** ।५।२।६२। मत्वर्थेऽध्यायानुवाकयोः। गोषदकः। इषेत्वकः॥ **१८६३। तत्र कुशलः पथः** ।५। २।६३। वुन् स्यात्। पथि कुशलः पथिकः॥

---

छं कृत्वा तस्य लुकि कृते यद्रूपं सिद्ध्यति तद्रूपं छस्यैवाविधाने सिद्ध्यतीति शङ्कायामाह। विधानसामर्थ्याच्छविकल्पेन लुक् इति पाक्षिकश्छस्य लुगित्यर्थः। तथा च लुगभावे छश्श्रूयते इति। छविधिज्ञापकत्वेन सूत्रमिदं सार्थकमिति भावः। ननु गर्दभाण्डशब्दोऽस्मिन्नस्तीति विग्रहे छे कृते तस्य लुकि गर्दभाण्डः। गर्दभाण्डवानित्यर्थस्सिद्ध्यति। छस्यैवाविधाने गर्दभाण्डशब्दात्केवलात् न तादृशार्थसिद्धिरिति कथं लुको वैयर्थ्यमिति चेत् (केवलात् अतद्धितलुगन्तादित्यर्थः। यश्शिष्यते स लुप्यमानार्थाभिधायीति न्यायात् – छान्ताद्यदर्थसिद्धिः तल्लुगन्तादपि तदर्थसिद्धिर्भवत्येव। अतल्लुगन्तात्तु न तदर्थसिद्धिरिति लुग्विधिस्सार्थक एवेति प्रश्नाभिप्रायः।) मैवम्। अर्शआदेराकृतिगणत्वेन गर्दभाण्डशब्दान्मत्वर्थीयेऽचि कृते गर्दभाण्ड इति रूपम्। तस्माद्गर्दभाण्डवानित्यर्थस्सिद्ध्यत्येवेति लुग्विधेर्वैयर्थ्यं सुस्थमेवेति। छविकल्पेन लुगित्यस्य छस्य विकल्पेन लुगिति अर्थात्–छस्य विकल्पेन छविकल्पेन इत्यसमर्थसमासः। विकल्पेन छलुगिति वक्तव्यत्वात्। यदि तु इदं सूत्रं मतुप्प्रकरणे पठितं स्यात्तर्हि तदस्यास्त्यस्मिन्नित्यनेन गर्दभाण्डशब्दान्मतुपि प्राप्ते तस्य लुकं विधाय गर्दभाण्डवानित्यनिष्टं रूपं माभूदिति फलं जनयित्वा सूत्रमिदं सार्थकं स्यात्। न तु तत्र पठितमिति इहास्य पाठविधिः पाक्षिकं लुकमनुमापयतीति केचित्। अस्मिन्मतेऽपि इहास्य पाठविधेर्वैयर्थ्यं मदुक्तरीत्यैव बोध्यम्। * **विमुक्तेति।** नास्याणो लुक् – अध्यायसूत्रेण छस्यैव लुग्विधानात्। देवासुरशब्दोऽस्मिन्नस्ति दैवासुरः। ***गोषदेति।** मतौ – अध्यायानुवाकयोरिति पदद्वयमत्रानुवर्तते। गोषद्–इषे त्वा – मातरिश्वन्–देवस्य त्वा–इत्यादयो गोषदादयः। गोषद् इति पदं यस्मिन्सः गोषदकः – इषेत्वा इति पदं यस्मिन् सः इषेत्वकः। यस्येति च इत्यालोपः। इषेत्वोर्जेत्वेति मन्त्रः इषेत्वक इत्युच्यते। एवं मातरिश्वकः। नस्तद्धिते इति टिलोपः। देवस्य त्वक इत्यादि। ***पथिकः।** पथिन् – अक – टिलोपः। पथक इति भवितव्ये पथिक इत्यसाधुः। प्रामादिकः पाठः। ***आकर्षकः।** आकर्षात् तेन चरतीत्यर्थे ष्ठलि आकर्षिक इति तुगतम्। आकर्षो हलम्। मुख्यपाठे तु आकर्षे कुशलः आकर्षकः। आकर्षे कुशल इत्यत्र न तद्धितोत्पत्तिरिति ज्ञेयम्। ***धनको** देवदत्तस्य – देवदत्तस्य धनेच्छा वर्तते इत्यर्थः। ***प्रस्थित** उत्सुकः। तत्पर इति यावत्। स्वस्याङ्गानि स्वाङ्गानि। करचरणादीनि। तेभ्यः सप्तम्यन्तेभ्यः प्रसितार्थे कन् ।अद्रवन्मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम्। अतत्स्थं तत्र दृष्टञ्च तेन चेत्तत्तथायुतमिति परिभाषितम्। त्रिविधं स्वाङ्गन्तु नेह गृह्यते।

**१८६४। आकर्षादिभ्यः कन्** ।५ ।२ ।६४। आकर्षे कुशल आकर्षकः। आकषादिभ्य इति रेफरहितो मुख्यः पाठः। आकषो निकषोपलः॥ **१८६५। धनहिरण्यात्कामे** ।५ ।२ ।६५। काम इच्छा। धने कामो धनको देवदत्तस्य। हिरण्यकः॥ **१८६६। स्वाङ्गेभ्यः प्रसिते** ।५ ।२ ।६६। केशेषु प्रसितः केशकः। तद्रचनायां तत्पर इत्यर्थः॥ **१८६७। उदराट्ठगाद्यूने** ।५ ।२ ।६७। अविजिगीषौ ठक् स्यात्। कनोऽपवादः। बुभुक्षयात्यन्तपीडित उदरे प्रसित औदरिकः। आद्यूने किम्। उदरकः। उदरपरिमार्जनादौ प्रसक्त इत्यर्थः॥ **१८६८। सस्येन परिजातः** ।५ ।२ ।६८। कन् स्वर्यते नतु ठक्। सस्यशब्दो गुणवाची नतु धान्यवाची। शस्येनेति पाठान्तरम्। सस्येन गुणेन परिजातः संबद्धः सस्यकः साधुः॥ **१८६९। अंशं हारी** ।५ ।२ ।६९। हारीत्यावश्यके णिनिः। अत एव तद्योगे षष्ठी न। अंशको दायादः॥ **१८७०। तन्त्रादचिरापहृते** ।५ ।२ ।७०। तन्त्रकः पटः प्रत्यग्र इत्यर्थः॥

---

स्वाङ्गेभ्य इति बहुत्वनिर्देशात्। * **उदरादिति।** उदरात्प्रसिते ठक्स्यात्। कनोपवादः। आद्यूने वाच्ये आद्यूनः। अविजिगीषुः। उदरे प्रसितः उदरको विजिगीषुः। स्वाङ्गेभ्य इति कन्। विजिगीषोः कथमुदरे प्रसितत्वमत आह – उदरपरिमार्जनादाविति। उदरे मलादिदूषिते सति तंद्यादयस्स्युरिति विजिगीषुः प्रथममुदरं परिमार्जयतीति भावः। औदरिकः कुक्षिम्भरिरित्यर्थः। * **सस्येति।** सस्य शब्दात्तृतीयान्तात्परिजात इत्यर्थे कन् स्यात्। ननु पूर्वसूत्रात् ठगनुवर्ततेऽत्रेति शङ्कायामाह–कन् स्वर्यते न तु ठगिति। स्वर्यते स्वरितस्वरेणोच्चार्यते। तथा च स्वरितेनाधिकार इति कन एवाधिकारः। स्वर्यते इत्यस्य अधिक्रियते इति यावदर्थः। स्वरितोच्चारणम्प्रति अधिकारस्यैव फलभूतत्वात्। संबद्धः। सम्यग्बद्धः। युक्त इति यावत्। सस्य कस्साधुर्गुणवानित्यर्थः। ***अंशशब्दात्द्वितीयान्तात्** हारीत्यर्थे कन्। हरत्यवश्यमिति हारी – इन्नन्तोयम्। अंशो भागः। ***तन्त्रादिति** निर्देशादेव पञ्चमीसमर्थविभक्तिः। तन्त्रशब्दात्पञ्चम्यन्तादचिरापहृतेऽर्थे कन् स्यात्। ***ब्राह्मणकेति।** मत्वर्थे ब्राह्मणकोष्णिके निपात्येते संज्ञायां गम्यमानायामित्यर्थः। ब्राह्मणक इति देशस्य संज्ञा। तस्मिन् देशे ब्राह्मणा आयुधजीविन इति। आयुधजीवित्वोपाधिकाद्ब्राह्मणान्मत्वर्थे कन् निपातितः। उष्णिकेति यवागोस्संज्ञा। तस्यामल्पमन्नमस्तीति। अल्पत्वोपाधिकादन्नशब्दान्मत्वर्थे कन्निपातितः। व्याख्यानाद्वा उपाधिद्वयलाभो बोध्यः। ***उष्णादेशे** उष्णक–स्त्रियां टाप्। प्रत्ययस्थादितीत्वम्। उष्णिका इति रूपम्। ***अनुकेति।** कमिता कामुकः। तृन्नन्तमिदम्। तस्मिन्नर्थे अनुकादयो निपात्यन्ते। निपातनविषयान् दर्शयति। अन्वभिभ्याङ्कन्। अभेः पाक्षिको दीर्घश्चेति। निपात्यते इति शेषः।

**१८७१। ब्राह्मणकोष्णिके संज्ञायाम्** ।५।२।७१। आयुधजीविनो ब्राह्मणा यस्मिन्देशे स ब्राह्मणकः। अल्पमन्नं यस्यां सा उष्णिका यवागूः। अन्नशब्दस्य उष्णादेशो निपात्यते॥ **१८७२। शीतोष्णाभ्यां कारिणि** ।५।२।७२। शीतं करोतीति शीतकोऽलसः। उष्णं करोतीति उष्णकः शीघ्रकारी॥ **१८७३। अधिकम्** ।५।२।७३। अध्यारूढशब्दात्कन् उत्तरपदलोपश्च॥ **१८७४। अनुकाभिकाभीकः कमिता** ।५।२।७४। अन्वभिभ्यां कन्। अभेः पाक्षिको दीर्घश्च। अनुकामयते अनुकः। अभिकामयते अभिकः। अभीकः॥

---

अनुक्तार्थत्वात्प्रत्ययार्थः प्रकृत्यर्थ एवेति स्वार्थे एव प्रत्ययः। अनु-अभि-इत्येताभ्यामुपसर्गाभ्यामसमर्थाभ्याम्प्रत्ययासम्भवमाशंङ्क्य क्रियाविशिष्ट-साधनवाचिभ्यामिति तत्त्वबोधिनी। क्रियया विशिष्टं यत्साधनं उपसर्गादिकं विभक्तिप्रत्य-योत्पत्तिम्प्रति अन्वादीनामपि साधनत्वादुपसर्गोऽपि साधनमेव। पूर्वं धातुरुपसर्गेण युज्यते-पश्चात्साधनेनेत्यत्र साधनशब्दस्य प्रत्ययादिरर्थः। एवं क्रियाविशिष्टसाधनम्। अनुकामयते इत्यादिकम् । तद्वाचित्वं नाम तदर्थबोधकत्वम्। क्रियाविशिष्टसाधनस्य योऽर्थः तदर्थबोधकत्वमित्यर्थः। प्रकृते अनुकामयते इत्यस्य अनुकामनमर्थस्तद्बोधकम्पदमन्विति। तस्मात्स्वार्थे कन्। अनु इत्यस्य अत्र अनुकामनमर्थ इति फलितम्। अतस्सामर्थ्यसत्त्वात्तद्धितोत्पत्तिः। क्रियायां यद्विशिष्टं प्रकृष्टसाधनं करणं तद्वाचिभ्य इति यन्मयोक्तः प्रागर्थस्स तत्रैवोपयुज्यते न त्वत्रेति। उभयानुगुण्येन तत्राप्ययमेवार्थो वाच्यः। तथा च विशालमित्यत्र वेर्विस्तरणमर्थः। क्रियाविशिष्टसाधनस्य विस्तीर्यते इत्यस्य तदर्थकत्वात्। न च संदर्भाननुगुण इति वाच्यम् । करणत्वविवक्षायां विस्तरण-करणमित्यर्थस्यापि लाभात्। उचितञ्चेदम्। विस्तीर्यते इति विपूर्वकात् स्तॄधातोः करणे लटि हि रूपम्। तेन करणत्वमपि यका प्रतीयते एवेति-अनु काम्यते अनेन अनुक इति व्युत्पत्त्याश्रयणे तु पूर्वोक्तार्थेऽपि अत्र सङ्गच्छते एव। करणत्वप्रतीतेरिति बोध्यम्। *__अधिकम्।__ निपात्यते इदम्। निपातनविषयमाह अध्यारूढेत्यादिना। प्रत्ययस्तु स्वार्थे एव। उत्तरपदलोपश्चेत्यनन्तरं निपात्यते इति शेषः। उत्तरपदम् आरूढेति तस्य लोपः। यद्यपीदमधिकपदं रूढं तथाऽपि कथञ्चिद्व्युत्पाद्यते। अध्यारूढो नाम उच्चैस्तनः श्रेष्ठ इत्यर्थः। अधिष्ठित इति तु नात्रार्थः। अधिकशब्दात्तदर्थाप्रतीतेः। अत एव कथञ्चिद्व्युत्पाद्यते इत्युक्तम्। अध्यारूढशब्दादवयवार्थद्वारा अधिष्ठितार्थप्रतीतेरौचित्यात्। *__अन्विच्छति।__ अन्वेषणं कुरुते इत्यर्थः। तावतिथमिति प्रथमानिर्देशात्प्रथमासमर्थविभक्तिः. तावतिथमिति पूरणप्रत्ययान्तानां सामान्येन निर्देशः। यद्यपि इथुगन्तस्यैव ग्रहणं तथाऽपि व्याख्यानात्सामान्यग्रहणमिति बोध्यम्। पूरणप्रत्ययान्तात्प्रथमान्तात्स्वार्थे कन्। ग्रहणे वाच्ये।

**१८७५। पार्श्वेनान्विच्छति** ।५।२।७५। अनृजुरुपायः पार्श्वं तेनान्विच्छति पार्श्वकः॥ **१८७६। अयःशूलदण्डाजिनाभ्यां ठक्ठञौ** ।५।२।७६। तीक्ष्ण उपायोऽयःशूलं तेनान्विच्छति आयःशूलिकः-साहसिकः। दण्डाजिनं दम्भः, तेनान्विच्छति दाण्डाजिनिकः॥ **१८७७। तावतिथं ग्रहणमिति लुग्वा** ।५।२।७७। कन् स्यात्पूरणप्रत्ययस्य च लुग्वा। द्वितीयकं द्विकं वा ग्रहणं देवदत्तस्य। द्वितीयेन रूपेण ग्रहणमित्यर्थः॥ **तावतिथेन गृह्णातीति कन्वक्तव्यो नित्यं च लुक्॥** षष्ठेन रूपेण गृह्णाति षट्को देवदत्तः। पञ्चकः॥

---

द्वितीयमेव द्वितीयकं द्विकं वा ग्रहणम्। प्रथमो यज्ञदत्तो द्वितीयो देवदत्त इति द्वितीयेन रूपेण द्वितीयत्वेनेत्यर्थः। देवदत्तस्य ग्रहणं द्वितीयकं द्विकमिति चोच्यते। द्वितीयेन रूपेण गृह्णातीति विग्रहे तु द्विक इत्येव। तावतिथेनेति वक्ष्यमाणत्वाद्वार्तिकस्य। अपि च प्रथमो यज्ञदत्तो द्वितीयो देवदत्त इति यो गृह्णाति वदतीति यावत्। स विष्णुमित्रो द्विक इत्युच्यते। द्वितीयेन रूपेण देवदत्तं गृह्णाति विष्णुमित्र इति व्युत्पत्तेः। द्वितीयेन रूपेण यं गृह्णाति विष्णुमित्रस्स तु द्विक इति न भवति गृह्णातेः कर्तर्येव प्रत्ययः न तु कर्मणीति तावतिथेन गृह्णातीति सूत्रस्थगृह्णाति पदेन बोधितत्वात्। (शेषात्कर्तरि परस्मैपदमिति परस्मैपदस्य कर्त्रर्थत्वादिति भावः। गृह्णातीति तिङन्तं परस्मैपदम्) एतेन गृह्णातेः कर्तरि वाच्ये तावतिथेनेति वार्तिकेन पूरणप्रत्ययान्तात्कन्। धात्वर्थमात्रे ग्रहणे वाच्ये सूत्रेण कन् - इति सिद्धम्। पूरणप्रत्ययान्तात्प्रथमान्ताद्ग्रहणे वाच्ये स्वार्थे कन् इति सूत्रार्थः। पूरणान्तात् तृतीयान्तात् गृहीतरि कन्निति वार्तिकार्थः। प्रत्ययार्थ एव गृहीतः। ग्रहणन्तु न प्रत्ययार्थः। किन्तु पूरणान्तस्य विशेष्यभूतम्। अत एव ग्रहणोपाधिकादित्युक्तं कैयटेन ग्रहणम्प्रत्युपाधिभूताद्विशेषणभूतादित्यर्थः। द्वितीयं ग्रहणमित्यग्रहणं हि विशेष्यम्। द्वितीयन्तु विशेषणम्। षष्ठेन रूपेण गृह्णातीत्यनन्तरं यज्ञदत्तमिति शेषः। षट्को देवदत्तः। यज्ञदत्तं षष्ठं जानाति देवदत्त इत्यर्थः। षट्क इत्यत्र षट्कतिपयचतुरान्थुक् इति पूरणस्य थुको लुक्। पञ्चक इत्यत्र समटो डटो लुक् पञ्चमेन रूपेण गृह्णाति विष्णुमित्रं यज्ञदत्तः। पञ्चकः पञ्चन् क इति स्थिते नलोपः प्रातिपदिकान्तस्येति नलोपः. ग्रहणमित्यर्थे तु पञ्चमकं पञ्चकम् इति रूपद्वयं बोध्यम्। ***स इति*** प्रथमान्ताद्ग्रामणीरित्युपाधिमतः। एषामिति षष्ठ्यर्थे कन्। एषामिति बहुवचननिर्देशात्। षष्ठ्यर्थस्य बहुत्वे एव प्रत्ययः। तेन देवदत्तो मुख्योऽस्य अनयोर्वा इति विग्रहे देवदत्तकः देवदत्तकौ इति न भवति। अन्यथा लाघवात्सोऽस्य ग्रामणीरित्येव निर्दिशेत् - एषामिति निर्धारणे षष्ठी। ग्रामणीरिति पदस्यार्थ मुख्य इति। ***शृङ्खलमिति।*** शृङ्खलशब्दात् निर्देशादेव प्रथमान्तात् बन्धनत्वोपाधिकात् अस्येति षष्ठ्यर्थे कन्। प्रकृतिप्रत्ययसमुदायेन करभे वाच्ये सतीत्यर्थः। शृङ्खलं निगळः।

**१८७८। स एषां ग्रामणीः** ।५।२।७८। देवदत्तो मुख्यो येषां ते देवदत्तकाः। त्वत्काः। मत्काः॥ **१८७९। शृङ्खलमस्य बन्धनं करभे** ।५।२।७९। शृङ्खलकः करभः॥ **१८८०। उत्क उन्मनाः** ।५।२।८०। उद्गतमनस्कवृत्तेरुच्छब्दात्स्वार्थे कन्। उत्कः उत्कण्ठितः॥ **१८८१। कालप्रयोजनाद्रोगे** ।५।२।८१। कालवचनात्प्रयोजनवचनाच्च कन् स्याद्रोगे। द्वितीयेऽहनि भवो द्वितीयको ज्वरः। प्रयोजनं कारणं रोगस्य फलं वा। विषपुष्पैर्जनितो विषपुष्पकः। उष्णं कार्यमस्य उष्णकः। रोगे किम्। द्वितीयो दिवसोऽस्य॥ **१८८२। तदस्मिन्नन्नं प्राये संज्ञायाम्** ।५।२।८२। प्रथमान्तात्सप्तम्यर्थे कन् स्यात् यत्प्रथमान्तमन्नं चेत्प्रायविषयं तत्। गुडापूपाः। प्रायेणान्नमस्यां गुडापूपिका पौर्णमासी॥ **वटकेभ्य इनिर्वाच्यः**॥ वटकिनी॥

---

गळबन्धनरज्जुरित्यर्थः। अस्येति षष्ठ्यन्तार्थो यदि करभस्तर्हि कन् इति वा। अस्य करभस्य शृङ्खलं बन्धनं भवतीति करभश्शृङ्खलक इत्युच्यते। ***उत्केति**। उत्कः उन्मनाः इति छेदः। कन्नन्तोयं निपात्यते प्रकृतिप्रत्ययसमुदायेन उन्मनाश्चेदभिधीयते इत्यर्थः। निपातनविषयमाह उच्छब्दात्स्वार्थे कन्निति उच्छब्दोऽयं क्रियाविशिष्टसाधनवाची। तदेतदाह। उन्मनस्कवृत्तेरिति उत्सुकम्मनः यस्य स उन्मनाः। कपि उन्मनस्कः। तत्र तदर्थबोधकत्वे वृत्तिर्वर्तनं यस्य तस्य–उन्मनस्कार्थबोधकस्येत्यर्थः। एतेन उदित्यस्य उन्मनस्क इत्यर्थ इति लब्धम्। उदेव उत्क इति वृत्तिः (उदेवेत्यस्य उन्मना एवेत्यर्थः)। उत्कपदार्थमाह उत्कण्ठित इति। सञ्जातोत्कण्ठ इत्यर्थः। ***कालेति**। कालप्रयोजनाभ्यां न स्वरूपग्रहणम् किन्तु विशेषाणामेव । कालप्रयोजनयोस्समाहारः कालप्रयोजनन्तस्मात् प्रकृतिप्रत्ययसमुदायेन रोगे चेद्वाच्ये इत्यर्थः। उष्णङ्कार्यम्फलमस्य उष्णकः। उष्णजनक इत्यर्थः। यद्यप्यस्मिन्सूत्रे समर्थविभक्तयो न दर्शितास्तथापि अर्थानुगुण्येन ता ऊह्या इत्याह। द्वितीये भवः। विषपुष्पैर्जनितः। उष्णं कार्यमस्येति। ***यत्प्रथमान्तम्**। तच्चेत्प्रायविषयमन्नं भवतीत्यन्वयः। अन्नमदनीयम्। यत्प्रथमान्तमन्नम्। तच्चेत्प्रायविषयमिति वा। प्रायोऽर्थस्य विषयः प्रायविषयः। प्राय इत्यस्य क्वचिदित्यर्थः। बाहुळ्येनेति वा। गुडसम्मिश्रा अपूपा गुडापूपाः। तान् हि पौर्णमास्यां व्रतिनः प्रायेण अदन्ति इति हेतोः सा पौर्णमासी। गुडापूपिकेत्युच्यते। गूडापूपिकेति आद्यचो दीर्घपाठस्तु प्रामादिकः। वटका मोदका भक्ष्यविशेषाः प्रायेण अन्नमस्यां वटकिनी। इनि कृते नान्तलक्षणो ङीप् स्त्रियाम्। ***श्रोत्रियम्**। छन्दः अधीते इति छेदः। मोनुस्वारे परसवर्णे श्रोत्रियञ्छन्द इति भवति। क्लीबत्वमविवक्षितम्। छन्दश्शब्दाद्द्वितीयान्तादधीते इत्यर्थे घप्रत्ययः। छन्दसश्श्रोत्रभावश्च

**१८८३। कुल्माषादञ्** ।५।२।८३। कुल्माषाः प्रायेणान्नमस्यां कौल्माषी॥ **१८८४। श्रोत्रियंश्छन्दोऽधीते** ।५।२।८४। श्रोत्रियः। वेत्यनुवृत्तेश्छान्दसः॥ **१८८५। श्राद्धमनेन भुक्तमिनिठनौ** ।५।२।८५। श्राद्धी। श्राद्धिकः॥ **१८८६। पूर्वादिनिः** ।५।२।८६। पूर्वं कृतमनेन पूर्वी॥ **१८८७। सपूर्वाच्च** ।५।२।८७। कृतपूर्वी॥ **१८८८। इष्टादिभ्यश्च** ।५।२।८८। इष्टमनेन इष्टी। अधीती॥ **१८८९। छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि** ।५।२।८९। लोके तु परिपन्थिशब्दो न न्याय्यः॥

---

वा निपात्यते इति सूत्रार्थः। यदा घस्तदैव श्रोत्रादेश इति घाभावपक्षे न श्रोत्रादेशः। तदधीते तद्वेदेति घाभावपक्षे अण्। तदधीते तद्वेदेति प्रकरणेनेदं पठितं वेदितर्यपि श्रोत्रियेति रूपापत्तेः। छन्दो वेदः। ***श्राद्धमिति।** भुक्तोपाधिकात्प्रथमान्ताच्छ्राद्धशब्दात्तृतीयार्थे इनि–ठन् – इत्येतौ प्रत्ययौ। श्राद्धमनेन भुक्तमित्येव विग्रहः। ठनि – ठस्येकादेशः। यस्येति लोपः। श्राद्धिकः। भुक्तमिति वर्तमाने क्तः। तेन भूतार्थे भविष्यति वा न प्रत्ययौ। तेन श्राद्धमनेन भुज्यते इत्यर्थे एव श्राद्धी श्राद्धिक इति। अनेन भोक्ष्यते अभुङ्क्त वेत्यर्थे न प्रत्ययोत्पत्तिरिति बोध्यम्। ***पूर्वादिति** पूर्वसूत्रादिनिमनुवर्त्य यद्यप्यत्रेनिग्रहणं त्यक्तुं शक्यन्तथापि ठनोऽप्यनुवृत्तिस्स्यात्। तत्र तयोर्द्वयोस्सम्बद्धत्वादित्याशङ्क्य कृतमिहेनिग्रहणम्। अनेनेत्यनुवर्तते। तृतीयासामर्थ्यात्समर्थविभक्तिरिह प्रथमैव। पूर्वसूत्रे तृतीयार्थे प्रथमाया विहितत्वादत्रापीति प्रथमान्तात्पूर्वशब्दात्कृताद्युपाधिकात्तृतीयार्थे इनिः। पूर्वमनेन भुक्तमिति विग्रहेऽपि पूर्वी इति भवत्येव। क्रियाविशेषस्येहानुक्तत्वात्। अत एव कृतोपाधिकादिति नोक्तम्। किन्तु कृताद्युपाधिकादिति। ***स पूर्वाच्च।** विद्यमानपूर्वो यः पूर्वशब्दस्तस्मात् तृतीयार्थे इनिः। कृतश्चासौ पूर्वश्च कृतपूर्वः। पूर्वं कृतः कृतपूर्व इति वा भूतपूर्व इतिवत्। कृतपूर्वऽनेन कृतपूर्वी–पूर्वमनेन कृतमित्यर्थः। पूर्वं पूर्वकाले। क्रियाविशेषणं वा। पूर्वं यथा तथा इत्यर्थः। तदन्तविध्यभावादुपन्यस्तमिदं सूत्रम्। ***इष्टेति।** प्रथमान्तेभ्य इष्टादिभ्यस्तृतीयार्थे इनिः। यजतेः कर्मणि क्तः इष्टम् । भावे वा क्तप्रत्ययः। इष्टी। यज्वा इत्यर्थः। अधीतमनेनेत्यधीती – अध्येता इत्यर्थः। ***छन्दसीति।** पर्यवस्थातरि वाच्ये सति परिपन्थी – परिपरी इत्येतौ इन्नन्तौ निपात्येते वेदे। परि परिन् शब्दो यद्यपि भाषायां न प्रतियुज्यते तथापि परिपन्धिन्शब्दः प्रयुज्यते एवेति तस्य का गतिरित्यत आह न न्याय्य इति। न्यायसिद्धो न भवतीत्यर्थः। ***साक्षदिति।** साक्षाच्छब्दाद्द्रष्टरि इनिप्रत्ययस्स्यात् – प्रकृतिप्रत्ययसमुदायेन संज्ञायां वाच्यायामित्यर्थः। साक्षादित्यव्ययम्। प्रत्यक्षेणेत्यर्थे वर्तते। साक्षात्प्रत्यक्षेण द्रष्टा पश्यतीति साक्षी। संज्ञेयम्। साक्ष्यवादिनः (साक्षिणो भावः कर्म वा साक्ष्यम् ब्राह्मणादित्वात् ष्यञ्) ननु साक्षी चेता निर्गुणः केवलोऽयमिति साक्षीति शब्दः कथं केवलात्मनि प्रयुज्यते। तस्य असाक्ष्यवादित्वादिति चेत्–आर्ष एवायं प्रयोगः। यद्वा–आत्मनोऽपि संज्ञेयम्। इन्द्रियविषयादिसम्बन्धाभावेप्यात्मनः द्रष्टृत्वमुपपद्यते एव।

**१८९०। अनुपद्यन्वेष्टा** ।५।२।९०। अनुपदमन्वेष्टा अनुपदी गवाम्॥ **१८९१। साक्षाद्द्रष्टरि संज्ञायाम्।** ।५।२।९१। साक्षाद्द्रष्टा साक्षी॥ **१८९२। क्षेत्रियच् परक्षेत्रे चिकित्स्यः** ।५।२।९२। क्षेत्रियो व्याधिः शरीरान्तरे चिकित्स्यः। अप्रतीकार्य इत्यर्थः ॥ **१८९३। इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** ।५।२।९३। इन्द्र आत्मा तस्य लिङ्गं करणेन कर्तुरनुमानात्। इतिशब्दः प्रकारार्थः। इन्द्रेण दुर्जयमिन्द्रियम्॥

---

द्रष्टृत्वं दर्शनं ज्ञानमनुभव इति द्रष्टृत्वस्यानुभवरूत्वादात्माप्यनुभव एवेति स्वयम्प्रकाशत्वात् स्वेनैवानुभूयते–सर्वमिदं स्वयञ्चेति साक्षात्प्रत्यक्षेण द्रष्टा सर्वमिदमनुभवति साक्षात्करोतीति साक्षाद्द्रष्टृत्वमात्मन्युपपन्नमेव। अतस्साक्षीत्यात्मनोऽपि संज्ञाशब्द इत्यविवादः। ***क्षेत्रियजिति।** चकारस्स्वरार्थः। यस्मिन् क्षेत्रे व्याधिरुत्पन्नः तच्छरीरे स व्याधिर्न चिकित्स्यते किन्तु तस्मादन्यस्मिन्नेव। रोगी मृतो भूत्वा पुनश्शरीरान्तरं गच्छति यदा तदा तस्मिन्शरीरान्तरे एव स व्याधिश्चिकित्स्यते इति। रोगिणि मृते सति रोगो याति न त्वन्यथेति व्याधेरप्रतीकार्यत्वं सिद्धमिति भावं वदति अप्रतीकार्य इत्यर्थ इति। ***इन्द्रियमिति।** इन्द्रलिङ्गमिन्द्रदृष्टमित्यादिषु इन्द्रियमिति निपात्यते। इन्द्रशब्दात् षष्ठचन्ताल्लिङ्गे तृतीयान्ताद्दृष्टादिषु च घप्रत्ययो निपातितः। संज्ञायामित्यत्रानुवर्तते। इन्द्रियमिति चक्षुरादेरिन्द्रियस्य संज्ञा। तेन इन्द्रेण दत्ता शक्तिरिन्द्रियेति न भवति। इन्द्रेण निर्मितं पुरमिन्द्रियमिति च न भवतीति बोध्यम्। इन्द्रियमित्यस्य विग्रहाः इन्द्रलिङ्गमित्यादयः। चक्षुरादेः कथमिन्द्रलिङ्गत्वमत आह इन्द्र आत्मेति। लिङ्गमनुमापकम्। आत्मानमनुमापयतीन्द्रियमिति इन्द्रियस्य इन्द्रलिङ्गत्वम्। अनुमानञ्चेत्थम्। अयमात्मवान् (जीवतीत्यर्थः) रूपादिग्राहकचक्षुरादिमत्त्वात्। यन्नैवं तन्नैवम्। यथा शवः। चक्षुरादिव्यापाराभावाद्धि अयं मृत इति निश्चिनोति जनः। अपि च– आत्मा चक्षुषा रूपं गृह्णातीति रूपग्रहणे कर्ता आत्मा। करणं चक्षुः। इति रूपं ग्राहयिष्यत् सत् चक्षुः गृहीतारमनुमापयति। ग्रहीत्रभावे चक्षुःकरणकग्रहणक्रियाया एवानुदयादिति। इदमेवाह करणेन कर्तुरनुमानादिति। करणमत्र इन्द्रियं कर्ता जीवः। इन्द्रेण आत्मना दृष्टं दृशेर्ज्ञानार्थकात्कर्मणि क्तः। ममेदं चक्षुरिति ज्ञातमित्यर्थः। इन्द्रेण आत्मना सृष्टम्। आत्मन आकाशस्सम्भूत इत्यादिक्रमेण चक्षुरादीनां तत्सृष्टत्वानपायात्। न च ईश्वरेण सृष्टमिति कथमात्मना सृष्टिरत्रोक्तेति वाच्यम्। अभेदात्। इन्द्रेण आत्मना जुष्टं प्रीणितं तत्तद्विषयसम्पादनेनेति इन्द्रजुष्टम्। इन्द्रेण आत्मना दत्तं व्यापारितमिति इन्द्रदत्तम्। (दानं नियोगः। स चेह विषयानुसन्धाने बोध्य इति दत्तं व्यापारितमित्युक्तम्) इदि परमैश्वर्ये इति धातोर्निष्पन्नमिन्द्रपदं परमेशवरमभिधत्ते।

**१८९४। तदस्यास्त्यस्मिन्निति मतुप्** ।५।२।९४। गावोऽस्यास्मिन्वा सन्ति गोमान्॥ **भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥ १८९५। रसादिभ्यश्च** ।५।२।९५। मतुप्। रूपवान्। अन्यमत्वर्थीयनिवृत्त्यर्थं वचनम्। रस, रूप, वर्ण, गन्ध, स्पर्श, शब्द, स्नेह। (ग) **गुणात्**॥ (ग) **एकाचः**॥ स्ववान्। गुणग्रहणं रसादीनां विशेषणम्॥

---

परमेश्वरश्च स्वात्मैवेति आत्मा इन्द्रः इति व्युत्पत्तिपञ्चकम्। (व्युत्पत्तिर्विग्रहः) सूत्रे दर्शितम्। बुद्धिमद्भिरेवमन्येऽपि विग्रहा ऊह्या इति वदति। सूत्रस्थमिति पदमित्याह। इति शब्दः प्रकारार्थ इति। एवमादिविग्रहेषु इन्द्रियमिति निपात्यते इति भावः। तेन सिद्धमाह। इन्द्रेण दुर्जयमिन्द्रियमित्यादयोप्यूह्याः। तदिति तदादिष्वेकत्वमविवक्षितम्। तेन तौ अनयोस्तः। ते एषां सन्ति–ते एषु सन्तीत्यत्रापि मतुप् लभ्यते। सूत्रे वाक्यद्वयम् तदस्तीति मतुपः. वाक्यद्वये काकाक्षिन्यायेन सम्बध्यन्ते। तेन **तदस्यास्तीति** मतुप्। तदस्मिन्नस्तीति मतुप्, इत्यन्वयौ लभ्येते। प्रथमान्तात् अस्तीत्युपाधिमतः षष्ठ्यर्थे सप्तम्यर्थे च मतुप् प्रत्ययस्स्यादिति सूत्रार्थः। गावोऽस्य सन्ति गोमानयं राजा गावोऽस्मिन्सन्ति गोमानयं व्रजः। षष्ठ्या स्वस्वामिभावसम्बन्धः। सप्तम्या आधाराधेयभावरूपसम्बन्धश्च प्रतीयते इति उभयोर्वैलक्षण्यसत्त्वात् षष्ठीसप्तम्यर्थद्वयग्रहणं सूत्रे कृतम्। उगिदचामिति नुमर्थम्मतुप्युकार इत्–पकारस्तु स्वरार्थः ***रसादिभ्यश्च।** पूर्वसूत्रं सर्वमिहानुवर्तते। प्रथमान्तेभ्यो रसादिभ्यः अस्त्युपाधिकेभ्यः। अस्येति अस्मिन्निति चार्थे मतुप् स्यादित्यर्थः। ननु पूर्वसूत्रेणैव रसादिभ्योऽपि मतुप्सिद्धौ किमनेनेति शङ्कायामाह–अन्यमत्वर्थीयनिवृत्त्यर्थमिति रसादिभ्यो मतुबेव यथा स्यात्। तस्मादन्ये ये मत्वर्थे विधीयमानाः प्रत्ययाः अत इनि ठनावित्यादयः। तेषाम्मत्वर्थीयानां निवृत्तिर्यथास्यादित्येतदर्थमिदं सूत्रम्। वचनं सूत्रप्रवचनमित्यर्थः। सूत्रमिति वा। रसादिगणं पठति रसरूपेत्यादिना सूत्रपाठे। स्नेहभावगुणादिति। भावपदमपि पठ्यते। गुणादिति पृथक्पदम्। स्नेहान्तं लुप्तपञ्चमीकम्। रसादीनां समाहारः तस्मात् गुणात् गुणवाचिनः रसादेरित्यन्वयः। रसादीनामदन्तत्वादत इनि ठनोः प्राप्तयोस्तदपवादोऽयं मतुप् – तेन रसी रसिकः इत्यादीनि रूपाण्यप्रमाणानि। गुणशब्दात्तु इनिस्स्यादेव। गुणी रसादीनां विशेषणत्वेनैव गुणशब्दपाठः। न तु रसादित्वेनेत्युक्तत्वात्। इदमेवाह गुणग्रहणम् रसादीनां विशेषणमिति। न तु मतुबर्थं पृथक्तस्य रसादिषु पाठ इति तदाशयः। एकाचः। गणसूत्रमिदम्। एकाच्कादुणादगुणाद्वा मतुबेवेत्यर्थः। तत्रोदाहरति – स्ववान् इति। स्वं धनादिकमस्यास्तीति स्ववान्। अत इनिस्वी इति माभूदित्येतदर्थमिदं गणसूत्रम्। ***तसाविति।** तश्च सश्च तसौ। मतोरिवार्थो यस्य तस्मिन्प्रत्यये परे अर्थात् मतुपि इनि ठनादिके च प्रत्यये परतः – मतोरिवार्थः मतुपोऽपि वर्तते एवेति मतुरपि मत्वर्थ एव।

**१८९६। तसौ मत्वर्थे** ।१।४।१९। तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे। 'वसोः संप्रसारणम् ४३५'। विदुष्मान्॥ **गुणवचनेभ्यो मतुपो लुगिष्टः**॥ शुक्लो गुणोऽस्यास्तीति शुक्लः पटः। कृष्णः॥ **१८९७। मादुपधायाश्च मतोर्वोऽयवादिभ्यः** ।८।२।९। मवर्णावर्णान्तान्मवर्णावर्णोपधाच्च यवादिवर्जितात्परस्य मतोर्मस्य वः स्यात्। किंवान्। ज्ञानवान्। विद्यावान्। लक्ष्मीवान्। यशस्वान्। भास्वान्। यवादेस्तु यवमान्। भूमिमान्॥

---

यचिभमिति सूत्रात् भस्यानुवृत्तिः। वर्णग्रहणे तदन्तविधेः – तसावित्यस्य तान्तसान्तावित्यर्थः। तसयोरकार उच्चारणार्थः। तेन – त् – स् – इत्येतदन्तावित्यर्थः। विद्वांसोऽस्मिन्सन्तीति विदुष्मान् देशः। विद्वांसोऽस्य सन्तीति विदुषष्मान् राजा वा। विद्वस् इति सान्तोयम्। विदेर्वसुरिति वस्वन्तत्वाद्वसोस्सम्प्रसारणमिति वस्वन्तस्य भस्य सम्प्रसारणम्। मतुपि वस्वन्तस्य तसौ मत्वर्थे इत्यनेन भत्वात् – वकारस्थाने उकारः – सम्प्रसारणाच्चेति पूर्वरूपम्। विदुस् – मान् – प्रत्ययावयवत्वात्सस्य षत्वम् विदुष्मान्। ***गुणेति।** गुणमुक्तवन्तो गुणवचनाः – तेन – सम्प्रति द्रव्यवाचित्वेऽपि मतुपो लुक्। तथा च शुक्लः पटोऽस्यास्तीति शुक्लो देवदत्त इति प्रतीतिस्सङ्गच्छते। अत एव गुणगुणिवाचिभ्य एव मतुपो लुगिष्यते, न तु गुणवाचिभ्यः नापि गुणिवाचिभ्य इति तत्त्वबोधिनी। गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वतीत्यमरात्। शुक्लादयो गुणगुणिवचनाः। ***मादिति।** मात्–उपधाया इति छेदः। मतोर्वः। परस्य यद्विहितं तत्तस्यादेर्बोध्यमित्यादेः परस्येति परिभाषायामात्परस्य मतोर्विधीयमानं वत्वमादेर्मकारस्यैव स्यादिति कृत्वा मतोर्मस्य व इत्युक्तम्। मकारस्य वकारादेश इत्यर्थः। मान्तादुदाहरणम्। किंवान् (किम्–वान् इति स्थिते मोऽनुस्वारः) अवर्णान्तादित्यनेन अदन्तात् आदन्ताच्चेति लब्धमिति कृत्वा अदन्तादुदाहरति–ज्ञानवान्। आदन्तादुदाहरति – विद्यावान्। मोपधात्–लक्ष्मीवान्। (लक् ष् म् ई–लक्ष्मी) अदुपधात् – यशस् वान् – आदुपधात् भास्वान्। यवमानित्यत्र अवर्णान्तलक्षणः. भूमिमानित्यत्र मोपधलक्षणश्च वः प्राप्तो न भवति। अवयवादिभ्य इति निषेधात्। ***झयः।** अत्र मतोर्व इत्यनुवर्तते– झय् इति प्रत्याहारः। विद्युतोऽस्य सन्तीति विद्युत्वान्मेघः। विद्युत् वान् इति स्थिते। झलाञ्जशोऽन्त इति जश्त्वं न भवति तसौ मत्वर्थे इति तान्तस्य भत्वात् इत्याह – अपदान्तत्वान्न जश्त्वमिति। ***संज्ञायाम्।** अझयन्तार्थम्। अमादुपधार्थञ्च–अस्यारम्भः। तदेतदाह – मतोर्मस्य वस्स्त्यादिति । मतोर्मस्य वत्वं प्रति संज्ञैव हेतुः। न तु झयन्तत्वादिकमिति भावः। अहयोऽस्यां सन्तीति अहिवती – नायमहिशब्दः मादुपधः। नापि झयन्त इति पूर्वसूत्राभ्यां वत्वाप्राप्तिः। कस्याश्चिन्नद्यास्संज्ञेयम्। ननु कथमत्राहेर्दीर्घ इत्यत्राह शरादीनाञ्चेति। शरादिषु अहिमुनि

**१८९८। झयः** ।८।२।१०। झयन्तान्मतोर्मस्य वः स्यात्। अपदान्तत्वान्न जश्त्वम्। विद्युत्वान्॥ **१८९९। संज्ञायाम्** ।८।२।११। मतोर्मस्य वः स्यात्। अहीवती। मुनीवती। 'शरादीनां च १०४२' इति दीर्घः॥ **१९००। आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती** ।८।२।१२। एते षट् संज्ञायां निपात्यन्ते। आसनशब्दस्यासन्दीभावः। आसन्दीवान् ग्रामः। अन्यत्रासनवान्। अस्थिशब्दस्याष्ठीभावः। अष्ठीवान् नाम ऋषिः। अस्थिमानन्यत्र। चक्रशब्दस्य चक्रीभावः। चक्रीवान्नाम राजा। चक्रवानन्यत्र। कक्ष्यायाः संप्रसारणम्। कक्षीवान्नाम ऋषिः। कक्ष्यावानन्यत्र। लवणशब्दस्य रुमण्भावः। रुमण्वान्नाम पर्वतः। लवणवानन्यत्र। चर्मणो नलोपाभावो णत्वं च। चर्मण्वती नाम नदी। चर्मवत्यन्यत्र॥ **१९०१। उदन्वानुदधौ च** ।८।२।१३। उदकस्य उदन्भावो मतौ उदधौ संज्ञायां च। उदन्वान् समुद्रः ऋषिश्च॥

---

इत्यादयः पठिता इति भावः। ***आसन्दीवदिति।** संज्ञायामित्यत्रानुवर्तते। आदेशादिकार्यादर्शनान्निपात्यन्ते इत्युक्तम्। आसन्दीवदित्यारभ्य रुमण्वदित्यन्तं द्वन्द्वस्समाहारः। चर्मण्वती इति पृथक्पदम्। अन्यथा चर्मण्वत्यन्तसमाहारे चर्मण्वतीति स्त्र्यन्तत्वस्य दुर्घटत्वात्। यद्वा चर्मण्वतीति सौत्रं स्त्रीत्वमित्युक्त्वा चर्मण्वत्त्वन्तसमाहारो वाच्यः। आसनमस्मिन्नस्तीति विग्रहे मतुपि कृते – आसन – मत् – अदन्तत्वान्मतोर्वत्वम् । आसन – वत् – आसनशब्दस्य आसन्दी इतीदन्तआदेशो निपात्यते। आसन्दीवत्। नुमागमे उपधादीर्घे संयोगान्तलोपे – आसन्दीवान् – कस्य चिद्ग्रामस्य संज्ञेयम्। अष्ठीवान्पर्वतः। नलोपाभावः। तान्तसान्तयोरेव मत्वर्थे भत्वस्योक्तत्वेन चर्मन् इति नान्तस्य मतुपि अभत्वात् – नलोपः प्रातिपदिकान्तस्येति नलोपः प्राप्नोति। निपातनात्तदभावः। णत्वञ्च निपात्यते इति शेषः। पदान्तस्येति नस्य णत्वनिषेधात् – णत्वस्यापि निपातनम्। उगितश्चेति ङीप्। चर्मण्वती। चर्माणि अस्यां सन्तीति विग्रहः। **उदन्वानिति।** उदधौ वाच्ये उदन्वानिति निपात्यते, चात्संज्ञायां वाच्यायामपि उदकमस्मिन्नस्तीत्युदन्वान्। मत्वर्थे उदकस्योदन् इत्ययमादेशः। संज्ञायान्तु नावयवार्थप्रतीतिः। रूढत्वात्। अत एव उदधिग्रहणम्। अन्यथा उदन्वांश्च इत्येव सूत्रयित्वा संज्ञायामुदन्वानिति निपात्यते इति वक्तुं शक्यम्। समुद्रस्यापि ऋषेरिव उदधिरिति संज्ञेति। तस्मात् योगेन समुद्रे, रूढ्या ऋषौ च उदन्वानिति यथा स्यात्तदर्थमुदधौ चेति उदधिसंज्ञयोर्ग्रहणम्। वस्तुतस्तु संज्ञाशब्दानां रूढानामव्युत्पन्नत्वेन डित्थादिवत् संज्ञापकर्षणार्थश्चकारोऽत्र न कर्तव्य एव। यद्वा – उदन्वानित्येवालम्। संज्ञायामित्यनुवर्तते। अवयवार्थपुरस्कारेण उदधेरुदन्वानिति संज्ञा। ऋषेस्तु रूढ्या इति उभयं सिद्ध्यतीति। ***राजन्वानिति।** शोभनो राजा यस्य स सुराजः। तस्य भावस्सौराज्यम्। ब्राह्मणादित्वात् ष्यञ्। सौराज्ये वाच्ये राजन्वानिति निपात्यते।

**१९०२। राजन्वान् सौराज्ये** ।८।२।१४। राजन्वती भूः। राजवानन्यत्र॥ **१९०३। प्राणिस्थादातो लजन्यतरस्याम्** ।५।२।९६। चूडालः। चूडावान्। प्राणिस्थात्किम्। शिखावान्दीपः। आतः किम्। हस्तवान्। प्राण्यङ्गादेव। नेह। मेधावान्। प्रत्ययस्वरेणैव सिद्धे अन्तोदात्तत्वे चूडालोऽसीत्यादौ 'स्वरितो वानुदात्ते पदादौ ३६५९' इति स्वरितबाधनार्थश्चकारः॥

---

नलोपः प्रातिपदिकान्तस्येति नलोपे प्राप्ते तदभावाय निपातनमिदम्। सौराज्यमिति भावप्रत्ययान्तं यद्यपि निर्दिष्टं तथापि तद्वत्येव निपातनम्। (तत्सौराज्यमस्यास्तीति तद्वान् सौराज्यवान् तस्मिन् तद्वति) यद्वा सुराजेति पदस्य योऽर्थः सौराज्यम् तस्मिन् राजन्वानिति निपात्यते इत्यर्थात्सुराजे एवाभिधेये निपातनम्। (शोभनो राजा यस्य तस्मिन् सुराजे) प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति स्त्रियामपि निपातनमिदमिति दर्शयितुमुदाहरति – राजन्वती इति। सुराजा – प्रशस्तराजका इति यावत्। "राजन्वतीमाहुरनेन भूमिमि"ति काळिदासः। राजवानन्यत्र। राजा अस्यास्तीति राजवान् लोकः। ननु भूमनिन्दाप्रशंसास्विति प्रशंसायां मतुपि नलोपाभावे राजन्वानिति स्यान्नाम कथं राजवानिति। प्रशंसाया अविवक्षया मतुप एवानुदयात्। विवक्षायान्तु सौराज्यार्थबोधसम्भवान्नलोपो न स्यादेवेति चेन्मैवम्। निन्दायामेव तत्र मतुप्। यद्वा–संसर्गे इति। राजसम्बन्धवानित्यर्थः। प्रशंसायां विषये यो मतुप् तस्मिन्परे एव राजनो नलोपः न त्वन्यत्रेति सूत्रस्य फलितार्थकथनम्। ***प्राणिस्थादिति।** प्राणिनि तिष्ठतीति प्राणिस्थम्। तद्वाचिनः प्राणिस्थात् (अर्थात्प्रत्ययासम्भवेन हेतुना प्राणिस्थशब्दात्तद्वाची गृह्यते) आतः आकारान्तात् शब्दात् मत्वर्थे लच्प्रत्ययो वा स्यादित्यर्थः। चूडा शिखा प्राणिस्थेयम्। तद्वान् चूडालः। एवं जटालः – तथा च मुरारिः – "ज्वालाजालजटालजाङ्गलतटीनिष्कूजकोयष्टयः।" शिखा ज्वाला तद्वान् शिखावान्। दीपस्य अप्राणित्वात्तत्स्थवाची अयं शिखाशब्द इति न तस्मात् लच्। चूडापर्यायाच्छिखाशब्दात्तु व्रीह्यादित्वादिनिः। शिखी। संज्ञायान्तु वलच्। शिखावलः। मतुपोऽपवादो लच्। लचोऽपवादो वलच् इति बोध्यम्। यत्प्राणिस्थं तत्प्राण्यङ्गमेव यदि भवति तर्ह्येव तस्माल्लच् इति मेधा यद्यपि प्राणिस्थाप्राणिधर्मत्वान्मेधायाः तथापि न सा प्राण्यङ्गम्। मूर्तिमतः करचरणादेरेव प्राण्यङ्गत्वव्यवहारात्। ननु लचश्चित्वेन किम्फलम्? न च अन्तोदात्वं फलम्। (चित इति सूत्रेण तद्विधानात्) इति वाच्यम्। प्रत्ययस्वरेणैवान्तोदात्तत्वस्य सिद्धत्वात् इति शङ्कायामाह – स्वरितबाधनार्थश्चकार इति। ***न तु प्रत्ययविकल्पार्थम्।** लच्प्रत्ययो विकल्पेन यथास्यात्तदर्थन्नेत्यर्थः। लजभावपक्षे अकारान्तेभ्य इनिठनोरपि प्राप्ते सम्भवादिति भावः। तेन – लज्वास्यादित्यस्य लजपि स्यादित्यर्थः। अपिस्समुच्चये प्रसिद्ध एव। समुच्चयश्च प्रकृतस्य मतुप एवेति बोध्यम्। तस्मात् चूडावान् इति आदन्ताद्यथा लजभावपक्षे मतुप् – तथा सिध्मवान् इति अदन्तादपि लजभावपक्षे मतुबेव। ***ऊङ्**

**१९०४। सिध्मादिभ्यश्च** ।५।२।९७। लज्वा स्यात्। सिध्मलः। सिध्मवान्। अन्यतरस्यां ग्रहणं मतुप्समुच्चयार्थं नतु प्रत्ययविकल्पार्थम्। तेनाकारान्तेभ्य इनिठनौ न॥ (ग) **वातदन्तबलललाटानामूङ् च॥** वातूलः॥ **१९०५। वत्सांसाभ्यां कामबले** ।५।२।९८। आभ्यां लज्वा स्याद्यथासंख्यं कामवति बलवति चार्थे। वत्सलः। अंसलः॥ **१९०६। फेनादिलच्च** ।५।२।९९। चाल्लच्। अन्यतरस्यांग्रहणं मतुप्समुच्चयार्थमनुवर्तते। फेनिलः। फेनलः फेनवान्॥ **१९०७। लोमादिपामादिपिच्छादिभ्यः शनेलचः** ।५।२।१००। लोमादिभ्यः शः। लोमशः। लोमवान्। रोमशः। रोमवान्। पामादिभ्यो नः। पामनः॥ (ग) **अङ्गात्कल्याणे**॥ अङ्गना॥

---

च। चाल्लच्। लच्सन्नियोगे एवायमूङ् तेन वातवानिति सिद्ध्यति। ऊङ् इत्ययमादेशः। ङित्त्वादन्त्यस्य प्रकृतेरेवायमादेशः। न तु प्रत्ययस्य। वातल ऊङ् - तकारोपर्यकारस्य वातूलः। दन्ता अस्य सन्तीति दन्तूलः। निन्दितदन्तः। बहुलदन्तो वेत्यर्थः। बलमस्यास्तीति बलालः प्रशस्तबल इत्यर्थः। ललाटमस्यास्तीति ललाटूलः। प्रशस्तललाटः। ***वत्सेति।** कामोऽस्यास्तीति कामः। बलमस्यास्तीति बलः। कामे कामवति, बले बलवति च वाच्ये सति वत्सांसाभ्यां लज्वा स्यात्। यद्वा - कामे - इच्छायाम्। बले च वर्तमानाभ्यान्तदर्थबोधकाभ्यामित्यर्थः। वत्सांसाभ्यां मत्वर्थे लज्वा स्यात्। न च वत्सांसयोः कामबलवाचकत्वे प्रमाणाभावशशङ्क्यः। सूत्रस्यैव प्रामाण्यात्। *लोमादीति। लोमादिः। पामादिः। पिच्छादिः। इति गणत्रयम्। शः - नः - इलच् - इति प्रत्ययत्रयम्। श - न - इत्यदन्तौ। पिच्छादेरिलच्-पिच्छलः। यद्यपि पामन इत्यस्य समनन्तरं पिच्छादिभ्य इलच् पिच्छिलः। पिच्छवानित्युदाहर्तव्ये विषुण इत्यनन्तरमेतदुदाहरणमन्याय्यन्तथापि पामादिगणान्तर्गणसूत्राण्यङ्गात्कल्याणे इत्यादीन्युदाहृत्य पिच्छादिगणोदाहरणं सुसङ्गतमेवेति बोध्यम्। ***अङ्गादिति।** कल्याणोपाधिकादङ्गान्मत्वर्थेन प्रत्ययस्स्यात्। अदन्तत्वाट्टाप्। कल्याणमङ्गमस्या अस्तीति। अङ्गना स्त्री। ***लक्ष्म्या** अच्च। गणसूत्रमिदम्। लक्ष्म्या अदादेशस्स्यात्। चान्न प्रत्ययः लक्ष्मीरस्यास्तीति विग्रहः। लक्षीन - अदादेशः अलोऽन्त्यस्येति षष्ठीनिर्दिष्टस्यान्त्यस्यालः अकारादेशः। लक्ष्मन - रषाभ्यामिति नस्य णत्वम्। (कषयोस्संश्लेष एव क्ष्वर्णः। क्- ष् - अ - क्ष - इति षात्परत्वं नस्य-अट्कुप्वाङ्नुम्व्यवायेपीति षनयोर्मध्ये अकारेण व्यवधाने सत्यपि णत्वम्।) लक्ष्मणः। ***प्रज्ञेति।** प्रज्ञादिभ्यस्त्रिभ्यः मत्वर्थे णप्रत्ययः। चुटू इति ण् इत्। अ इति शिष्यते। णित्त्वादादिवृद्धिः। प्रज्ञा अस्यास्तिति प्राज्ञः। प्रज्ञामेधासंविदादयः पर्यायाः। प्रकरेण जानाति यया पुमान् सर्वं सा प्रज्ञा। आत्मनः कर्तुर्बुद्धिर्हि करणम्। प्राज्ञो व्याकरणम्। व्याकरणकर्मकप्रकृष्टज्ञानकरणीभूतप्रज्ञावानित्यर्थः।

(ग) **लक्ष्म्या अच्च** ॥ लक्ष्मणः ॥ **विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः** ॥ विषुणः । पिच्छादिभ्य इलच् । पिच्छिलः । पिच्छवान् । उरसिलः । उरस्वान् ॥ **१९०८। प्रज्ञाश्रद्धार्चाभ्यो णः** ।५ ।२ ।१०१ । प्राज्ञो व्याकरणे । प्राज्ञा । श्राद्धः । आर्चः ॥ वृतेश्च ॥ वार्तः ॥ **१९०९। तपःसहस्राभ्यां विनीनी** ।५ ।२ ।१०२ । विनीन्योरिकारो नकारपरित्राणार्थः । तपस्वी । सहस्री । असन्तत्वाददन्तत्वाच्च सिद्धे पुनर्वचनमणा बाधा माभूदिति । सहस्रात्तु ठनोऽपि बाधनार्थम् ।

---

(व्याकरणकर्मकं यत्प्रकृष्टज्ञानं तत्र करणीभूताया प्रज्ञा तद्वान्) व्याकरणकर्मका या प्रकृष्टा जानाति क्रिया तत्र करणीभूता या प्रज्ञा तद्वानित्यर्थ इति वा। व्याकरणं प्रकर्षेण जानातीति फलितार्थः। श्रद्धा अस्यास्तीति श्राद्धः। श्रद्धा अस्मिन्नस्तीति श्राद्धं पित्र्यं कर्म। अर्चा पूजा। अस्यास्तीति आर्चः। ***वृतेश्च** णो वाच्यः। मत्वर्थे इत्यर्थः। वृत्तिरस्यास्तीति वार्तः णित्त्वादादिवृद्धिरार्

***तप इति।** यथासंख्यं विनीनीस्तोमत्वर्थे – विनिश्च इनिश्च विनीनी। ननु विनिनौ इत्येव पठ्यताम्–लाघवात्। किमिदन्तनिर्देशेनेत्यत आह नकारपरित्राणार्थ इति। नकारपरित्राणमेवार्थः फलं यस्य स इत्यर्थः। इकाराभावे हलन्त्यमिति। नकारस्य इत्संज्ञायान्तस्य लोप इति लोपस्स्यात्। इकारे कृते तु नस्य अन्त्यत्वाभावान्नेत्त्वमिति नलोपप्रसङ्ग इति भावः। ननु अस्मायामेधास्रजोविनिरिति असन्तत्वात्तपसो विनिः। अत इनि ठनाविति अदन्तत्वात्सहस्रादिनिश्च सिध्यत्येवेति व्यर्थमिदं सूत्रमत आह–अणा बाधा माभूदिति। अण्चेति वक्ष्यमाणसूत्रेण तपस्सहस्राभ्यामण्विधीयते। तदर्थं तपस्सहस्राभ्यामित्यावश्यकम्। विनीनी – चकारञ्च त्यक्त्वा तपस्सहस्राभ्यामण् इति सूत्रयितव्यम्। विनीन्योः प्रकारान्तरेणैव लाभात्। इदञ्च तपस्सहस्राभ्यामण् इति सूत्रम् प्रतिपदोक्तत्वेन विशेषविहितमिति असन्तत्वप्रयुक्तं विनिम् अदन्तत्वप्रयुक्तं ठनञ्च अपवादाद्बाधते एव। तेन तपस्सहस्राभ्यामणेव स्यात् न तु विनीनी इति। पृथग्विनीनीग्रहणम्। कृते च विनीनीग्रहणे विधानसामर्थ्यादेव नाणाविनीन्योर्बाध इति बोध्यम्। (सिद्धे सत्यारभ्यमाणस्य बलवत्त्वादणोऽपि बाधकावेव विनीनी भवत इति भावः)। ननु तपस्सहस्राभ्यामण्च इति सूत्रयित्वा आभ्यामण् स्यात् चाद्यथाप्राप्तमित्यर्थे सति विनीनी अपि भवत एवेति विनीन्योर्वैयर्थ्यन्तदवस्थमिति मत्वा फलान्तरं वदति – सहस्रात्तु ठनोऽपि बाधनार्थमिति। अत इनि ठनाविति। सहस्रशब्दात् इनिवत् ठनपि प्राप्नोत्येव। तेन चाद्यथाप्राप्तमिति पक्षे सहस्रात् ठनपि स्यात्। न तु स इष्यते। तथा च सहस्रादिनिविधिरावश्यकः। कृते त्विनौ विशेषविहितत्वेन अपवादत्वान्नात इनि ठन्सूत्रस्य प्राप्तिरिति न ठनः प्रसक्तिरिति बोध्यम्। यदा तु सहस्रादिनिविधिरावश्यकः तदा तपस्सहस्राभ्यामणिनी च इति सूत्रिते यथासंख्येन तपसोऽण् सहस्रादिनिरिति स्यात् यदि

**१९१०। अण् च** ।५।२।१०३। योगविभाग उत्तरार्थः। तापसः। साहस्रः॥ **ज्योत्स्नादिभ्य उपसंख्यानम्**॥ ज्यौत्स्नः। तामिस्रः॥ **१९११। सिकताशर्कराभ्यां च** ।५।२।१०४ सैकतो घटः। शार्करः॥ **१९१२। देशे लुबिलचौ च** ।५।२।१०५। चादण् मतुप् च। सिकताः सन्त्यस्मिन्देशे सिकताः। सिकतिलः। सैकतः। सिकतावान्। एवं शर्करा इत्यादि॥ **१९१३। दन्त उन्नत उरच्** ।५।२।१०६। उन्नता दन्ताः सन्त्यस्य दन्तुरः॥ **१९१४। ऊषसुषिमुष्कमधोरः** ।५।२।१०७। ऊषरः। सुषिरः। मुष्कोऽण्डः, मुष्करः। मधु माधुर्यम्, मधुरः॥

---

तु तपस्सहस्राभ्यामिनिः अण्चेति योगो विभज्यते, तदा तपसोऽपीनिस्स्यात्। विशेषविहितत्वेन असन्तलक्षणविनेरपवादत्वाद्विनिर्न स्यादेवा तस्मात् – तपस्सहस्राभ्यां विनीनी इति यथोक्तं सूत्रमनवद्यमिति भावः। ***अण्च** – ननु तपस्सहस्राभ्यां विनीनी अण्च इत्येकमेव सूत्रं कर्तव्यम्। कोऽर्थो योगविभागेन। अनुवृत्तिक्लेशाभावश्च गुण इति मत्वा वदति। योगविभाग उत्तरार्थ इति। सिकतादेरणेव यथा स्यान्न तु विनीनी इत्येतदर्थं पृथक्सूत्रकरणमिति भावः। अस्मिन्सूत्रे तपस्सहस्राभ्यामित्यनुवर्तते। अण् विनीन्योर्बाधको माभूदिति चकारः। समुच्चयार्थक इति भावः ***देशे इति।** सिकताशर्कराभ्यामित्यत्रानुवर्तते। आभ्यां मत्वर्थे लुबिलचौ स्तः देशे वाच्ये इत्यर्थः। चकारेण अण्मतुपौ समुच्चीयेते। तथा च लुबिलजण्मतुपाञ्चतुर्णां समुच्चय इति। रूपचतुष्टयमुदाहरति। सिकता – मत्वर्थीयस्य इलजाद्यन्यतमस्य लुपि रूपमिदम्। पूर्वसूत्रप्राप्तस्य अण एव लुप् न तु इलजादेरिति वचने तु मत्वर्थीयस्य अणो लुपि सिकतेति रूपमिति बोध्यम्। इलचि सिकतिलः। यस्येति चेत्यालोपः। अणि सैकतः। मतुपि सिकतावान् – शर्करेत्यादि। शर्करिलः – शार्करः – शर्करावान् इति। ***दन्त इति।** दन्त – उन्नत– इति लुप्तपञ्चमीके पदे। उन्नतोपाधिकाद्दन्तशब्दान्मत्वर्थे उरच्प्रत्ययः। मतुपोऽपवादः। ***ऊषसुषिमुष्कमदोः** रः इति छेदः। एतेभ्यो मत्वर्थे रप्रत्ययः। ऊषः क्षारमृत्तिका अस्मिन्नस्तीति ऊषरो देशः। सुषिश्छिद्रमस्मिन्नस्तीति सुषिरो रन्ध्रः। मधु – माधुर्यमस्मिन्नस्तीति मधुरं फलम्। ***मुखरः** – मुखशब्देन तद्भवा वाचो लक्ष्यन्ते। मुखमस्यास्तीति मुखरः वाचालः। (प्राणिस्थादातोलजन्यतरस्यामिति लचि वाचाल इति रूपमिति न शङ्क्यम्। अप्राण्यङ्गत्वाद्वाचाम्, किन्तु आलजाटजौ बहुभाषिणीति आलच्प्रत्ययो वक्ष्यते। तेनेदं रूपम्) ***पाण्डर** इत्यव्युत्पन्न एव। पाण्डुशब्दाड्डुरप्रत्ययविधौ सति डित्वाट्टिलोपे पाण्डर इति रूपं स्यात् न तु तद्विधिर्दृश्यते इति। डित्थादिवद्रूढोऽयं व्युत्पत्तिहीनश्शब्द इति भावः । अप्रामाणिक इति तु न। डित्थादिवदव्युत्पन्नप्रातिपदिकस्यापि प्रामाणिकत्वेन अर्थवत्स्तूत्रे ग्रहणात् अर्थवत्सूत्रस्य अव्युत्पन्नमेव हि प्रातिपदिकमुदाहरणम्। अव्युत्पन्नः

**रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम्** ॥ खरः । मुखरः । कुञ्जो हस्तिहनुः, कुञ्जरः ॥ **नगपांसुपाण्डुभ्यश्च** ॥ नगरम् । पांसुरः । पाण्डुरः । पाण्डुरशब्दस्तु अव्युत्पन्न एव ॥ **कच्छ्वा ह्रस्वत्वं च** । कच्छुरः ॥ **१९१५ । द्युद्रुभ्यां मः** ।५ ।२ ।१०८ । द्युमः । द्रुमः ॥ **१९१६ । केशाद्वोऽन्यतरस्याम्** ।५ ।२ ।१०९ । प्रकृतेनान्यतरस्यां ग्रहणेन मतुपि सिद्धे पुनर्ग्रहणमिनिठनोः समावेशार्थम् । केशवः । केशी । केशिकः । केशवान् ॥ **अन्येभ्योऽपि दृश्यते** ॥ मणिवो नागविशेषः । हिरण्यवो निधिविशेषः ॥ **अर्णसो लोपश्च** ॥ अर्णवः ॥ **१९१७ । गाण्ड्यजगात्संज्ञायाम्** ।५ ।२ ।११० । ह्रस्वदीर्घयोर्यणा तन्त्रेण निर्देशः । गाण्डिवम् । गाण्डीवम् । अर्जुनस्य धनुः । अजगवं पिनाकः ॥

---

अविग्रहः अवयवार्थहीन इति यावत्। ***कच्छ्वा इति।** कच्छूशब्दान्मत्वर्थे रप्रत्ययः। ऊकारस्य ह्रस्वश्चेत्यर्थः। ***द्यु इति** द्युशब्दात् – द्रुशब्दाच्च मत्वर्थे मप्रत्ययः। द्यौरस्यास्ति आक्रमणविषयत्वेनेति द्युमः। वृक्षा हि शाखापर्णादिभिः खमाक्रामन्ति। द्रवत्यूर्ध्वमिति द्रुर्वृक्षश्शाखा चेत्युणादौ प्रथमपादे २६१ पत्रे द्रुश्शाखा अस्यास्सन्तीति द्रुमः। ***केशादिति।** केशब्दादित्यर्थः। प्रकृतेन प्राणिस्थसूत्रादनुवर्तमानेनेत्यर्थः। एतेन इतः प्राक्तनेष्वपि अन्यतरस्यां ग्रहणानुवृत्तेस्सत्त्वादूषवानित्यादयः प्रयोगास्सङ्गच्छन्ते। अत एव तत्त्वबोधिन्यामाह – इह समुच्चीयमानोऽपि मतुप् रूढशब्देषु नेष्यते इति। फेनादिलजिति सूत्रे–अन्यतरस्यां ग्रहणं मतुप्समुच्चयार्थमनुवर्तते इति मूलेप्युक्तम्। सिध्मादिसूत्रमारभ्य केशाद्वसूत्रपर्यन्तमिति शेषस्तत्र बोध्यः। प्रशस्ताः केशा अस्य सन्तीति केशवः। प्रशंसायां मतुबादय इत्युक्तत्वात्। ठनि केशिकः। ***अन्येभ्योऽपि** मत्वर्थे वप्रत्ययो दृश्यते इत्यर्थः। मणिरस्यास्तीति मणिवः। नागः फणी ***अर्णसः**–लोपश्च चाद्वः। लोपोयमलोन्त्यपरिभाषया अन्त्यस्य सकारस्यैव। ***गाण्डीति।** गाण्डी च – अजगश्च तयोस्समाहारः गाण्ड्यजगम्। इत्युभयथा समाससम्भवे सति ईकारान्तेन वा इकारान्तेन वा गाण्डिशब्देनायं समास इति निर्णयहेत्वभावेन उभयोरपि ग्रहणम्भवतीत्याह– ह्रस्वदीर्घयोरित्यादि। तथा च गाण्डीशब्दात् गाण्डिशब्दात् – अजगशब्दाच्च मत्वर्थे वस्स्यात् संज्ञायां वाच्यायामित्यर्थस्सिद्धः। (गाण्डी अजग – इको यण् – गाण्ड्यजग – गाण्डि अजग – यण् गाण्ड्यजग इत्युभयोरपि यणि कृते रूपविशेषानुपलम्भाद्यणा तन्त्रेणेत्युक्तम्) अजगवमीश्वरस्य धनुः – संज्ञाशब्दत्वादनयोरवयवार्थे नाग्रहः कर्तव्यः। ***काण्डेति।** काण्डाण्डयोस्समाहारः काण्डाण्डम् तस्मात् यथासंख्यम् ईरन् ईरच् इति प्रत्ययौ स्तः। स्वरे भेदार्थमनुबन्धद्वयेन पृथङ्निर्देशः। काण्डः अण्डो वा स्यास्तीति काण्डीरः अण्डीरः। काण्डोस्त्रीदण्डबाणार्ववर्गावसरवारिष्विति। काण्डीरस्समुद्रः शूरश्च। अण्डीरश्शूरः। ***अन्येभ्योऽपीति।** रजकृष्यादिभिन्नेभ्योऽपि मत्वर्थे वलच्प्रत्ययो दृश्यते इत्यर्थः। भ्रातरोऽस्य

**१९१८। काण्डाण्डादीरन्नीरचौ** ।५।२।१११। काण्डीरः। आण्डीरः॥ **१९१९। रजःकृष्यासुतिपरिषदो वलच्** ।५।२।११२। रजस्वला स्त्री। कृषीवलः। 'वले १०४०' इति दीर्घः। आसुतीवलः। शौण्डिकः। परिषद्वलः। पर्षदिति पाठान्तरम्। पर्षद्वलम्॥ **अन्येभ्योऽपि दृश्यते**॥ भ्रातृवलः। पुत्रवलः। शत्रुवलः। 'वले १०४०' इत्यत्र संज्ञायामित्यनुवृत्तेर्नेह दीर्घः॥ **१९२०। दन्तशिखात्संज्ञायाम्** ।५।२।११३। दन्तावलो हस्ती। शिखावलः केकी॥ **१९२१। ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः** ।५।२।११४। मत्वर्थे निपात्यन्ते। ज्योतिष उपधालोपो नश्च प्रत्ययः। ज्योत्स्ना तमस उपधाया इत्वं रश्च। तमिस्रा। स्त्रीत्वमतन्त्रम्। तमिस्रम्। शृङ्गादिनच्। शृङ्गिणः। ऊर्जसो वलच्। तेन बाधा माभूदिति विनिरपि। ऊर्जस्वी। ऊर्जस्वलः। ऊर्जोऽसुगागम इति वृत्तिस्तु चिन्त्या। ऊर्जस्वतीतिवदसुन्नन्तेनैवोपपत्तेः। गोशब्दान्मिनिः। गोमी। मलशब्दादिनच्। मलिनः। ईमसश्च। मलीमसः॥

---

सन्तीति भ्रातृवलः इत्यादि। अन्यतरस्यामित्यस्यानुवृत्त्या मतुप्समुच्चयलाभात् भ्रातृमान् पुत्रवानित्यादि च। **"दन्तशिखादिति।** दन्तशिखयोस्समाहारो दन्तशिखम्। तस्मात् दन्तशिखाच्छिखाशब्दाच्च मत्वर्थे वलच्स्यात्संज्ञायां गम्यमानायामित्यर्थः। वले इति दीर्घः। दन्तावलः। दन्तौ अस्य स्त इति विग्रहः। शिखा अस्यास्तीति शिखावलः। व्रीह्यादीनापवादोऽयं वलच् – न च शिखी इति कथं मयूरपर्यायः संज्ञायां वलच्प्रसङ्गादिति वाच्यम्। संज्ञायास्तत्र अविवक्षितत्वात्। अन्यतरस्यामनुवृत्त्या वलजिन्योस्समुच्चय इति वा। एतन्मते संज्ञायामपि शिखीति लभ्यते एव। खसंज्ञायान्तु शिखावल इति न भवतीतीष्टसिद्धिरिति बोध्यम्। संज्ञायां किम् दन्तवान्पुरुषः। **ज्योत्स्नेति।** ज्योतिरस्यामस्तीति ज्योत्स्ना। मतुपि ज्योतिष्मती। ज्योतिष्मती चन्द्रमसैव रात्रिरि"ति कालिदासः। ज्योत्स्नातमिस्राशब्दौ संज्ञायामेव निपात्येते। रात्रिश्चन्द्रमसा ज्योत्स्ना इति। गृहन्तमिस्रमिति च प्रयोगाभावात्–ज्योत्स्ना इति। ज्योत्स्नेति चन्द्रिकायाः। तमिस्रा इति रात्र्याश्च संज्ञा। तमिस्रमिति क्लीबं पदन्तु तमिस्रं तामिसं तम इति तमस एव संज्ञा। अवयविनि तमसि अवयवस्तमो वर्तते इति तमसोऽपि तमोवत्त्वं घटते – ज्योतीरूपायाञ्चन्द्रिकायां यथा ज्योतिष्मत्त्वेन ज्योत्स्नात्वं तद्वदिति बोध्यम्। ऊर्जो बलम्। सान्तोयम् अदन्तोऽयमिति भ्रमित्वा असुगागमोऽपि निपात्यते इति वृत्तिकृतोक्तम्। कित्त्वादन्त्यावयवः। उकार इत्। अस् इति शिष्यते। ऊर्ज अस् – अतो गुणे।

**१९२२। अत इनिठनौ** ।५।२।११५। दण्डी। दण्डिकः॥ **१९२३। व्रीह्यादिभ्यश्च** ।५।२।११६। व्रीही। व्रीहिकः। न च सर्वेभ्यो व्रीह्यादिभ्य इनिठनाविष्येते। किं तर्हि॥ **शिखामालासंज्ञादिभ्य इनिः। यवखदादिभ्य इकः**॥ अन्येभ्य उभयम्॥ **१९२४। तुन्दादिभ्य इलच्च** ।५।२।११७। चादिनिठनौ मतुप् च। तुन्दिलः। तुन्दी। तुन्दिकः। तुन्दवान्। उदर, पिचण्ड, यव, व्रीहि॥ (ग) **स्वाङ्गाद्विवृद्धौ**॥ विवृद्ध्युपाधिकात्स्वाऽङ्गवाचिन इलजादयः स्युः। विवृद्धौ कर्णौ यस्य स कर्णिलः। कर्णी। कर्णिकः। कर्णवान्॥

---

ऊर्जस् – वलचि ऊर्जस्वल इति वृत्तिमतस्य चिन्त्यत्वे हेतुमाह–असुन्नन्तस्यैवोपपत्तेरिति। वलचि–इनि च – असुगागमे – यद्यपि वृत्तिमते रूपद्वयसिद्धिस्तथापि ऊर्जस्वतीति मतुबन्तरूपासिद्धिः। मतुप्यसुगागमस्यानिपातनात्। ततश्च तद्रूपसिद्ध्यर्थम्। ऊर्जबलप्राणने इति धातोरसुन्निति कृत्प्रत्यये कृते ऊर्जस् इति सान्तं रूपं भवति तस्मान् मतुपि ऊर्जस्वतीति सिद्ध्यतीति वक्तव्यं स्यात्। सैवोक्तिर्वलचि विनापि यद्यङ्गीक्रियते तर्हि किमसुगागमनिपातनेन फलमिति भावः। ऊर्जस्वतीत्यत्र असुन्नन्ताद्यथा मतुप् तथैव ऊर्जस्वलं ऊर्जस्वी इत्यत्रापि असुन्नन्तादेव वलच् विनिश्च इति व्यर्थमसुगागमनिपातनमिति वृत्तिमते दोषः। ***अत इति।** अदन्तात् मत्वर्थे इनि–ठन–इत्येतौ प्रत्ययौ स्तः। दण्डी–स्त्रियां ऋन्नेभ्य इति ङीपि दण्डिनी। टापि दण्डिका ***व्रीह्यादिभ्यश्च।** व्रिह्यादिभ्यः अनदन्तत्वेन पूर्वसूत्रादिनिठनोरप्राप्तौ तत्प्राप्त्यर्थमिदं सूत्रम्। ***तुन्देति।** इनिठनौ न बाधेते लजिति च ग्रहणम्। तुन्द–उदर – पिचम्ड–यव – एतेभ्यः अत इनिठनाविति इनिठनोः प्राप्तयोः इलजर्थमेषां पाठः। व्रीहिशब्दाद्व्रीह्यादिसूत्रेण इनिठनोः प्राप्तिः। एते पञ्च तुन्दादिगणः। एतद्गणसूत्रम्। स्वाङ्गाद्विवृद्धाविति। विशेषेण वृद्धिर्विवृद्धिः। तदुपाधिकात्तद्विशेषणकादित्यर्थः। विवृद्धौ कर्णौ इति विग्रहे कर्णावित्यस्य विवृद्धाविति विशेषणम्। विवृद्धावित्यस्य विवृद्धिरर्थः। तथा च कर्णपदार्थस्य विवृद्धिर्विशेषणमिति विवृद्ध्युपाधिकत्वं स्वाङ्गस्य सङ्गच्छते। पदस्य पदम्। अर्थस्य अर्थश्च विशेषणं भवतीति नियमात्। ***एकेति।** एकश्च गौश्च एकगावौ पूर्वौ यस्य तस्मात् एकपूर्वात् गोपूर्वकाच्चेत्यर्थः। एकगोभ्यां स्वरूपस्यैव ग्रहणं नार्थस्य – एकपदपूर्वाद्गोपदपूर्वाच्चेति यावत्। प्रातिपदिकान्मत्वर्थे नित्यं ठञ् स्यात्। ञित्त्वाद्वृद्धिः। ऐकशतिकः। एवम् ऐकदेशिकः। ऐकविषयिक इत्याद्युदाहार्यम्। गवां शतं गोशतमस्यास्तीति गौशतिकः। गावश्शतमिति विग्रहे विशेषणस्य पूर्वनिपातनियमेन शतगाव इति स्यात्। षष्ठीतत्पुरुषाद्बहुव्रीहेर्द्वन्द्वाच्च न भवत्यनभिधानादिति हरदत्तादय इति। नियमस्तु एकपूर्वादित्यत्रैव, न तु गोपूर्वादित्यत्रेति बोध्यम्। यद्वा – मयूरव्यंसकादित्वाद्विशेषणस्यापि परनिपातः। गावश्शतं गोशतमिति। तथा च स नियमोऽत्राऽप्यङ्गीकर्तव्य एवेति बोध्यम्।

**१९२५। एकगोपूर्वाट्ठञ् नित्यम्** ।५।२।११८। एकशतमस्यास्तीति ऐकशतिकः। ऐकसहस्रिकः। गौशतिकः। गौसहस्रिकः॥ **१९२६। शतसहस्रान्ताच्च निष्कात्** । ५।२।११९। निष्कात्परौ यौ शतसहस्रशब्दौ तदन्तात्प्रातिपदिकाट्ठञ् स्यान्मत्वर्थे। नैष्कशतिकः। नैष्कसहस्रिकः॥ **१९२७। रूपादाहतप्रशंसयोर्यप्** ।५।२।१२०। आहतं रूपमस्यास्तीति रूप्यः कार्षापणः। प्रशस्तं रूपमस्यास्तीति रूप्यो गौः। आहतेति किम्। रूपवान्॥ **अन्येभ्योऽपि दृश्यते**॥ हिम्याः पर्वताः। गुण्या ब्राह्मणाः॥ **१९२८। अस्मायामेधास्रजो विनिः** ।५।२।१२१। यशस्वी। यशस्वान्। मायावी। मायावान्।

---

***शतेति।** शतसहस्रान्तो यो निष्कशब्दस्तस्मान्मत्वर्थे ठञ् इति व्याख्याने निष्कशतमस्यास्तीति विग्रहे निष्काट्ठञि नैष्किकशत इति रूपं स्यात्। तस्मदित्युत्तरस्येति परिभाषया निष्कादव्यवहितरपरस्सन्नेव ठञ् भवतीति लाभात्। अथ निष्कात्परौ यौ शतसहस्रौ ताभ्यां मत्वर्थे ठञ् इति व्याख्याने शतसहस्राभ्यामेव ठञ्विधानेन ञित्त्वप्रयुक्तादिवृद्धिश्शतसहस्राद्यचोरेव स्यात्। निष्कशातिकः। निष्कसाहस्रिक इति रूपापत्तिः इतीदं सर्वमभिप्रेत्याह– निष्कात्परौ यौ शतसहस्रौ तदन्तात्प्रातिपदिकादिति। एतेन परमनिष्कशतशब्दादपि ठञ् सुलभः। निष्कात्परं यच्छतं तदन्तं हि परमनिष्कशतपदमिति आदिवृद्धौ पारमनिष्कशतिक इति रूपं सिद्ध्यति। ***रूपादिति।** आहतोपाधिकात् (आहतमाहनं ताडनमुपाधिर्विशेषणं यस्य रूपशब्दार्थस्य तदाहतोपाधिकम्) प्रशंसोपाधिकाच्च रूपात् मत्वर्थे यप् – रूपं स्वरूपम् आकारः। कार्षापणे हि परिमाणज्ञापकं किञ्चिद्रूपमाहन्यते प्रोयते स्यूतम्भवतीत्यर्थः। आहते किम्। आहतप्रशंसयोरिति किमित्यर्थः। रूपवान्। नात्र प्रशंसायां मतुप्। किन्तु भूमादिष्वेवेति बोध्यम्। प्रशंसायां मतुपोऽपवादत्वाद्यपः। ***अन्येभ्योऽपि** – रूपादन्येभ्योऽपीत्यर्थः। वार्तिकमिदम्। दृश्यते यबिति शेषः। आहतप्रशंसाभिन्नार्थेष्वप्ययं यप्। तेन हिममेषामस्तीति हिम्याः। भूम्नि यप्। गुण एषामस्तीति गुण्याः। अयमपि भूम्नैव।। ***असिति।** असन्तात् मायादित्रिकाच्च मतौ विनिः। क्विन्नन्तत्वात्कुः। स्रज् विन् इति स्थिते–ऋत्विग्दधृक्स्रग्दिगिति क्विन्नन्तत्वात्– क्विन्प्रत्ययस्य कुरिति। कुत्वेन जकारस्य गकारः स्रग्वी। ननु सृजधातोः क्विनि ऋत्विक्सूत्रे स्रगिति निपातनादमागमः। स्रज् – जकारस्य चोः कुरिति कुत्वम्। वश्च भ्रश्चेति षत्वञ्च प्राप्नुतः। परत्वात् षत्वे असिद्धत्वाकुत्वम्। स्रग्वी इति स्यादेवेति। क्विन्नन्तत्वात्कुरिति कुत उक्तम्मूले इति चेत् मैवम्। असिद्धत्वात् षत्वम्बाधित्वा कुत्वं यदिस्यात्तर्हि व्रश्चेति सूत्रे सृजग्रहणं व्यर्थं स्यादिति तद्वैयर्थ्यान्यथानुपपत्त्या कुत्वं बाधित्वा षत्वमेव। ननु इदानीं व्रश्चेति षत्वे क्विन्प्रत्ययस्येति कुत्वे च प्राप्ते परत्वात्कुत्व मसिद्धत्वात्षत्वमिति षत्वमेव स्यान्न तु कुत्वमिति चेन्मैवम्। ऋत्विक्सूत्रे स्रगिति

व्रीह्यादिपाठादिनिठनौ। मायी। मायिकः। किन्नन्तत्वात्कुः। स्रग्वी ॥**आमयस्योपसंख्यानं दीर्घश्च** ॥ आमयावी ॥ **शृङ्गवृन्दाभ्यामारकन्** ॥ शृङ्गारकः। वृन्दारकः ॥ **फलबर्हाभ्यामिनच्** ॥ फलिनः। बर्हिणः। **हृदयाच्चालुरन्यतरस्याम्** ॥ इनिठनौ मतुप् च। हृदयालुः। हृदयी। हृदयिकः। हृदयवान्। **शीतोष्णतृप्रेभ्यस्तदसहने** ॥ शीतं न सहते शीतालुः। उष्णालुः। स्फायितञ्चीति रक्। तृप्रः पुरोडाशः। तं न सहते तृप्रालुः। तृप्रं दुःखमिति माधवः ॥

---

निपातनात्कुत्वस्य नात्रासिद्धत्वमिति ज्ञापितत्वात् । न चैवं षत्वविधेर्वैयर्थ्यं शङ्क्यम्। सोपपदकात्सृजेष्षत्वमेव। विश्वसृट् इत्यत्र षत्वस्यावकाशात्। न च तत्रापि कुत्वमिति वाच्यम्। स्रगिति केवलस्यैव निपातः। न तु सोपपदकस्येति। एतेन केवलात्सृजेः क्विनि अमागमः कुत्वञ्च निपातानात् स्रक् इति। सोपपदकात्तु नामागमः। नापि कुत्वम्। अनिपातितत्वात्। विश्वसृट् इति लब्धम्। क्विन्नन्तात्कुरिति मूलस्य ऋत्विक्सूत्रे स्रगिति क्विन्नन्तत्वेन निपातनादित्यर्थो वाच्यः। यथाश्रुतार्थे तु क्विन्प्रत्ययस्येति सूत्रेण कुत्वं सृजेः ऋत्विगादिसूत्रेण क्विन्नन्तत्वादिति लभ्यते। दर्शितरीत्या क्विन्प्रत्ययस्येति कुत्वं नैव जायते। व्रश्चेति षत्वदृष्टया असिद्धत्वादिति बोध्यम्। ***आमयस्येति।** दीर्घश्चेति चकारो विन्प्रत्ययसन्नियोगशिष्टत्वं दीर्घस्य ज्ञापयति। तेन मतुपि आमयवानिति सिद्ध्यति। अलोऽन्त्यपरिभाषया आमयस्य दीर्घ इत्यनेन अन्त्याल एव दीर्घः। आमयाद्विनेरुपसङ्ख्यानमामयस्य दीर्घश्च मत्वर्थे इति वार्तिकार्थः। ***शृङ्गेति।** विषाणपरश्शृङ्गशब्दः। बृन्दस्समूहः। सोऽस्यास्तीति बृन्दारकः। बृन्दारका दैवतानीति देवेषु योगरूढश्चायं शब्दः। बृन्दः स्वीयसमूहः एषामस्तीति व्युत्पत्तेः। ***फलिनः** बर्हिणः। एकवचनान्ताविमौ – बहुत्वे फलिनाः। बर्हिणः–इति। अत इनौ कृते फली बर्ही इति च रूपसिद्धिरिष्यते। मतुपि च फलवान् बर्हवानिति। ***हृदयात्** चालुः इति छेदः। ***शीतेति।** शीतादिभ्यः द्वितीयान्तेभ्यः द्वितीयान्तार्थकर्णकासहनेऽर्थे चालुप्रत्ययः। तृप्र इति रूपनिष्पत्तिं दर्शयति – स्फायितञ्चेति रगिति। उणादिषु द्वितीयपादे २६६ पत्रे सूत्रमिदम्। स्फायितञ्च्यादिषु तृपिः पठ्यते। स्मात् रक्प्रत्यये कृते तृप्रः। ***हिमात्।** चेलुः इति छेदः। चुटू इति चस्येत्संज्ञा। हिमएलु। यस्येति चेत्यलोपः। हिमेलुः। तन्न सहते इत्यर्थे हिमाद्द्वितीयान्ताच्चेलुप्रत्यय इति वार्तिकार्थः। अत्र हिमात्– च – एलुरिति छित्वा हिमादेलुरिति पठित्वा वा एलुप्रत्ययस्स्यादिति व्याख्यान्तरम्। न च लाघवात् हिमाच्चिलुरिति चिलुप्रत्ययो वाच्य इति वाच्यम्। हिम इलु। यस्येति लोपः। हिमिलुरिति स्यात्। न त्वाद्गुणेन हिमेलुरित्यभीष्टसिद्धिरिति। ***बलादूलः।** तन्न सहते इत्यर्थे एव। ***वातादिति।** चात्तन्न सहते इत्यर्थे समूहार्थे समर्थविभक्तिष्षष्ठी ***तप्।** पर्वमरुद्भ्यामिति छेदः। पर्वन्शब्दान्मरुच्छब्दाच्च मत्वर्थे तप्प्रत्ययः। पर्वाण्यस्य सन्तीति पर्वतः। नलोपः

**हिमाच्चेलुः** ॥ हिमं न सहते हिमेलुः ॥ **बलादूलः** ॥ बलं न सहते बलूलः ॥ **वातात्समूहे च** ॥ वातं न सहते वातस्य समूहो वा वातूलः । **तप्पर्वमरुद्भ्याम्** ॥ पर्वतः । मरुत्तः ॥ **१९२९ । ऊर्णाया युस्** ।५ ।२ ।१२३ । सित्वात्पदत्वम् । ऊर्णायुः । अत्र छन्दसीति केचिदनुवर्तयन्ति । युक्तं चैतत् । अन्यथाहि 'अहंशुभमोः-१९४६' इत्यत्रैवोर्णाग्रहणं कुर्यात् ॥ **१९३० । वाचो ग्मिनिः** ।५ ।२ ।१२४ । वाग्ग्मी ॥ **१९३१ । आलजाटचौ बहुभाषिणि** ।५ ।२ ।१२५ । **कुत्सित इति वक्तव्यम्** ॥ कुत्सितं बहु भाषते स वाचालः । वाचाटः । यस्तु सम्यग्बहु भाषते स वाग्ग्मीत्येव ॥

---

प्रातिपदिकान्तस्येति नलोपः । पर्वतस्य पर्वाणि नाम शृङ्गनितम्बादिभिर्न्यूनाधिकपाषाणसन्निवेशः । मरुतोऽस्य सन्तीति मरुत्तः राजा । मरुतो वायवः प्राणात्मकाः । दृढप्राणः बलवानिति यावत् । यद्वा मरुतो देवाः अस्य रक्ष्यत्वेन पूज्यत्वेन वा सन्तीति मरुत्तः । देवानां रक्षकः पूजको वा इत्यर्थः । ***ऊर्णा यायुस्।*** ऊर्णा मेषादिलोम । ऊर्णा अस्य कारणत्वेन सन्ति अस्मिन्सन्तीति वा ऊर्णायः कम्बळः । ऊर्णाशब्दान्मत्वर्थे युस्प्रत्यय इति सूत्रार्थः । युसस्सित्वफलं वक्ति पदत्वमिति । सिति चेति सूत्रेणेति शेषः । सित्त्वाभावे यादित्वाद्यचिभमिति पूर्वस्य भत्वं स्यात् । सति तु भत्वे यस्येति चेत्यालोपे ऊर्ण्युरित्यनिष्टरूपं स्यादिति बोध्यम् । अनुवर्तयन्ति बहुळं छन्दसीति पूर्वसूत्रादित्यर्थः । आमयस्येत्यादीनि वार्तिकानि तत्सूत्रस्थान्येव । बहुळग्रहणाल्लोकेऽपि आमयाव्यादीनाम्प्रयोगः । अन्यथा हीत्यस्यानन्तरं लाघवादिति शेषः । अहं शुभमूर्णाभ्यो युस् इति सूत्रिते लाघवसत्त्वेन पृथक्सूत्रकरणं गौरवावहत्वे न अपार्थं स्यादिति इदमेव ज्ञापयति । अहंशुभमोर्लुके युस् – ऊर्णायाश्छन्दसि यस् – इति एतदर्थं छन्दसीत्यस्यानुवर्तनमुचितमिति भावः । ***वाच** इति । वाक्छब्दान्मतौ ग्मिनिप्रत्ययः. वाचोऽस्य सन्तीति वाग्मी – वाच् – ग्मीचोः कुरिति कुत्वम् । झलाञ्जशोन्ते इति जश्त्वम् वाग् ग्मी । झरो झरि सवर्णे इति लोपो न भवति, गात्परस्य गस्य मकारपरकत्वेन सवर्णपरकत्वाभावात् । वाग्मी । ***आलजिति।** वाच इत्यनुवर्तते । बहुभाषिणि वाच्ये सति वाचो मतौ आलच् आटच् इति प्रत्ययौ स्तः । कुत्सिते इति वक्तव्यमिति वार्तिकम् । कुत्सिते बहुभाषिणि वाच्ये एव वाचो मतावालजौटजावित्यर्थः । वाचोऽस्य सन्तीति विग्रहः । कुत्सितं बहुभाषते इति तु फलितार्थकथनम् । कुत्सितमिति क्रियाविशेषणम् । यः कुत्सितं बहु भाषते स वाचालो वाचाटो वा भवतीत्यर्थः । ***स्वामिन्निति।** ऐश्वर्येऽर्थे स्वामिन्निति निपात्यते । ऐश्वर्यार्थश्च प्रकृतेरेव । प्रत्ययार्थस्तु मत्वर्थ एव इत्याह ऐश्वर्यवाचकादिति । ऐश्वर्यवाचकात्स्वशब्दादामिनचं कृत्वा स्वामिन्निति सूत्रकारेण निर्दिष्टमिति भावः । आमिन्प्रत्ययो निपात्यते इति तु नोक्तम् । इत्संज्ञया नलोपे स्वामि इत्यदन्तरूपापत्तेः । आमिनिरित्यपि नोक्तम् । चित्स्वरार्थं चित्त्वस्यावश्यकत्वात् । आमिनचि अकारउच्चारणार्थः । ***अर्श इति।** सान्तोयं शब्दः ।

**१९३२। स्वामिन्नैश्वर्ये** ।५।२।१२६। ऐश्वर्यवाचकात्स्वशब्दान्मत्वर्थे आमिनच्। स्वामी॥
**१९३३। अर्शआदिभ्योऽच्** ।५।२।१२७। अर्शांस्यस्य विद्यन्ते अर्शसः। आकृतिगणोऽयम्॥
**१९३४। द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः** ।५।२।१२८। द्वन्द्वः। कटकवलयिनी। शङ्खनूपुरिणी। उपतापो रोगः। कुष्ठी। किलासी। गर्ह्यं निन्द्यम्। ककुदावर्ती। काकतालुकी। प्राणिस्थात्किम्। पुष्पफलवान्घटः॥ **प्राण्यङ्गान्न**॥ पाणिपादवती। अत इत्येव। चित्रकललाटिकावती। सिद्धे प्रत्यये पुनर्वचनं ठनादिबाधनार्थम्॥

---

अत एव न सवर्णदीर्घेन अर्शादिभ्य इति सूत्रितम्। मत्वर्थे अच्प्रत्ययः। अ इति शिष्यते। अर्शस् अ–अर्शस इति । ***द्वन्द्वेति** त्रयाणां समाहारः। प्राणिस्थयोर्यो द्वन्द्वस्तस्मात्। प्राणिस्थाद्द्वन्द्वात् प्राणिस्थो य उपतापो रोगस्तद्वाचिनः। प्राणिस्थं यद्गर्ह्यन्तद्वाचिनश्च – मताविनिरिति निष्कृष्टार्थः। कटकवलयौ भूषणविशेषौ अस्य स्त इति कटकवलयी। स्त्रियां ऋन्नेभ्यो ङीपि कटकवलयिनी। प्राणिस्थात्किं कटकवलयवती पुत्रिका। (पुत्रिका सालभञ्जिका) कुष्ठः किलासश्च रोगविशेषौ। सोऽस्यास्तीति कुष्ठी – किलासी च। स्त्रियां कुष्ठिनीत्यादि। यद्यपि प्राणिस्थविशेषणमुपतापे निरर्थकमेव अप्राणिनि रोगासम्भवात्तथापि मुखनासासञ्चारी वायुः प्राणः न तु जीवः। तद्वन्तः प्राणिन इति वृक्षाणामप्राणित्त्वादुदकन्यूनत्वाधिक्याभ्यां श्वेतादिरोगित्वाच्च। वृक्षस्थरोगवाचिभ्यः इनिर्माभूदिति प्राणिस्थविशेषणमुपतापेऽपि सार्थकम्। तेन श्वेतिनो वृक्षा इति न भवति। (श्वेतो रोगविशेषः। येन पर्णाश्श्वेती भवन्ति।) ककुदि शिरसि अंसे वा आवर्तः (आंध्रे सुडि) यस्य स ककुदावर्ती। ककुद्यावर्तो हि निन्द्यते। ककुदावर्तिनीं कन्यामुद्वोढुमपि पुमांसो बिभ्यति। तादृक्स्त्रीसम्बन्धेन स्वस्य धनपश्वादिक्षयसम्भवात्। एवं ककुदावर्ती पुमानपि विवाहानर्ह एवेति बोध्यम्। काकतालुकोऽस्यास्तीति काकतालुकी। प्राण्यङ्गान्न। प्राणिस्थयोः प्राण्यङ्गयोर्द्वन्द्वादिर्न भवतीत्यर्थः। अत इत्येव। अत इनि ठनाविति सूत्रादत इति मण्डूकप्लुत्यात्रानुवर्तते इति भावः। ननु अत इनिठनाविति सूत्रेणैव प्राणिस्थाद्द्वन्द्वादेरतोऽपि मत्वर्थे इनिप्रत्यये सिद्धे किमनेन सत्रेणेति शङ्कायामाह – ठनादिबाधनार्थमिति। अत इनिठनाविति सूत्रेण न केवलमिनिर्विधीयते किन्तु ठनपीति तन्माभूदित्येतदर्थमनेनेनिविधिरिति भावः –। ठनादीत्यादिपदान्मतुपोऽपि बाधनमिदम्। अत इनि सूत्रे हि मतुप्समुच्चीयते। तत्सूत्रेणैवात्र इनौ क्रियमाणे ठन् मतुप्च स्यादिति बोध्यम्। ***वातेति**। एतयोः कुगागमः। एताभ्यामिनिप्रत्ययश्च मत्वर्थे इत्यर्थः। रोगे चायमिष्यते। अयं कुगागमो रोगे एवेष्यते इत्यर्थः। यो हि वातरोगी स वातकी इत्युच्यते। बाह्यवायुवाचकवातशब्दात्तु मतुबेवेत्याह। वातवती इति। अतिसारशब्दश्च रोगपरः। अत्यन्तं सारः अतिसार इति व्युत्पत्तौ तु अतिसारवानित्येव। अतिबलवानित्यर्थः। पिशाचोऽस्यास्तीति पिशाचकी। पिशाचग्रस्त इत्यर्थः। पिशाचशब्दान्मत्वर्थे इनिः।

**१९३५। वातातीसाराभ्यां कुक् च** ।५।२।१२९। चादिनिः। वातकी। अतीसारकी॥ **रोगे चायमिष्यते**॥ नेह, वातावती गुहा॥ **पिशाचाच्च**॥ पिशाचकी॥ **१९३६। वयसि पूरणात्** ।५।२।१३०। पूरणप्रत्ययान्तान्मत्वर्थे इनिः स्याद्वयसि द्योत्ये। मासः संवत्सरो वा पञ्चमोऽस्यास्तीति पञ्चमी उष्ट्रः। ठन्बाधनार्थमिदम्। वयसि किम्। पञ्चमवान्ग्रामः॥ **१९३७। सुखादिभ्यश्च** ।५।२।१३१। इनिर्मत्वर्थे। सुखी। दुःखी॥ (ग) **माला क्षेपे**॥ माली॥ **१९३८। धर्मशीलवर्णान्ताच्च** ।५।२।१३२। धर्माद्यन्तादिनिर्मत्वर्थे। ब्राह्मणधर्मी। ब्राह्मणशीली। ब्राह्मणवर्णी॥ **१९३९। हस्ताज्जातौ** ।५।२।१३३। हस्ती। जातौ किम्। हस्तवान्पुरुषः॥

---

कुगागमश्चेति वार्तिकार्थः– ***वयसीति।** पूरणान्तात्संख्येयमेवाभिधीयते न तु वय इति वयसि द्योत्ये इत्युक्तम्। द्योतनञ्च वैवक्षिकम्। पञ्चमोऽस्यास्तीति विग्रहे पञ्चमशब्दात्पञ्चसंख्यावानर्थः प्रतीयते। कोऽसौ पञ्चसंख्यावानित्याकांक्षायां विवक्षया यदि मासादिः कालवाची भवति तर्हि वयो द्योत्यते। यदि पुत्रादिर्द्रव्यवाची तर्हि वयो न द्योत्यते इति। पञ्चमो मासोऽस्यास्तीति पञ्चमीबालः। वयसि किम्। पञ्चमः पुत्रोऽस्यास्ति पञ्चमवान् पिता। इदमेवाह पञ्चमवान् ग्राम इति। ननु पञ्चमादिभ्यः अदन्तेभ्यः अत इनिठनावित्यनेनैव इनौ सिद्धे सति किमनेन सूत्रेणेत्यत आह–ठन्बाधनार्थमिदमिति। अत इति सूत्रेण यदीनिस्स्यात्तर्हि ठनपि स्यादिति पृथक्सूत्रकरणमिति भावः। ***सुखीति।** इदमपि सूत्रं ठन्बाधनार्थम्। तेन सुखिक इत्याद्यनिष्टम्। मालाक्षेपे। गणसूत्रमिदम्। क्षेपे वर्तमानो यो मालाशब्दः तस्मान्मत्वर्थे इनिर्वाच्यः। व्रीह्यादित्वादेव इनौ सिद्धे क्षेपे एव इनिर्यथा स्यात् न त्वन्यत्रेति नियमार्थमिदम्। तेन स्रक्पर्यायान्मालाशब्दान्मालावान् इत्येव। सोपपदकान्मालाशब्दात्तु नायं नियमः। तेन-पुष्पमाली इत्यादिसिद्ध्यति। ***धर्मीति।** ब्राह्मणस्य धर्मो ब्राह्मणधर्मः। सोऽस्यास्तीति ब्राह्मणधर्मी। ठन्बाधनार्थमेवेदं सूत्रम्। ***हस्तीति** गजजातिः। हस्तश्शुन्डा अस्यास्तीति हस्ती। गजः। ***वर्णीदिति।** प्रकृतिप्रत्ययसमुदायेन ब्रह्मचारिणि वाच्ये सति वर्णीदिनिस्स्यात्। वर्णो ब्रह्मचर्यमस्यास्तीति वर्णी। ब्रह्मचारिणि किम्। वर्णः रूपमस्यास्तीति वर्णवान्पुरुषः। ब्रह्मचारिण्येवेति नियमार्थमिदं सूत्रम्। ***पुष्करेति।** देशस्थलम्। न तु जनपदनगरादिकम्। अङ्गवङ्गादिदेशवत्। काञ्च्यादिनगरवद्वा पुष्करिण्यादिनामकदेशनगराद्यभावात्। पुष्कराण्यस्यां सन्तीति पुष्करिणी स्थली। पुष्करम् कमलम्। पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले पद्मे चेति कोशः। स्थलपुष्कराणामपि सत्त्वात् स्थली पुष्करिणीत्युच्यते । पुष्करादिभ्यो मत्वर्थे इनिः। प्रकृतिप्रत्ययसमुदायेन देशे वाच्ये इत्यर्थः। पुष्कर – कमल – कुमुद – उत्पल – अंभोज इत्यादयोऽत्र गणे पठ्यन्ते। ननु 'अम्भोजिनीनामतिशीतलानां किञ्जल्ककाश्मीररजोरुणानामि'ति प्रयोगस्सङ्गच्छते। अम्भोजान्यासु सन्तीति अंभोजिन्यः

**१९४० । वर्णाद्ब्रह्मचारिणि** ।५ ।२ ।१३४ । वर्णी । **१९४१ । पुष्करादिभ्यो देशे** ।५ ।२ ।१३५ । पुष्करिणी । पद्मिनी । देशे किम् । पुष्करवान्करी ॥ **बाहूरुपूर्वपदाद्बलात्** ॥ बाहुबली । ऊरुबली ॥ **सर्वादेश्च** ॥ सर्वधनी । सर्वबीजी ॥ **अर्थाच्चासंनिहिते** ॥ अर्थी । संनिहिते तु अर्थवान् ॥ **तदन्ताच्च** ॥ धान्यार्थी । हिरण्यार्थी ॥

---

कमललताः। एवं पद्मिन्यः कुमुदिन्यः उत्पलिन्यः इत्यादयश्च प्रयुज्यन्ते इति। कुमुदिन्यां नळिन्यां तु बिसिनी पद्मिनी मुखम् – इत्यमरोऽपि पद्मिन्यादीनां पद्मयुतदेशाभिधायकत्वं पद्मलताभिधायकत्वञ्च वदतीति चेत् उच्यते। पुष्करादिषु पयश्शब्दभिन्नास्सर्वेप्यदन्ता एव पठ्यन्ते। तेभ्यः अत इनि सूत्रादिनौ प्राप्ते ठन्बाधनार्थं नियमार्थञ्चेदमारब्धम्। पयसस्तु विध्यर्थमेव। नियमस्तु पुष्करादिभ्यो देशे एव इनिरिति न। किन्तु पुष्करादिभ्यो देशे इनिरेवेति। तथा च पुष्करिणी लतेति सिद्ध्यतीति। अत एव देशे किम् पुष्करवान् करीत्युदाहृतम्। देशे इनिरेवेति नियमेन देशभिन्नेर्थे इनिस्स्यान्मतुप्च समुच्चीयते–ठनपि। अत इनि सूत्रस्य तत्र प्रवृत्तेः। एवञ्च पुष्करी पुष्करिकश्च करी इति भवत्येव। पद्मवती पद्मिका वा स्थली इति तु माभूदित्येतदर्थमिदं सूत्रमिति भावः। स्थलीविशेषणत्वाभिप्रायेण पुष्करिणीत्यादिस्त्र्यन्तमुदाहृतम्। पुंसि तु पुष्करीदेशः। इति बोध्यम्। प्रायेण देशवाचित्वे स्त्रियामेव तेषाम्प्रयोग इति ङीबन्तोदाहरणम्। तथा च अमरोऽपि कुमुदिन्यां नळिन्यान्तु बिसिनी पद्मिनीमुखमिति। एवञ्च यत्र देशे पुष्काराणि सन्ति स देशः अङ्गवङ्गादिरपि पुष्करिणीशब्देनोच्यते इत्यपि सिद्धम्। शुचिरप्पित्तमिति अग्नावपि यथा क्लीबस्य अप्पित्तस्य प्रयोगः तथा देशेऽपि स्त्र्यन्तस्य प्रयोगो न विरुध्यते इति बोध्यम्। ***बाहूर्विति** ठन्बाधनार्थमिदम्। तेन बाहुबलवानिति भवत्येव। बाहुबलिक इति माभूत्। एवं सर्वधनीत्यत्रापि। सर्वं धनमस्यास्तीति सर्वधनी सर्वधनवांश्च। सर्वधनिक इति तु माभूत्। सर्वशब्दः आदिर्यस्य तस्मात्सर्वादेः। सर्वपूर्वादित्यर्थः। . ***अर्थादिति।** अर्थशब्दान्मत्वर्थे इनिः। स च प्रत्ययान्तार्थो यदि सन्निहितो न भवति। योऽर्थयुक्तस्स यदि दूरस्थस्तर्ह्येवार्थादिनिरिति यावत्। अर्थी ग्रामान्तरस्थो देवदत्तः। अर्थवानयं पुरोवर्ती देवदत्तः इति। ***तदन्ताच्च।** अर्थान्तान्मत्वर्थे इनिः। ठन्बाधनार्थमिदम्। न त्वसन्निहिते इति नियमार्थम्। तस्यात्रानन्वृत्तेः। धान्यमर्थोऽस्यास्तीति धान्यार्थी। अस्य धान्यमेव अर्थो धनं प्रयोजनं वा। हिरण्यमर्थोऽस्य हिरण्यार्थी। अर्थते इत्यर्थी। धान्यस्यार्थी धान्यार्थी। धान्ययाचक इति त्वन्यदेव पदम्। ***अन्यतरस्यां** विकल्पेनेत्यर्थः। मतुबभावे अनुवर्तमान इनिः। इदमेवान्यतरस्यां ग्रहणं ज्ञापयति। द्वन्द्वादिति सूत्रमारभ्य नान्यतरस्यामोनुवृत्तिरिति। तत एव न द्वन्द्वादिभ्यः मतुप्समुच्चयः। तेन कटकवलयवती कन्या इति त्वप्रामाणिकमेव इत्यादि बोध्यम्। ***संज्ञायामिति।** इनिप्रत्ययाक्षिप्तप्रातिपदिकविशेषणत्वेन मन्माभ्यान्तदन्तविधिरित्याह। मन्नन्तान्मान्ताच्चेति प्रातिपदिकादिति शेषः। (समर्थात्तद्धितोत्पत्तिरिति इनिः। समर्थादेव

**१९४२। बलादिभ्यो मतुबन्यतरस्याम्** ।५।२।१३६। बलवान्। बली। उत्साहवान्। उत्साही॥ **१९४३। संज्ञायां मन्माभ्याम्** ।५।२।१३७। मन्नन्तान्मान्ताच्चेनिर्मत्वर्थे। प्रथिमिनी। दामिनी। होमिनी। सोमिनी। संज्ञायां किम्। सोमवान्॥ **१९४४। कंशंभ्यां बभयुस्तितुतयसः** ।५।२।१३८। कंशमिति मान्तौ। कमित्युदकसुखयोः। शमिति सुखे। आभ्यां सप्त प्रत्ययाः स्युः। युस्यसोः सकारः पदत्वार्थः। कंबः। कंभः। कंयुः। कंतिः। कंतुः। कंतः। कंयः। शंबः। शंभः। शंयुः। शंतिः। शंतुः। शंतः। शंयः। अनुस्वारस्य वैकल्पिकः परसवर्णः। वकारयकारपरस्यानुनासिकौ वयौ॥

---

स्यात्। विभक्त्यन्तं प्रातिपदिकमेव समर्थमिति इनिना प्रातिपदिकस्याक्षेपः) मन्च मश्च मन्मौ ताभ्याम्। म इत्यत्र अकार उच्चारणार्थ इति मकारान्तादेवेत्यर्थ इति न भ्रमितव्यम्। होमिनीत्याद्युदाहरणासिद्धेः। किन्तु म इति सङ्घातग्रहणम्। तदन्तादित्यर्थः। अकारान्तान्मकारोपधादित्यर्थः। प्रथिमन् – दामन् – इति मन्नन्तौ। होमसोम इति मान्तौ। प्रथिमा पृथुत्वमस्यां अस्तीति प्रथिमनी – प्रथिमन् – इन् – नस्तद्धिते इति टिलोपः। प्रथिमिन् – ङीप् – प्रथिमिनी। दामरज्जुः अस्यास्तीति दामनीहोमशब्दादिनौ यस्येति लोपः होमिनी । सोमः – यागे पीयमानं वस्तु – अस्या अस्तीति सोमिनी। चत्वार एते संज्ञाशब्दाः स्त्रियामेव प्रयुज्यन्ते। ***कमिति।** कम् शम् इत्यनुकरणशब्दाभ्यां पञ्चमी। तेन कशाभ्यामिति न भवति. व – छ – युस् – ति – तु – त – यस् इति सप्तपदत्वार्थः सिति चेति पदत्वम्। कंशमिति मान्तौ अव्ययाविति शेषः। अव्ययत्वादेव पञ्चम्यनुत्पत्तौ सत्त्यामनुकरणत्वात्पञ्चम्युत्पत्तिरिति बोध्यम्। कं सुखमस्यास्तीति कंव इत्यदि। कं यः। कम् युस् इति स्थिते मोनुस्वार इति पूर्वस्य पदत्वादनुस्वारः। एददर्थमेव सित्त्वम्। युसि–यसि–वे च परतः कमो मकारस्य अनुस्वारे कृते – अनुस्वारस्य ययि परसवर्णः। वा पदान्तस्य इति परसवर्णः। अनुस्वारस्थाने जायमानत्वेन अनुनासिकः। वेवकारः, यादौ परतः यकारश्च स्यादित्याह। अनुस्वारस्येत्यादिना। कव्। वः। वय् यः। कय् युः। शव् मः । शय् यः। शय् युः इति रूपाणि भवन्तीति भावः। वकारयकारौ परौ यस्य तस्य वकारयकारपरस्य अनुस्वारस्य वैकल्पिकः परसवर्णः। अनुनासिको वकारो यकारश्च स्यादिति मूलमस्यार्थः. ***तुन्दीति।** तुन्दि–वलि–वटि एतेषां समाहारः। तस्मात् मत्वर्थे भप्रत्ययः। पूर्वसूत्राद्धस्तु नानुवर्तितः। तदितरप्रत्ययसम्बद्धत्वात्तस्य। तुन्दिल इति त्वन्यत्। पिचुण्डोदरतुन्दानि समानार्थानि। तुन्दशब्दात् स्वाङ्गद्विवृद्धाविति। विवृद्धं तुन्दमस्येति विग्रहे इलचि निष्पन्नस्सः। *शुभमिति शुभे मान्तमव्ययमिति शेषः। अहम्। अहङ्कारोऽस्यास्तीति अहंयुः। तथा च प्रयोगः। अहंयूनामेषामनभिभवगन्धाः परकथाः इति

**१९४५। तुन्दिवलिवटेर्भः** ।५ ।२ ।१३९. वृद्धा नाभिस्तुन्दिः [1]मूर्धन्योपधोऽयमिति माधवः। तुन्दिभः। वलिभः। वटिभः। पामादित्वाद्वलिनोऽपि॥ **१९४६। अहंशुभमोर्युस्** ।५ ।२ ।१४० । अहमिति मान्तमव्ययमहङ्कारे। शुभमिति शुभे। अहंयुः अहङ्कारवान्। शुभंयुः शुभान्वितः॥ **इति मत्वर्थीयाः॥**

## तद्धितेषु प्राग्दिशीयाः ३७।

**१९४७। प्राग्दिशो विभक्तिः** ।५ ।३ ।१ । दिक्शब्देभ्य इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञाः स्युः॥ **अथ स्वार्थिकाः प्रत्ययाः॥** समर्थानामिति प्रथमादिति च निवृत्तम्। वेति त्वनुवर्तत एव॥

---

अहम्वानिति न भवति। मतुप्समुच्चयाभावात्। बलादिभ्य इति सूत्रादन्यतरस्यामिति पदन्तु संज्ञायामित्यादि सूत्रेषु नानुवर्तते। अस्वरितत्वात्। शुभमस्यास्तीति शुभंयुः। शुभवानिति तु भवति। शुभेत्यदन्तक्लीबत्वात्। शुभम्वानिति तु न भवति। मान्ताद्युस एव विधानात्। शुभशब्दादिनिठनावपि भवतः। अदन्तत्वात्–शुभी – शुभिकः। ***इति मत्वर्थीयाः***

**तद्धितेषु प्राग्दिशीयाः**

**स्वार्थिकाः।** स्वस्य प्रकृतेरर्थः स्वार्थः। स एषामस्तीति अत इनिठनाविति ठनि कृते स्वार्थिका इति रूपम् । स्वार्थे विहिता इति यावत्। निवृत्तम्। समर्थानामित्यस्यानिवृत्तौ। अङ्गुळ्यादिभ्य ष्ठक्। अङ्गुळीव आङ्गुळिकः। स्वाङ्गुळिक इति न स्यात्। किन्तु सौवङ्गुळिक इत्यनिष्टापत्तिः। ननु ग्रहणवता प्रातिपदिकेनेति तदन्तविधिनिषेधान्नेदम्प्रत्युदाहरणमिति चेत्तर्हि समर्थपदाधिकाराभावदोषाभावात्समर्थानामिति निवृत्तमित्युक्तमिति बोध्यम्। एवं प्रथमादित्यधिकारेणापि न प्रयोजनमिति तदपि निवृत्तमिति बोध्यम्। वेतित्वनुवर्तते एव । अन्यथा स्वार्थिकानां नित्यत्वे शर्करैव शार्करमित्यादौ शर्करैवेति विग्रहवाक्यासिद्धिरूपो दोषस्स्यात्। तद्धितसंज्ञापवाद इयं विभक्तिसंज्ञा तेन एतदस्तसिलिल अनादेशे अन्तः इति स्थिते नस्तद्धित इति टिलोपेन अन्लोपे सतितः इत्यनिष्टरूपं न भवति । न च अनादेशविधानसामर्थ्यादेव न टिलोप इति तद्धितसंज्ञाभावेनेदं प्रयोजनमिति वाच्यम्। अनादेशाभावे टिलोपे एत्त इति भवति। अनादेशे टिलोपे तु त इति भवतीति अनादेशप्रयुक्तफलसद्भावात्। नन्वेवं चेत् । एतदोल इत्येव सूत्र्यताम्। ल इति लुकसंज्ञा एतदतसिल् लुक्स्यादिति। किमनादेशविधानेनेति अनादेशविधिर्व्यर्थस्सन् नात्र टिलोप इति ज्ञापयतीति सत्यामपि तद्धितसंज्ञायां न क्षतिरिति चेत् सत्यम्। तर्हि तद्धितसंज्ञाया समुच्चय एव विभक्तिसंज्ञा इति बोध्यम्। अन्यथा अधुना इदमोऽधुनाप्रत्ययः। इदम् – अधुना – इदम इश् – इ – अधुना – यस्येति लोपः। – अधुना। भस्येवर्णयोर्लोपस्स्यादीकार तद्धिते

**१९४८। किंसर्वनामबहुभ्योऽद्व्यादिभ्यः** ।५।३।२। किमः सर्वनाम्नो बहुशब्दाच्चेति प्राग्दिशोऽधिक्रियते॥ **१९४९। इदम इश्** ।५।३।३। प्राग्दिशीये परे॥ **१९५०। एतेतौ रथोः** ।५।३।४। इदंशब्दस्य एत इत इत्यादेशौ स्तो रेफादौ थकारादौ च प्राग्दिशीये परे। इशोऽपवादः॥**१९५१। एतदोऽन्** ।५।३।५। योगविभागः कर्तव्यः। एतदः, एतेतौ स्तो रथोः। अन्, एतद इत्येव। अनेकाल्त्वात्सर्वादेशः। 'नलोपः प्रातिपदिकान्तस्य २३६'॥

---

च परे इति तद्धितपरको ह्ययमिकारलोपः। अधुनाप्रत्ययस्य तद्धितसंज्ञाभावे यस्येति लोपाभावे – यणि यधुना इति स्यात् इति। ननु विभक्तिसंज्ञायाः किं फलमिति चेदुच्यते दानीञ्च इदमो दानीम्प्रत्ययस्स्यात्। इदम इश् इदानीम्। दानीमिमकारस्य हलन्त्यमिति इत्संज्ञायां प्राप्तायां न विभक्तौ तुस्मा इति विभक्तिस्तत्वान्मस्य नेत्संज्ञा इति। ***किमिति।** अधिकारसूत्रमिदम्। सर्वनामबहुभ्यामिति सूत्रिते द्व्यादीनामपि सर्वनामत्वात्तेभ्योऽपि वक्ष्यमाणकार्यापत्तिः इत्यतः अद्व्यादिभ्य इत्युक्तम्। द्व्यादिभिन्नात्सर्वनाम्न इत्यनेन द्व्यादिस्तस्य किंशब्दस्य पर्युदस्तत्वात्किमः वक्ष्यमाणकार्यासंभवेन किंशब्दग्रहणं कृतम्। एवञ्च द्व्यादिभिन्नात्सर्वनाम्नः किमः बहोश्चेत्येतत्त्रयमुत्तरत्राधिक्रियते इति स्थितम्। ननु द्वेः प्रागेव किंशब्दं पठित्वा सर्वनामगणपाठे प्रकृतसूत्रे किंग्रहणं युज्यताम्। न च द्विपर्यन्तानामेवेष्टिरिति इष्ट्या त्यदादीनाम इत्यत्वापत्तिः। किमः कस्स्यादिति कादेशस्य तदपवादत्वात् इति चेत् । ***इदम इश्।** नात्र किंसर्वनामबहुभ्य इत्यधिकारः। प्रकृतेरिदमो ग्रहणात्। यत्र प्रकृत्यग्रहणं तत्रैवामीषां प्रकृतीनामधिकारः पञ्चम्यां तसिलित्यादौ प्राग्दिश इति सूत्रात्प्राग्दिश इत्यनुवर्तते। तेन च तत्प्रत्यया लक्ष्यन्ते प्राग्दिशीया इति तस्य च सप्तम्यन्तत्वेन विपरिणामः प्राग्दिशीये परे इति। यद्वा कार्यं हि किञ्चिन्निमित्तकं स्यात् तच्च निमित्तं तद्धिताधिकारात्तद्धितप्रत्यय एवात्र। स च तद्धितः प्राग्दशीयः। प्रकृत इति पाग्दिशीये परे इति निमित्तस्य इशादेशरूपकार्येणाक्षेप इति इशश्शित्त्वम्, सर्वादेशार्थम्। अनेकाल्शित्सर्वस्येति परिभाषितत्वात्। ***एते** तौ रथोः इदम इत्यनुवर्तते। आदेशयोः प्रत्यययोश्च यथासंख्यम्। तेन रादौ एतादेशः। थादौ इतादेशः इति एते त्यदन्ताः। इत् इति तान्ताश्च आदेशः। इदमोर्हिल् । इदमस्थमुः इति प्रत्ययौ वक्ष्यति रश्च थ्च रथौ तयोः रथोः रकारोपर्यकार उच्चारणार्थः रोरित्यर्थः। यस्मिन्विधिस्तदादाविति परिभाषया तदादिविधेः रादौ थादौ चेत्यर्थसिद्धिः। **एतद इति।** एतदः अन् इति सूत्रद्वयम्। एतद इति सूत्रे पूर्वसूत्रं सर्वमनुवर्तते। अनितिसूत्रे एतद इति सूत्रमनुवर्तते–इति कृत्वा अर्थं वदति एतद इत्यादिना। अन् इत्यादेशोयं नान्तः। नकारस्य नेत्संज्ञा – अतः अनेकाल्त्वमस्तीति अन्नित्ययं सर्वादेशः।(इत्संज्ञाप्रयुक्तस्वरादिफलाभावेन उच्चारणसामर्थ्याद्धलन्त्यमिति नेत्संज्ञा नकारस्येति बोध्यम्।) न लोपः प्रातिपदिकान्तस्य – तसिलादिषु पूर्वस्य पदत्वादनो

**१९५२। सर्वस्य सोऽन्यतरस्यां दि** ।५।३।६। प्राग्दिशीये दकारादौ प्रत्यये परे सर्वस्य सो वा स्यात्॥ **१९५३। पञ्चम्यास्तसिल्** ।५।३।७। पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् स्याद्वा॥

---

नलोपस्स्यादिति भावः। ***सर्वस्येति।** सर्वशब्दस्येत्यर्थः – स इत्ययमदन्तआदेशः। अनेकाल्त्वात्सर्वस्य दीति सप्तम्यन्तैकाल्ग्रहणात्तदादिविधिरित्याह – दादाविति। सर्वैकान्य इति वक्ष्यमाणसूत्रेण सर्वशब्दाद्दाप्रत्ययो विधीयते। ***पञ्चम्या इति।** किं सर्वनामबहुभ्यो द्व्यादिभ्य इत्यस्यात्राधिकारः। अनिर्दिष्टप्रकृतिकत्वात्। पञ्चम्या इति तद्विशेषणं तेन तदन्तविधिः। एकत्वमविवक्षितमित्याह – पञ्चम्यन्तेभ्य इति। निर्दिष्टस्यादेशा भवन्तीति परिभाषया पञ्चम्या एव तसिलादेशः। अनेकाल्त्वात्सर्वस्य पञ्चमीविभक्तेरेव तसिलादेशो यथा स्यात्। पञ्चम्यन्तेभ्यः किमादिभ्यो यथा न स्यात्तदर्थमत्र पञ्चम्या इत्यस्य ग्रहणम्। अन्यथा किं सर्वनामबहुभ्य इति पञ्चम्यन्तानामेवात्रानुवृत्तौ सिद्धायां किमनेन? एवञ्च किमादिभ्यो विहितायाः पञ्चम्यास्तसिलादेशस्स्यात् इति निष्कृष्टोऽर्थो लभ्यते। ननु किम् – ङस् – ङसस्तसिलादेशः। किमः कुत्वं कुतिहोरिति वक्ष्यमाणसूत्रेण कुतस् इति स्थिते स्थानिवद्भावेन तसिलो ङित्त्वात् घेर्ङितीति गुणे कोतः इति स्यात् इति चेन्मैवम्। क्वादेशस्यापि स्थानिवद्भावेन मान्तत्वात्। न च अनल्विधाविति निषेधः। घेर्ङितीति गुणस्य आदेशालाश्रयत्वेन स्थान्यलाश्रयत्वाभावात्। न च न पदान्तेति पदान्तविधित्वात्स्थानिवद्भावनिषेधो वाच्यः। अचः परस्मिन्निति स्थानिवद्भावस्यैव तेन निषेधात्। नन्वेवम् बहुत इत्यत्र घेर्ङितीति गुणो दुर्वारः इति चेत् सत्यम्। तर्हि पञ्चम्यास्तसिलिति सूत्रस्य पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल्प्रत्ययस्स्यात् स्वार्थे इत्यर्थो वाच्यः। न च पञ्चम्या इत्यस्यानर्थक्यम्। समर्थविभक्तेरवश्यवक्तव्यत्वात्। न च किमादिभ्य इति पञ्चमीनिर्देशेनैव पञ्चमीसमर्थविभक्तिलाभ इति वाच्यम् । किमादिभ्यः प्रातिपदिकेभ्य इति तसिल्प्रत्ययस्य किमादिभ्यः परत्र विहितत्वमेव निर्देशोऽभिधत्ते न तु विभक्तिमिति (किंशब्दात्तसिल्प्रत्यय इत्युक्तत्वेन किमः परत्वन्तसिलो लभ्यते एव। तस्मादित्युत्तरस्येति परिभाषितत्वात्। एतद्विभक्त्यन्तात्किमस्तसिलिति विशेषस्तु न लभ्यते। किम इति किंशब्दोत्तरपञ्चम्यास्तत्रैवोपक्षयात्सामर्थ्यस्य इति भावः। अपि च किम इत्यनेन किंशब्दस्वरूपमेव गृह्यते न त्वर्थ इति पञ्चम्यादिविभक्त्यर्थस्य सुतरामप्रतीतिरेव इति बोध्यम्) सस्येन परिजातः–तन्द्रादचिरापहृते इत्यादिषु तु निर्देशादेव समर्थविभक्तिलाभ इति व्याख्यातम्। सस्यादिप्रातिपदिकोत्तरविभक्त्यर्थस्यापि विवक्षितत्वादिति।

**१९५४। कु तिहोः** ।७।२।१०४। किमः कुः स्यात्तादौ हादौ च विभक्तौ परतः। कुतः। कस्मात्। यतः। ततः। अतः। इतः। अमुतः। बहुतः। द्व्यादेस्तु। द्वाभ्याम्॥ **१९५५। तसेश्च** ।५।३।८। किंसर्वनामबहुभ्यः परस्य तसेस्तसिलादेशः स्यात्। स्वरार्थं विभक्त्यर्थं च वचनम्॥

---

***कुतिहोः।** तिश्च ह् च तिहौ – तयोः तिहोरिति सप्तमी । अल्ग्रहणात्तदादिविधिः। तादौ हादाविति। कुतिहि इति सुवचम्। त् शब्दस्य हौ शब्दस्य च सप्तमी – ति – हि इति पृथक्पदे। इति – कु इत्ययमादेशः। अनेकाल्त्वात्सर्वस्य लक्ष्याणि दर्शयति कुत इत्यादीनि। किमः पञ्चम्यास्तसिलि तादिविभक्तिपरकत्वेन क्वादेशे निष्पन्नमिदम्। अष्टन आ विभक्ता वित्यतः विभक्ताविस्यस्यात्रानुवृत्तिः। तिहोरिति विभक्ताविस्यस्य विशेषणम्। तेन तदन्तविधौ प्राप्ते अपवादत्वात्तदादिविधिः। तादौ हादौ च विभक्ताविति। प्राग्दिशो विभक्तिरिति विभक्तिसञ्ज्ञाऽविधाने तसिलि किमः कुत्वन्न स्यादिति बोध्यम्। तसिलो विकल्पितत्वेन तदभावपक्षे कस्मादेवेति वाक्यम्। कस्मादेव कुत इति वृत्तिः। किम् ङसि तसिल् – इति प्रक्रिया। सुब्लुकि किम् तस् – कुत्वं कुतः। मूले तु कस्मादित्युदाहृतमेवेति तत्र शेषो बोध्यः। यद्वा–स्वार्थिकप्रत्ययानुदये विग्रहे कस्मात् इति वर्तते इत्यभिप्रायेण कस्मादित्येतावदेवोक्तमिति बोध्यम्। एवम् यस्मादेव। यतः। स्वार्थिकत्वात्तसिलादीनाम्। यद् ङसि तसिल् इति स्थिते – सुब्लुकि यद् तस् प्राग्दिशो विभक्तिरिति तसिलो विभक्तिसंज्ञावत्त्वात्। त्यदादीनाम इति यदो दकारस्याकारः – अतो गुणे इति पररूपम्। य तस् – ससजुषोरुः – विसर्गः यतः – य – तः इति स्थिते यस्येति चेत्यल्लोपो न शङ्क्यः। तादिप्रत्ययपरकत्वेन पूर्वस्य भत्वाभावात्। (तसिलि लकारस्स्वरार्थः। इकर उच्चारणार्थः। तन् इति शिष्यते।) तस्मादेव ततः। अस्मादेव अतः। एतच्छब्दात्पञ्चम्यन्तात्तसिल्। एतदोन् इत्यनादेशे – अन् तः। नलोपः प्रातिपदिकान्तस्य। अतः अस्मादेव इतः इदम् तस् – इदम इश् इतः। अमुष्मादेव अमुतः।अदस्–तस्–त्यदाद्यत्वम्। पररूपम् । अद तस् – अदसो से रिति मुत्वम् । अमुतः बहोरेव बहुतः। बहुशब्दस्य स्वार्थगतबहुत्वप्रयुक्तनित्य – बहुवचनानन्तत्वमिति बहुभ्य एव बहुत इति वा। ***तसेश्च।** पञ्चम्या इति सूत्रात्तसिलनुवर्तते। चकारो भिन्नक्रमः। तेनात्र तसिल आदेशत्वं सिद्धम्। तसेरिति न पञ्चमी। किन्तु षष्ठी। तेन अनुवृत्तेभ्यः किमादिभ्यः पञ्चम्यन्तेभ्यो नेदं विशेषणम्। विभिन्नविभक्तिकत्वात्। अतः – तस्यन्तेभ्यः किमादिभ्य इति नार्थः। ननु तसौ कृते तसिलि कृते वा अयमतः प्रतीत्यादावत इति रूपस्य सिद्धत्वात्किमनेन सूत्रेणेत्यत आह – स्वरार्थ विभक्त्यर्थञ्च वचनमिति लित्त्वप्रयुक्तस्स्वरः यथा स्यात्। किञ्च तः इत्यस्य विभक्तित्वं यथा स्यात् विभक्तिफलन्तु तसौ यतस्तत इत्यादिरूपसिद्धिरेव। अन्यथा प्रतियोगे पञ्चम्यास्तसिः। अयन्ततः प्रति। अत्र तद् – ङसि तसिः इति स्थिते – सुब्लुकि –

**१९५६। पर्यभिभ्यां च** ।५।३।९। आभ्यां तसिल् स्यात्॥ **सर्वोभयार्थाभ्यामेव**। परितः। सर्वत इत्यर्थः। अभितः। उभयत इत्यर्थः॥ **१९५७। सप्तम्यास्त्रल्** ।५।३।१०। कुत्र। यत्र। तत्र। बहुत्र॥ **१९५८। इतमो हः** ।५।३।११। त्रलोऽपवादः। इशादेशः। इह॥ **१९५९। किमोऽत्** ।५।३।१२। वाग्रहणमपकृष्यते। सप्तम्यन्तात्किमोऽद्वा स्यात्पक्षे त्रल्॥ **१९६०। क्वाति** ।७।२।१०५। किमः क्वादेशः स्यादति। क्व। कुत्र॥

---

तद् तसिः। तसेर्विभक्तिसंज्ञाभावेन (प्राग्दिशो विभक्तिरिति तसिप्रत्ययस्य प्राग्दिशीयेष्वपाठान्न विभक्तिसंज्ञा) तसौ परतः त्यदाद्यत्वं तदो न स्यात्। तत इति स्यादित्येतदर्थं तसेर्विभक्तिसंज्ञा वक्तव्येति विभक्त्यर्थन्तसिलादेश इति भावः । स्वरार्थमेव यदि तसेश्चेति सूत्रमुपन्यस्तं तर्हि प्रतियोगे पञ्चम्यास्तसिरिति सूत्रमेव। प्रतियोगे पञ्चम्यास्तसिल् इति सूत्रयित्वा प्रकृतसूत्रं त्यज्यतामिति शङ्कायां फलान्तरमाह – विभक्त्यर्थमिति तसि प्रकृतेः विभक्तिपरकत्वप्रयुक्तकार्यार्थमित्यर्थः। तसेर्विभक्तित्वार्थमिति वा। तसेस्तसिलादेशे तसिलो विभक्तित्वेन पूर्वस्य विभक्तिकार्यं स्यात् इति भावः । विभक्तौ परतः पूर्वस्य यत्कार्यं तद्विभक्तिकार्यम्) तसेश्चेत्यत्र अन्यतरस्यामिति नान्वेति। अन्वये सूत्रस्यैव वैयर्थ्यात्। पाक्षिके तसिल्प्रत्यये कृते तसिलभावे तसौ च कृते ततः ततः इति रूपद्वयसिद्धेः। ***परीति** आभ्यां तसिल्प्रत्ययस्स्यात्स्वार्थे। परि – अभि – इत्यनयोरव्ययत्वेन न समर्थविभक्तिः। सर्वोभयार्थाभ्यामेव। सर्व इति उभय इति च अर्थौ ययोस्ताभ्यामित्यिर्थः। यथासंख्यात्। सर्वार्थकात्परेः उभयार्थकादुभेरिति। ***सप्तमीति** सप्तम्यन्तेभ्यः किमादिभ्यः स्वार्थे त्रल्प्रत्ययः। त्रलि ल इत्। त्र इत्यदन्तस्य शेषः। तद्धितश्चासर्वविभक्तिरित्यत्र तसिलादिपरिगणनात्तसिलाद्यन्तान्यव्ययानि । तसिलन्तं पञ्चम्यर्थेऽव्ययम्। पञ्चम्यास्तसिल्विधानात्। त्रलन्तन्तु सप्तम्यर्थे सप्तम्यन्तस्य योऽर्थस्तस्मिन्नेव त्रलो विधानात्। त्रलन्तस्य सप्तम्यन्तार्थ एवेति। ***इदम** इति पञ्चमी। इदम्शब्दात्सप्तम्यन्तात् (सप्तम्या इति पूर्वसूत्रादनुवर्तते) हप्रत्ययस्स्यात्। इशादेशः। इदम इशिति सूत्रेणेति शेषः। ***किमः** अत् इति छेदः। किम इति पञ्चमी। तेन अदित्ययम्प्रत्यय एव। तस्मादित्युत्तरस्येति परिभाषोपस्थितेः। प्रत्ययो हि परस्सन्भवति। किम इत्यस्य षष्ठ्यन्तत्वे तु अदित्ययमादेशस्स्यात्। षष्ठीस्थाने योगेति परिभाषोपस्थितेः। सप्तम्या इत्यत्रानुवर्तते। वा ग्रहणमपकृष्यते। वा ह च छन्दसीति परसूत्रादिति शेषः। ***क्वाति।** किम इत्यनुवर्तते। किमः क इति सूत्रात् अति प्रत्यये परतः किमः क्वादेशः क्व इत्यदन्त आदेशः। अनेकाल्त्वात्सर्वस्य। किम्। ङि – अत् इति स्थिते सुब्लुकि किम् अत् क्वादेशः। क्व अत् यस्येति चेत्यल्लोपः क्व अत्प्रत्यये तकार इत् । अ इति शिष्यते। ननु कुतिहोरिति सूत्रम् कुत हि इति सूत्र्यताम्। त् च – अच– ह्च एषां समाहारः तह् तस्मिन् तहि – तदादिविधिना तादौ – अकारादौ

**१९६१। वा ह च छन्दसि** ।५।३।१३। कुह स्थः कुह जग्मथुः॥ **१९६२। एतदस्त्रतसोस्त्रतसौ चानुदात्तौ** ।२।४।३३। अन्वादेशविषये एतदोऽश् स्यात्स चानुदात्तस्त्रतसोः परतः तौ चानुदात्तौ स्तः। एतस्मिन् ग्रामे सुखं वसामः। अथोऽत्राधीमहे। अतो न गन्तास्मः॥ **१९६३। इतराभ्योऽपि दृश्यन्ते** ।५।३।१४। पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते॥

---

– हादौ च परतः किमः कु इत्ययमादेशः। किम् – अ – कुअ– यण् क्व इति रूपसिद्धिरिति चेत् – मैवम् किम्शब्दाद्द्वितीयैकवचने अमि कृतेऽपि अकारादिप्रत्ययपरकत्वेन किमः क्वादेशे कु अम् – यण् – क्वमित्यनिष्टापत्तेः। अत एव क्वातीति सूत्रे अतीति तान्तनिर्देशः। ननु तर्हि कुतिह्यति इति सूत्र्यताम्। तादौ हादौ प्रत्यये अतिप्रत्यये च परतः किमः कुरिति व्याख्यानलाभान्न दोष इति। न च कुतिहोरिति सूत्रात्कुतिह्यतीति सूत्रणे विपरीतगौरवमिति वाच्यम्। क्वातीति सूत्राभावेन लाघवसद्भावात् – इति चेत् – मैवमपि। कु अ इति स्थिते यणम्बाधित्वा ओर्गुण इति गुणे सति अवादेशे कव इत्यनिष्टरूपापत्तेः। (उवर्णान्तस्य भस्य गुणस्स्यात्तद्धिते इति। अतस्तद्धितत्वेन यचिभमिति पूर्वस्य भत्वेन च अतिपूर्वस्योवर्णान्तस्य गुणः) ***वाह च छन्दसि** ५–३–१३। सप्तम्यन्तात्किमो हप्रत्ययो वा स्याच्छन्दसि। चात्त्रलादिकम्। किम् – ह – इति स्थिते। कुतिहोरिति हादिप्रत्ययपरकत्वेन क्वादेशः। कुह छन्दोविषयमपि प्रकृतत्वादिदमत्र व्याख्यातम्। क्व–कुत्र – कुह – इति रूपत्रयं छन्दसि। कस्मिन्नेवेति विग्रहः। स्वार्थिकत्वादेषाम्प्रत्ययानाम्। ***एतद इति।** इदमोऽन्वादेशे इति पूर्वसूत्रादन्वादेशे इत्यस्यात्रानुवृत्तिः। अश् इत्यस्य च – अनुदात्त इत्यस्य च – तौ च त्रतसौ च – चकारस्सन्नियोगशिष्टत्वाय। तेन यदा अश् तदैव त्रतसोरनुदात्तत्वम्। यदा त्वन् तदा नानुदात्तत्वमिति लभ्यते। त्रतसावित्यत्र त्यतसा तसिलेव गृह्यते न तु तसिः। त्रसाहचर्यात्। एतस्मिन् ग्रामे इति। वेति त्वनुवर्तते एवेत्युक्तत्वेन तद्धितप्रत्ययानां विकल्पितत्वात्। त्रलभावपक्षे वाक्ये सप्तम्यन्तस्य दर्शनं सम्भवति। अत्र ग्रामे इत्यपि वक्तुं शक्यम्। परन्तु एतदोनादेशे निष्पद्यते अत्रेति सशब्दः। अन्वादेशे तु अत्राधीमहे – अतो न गन्तास्म इत्यत्र एतदोऽशादेश इति विवेकः। स्वरे एव भेदः। न तु रूपे इति बोध्यम्। ***दृश्यन्ते।** प्राचीनप्रयोगेष्विति शेषः। प्राचीनैश्च भवदादिशब्दसम्बन्धेनैव इतरविभक्त्यन्तात्तसिलादयः प्रयुक्ता इति कृत्वा वदति। दृशिर्ग्रहणाद्भवदादियोगे एवेति। स भवानित्यर्थे तत्रभवानिति। प्रथमान्तात्त्रल्। एवं ततो भवानित्यपि। तत्रभवानित्यादयो हि एकपदत्वेन व्यवह्रियन्ते। अतस्तदानुगुण्येन स भवानित्युदाहृतं विग्रहवाक्यम्। एवं तं भवन्तमित्यपि। तेन भवतेत्यर्थे ततो भवता, तत्रभवता, तस्मै भवते। ततो भवते इत्यादि। एवं दीर्घायुरित्यादि। भवच्छब्दयोगे यथा तथा दीर्घायुरित्यादिशब्दयोगेऽपि द्रष्टव्यमित्यर्थः। स दीर्घायुः। ततो दीर्घायुस्तत्र दीर्घायुः – स देवानांप्रियः – तत्र देवानांप्रियः – ततो देवानांप्रियः

**दृशिग्रहणाद्भवदादियोग एव**॥ सभवान्। ततोभवान्। तत्रभवान्। तंभवन्तम्। ततोभवन्तम्। तत्रभवन्तम्। एवं दीर्घायुः। देवानांप्रियः। आयुष्मान्॥ **१९६४। सर्वैकान्यकिंयत्तदः काले दा** ।५।३।१५। सप्तम्यन्तेभ्य एभ्यः कालार्थेभ्यः स्वार्थे दा स्यात्। सर्वस्मिन्काले सदा। सर्वदा। एकदा। अन्यदा। कदा। यदा। तदा। काले किम्। सर्वत्र देशे॥ **१९६५। इदमोर्हिल्** ।५।३।१६। सप्तम्यन्तात्काले इत्येव। हस्यापवादः। अस्मिन्काले एतर्हि। काले किम्। इह देशे॥ **१९६६। अधुना** ।५।३।१७। इदमः सप्तम्यन्तात्कालवाचिनः स्वार्थेऽधुनाप्रत्ययः स्यात्। इश्। 'यस्य-३११' इति लोपः। अधुना॥**१९६७। दानीं च** ।५।३।१८। इदानीम्॥ **१९६८। तदो दा च** ।५।३।१९। तदा। तदानीम्। **तदो दावचनमनर्थकं विहितत्वात्**॥

---

– स आयुष्मान् – तत आयुष्मान् – तत्रायुष्मान् इत्यादि। ***सर्वेति।** सर्व एक अन्य किम् यत् तद् एतेषां समाहारस्य काले कालार्थे वर्तिनः कालदाचिन इत्यर्थः। स्वार्थे दाप्रत्ययस्स्यात्। त्रलोपवादः – सर्वस्मिन्नेव सर्वदा – सर्वादयोऽमी सर्वनामत्वेन सर्ववस्तुवाचका इति विवक्षया यदाकालवाचित्वन्तदा दाप्रत्ययः। विवक्षां दर्शयितुं विग्रहे कालशब्दः प्रयुक्तो मूले। सर्वस्मिन् काले सर्वदा इति। एवम् एकस्मिन् अन्यस्मिन् कस्मिन् यस्मिन् तस्मिन् काले एकदा अन्यदा कदा यदा तदा इति। सर्वशब्दात्काल-वाचिनस्सप्तम्यन्ताद्दाप्रत्यये कृते सर्वस्य सोऽन्यतरस्यां दीति सभावो विकल्पेन सदा इत्यपि रूपम्। दा प्रत्ययाभावे सर्वस्मिन् काले इत्यादीनि वाक्यान्येव। सर्वत्रेति तु न भवति। त्रलोऽपवादत्वाद्दायाः। कालभिन्नार्थे तु दायाः प्रवृत्तिरेव नास्तीति त्रलि सर्वत्र इत्यादि। ***अधुना** पूर्वसूत्रादिदम इति तसोऽपि पूर्वस्मात्काले इति सप्तम्या इति सूत्रात्सप्तम्या इति चात्रानुवर्तन्ते। इदम् अधुना इति स्थिते– इदम इश् – इ – अधुना – यस्येति लोपः – अधुना – सपदि पदमुदीतं केवलः प्रत्ययो यदिति। इयत्पदमिव अधुना पदमपि केवलः प्रत्यय एव। अस्य व्याख्यानान्तरम्। एतर्हीत्यर्थे अधुनेति निपात्यते। इदमोशादेशः। धुना च प्रत्ययो निपात्यते इति। दिमो ध्वादेशः। ना चप्रत्यय इत्यपि वक्तुं शक्यम्। अधु इत्युदन्तोऽयमादेशः। अनेकाल्त्वात्सर्वस्य – अधुना – अस्मिन् व्याख्याने – इदम इश् यस्येति लोपः इति प्रक्रिया नास्तीति लाघवं गुणः ***दानीञ्च।** इदमोर्हिलधुनादानीमिति न सूत्रितम्। उत्तरसूत्रे दानीमोऽनुवृत्तिर्यथा स्यात्। हिलधुनयोर्माभूदिति। ***तदो दा** च – चाद्दानीम्। ननु सर्वैकान्य किं यत्तदः काले दा इति तदो दा विहित एव। व्यर्थोऽत्र दाविधिरिति शङ्कायां सत्यमित्युत्तरमाह। न च सूत्रमेव व्यर्थमिति वाच्यम्। दानीमर्थमावश्यकत्वात्। ननु तदः इति सूत्रयित्वा दानीममनुवर्त्य तदोदानीम्स्यादिति व्याख्याने परत्वाद्दां बाधित्वा दानीमेव स्यादिति दाग्रहणं कृतमिति चेन्मैवम्। तदश्च इति सूत्रयित्वा चकारेण दाया बाधा माभूद्दानीमस्सकाशादिति वक्तुं शक्यत्वात् – वस्तुतस्तु तदः इत्येवालम् सर्वैकादिषु तदः पाठवैयर्थ्यान्यथानुपपत्त्या दापि स्यादेवेति।

**१९६९। अनद्यतनेर्हिलन्यतरस्याम्** ।५।३।२१। कर्हि। कदा। यर्हि। यदा। तर्हि। तदा। एतस्मिन्काले एतर्हि॥ **१९७०। सद्यः परुत्परार्यैषमः परेद्यव्यद्य पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः** ।५।३।२२। एते निपात्यन्ते॥ **समानस्य सभावो द्यश्चाहनि**॥ समानेऽहनि सद्यः॥ **पूर्वपूर्वतरयोः पर उदारी च संवत्सरे**॥ पूर्वस्मिन्वत्सरे परुत्। पूर्वतरे वत्सरे परारि॥ **इदम इश् समसण् प्रत्ययश्च संवत्सरे**। अस्मिन्संवत्सरे ऐषमः॥ **परस्मादेद्यव्यहनि**॥ परस्मिन्नहनि परेद्यवि॥ **इदमोऽश् द्यश्च**॥ अस्मिन्नहनि अद्य॥

---

यद्वा सर्वैकादिसूत्रे तदन्त्यक्त्वा प्रकृतसूत्रं यथाश्रुतमेवास्तु – तदो दाप्रत्ययस्स्यात् चाद्दानीमिति व्याख्यानेन तदा तदानीमिति रूपद्वयसिद्धिरिति। तस्मात् सर्वादिसूत्रे तद्ग्रहणं – प्रकृतसूत्रे दाग्रहणं वा। उभयोरन्यतरच्छक्यमकर्तुमिति तद् इत्यस्य द्विमात्रात्मकत्वात्। (तकारोऽर्धमात्रः। दकारश्चार्धमात्रः। तकारोपर्यकार एका मात्रा इति।) दा इत्यस्य सार्धद्विमात्रात्मकत्वात्। (आकारो द्विमात्रं दकारोऽर्धमात्र इति) अर्धमात्रालाघवमपि पुत्रोत्सवं मन्यन्ते वैयाकरणा इति। तद्ग्रहणप्रत्याख्यानात् दाग्रहणप्रत्याख्यानमेव लाघवहेतुत्वेन वरमिति इदं सर्वमभिसंधाय दावचनमनर्थकमित्युक्तं मूलकारेण। एतावता तदश्चेति तद इत्येव वा सूत्रस्य न्यासः सुवच इति सिद्धम्। ***अनद्यतने** इति। **अतीताया रात्रेः पश्चार्धेन आगामिन्याः पूर्वार्धेन च सहितो दिवसोऽद्यतनः**। स न भवतीत्यनद्यतनः कालः। तस्मिन्नर्थे वृत्तिभ्यः किं सर्वनामबहुभ्यो द्व्यादिभ्यः स्वार्थे र्हिल् प्रत्ययो वा स्यात् – र्हिलभावपक्षे सर्वैकादिभ्यो दा – तदितरेभ्य स्त्रल् – इदमोधुनापीति बोध्यम्। किं यत्तदिदम्भ्य एव र्हिल्प्रत्ययः प्रायशः प्रयुज्यते इतिकृत्वा तेभ्यश्चतुर्भ्य एव र्हिलमुदाहरति। एतर्हि – पक्षे – अत्र र्हिलि इदमो नायमेतादेशः किन्तु एतदः एतदोनिति सूत्रस्य योगविभागात्। र्हिलभावे तु अन् – नलोपः। अत्र – अस्मिन्सूत्रे सर्वैकान्येत्यनुवर्त्य व्याख्याने तु नेदं सिद्ध्यतीति बोध्यम्। इदमोर्हिलि प्राप्ते अन्येभ्यो प्राप्ते आरब्धत्वादुभयत्र विभाषेयम्। ***सद्य इति**। सद्य इत्यादीनां निपातानामर्थव्यवस्थादिदर्शनार्थं वार्तिकानि – समानस्येत्यादीनि। समानशब्दात्सप्तम्यन्तादहनीत्यर्थे द्यस्प्रत्ययः समानस्य सादेशश्च इत्यर्थः। ***पूर्वेति**। पूर्वपूर्वतरआभ्यां सप्तम्यन्ताभ्यां सवत्सरे इत्यर्थे यथासंख्यम् उत् – आरि इति प्रत्ययौ। अनयोः पर इत्यदन्तादेशश्च। पर – उत् यस्येति लोपः – परुत्। पर आरि यस्येति लोपः परारि। अरिप्रत्यये कृते पररीति स्यात्। परुदादीनि सप्तम्यन्तार्थाव्ययानि ***इदम इति** इशादेशः। **समसणि** णित्त्वं वृद्ध्यर्थम्। उपधाभूतोकार उच्चारणार्थः। समस् इसमस् – वृद्धिः। प्रत्ययस्थत्वात्सस्य षत्वम् ऐषमः इति सान्तमव्ययम्। ***परस्मादिति**। सप्तम्यन्तात्परशब्दादहनीत्यर्थे एद्यविप्रत्ययः। पर एद्यवि – यस्येति लोपः परेद्यवि। ***इदम इति**। सप्तम्यन्तादिदंशब्दादहनि

**पूर्वादिभ्योऽष्टभ्योऽहन्येद्युस्**॥ पूर्वस्मिन्नहनि पूर्वेद्युः। अन्यस्मिन्नहनि अन्येद्युः। उभयोरह्नोरुभयेद्युः॥ **द्युश्चोभयाद्वक्तव्यः**॥ उभयद्युः॥ **१९७१। प्रकारवचने थाल्** ।५।३।२३। प्रकारवृत्तिभ्यः किमादिभ्यस्थाल् स्यात्स्वार्थे। तेन प्रकारेण तथा। यथा॥ **१९७२। इदमस्थमुः** ।५।३।२४। थालोऽपवादः॥ **एतदोऽपि वाच्यः**॥ अनेन एतेन वा प्रकारेण इत्थम्॥ **१९७३। किमश्च** ।५।३।२५। केन प्रकारेण कथम्। ॥ **प्राग्दिशीयानां विभक्तिसंज्ञानां पूर्णोऽवधिः**॥ **तद्धितेषु प्रगिवीयाः १९७४। दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः** ।५।३।२७। सप्तम्याद्यन्तेभ्यो दिशिरूढेभ्यो दिग्देशकालवृत्तिभ्यः स्यार्थेऽस्तातिः प्रत्ययः स्यात्॥

---

द्यप्रत्ययः। इदमोशादेशश्च। शित्त्वात्सर्वादेशः। द्य इत्यदन्त आदेशः। अद्य। अकारान्तमव्ययम्। ***पूर्वादिभ्यस्सप्तम्यन्तेभ्योऽष्टभ्यः** अहनीत्यर्थे एद्युस् प्रत्ययः। पूर्व – अन्य – अन्यतर – इतर – अपर – अधर – उभय उत्तर इत्यष्टौ प्रकृतयः। ***द्युश्चेति।** *सूत्रोक्तनिपातनातिरिक्तकार्यार्थमिदं वार्तिकम्। उभयादहनि द्युस् इति प्रत्ययश्च वक्तव्यः। उभयद्युरिति न हि सूत्रे निपातितम्। अतोऽतिरिक्तमेवेदं वार्तिकम्। ***प्रकारेति।** प्रकारवचने इति सप्तमीत्वमेकत्वञ्च अविवक्षितम्। तेन प्रकारवचनेभ्य इत्यर्थः। प्रकारं वदन्तीति प्रकारवचनाः। तेभ्यः प्रकारवृत्तिभ्यः। प्रकारार्थवाचिभ्य इति यावत्। किं सर्वनामेति सूत्रस्याधिकृतत्वेनान्वयः। तदेतदाह किमादिभ्य इति। समर्थविभक्तिस्तु तृतीया। अभिधानस्वाभाव्यादिति बोध्यम्। *इदम इति। प्रकारवचने इत्यत्रानुवर्तते। थमुप्रत्यये उकारो मकारपरित्राणार्थः। थम् इति शिष्यते। इदम् – थम् – एतेतौरथोरिति थादौ इतादेशः। इत् – थम् – जश्त्वं –इद्थम्। एवम् एतद् थम् इदादेशो जश्त्वं च इद्धम्। ***किमश्च।** अत्र प्रकारवचने थमुः। इत्यनयोरावृत्तिः। किम् थम् – किमः कः। कथम् इति।

**इति प्राग्दिशीयानां पूर्णोऽवधिः**

**दिक्छब्देभ्य इति**। दिशां शब्दाः दिक्शब्दाः। शश्छोटीति शस्य छत्वम्। दिक्छब्दाः। दिशामिति शेषे षष्ठी। वाच्यवाचकभावसम्बन्धोऽत्र गम्यते। दिग्वाचकाश्शब्दा इत्यर्थः। शब्दाश्च द्विविधाः। यौगिका रूढाश्चेति। इमे हि दिक्छब्दा रूढा एव। न तु यौगिकाः। व्याख्यानात्। दिग्देशकालवृत्तित्वरूपविशेषणधर्मासम्भवाच्च यौगिकेषु इत्याह दिशि रूढेभ्य इति। रूढ्या दिग्बोधकैरित्यर्थः। तच्च दिगर्थाभिधानं न साम्प्रतिकम्। सम्प्रति द्विग्वाचकेषु दिग्वृत्तित्वमेव सम्भवति न तु देशकालवृत्तित्वमिति। तस्मात् रूढ्या ये दिशमुक्तवन्तस्तेऽत्र दिक्छब्दशब्देन शब्द्यन्ते। सप्तमी पञ्चमी प्रथमाभ्य इत्येतत् – दिक्छब्देभ्य इत्यस्य

**१९७५ पूर्वाधरावराणामसिपुरधवश्चैषाम्** ।५।३।३९। एभ्योऽस्तात्यर्थेऽसिप्रत्ययः स्यात्तद्योगे चैषां क्रमात्पुर्, अध्, अव्, इत्यादेशाः स्युः॥ **१९७६। अस्ताति च** ।५।३।४०। अस्तातौ परे पूर्वादीनां पुरादयः स्युः।

---

विशेषणम्। तेन तदन्तविधिः। सप्तम्याद्यन्तेभ्यः – सप्तम्याद्यन्यतम विभक्त्यन्तेभ्य इत्यर्थः। दिग्देशकालेष्विति सप्तमीबलाद्वर्तमानत्वस्याक्षेपः दिग्देशाकालवृत्तिभ्य इति। अर्थेशब्दस्य वृत्तिर्वाचकत्वसम्बन्धेन। दिग्देशकालार्थवाचिभ्य इत्यर्थः। प्रकृत्यर्थातिरिक्तार्थाकथनेन स्वार्थे इति। अस्तातविकारस्तकारपरित्राणार्थः। अस्तात् इति शिष्यते। ***पूर्वाधरेति।** पूर्वाधरावराणामिति पञ्चम्यर्थे षष्ठी पूर्वाधरावरेभ्य इत्यर्थः। एषामिति सर्वनाम्ना प्रकृताः पूर्वादयः परामृश्यन्ते, पूर्वाधरावराणामित्यर्थः। एषामिति पदन्तु न पूर्वाधरावराणामिति पदस्य विशेषणमिति भ्रमितव्यम्। एषामित्यस्य नैरर्थक्यात्। असिप्रत्ययविधानाय पञ्चम्यन्तप्रकृत्यनिर्देशापत्तेश्च (प्रकृतेः परस्सन् प्रत्ययो विधीयते इति प्रकृतिनिर्देशाय पञ्चम्यन्तं पदं सूत्रे आवश्यकमिति भावः) पूर्वसूत्रादस्तातिरनुवर्तते सप्तम्यन्तत्वेन विपरिणमते च। तेन च अस्ताताविति पदेन लक्षणया तदर्थो बोध्यते। (लक्षणाबीजन्तु बाध एव– अस्तातौ प्रत्यये परतः असिप्रत्ययोदयासंभव एवात्र बाधः) अस्तात्यर्थे इत्यर्थः। यस्मिन्नर्थे अस्तातिर्विधीयते तस्मिन्नर्थे इत्यर्थः। न च स्वार्थे असिरित्येव वक्तव्यम्। अस्तातेरपि स्वार्थे विहितत्वादिति वाच्यम्। दिग्देशकालवृत्तित्वं दिशि रूढत्वमिति विशेषणविशिष्टप्रकृतिभ्य एव स्वार्थे अस्तातिर्विहितः न त्वन्यप्रकृतिभ्य इति प्रकृतिविशेषणद्वयलाभार्थमस्तात्यर्थ इत्युक्तम्। तेन दिगादिवृत्तिभ्यः पूर्वादिभ्यस्स्वार्थेनासिप्रत्यय इति सिद्धम्। दिशि रूढेभ्यः दिग्देशकालवृत्तिभ्यः पूर्वादिभ्यः स्वार्थे असिप्रत्यय इति निष्कृष्टार्थः। पूर्वादिभ्य इत्यस्य विशेष्यस्य दिशि रूढेभ्य इति विशेषणं तु न व्यावर्तकं किन्तु स्वरूपलक्षकमेवेति बोध्यम्। दिग्देशकालवृत्तिभ्यः पूर्वादिभ्यस्स्वार्थे असिरित्येवार्थस्सुवचः। सूत्रे असि इत्यविभक्तिको निर्देशः असिरित्यर्थः इकारस्सकारपरित्राणार्थः। अस् इति शिष्यते। पुर् – अध् – अव् – एषामितरेतरद्वन्द्वः पुरधवः। (पुरधव् – पुरधवौ – पुरधव इति वान्तश्शब्दः) प्रकृतीनामादेशानामपि प्रतिसंख्यावत्त्वाद्यथासंख्यामित्याद्याः क्रमादिति मूले – चकारस्सन्नियोगशिष्टत्वाय तेन यदा असिस्तदा पुरादय आदेशा भवन्ति न त्वस्ताद्यादाविति सिद्धम्। दिशो दशेति पक्षे अधरशब्दोऽपि दिशि रूढ एव प्रागादयश्चतस्रः – विदिशाश्चतस्रः – ऊर्ध्वाधो दिशौ द्वे इति दिशो दश। अधोदिशि अधरशब्दो रूढः अष्टैव दिश इति पक्षे अधरशब्दो दिशि दक्षिणे रूढ इति बोध्यम्। दिशो दशेति पक्ष एव प्रबल इति स एवात्र गृह्यते। अवरशब्दः पक्षद्वयेति दक्षिणदिशि रूढः। पूर्वशब्दः प्राग्दशि ***अस्ताति च।** अस्ताच्छब्दात्सप्तमी। अस्तातिप्रत्ययगतेकारे इत्संज्ञया लुप्ते यच्छिष्यते तस्य तान्तस्य प्रत्ययस्येह निर्देशः। अस्तात् इति ततस्सप्तम्याम् ङौ परतः अस्तात् इ – भत्वान्न जश्त्वम्, अस्ताति – अत्र पुरधवश्चैषामित्यस्यानुकर्षणार्थश्चकारः। असि योगे अस्तातियोगे च पूराद्यादेशविधानात् अस्य स्तात्योर्वैकल्पिकत्वम् ज्ञायते अन्यथा

पूर्वस्यां पूर्वस्याः पूर्वा वा दिक् पुरः। पुरस्तात्। अधः। अधस्तात्। अवः। अवस्तात्॥ **१९७७। विभाषावरस्य** ।५।३।४१। अवरस्यास्तातौ परे व् स्याद्वा। अवस्तात्। अवरस्तात्। एवं देशे काले च। दिशिरूढेभ्यः किम्। ऐन्द्र्यां वसति। सप्तम्याद्यन्तेभ्यः किम्। पूर्वं ग्रामं गतः। दिगादिवृत्तिभ्यः किम्। पूर्वस्मिन् गुरौ वसति। 'अस्ताति च १९७६' इति ज्ञापकादसिरस्तातिं न बाधते॥ **१९७८। दक्षिणोत्तराभ्यामतसुच्** ।५। ३।२८। अस्तातेरपवादः। दक्षिणतः। उत्तरतः॥ **१९७९। विभाषा परावराभ्याम्** । ५।३।२९। परतः। अवरतः। परस्तात्। अवरस्तात्॥

---

अस्तात्यपवादत्वेन असौ कृते अस्तातिपरकत्वाभावादस्ताति चेति सूत्रं निर्विषयं स्यात्। वेति त्वनुवर्तते । एवेत्युक्तत्वेन स्वार्थिकानामपि तद्धितानां वैकल्पिकत्वेन तद्धिताभावपक्षे विभक्त्यन्तमेषां रूपमपि भवति। तस्मात् सप्तम्याद्यन्तम्। अस्यन्तम् अस्तात्यन्तञ्चेति रूपत्रयम् पूर्वस्याम् पुरः पुरस्तात् ***पूर्वस्याः–** पूर्वा, पुरः, पुरस्तात् इति । एवमधरस्यामित्याद्यूह्यम्। ***विभाषेति।** अस्ताति चेति सूत्रेण अवरस्य अस्तातौ नित्यमवादेशे प्राप्ते आरब्धत्वात्प्राप्तविभाषेयम्। पूर्वाधरसूत्रादौ इत्ययमत्रानुवर्तते। ऐन्द्यामिति। इन्द्रस्येयमैन्द्री। तस्येदमित्यणि रूपम्। इन्द्रः प्रागधिपतिरिति। तस्येयम्। तत्स्वामिकेयम्। (स्वस्वामिभावसम्बन्धे गम्यमाने शेषे षष्ठी) इति योगबलादैन्द्रीपदेन पूर्वदिगभिधीयते। न तु पूर्वदिशि रूढोऽयमिति सप्तम्यन्तादैन्द्रीशब्दान्नास्तातिः इति बोध्यम्। पूर्वं ग्राममिति दिशि रूढोऽपि देशवृत्तिरप्ययं पूर्वशब्दः द्वितीयान्त इति नास्मादस्तातिः। पूर्वस्मिन्गुराविति। दिगावृत्तिर्नायं पूर्वशब्दः किन्तु मनुष्यवृत्तिः। यद्यपि पूर्वशब्दः यत्किञ्चित्प्रतियोगिकं पूर्वत्वमेवाभिधत्ते। यथा – शिवः केशवात्पूर्वः अंगाद्वंगो देशः पूर्वः। ग्रीष्माद्वसन्तः पूर्वः इत्यादि। तथाऽपि यः पूर्वस्स दिग्देशकालान्यतमश्चेत्तर्हि तद्वृत्तित्वं पूर्वशब्दस्य वर्तते। यथा पूर्वस्यां दिशि – पूर्वस्मिन् देशे – पूर्वस्मिन् काले इति। शिवः केशवात्पूर्व इत्यत्र तु यः पूर्वस्स शिवः न दिगाद्यन्यतमः। किन्तु देव एव। अङ्गाद्वङ्गः पूर्व इत्यत्र तु यः पूर्वस्स वङ्गो देश एवेति ततोस्तातिस्स्यादेवेति बोध्यम्। असिरस्तातिन्न बाधते। न च अस्तातिरसिं बाधते एवेति वाच्यम्। अस्तात्यपेक्षया असिः परः। पूर्वादीनां त्रयाणामेव असेर्विधानात्। विशेषविहितश्चेति असेर्बलवत्वात् ***दक्षिणेति** अत्र दिक्छब्देभ्य इति सूत्रं सर्वमनुवर्तते । अस्ताति विना अत सुचि च इत्। उकार उच्चारणार्थः । अतस् इति शिष्यते अतसुचि अवरस्य नावादेशः । अवादेशस्य अस्य स्तातिसन्नियोगशिष्टत्वात्।

**१९८०। अञ्चेर्लुक्** ।५।३।३०। अञ्चत्यन्ताद्दिक्शब्दादस्तातेर्लुक् स्यात्॥ 'लुक्तद्धितलुकि १४०८' ॥ प्राच्यां प्राच्याः प्राची वा दिक् प्राक्। उदक्। एवं देशे काले च॥ **१९८१। उपर्युपरिष्टात्** ।५।३।३१। अस्तातेर्विषये ऊर्ध्वशब्दस्योपादेशः स्याद्रिल्रिष्टातिलौ च प्रत्ययौ॥ उपरि उपरिष्टाद्वा वसति आगतो रमणीयं वा॥ **१९८२। पश्चात्** ।५।३।३२। अपरस्य पश्चभाव आतिश्च प्रत्ययोऽस्तातेर्विषये॥ **१९८३। उत्तराधरदक्षिणादातिः** ।५।३।३४। उत्तरात्। अधरात्। दक्षिणात्॥

---

***अञ्चेर्लुक्।** अत्र दिक्छब्देभ्य इति सर्वसूत्रान्वयः। अस्तातिरित्यस्य षष्ठयन्तत्वेन विपरिणामः अञ्चगतिपूजनयोरिति धातोः इक्श्तिपौ धातुनिर्देशे इति इका निर्देशः। अञ्चिः। ततः पञ्चमी – अञ्चेः विशेषणत्वात् तदन्तविधिः। अञ्चत्यन्तादिति । अञ्चत्यन्तेभ्यो दिक्छब्देभ्य इत्यर्थः। अञ्चेरित्येकवचननिर्देशात्तदानुगुण्येन मूले अञ्चत्यन्ताद्दिक्छब्दादित्युक्तम्। दिक्छब्दादस्तातेः दिक्छब्दात्परस्य अस्तातेरित्यर्थः। अञ्चत्यन्ता दिक्छब्दाः – प्राची प्रतीची अवाची उदीची इत्येते। सप्तम्याद्यन्तेभ्य एतेभ्यो स्ताति लुकि लुक्तद्धितलुकीति स्त्रीपत्ययस्य (उगितश्चेति ङीपः) लुक् – प्राच् इत्यादि। चोः कुः – प्राक् – अवाक् – इत्यादि। अस्तात्यन्तरूपवल्लुगन्तरूपमप्यव्ययमेव प्राक् इति प्राच्यामित्यर्थे अव्ययम्। अत एव मया प्रागिदम् दृष्टमित्यादिषु प्राक् पूर्वस्मिन् काले इत्यर्थः। अस्तातेस्तद्धितस्य वैकल्पिकत्वेन तदभावपक्षे प्राच्याम् दिशि – प्राचि देशे – प्राचि काले इति भवति। अस्तात्यविधाने अस्तातिलुकि च रूपभेदसद्भावादस्तातिलुग्विधिस्सार्थक एवेति बोध्यम्। ***उपरीति।** अस्तातेर्विषये इमौ निपात्येते इति शेषः रिष्टातिलि इकार उच्चारणार्थः लकास्स्वरार्थः। रिष्टात् इति शिष्यते । उपरि – उपरिष्टाद्वा वसति – ऊर्ध्वकाले ऊर्ध्वदिशि ऊर्ध्वदेशेव वसतीत्यर्थः ऊर्ध्वकाले वसतीत्यत्र ऊर्ध्वकालस्य भविष्यत्कालत्वेन वत्स्यतिक्रिया यद्यपि सुसङ्गता तथाऽपि वर्तमानसामीप्ये वर्तमानवद्वेति वर्तमानकालनिर्देशः। आगतः उपरि उपरिष्टाद्वा आगतः – ऊर्ध्वदेशात् ऊर्ध्वदिशः ऊर्ध्वकालाद्वा आगत इत्यर्थः । रमणीयं वा – उपरि उपरिष्टाद्वा रमणीयं ऊर्ध्वदेशः ऊर्ध्वकालः ऊर्ध्वदिग्वा रमणीय इत्यर्थः। रमणीयमिति सामान्येन नपुंसकम्। ***पश्चात्** पश्चिमायां दिशि पश्चिमायाः दिशः पश्चिमा दिक् इत्यर्थत्रये पश्चादिति निपात्यते। एव देशकालयोरपि अर्थत्रये पश्चान्निपात्यते इति बोध्यम्। दिग्देशकालवृत्तेसप्तम्याद्यन्तादपरशब्दात्स्वार्थे आतिप्रत्ययः। अपरस्य पश्चादेशः च निपात्यते इति निष्कर्षः। ***उत्तरेति** अस्तातिं विना दिक्छब्देभ्य इति सूत्रं सर्वमत्रान्वेति। फलाभावात् दिक्छब्देभ्य इति पदमपि नान्वेतीति वा। सप्तम्याद्यन्तेभ्यः उत्तरादिभ्यः स्वार्थे आति प्रत्ययः। आतौ इकारस्तकारपरित्राणार्थः। उत्तरस्यामेवोत्तरात् अव्ययमिदम्।

**१९८४। एनबन्यतरस्यामदूरेऽपञ्चम्याः** ।५।३।३५। उत्तरादिभ्य एनब्वा स्यादवध्यवधिमतोः सामीप्ये पञ्चम्यन्तं विना। उत्तरेण। अधरेण। दक्षिणेन। पक्षे यथास्वं प्रत्ययाः। इह केचिदुत्तरादीननुवर्त्य दिक्शब्दमात्रादेनपमाहुः। पूर्वेण ग्रामम्। अपरेण ग्रामम्॥ **१९८५। दक्षिणादाच्** ।५।३।३६। अस्तातेर्विषये। दक्षिणा वसति। अपञ्चम्या इत्येव। दक्षिणादागतः॥ **१९८६। आहि च दूरे** ।५।३।३७। दक्षिणाद् दूरे आहि स्यात् चादाच्। दक्षिणाहि॥ दक्षिणा॥ **१९८७। उत्तराच्च** ।५।३।३८। उत्तराहि। उत्तरा॥

---

आतेस्तसिलादिषु परिगणितत्वात्। एवम्। उत्तरस्या एवोत्तरात् उत्तरैवोत्तरादि च। दक्षिणादित्यादावप्यूह्यम्। ***एनबिति** उत्तराधरदक्षिणादिति पूर्वसूत्रादनुवर्तते । दिक्छब्देभ्य इति सूत्रात्सप्तमीत्यादिकमस्तातिं विना चात्रान्वेति। स्वार्थे एव प्रत्ययः। अदूरशब्दार्थमाह – अवध्यवधिमतोस्सामीप्ये इति गम्यमाने सतीति शेषः। अवधिरस्यास्तीत्यवधिमान् । अवधित्वं हि सप्रतियोगिकम्। तेन देशाधिगतमवधित्वम् यत्प्रतियोगिकं यन्निरूपितमित्यर्थः। यदापेक्षिकमिति यावत्। (यमपेक्षते इति यदापेक्षिकं यदपेक्षमिति सुवचम्।) सप्रतियोगी अवधिमानित्युच्यते। यथा उत्तरेण ग्रामं वृषभः इत्यत्र ग्रामस्य उत्तरस्यां दिशि ***वृषभो वर्तते इति** ग्रामोऽवधिः। वृषभोऽवधिमान् तयोस्सामीप्यं द्योत्यते ग्रामसमीपे वृषभ इति। तस्मादत्र उत्तरशब्दात्सप्तम्यन्तादेनप् – उत्तर एन यस्येति लोपः णत्वं उत्तरेण। एनबन्तमप्यव्ययमेव। यथा स्वम् यथाविहितम्। एनमाहुः एनमिमं प्रत्ययं अर्थादेनपम्। आहुरिति। इत्सञ्ज्ञयापे लुप्ते अदन्तस्यैव शेषात्। तस्माद्द्वितीया एनम्। एनप्रत्ययमाहुरिति वा अर्थः। ***दक्षिणादाच्** – आचि चकरस्स्वरार्थः। दक्षिणशब्दादा इति प्रत्ययः। अच्प्रत्यये कृते – यस्येति लोपे – दक्षिणा इत्याकारान्तरूपासिद्धिः। परोऽप्ययमाच् आतिं न बाधते – दक्षिणादातेर्विधानसामर्थ्यात्। यद्वा – पूर्वसूत्रमेनपं विना सर्वमत्रानुवर्तते इति आच्वा स्यादिति वा – ***आहि चेति।** आहि च दूरे इति भेदः आहौ इकारोननुनासिकत्वेन नेत्सञ्ज्ञः। दूरे एव आहिर्यथा स्यात्। अदूरे यथा न स्यात्तदर्थं योगविभागः। ***उत्तराच्च।** पूर्वसूत्रं सर्वमनुवर्तते। उत्तराददूरे माभूदाच् इति। दक्षिणोत्तरादाच् इति न सूत्रितम्। (दक्षिणादाचिति सूत्रं दक्षिणोत्तरादाचिति सूत्रयित्वा आहि च दूरे इति सूत्रे दक्षिणोत्तरादिति पदमनुवर्त्य व्याख्याय उत्तराच्चेति सूत्रं त्यज्यतामिति शङ्का। उत्तराददूरे इत्यादिना समाधापितेति बोध्यम्) उत्तरस्यामुत्तरा वा। उत्तरा हि उत्तरा वा इति भवति। उत्तरस्या इति पञ्चम्यन्तात्तु न भवति। अपञ्चम्या इत्यस्यानुवृत्तेः। न च प्रथमान्तादाचि कृतेऽप्यकृतेऽपि उत्तरा इत्येव रूपसिद्धौ तत आच्विधिर्व्यर्थ इति वाच्यम्। आजन्तस्य अव्ययत्वेन संख्याकृतरूपभेदाभावरूपविशेषसद्भावात्। (उत्तरा – उत्तरे – उत्तराः इति

**१९८८। संख्याया विधार्थे धा** ।५।३।४२। क्रियाप्रकारार्थे वर्तमानात्संख्याशब्दात्स्वार्थे धा स्यात्। चतुर्धा। पञ्चधा॥ **१९८९। अधिकरणविचाले च** ।५।३।४३। द्रव्यस्य संख्यान्तरापादने संख्याया धा स्यात्। एकं राशिं पञ्चधा कुरु॥ **१९९०। एकाद्धो ध्यमुञन्यतरस्याम्** ।५।३।४४। ऐकध्यम्। एकधा॥ **१९९१। द्वित्र्योश्च धमुञ्** ।५।३।४५। आभ्यां धा इत्यस्य धमुञ् स्याद्वा। द्वैधम्। द्विधा। त्रैधम्। त्रिधा॥ धमुञन्तात्स्वार्थे डदर्शनम्॥ पथि द्वैधानि तृणानि॥ **१९९२। एधाच्च** ।५।३।४६। द्वेधा। त्रेधा॥ **१९९३। याप्ये पाशप्** ।५।३।४७। कुत्सितो भिषक् भिषक्पाशः॥ **१९९४। पूरणाद्भागे तीयादन्** ।५।३।४८।

---

वत् – आचि न रूपत्रयं वचनत्रये । किन्तु द्वित्वे बहुत्वेऽपि उत्तरा इत्येकमेवेति भावः) ***पञ्चधा।** पञ्चन् – धा – नलोपः प्रातिपदिकान्तस्येति नलोपः। ***अधिकरणेति।** ननु मास्त्विदं सूत्रम्। एकं राशिं पञ्चधा कुर्वित्यत्र राशिविषयकम्पञ्चीकरणमित्यर्थात् क्रियाप्रकारे वर्तमान एवायम्पञ्चन्शब्द इति पूर्वेणैव थाप्रत्ययलाभादिति चेत् मैवम्। क्रियाविषयकः प्रकारः क्रियाप्रकारः । प्रकारो गुणाधानम्। प्रकृते पञ्चीकरणरूपः। प्रकारः राशिविषयकत्वेन द्रव्यविषयक एव न तु क्रियाविषयकः इति पूर्वेण थाप्रत्ययाप्राप्तेरिति – चतुर्धा भवतीत्यादौ तु भवनक्रियाविषयक एव चतुर्विधत्वात्मकः प्रकार इति क्रियाप्रकार इत्यनेन तत्र थाप्रत्ययः। नवथा द्रव्यम्भवतीत्यादावपि द्रव्यनिष्ठा या भवनक्रिया तद्विषयक एवायं नवत्वरूपः प्रकार इति बोध्यम्। ***एकात्** – धः ध्यमुञ् – अन्यतरस्यामिति छेदः। धाशब्दस्य षष्ठी धः। विश्वप इतिवत्। धाङस्। आतो धातोरित्यालोपः। धः – धाप्रत्ययस्येत्यर्थः। ध्यमुञ् इत्ययमादेशो वा स्यात्। एकात्परस्य ध इत्यन्वयः ***द्वित्र्योरिति।** पञ्चम्यन्तार्थबोधकं षष्ठ्यन्तमिदम्पदम्। तेन – द्वित्रिभ्यां परस्येत्यर्थः। ध इति – अन्यतरस्यामिति च पूर्वसूत्रादनुवर्तेते। तदनुवृत्तिज्ञापनार्थश्चकारः। धमुञि ञित्त्वमादिवृद्ध्यर्थम्। उकार उच्चारणार्थः। धम् इति शिष्यते। धमुञादेशाभावपक्षे धान्तं रूपम्। ***धमुञन्तादिति।** धमुञन्तात्स्वार्थे ढप्रत्ययो दृश्यते इत्यर्थः। द्वैधमेव द्वैधानि। डित्त्वाट्टेरमो लोपः। एकत्वे तु स्वमोरमि द्वैधम् इति रूपे [illegible]ल्यं मत्वा बहुत्वे उदाहृतम्। धमुञन्तन्तु अव्ययम्। ***याप्ये** इति। यापयितुं निष्कासयितुं योग्यो याप्यः कुत्सित इत्यर्थः। (कुत्सितस्य निष्कासनीयत्वात्) याप्येऽर्थे समर्थात्पाशप्रत्ययः। ननु कुत्सिते इति सूत्रं वक्ष्यति तदेव कुत्सिते पाशप्च इति सूत्रयित्वा (कुत्सिते पाशप् चात्क इति तदर्थः) प्रकृतसूत्रं त्यज्यतामत आह – तत्त्वबोधिनी तिङन्तादपि प्रसङ्गादिति। तिङश्चेति सूत्रं हि कुत्सिते इति वक्ष्यमाणसूत्रे अन्वेति तथा च तिङन्तादपि कुत्सीते कप्रत्यय इष्यते कुत्सिते पाशप्चेति सूत्रिते तु तिङन्तात्पाशप्रत्ययोप्यनिष्ट आपतेदिति भावः। ***पूरणादिति।** पूरणोयस्तीयः (द्वेस्तीय इति तीयस्य पूरणे विहितत्वात्पूरणत्वेनात्र व्यपदेशः।) तदन्तादप्रत्ययस्स्यात्। स चेत्पूरणतीयान्तार्थो भागः। ननु तीये तीयादीनि वा द्वितीय

द्वितीयो भागो द्वितीयः। तृतीयः। स्वरे विशेषः॥ **तीयादीकक् स्वार्थे वाच्यः**॥ द्वैतीयीकः। द्वितीयः। तार्तीयीकः। तृतीयः॥ **न विद्यायाः**॥ द्वितीया। तृतीया। विद्येत्येव॥ **१९९५। प्रागेकादशभ्योऽच्छन्दसि** ।५।३।४९। पूरणप्रत्ययान्ताद्भागेऽन्। चतुर्थः। पञ्चमः॥ **१९९६। षष्ठाष्टमाभ्यां ञ च** ।५।३।५०। चादन्। षष्ठो भागः षाष्ठः। षष्ठः। आष्टमः। अष्टमः॥ **१९९७। मानपश्वङ्गयोः कन्लुकौ च।** ।५।३।५१। षष्ठाष्टमशब्दाभ्यां क्रमेण कन्लुकौ स्तो माने पश्वङ्गे च वाच्ये। षष्ठको भागः मानं चेत्।

---

इत्यादिरूपप्रयुक्तविशेषाभावात्किमन्विधानेनेत्यत आह स्वरे विशेष इति। द्वयोः पूरणो भागो द्वितीय इत्युच्यते। तीयान्तादन्विधानाद्धेतोः द्वितीयो भाग इति विग्रहः। ***प्रागेकादशभ्य इति** वक्ष्यमाणसमनन्तरसूत्रे अनुवृत्त्यर्थम्पूरणग्रहणम्। अन्यथा तीयस्य पूरणत्वाव्यभिचारात्पूरणादिति तीयविशेषणमनर्थकं स्यात् इत्यकर्तव्यमेव स्यात्। तीयादीकक् इति तद्धितानां विकल्पितत्वादीककोऽपि विकल्पात्। पक्षे द्वितीय इत्यादिरूपम्। ईककि कित्त्वं वृद्ध्यर्थम्। अदन्तोऽयम्प्रत्ययः। ***न विद्यायाः।** विद्यावाचकात्तीयान्तात्स्वार्थे ईकक् न भवतीत्यर्थः। ***प्रागिति।** एकादशसंख्यातः प्राग्ये संख्यावाचकाः तेभ्यः पूरणान्तेभ्यः भागे अन्। चतुर्थो भागश्चतुर्थः। चतुर्थशब्दादनि यस्येति लोपे निष्पद्यते रूपमिदम्। तस्य पूरणे डट्। षट्कतिपयचतुरान्धुगिति धुक्। चतुर्थः। स्त्रियान्तु चतुर्थशब्दान्नान् इति। डटष्टित्वान् ङीप् चतुर्थी भक्तिः। न च भक्तेरपि भागानन्यत्वात् स्त्रियामपि स्यादेवान् इति। अदन्ताट्टापि चतुर्था इति भवेदिति वाच्यम्। भागे इति पुम्स्त्वस्य विवक्षितत्वेन भागार्थबोधकात्पूरणान्तात्पुंस्येवान् न तु स्त्रियामिति ज्ञापितत्वात्। अत एव चतुर्थीविभक्तिरित्यादिसिद्धिः। विभक्तेरपि भागानन्यत्वात्। विपूर्वकाद्भजतेः स्त्रियां क्तिनि कृते विभक्तिः, घञि कृते विभागः इति। अछन्दसीत्युक्तत्वात्। छन्दसि तु न पूरणादन्। ***ञ च।** ञ इति प्रत्यये ञ्कार इत्। अ इति शिष्यते। ञित्त्वाद्वृद्धिः। षाष्ठः। ***मानेति।** यः पूरणप्रत्ययान्तार्थो भागस्स मानम्। पश्वङ्गं वा यदि भवति तर्हि षष्ठाष्टमाभ्यां कन् – लुकौ स्तः। षष्ठशब्दान्माने कन्। अष्टमशब्दात्पश्वङ्गे लुगित्यर्थः। मानं परिमाणः। लुक्चायं न कनः विधानसामर्थ्यात्। किन्तु पूर्वेण प्राप्तयोनेरेवेत्याह। ञस्येत्यादिना। यथाप्राप्तं ञानौ स्त इत्यर्थः। ननु समर्थानां प्रथमाद्वेत्यतोनुवर्तमानेन वा ग्रहणेन तद्धितयोः ञानोः विकल्पे सिद्धे ञन्तम् अन्नन्तम् अतद्धितान्तञ्चेति रूपत्रयं भवत्येवेति अष्टमाद्ञानोर्लुग्विधिर्व्यर्थः। ञानोरविहितत्वे विहितयोस्तयोर्लुकि वा रूपभेदादर्शनात्। नाप्यर्थभेदः। एतेषां प्रत्ययानां स्वार्थिकत्वेन प्रकृत्यर्थानतिरेकादिति शङ्कते – महाविभाषयेत्यादिना। ञानौ नित्यौ। षष्ठाष्टमाभ्यां ञ चेति सूत्रेण विहितावित्यर्थः।

अष्टमो भागः पश्चङ्गं चेत्। ञस्य अनो वा लुक्। चकाराद्यथाप्राप्तम्। षष्ठः। षाष्ठः। अष्टमः। आष्टमः। महाविभाषया सिद्धे लुग्वचनं पूर्वत्र ञानौ नित्याविति ज्ञापयति॥ **१९९८। एकादाकिनिच्चासहाये** ।५।३।५२। चात्कन्लुकौ। एकः। एकाकी। एककः॥ **१९९९। भूतपूर्वे चरट्** ।५।३।५३। आढ्यो भूतपूर्व आढ्यचरः॥ **२०००। षष्ठ्या रूप्य च** ।५।३।५४। षष्ठ्यान्ताद्भूतपूर्वेऽर्थे रूप्यः स्याच्चरट् च। कृष्णस्य भूतपूर्वो गौः। कृष्णरूप्यः कृष्णचरः। तसिलादिषु रूप्यस्याःपरिगणितत्वान्न पुंवत्। शुभ्राया भूतपूर्वः शुभ्रारूप्यः॥ **२००१। अतिशायने तमबिष्ठनौ** ।५।३।५५।

---

षष्ठाष्टमाभ्यामिति सूत्रे वा ग्रहणं नान्वेति। तेन अञनन्यतरान्तरूपादर्शनात्! तद्रूपसिद्ध्यर्थमिदं लुग्वचनमिति सिद्धम्। **एकादिति।** कनाकिनच्लुकां समुच्चयः। आकिनचिचस्स्वरार्थः। अकार उच्चारणार्थः। आक् न् इति नान्तशेषः। अत एव ऋन्नेभ्य इति ङीपि एकाकिनी। असहायेऽर्थे वर्तमानो य एकशब्दः तस्मात् असहायार्थाभिधायकादेकात्स्वार्थे प्रत्ययौ लुक्च इत्यर्थः। असहाये किम् ? अयमेकः (एकत्वसंख्याविशिष्टः) इत्यत्र कनादिकं माभूत्। ***आढ्यादिति** भूतपूर्वोपाधिकात्समर्थाच्चरट्। समर्थाच्चरट् स चेत्समर्थप्रकृत्यर्थः भूतपूर्वः इति वा। समर्थाच्चरट् – भूतपूर्वेऽर्थे इति यद्युच्यते तर्हि प्रकृत्यर्थातिरिक्तभूतपूर्वार्थकत्वेन प्रत्ययस्य स्वार्थिकत्वं हीयेत। चरटिटो ङीबर्थः। आढ्यचरी। भूतपूर्वे इत्ययमेव निर्देशः। पूर्व भूत इति विग्रहे भूतशब्दस्य पूर्वनिपातं ज्ञापयतीति फणितं प्रागव्ययीभावप्रकरणे। ***षष्ठ्या इति।** भूतपूर्वत्वस्य प्रकृतिविशेषणत्वे स्वार्थिकश्चरट्प्रत्ययः पूर्वसूत्रेणोक्तः भूतपूर्वत्वस्य प्रत्ययार्थत्वे चरट्रूप्ययोर्विधानर्थमिदं सूत्रम्। प्रत्ययार्थो यः भूतपूर्वरूपः स न षष्ठ्यन्तार्थाभिन्नः। षष्ठ्या सह प्रथमाया असामानाधिकरण्यात्। किन्तु – षष्ठ्यन्तार्थसम्बन्धी – षष्ठी चात्र – षष्ठी शेषे इति विहितैव। सम्बन्धमात्रे तस्या एव विहितत्वात्। एवञ्च षष्ठ्यन्तार्थसम्बन्धिनि भूतपूर्वे वाच्ये सति षष्ठ्यन्ताद्रूप्यचरटौ स्त इति लब्धम्। यथा कृष्णरूप्यो गौः। अत्र कृष्णषष्ठ्यन्तार्थः। तत्सम्बन्धिनि तत्पाल्ये (पाल्यपालकत्वमिह सम्बन्धः – तस्मिन् द्योत्ये षष्ठी कृष्णस्येति) भूतपूर्वे पदार्थे गोरूपे वाच्ये सति षष्ठ्यन्तात्कृष्णशब्दाद्रूप्यः। भूतपूर्वेर्थे इति मूलस्य भूतपूर्वे पदार्थे (षष्ठ्यन्तार्थसम्बन्धिनि) वाच्ये सतीत्यर्थस्सुवचः। भूतपूर्वे इत्यर्थे अभिधेये इति वा (प्रत्ययेन भूतपूर्वेऽर्थे वाच्ये सतीति भावः) न पुंवत्। तसिलादिष्वाकृत्वसुच इत्यनेन पुंवद्भावो न प्राप्नोतीति भावः। ***अतिशायनमिति।** अतिशायनम् अतिशयनम् अतिशय इति यावत्। अतिशयोपाधिकात्स्वार्थे तमबिष्ठनाविति सूत्रार्थः। अतिशयोपाधिकादित्यस्य विवरणमाह – अतिशयविशिष्टार्थवृत्तेरिति। अतिशयविशिष्टः अतिशयविशेषणकः अतिशयोपाधिक इति यावत्। अतिशययुक्त इति लौकिकार्थः – योर्थः पदार्थः तद्वृत्तेः तदभिधायकाच्छब्दादिति तदर्थः। अतिशयेनाढ्यः अत्यन्तमाढ्य इति आढ्ये विशेषणमतिशयः। अयमाढ्यशब्दः अतिशयनाढ्य इत्यर्थे वर्तते इति तमपैव द्योत्यते इति बोध्यम्। लघिष्ठः। लघु–इष्ठ – टेः भस्य टेर्लोपस्स्यादिष्ठेमेयस्सु इति टिलोपः। लघिष्ठः। अतिशयेन लघुरित्यर्थः। आढ्यशब्दादिष्ठनः ।

**अतिशयविशिष्टार्थवृत्तेः** स्वार्थे एतौ स्तः। अयमेषामतिशयेनाढ्य आढ्यतमः। लघुतमो लघिष्ठः॥ **२००२। तिङश्च** ।५।३।५६। तिङन्तादतिशयेर्थे द्योत्ये तमप् स्यात्॥ **२००३। तरप्तमपौ घः** ।१।१।२२। एतौ घसंज्ञौ स्तः॥ **२००४। किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे** ।५।४।११। किम एदन्तात्तिङोऽव्ययाच्च यो घस्तदन्तादामुः स्यान्न तु द्रव्यप्रकर्षे। किंतमाम्। प्राह्णेतमाम् । पचतितमाम्। उच्चैस्तमाम्। द्रव्यप्रकर्षे तु उच्चैस्तमस्तरुः॥

---

प्राचीनप्रयोगेष्वदर्शनान्नोदाहृतम्। न च अजादी गुणवचनादेवेति आढ्यस्य अगुणवचनत्वान्नेष्ठन्निति वाच्यम्। लघुत्ववदाढ्यत्वस्यापि गुणत्वात्। ***अतिशये** द्योत्ये। प्रत्ययेन अतिशये द्योत्ये सतीत्यर्थः। अतिशयो हि प्रकृत्यर्थविशेषणमिति अतिशयविशिष्टार्थवृत्तेरिति प्रागुक्तम्। तस्यैवेदं फलितम्। अतिशयः प्रकृत्यर्थविशेषणमिति प्रत्ययेनैव द्योत्यते इत्युक्तत्वात्। आढ्यतम इति वृत्तौ आढ्यशब्दः अतिशयविशिष्टार्थवृत्तिर्वा न वेत्येतद्ज्ञातुम् न हि किञ्चित्साधनं विना तमपम् अतिशयविशिष्टत्वस्य वैवक्षिकत्वात्। विवक्षायाः वक्त्रधीनत्वादिति । ***तरबिति।** घ इत्ययं संज्ञा – न त्वादेशो नापि प्रत्ययः। तरप्तमपोरिति षष्ठ्यन्तत्वेन पञ्चम्यन्तत्वेन वा अनिर्देशात्। प्रथमान्तसामानाधिकरण्यनिर्देश एव संज्ञात्वे घस्य प्रमाणमिति बोध्यम्। अत्र – ता दीघः। इति। पितौषु इति वा न्यासस्सुवचः। तकार आदीययोस्तौतादीप्रत्ययौ – पकार इत् ययोस्तौ पितौ प्रत्ययौ। तथाविधौ तरप्तमपावेवेति। न च तिप्तसादयोऽपि तादिप्रत्यया इति पित्प्रत्यया इति च तेषामपि घ संज्ञा स्यादिति वाच्यम्। यस्मिन्प्रकरणे सूत्रमिदं पठितं तस्मिन् आतिशायनिके प्रकरणे यौ तादी पितौ वा तयोरेव घसंज्ञाविधानात्। इति न्यासे सुवचे सति गुरुसूत्रकरणं व्यर्थीभूय अतिशये अद्योत्येऽपि तरप्स्यादिति तरपः अनातिशायनिकत्वं ज्ञापयति। ज्ञापनानन्तरञ्च अल्पाजेव अल्पाच्तरमित्यादिरूपसिद्ध्या स्वांशे चरितार्थम्भवति। अन्यथा अल्पाच्तरम्पूर्वमित्यत्र अतिशयेनाल्पाच् अल्पाच्तरमिति विग्रहोक्तौ शङ्खदुन्दुभिवीणा इत्यत्र शंखशब्दस्य पूर्वनिपातो न घटेत। द्वयोर्मध्ये अतिशयेन अल्पाच एव पूर्वनिपातविधानादिति। अतिशये अद्योत्येपि यदि तरप्स्यात् तर्हि अत्यन्तस्वार्थिके तरपि अल्पाजेव अल्पाच्तरमिति द्वयोरतिशयाविवक्षायां तरबन्तं रूपम्। तथा च शंखशब्दस्य अल्पाच्कत्वात्पूर्वनिपातो घटते त्रयाणामपीति बोध्यम्। घसंज्ञाविधानफलन्तु घकालतनेषु किमेत्तिङव्ययघादित्यादिषु घ इति एकाक्षरोच्चारणेन तरप्तमपोर्लाभरूपो लाघव एवेति बोध्यम्। ***किमिति। किमेत्तिङव्ययघात्।** आमु – अद्रव्यप्रकर्षे इति छेदः – किम् – एत् – तिङ् – अव्ययम् एतेषामितरेतरद्वन्द्वः। किमेत्तिङव्ययानि। तेभ्यो घः. किमेत्तिङव्ययघः। तस्मात्। प्रातिपदिकविशेषणत्वेन तदन्तविधिः। तदन्तादित्यर्थः। एत एकारात् घस्यासम्भवादेदन्तादित्युक्तं मूले। आमौ उकारो मकारपरित्राणार्थः। उच्चारणसामर्थ्यादेव यदिमस्य हलन्त्यमित्यनेन नेत्वमित्यभ्युपेयते तर्हि

**२००५। द्विवचनविभज्योपपदे तरबीयसुनौ** ।५।३।५७। द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः। पूर्वयोरपवादः। अयमनयोरतिशयेन लघुर्लघुतरः।

---

पचतितरामित्यादौ ह्रस्वनद्यापो नुट् इति ह्रस्वात्परस्यामो नुडागमो माभूदित्येतदर्थमुकार आवश्यक इति ज्ञेयम्। (सति तूकारे आम एव । तेन नुड्विधीयते – न त्वामोरिति आमुप्रत्ययस्थामो नुणनस्यादिति भावः) ननु निरनुबन्धकग्रहणे न सानुबन्धकस्येति (निरनुबन्धकस्य यत्कार्यं विधीयते तत् सानुबन्धकस्य न भवतीत्यर्थः) परिभाषया निरनुबन्धकस्यामः कार्यं नुड्रूपम्। सानुबन्धकस्य आमोर्न भवत्येवेति कृत्वा आमौ अनुबन्धः (इत्संज्ञकः) उकारस्सार्थक इति हि भवतोच्यते। न चैतत्सङ्गच्छते। पचति तर आमिति स्थिते यस्येति लोपे – पचतितर् आम् इदानीं ह्रस्वात्परत्वमेव नास्त्याम इति न नुटः प्रसक्तिरिति चेन्मैवम्। परेण नुटा यस्येति लोपस्य बाधात्। ननु इकोऽचि विभक्ताविति सूत्रान्मण्डूकप्लुत्या विभक्तिपदम् ह्रस्वनदीति सूत्रे अपकृष्य षष्ठ्यन्तत्वेन विपरिणमय्य ह्रस्वाद्यन्तात्परस्य विभक्तेरामो नुट्स्यादिति व्याख्याने विभक्तेराम एव नुट् नेतरस्येति किमेदादिभ्यो विहितस्यामः प्रकृतस्य न नुट्प्रसक्तिरिति आमौ उकारानुबन्धफलं चिन्त्यमिति चेन्मैवम्। वर्णगौरववदर्थ गौरवस्यापि दुष्टत्वेन मण्डूकप्लुत्या श्रयणस्य क्लेशावहत्वेन च नेदं त्वदुक्तव्याख्यानं सम्यक् इति। अद्रव्यप्रकर्षे लिङ्गसंख्यान्वितं द्रव्यन्तस्य प्रकर्षोऽतिशयः तस्मिन् द्रव्यप्रकर्षे अद्योत्ये (वाच्ये) सतीत्यर्थः। अतिशायने घस्य विहितत्वात्प्रकर्ष इष्ट एव। किन्तु स प्रकर्षो द्रव्यसम्बन्धी माभूदित्येतदर्थमद्रव्यप्रकर्षे इत्युक्तम्। तसिलादिष्वामः परिगणितत्वादामन्तमव्ययम्। अतिशयेन किं किन्तमामित्यादि। उच्चैरित्यतिशयार्थेऽव्ययम्। अतिशयेनोच्चैरुच्चैस्तमाम्। अत्यन्तातिशयेनेत्यर्थः। सायञ्चिरमिति सूत्रे प्राह्णे इत्येदन्तनिपातनादेदन्तत्वं प्राह्णेशब्दस्य। ***द्विवचनेति।** द्वयोर्वचनं द्विवचनम्। अतिशायने इत्यत्रान्वेति। उच्यते इति वचनम्। द्वयोरतिशायने वचने उक्ते सतीत्यर्थः। द्वयोरतिशयोक्ताविति यावत्। स चातिशयस्स्वभावादेकस्यैव। न हि द्वयोर्वस्तुनोः परस्परप्रतियोगिकोऽतिशयः वक्तुं शक्येत। तदेतत्फलितमाह–द्वयोरेकस्यातिशये इति। द्वयोरेकस्यातिशयोक्तावित्यर्थः। यद्वा मूले द्योत्ये इति शेषः। द्वयोरेकस्यातिशये द्योत्ये सतीत्यर्थः। सूत्रस्थवचनशब्देन उक्तिर्नाभिप्रेता। किन्तु द्योतनमेवेत्यस्याभिप्रायः। प्रतिपादितञ्चेदम् अतिशायन इति सूत्रव्याख्याने एव। अतिशयो न प्रकृत्यर्थः। नापि प्रत्ययार्थः किन्तु प्रत्ययेन अतिशयो द्योत्यते इति। विभज्यं विभक्तव्यम् तच्च तदुपपदञ्च विभज्योपपदम्। तस्मिन् विभज्योपपदे विभज्ये उपपदे सतीत्यर्थः। द्विवचन इति लुप्तसप्तमीकम्पदम्। यद्वा द्विवचन – विभज्योपपद – अनयोस्समाहारः ततस्सप्तमी। द्विवचनविभज्योपपदे इति। पक्षद्वयेऽपि द्विवचने विभज्योपपदे च इति लभ्यते। उप समीपे उच्चारितम्पदमुपपदम्। तच्च विभक्तव्यम्पदं पञ्चम्यन्तमेव। पञ्चमीविभक्ते इति सूत्रितत्वात्। एतावता द्वयोरेकस्यातिशये

लघीयान्। उदीच्याः प्राच्येभ्यः पटुतराः। पटीयांसः॥ **२००६ ।अजादी गुणवचनादेव** ।५ ।३ ।५८। इष्ठन्नीयसुनौ गुणवचनादेव स्तः। नेह। पाचकतरः। पाचकतमः॥ **२००७। तुश्छन्दसि** ।५ ।३ ।५९। तृन्तृजन्तादिष्ठन्नीयसुनौ स्तः॥ **२००८। तुरिष्ठेमेयःसु** ।६। ४ ।१५४। तृशब्दस्य लोपः स्यादिष्ठेमेयःसु परेषु। अतिशयेन कर्ता करिष्ठः। दोहीयसी धेनुः॥ **२००९। प्रशस्यस्य श्रः** ।५ ।३ ।६०। अस्य श्रादेशः स्यादजाद्योः॥ **२०१०। प्रकृत्यैकाच्** ।६ ।४ ।१६३। इष्ठादिष्वेकाच् प्रकृत्या स्यात्। श्रेष्ठः। श्रेयान्॥

---

द्योत्ये विभज्ये उपपदे च सति समर्थात्तरप्। ईयसुन् – इति प्रत्ययौ स्त इति लब्धम्। (प्रत्ययः अधिकारोऽयमा पञ्चमपरिसमाप्तेरित्युक्तत्वात्प्रत्ययपदलाभः) तिङश्च इति सूत्रस्यात्रानुवर्तनात्सुप्तिङन्तादित्युक्तम्। (चकारेण सुप आक्षिप्तत्वात्) अत्र तत्त्वबोधिन्यामन्यथा व्याख्यातम्। द्विवचने उपपदे विभज्ये चोपपदे इति। अतिशये द्योत्ये द्विवचनविभज्ययोरुपपदयोस्सतोरिति तदर्थः। अयमनयोरितिशयेन लघुरिति विग्रहे अनयोरिति पदं द्विवचनम्। पदार्थद्वयाभिधायकत्वात्। अनयोर्देवदत्तयज्ञदत्तयोर्मध्ये अयं देवदत्तोऽतिशय इति विग्रहवाक्यार्थः। देवदत्तयज्ञदत्तरूपं पदार्थद्वयं (वस्तुद्वयम्) अनयोरिति पदमभिधत्ते इति तस्मिन्नुपपदे लघुशब्दात्तरप् – लघुतरः। ***अजादी इति।** अतिशायने इत्यस्यात्रान्वयः। तस्य च तत्प्रकरणे लक्षणा। आतिशायनिकप्रकरणे यावजादी प्रत्ययौ तौ स्वरूपतः पठति इष्ठन्नियसुनाविति। गुणं वक्तीति गुणवचनम्। तस्मात् गुणवाचकाच्छब्दादित्यर्थः। यद्यपि लघुरित्यादयः गुणिवाचका अपि भवन्ति तथापि देवदत्तादौ लघुशब्दप्रवृत्तिं प्रति लघुत्वरूपो गुण एव निमित्तमिति गुणवद्द्रव्यवाचका अपि गुणवाचकत्वेन व्यपदिश्यन्ते लघ्वादयशशब्दा इति बोध्यम्। यद्वा लघुशब्दस्य लघुत्वमर्थः। तच्च गुण एवेति गुणवाचकत्वं लघ्वादीनां पदानामिति बोध्यम्। पाचकादिशब्दास्तु पाकादिक्रियानिमित्तप्रवृत्तय इति क्रियावद्द्रव्यवाचका एव। न गुणिद्रव्यवाचका इति न तेषां गुणवचनत्वम्। ***तुरिति।** तृ इति तृन्तृचोस्सामान्यग्रहणम्। तस्मात्पञ्चम्यां तुः। प्रातिपदिकविशेषणात्तदन्तविधिरित्याह – तृन्तृजन्तादिति। छन्दोविषयमपि सूत्रमिदं प्रकरणत्वाद्व्याख्यातम्। ***करिष्ठः।** कृञः तृनि तृचि वा कृते सार्वधातुकार्थधातुकयोरित्यनेन धातोरिति विहितप्रत्ययत्वादार्थधातुकतृनिमित्तके गुणे सति कर्तृ – इष्ठ – तुर्लोपः – करिष्ठः। अयमेषामतिशयेन कर्ता इति विग्रहः। द्विवचने तु तरबीयसुन्प्रसङ्गे इष्ठनो सम्भवात्। ***प्रशश्यस्य।** प्रशस्यशब्दस्येत्यर्थः। अयमेषामतिशयेन प्रशस्यः (प्रशंसितुं योग्यः प्रशस्य श्लाघ्य इत्यर्थः।) इति विग्रहे प्रशस्य इष्ठ इति स्थिते श्रादेशः। श्र – इष्ठ–यस्येति लोपे प्राप्ते टेरिति लोपे च प्राप्ते तदपवादं पठति। ***प्रकृत्यैकाजिति।** तुरिति **सूत्रादिष्ठेमेयस्सोरत्रानुवृत्तिः।** (इष्ठेमेयस्सु इत्यनुकरणशब्दात् षष्ठी – इष्ठेमेयस्सोरिति।) इष्ठनि नकारस्स्वरार्थः। ईयसुनि च इष्ठेत्यदन्तशेषः। ईयस् इति सान्तश्शिष्यते। ईयसुनि

**२०११। ज्य च** ।५।३।६१। प्रशस्यस्य ज्यादेशः स्यादिष्ठेयसोः। ज्येष्ठः॥ **२०१२। ज्यादादीयसः** ।६।४।१६०।'आदेः परस्य ४४'। ज्यायान्॥ **२०१३। वृद्धस्य च** ।५।३।६२। ज्यादेशः स्यादजाद्योः। ज्येष्ठः। ज्यायान्॥ **२०१४। अन्तिकबाढयोर्नेदसाधौ** ।५।३।६३। अजाद्योः। नेदिष्ठः। नेदीयान्। साधिष्ठः। साधीयान्॥ **२०१५। स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः** ।६।४।१५६।

---

उकारः उगिदचामिति नुमर्थः। श्र – ईयस् गुणः श्रेयस्। उगिदचामिति नुम् – उपधादीर्घः – संयोगान्तलोपः। श्रेयान्। अयमनयोरतिशयेन प्रशस्य इत्यर्थः। ***आदेः** परस्येति परिभाषावशात् ज्यात्परस्य ईयसुन ईकारस्य आकारादेशः। ज्याददीयस इति अकारादेशे तु कृते ज्य आयान् – यस्येति लोपाभावे टिलोपाभावे च सत्यपि अतो गुणे इति पररूपं स्यात्। अजादिप्रत्ययपरकत्वेन पूर्वस्य भत्वादपदान्त एव अकार इति। ***वृद्धस्य** च अत्र ज्य चेति सूत्राज्ज्य। अजादीति सूत्रादजाद्योरिति चानुवर्तेते। वृद्धशब्दस्य इष्ठेयसोः परतः ज्यादेशस्स्यात्। चकारः प्रकृतिसमुच्चयार्थः। प्रशश्यस्य वृद्धस्य च ज्यादेश इति। ज्यचेति सूत्रमेव। वृद्धस्य च ज्य इति सूत्रयित्वा (वृद्धस्य ज्यादेशः चात्प्रशस्यस्य इति सूत्रार्थः) वृद्धस्य चेति सूत्रं त्यक्तुं सुशकम्। वृद्धादेशादपि ज्यात्। ज्यादादीयस इति भवत्येव। तेन ज्यायानतिशयेन वृद्ध इत्यर्थे सिध्यति। *अन्तिकेति। अजादीत्यनुवर्तते एव। अन्तिक – बाढ – इत्येतयोः प्रकृत्योः नेद – साध – इतीमावादेशौ स्तः – इष्ठेयसोः परत इत्यर्थः। प्रकृत्योः प्रत्यययोश्च द्वित्वादत्र यथासंख्यमिष्यते। अयमेषातिशयेनान्तिक इति विग्रहे (अन्तिकस्सन्निहितः) अतिशायने तमभिष्ठनाविति इष्ठनि कृते– अन्तिक – इष्ठ – अन्तिकस्य नेदादेशः। नेद – इष्ठ। यस्येति टेरिति वा लोपः। नेदिष्ठः। बाढस्साधुः। अतिशयेन बाढ इत्यर्थे अयमनयोरिति द्विवचनातिशये विवक्षिते द्विवचने तीयसुनि बाढ–ईयस् – बाढस् साधादेशः। साध – ईयस् – टिलोपः। साधीयान्। अतिशयेन साधुरिति विग्रहेऽपि साधुशब्दादिष्ठेयसोः कृतयोः साधिष्ठस्साधीयानिति यद्यपि भवति तथापि अतिशयेन बाढ इति विग्रहे बाढीयान् बाढिष्ठ इत्यनिष्टरूपे माभूतामिति बाढस्य साधादेशः। ननु नेदसाधाविति किमकारान्तादेशविधानेन नेद्साधौ इति हलन्तादेशावेवेष्यताम्। न च टेरिति टिलोपश्शङ्क्यः। प्रकृत्यैकाच् इति प्रकृतिभावात् नेद् ईयान् नेदीयान् – साध् इष्ठः साधिष्ठ इत्यादिसिद्धिर्भवत्येवेति चेत् मैवम्। हलन्त्यमिति अन्त्यहल इत्त्वेन लोपो माभूदिति। वस्तुतस्तु उच्चारणसामर्थ्यात्फलाभावाच्च नान्त्यस्य इत्त्वमिति नेत्साधाविति सुवचम्। **स्थूलेति।** ढे लोप इत्यतो लोप इत्यनुवर्तते। लुप्यते इति लोप इति व्युत्पत्त्या लोप इत्यस्य लुप्यते इत्यर्थः। तथा च यणादिपरं लोप इत्यस्य यणादिपरं लुप्यते इति मूलोक्तार्थस्य सिद्धिः। यणादिपरं इति छेदः। यण् इति प्रत्याहारः। यण्आदिर्यस्य खण्डस्य तद्यणादि परमिति यणादीत्यस्य विशेषणम्। परो यणादिः खण्ड

एषां यणादिपरं लुप्यते पूर्वस्य च गुण इष्ठादिषु। स्थविष्ठः। दविष्ठः। यविष्ठः। ह्रसिष्ठः। क्षेपिष्ठः। क्षोदिष्ठः। एवमीयस्। ह्रस्वक्षिप्रक्षुद्राणां पृथ्वादित्वात् ह्रसिमा। क्षेपिमा। क्षोदिमा॥ **२०१६। प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रप्द्राघिवृन्दाः** ।६ ।४ ।१५७। प्रियादीनां क्रमात्प्रादयः स्युरिष्ठादिषु। प्रेष्ठः। स्थेष्ठः। स्फेष्ठः वरिष्ठः। वंहिष्ठः। गरिष्ठः। वर्षिष्ठः। त्रपिष्ठः। द्राघिष्ठः। बृन्दिष्ठः। एवमीयसुन्। प्रेयान्।

---

इत्यर्थः। स्थूलादीनामक्षरद्वयसमुदायात्मकत्वेन खण्डद्वयात्मकानां मध्ये यः परः खण्डो यणादिस्स लुप्यते इति यावत्। अस्मिन् व्याख्याने स्थूल–दूर–युव - इति त्रयाणां यः परखण्डः ल–र–व–इति एतस्य लोपे अभीष्टसिद्धावपि ह्रस्व - क्षिप्र - क्षुद्र - इति त्रयाणान्तु यः परखण्डः स्व - प्र - द्र इति। एतस्य य आदिर्व्यञ्जनः स् - प्- द् इति तस्य अयण्त्वेन परखण्डस्य यणादित्वाभावान्नाभीष्टसिद्धिर्भवेत्। तस्मात् स्थूलादीनां यः परो यण् (स्थूलादिपदावयवयण्मध्ये यः परो यण् इत्यर्थः) स आदिर्यस्य समुदायस्य तल्लुप्यते इत्यर्थो वाच्यः। यणादीति समस्तपदैकदेशे यणि परमित्यस्यान्वयस्सौत्रत्वान्न दूष्यते। यद्वा स्थूलादीनां यौ यणादी खण्डौ तयोर्यत्परं यणादि तल्लुप्यते। परो यणादिः खण्डो लुप्यते इत्यर्थः। तथा च ह्रस्वादित्रये ह्रस्–व, क्षिप्–र, क्षुद्–र इति द्वौ द्वौ खण्डौ यणादी। परस्तु यणादिखण्डः–व–र–र इति, एते त्रयः लुप्यन्ते इति अभीष्टरूपसिद्धिः। पूर्वस्य च यणादिखण्डस्य गुणः। अयं हि गुणः पूर्वयणादिखण्डस्य अच एव भवति। स्थानिसदृशा आदेशा इति आदेशस्य गुणस्य अदेङ् गुण इति अच्त्वेन तत्स्थानिनोऽप्यच्त्वेन भाव्यत्वात्। एवं पूर्वस्य यणादेर्योऽच् तस्य गुण इति सिद्धम्। तुरिष्ठसूत्रादिष्ठेमेयस्सु इत्यस्यानुवर्तमानत्वादाह – इष्ठादिष्विति परेष्विति विशेषः। अतिशयेन स्थूल इति विग्रहे स्थूल - इष्ठ– परयणादिलोपः। स्थू इष्ठ। पूर्वस्य गुणः अवादेशः स्थविष्ठः, ह्रसिष्ठ इत्यत्र यद्यपि गुणेन न फलं तथापि पर्जन्यवल्लक्षणप्रवृत्त्या अकारस्यैव गुणः। अकार आदेश इति बोध्यम्। एवमीयस् – बहूनामतिशयविवक्षायामिष्ठनि यथादर्शितानि रूपाणि तथा द्वयोरतिशयविवक्षायां विभज्योपपदे च स्थूलादिभ्य ईयसुनि रूपाण्यूह्यानीत्यर्थः। तथा च स्थवीयान् – दवीयान् – यवीयानित्यादि। पृथ्वादित्वादिमनिच् भवतीति शेषः। ह्रस्वस्वभावो ह्रसिमा। भावप्रकरणे वक्तव्यानां ह्रसिमेत्यादीनामस्मिन्नातिशायनिकप्रकरणे पाठस्तु स्थूलादीनां यणादिपरं लुप्यते । इष्ठेमेयस्स्वित्युक्तत्वेन इमनिच्यपि यणादिपरलोपस्स्यादिति यणादिपरलोपसङ्गत्या ह्रसिमेत्यादीन्युदाहृतानीति बोध्यम्। ***प्रियेति।** प्रियस्य प्र – स्थिरस्य स्थ – स्फिरस्य स्फ – उरोर्वर् – बहुलस्य बंहि – गुरोः गर्। वृद्धस्य वर्षि–तृप्रस्य त्रप् – दीर्घस्य द्राघि – बृन्दारकस्य बृन्द–इत्यादेशाः। एकाक्षु आदेशेषु न टिलोपः। प्रकृत्यैकाच् इति

प्रियोरुबहुलगुरुदीर्घाणां पृथ्वादित्वादिमनिच्। प्रेमेत्यादि॥ **२०१७। बहोर्लोपो भू च बहोः** ।६।४।१५८। बहोः परयोरिमेयसोर्लोपः स्याद्बहोश्च भूरादेशः। भूमा। भूयान्॥**२०१८। इष्ठस्य यिट् च**।६।४।१५९। बहोः परस्य इष्ठस्य लोपः स्यत् यिडागमश्च। भूयिष्ठः॥ **२०१९। युवाल्पयोः कनन्यतरस्याम्**।५।३।६४। एतयोः कनादेशो वा स्यादिष्ठेयसोः। कनिष्ठः। कनीयान्। पक्षे। यविष्ठः। अल्पिष्ठः। इत्यादि॥ **२०२०। विन्मतोर्लुक्** ।५।३।६५। विनो मतुपश्च लुक् स्यादिष्ठेयसोः।

---

प्रकृतिभावात्। द्व्यक्षु तु टिलोपः। ***बहोरिति। अत्र** एकं पञ्चम्यन्तमपरं षष्ठ्यन्तञ्च। बहुपदम् बहोर्लोपो भूचेत्युक्तौ अयं भूरादेशः इमे यगोरेवस्यादिति पुनर्बहोरित्यस्य ग्रहणम्। **इष्ठस्य यिट्च इति** वक्ष्यमाणत्वादत्र इष्ठेमेयस्स्विति नानुवर्तते। किन्तु इमेयसोरित्येव। अतिशयेन बहुर्भूमा। यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा इति भूमाधिकरणे श्रीशङ्करभगवत्पादाः। तेन बहुत्वस्यातिशयो नाम एवंविध इति बोध्यम्। ***इष्टस्येति।** इटि इकार उच्चारणार्थः। टित्त्वादाद्यवयव आगमोऽयम्। य् इष्ठ–इष्ठ–बहोर्भूरादेशश्च भवति। भू च बहोरित्यस्यात्रानुवृत्तेः। भूयिष्ठः। अत्र यिटि टकार एवेत्। यि इति इकारान्त आगम इति कृत्वा बहोर्लोपो भू च बहोरिति सूत्रं सर्वमप्यनुवर्त्य बहोः परस्य इष्ठस्य लोपः। आदेः परस्येति इष्ठनि इकारस्य लोपः। बहुष्ठ इति स्थिते। ष्ठस्य यिट्, बहोर्भूरादेशः। भूयिष्ठः इति मूलकारस्याशयः। अस्मिंस्तु व्याख्याने बहोर्लोप इत्यस्याप्यनुवृत्तिरिति अस्ति किञ्चित्क्लेश इति बोध्यम्। बहोः परस्य इष्ठस्य यिडागमः। बहोर्भूरादेशश्चेत्येकः पक्षः। बहोः परस्य इष्ठस्य लोपः यिडागमश्च। बहोर्भूरादेशश्चेत्यपरः पक्षः इति विवेकः। ननु प्रथमव्याख्यानेऽपि बहोर्लोप इत्यस्याननुवृत्तिरिति वक्तुं न शक्यते, किन्तु लोप इत्यस्यैव। बहोः परस्येष्ठस्य इष्ठस्य लुडित्येतदर्थं पञ्चम्यन्तस्य प्रथमस्यापि बहोरिति पदस्य अनुवृत्तेरावश्यकत्वादिति चेत्, सत्यं तर्हि लोप इत्यस्याप्यननुवृत्तिर्लाघवावह एवेति सन्तोष्टव्यम्। ***युवेति।** कनि नकारस्य नेत्त्वमुच्चारणसामर्थ्यात्। कनभावपक्षे युव इष्ठ–स्थूलदूरेति परयणादिलोपः। यु–इष्ठ। पूर्वस्य च गुणः। अवादेशः। यविष्ठ – अल्प – इष्ठ। टेरिति लोपः। अल्पिष्ठ द्वयोरतिशये यवीयानल्पीयानिति। ***विन्मतोरिति।** इतरेतरद्वन्द्वः। विन् – च – मत् – च विन्मतौ तयोः विन्मतोः (विन्मतः। विन्मतोः। विन्मताम् इति षष्ठीविभक्तिः) मतुपि उपयोरित्त्वे यच्छिष्यते तस्येह ग्रहणम्मत् इति। स्रग्वी । विनि परतः पूर्वस्य पदत्वेन चोः कुत्वे जश्त्वे च स्रग्वी

अतिशयेन स्रग्वी स्रजिष्ठः। स्रजीयान्। अतिशयेन त्वग्वान् त्वचिष्ठः। त्वचीयान्॥ **२०२१। प्रशंसायां रूपप्** ।५।३।६६। सुबन्तात्तिङन्ताच्च। प्रशस्तः पटुः पटुरूपः। प्रशस्तं पचति पचतिरूपम्॥ **२०२२। ईषदसमाप्तौ कल्पब्देश्यदेशीयरः**।५।३।६७। ईषदूनो विद्वान् विद्वत्कल्पः। यशस्कल्पम्। यजुःकल्पम्। विद्वद्देश्यः। विद्वद्देशीयः। पचतिकल्पम्॥ **२०२३। विभाषा सुपो बहुच् पुरस्तात्तु** ।५।३।६८। ईषदसमाप्तिविशिष्टेऽर्थे सुबन्ताद्बहुज्वा स्यात्स च प्रागेव नतु परतः। ईषदूनः पटुर्बहुपटुः। पटुकल्पः। सुपः किम्। यजतिकल्पम्॥

---

इति रूपम्। विन्लुकि तु इष्ठेयसोः पूर्वस्य भत्वान्न कुत्वादिकम्। स्रजिष्ठ इत्यादि। एवं त्वचिष्ठ इत्यत्रापि न कुत्वजश्त्वे इति बोध्यम्। ***प्रशंसायामिति।** तिङश्चेत्यधिकारादाह – सुबन्तात्तिङन्ताच्चेति। प्रशंसायां प्रत्ययेन द्योत्यायां सत्यामित्यर्थः। प्रशंसायां विषये इति वा। कल्पप् रूपप् इत्यादीनां तसिलादिष्वपरिगणितत्वात् पचतिरूपमित्यादयो नाव्ययानि। क्लीबत्वे स्वमोरमि पचतिरूपम्। ***ईषदिति।** प्रकृत्यर्थस्य परिपूर्णतायां प्रशंसायामित्यनेन रूपप् विहितः। प्रकृत्यर्थस्य किञ्चिदपरिपूर्णतायां गम्यमानायां कल्पबादिविधायकमिदं सूत्रम्। कल्पपि देशीयरि च पराविति। त्रयोप्यदन्ताः प्रत्ययाः। सुप्तिङन्तात्कल्पबादिप्रत्ययास्स्युः। ईषदसमाप्तौ प्रत्ययेन गम्यमानायामिति सूत्रार्थः। ऊनः अपरिपूर्णः। पचतिकल्पम्। एवं पचतिदेश्यः। पचतिदेशीय इत्यादीन्यूह्यानि। ***सुप इति।** तिङश्चेत्यत्रान्वयो माभूदिति सुपो ग्रहणं कृतम्। अन्यथा – (तिङश्चेत्यस्यात्रान्वये सतीत्यर्थः) तिङन्तादपि बहुच्प्रसङ्ग इति। प्रत्ययः अधिकारोयमापञ्चमपरिसमाप्तेः। परश्च। अयमपि तथा। इति शब्दाधिकारप्रारम्भे मूले उक्तत्वादत्र प्रत्ययाधिकारेण बहुच्प्रत्यय एव। परश्चेत्यधिकारबाधनार्थं पुरस्तात्तु इति सूत्रे प्रोक्तम्. ***प्रकारेति।** ननु प्रकारवचने थाल् इत्युक्तमेव। किन्त्वस्य जातीयरश्च समुच्चय इति शङ्कायामाह – प्रकारवति चायमिति। प्रकारोस्यास्तीति प्रकारवान् तस्मिन्–पटुः प्रकारो यस्य स पटुप्रकारः – सुप इत्यस्यात्रानुवर्तनात्सुबन्तादेवायं जातीयर्। ***अव्ययेति।** अव्ययेभ्यः सर्वनामभ्यः तिङन्तेभ्यश्च स्वार्थे अकच् स्यात्। स च टेः प्राक् अचोन्त्यादि टि इति टिसंज्ञा। कापवादोऽयमकच्। अकचि च इत्। अकार उच्चारणार्थः। अक् इति कान्तः प्रत्ययः। सूत्रे सर्वनाम्नामिति पञ्चम्यर्थे षष्ठी। अव्ययसर्वनामसम्बन्धिनष्टेः प्रागकजिति षष्ठ्यैव वा। ***कस्येत्यव्ययविशेषणत्वेन** तदन्तविधिरित्याह कान्ताव्ययस्येति। अज्ञाते कस्यात् अव्ययादिभ्यस्तु अकच्। ***अज्ञातोपाधिकात्स्वार्थे** प्रत्ययः। कस्यायमश्वो वा मया न ज्ञायते इति कस्यायमिति विग्रहवाक्येन अज्ञातत्वं द्योत्यते इति कृत्वा वदति। कस्यायमश्व इति। अज्ञातोऽश्वोऽश्वक इति तु सुवचम्। उच्चैस् – नीचैस् इति सान्तमव्ययद्वयम्। ताभ्यामज्ञातोपाधिकाभ्यां स्वार्थे अव्ययसर्वनाम्नामित्यकचि टेः प्राक् कृते सति उच्चकैःनीचकैः इति रूपद्वयम्। (उच्च् ऐः। अकच् – उच्चक् ऐः उच्चकैः)

**२०२४। प्रकारवचने जातीयर्** ।५।३।६९। प्रकारवति चायम्। थाल् तु प्रकारमात्रे। पटुप्रकारः पटुजातीयः॥ **२०२५। प्रागिवात्कः** ।५।३।७०। 'इवे प्रतिकृतौ २०५१' इत्यतः प्राक् काधिकारः॥ **२०२६। अव्ययसर्वनाम्नामकच् प्राक् टेः** ।५।३।७१। 'तिङश्च २००२' इत्युनवर्तते॥ **२०२७। कस्य च दः** ।५।३।७२। कान्ताव्ययस्य दकारोऽन्तादेशः स्यादकच्च॥ **२०२८। अज्ञाते** ।५।३।७३। कस्यायमश्वोऽश्वकः। उच्चकैः। नीचकैः। सर्वके। विश्वके॥ **ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्॥**

---

अज्ञातं यथा तथा उच्चैर्नीचैरित्यर्थः सर्वनाम्नोऽकचमुदाहरति–सर्वके विश्वके इति प्रथमाबहुवचनान्ते एकवचने द्विवचने च सर्वनामकार्यादर्शनमिति कृत्वा बहुवचनान्तमुदाहृतम्। ***ओकारेत्यादि** भाष्यकारेष्टिरियम्। ओकारादौ सकारादौ भकारादौ च सुपि परतः सर्वनाम्नः प्रातिपदिकस्य टेः प्रागकच्। अन्यत्र ओकारादिव्यतिरिक्ते सुपि परतः सुबन्तस्य टेः प्रागकच् स्यादित्यर्थः। अज्ञातयोस्सर्वयोरिति विग्रहे सर्व ओस् इत्यलौकिके विग्रहे अव्ययसर्वनाम्नामित्यकच् प्राप्तः सन् ओकाराद्यवयवकसुप्परकत्वेन सर्वनाम्नस्सर्वशब्दस्य टेः प्राक् भवति। सर् व् – अक् – अ – ओस् – सर्व क – ओस् – ओसि च अत एकारः– अयादेशः। सर्वकयोः। यद्यप्यत्र सुपष्टेः प्रागकचि कृतेऽपि नात्र रूपविशेषः। तथापि सर्वकेणेति न सिद्ध्येत्। सर्व – इन सुपष्टेः प्रागकच्। सर्व – इन् – अक् अ। सर्वेणक इति स्यात्। ननु ओकाराद्यन्यतमाद्यवयवकप्रत्ययपरकत्वाभावेन सुपष्टेः प्रागेवात्राकच् स्यात् न तु प्रातिपदिकस्येति चेत्सत्यम्। अत एव युष्मदस्मन्मात्रविषयक एवायं सङ्कोच इति भाष्योदाहरणेनावगतत्वात्. न सर्वादिविषयक इति विद्धि। युवकयोः। युष्मद् – ओस् इति स्थिते ओकारादिसुप्परकत्वसत्त्वात्सर्वनाम्नः प्रागकच् – युष्मकद् – ओस् – युवावौ द्विवचने इति मपर्यन्तस्य युवादेशः। युवकद् – ओस् – त्यदादीनामः। अतो गुणे – युवक ओस् – ओसि चेत्येकारः। अयादेशः युवकयोः। अत्र सुपष्टेः प्रागकचि तु युष्मद् अक् – ओस् – युवादेशः। त्यदादीनामः। अतो गुणे– युव – अक् – ओस्। अतो गुणे युवकोरिति स्यात्। एवमावकोरिति स्यादित्यूह्यम्। युष्मकासु। सकारादौ सुपि परत इदमुदाहरणम्। सुपष्टेः प्रागकचि तु युष्मद् अक् सु– त्यदाद्यत्वं पररूपत्वम्। पुनः पररूपत्वम्। इण्कोरिति षत्वम्। युष्मक्षु इति स्यात्। एवमस्मक्षु – युष्मकाभिः। अन्यथा युष्मग्भिः। एवमस्मग्भिरिति च स्यात्। त्वयका। युष्मदस्मदोरपि सर्वादीनामिव सर्वनाम्न एव टेः प्रागकच् – न तु सुपः युवकयोरित्याद्यसिद्धेरिति यद्युच्येत तर्हि त्वयकेत्याद्यसिद्धिः। युष्मद् – टा सर्वनाम्नष्टेः प्रागकच् – युष्मकद् – टा – त्वमावेकवचने इति मपर्यन्तस्य त्वादेशः। त्वकद् – टा – योऽचीति दकरस्य यत्वम्। त्वकय् – आ – त्वकया इति स्यात्।

युवकयोः। आवकयोः। युष्मकासु। अस्मकासु। युष्मकाभिः। अस्मकाभिः। ओकारेत्यादि किम्। त्वयका। मयका॥ **अकच्प्रकरणे तूष्णीमः काम्वक्तव्यः** मित्त्वादन्त्यादचः परः। तूष्णीकामास्ते॥ **शीले कोमलोपश्च**॥ तूर्ष्णींशीलः तूष्णीकः। पचतकि। जल्पतकि। धकित्। हिरकुत्॥

---

एवं मकया इति। तस्मात् ओकारसकारेति भाष्यकारेष्टिरवश्यमभ्युपेया। इष्टिपक्षे ओकारादिप्रत्ययभिन्नत्वेन टायाम्परतः सुपष्टेः प्रागकचि युष्मद् अक् टा। त्वादेशः त्वद् अका-योऽचीति यत्वं त्वयका, एवं मयका इति अभीष्टरूपसिद्धिरिति बोध्यम्। युष्मदस्मदोराकारसकारभकारादिभिन्ने सुपि सुपष्टेः प्रागकच् इति भाष्यकारेष्टिस्सुवचा। अव्ययसर्वनाम्नामकच् प्राक्टेरित्यनेन सर्वनाम्नोर्युष्मदस्मदोः टेः प्रागकचि प्राप्ते तदपवादोऽयं सुपष्टेः प्रागकच् इति भावः। ***ननु** सुपष्टेः प्रागकचि कृते त्वद् - अक् टा। अस्यामवस्थायां योऽचीति न यत्वम्। अकचः अविभक्तित्वेन अजादिविभक्तिपरकत्वाभावादिति चेन्मैवम्। योऽचीति यत्वविध्यनन्तरमेव - त्वय् टा इत्यवस्थायामकचि अभीष्टसिद्धेः। ननु त्वय् टा इति प्रक्रियैव न सिद्ध्यति त्वद् - टा इत्यवस्थायां यादेशंप्रति यन्निमित्तं टा तद्गतं त्वदपेक्षया परत्वं विनाशोन्मुखम्। अकचि कृते अकच एव परत्वात्त्वदपेक्षयेति टाविभक्तिगतं परत्वं यादेशं प्रति निनिमित्तभूतं विनाशोन्मुखमिति अकृतव्यूहपरिभाषया यत्वस्याप्राप्तिरिति चेन्मैवम्। अकृतव्यूहपरिभाषाया अनित्यत्वात्। ***अकजिति।** तूष्णीम् इति मान्तमव्ययम्। तेन अव्ययेत्यकचि प्राप्ते तदपवादोऽयं काम्प्रत्ययः। अकच्प्रकरणे अकज्विषये इत्यर्थः। प्रत्ययानामागमत्वेन मिदचोन्त्यात्पर इति अन्त्यादचः परस्सन्भवत्ययं काम्प्रत्ययः। (मित्रवदागमश्शत्रुवदादेश इति। आगमो हि मित्रवद्भवति यथा - तथा प्रत्ययोऽपीति मित्रवद्भवनधर्मसाम्यात्प्रत्ययानामागमत्वमित्युक्तम्) तूष्णीमः कामागम इत्युक्तौ आगमानां प्रत्ययापवादत्वाभावेन तूष्णीमोकच्प्रत्ययः कामागमश्चेत्युक्तं भवति । तथा च तूष्णीकामिति न सिद्ध्येत्। तूष्णीकाकमित्यनिष्टरूपापत्तिरिति बोध्यम्। कामिमस्य इत्त्वेन का इति शिष्यते। तूष्णी - म् । इत्यत्र अन्त्यादच ईकारात्परः काम् तूष्णी - काम्। तूष्णीकाम् इति रूपम्। शीले द्योत्ये तूष्णीमः । कप्रत्यः मकारलोपश्च स्यात् अकजपवादः कामित्युक्तम् । प्रागिवात्कस्यापवादोकजिति च। एवञ्च कापवादोऽकच् तदपवादः काम् तदपवादोयं क इति प्रतिप्रसवोऽयं कप्रत्ययः। अव्ययसूत्रे तिङश्चेत्यनुवर्तते इत्युक्तं तस्योदाहरणमधुना वदति। पचतकि - जल्पतकि - अज्ञातं पचति - पचतकि, तिङन्तात्टेः प्रागकचि पचत् अक् - इ पचतकि। अकचि भत्वान्न जश्त्वेन तकारस्य दकारः। कस्य चद इति सूत्रस्योदाहरणमाह - हिरकुत् - धकित्-इति धिक् - हिरुक् इति कान्ते अव्यये निन्दायां वर्तेते। धिकष्टेः प्रागकचि ध्-अक्-इक्- धकिक् - कस्य दत्वम्। थकित्। न च अकचः ककारस्य दत्वं शङ्क्यम्। कान्ताव्ययस्य

**२०२९। कुत्सिते** ।५।३।७४। कुत्सितोऽश्वोऽश्वकः॥ **२०३०। संज्ञायां कन्** ।५।३।७५। कुत्सिते कन् स्यात्तदन्तेन चेत्संज्ञा गम्यते। शूद्रकः। राधकः। स्वरार्थं वचनम्॥

---

दकार इत्युक्तत्वात्। अकचि कृतेऽपि अकचः टेः प्राक्कृतत्वेन प्रकृतिककार एव अन्ते श्रूयते न तु प्रत्ययककार इति बोध्यम्। हिर् – उक् – अत्र अकच् – हिरकुक् – कस्य दः – हिरकुत् – इति। ***कुत्सिते।** अत्र प्रागिवात्क इति कस्याधिकारः। अव्ययसर्वनाम्नामकच् प्राक्टेरिति च–कस्य च द इति च अनुयन्ति – तथा च कुत्सितोपाधिकात्समर्थात्स्वार्थे कः। अव्ययादिभ्यस्तु टेः प्रागकच् – कान्ताव्ययस्य दश्चेत्यर्थः। ***संज्ञायामिति।** अत्र कुत्सिते इति सूत्रमनुवर्तते – काद्यपवादोऽयं कन्। तदन्तेन कन्प्रत्ययान्तेन कनि नकार इत् – ननु केन सिद्धे पृथक्कन्वचनमनर्थकमत आह स्वरार्थमिति। कुत्सितश्शूद्रो फण्यते शूद्रक इति संज्ञेयं कस्य चिच्छूद्रस्य। ***अनुकम्पायां प्रत्ययेन** द्योत्यायाम्। समर्थात्क इत्यादि। पुत्रकः। एवं सर्वक इत्यादावकच्। ***हन्तते** धानकाः। केनचित्सन्धिमिच्छतः कस्य चिद्वचनमिदं श्लाघाविषयम्। त्वया वितीर्णा धानकाः श्लाघ्यन्ते इत्यर्थः। तिङन्तादकचमुदाहरत्युक्तार्थे – एहकि। एहात्यस्यादकच् – एहिति धातुना य उच्यते सोत्र अनुकम्पायुक्तः। हे देवदत्त त्वमेहकि। इति देवदत्तोनुकम्पायुक्तः। प्रार्थनावचनमिदम् तेन सामोपायो गम्यते। अद्धि इति अदधातोर्लोटि मध्यमपुरुषैकवचनम्। तस्मदकचि अद्धकि। ननु अनुकम्पायामिति पूर्वसूत्रेणैव उक्तोदाहरणसिद्धौ किमर्थमिदं सूत्रमत आह – पूर्वेणेत्यादि। यो ह्यनुकम्प्यते तस्मात्प्रत्ययः पूर्वसूत्रेण विधीयते – यो ह्यनुकम्प्यते तत्सम्बन्धि यद्वस्तु धानादिकं तस्मादपि प्रत्ययविधिरनेनेति भावः। ***बह्वच** इति। पूर्वसूत्रद्वयेनैव के सिद्धे ठजर्थमिदं सूत्रम्। पूर्वसूत्रद्वयमत्रानुवर्तते इत्याह – पूर्वसूत्रद्वयविषये इति मनुष्यनाम्नः मनुष्यविशेषवाचकादित्यर्थः। ***घन् इलच्।** तौ घनिचौ प्रत्ययौ – अत्र पूर्वसूत्राद्बह्वचः मनुष्यनाम्न इत्यनुवर्तते – बह्वचो मनुष्यनाम्नष्ठज्झनिलचश्च – इति एकसूत्रं सुवचम्। चात्कप्रत्यय इत्यर्थः। तत्रैव पूर्वसूत्रद्वयविषये एवेत्यर्थः। अनुकम्पायां नीतौ च तद्युक्तादित्यर्थद्वये इति यावत्। ***ठाजादाविति।** ठश्च – अजादिश्च अनयोस्समाहारः ठाजादिः। तस्मिन् ठाजादौ– ठे अजादौ च प्रत्यये परे इत्यर्थः। अजनान्तस्योत्तरपदलोपश्चेति पूर्वसूत्राल्लोप इत्यत्रानुवर्तते। लुप्यते इति लोपः इति व्युत्पत्त्या लोप इत्यस्य लुप्यते इत्यर्थ इति कृत्वा आह–मूले लुप्यते इति। अयं च द्वितीयाच् प्रकृत्यवयव एव। न तु प्रत्ययावयवः। प्रत्यये परे इत्यनेन पूर्वस्याक्षिप्तत्वादित्याह –

**२०३१। अनुकम्पायाम्** ।५।३।७६। पुत्रकः। अनुकम्पितः पुत्र इत्यर्थः॥ **२०३२। नीतौ च तद्युक्तात्** ।५।३।७७। सामदानादिरुपायो नीतिस्तस्यां गम्यमानायामनुकम्पायुक्तात्कप्रत्ययः स्यात्। हन्त ते धानकाः। गुडकाः। एहकि। अद्धकि। पूर्वेणानुकम्प्यमानात्प्रत्ययः। अनेन तु परम्परासंबन्धेऽपीति विशेषः॥ **२०३३। वह्वचो मनुष्यनाम्नष्ठज्वा** ।५।३।७८। पूर्वसूत्रद्वयविषये॥ **२०३४। घनिलचौ च** ।५।३।७९। तत्रैव॥ **२०३५। ठाजादावूर्ध्वं द्वितीयादचः** ।५।३।८३। अस्मिन्प्रकरणे यष्ठोऽजादिप्रत्ययश्च तस्मिन्प्रत्यये परे प्रकृतेर्द्वितीयादच ऊर्ध्वं सर्वं लुप्यते। अनुकम्पितो देवदत्तो देविकः। देवियः। देविलः। देवदत्तकः। अनुकम्पितो वायुदत्तो वायुदत्तकः। ठग्रहणमुको द्वितीयत्वे कविधानार्थम्। वायुकः। पितृकः॥ **चतुर्थादच ऊर्ध्वस्य लोपो वाच्यः**॥ अनुकम्पितो बृहस्पतिदत्तो बृहस्पतिकः॥ **अनजादौ च विभाषा लोपो वक्तव्यः**॥ देवदत्तकः। देवकः॥

---

प्रकृतेर्द्वितीयादच इति। प्रकृत्यवयवाचाम्मध्ये यो द्वितीयोऽच् तस्मादूर्ध्वम्परं सर्वमज्झल्समुदायः लुप्यते इत्यर्थः। अस्मिन्प्रकरणे अनुकम्पायां नीतौ च तद्युक्तादिति सूत्रद्वयविषये इत्यर्थः। अस्य सूत्रस्यात्रैवारब्धत्वादिति भावः। देविकः देवदत्त इति कश्चिन्मनुष्यः। अतो मनुष्यविशेषवाची शब्दोऽयं देवदत्त इति। तस्मादनुकम्पायां ठचि कृते – देवदत्त – ठ। ठपरकत्वात्प्रकृतिद्वितीयाच्परज्झल्समुदायस्य दत्तेत्यस्य लोपः। देव – ठ – ठस्येकः। यस्येति लोपः देविकः। घनि देवियः। इलचि। देविलः। के देवदत्तकः। ननु घस्येयादेशे अजादिपरकत्वेन यथा देविय इति सिद्ध्यति तथा ठस्येकादेशे च कृते अजादिपरकत्वाद्देविक इति सिद्ध्यत्येवेति ठग्रहणं व्यर्थमिति शङ्कायामाह। ***ठग्रहणमिति।*** उगिति प्रत्याहारः। उको द्वितीयत्वे द्वितीयस्याच उक्त्वे-त्यर्थः। उक् यदि द्वितीयाच् भवति तदा इति यावत्। कविधानार्थम्। इसुसुक्तान्तात्क इति ठस्य कादेशो यथा स्यात्तदर्थं ठग्रहणमिति भावः। यथा वायुदत्त इत्यत्र ठस्य इकादेशात्प्रागेव दत्तलोपे द्वितीया च उक्त्वेन उगन्तलक्षणे ठस्य कादेशे कृते वायुक इति रूपम्। ठावस्थायामेव द्वितीयादच ऊर्ध्वस्य लोपो यथास्यात्तदर्थं ठग्रहणमिति निष्कर्षः। ***चतुर्थादिति।*** न च देवदत्तशब्दादपि ठे कृते चतुर्थादच ऊर्ध्वस्य ठस्य लोपे अनुकम्पितो देवदत्तो देवदत्त इति स्यादिति वाच्यम्। चतुर्थादचं ऊर्ध्वस्य प्रकृतिभावस्यैव लोप इति व्याख्यानात्। उक्तञ्चेदं प्रागेव। प्रकृतेर्द्वितीयादच इति। अन्यथा अनुकम्पितो रामः राम इति स्यात्। अनुकम्पायां विहितस्य कस्य लोपात्। ***अनजादाविति।*** अनजादौ प्रत्यये परतः चतुर्थादच ऊर्ध्वस्य – द्वितीयादच ऊर्ध्वस्य च लोपो वा स्यादित्यर्थः। ननु ठाजादाविति सूत्रस्य ठाजादौ इति न्यासः। अत्र पूर्वसूत्रादुत्तरपदलोप इत्यस्यानुवृत्तिः। ठाजादौ परतः उत्तरपदलोपस्स्यादित्यर्थः। एवञ्च चतुर्थादच ऊर्ध्वस्येति वार्तिकेनापि नार्थः।

**लोपः पूर्वपदस्य च**॥ दत्तिकः। दत्तियः। दत्तिलः। दत्तकः॥ **विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः**॥ देवदत्तः। दत्तः। देवः॥ सत्यभामा। भामा। सत्या॥ **उवर्णाल्ल इलस्य च**॥ भानुदत्तः। भानुलः॥ **ऋवर्णादपि**॥ सवित्रियः। सवितृलः॥ **चतुर्थादनजादौ च लोपः पूर्वपदस्य च। अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च**॥ १॥ ल इति लोपसंज्ञा प्राचाम्॥ **२०३६। प्राचामुपादेरडज्वुचौ च** ।५।३।८०।

---

देवदत्त इत्यत्र उत्तरपदस्य दत्तस्य बृहस्पतिदत्त इत्यत्राप्युत्तरपदस्य दत्तस्य च लोपे सति देवयः बृहस्पतिक इत्यादिरूपसिद्धेरिति चेन्मैवम्। अनुकम्पित ईश्वरदत्तः। ईश्वः इति यथास्यात्तदर्थमिति। ननु ईश्व इत्यपप्रयोग एव। अनभिधानात्। न्यासस्तु सुवचः इति चेन्मैवम्। उपेन्द्रदत्तशब्दात् ठादौ कृते उपिक इति स्यात् किन्तु उपेन्द्रिक इत्यादि स्यात्। दत्तस्यैवोत्तरपदत्वेन तस्यैव लोपो न त्विन्द्रदत्तस्येति। ***लोपः** पूर्वपदस्य चेति। चात् ठज्झनिलच्काः। द्वितीयादच ऊर्ध्वस्य लोपः। चतुर्थादच ऊर्ध्वस्य लोपश्च पाक्षिक इत्यनेन ज्ञायते। युगपत्पूर्वोत्तरपदयोर्लोपासम्भवात्। ***विनापि** प्रत्ययमिति अनुकम्पायां नीतौ च तद्युक्तादिति सूत्रद्वयस्याविषयेपीति तदर्थः। पूर्वोत्तरपदयोरन्यतरस्य लोपस्स्यादित्यर्थः। ***उवर्णादिति।** उवर्णान्ताद्बह्वचो मनुष्यनाम्नः अनुकाम्पादिविषये विहितो य इलच् तस्य लः लादेशः। अनेकाल्त्वात्सर्वस्यायमादेशः स्यात्। चात् द्वितीयचतुर्थाजुत्तरखण्डलोपः भानुलः। एवं अनुकम्पितो विभावसुदत्तो विभावसुलः। ननु भानुदत्तशब्दादिलचि अवर्णान्तादेवायमिलच् इति इलचो न ल इति चेत्सत्यम्। तर्हि इलचि कृते लादेशात्प्रागेव पूर्वोत्तरपदयोर्वा लोपः पश्चात् उवर्णान्तप्रकृतेः परस्य इलचो लादेश इति विद्धि। मूले भानुदत्त इति प्रकृतिप्रदर्शनम्। ***ऋवर्णादपीति।** ऋवर्णान्तादपीलस्य लस्स्यादित्यर्थः। अनुकम्पितस्सवितृदत्तस्सवितृलः। इलचविधाय घनि कृते सवितृ इय इति स्थिते इको यण्। सवित्रियः। ननु सवितृदत्तेत्यत्र कथमुत्तरपदस्य दत्तस्य लोपः। तृतीयादच उत्तरत्वादिति चेदुच्यते। शेवल सु परीत्यत्र अर्यमादीनामिति वक्ष्यति। तत्र आदिशब्दः प्रकारवचनः। तेन सवितृदत्तशब्दादिलचि तृतीयादच ऊर्ध्वस्य लोपस्सिध्यति–यद्वा–सवितृशब्दादेव अनुकम्पायां घनिलचोः कृतयोः सवित्रियः सवितृल इति रूपद्वयमित्यवेहि। न च सवितुर्देवत्वेन अमनुष्यत्वान्मनुष्यनाम्न इत्यनेन घनिलजाद्यप्राप्तिरिति वाच्यम्। सवितेति कस्य चिन्मनुष्यस्य संज्ञा इति वक्तुं शक्यत्वात्। ***चतुर्थादिति** सूत्रवार्तिकमिदम्। चतुर्थादच ऊर्ध्वस्येत्यनेन चतुर्थादिति पदं व्याख्यातम् । अनजादौ च विभाषालोपो वक्तव्य इत्यनेन अनजादौ चेति व्याख्यातम्। विनापि प्रत्ययमित्यनेन अप्रत्यये इति व्याख्यातम्। ऋवर्णादपीत्येतत्तु श्लोकात्पृथग्वार्तिकम्। ***प्राचामिति।** उप इति शब्दः आदिर्यस्य तस्मात् उपादेः बह्वचो मनुष्यनाम्नः उपादेः अनुकम्पायां नीतौ च तद्युक्तात् आडज्वुचौ स्तः। चात् ठज्झनिलच्काः। द्वितीयादच ऊर्ध्वस्य च लोपः इति सूत्रार्थः। पञ्चमाद्यच्क

उपशब्दपूर्वात्प्रातिपदिकात्पूर्वविषये अडच् वुच् एतौ स्तः। चाद्यथाप्राप्तम्। प्राचांग्रहणं पूजार्थम्। अनुकम्पित उपेन्द्रदत्तः। उपडः। उपकः। उपिकः। उपियः। उपिलः। उपेन्द्रदत्तकः षड् रूपाणि॥ **२०३७। जातिनाम्नः कन्** ।५।३।८१। मनुष्यनाम्न इत्येव। जातिशब्दो यो मनुष्यनामधेयस्तस्मात्कन्स्यादनुकम्पायां नीतौ च। सिंहकः। शरभकः। रासभकः॥ **द्वितीयं संध्यक्षरं चेत्तदादेर्लोपो वक्तव्यः**॥ अनुकम्पितः कहोडः। कहिकः॥ **एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः**॥ वागाशीर्दत्तः वाचिकः।

---

प्रकृतिष्वेव चतुर्थादच ऊर्ध्वस्य लोपप्रसक्तिः। तदितरत्र द्वितीयादच एव उपेन्द्रदत्त इत्यादौ तु न चतुर्थादच उत्तरस्य लोपः। द्वितीयादच उत्तरस्य लोपेनैव तस्यापि लुप्तत्वात्। ननु बृहस्पतिदत्त इत्यत्रापि द्वितीयादच उत्तरस्यैव लोपः किमिति न स्यादिति चेत् मैवम्। चतुर्थादच इति वार्तिकस्यानवकाशात्। वस्तुतस्तु अजिनान्तस्योत्तरपदलोप इति पूर्वसूत्रात् ठाजादावित्यत्र पदलोप इत्यनुवर्तते । तथा च द्वितीयाचः पदादुत्तरस्य लोप इत्यर्थः। यो द्वितीयाच् तदन्तं यत्पदन्तस्मादूर्ध्वं सर्वं लुप्यते इत्यर्थः। तथा च बृहस्पतिदत्त इत्यत्र बृहस् इत्यस्य पदत्वेन बृह इत्यजन्तं न पदमिति नात्र द्वितीयादच ऊर्ध्वस्य लोपः प्रसज्यते इति न कोऽपि दोषः। ननु प्राचां ग्रहणेन विकल्पो हि लभ्यते। अडज्वुज्विकल्पेन च घनादयो हि लभ्यन्ते। प्रकृते तु चकारेणैव तल्लाभे प्राचां ग्रहणं व्यर्थमिति शङ्कायामङ्गीकाररूपमुत्तरमाह। पूजार्थमिति। उपड इत्यादि। उपेन्द्रदत्तशब्दाद्द्वितीयादच ऊर्ध्वस्य इन्द्रदत्तस्य लोपे उप – अड – यस्येति लोपः। उपड। वुचि वोरकादेशे उपकः। ठचि उपिकः। घनि उपियः। इलचि उपिलः, के उपेन्द्रदत्तकः। ननु उपेन्द्रदत्तशब्दे यो द्वितीयाच् उपे इति पकारोपर्येकारः तस्मादुत्तरस्येन्द्रदत्तस्य लोपे उपे अड यस्येति लोपः। उप यड इति स्यादिति चेन्मैवम्। अलौकिकविग्रहवाक्ये उप–इन्द्रदत्त अड इत्यवस्थायामेव आद्गुणात्पूर्वमेव द्वितीयादच ऊर्ध्वस्य लोपेन इन्द्रदत्तस्य लोप इति। अन्यथा एकारान्तस्य अपदत्वेन द्वितीयाचः पदादूर्ध्वस्य लोप इत्युक्तरीत्या लोपस्यैवासम्भवात्। ***द्वितीयमिति।** ठाजादाविति सूत्रस्थमेवेदं वार्तिकम्। द्वितीयादच उर्ध्वं लुप्यते ठाजादौ परतः इत्युक्तम्। तत्र द्वितीयाच् यदि सन्ध्यक्षरान्यतमम्। ए–ऐ–ओ–औ इत्येषामन्यतममिति यावत्) तर्हि तदादेः संध्यक्षरादेर्लोपो वाच्यः। सन्ध्यक्षरेण द्वितीयाचा साकमूर्ध्वस्य लोपस्स्यादित्यर्थः । यथा कहोडशब्दाद्बह्वचो मनुष्यनाम्न इति ठचि कृते ठस्येकादेशे कहोड इक – ओकारादेर्लोपः। कह् – इक, कहिक इति यद्यपीदं वार्तिकं ठाजादाविति सूत्रव्याख्यानावसरे एव व्याख्येयम्। तथापि द्वितीयाचः पदादुत्तरस्य लोपः पूर्वमुक्तः। अपदत्वेऽपि द्वितीयाजादेर्लोपोऽधुनेति पदत्वं द्वितीयाजन्तस्य नात्रापेक्ष्यते इति द्योतयितुं पृथक्त्वेनेदं निर्दिष्टमिति बोध्यम्। ***एकेति।** व्यञ्जनसहितोऽच् अक्षर इत्युच्यते। एकाक्षरः पूर्वपदं येषां तेषां समस्तपदानामवयवभूतं यदुत्तरपदं (उत्तरपदशब्दस्समासचरमावयवे रूढः)

कथं षडङ्गुलिदत्तः षडिक इति॥ **षषष्ठाजादिवचनात्सिद्धम्**॥

---

तस्य लोपस्स्यात्। यथा–आशिषा दत्त आशीर्दत्तः वाचा आशीर्दत्तः वागाशीर्दत्त इति समासे वाच् इति एकाक्षरकपूर्वपदम्। आशीर्दत्त इत्युत्तरपदं तस्य लोपः वाचिकः। ननु तत्त्वबोधिनीदर्शितव्युत्पत्त्या वागाशिषा दत्त इति वागाशीर्दत्तः इति समासे यदुत्तरपदन्तस्य दत्तस्य लोपे सति वागाशीः ठस्य कादेशः। वागाशीःक इत्येव स्यादिति चेत् (वागाशीःक इत्यत्र इसन्तलक्षणष्ठस्य कादेशः) तर्हि एकाक्षरपूर्वपदात्परपद लोप इति वार्तिकार्थः वक्तव्यः। तथा च एकाक्षरपूर्वपदाद्यानि परपदानि तेषां सर्वेषां लोपस्स्यादेवेति आशीर्दत्त इत्यनयोः पदयोर्लोपेन यत्पूर्वपदमेकाक्षरं वागिति तच्छिष्यते वाचिक इति रूपसिद्धिरिति बोध्यम्। यद्वा – उत्तरपदशब्दोऽत्र न समासचरमावयवे रूढः तथा च एकाक्षरपूर्वपदकानां समस्तपदानामवयवभूतानि यान्युत्तरपदानि एकाक्षरपूर्वपदापेक्षया परपदानि तेषां लोप इति वार्तिकार्थः। अलौकिकप्रक्रियावाक्ये वाच् – आशीस् – दत्त – ठच् – इति स्थिते उत्तरपदलोपे वाच् – ठ ठस्येकः वाच् इक – भत्वान्न कुत्वजश्त्वे – वाचिक इति रूपम्। नन्वेवं षडिक इति न स्यात्। – षष् अंगुलीदत्त ठ इति स्थिते उत्तरपदलोपे ठस्येकादेशे षष् इक भत्वान्न जश्त्वम् षषिक इत्येव स्यादिति शङ्कायामाह – षषष्ठाजादिवचनात्सिद्धमिति। राजादावूर्ध्वं द्वितीयादच इति सूत्रेण द्वितीयाच ऊर्ध्वखण्डस्य म् गुळीदत्त इत्यस्य लोपे सति षष् अ इक इति शिष्यते। यस्येति चेत्यकारलोपः। षष् – इक – अचः परस्मिन्पूर्वविधाविति अकारस्य स्थानिवद्भावः तेन इके परतः अकारान्तस्यैव भत्वं न षकारान्तस्य इति षान्ते अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वमस्त्येव। (षष् – भिस् – अंगुळी – भिस् – दत्त – सु इति विग्रहे सुपो धात्विति सुब्लुकि षष् अंगुलीदत्त इति भवति। तेन समासान्तर्वर्तिनी भिस् इति विभक्तिरस्ति। षष इति पदत्वं षषः सुप्तिङन्तमिति सुबन्तस्य पदत्वात्) पदत्वाज्जश्त्वेन डः षडिक इति सिद्ध्यतीति भावः। **ठाजादिसूत्रेण** द्वितीयाच ऊर्ध्वस्य लोपवचनात् षषष्स्य जश्त्वं सिद्धमित्यक्षरार्थः। ननु द्वितीयाचः पदादूर्ध्वस्यैव लोप इत्युक्तम्। कथमधुना अपदादपि लोप इति चेत्सत्यम्। चिन्त्यमेवेदम्। यद्वा–द्वितीयाच ऊर्ध्वस्य लोप इत्येवास्तु। द्वितीयाचः पदादिति यदुक्तं नाभ्युपेयताम्। न च बृहस्पतिदत्त इत्यादौ द्वितीयाच ऊर्ध्वस्य लोपेन अनिष्टप्रसङ्गः परेण चतुर्था च उर्ध्वस्य लोपेन द्वितीयाच ऊर्ध्वस्य लोपात्। ननु उपेन्द्रदत्त इत्यादावपि परेण चतुर्थाच ऊर्ध्वलोपेन सता उपड इत्यादिरूपासिद्धिरिति चेन्मैवम्। विप्रतिषेधे परं कार्यम्। परन्नामेष्टमिति व्यवस्थापितत्वेन द्वितीयाच ऊर्ध्वलोपस्यैवोपेन्द्रदत्त इत्यादौ इष्टत्वेन परत्वात्प्राप्तेर्न दोष इति। अत्रायं व्याख्यानक्रमः। ननु ठाजादाविति सूत्रस्य ठाजादौ इति न्यासस्सुवचः। पूर्वसूत्रादुत्तरपदलोप

**२०३८।शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात्** ।५ ।३ ।८४। एषां मनुष्यनाम्नां ठाजादौ परे तृतीयादच ऊर्ध्वं लोपः स्यात्। पूर्वस्यापवादः। अनुकम्पितः शेवलदत्तः शेवलिकः। शेवलियः। शेवलिलः। सुपरिकः। विशालिकः। वरुणिकः। अर्यमिकः॥
**२०३९।अजिनान्तस्योत्तरपदलोपश्च** ।५ ।३ ।८२। अजिनान्तान्मनुष्यनाम्नोऽनुकम्पायां कन् तस्य चोत्तरपदलोपः। अनुकम्पितो व्याघ्राजिनो व्याघ्रकः। सिंहकः॥

---

इत्यस्यात्रानुवृत्तेरिति चेन्मैवम् । उपड इत्याद्यसिद्धेः। ननु उप इन्द्रदत्त इत्यत्र ये उत्तरपदे तयोः इन्द्रदत्तयोर्लोपस्स्यादेव। उत्तरपदलोप इत्यस्य उत्तरपदस्य उत्तरपदयोः उत्तरपदानां वा लोप इति विग्रहेण द्वयोरप्युत्तरपदयोः (परपदयोः) लोपसम्भवात्। उपड इत्यादिरूपसिद्धिर्भवत्येवेति चेन्मैवम्। षडिक इति रूपासिद्धेः। एवं षडिक इति रूपसिद्ध्यर्थं ठाजादाविति सूत्रे ऊर्ध्वं द्वितीयादच इत्येतदावश्यकमिति लब्धे सति वाचिक इति रूपसिध्द्यर्थमेकाक्षरपूर्वपदानामिति वार्तिकमावश्यकमिति फलितम्। अन्यथा ठाजादाविति न्यासपक्षे तेनैवोत्तरपदलोपे सिद्धे किमनेन वार्तिकेन? एतावता ठाजादाविति यथाश्रुतसूत्रं सुष्ठु इति फलिते सति बृहस्पतिक इत्यादिरूपसिद्ध्यर्थं चतुर्थादच इति वार्तिकमावश्यकम्। एकाक्षरपूर्वपदकत्वाभावान्न तत्रोत्तरपदलोपेन इष्टसिद्धिरिति। यत्र तु उत्तरपदलोपः द्वितीयाच ऊर्ध्वस्य लोपः चतुर्थाच ऊर्ध्वस्य लोपश्च एते त्रयः एतेषाम्मध्ये द्वौ वा प्राप्नुवन्ति षडङ्गुळीदत्तः उपेन्द्रदत्त इत्यादौ तत्र स्थले इष्टानुरोधेन व्यवस्था। अत्रायं लोप इष्ट इति ज्ञातुं तु प्राचीनप्रयोगाः प्रमाणम्। अत एव वाचिक इत्यत्र उत्तरपदलोपः शडिका इत्यत्र द्वितीयाच ऊर्ध्वलोपः बृहस्पतिक इत्यत्र चतुर्थाच ऊर्ध्वलोप इति व्यवस्था सिद्ध्यति इति संक्षेपः। शेवलेति शेवल सुपरि विशाल वरुण अर्यमा एतेषामितरेतरद्वन्द्वः एते आदिः प्रकारो येषान्तेषामेतत्प्रकाराणमित्यर्थः। प्रकारस्तादृश्यम् एतेन आदिपदात् सवित्रादीनां ग्रहणमिति फलितम् । अत एव अनुकम्पितस्सवितृदत्तस्सवित्र्य इति रूपसिद्धिः लोपस्स्यादित्यंन्तरानन्तरं पूर्वस्यापवाद इति मूलम् । पूर्वसूत्रेण प्राप्तस्य द्वितीया च ऊर्ध्वलोपस्यायमपवाद इति तदर्थः। वस्तुतस्तु प्राक्प्रदर्शितरीत्या इष्टानुरोधाश्रयणान्नात्र पूर्वस्य प्राप्तिरेवेति पूर्वस्यापवाद इति मूलोक्तिश्चिन्त्या। अर्यमदत्त इत्यत्र अर्यमन् दत्त इक इति स्थिते तृतीयाच ऊर्ध्वस्य प्रकृतिभागस्य न्दत्त-इत्यस्य लोपे अर्यम-इक, यस्येति लोपः अर्यमिक इति रूपम्। यद्यत्रोत्तरपदलोप उच्येत तर्हि अर्यमन् इक इति स्थिते, नस्तद्धित इति टिलोपे अर्यमिक इति स्यादेव - इति तृतीयादच ऊर्ध्वलोपेन नास्त्यत्र प्रयोजनमिति प्रकृतसूत्रे तृतीयाद्ग्रहणं त्यक्त्वा अजिनान्तसूत्रान्मण्डूकप्लुत्या उत्तरपदलोपमनुवर्त्य व्याख्येयम्। ***अजिनेति।** जातिनाम्नः कन् इति पूर्वसूत्रात्कनोत्रानुवृत्तिः। अत्र - अजिनस्योत्तरपदलोप इति न्यासः। उत्तरपद इति छेदः। अविभक्तिकोऽयं निर्देशः। उत्तरपदस्य अजिनस्य लोप इत्यन्वयः। मनुष्यनाम्न इत्यवयवावयविभावसम्बन्धे द्योत्ये

**२०४० । अल्पे** ।५ ।३ ।८५ । अल्पं तैलं तैलकम् ॥ **२०४१ । ह्रस्वे** ।५ ।३ ।८६ । ह्रस्वो वृक्षो वृक्षकः ॥ **२०४२ । संज्ञायां कन्** ।५ ।३ ।८७ । ह्रस्वहेतुका या संज्ञा तस्यां गम्यमानायां कन् । पूर्वस्यापवादः । वंशकः । वेणुकः ॥ **२०४३ । कुटीशमीशुण्डाभ्यो रः** ।५ ।३ ।८८ । ह्रस्वा कुटी कुटीरः । शमीरः । शुण्डारः ॥ **२०४४ । कुत्वा डुपच्** । ५ ।३ ।८९ । ह्रस्वा कुतूः कुतुपः । 'कुतूः कृत्तेः स्नेहपात्रं ह्रस्वा सा कुतुपः पुमान्' ॥ **२०४५ । कासूगोणीभ्यां ष्टरच्** ।५ ।३ ।९० । आयुधविशेषः कासूः । ह्रस्वा सा कासूतरी । गोणीतरी ॥ **२०४६ । वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे** ।५ ।३ ।९१ । वत्सतरः । द्वितीयं वयः प्राप्तः । उक्षतरः । अश्वतरः । ऋषभतरः । प्रवृत्तिनिमित्ततनुत्व एवायम् ॥ **२०४७ । किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच्** ।५ ।३ ।९२ । अनयोः कतरो वैष्णवः । यतरः । ततरः । महाविभाषया कः । यः । सः ॥

---

षष्ठी – तेन मनुष्यनाम्नः अवयवभूतं यदुत्तरपदमजिनमिति तस्य लोप इत्यर्थः। इति सूत्रपक्षे तु अनुकम्पितस्सिंहाजिनस्सिंहक इति रूपसिद्धावपि महासिंहक इति रूपं न सिद्ध्यति। उत्तरपदलोप इत्यनेन वागाशीर्दत्त इत्यत्रेव सिंहाजिनलोपे महान्क इत्येव स्यादिति न्यास एव श्रेयान्। महान्क इति रूपस्यैवेष्टापत्तौ सूत्रमतमेव वरमिति बोध्यम्। ***अल्पे।** अल्पोपाधिकात्स्वार्थे क इत्यर्थः। ***संज्ञायामिति।** अत्र पूर्वसूत्रमनुवर्तते ह्रस्वोपाधिकात्स्वार्थे कन्। प्रत्ययान्तेन चेत्संज्ञा गम्यते इति सूत्रार्थः। अमुमेव भङ्ग्यन्तरेणाह – ह्रस्वहेतुकायां संज्ञायमिति ह्रस्वस्यैव वंशस्य वंशक इति संज्ञा इति संज्ञाया ह्रस्वहेतुकत्वं बोध्यम्। पूर्वस्यापवादः। ह्रस्वे इति सूत्रेण प्राप्तस्य कप्रत्ययस्यापवादः। कन्प्रत्यय इत्यर्थः। स्वरार्थमिदम् ***कुटी इति।** अत्र हस्वे इत्यन्वेति। र इत्यदन्तः प्रत्ययः। ***कुत्वाः।** डुपच् इति छेदः। डु चालितौ – उप इत्यदन्तशेषः। कुतू – उप डित्त्वाट्टिलोपः। कुतुपः। पदार्थ दर्शयितु ममरोक्तमाह कुतूरित्यादि। ***कास्विति।** अत्रापि हस्वे इत्यन्वेति। ष्टरचि षो ङीषर्थः। षस्य इत्त्वेन लोपे निमित्तस्यापाये नैमित्तिकस्याप्यपाय इति तस्य ष्टुत्वेन यः टकारः तस्यापि नाशः। तथा च तरच् इति शिष्यति। च इत्, तर इत्यदन्तशेषः। गोणी परिमाणविशेषः । ***वत्सेति।** तनुत्वोपाधिकेभ्यः वत्सादिभ्यः स्वार्थे ष्टरच् प्रत्ययस्स्यात् । तनुर्वत्सो वत्सतरः। तनुत्वं न्यूनता। वत्से वत्सशब्दप्रवृत्तिं प्रति यन्निमित्तं वत्सत्वं शिशुत्वं तस्य तनुत्वमिहाश्रीयते। तथा च न्यूनवत्सताको वत्सतर इत्युच्यते। (न्यूना वत्सता यस्य स न्यूनवत्सताकः। शेषे बहुव्रीहाविति कः) वत्सताया न्यूनत्वं नाम युवत्वप्रत्यासत्त्या अल्पत्वम्। द्वितीये वयसि प्रत्यासन्ने हि प्रथमं वयस्स्वल्पशेषं भवति। तदेतत्फलितमाह – द्वितीयं वयः प्राप्त इति। द्वितीयं वयः प्राप्तुमुन्मुख इत्यर्थः। अन्यथा द्वितीये वयसि प्राप्ते सति प्रथमस्य सर्वात्मना नाशेन स्वल्पशेषोऽपि न सङ्गच्छेतेति तनुत्वस्यैवाभावात्। यद्वा – प्राप्त इति वर्तमाने क्तः। तथा च प्राप्त इत्यस्य प्राप्नोतीत्यर्थ इति न दोषः। ***किम् यत्तदोरिति।** यत्तदोस्समाहारः। यत्तद्। किम् च यत्तद् च किम्यत्तदौ ताभ्याम्। किम्यत्तदोः किंयत्तद्भ्य इत्यर्थः। द्वयोरेकस्य निर्धारणेऽर्थे वर्तमानेभ्यः

**२०४८। वा बहूनां जातिपरिप्रश्ने डतमच्** ।५।३।९३। बहूनां मध्ये एकस्य निर्धारणे डतमच् वा स्यात्। जातिपरिप्रश्न इति प्रत्याख्यातमाकरे। कतमो भवतां कठः। यतमः। ततमः। वाग्रहणमकजर्थम्। यकः। सकः। महाविभाषया। यः। सः॥ **किमोऽस्मिन्विषये डतरजपि** ॥ कतरः॥ **२०४९। एकाच्च प्राचाम्** ।५।३।९४। डतरच् डतमच्च स्यात्। अनयोरेकतरो मैत्रः। एषामेकतमः॥ **२०५० । अवक्षेपणे कन्** ।५।३।९५। व्याकरणकेन गर्वितः व्याकरणकः। येनेतरः कुत्स्यते तदिहोदाहरणम्। स्वतः कुत्सिते तु 'कुत्सिते २०२९' इत्यस्य॥ **।।प्रागिवीयानां पूर्णोऽवधिः॥**

---

किंयत्तद्भ्यस्स्वार्थे डतरच्प्रत्ययः। डचावितौ। अतर इत्यदन्तशेषः। महाविभाषया समर्थानां प्रथमाद्वेत्यतोनुवृत्ते नवेत्यनेन लब्धः यत्तद्धितानां विकल्पः तेनेत्यर्थः। ***आकरे** – भाष्यकैयटविवरणेष्वित्यर्थः प्रत्याख्याततत्वादेव मूलकारेण जातिपरिप्रश्ने इत्येतन्न व्याख्यातमिति बोध्यम्। ननु द्वयोर्बहूनां वा निर्धारणे वर्तमानेभ्यः किं यत्तद्भ्य एव डतरच् डतमच् इत्येतौ विहिताविति अन्यतरः अन्यतमः इति प्रयोगसिद्धिः कथम् इति चेत् अतिशायने इति द्विवचने विभज्योपपदे इति च यौ तरप्तमपौ विहितौ ताभ्यामिदं रूपद्वयं सिद्ध्यति। अनयोरन्यः अन्यतरः एषामन्यः अन्यतमः इति । ननु अतिशये द्योत्ये एव तौ विधीयेते इति नात्र तयोस्सम्भवः। अतिशयस्य अद्योत्यत्वादिति चेन्मैवम्। अस्त्येव तत्रापि अतिशयद्योत्यता। यो हि प्रकृतः अन्यशब्देन विवक्षितः स एव अतिशयित इत्यभ्युपगमात्। वस्तुतस्तु अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद्द्विबहुविषये निर्धारणे वर्तेते इति मूले एव प्रतिपादितम्। सर्वादिव्याख्यानावसरे अजन्तपुंलिङ्गेषु ततमः। तद् डतमच् इति स्थिते डित्त्वाट्टिलोपः – त् – अतम – ततमः। ननु समर्थानामित्यतो वेत्यनुवर्तते एवेति वाग्रहणमत्र सूत्रे व्यर्थमत आह – अकजर्थमिति। किं यतद्भ्यस्सर्वनामभ्यो विहिते डतमचि विकल्पिते सति अव्ययसर्वनाम्नामकच् प्राक्टेः इति पक्षे अकच् सुलभः। अन्यथा अकचं परत्वाड्डुतमज्बाधते इति नात्राकच्प्राप्तिरिति भावः। महाविभाषया तद्धितप्रत्ययाभावपक्षे इत्यर्थः। डतमज्वा स्यात् पक्षे अकच् इति लब्धत्वेन बहुनां निर्धरणे वर्तमानात्किमः डतमजभावपक्षे डतरचोऽलाभादाह – किमोस्मिन्विषये डतरजपीति। द्वयोर्निर्धारणे इव बहूलां निर्धारणेपि किंशब्दाड्डुतरच्प्रत्ययोऽपि भवतीत्यर्थः। कतरो भवतां कठ इति। *एकादिति। एकशब्दात्। द्वयोर्निर्धारणे वर्तमानात् डतरच् – बहूनां निर्धारणे वर्तमानात् डतमच् च स्यादित्यर्थः। प्राचां ग्रहणात्पक्षे अकच्। *अवक्षेपण इति। अवक्षेपणोपाधिकात्स्वार्थे कन्। अवक्षेपणं (निन्दकम्) व्याकरणं व्याकरणकः। स्वार्थिकानां क्वचित्प्रकृतिलिङ्गातिवृत्तेः पुंस्त्वम्। व्याकरणेन इतरशास्त्राणि अपभ्रंशशब्दवत्त्वेन कुत्स्यन्ते निन्द्यन्ते इति व्याकरणस्य कुत्सकत्वम्। सन्ति हि तर्कशास्त्रादिषु कालीनादयोपभ्रंशाश्शब्दाः। **इति प्रागिवीयाः।**

## तद्धितेषु तद्राजाः ३९।

**२०५१। इवे प्रतिकृतौ** ।५।३।९६। कन् स्यात्। अश्व इव प्रतिकृतिः अश्वकः। प्रतिकृतौ किम्। गौरिव गवयः॥ **२०५२। संज्ञायां च** ।५।३।९७। इवार्थे कन् स्यात्समुदायेन चेत्संज्ञा गम्यते। अप्रतिकृत्यर्थमारम्भः। अश्वसदृशस्य संज्ञा। अश्वकः। उष्ट्रकः॥ **२०५३। लुम्मनुष्ये** ।५।३।९८। संज्ञायां विहितस्य कनो लुप्स्यान्मनुष्ये वाच्ये। चञ्चा तृणमयः पुमान्। चञ्चेव मनुष्यश्चञ्चा। वर्ध्रिका॥

---

### तद्धितेषु तद्राजाः

***इवे** प्रतिकृतौ। अत्र पूर्वसूत्रात्कनोऽनुवृत्तिः। काधिकारस्तु निवृत्तः। प्रागिवात्क इत्युक्तत्वात्। समर्थादिति वेति च अधिक्रियेते। समर्थात्प्रातिपदिकादिवार्थे कन् वा स्यात्। प्रतिकृतौ वाच्यायामित्यर्थः। प्रकृतिप्रत्ययसमुदायेन प्रतिकृतिश्चेदभिधीयते इति यावत्। इवोपाधिकात्समर्थात्स्वार्थे कन्। प्रतिकृतौ वाच्ययामिति वा अर्थः। इव इत्यव्ययं सादृश्ये वर्तते। तदनुकरणशब्दात्सप्तमी इवे इति। एवञ्च इवार्थस्सादृश्यं तस्मिन्निवार्थे सादृश्ये इत्यर्थः। समर्थात्सादृश्ये यदि कन् तर्हि तदन्तात्प्रतिकृतिर्नाभिधीयते एव प्रतिकृतेस्समर्थसदृशत्वेन समर्थसादृश्यात्मना भानस्य अन्याय्यत्वात्। न हि धर्मी धर्मात्मना भासते। तस्मात् इवार्थोऽत्र सदृश एव। तथा च समर्थात्सदृशे प्रत्यय इति लब्धम् यस्सदृशस्स चेत्प्रतिकृतिरिति च। कनभावापपक्षे इवेन सह समासो विभक्त्यलोपश्चेति। अश्व इव इति समस्तं पदम्। समासानामपि वैकल्पिकत्वेन अश्व इवेति वाक्यञ्च। गवयः मृगविशेषः। यद्यप्ययं गोसदृशः तथापि न प्रतिकृतिरिति न गोशब्दात्कन् इति भावः। ***संज्ञायाञ्च।** चकारोऽत्र भिन्नक्रमः। तेन प्रतिकृतौ पूर्वेण कन् – संज्ञायामनेन कन् इति भेदोऽभिधीयते। तदेतदाह – अप्रतिकृत्यर्थमिति। अन्यथा अस्यापि सूत्रस्य प्रतिकृतिविषयत्वे संज्ञासंज्ञोभयसाधारण्येन पूर्वसूत्रेणैव कनि सिद्धौ इदं सूत्रमनर्थकं स्यात्। उष्ट्रसदृशस्य संज्ञा उष्ट्रक इति। यो जन्तु रुष्ट्रवद्वर्तते तस्योष्ट्रक इति संज्ञा इत्यर्थः। ***लुम्मनुष्ये।** मनुष्ये वाच्ये लुप् स्यात्। अयञ्च लुप् कन एव। कन्प्रकरणत्वादस्य। स च कन् अस्मिन्निवार्थप्रकरणे सूत्रद्वयेन विहितः खलु। तत्र केन विहितस्य कनो लुबित्युक्ते सन्निहितत्वादौचित्याच्च संज्ञायाञ्चेति सूत्रेण विहितस्यैव। न हि प्रतिकृतौ विहितेन कना मनुष्योऽभिधीयते। मनुष्यस्य प्राणिनः अप्रतिकृतित्वात्। इदमेवाभिप्रेत्याह – संज्ञायाञ्च विहितस्येति। संज्ञायाञ्चेति सूत्रस्यानुकरणशब्दोऽयं संज्ञायाञ्चः। संज्ञायाञ्चेन विहितस्संज्ञायाञ्च विहितः तस्येति समासः। मनुष्ये वाच्ये यस्यां संज्ञायां कन्विधीयते सा चेन्मनुष्यस्य संज्ञा इत्यर्थः। वर्ध्रीव वर्ध्रिका इवे प्रतिकृताविति कन्। यद्वा नध्र्य्रेवेति स्वार्थे कः। ततो वर्ध्रिकाशब्दादिवार्थे संज्ञयाञ्चेति कनो लुप् वर्ध्रिकेव मनुष्यो वर्ध्रिका। नध्रीवर्ध्रीवरत्रास्यादित्यमरः। तद्वद्दीर्घः

**२०५४। जीविकार्थे चापण्ये** ।५।३।९९। जीविकार्थं यदविक्रीयमाणं तस्मिन्वाच्ये कनो लुप्स्यात्। वासुदेवः। शिवः। स्कन्दः। देवलकानां जीविकार्थासु देवप्रतिकृतिष्विदम्। अपण्ये किम्। हस्तिकान्विक्रीणीते॥ **२०५५। देवपथादिभ्यश्च** ।५।३।१००। कनो लुप्स्यात्। देवपथः। हंसपथः। आकृतिगणोऽयम्॥ **२०५६। वस्तेर्ढञ्** ।५।३।१०१। इवेत्यनुवर्तत एव। प्रतिकृताविति निवृत्तम्। वस्तिरिव वास्तेयम्। वास्तेयी॥ **२०५७। शिलाया ढः** ।५।३।१०२। शिलेव शिलेयम्। शिलाया इति योगविभागाड्ढञपीत्येके। शैलेयम्॥ **२०५८। शाखादिभ्यो यः** ।५।३।१०३। शाखेव शाख्यः। मुख्यः। जघनमिव जघन्यः। अग्र्यः। शरण्यः॥

---

कृशो मनुष्य इत्यर्थः। ***जीविकेति।** यया जीवन्ति सा जीविका। वृत्तिः। तस्यै इदं तदर्थम्। अपण्ये अविक्रीयमाणे जीविकार्थे वाच्ये सति इवे प्रतिकृतावित्यनेन विहितस्य कनो लुप् स्यादित्यर्थः। वासुदेव इव प्रतिकृतिर्वासुदेवः। एवं शिवः स्कन्दः वासुदेवादिप्रतिमाः गृहीत्वा गृहाद्गृहमटन्तः ये जीवन्ति तेषां देवलकानां वासुदेवादिप्रतिमा एव जीविकार्थाः। स्वजीवनहेतुभूता एताः प्रतिमा न हि भिक्षवो विक्रीणते इति। अपण्याश्च। अतः जीविकार्थास्वपण्यासु देवप्रतिमासु वाच्यासु वासुदेवादिभ्यो विहितस्य कनो लुप्। हस्तिन इव प्रतिकृतयो हस्तिकाः हस्तिन् – क। नस्तद्धित इति न टिलोपः। अभत्वात्। नलोपः प्रातिपदिकान्तस्येति नलोपः। हस्तिकाः । हस्त्याकृतयो लाक्षादिनिर्मिताः प्रतिमा इत्यर्थः। तान् हस्तिकान् – यदा तु हस्तिप्रतिमा गृहीत्वा अपि ये अटन्तो जीवन्ति न तु ताः विक्रीणते। तदा तत्स्वामिकानां प्रतिमानां हस्तिन इत्येव व्यवहारः। एवं वासुदेवादिप्रतिमा अपि यदा विक्रीणीते तदा वासुदेवकं विक्रीणीते इत्येव प्रयोग इति। इयं प्रतिमा पण्या वा न वेति ज्ञातुं प्रयोक्तृविवक्षाप्रकरणञ्च साधनं भवतः। तस्मात् भिक्षुकरगताः प्रतिमाः वासुदेवः शिवः स्कन्दः इति व्यवह्रियन्ते। विक्रेतृकरगतास्तु वासिुदेवकः शिवकः। स्कन्दकः। इति। इदं सर्वमभिप्रेत्याह – देवलकानां जीविकार्थासु देवप्रतिकृतिष्विति देवलकैर्निहिताः पण्यन्ते। वणिजां जीविकार्थासु तु न कनो लुप्। तासां पण्यात्वादिति संक्षेपः। देवपथेति पण्यार्थमजिविकार्थञ्चेदं सूत्रम् **देवपथादिर्गणः।** तेभ्यः। इवे प्रतिकृतावित्यनेन विहितस्य कनो लुप्स्यादित्यर्थः। देवानां पन्थाः देवपथः। ऋक्पूरब्धूः पथामिति समासान्तो प्रत्ययः। ***वस्तेरिति।** वस्तिशब्दादिवार्थे (सदृशे) ढञ्। इवेत्यनुवर्तते एव। पूगाञ्ञ्यो ग्रामणीति सूत्रपर्यन्तमिति शेषः। वक्ष्यति च तत्र इवार्थो निवृत्त इति। वास्तीयं वस्तीसदृशमित्यर्थः । टिड्ढेति ङीपमाह वास्तीयी। ***शिलाया इति।** ञित्त्वाद्वृद्धिर्माभूदिति ढस्य पृथग्विधिः। शिलाया इति योगविभागे वस्तिसूत्राड्ढञ्शिलाया इत्यत्रानुवृत्तिः। ढ इति सूत्रे शिलाया इति सूत्रस्यानुवृत्तिः तथा च शिलाया ढञ् ङश्च भवत इति सिद्धम्। **मुख्यः** मुखस्य यथा अवयवेषु प्राधान्यं तद्वदयमपीति मुख्यश्श्रेष्ठः। जघनं यथा अधोगतं तद्वदयमपीति जघन्यः अधोगतो नीचः। शरणं गृहरक्षित्रोः। गुहं

**२०५९। द्रव्यं च भव्ये** ।५।३।१०४। द्रव्यमयं ब्राह्मणः॥ **२०६०। कुशाग्राच्छः** ।५।३।१०५। कुशाग्रमिव कुशाग्रीया बुद्धिः॥ **२०६१। समासाच्च तद्विषयात्** ।५।३।१०६। इवार्थविषयात्समासाच्छः स्यात्। काकतालीयो देवदत्तस्य वधः। इह काकतालसमागमसदृशश्चौरसमागम इति समासार्थः। तत्प्रयुक्तः काकमरणसदृशस्तु प्रत्ययार्थः। अजाकृपाणीयः। अतर्कितोपनत इति फलितोऽर्थः॥ **२०६२। शर्करादिभ्योऽण्** ।५।३।१०७। शर्करेव शार्करम्॥

---

यथा रक्षति तद्वदयमिति शरण्यो रक्षकः। ***द्रव्यमिति।** भव्ये वाच्ये द्रव्यमिति निपात्यते इवार्थ भव्ययोस्सन्नियोगशिष्टत्वाय चकारः। तेन द्रुशब्दादिवार्थे यत्प्रत्ययः भव्यश्चेदभिधीयते इति निष्कृष्टार्थः। भव्यः कुशलः। द्रुरिव द्रव्यम्। द्रुर्द्रुमः। द्रुसदृशमित्यर्थः। द्रव्यमिति निपातनात् क्लीबत्वम् भव्यहोतुत्वाद्ब्रह्मणो भव्य इत्युच्यते। (भव्यं कुशलम्) द्रुर्यथा फलदत्वेन भव्यः तद्वद्ब्राह्मणोऽपीति भावः। भव्ये किम्। द्रुरिव शूद्रः। शूद्रस्य निश्चेष्टत्वसाम्येन (मौढ्येनेत्यर्थः) द्रुसादृश्यम्। ***कुशाग्रीया।** कुशाग्रं यथा सूक्ष्मं तद्वत्सूक्ष्मा बुद्धिरित्यर्थः। बुद्धेस्सूक्ष्मत्वञ्च सकृच्छ्रुतधारणैव। (उक्तस्यार्थस्य सकृच्छ्रवणमात्रेण ज्ञानमित्यर्थः) ***समासादिति।** अत्र छोऽनुवर्तते –चकारेणानुकृष्यते इति वा। इवे इति त्वनुवर्तते एव। तद्विषयादित्यस्यार्थमाह–इवार्थविषयादिति। ननु इवार्थविषयस्समास एव नास्ति अनभिधानादिति शङ्कायामाह तत्त्वबोधिनी प्रकृतसूत्रादेव ज्ञापकादिति। तद्विषयादित्यनुवाद एव। इवार्थविषयं समासं ज्ञापयतीति भावः। पक्षान्तरमप्याह – सुप्सुपेति वेति। जीमूतस्येवेत्यत्र यथा इवेन सह समासो विभक्त्यलोपश्च इति प्रोक्तं तद्वदत्रापि इवेन सह समासस्सिद्ध्यत्येवेति तु न वाच्यम्। इवार्थविषयोऽयं समासः न त्विवेन सहेति भेदात्। काकशब्दस्य तालशब्देन सह सुप्सुपेति सूत्रेण समास इति तत्त्वबोधिन्याशयः । ताळस्य फलं ताळम्। फले लुक् इति लुक्। इवे प्रतिकृतावित्यादिना इवार्थे यथा कन्विहितः तथा इवार्थे समासोऽनेन ज्ञाप्यते। तथा च काक इव ताळमिव इति इवार्थे काकताळयोस्समासः। प्रत्ययेनेव समासेनापि इवार्थोऽभिधीयते इति। काकताळमिति समासेन काक इव ताळमिव इति इवार्थोऽभिधीयते। अत एव लौकिकविग्रहे इव शब्दप्रयोगः। अलौकिके तु काक सु ताळ – अम् इत्येव। एतावता इवार्थवर्तिनोस्समासः इवार्थविषयस्समासो भवतीति लब्धम्। समासेनैव स्वघटकपदयोरिवार्थवृत्तित्वं द्योत्यते इति च फलितम्। ननु इवार्थवृत्त्योः काकताळयोस्सामर्थ्याभावादेव समाससम्भव इत्याशङ्क्य वदति – इह काकताळेत्यादि। अयं भावः। न केवलमिवार्थमात्रवर्तिनौ काकताळशब्दौ किन्तु स्वसमवेतक्रियावर्तिनावपि। इदञ्च स्वसमवेतक्रियावर्तित्वं काकताळशब्दयोर्लाक्षणिकम्। (अभिधायास्तादृशसामर्थ्याभावेन लक्षणयैव तन्निर्वाह इति)

**२०६३ ।अङ्गुल्यादिभ्यष्ठक्** ।५ ।३ ।१०८ । अङ्गुलीव आङ्गुलिकः । भरुजेव भारुजिकः ॥ **२०६४। एकशालायष्ठजन्यतरस्याम्** ।५ ।३ ।१०९ । एकशाला-शब्दादिवार्थे ठञ्वा पक्षे ठक् । एकशालेव एकशालिकः । ऐकशालिकः ॥ **२०६५। कर्कलोहितादीकक्** ।५ ।३ ।११० । कर्कः शुक्लोऽश्वः स इव कार्कीकः । लौहितीकः स्फटिकः ॥

---

स्वस्मवेतक्रियावर्तिनोः काकतालयोः इवार्थवृत्तित्वं समासेन द्योत्यते इति काकागमनमिव तालपतनमिव इति लौकिकविग्रहः। काकतालमिति समासः । आगमनपतनक्रियाभ्याञ्च काकतालयोस्समागमो लक्ष्यते। यदा काक आजगाम तदैव तालं पपातेत्यर्थात् । एवञ्च काकागमनतालपतनशब्दाभ्यां काकतालसमागम इत्यर्थ उदेति। इव शब्देन तु सदृश इत्यभिधीयते। तथा च काकागमनमिव तालपतनमिवेति विग्रहवाक्यस्य काकतालमिति समासस्य च काकतालसमागमसदृश इत्यर्थः सिद्धः। यस्सदृशस्तमाह चोरसमागम इति। देवदत्तचोरसमागम इत्यर्थः। काकागमनमिव देवदत्तागमनं तालपतनमिव चोरपतनं वर्तेते इति काकतालसमागमसदृशो देवदत्तचोरसमागम इति फलति समासार्थ इति भावः। एवमिवार्थविषयात्समासात्काकतालशब्दात् इवार्थे छः काकतालमिव काकतालीयं इति। छप्रत्ययार्थमाह तत्प्रयुक्तेत्यादिना। तत्पदेन काकतालसमागमः परामृश्यते। तेन काकतालसमागमेन प्रयुक्तं जातं यत्काकस्य मरणं तेन सदृशो देवदत्तवध इति भावः। ननु इवार्थे छस्य विहितत्वेन सदृश इत्येव प्रत्ययार्थो भवति। न तु तत्प्रयुक्तेत्यादिविशेषणविशिष्टसदृश इत्यर्थः प्रत्ययेनाभिधातुं शक्यते इति चेन्मैवम्। छप्रत्ययविषयो यद्विग्रहवाक्यं काकतालमिव इति तद्वाक्यघटकीभूतकाकतालशब्देन काकतालसमागमसदृशार्थाभिधायिना काकतालसमागम— कृतकाकमरणरूपोऽर्थो लक्षणयाऽभिधीयते। प्रत्ययेन तु सदृश इत्यर्थोऽभिधीयते। तथा च प्रत्ययान्तेन काकतालीयशब्देन तत्प्रयुक्तकाकमरणसदृश इत्यर्थोऽभिधीयते। इति निर्विवादम्। एतदानुगुण्येन प्रत्ययार्थ इति मूलस्य प्रत्ययान्तार्थ इत्यर्थो वाच्यः। अजाकृपाणीयः। अजागमनमिव कृपाणपतनमिव अजाकृपाणम्। अजाकृपाणमिव अजाकृपाणीयः। अजाकृपाणसमागमसदृशः देवदत्तचोरसमागमः। तत्पयुक्ताजामरणसदृशत्वात्। अजाकृपाणीयो देवदत्तवधः। काकतालीय अजाकृपाणीय इति पदयोः फलितमर्थमाह। अतर्कितोपनत इति। यदृच्छया प्राप्त इत्यर्थः। ***अङ्गुली** – भरणज – बभ्रु – वल्गु – इत्यादयः। ठस्येकादेशे यस्येति चेति ईलोपे आदिवृद्धौ आंगुलिकः। भरणजशब्दात् स्त्रियां टापि भरणजा। सेव भारणजिकः। अभिधेयलिङ्गत्वात्पुंस्त्वम्। ***ईकंकि** कित्त्वं वृद्ध्यर्थम्। अभिधेयस्य स्फटिकस्य पुंस्त्वात् कार्कीक इति। एवं कार्कीकं वस्त्रम्।

**२०६६। पूगाञ्ज्योऽग्रामणीपूर्वात्** ।५।३।११२। इवार्थो निवृत्तः। नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः सङ्घाः पूगास्तद्वाचकात्स्वार्थे ञ्यः स्यात्। लौहितध्वज्यः। 'व्रातच्फञोरस्त्रियाम् ११००'। व्राते। कापोतपाक्यः। च्फञ्। कौञ्जायन्यः। ब्राध्नायन्यः॥ **२०६७। आयुधजीविसङ्घाञ्ञ्यड्वाहिकेष्वब्राह्मणराजन्यात्** । ५।३।११४। वाहीकेषु य आयुधजीविसङ्घस्तद्वाचिनः स्वार्थे ञ्यट्। क्षौद्रक्यः। मालव्यः। टित्वान्ङीप्। क्षौद्रकी। आयुधेति किम्। मल्लाः। सङ्घेति किम् । सम्राट्। वाहीकेषु किम्। शबराः। अब्राह्मणेति किम्। गोपालकाः। शालङ्कायनाः। ब्राह्मणे तद्विशेषग्रहणम्। राजन्ये स्वरूपग्रहणम्॥

---

जपाकुसुमसान्निध्यात्सफटिको लोहितवद्वर्तते इति लौहितीकस्स्फटिकः। ***पूगात्।** ञ्यः अग्रामणीपूर्वात् इति छेदः। सूत्रे स्तोश्चुना श्चुरिति तकारस्य श्चुत्वेन अनुनासिको ञ्कारः। ग्रामणीरित्यर्थग्रहणम्। ग्रामणीः श्रेष्ठो देवदत्तादिः। पूर्वः पूर्वावयवो यस्य संघस्य स ग्रामणीपूर्वः पूगः पूग इत्येकत्वमविवक्षितम् तेन ग्रामणीपूर्वाः पूगाः देवदत्तकाः त्वत्का इत्यादयः देवदत्त एषां ग्रामणीर्देवदत्तकाः पूगाः। स एषां ग्रामणीरिति कन्। एवं पूगवाचिनि देवदत्तकशब्दे यः पूर्वावयवः देवदत्तः (देवदत्त–कन् – इति प्रकृतिप्रत्यययोर्द्वयोः प्रकृतिः पूर्वावयवो भवति) तस्य ग्रामणीत्वेन ग्रमणीपूर्वोऽयं पूगवाची देवदत्तक शब्द इति नास्मात्स्वार्थे ञः । (देवदत्तकशब्दात् ञ्ये कृते दैवदत्तक्य इत्यनिष्टरूपापत्तिः। लोहितध्वज शब्दे पूगवाचिनि यः पूर्वो लोहितशब्दः स न ग्रमणीरिति लोहितध्वजशब्दात् ञ्ये कृते लोहितध्वज्या इति रूपम् एकवचनान्तमिदम् बहुत्वे लौहितध्वज्या इति। ञ्यप्रत्यये ञ्कार इत्। आदिवृद्ध्यर्थः। य इत्यदन्तशेषः। यचिभमिति पूर्वस्य भत्वेन यस्येति चेति प्रकृत्यकारलोपः। ***व्रातेति।** व्रातवाचिनः च्फञन्ताच्च स्वार्थे ञ्प्रत्ययः न तु स्त्रीत्वे। – कुञ्जस्य गोत्रापत्यं कुञ्जायनः। कुञ्जायन एव कौञ्जायन्यः। ***बाहीकेष्विति।** बाहीकदेशे ये ग्रामास्तेपि बाहीका इत्युच्यन्ते। तेषु बाहीकेषु। क्षुद्रकमालवादयो जातिविशेषाः। मल्ला हि मुष्टीमुष्ट्यादियुद्धकौसलेन जीवन्ति न तु शस्त्रादिकौशलेनेति प्रसिद्धिः। सम्राट् राजा स हि आयुधेनैव जीवति यूद्धे शत्रून् हत्वा भुवं स्वायत्तीकरोतीति नायं जातिवाची शब्द इति न संघवाचित्वमस्य। शबरा हि आरण्यका आयुधजीविनः. किरातपर्यायाः गोपालवः सालङ्कायन इति च कौचिद्ब्राह्मणौ। तद्वंशीया गोपालवास्सालङ्कायना इत्युच्यन्ते अपत्यार्थे अत इञः। बह्वच इञः प्राच्यभरतेष्विति लुक्। पन्नागाराः युधिष्ठिराः इतिवत् – अब्राह्मणराजन्यादिति सूत्रे ब्राह्मणराजन्यपर्युदासः क्रियते। तत्र विशेषमाह – ब्राह्मणीविशेषग्रहणम्। राजन्ये स्वरूपग्रहणमिति। राजन्यशब्दान्न स्वार्थे ञ्यट्। ब्राह्मणविशेषवाचकान्न स्वार्थे ञ्यट् इति भावः। एकत्र स्वरूपविधावपरत्र विशेषविधौ च व्याख्यानमेव शरणम्। ञ्यटि

**२०६८ । वृकाट्टेण्यण्** ।५ ।३ ।११५ । आयुधजीविसङ्घवाचकात्स्वार्थे । वार्केण्यः । आयुधेति किम् । जातिशब्दान्मा भूत् ॥ **२०६९ । दामन्यादित्रिगर्तषष्ठाच्छः** ।५ ।३ । ११६ । दामन्यादिभ्यस्त्रिगर्तषष्ठेभ्यश्चायुधजीविसङ्घवाचिभ्यः स्वार्थे छः स्यात् । त्रिगर्तः षष्ठो वर्गो येषां ते त्रिगर्तषष्ठाः ॥ आहुस्त्रिगर्तषष्ठांस्तु कौण्डोपरथदाण्डकी । क्रौष्टुकिर्जालमानिश्च ब्राह्मगुप्तोऽथ जालकिः ॥ १ ॥ दामनीयः । दामनीयौ । दामनयः । औलपि । औलपीयः । त्रिगर्तः । कौण्डोपरथीयः । दाण्डकीयः ॥ **२०७० । पर्श्वादियौधेयादिभ्योऽणञौ** ।५ ।३ ।११७ । आयुधजीविसङ्घवाचिभ्य एभ्यः क्रमादणञौ स्तः स्वार्थे । पार्शवः । पार्शवौ । पर्शवः । यौधेयः । यौधेयौ । यौधेयाः ॥ **२०७१ । अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ्** ।५ ।३ । ११८ ।

---

ञकार आदिवृद्ध्यर्थः। य इत्यदन्तशेषः। ***वृकादिति।** अत्र पूर्वसूत्रादायुधजीविसंघादित्यनुवर्तते इत्याह–मूले । आयुधेति। टेण्यण्प्रत्ययेणो वृद्ध्यर्थः टो ङीबर्थः। एण्या इत्यदन्तशेषः। वृकस्य ऋकारस्थाने आदिवृद्धिरार्। वार्केण्यः। वृक एवेति विग्रहः। जातिशब्दादिति। वृक इति कश्चिन्मृगजातिरस्ति। तस्माट्टेर्याण् माभूदित्यर्थः। (वृकःआन्ध्रे तोडेलु) ***दामनीति**। दामन्यादीनां त्रिगर्तषष्ठानाञ्च समाहारद्वन्द्वे एकवद्भावसूत्रे विहितः दामनि। औडुपि। बैजवापि। इत्यादयो दामन्यादिर्गणः। **षण्णां वर्गाणाम्पूरणष्षष्ठो वर्गः।** वर्गस्संघः। त्रिगर्तवर्गेण सह ये षड्वर्गाः ते त्रिगर्तषष्ठाः। एकस्त्रिगर्तवर्गः। इतरे पञ्चवर्गा इत्यर्थः। तान्वर्गान्दर्शयति। आहुरित्यादिना। कौड्डोपरथवर्गः – दाण्डकिवर्गः। क्रोष्टुकिवर्गः। जालमाणिवर्गः। ब्रह्मगुप्तवर्गः। जालकिवर्गः। इति षड्वर्गाः। ननु त्रिगर्तवर्गं विहायैव षड्वर्गा दर्शिता इति नैषां वर्गाणां त्रिगर्तषष्ठकत्वं संघटते इति शङ्कायामाह तत्त्वबोधिनी। अत्र जालकीयस्त्रिगर्तवर्ग इति त्रिगर्तवर्गस्यैव जालकिवर्ग इति व्यवहार इति भावः। दामन्यादीनाञ्च उदाहरति दामनीय इत्यादि। दमनस्यापत्यं दामनिः दामनिरेव दामनीय इति विग्रहः। बहुत्वे तु ञ्यादयस्तद्राजा इति वक्ष्यमाणेन सूत्रेण छस्यास्य तद्राजत्वाल्लुगित्याह दामनीय इति। एवमन्यत्राप्यूह्यम्। त्रैगर्तीयस्त्रैगर्तीयो त्रिगर्ताः इति। त्रिगर्ता इति तु मूलं प्रामादिकम्। एकत्वे तद्राजस्य छस्यालुग्विषयत्वात्। ***पर्श्वादीति**। पश्वीदिर्यौधेयादिश्चेति गणद्वयम्। अवयवशब्दबहुत्वविवक्षया पश्वीदियौधेयादिभ्य इति बहुत्वेन निर्देशः। पश्वीदिगणपठितेभ्यः यौधेयादिगणपठितेभ्यश्च शब्देभ्य इत्यर्थः। पर्शुशब्दादणि वृद्धौ पार्शवः। बहुत्वे तु तद्राजत्वादणो लुकि पर्शव इति। पार्शवा इति तु प्रामादिकम्। पशुरिव पार्शव इति विग्रहः। ***अभिजिदिति**। अभिजित् – विदभृत् – शालावत् –शिखावत् – शमीवत् – ऊर्णावत् – श्रुमत् एतेषां समाहारद्वन्द्वः। ततः पञ्चम्यास्सौत्रो लुक्। अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमतः इति वक्तव्यमित्यर्थः। अण इति

अभिजिदादिभ्योऽणन्तेभ्यः स्वार्थे यञ् स्यात्। अभिजितोऽपत्यमाभिजित्यः। वैदभृत्यः। शालावत्यः। शैखावत्यः। शामीवत्यः। और्णावत्यः। श्रौमत्यः॥ **२०७२। ञ्यादयस्तद्राजाः** ।५।३।११९। 'पूगाञ्ञ्यः २०६६' इत्यारभ्य उक्ता एतत्संज्ञाः स्युः। तेनास्त्रियां बहुषु लुक्। लोहितध्वजाः। कपोतपाकाः। कौञ्जायनाः। ब्राध्नायना इत्यादि॥ **२०७३। पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्च** ।५।४।१। लोपवचनमनैमित्तिकत्वार्थम्। अतो न स्थानिवत्। 'पादः पत् ४१४' 'तद्धितार्थ-७२८' इति समासे कृते प्रत्ययः। वुन्नन्तं स्त्रियामेव। द्वौ द्वौ पादौ ददाति द्विपदिकाम्। द्विशतिकाम्॥ **पादशतग्रहणमनर्थकमन्यत्रापि दर्शनात्॥** द्विमोदकिकाम्॥ **२०७४। दण्डव्यवसर्गयोश्च** ।५।४।२। वुन् स्यात्। अवीप्सार्थमिदम्। द्वौ पादौ दण्डितः द्विपदिकाम्। द्विशतिकाम्। व्यवसृजति ददातीत्यर्थः॥

---

पञ्चमी। अभिजिदादिसमासस्य विशेषणम्। तेन तदन्तविधिरित्याह अणन्तेभ्य इति। अणन्तेभ्यः अभिजिदादिभ्य इत्यनेन अभिजिदादिभ्योऽणि कृते यानि रूपाणि आभिजित - वैदभृत - शालावत - शैखावत - शामीवत - और्णावत - श्रौमत इति तेभ्यस्स्वार्थे यञ् स्यादिति लब्धम्। आभिजित एव आभिजित्य इत्यादयो विग्रहाः। आभिजितस्य विग्रहं वक्तुमाह-अभिजितोपत्यमाभिजित्य इति। वस्तुतस्तु यञोस्य स्वार्थिकत्वेन अण्विधौ यो विग्रहस्स एव यञ्विधावपीति अभिजीतोपत्यमिति विग्रहो मूले दर्शितः। ***तेनास्त्रियामिति।** तद्राजत्वेन तद्राजस्य बहुषु तेनैवास्त्रियामिति सूत्रादस्त्रियां बहुषु ञ्यादीनां लुगिति भावः। (तेनेति मूलस्य ञ्यादीनां तद्राजसंज्ञाकत्वेनेत्यर्थः) ***पादेति** । पादशतयोस्समाहारः पादशतम्। तस्य पादशब्दस्य शतशब्दस्य चेत्यर्थः। संख्या आदिर्यस्य तस्य संख्यादेः। संख्यावाचकशब्दपूर्वकस्येत्यर्थः। विशेषणमिदं पादशतस्येत्यस्य संख्यादिर्यः पादशब्दश्शतशब्दश्च तस्य लोपस्स्यात्। अलोन्त्यस्येत्यन्त्यस्यायं लोपः वीप्सायां द्योत्यायां संख्यादेः पादशतस्य लोपः स्यात्। सङ्ख्यादेः पादशताद्वुन्प्रत्ययश्च स्यादिति सूत्रार्थः। यदा वुन् तदैव लोप इति सन्नियोगशिष्टत्वार्थश्चकारस्सूत्रे। ननु वुनो वोरकादेशे कृते अके परतः पूर्वस्य भत्वेन यस्येति चेत्यनेन अकारलोपस्स्यादेवेति प्रकृतसूत्रेण लोपविधानं व्यर्थम्। प्रकृतेनाप्यकारलोपस्यैव विधीयमानत्वादिति शङ्कायामाह लोपवचनमनैमित्तिकत्वार्थम्। अपरनिमित्तो लोपो यथा स्यादित्येतदर्थमिति भावः। यस्येति लोपस्तु परनिमित्तः। ईकारे तद्धिते च परे इत्युक्तत्वात्। अपरनिमित्तेनाप्यनेन लोपेन सता किम्फलमत आह-अतो न स्थानिवदिति। अचः परस्मिन्पूर्वविधाविति परनिमित्तो ह्याजादेशस्स्थानिवद्भवतीत्युक्तम्। तेन यस्येति लोपे सति तस्य लोपस्य परनिमित्तत्वेन स्थानिवद्भावः। पादशतस्येति लोपे सति तु न स्थानिवद्भावः। अस्य लोपस्य अपरनिमित्तत्वात्। न ह्ययं लोपः कस्मिंश्चित्परे विहित इति स्थानिवद्भावाभाव प्रयुक्तं फलं दर्शयति। पादः पदिति। पाच्छब्दान्तं यदङ्गं भम् तदवयवस्य पादः पदादेशस्स्यादिति तत्सूत्रार्थः। प्रकृते द्विशब्दस्य पादशब्दस्य

**२०७५। स्थूलादिभ्यः प्रकारवचने कन्** ।५।४।३। जातीयरोऽपवादः। स्थूलकः। अणुकः॥ **चञ्चद्बृहतोरुपसंख्यानम्॥** चञ्चत्कः। बृहत्कः॥ (ग) **सुराया अहौ॥** सुरावर्णोऽहिः सुरकः॥ **२०७६। अनत्यन्तगतौ क्तात्** ।५।४।४। छिन्नकम्। भिन्नकम्। अभिन्नकम्॥

---

च तद्धितार्थोत्तरपदसमाहारे चेति तद्धितार्थे विषये समासः। षण्णाम्मातॄणामपत्यं षाण्मातुर इतिवत्। द्वौ द्वौ पादौ ददातीति लौकिकविग्रहः। वीप्साद्योतनाय लौकिकविग्रहे द्विर्द्विशब्दग्रहणम्। द्वि – पाद – वुन् इत्यलौकिकविग्रहः। पादस्य लोपः। अन्त्याकारस्य – द्विपात् – अक – अके परतः पूर्वस्य भत्वेन पाच्छब्दान्तं यदङ्गं भम् द्विपाद् इति। तदवयवस्य पादः पदादेशः। न चात्र अकारलोपस्य स्थानिवद्भावेन पादशब्दान्तमेवेदमङ्गं भम्। न तु पाच्छब्दान्तमिति पद्भावाप्राप्तिर्वाच्या। पादशतस्येति सूत्रविहितस्यास्य अकारलोपस्य अपरनिमित्तत्वेन स्थानिवद्भावाभावात्। न च स्थानिवदादेश इत्यनेन स्थानिवद्भावश्शङ्क्यः । अनल्विधाविति तन्निषेधात्। (अला विधिरित्यल्विधिरत्र ग्राह्यः। अन्त्याकारेण स्थानिवद्भूतेन सता पाच्छब्दान्ताङ्गाभावेन पद्भावनिषेधरूपविधेर्जायमानत्वात्) एवं पद्भावे सति द्विपदक इति तिष्ठति। ततस्स्त्रियां अदन्तलक्षणष्टाप् – द्विपदका। प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुप इति अत इत्वम्। द्विपदिका तां द्विपदिकां द्वौ द्वौ पादावित्यर्थः। ददातेर्न विग्रहे प्रवेशः। तेन द्विपदिकान्ददातीति वाक्यम्। द्विपदकन्ददातीति त्वप्रामाणिकमेव। वुन्नन्तस्य स्वभावतः स्त्रियामेव प्रयोगदर्शनात् । लिङ्गं हि लोकतो ज्ञायते। अनर्थकं व्यर्थम् । ननु पादशतस्येत्यस्याभावेति। सङ्ख्यादेरन्यस्यापि लोपादिकं स्यादत आह अन्यत्रापि दर्शनादिति इष्टापत्तिरेवेति भावः । अन्यत्रापि प्रयोगो दृश्यते इति यदुक्तन्तमेव प्रयोगं दर्शयति द्विमोदकिकामिति द्वौ द्वौ मोदकौ द्विमोदकान्ददातीति साधुभिर्द्विमोदकिकामित्यपि प्रयुक्तत्वात्तादृशप्रयोगसिद्धये प्रकृतसूत्रे पादशतग्रहणन्त्यक्तव्यमिति भावः। अत्र पादशब्दो भागपरः। ददातिक्रियासमन्वयबलात्। न हि चरणौ दीयेते। ***सुराया** इति वार्तिकम्। सुराशब्दात् कन् स्यात् स्वार्थे स चेत्कन्नन्तार्थोऽहिः। (अहिस्सर्पः) स्वार्थिकोप्ययं कन् प्रकारवत्येव भवति। स्थूलादिभ्य इति सूत्रस्थत्वादस्य वार्तिकस्य। तेन सुरायाः प्रकारवति कन्स्यादिति लब्धम्। प्रकारस्सादृश्यं तद्वान् सदृशः। एतेन प्रकारवतीत्यस्य सदृशे इति यावदर्थः। तथा च सुराशब्दात्सदृशेऽर्थे कन् स चेत्सदृशोऽहिर्भवतीति सूत्रस्य निष्कृष्टार्थः। सुरासदृशोऽहिस्सुरकः। अहोस्सुरासादृश्यञ्च न गुणत उपलभ्यते – सुरायामधुरत्वात्सर्पस्य विषत्वादिति। किन्तु वर्णत एव। सुराय वर्णः श्वेतः स एव अहेरपीति। इदमेवाभिप्रेत्याह – सुरावर्णोऽहिरिति। सुराया इव वर्णो यस्य स सुरावर्ण इति समासः। सुरासदृशवर्ण इत्यर्थः। वर्णे विषये सुरासदृश इति यावत्। ***अनत्यन्तेति।** क्तान्तात्कन्स्यात्–अनत्यन्तगतौ वाच्यायाम्। प्रत्ययाणामेषां स्वार्थिकत्वेन प्रत्ययेन द्योत्यायामिति वा। गतिरत्र व्याप्तिः। अनत्यन्तगतिः। अत्यन्ता

**२०७७। न सामिवचने** ।५।४।५। सामिपर्याये उपपदे क्तान्तान्न कन्। सामिकृतम्। अर्धकृतम्। अनत्यन्तगतेरिह प्रकृत्यैवाभिधानात्पूर्वेण कन् न प्राप्तः। इदमेव निषेधसूत्रमत्यन्तस्वार्थिकमपि कनं ज्ञापयति। बहुतरकम्। **२०७८। बृहत्या आच्छादने** ।५।४।६। कन् स्यात्। द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा॥

---

व्याप्तिः। ईषद्व्याप्तिरिति यावत्। यद्वा अत्यन्तगतिर्व्याप्तिः। तदभवोऽनत्यन्तगतिः – व्याप्त्यभाव इत्यर्थः। विशेषेण आप्तिर्व्याप्तिः। सर्वत्र प्राप्तिरिति यावत्। एवञ्च व्याप्त्यभावो नाम ईषत्प्राप्तिरिति फलितम्। ईषत् भिन्नं छिन्नकम्। छिन्नमिति क्तान्तम्। तद्वाच्यया छेदनक्रियया न हि साधनं सर्वत्र व्याप्तम्। साधनं कारकं दार्वादिकम्। ईषच्छिन्नं छिन्नकम् दार्विति दारुणस्साधनस्य ईषच्छेद एवाभिधीयते इति। दारुणि सर्वत्र न हि छेदनस्य प्राप्तिरस्ति। ईषच्छेदेन एकदेशछेदस्यैव प्रतिभानादिति। ईषदर्थे क्तादिति तु सुवचम्। ***वेति**। अत्र उपपदे इति शेषः। व्याख्यानादिदमवगम्यते। पूर्वसूत्रात् क्तादिति कन्निति च अनुवर्तेते। सामि इत्यव्ययमर्थे वर्तते। (अर्धस्समांशः) साम्यर्धे (सामेर्योऽर्थः तस्मिन्नभिधेये अर्थरूपे साम्यर्धे समांशरूपे अभिधेये इति यावत्) यत्पदं वर्तते तत्सामिवचनम्। साम्यर्धाभिधायकमित्यर्थः। समांशाभिधायकमिति यावत्। तच्च समांशाभिधायकम्पदम्। सामितत्पर्यायान्यतमं भवति (सामिश्च तत्पर्यायाश्च सामिपर्यायाश्च सामितत्पर्यायाः। सामि अर्थ इत्यादयश्शब्दाः। तेषामन्यतमम् सामितत्पर्यायान्यतमम्) इदमेवाह सामिपर्याये इति। सामिपदे तत्पर्यायपदे चेत्यर्थः। सामि च पर्यायाश्च सामिपर्यायम्। समाहारद्वन्द्वः। तस्मिन् सामिपर्याये इति मूले समासः। उपोच्चरितं पदमुपपदम्। न तु तत्रोपपदं सप्तमीस्थमिति कृत्रिममुपपदं गृह्यते। कृञः कर्मणि क्ते कृते कृतमिति रूपम्। स्वयं क्तेनेति सूत्रात् क्तेनेत्यस्मिन्ननुवर्तमाने सामीति सूत्रात्समासः। सामिकृतमिति। अर्धं कृतमित्यर्थः। ईषत्कृतमिति यावत्। ननु सामिकृतादिभ्यः कनः प्रसक्तिरेव नास्ति। प्रकृतिप्रत्ययसमुदायेन अनत्यन्तगतौ वाच्यायाम् प्रत्ययेन द्योत्यायां वा कन्विधानेन सामिकृतेति प्रकृत्यैवात्र अनत्यन्तगतिरभिधीयते इति व्यर्थोऽयं कन्निषेधः। निषेधस्य प्राप्तिपूर्वकत्वादिति शङ्कते अनत्यन्तगतेरिति। सामिकृतमिति प्रकृतेरेव ईषत्कृतमित्यर्थ प्रतीतेरिति भावः। शङ्कोत्तरमेवाह – इदमेवेत्यादि। अत्यन्तस्वार्थिकमिति। यद्यप्यस्मिन्स्वार्थिकप्रकरणे सर्वेऽपि प्रत्ययास्स्वार्थे विहितत्वेन स्वार्थिका इत्युच्यन्ते तथापि इवे प्रतिकृतौ स्थूलादिभ्यः प्रकारवचने दण्डव्यवसर्गयोश्च इत्यादिषु प्रकृत्यर्थातिरिक्तार्थप्रतीतिरपि स्वार्थिकप्रत्ययेभ्यो भवतीति प्रतिपादितत्वेन इमे प्रत्यया नात्यन्तस्वार्थिका इति लब्धम्। (अत्यन्तस्वार्थिकाः स्वार्थमात्रे अविहिता इत्यर्थः) ज्ञापनफलमाह बहुतरकमिति। बहुतरमेवेति विग्रहः। न ह्यनेन कना स्वार्थातिरिक्तः कश्चनार्थः प्रतिपाद्यते इति। ***बृहत्या** इति। बृहत्याः स्वार्थे कन्। स चेत्कन्नन्तार्थः आच्छादनम् (आच्छादनं वस्त्रम्)

आच्छादने किम्। बृहती छन्दः॥ **२०७९। अषडक्षाशितङ्ग्वलंकर्मालंपुरुषाध्युत्तरपदात्खः** ।५।४।७। स्वार्थे। अषडक्षीणो मन्त्रः। द्वाभ्यामेव कृत इत्यर्थः। आशिता गावोऽस्मिन्नित्याशितङ्गवीनमरण्यम्। निपातनात्पूर्वस्य मुम्। अलं कर्मणे अलंकर्मीणः। अलंपुरुषीणः। ईश्वराधीनः। नित्योऽयं खः। उत्तरसूत्रे विभाषाग्रहणात्॥ 'अन्येऽपि केचित्स्वार्थिकाः प्रत्यया नित्यमिष्यन्ते। तमबादयः प्राक्कनः। ञ्यादयः प्राग्वुनः। आमादयः प्राड्मयटः। बृहतीजात्यन्ताः समासान्ताश्चेति भाष्यम्॥

---

स्वार्थिकानाम्प्रकृतिलिङ्गात् बृहतिकेति स्त्रीलिङ्गनिर्देशः प्रावारः उत्तरासङ्गः बृहतिका इति पदत्रयमुत्तरीये वर्तते इत्यमरश्लोकार्थः। ***अषडक्ष** – आशितं गु – अलं कर्म – अलं पुरुष – अध्युत्तरपद एतेषां समाहारः अधि इति पदम् । उत्तरपदं समासचरमावयवः यस्य तदध्युत्तरपदम्। आशिताः भुक्ताः। गोस्त्रियोरुपसर्जनस्येति ह्रस्वः – आशितगु – पूर्वपदस्य सौत्रो मुमागमः। (सूत्रे निपातितस्सौत्रः) आशितं गु खे कृते – खस्येनादेशे – ओर्गुणे अवादेशे आशितं गवीनम्। अलं समर्थः अलंकर्मीणः कर्मठ इत्यर्थः। अलम्पुरुषेभ्यः अलम्पुरुषीणः। पुरुषाश्चात्र शत्रुभूता मल्लादयः विवक्षिताः। पुरुषेभ्यो मल्लेभ्यः अलं समर्थ इति अलम्पुरुषीणः प्रतिमल्लः मल्लप्रातिभटचक्षम इत्यर्थ–। ईश्वरे अधि ईस्वराधि। सप्तमी शौण्डैरिति समासः। अध्युपपदमिदम्। ततः खे ईश्वराधीनः। नित्योऽयं खः। अत एव अषडक्षादयो परिनिष्ठितत्वेन क्वापि न प्रयुज्यन्ते तद्धितस्यास्य खस्य नित्यत्वे अषडक्ष एवेति विग्रहवाक्यस्यासम्भवात्। तद्धितानां वैकल्पिकत्वे हि तद्धिताभावपक्षे समासो वाक्यं वा परिनिष्ठितत्वेनोपलभ्यते। अत एव अषडक्ष एवेत्यादयो विग्रहा न मूले दर्शिताः। एतेन नित्येषु तद्धितेषु न विग्रहवाक्यप्रयोग इत्युक्तं भवति खस्य नित्यत्वे हेतुमाह – उत्तरसूत्रे विभाषाग्रहणादिति। अन्यथा समर्थानां प्रथमाद्वेत्यतोधिक्रियमाणे वाग्रहणे सति तत्र विभाषाग्रहणस्य वैयर्थ्यादिति भावः। (अन्यथा=खस्य नित्यत्वानभ्युपगमे) नित्यमिष्यन्ते इति भाष्यकारैरिति शेषः। अन्येऽपि खादितरेऽपि केचित्प्रत्ययाः नित्या इत्यभ्युपगम्यन्ते इत्यर्थः। तानेव प्रत्ययान् दर्शयति तमबादय इत्यादिना। समासान्तश्च एकं बहुव्रीहिवत्। कर्मधारयवदुत्तरेषु– समासवच्च बहुळम्। निष्कुलान्निष्कोषणे इत्यादिभिस्समासान्तास्तद्धितेत्वतिदिश्यन्ते। ननु तमबादीनां नित्यत्वे अयमेषामतिशयेनाढ्य इत्यादयो विग्रहाः अप्रामाणिकास्स्युरिति चेत्सत्यम्। नित्येष्टिः क्वाचित्केति बोध्यम्। तच्च क्वाचित्कत्वं व्यवस्थितम्। तेन बृहतिकाया 'बृहतीति न

**२०८० विभाषाञ्चेरदिक्स्त्रियाम्** ।५।४।८।अदिक्स्त्रीवृत्तेरञ्चत्यन्तात्प्रातिपदिकात्खः स्याद्वा स्वार्थे। प्राक्, प्राचीनम्। प्रत्यक्, प्रतीचीनम्। अवाक्, अवाचीनम्। निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः। अर्वन्तमञ्चतीति अर्वाक्, अर्वाचीनम्। अदिक्स्त्रियां किम्। प्राची दिक्। उदीची दिक्। दिग्ग्रहणं किम्। प्राचीना ब्राह्मणी। स्त्रीग्रहणं किम्। प्राचीनं ग्रामादाम्राः।

---

प्रयोगः। *विभाषा। अञ्चेः – अतिस्त्रियाम् – इति छेदः। अञ्च गतिपूजनयोरिति धातोः इका निर्देशः। अञ्चेरिति। इगन्तात्पञ्चमी। प्रातिपदिकादित्यस्य विशेषणमिदम्। तेन तदन्तविधिः। तदेतदाह – अञ्चत्यन्तात्प्रातिपदिकादिति। दिक्चासौ स्त्री च दिक्स्त्री। स्त्रीदिगित्यर्थः। सा न भवतीत्यदिक्स्त्री। तस्यामिति सप्तमीबलात्तद्वृत्तेरित्यस्य लाभः। स्त्रीदिगनभिधायकादित्यर्थः। सम्प्रति दिग्वाचकं यत् स्त्रीलिङ्गं पदमञ्चत्यन्तं तद्भिन्नादञ्चत्यन्तात्प्रातिपदिकादिति यावत्। एतेन यदञ्चत्यन्तं पदं स्त्रीलिङ्गमप्यदिग्वाचकं ततः खस्स्यादेव। यदप्यञ्चत्यन्तं पदं दिग्वाचकमप्यस्त्रीलिङ्गं ततोपि खस्स्यादेव यच्चाञ्चत्यन्तम्पदमदिग्वाचकमस्त्रीलिङ्गञ्च ततोपि खस्स्यादेव। इति। यत्तु अञ्चत्यन्तंपदं स्त्रीलिङ्गं द्विग्वाचकञ्च ततो न ख इति च फलितम्। प्राक्। अस्तात्यन्तमिदमव्ययम्। सप्तम्यर्थे पञ्चम्यर्थे प्रथमार्थे च वर्तते। दिग्देशकालान्यतमार्थबोधकम्। दिक्छब्देभ्यस्सप्तमी पञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिरित्युक्तत्वात् – अस्तातेस्तु अञ्चेर्लुगिति लुका नात्र दर्शनमिति बोध्यम्। दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगादय इत्यमरोऽपि अव्ययवर्गे पपाठ। प्राचीनमिति खान्तन्तु स्वभावतः क्लीबम्। अतः प्राक्प्राचीनं वा कालम्। एवं प्रत्यगादिषु कालमिति विशेष्यपदं बोध्यम्। अञ्चत्यन्तानि इमानि प्राक् प्रत्यक् अवाक् इति पदानि अव्ययत्वेन न स्त्रीलिङ्गानि। कालवाचकत्वेन नापि द्विग्वाचकानीति अदिक्स्त्रीवृत्तीन्येवेति एतेभ्यस्स्वार्थे खः। प्रागेव प्राचीनमित्यादयो विग्रहाः। प्राची। अयं हि स्त्रीलिङ्गो दिग्वाचकश्चेति दिग्स्त्रीवृत्तिरिति नास्मात्खः। ननु अञ्चत्यन्तं यत् स्त्रीलिङ्गं दिग्वाचकं पदं न ततः ख इत्युक्तम्। तत्र अञ्चत्यन्तस्य दिग्वाचकत्वविशेषणं व्यर्थम्। प्राची इत्यादीनां स्त्रीलिङ्गत्वेनैव खनिषेधस्य लब्धत्वादिति शङ्कते दिग्ग्रहणं किमिति। अदिग्वाचकादञ्चत्यन्तात् स्त्रीलिङ्गादपि इष्टः खो यथास्यात्तदर्थं दिग्ग्रहणमिति अन्तर्विचार्य उदाहरणमाह – प्राचीना ब्राह्मणी इति। प्रकर्षेणाञ्चतीति प्राची। उगितश्चेति ङीप्। स्त्रीलिङ्गोप्ययमदिग्वाची इति अस्मात्स्वार्थे खे प्राचीना। अस्त्रियामिति सूत्रिते तु नैतत्सिद्ध्येदिति भावः। ननु अदिशीत्येव सूत्र्यताम्। अञ्चत्यन्तं यद्दिग्वाचकं पदं न ततः ख इत्यनेन प्राचीना ब्राह्मणीति रूपसिद्धेरिति शङ्कते। स्त्रीग्रहणं किमिति। अस्त्रीलिङ्गाद्दिग्वाचकादपि अञ्चत्यन्तात्खस्य इष्टत्वेन तदर्थं स्त्रीग्रहणमावश्यकमिति कृत्वा उदाहरणं दर्शयति प्राचीनमिति ग्रामादाम्रतरवः पाच्यामित्यर्थः। वर्तन्ते इति शेषः ।।

**२०८१ ।जात्यन्ताच्छ बन्धुनि** ।५ ।४ ।९ । ब्राह्मणजातीयः । बन्धुनि किम् । ब्राह्मणजातिः शोभना । जातेर्व्यञ्जकं द्रव्यं बन्धु ॥

---

प्राच्यां दिशीत्यर्थे अव्ययमिदम्। प्रागिति ततः खे प्राचीनम्। स्वभावतः क्लीबमिदम्। एकवचनान्तञ्च अयं हि प्राक्छब्दः अव्ययत्वेन अस्त्री। अतः दिग्वाचकादप्यमुष्मात्खस्सुलभ इति भावः। एतेन मया प्रागुक्तः परिष्कारो व्याख्यातः। तथा हि – यदञ्चत्यन्तं पदं स्त्रीलिङ्गमप्यदिग्वाचकं ततः खस्स्यादेव। यथा प्राचीना ब्राह्मणी। यदप्यञ्चत्यन्तं पदं दिग्वाचकमप्यस्त्रीलिङ्गं ततः खः यथा प्राचीनं ग्रामादाम्राः। यच्चाञ्चत्यन्तं पदमदिग्वाचकमस्त्रीलिङ्गञ्च ततोऽपि खः यथा प्राक्प्राचीनं वा कालम्। यत्तु अञ्चत्यन्तं पदं स्त्रीलिङ्गं दिग्वाचकञ्च न ततः खः यथा प्राची दिक् इति। यस्मिन्नञ्चत्यन्ते पदे दिग्वाचकत्वं स्त्रीलिङ्गञ्च उभयं वर्तते न ततः ख इत्यनेन अन्यतरसत्त्वे खस्स्यादेवेति विशेषो लभ्यते इतीदमर्थं सूत्रे अदिक्स्त्रियामिति कर्मधारयेण निर्देशः। अन्यथा समाहारद्वन्द्वेन अदिक्स्त्रीणीत्येव सूत्र्येत इति संक्षेपः। अत्र मूले वक्ष्यमाणार्वाक्च्छब्दाद्यवयवार्वन्शब्दव्युत्पत्तिं दर्शयितुं निकृष्टप्रतिकृष्टावरेफयाप्यावमाधमा इति प्रक्षिप्तम्। एवं प्रक्षिप्तमपीदं वचनं प्रामादिकमेव। अवद्यावमाधमावरेफा इत्युणादिषु पञ्चमपादे पठितत्वात्। अत्रापि तदेव वचनमनुवक्तव्यमिति। कुत्सिते वदेर्नञि यत्। अवद्यम् अवतेरमः अवमः। वस्य पक्षे धः अधमः। अरेर्वन् अर्वा। रिफतेस्तौदादिकादिः रेफः इति तद्वचनं तत्रैव व्याख्यातम् (तौदादिकाद्रिफतेः अप्रत्यय इत्यर्थः। पुगन्तलघूपधस्य चेति गुणः रेफः) वस्तुतस्तु अर्वन्शब्दार्थं दर्शयितुं निकृष्टेत्याद्यमरश्लोक उदाहृत इति बोद्धव्यम्। नागरपुस्तके च निकृष्टप्रतिकृष्टावरेफयाप्यावमाधमा इत्यमर इति लिखितम्। निकृष्टादयस्सर्वे समानार्थका इत्यर्थः। एतेन अर्वन्तं निकृष्टमञ्चतीत्यर्वागिति सिद्धम्। अश्ववाच्यर्वन्शब्दस्त्वन्य एव। ***जात्यन्तात् छ** – बन्धुनि इति छेदः। प्रकृत्या, प्रकृतिप्रत्ययसमुदायेन वा बन्धुनि वाच्ये सति जात्यन्तात्प्रातिपदिकात् छप्रत्ययस्स्यात्। जातेरिति सूत्रितेऽपि यद्यपि तदन्तविधिना (प्रातिपदिकविशेषत्वात्तदन्तविधिः) जात्यन्तादिति लभ्यते। तथापि जातिरिति स्वरूपग्रहणमेव न त्वर्थग्रहणमिति ज्ञापयितुं जात्यन्तादित्युक्तम्। जातिरिति पदमन्ते यस्य तस्मादिति समासः। उदाहरणं दर्शयति ब्राह्मणजातीय इति। ब्राह्मणः जातिः यस्य सः ब्राह्मणजातिः । न च ब्राह्मणस्य धर्मिणः। जातेर्धर्मेण सह कथं सामानाधिकरण्यं संगच्छते, येन बहुव्रीहिस्स्यादिति वाच्यम्। बहुव्रीहिघटकीभूतब्राह्मणपदस्य ब्राह्मणत्वमर्थ इति विवक्षितत्वात् । न च पुनरयं विवक्षाऽनुपपन्नेति वाच्यम्। द्व्येकयोर्द्विवचनैकवचने इति सूत्रस्थस्य द्व्येकयोरिति पदस्यापि विवक्षया द्वित्वैकत्वयोरित्यर्थलाभस्य स्फुटितत्वात्। ब्राह्मणजातिरेव ब्राह्मण जातीयः ब्राह्मण इति फलितार्थः। अत्र हि ब्राह्मणजातिरिति बहुव्रीहिबलात् ब्राह्मणत्वरूपजातिमान् देवदत्तादिः

**२०८२। स्थानान्ताद्विभाषा सस्थानेनेति चेत्** ।५।४।१०। सस्थानेन तुल्येन चेत् स्थानान्तमर्थवदित्यर्थः। पितृस्थानीयः। पितृस्थानः। सस्थानेन किम्। गोः स्थानम्॥
**२०८३। अनुगादिनष्ठक्** ।५।४।१३। अनुगदतीत्यनुगादी। स एव आनुगादिकः॥

---

प्रतीयते। इयं हि जीतिर्न त्वात्मनः। तस्य निर्विशेषत्वात्। किन्तु देहस्यैव ब्राह्मणेन विधिवदूढायां ब्राह्मण्यामुत्पन्नो ब्राह्मण इति श्रीमदप्पयदीक्षितकृतपरिष्कारानुसारेण ब्राह्मणेन विधिवदूढायां ब्राह्मण्यामुत्पन्नो यो देहस्स एव ब्राह्मणत्वजातिमान् भवति। अतः ब्राह्मणत्वजातेर्व्यञ्जकं द्रव्यं तादृश देह एव भवति। एवं देहस्य ब्राह्मणत्वजात्याधारतायां लब्धायां तदभिमानेन जीवस्यापि संसारिणः ब्राह्मणत्वजातिमत्त्वं सुघटते इति देहदेह्यविभागेन ब्राह्मणत्वजातिमान् देवदत्त इति व्यवहारः। तस्मात् ब्राह्मणजातिरिति बहुव्रीहिणा ब्राह्मणत्वजातिमत्त्वेन तदभिव्यञ्जकं द्रव्यं देवदत्तादिरभिधीयते इति ब्राह्मणजातिशब्दात् छे कृते ब्राह्मणजातीय इति रूपं सिद्ध्यति। (देवदत्तादेर्जीवस्य जात्यभिव्यञ्जकत्वं देहाभिमाने सङ्गच्छते, स्थूलोऽहमितिवत्) ब्राह्मणजातिश्शोभना। नात्र बहुव्रीहिरिति बोधयितुं शोभनेति विशेष्यमुपन्यस्तम्। सति तु बहुव्रीहौ बहुव्रीहेरन्यपदार्थप्राधान्येन विशेष्यलिङ्गत्वात्। ब्राह्मणजातिर्देवदत्त इत्यत्रेव ब्राह्मणजातिरिति पदस्य पुंलिङ्गत्वे शोभनेति विशेष्योपन्यासो न सङ्गच्छेतेति। यद्वा शोभनेति पदं विशेषणमेव। विशेषणविशेष्ययोस्समानलिङ्गकत्वस्य औचित्यात्। ब्राह्मणजातिरिति पदं स्त्रीलिङ्गमेव इति नात्र बहुव्रीहिरिति ज्ञापयितुं शोभनापदोपन्यास इति बोध्यम्। ब्राह्मणस्य जातिरिति, ब्राह्मण इति जातिरिति वा समासः। (भावप्रधानोऽयं निर्देश इति ब्राह्म इतीत्यस्य ब्राह्मणत्वमितीत्यर्थः) अत्र हि जात्यन्तेन ब्राह्मणजातिपदेन जातिरेवाभिधीयते न तु जातिमद्द्रव्यमिति नास्मात् छः मेव जातिमद्द्रव्य जात्यभिव्यञ्जकद्रव्यं भवतीति प्रागेवोक्तम्।) *__स्थानान्तादिति__। अत्र पूर्वसूत्रात् छोऽनुवर्तते। अत्र विभाषाग्रहणादेव जात्यन्ताच्छस्य नित्यत्वं सिद्धमिति कृत्वा बृहतीजात्यन्त इति मूले प्रागुक्तमषडक्षेति सूत्रव्याख्यानावसरे स्थानमिति शब्दः अन्ते यस्य तस्मात् स्थानान्तात्प्रातिपदिकात् विकल्पेन छस्स्वार्थे। (छाभावपक्षे समासः। समासापवादत्वात्तद्धितानाम्। अपवादेन मुक्ते पुनरुत्सर्गः प्रवर्तते इति न्यायात्) त्यत् स्थानान्तं पदं तत्तुल्येन चेदर्थवद्भवति – तुल्यार्थवद्भवतीत्यर्थः। (तुल्यरूपोऽर्थो यस्मिंस्तत्तुल्यार्थवत्) स्थानान्तपदैकदेशेन तुल्यार्थोऽभिधीयते चेदिति यावदर्थः। स च स्थानान्तपदैकदेशः स्थानशब्द एवेति – सूत्रस्थेनेति शब्देन द्योत्यते स्थानान्तपदैकदेशेन स्थानशब्देन तुल्यरूपार्थश्चेदभिधीयते इति सस्थानेनेति चेदित्यस्य फलितार्थः। स्थानशब्देनेति किम्। तुल्यस्थानीय इति माभूत्। स्थानान्तपदैकदेशेन (तुल्यपदेन) तुल्यार्थप्रतीतिसत्त्वात्। ननु सस्थानेनेति चेदिति सूत्रस्थवाक्यस्य व्याख्यानादेवंविधार्थलाभोऽस्तु नाम। तुल्येन चेत्स्थानान्तमर्थवदिति मूलस्य कथमेतादृशार्थलाभ इति चेदुच्यते। स्थानान्तं पदं तुल्येन चेदर्थवदित्यन्वयः भवतीति

शेषः। अर्थोऽस्यास्तीत्यर्थवत्। तदस्यास्त्यस्मिन्निति मतुप्। शतेन धनवानित्यत्र शतधनवानिति यथा अर्थप्रतीतिः तद्वदत्रापि। तुल्येनार्थवदित्यस्य तुल्यार्थवदित्यर्थः। (शतस्य धनत्वमिव तुल्यस्य अर्थत्वात्) अत्र स्थानान्ताद्विभाषा तुल्ये इति न्यासः। तुल्ये तुल्यार्थवृत्ति यत् स्थानमिति पदं तदन्ताद्विकल्पेन छस्स्यादित्यर्थः। न च एकदेशान्वयो दुष्ट इति वाच्यम्। भाष्यकारैस्तस्येष्टत्वात्। तुल्ये किम् ? गोस्थानम्। (गोः गवां वा स्थानं गोस्थानम् गोष्ठमित्यर्थः) छाभावपक्षे समासमुदाहरति पितृस्थान इति। पितुरिव स्थानं पदं यस्य सः पित्रुस्थनः स एव पितृस्थानीयः। पित्रा तुल्य इति त्वर्थकथनमात्रम्। इदन्तत्त्वबोधिनीमतानुसारेणोक्तम्। वस्तुतस्तु पित्रा स्थानः पितृस्थान इत्येव समासः। न च स्थानशब्दस्य तुल्यार्थो नास्तीति वाच्यम्। प्रकृतसूत्रस्यैव तत्र प्रामाण्यात्। अत एव मूलेऽपि पित्रा तुल्य इति विग्रहो दर्शितः। स्थानपदस्य तुल्य इत्येवार्थ इति बोधयितुं तुल्यपदेन विग्रहः। पित्रा स्थान इत्येव सुवचम्। अत्र विचार्यते – स स्थानेनेति चेदिति वाक्यस्य तुल्येन चेदर्थवदिति व्याख्यानभूतं यन्मूलं तस्य तुल्यार्थवदित्यर्थकथने पितुरिव स्थानमस्य पितृस्थानः स एव पितृस्थानीयः इति तत्त्वबोधिनीमतं न व्यवतिष्ठते। स्थानान्तैकदेशेन स्थानपदेन तुल्यार्थस्यानभिधीयमानत्वात्। स्थानं पदमिति ह्यर्थः। अतस्तन्मतसिद्ध्यर्थम् स्थानान्तन्तुल्यार्थवदिति मूलस्य स्थानान्तं यत्समस्तं पदं तस्माद्योऽर्थोऽभिधीयते तस्मिन्नर्थे यदि तुल्यत्वं घटकत्वेन वर्तते तदा छस्स्यादित्यर्थः। तच्चेत्स्थानान्तं तुल्यपदघटितार्थवद्भवतीति यावत्। न च तुल्यस्थान इत्यत्रातिव्याप्तिः। अर्थे एव तुल्यपदस्य घटकतया प्रवेशः न तु स्थानान्ते शब्दे इति। तुल्यपदघटितार्थवदित्यनेन प्रतिपादितत्वात्। पितृस्थान इत्यत्र पितुरिवस्थानमस्येति व्युत्पत्त्या पितृतुल्यस्थानवानित्यर्थस्य स्थानान्तपदेनाभिधीयमानत्वात्। अर्थे तुल्यपदघटितत्वमस्तीति लक्षणसमन्वयः। न च सस्थानेनेति चेदिति सूत्रं तुल्यपदघटितत्वमेवाभिधत्ते न तु पुनरर्थे एवेति नियममिति वाच्यम्। इति पदेन एतादृशविवक्षाया ज्ञापितत्वात्। तुल्येन चेदर्थवदिति मूलात्तुल्यपदघटितार्थवदित्यर्थलाभे तु न विवदितव्यम्। तुल्येनेति सहार्थे तृतीया। विनापि तद्योगन्तृतीयेति वृद्धो यूनेत्यनेन ज्ञापितत्वात्। तुल्येन सहि।ाः अर्थोऽस्यास्तीति अर्थवत्। एकदेशान्वयोऽपि न दुष्टः भाष्यकारैरभ्युपगतत्वात्। एवं सूत्रेऽपि। सस्थानेनेति सहार्थे तृतीया। सस्थानसहित इत्यर्थः। इदञ्च सस्थानसहितत्वं न स्थानान्तेऽन्वेति किन्तु अर्थे एवेति करणबलादिति प्रागेवोक्तम्। तथा च सस्थानसहितार्थवच्चेदिति फलितम्। एतन्मतव्याख्यानद्वारा न्यासः प्रत्युक्तः। पितुरिव स्थानं पदमस्य पितृस्थानीय इत्यसिद्धेः। न ह्यत्र तुल्यार्थवृत्तिस्थानपदम् सस्थानाद्विभाषा तुल्येनेति न्यासे कृते पर्यायेषु न लाघवगौरवचिन्ताश्रीयते – अन्यतरस्यां ग्रहणेन ज्ञापितत्वादिति न्यायात्। तथा श्रुतसूत्रे सस्थानेति पदं न गौरवावहम् । न्यासे तु इति करणाभावे तुल्यविशिष्टं स्थानान्तमेव स्यान्न त्वर्थ इति यथाश्रुतसूत्रं रमणीयम्। मतञ्च तत्त्वबोधिनीकारस्य। पित्रा तुल्य इति

**२०८४। विसारिणो मत्स्ये** ।५ ।४ ।१६ । अण् स्यात् । वैसारिणः । मत्स्ये इति किम् । विसारी देवदत्तः ॥ **२०८५। संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्** ।५ ।४ । १७ । अभ्यावृत्तिर्जन्म । क्रियाजन्मगणनवृत्तेः संख्याशब्दात्स्वार्थे कृत्वसुच् स्यात् । पञ्चकृत्वो भुङ्क्ते । संख्यायाः किम् । भूरिवारान्भुङ्क्ते ॥ **२०८६। द्वित्रिचतुर्भ्यः सुच्** । ५ ।४ ।१८ । कृत्वसुचोऽपवादः । द्विर्भुङ्क्ते । त्रिः । 'रात्सस्य २८०' । चतुः ॥ **२०८७। एकस्य सकृच्च** ।५ ।४ ।१९ । सकृदित्यादेशः स्याच्चात्सुच् । सकृद्भुङ्क्ते । 'संयोगान्तस्य ५४' इति सुचो लोपः न तु 'हल्ङ्याप्–२५२' इति । अभैत्सीदित्यत्र सिच इव सुचोऽपि तदयोगात् ॥

---

मूलोक्तस्तु अर्थप्रदर्शनपरः न तु विग्रहवाक्यमिति बोध्यम् इति संक्षेपः। समानं स्थानं यस्य स इति व्युत्पत्त्या सस्थानस्तुल्यः। ***विसारिण** इति पञ्चमी। विसारिन्शब्दात्स्वार्थे अण्। प्रकृतिप्रत्ययसमुदायेन मत्स्ये वाच्ये विशेषेण सरतीति विसारी – सृगतौ। ***सङ्ख्याया** इति। क्रियाया अभ्यावृत्तयः। तासां गणनं सङ्ख्यानम्। क्रियाभ्यावृत्तिगणनं तस्मिन्। संख्याशब्देन हि किञ्चित्संख्यायते। संख्यायतेन या सङ्ख्या इति व्युत्पत्तेः। यदि सङ्ख्याया क्रियाजन्मानि गण्यन्ते तर्हि सङ्ख्यायाः कृत्वसुच् स्यादित्यर्थः। कृत्वसुचि च इत्। उरुच्चारणार्थः । कृत्वस् इति सान्तशेषः। कृत्वसुजन्तमव्ययम्। तसिलादिषु परिगणितत्वात्कृत्वसुचः कृत्वोर्था इति – यथा पञ्चकृत्वो भुङ्क्ते। अत्र देवदत्तकर्तृका भोजनक्रिया पञ्चसङ्ख्याका जातेत्यर्थात्। भोजनक्रियोत्पत्तयः पञ्चेति पञ्चन्शब्देन गण्यन्ते। अतः लक्षणसमन्वयः। ननु संख्याशब्देनैव किञ्चित्संख्यायते न त्वन्येनेत्यव्यभिचारादिह संख्याया इति व्यर्थमिति शङ्कते। संख्यायाः किमिति भूरिवारान् भूरित्यव्ययम्। सुप्सुपेति समासः। वारशब्दो वासरवाची। बहुवासरानित्यर्थः। ननु बहुपर्ययत्वादयं भूरिशब्दोऽपि संख्यावाच्येवेति चेन्मैवम्। पञ्चषडादिवन्नियतसंख्यावाचित्वाभावात् ननु बहुगणादिवदनियत संख्यावाचित्वमस्तु नाम तथापि संख्यात्वेका क्षतिरिति चेन्मैवम्। अनियतसंख्यावाचिनाम्मध्ये बहुगणादीनामेव संख्यात्वमिति बहुगणसूत्रेण नियमितत्वात्। तस्मात् भूरिशब्दे यद्यपि लौकिकसंख्यावाचित्वं तथापि तादृशसंख्यात्वस्य नेह ग्रहणमिति बोध्यम्। ***सुच्।** स् इति प्रत्ययश्शिष्यते। रात्सस्य इति संयोगान्तलोपेन सुचो लोपइति शेषः। चतुर्भुङ्क्ते ।अस्मिन्सूत्रेऽपि क्रियाभ्यावृत्तिगणने इत्यनुवर्तते। अतः द्वौ पाकावित्यादिषु न सुच्। ***एकस्येति।** एकस्येति षष्ठीबलात्सकृदित्ययमादेश एव न तु प्रत्यय इति लभ्यते। चात्सुच्। क्रियावृत्तेरेकशब्दादिति शेषः। सकृद्भुङ्क्ते । नन्वत्र सुच् न श्रूयते एव। कुत इदमिति शङ्कायामाह – संयोगान्तस्येति। संयोगान्तस्तयलोप इत्यनेन सुचो लोप इत्यर्थः। ननु सुजेवात्र न विधीयताम्। किन्तस्य करणेन फलम्। लोपस्य अवश्यम्भावादिति चेन्मैवम्। कृत्वोऽर्थकत्वेन सुजन्तं सकृदितीदमव्ययं यथा स्यादिति।

**२०८८। विभाषा बहोर्धाऽविप्रकृष्टकाले** ।५।४।२०। अविप्रकृष्ट आसन्नः। बहुधा दिवसस्य भुङ्क्ते। आसन्नकाले किम्। बहुकृत्वो मासस्य भुङ्क्ते॥ **२०८९। तत्प्रकृतवचने मयट्** ।५।४।२१। प्राचुर्येण प्रस्तुतं प्रकृतं तस्य वचनं प्रतिपादनम्। भावेऽधिकरणे वा ल्युट्। आद्ये प्रकृतमन्नमन्नमयम्। अपूपमयम्। यवागूमयी। द्वितीये अन्नमयो यज्ञः । अपूपमयं पर्व॥

---

अपि च एकः प्रयातीत्यत्र सकृत्प्रयातीति माभूदिति च। तदयोगात् हल्ङ्याादिलोपासम्भवादित्यर्थः। सिच इव सुचोऽप्यविभक्तित्वेन हल्ङ्याादिलोपः। विभक्तीनां सुतिसीनामेव तेन लोपस्य विहितत्वादिति भावः। ननु अत्र हल्ङ्यादिति सुलोपोऽस्तु नाम। का क्षतिस्सकृदिति रूपसिद्धेरत आह – अभैत्सीदित्यत्र सिच इवेति हल्ङ्यादिसूत्रे सुतिसीति साहचर्याद्विभक्तय एव गृह्यन्ते इति यदि नोच्यते तर्हि सकृदित्यत्र हल्ङ्यादिलोपो यथा भवति तथा अभैत्सीदित्यत्रापि भवत्येवेति अभैत्सीदिति रूपं न सिद्ध्येत् सिचोग्रहणापत्तेः। अतः विभक्तय एव गृह्यन्ते इति अवश्यं वक्तव्यम्। यदि तथोच्यते तर्हि सुचः अविभक्तित्वान्न हल्ङ्यादिलोपप्रसक्तिरिति संयोगान्तलोप एवेति संक्षेपः। ***विभाषेति।** संख्याया इति सूत्रं सर्वमत्रान्वेति । क्रियाभ्यावृत्तिगणने इत्येतावदेव वा । अन्यानुवृत्तेर्निष्फलत्वात्। धा – अविप्रकृष्टकाले इति छेदः । अविप्रकृष्टकाले याः क्रियाभ्यावृत्तयः तासां गणने वृत्तेर्बहुशब्दाद्विकल्पेन धाप्रत्ययस्स्यादित्यर्थः। बहुधा दिवसस्य भुङ्क्ते। एकस्मिन् दिने भोजनक्रिया जन्मानि बहूनि भवन्तीति एकस्य जन्मनः अपरं जन्मकालतः प्रत्यासन्नमिति आसन्नकालिकाः क्रियाभ्यावृत्तयो बहुशब्देन गण्यन्ते। धाभावपक्षे सङ्ख्याया इति कृत्वसुच्। कृत्वसुचोऽपवादत्वाद्धाप्रत्ययस्य – इति। तदिति प्रथमान्तात् प्रकृतवचने मयट् स्यात् वक्तेति वचनम् वचपरिभाषणे इति धातोर्भावे ल्यूट् सिद्धावस्थापन्नो धात्वर्थो भावः इति भावे इति सूत्रे वक्ष्यति उच्यतेस्मिन्निति वचनम्। वचधातोरधिकरणे ल्यूट् नपुंसके भावे इत्यतः भावे अनुवर्तमने ल्यूट् च इति सूत्रं भावे ल्यूड्विधायकम् ल्यूट्चेत्यनुवर्तमाने करणाधिकरणयोश्चेति सूत्रमधिकरणे ल्यूड्विधायकमिति बोध्यम् । प्रकृतस्य वचनम्प्रकृतवचनम् तस्मिण् प्रकृतवचने प्रकृतोक्ता द्योत्यायाम् प्रकृते द्योत्ये इति यावत् इत्येकोऽर्थः । प्रकृतवचने प्रकृतञ्च तद्वचनञ्च प्रकृतवचनन्तस्मिन् सप्तमी अविवक्षिता तेन प्रकृतवचनादिति प्रथमान्तादित्यस्य विशेषणम् तथा च प्रकृतादुच्यमाना त्प्रथमान्तादित्यस्य विशेषणम्। तथा च प्रकृतादुच्यमानात्प्रथमान्तात् सप्तम्यर्थे मयट् इत्यन्योऽर्थः यद्वा उच्यतेऽस्मिन्वचनमिति व्युत्पत्त्या वचनमित्यस्य उच्यतेऽस्मिन्नित्यर्थः। तत्प्रकृतमुच्यतेऽस्मिन् मयट् इत्यन्वयः। प्रकृतमिति उच्यते इति च तच्छब्दस्य विशेषणम्। तथा च प्रकृतत्वोच्यमानत्वरूपोपाधिद्वयवतः प्रथमान्तादस्मिन्नित्यर्थे मयडित्यर्थः। उभयत्रापि यत्प्रकृतं तस्मादेव मयडित्यस्मिन्नंशे विशेषाभावेऽपि प्रथमार्थे मयडन्तेन

**२०९० । समूहवच्च बहुषु** ।५ ।४ ।२२ । सामूहिकाः प्रत्यया अतिदिश्यन्ते चान्मयट् । मोदकाः प्रकृताः मौदकिकम् । मोदकमयम् । शाष्कुलिकम् । शष्कुलीमयम् । द्वितीयेऽर्थे । मौदकिको यज्ञः । मोदकमयः ॥ **२०९१ । अनन्तावसथेतिहभेषजाञ्ञ्यः** ।५ ।४ । २३ । अनन्त एवानन्त्यम् । आवसथ एवावसथ्यम् । इतिहेति निपातसमुदायः । ऐतिह्यम् । भेषजमेव भैषज्यम् ॥

---

प्रकृतमेवाभिधीयते। द्वितीयार्थे तु प्रकृतवानभिधीयते इत्यस्ति विशेषः । प्रकृतपदार्थमाह प्राचुर्येण प्रस्तुतमिति प्रस्तावविषयीभूतं प्रस्तुतं प्रस्तावः प्रकरणम् । संदर्भ इति यावत्। प्रचुरस्य भावः प्राचुर्यम् बाहुळ्यमित्यर्थः। बाहुळ्येन प्रकरणविषयम्प्रकृतमित्युक्तं भवति। ननु एतस्य वस्तुनः एतत्प्रकरणविषयत्वमस्ति वा न वेति प्रश्ने सति बाहुळ्ये नास्तीति यदि कश्चिदुत्तरं ददाति तदा केनचिद्धेतुना तस्य वस्तुनः प्रकरणविषयत्वं नास्तीत्यवगम्यते। तथा च नेदं बाहुळ्यं वस्तुगतम्। किन्तु प्रकरणविषयत्वगतमेव। तथा च वस्तुगतबाहुळ्ये मयट् नोपलभ्येतेति। आनन्दमयः। प्रचुरानन्दः प्राचुर्ये मयट् इति आनन्दमयाधिकरणे वृत्तिकारादिभिरुक्तं विरुध्येतेति चेन्मैवम्। प्राचुर्येण प्रस्तुतमित्यर्थः। प्रचुरमिति प्रस्तुतम् इति यावत्। प्रचुरं प्रस्तुतञ्चेति फलितार्थः। इति द्रव्यगतमेवेदं प्राचुर्यम्। अतो न दोषः। प्रचुरमिति किम्। हिंसामयो यज्ञ इति माभूत्। एक एव हि पशुस्तत्र हन्यते प्रस्तुतविशेषणेन तु नार्थः। अप्रस्तुतस्य कथनासम्भवात्। यथाकथञ्चित्कथनेऽपि तस्य दुष्टत्वादिति। आद्ये भावे ल्युडन्तं वचनमिति पक्षे इत्यर्थः। अस्मिन् पक्षे हि प्रकृते द्योत्ये प्रथमान्तात्स्वार्थे मयडित्यर्थात्। मयडन्तेन प्रकृतमेवाभिधीयते इत्याह – प्रकृतमन्नमन्नमयमिति। प्रचुरमन्नमित्यर्थः। पर्वपूर्णिमादिपर्वदिनम्। अपूपः प्रकृतमुच्यतेऽस्मिन्नित्यपूपमयम्। ***समूहेति।** अत्र पूर्वसूत्र मनुवर्तते । तथा च प्रकृते द्योत्ये बहुवचनान्तात्प्रथमान्तात्स्वार्थे समूहार्थे इव प्रत्ययाः स्युः इत्येकोऽर्थः। प्रकृतत्वोच्यमानत्वरूपोपाधिद्वयवतः बहुवचनान्तात्प्रथमान्तादस्मिन्नित्यर्थे समूहार्थे इव प्रत्ययाः इति द्वितीयोऽर्थः। उभयत्रापि चान्मयट् स्यात्। चाभावे मयटं सामूहिका बाधेयुरिति बोध्यम्। (समूहे इव समूहवत् इति सप्तम्यर्थे वतिः । बहुषु बह्वर्थोक्तौ इति सूत्रस्य पदार्थः) मौदकिकम्। तस्य समूह इत्यधिक्रियमाणे अचित्तहस्तिधेनोष्ठगिति अचित्तलक्षणष्ठक्। समूहस्य एकत्वेन ठगन्तमेकवचनान्तम्। स्वभावतः क्लीबञ्च। समूहवदिति समूहे इव सर्वकार्याणामतिदेशादत्रापि क्लीबत्वमेकत्वञ्च। मोदकाः भक्ष्यविशेषाः। विशेष्यलिङ्गत्वात्पुंस्त्वम्। मौदकिको यज्ञः। (स्वस्य कुशलं प्रकृतमुच्यतेऽस्मिन्निति स्वकुशलमयी – तां स्वकुशलमयीं हारयिष्यन्प्रवृत्तिमिति मेघः।

**२०९२। देवतान्तात्तादर्थ्ये यत्** ।५।४।२४। तदर्थ एव तादर्थ्यम्। स्वार्थे ष्यञ्। अग्निदेवतायै इदम् अग्निदेवत्यम्। पितृदेवत्यम्॥ **२०९३। पादार्घाभ्यां च** ।५।४।२५। पादार्थमुदकं पाद्यम्। अर्घ्यम्॥ **नवस्य नू आदेशः त्नप्तनप्खाश्च प्रत्यया वक्तव्याः** ॥ नूत्नम्। नूतनम्। नवीनम्॥ **नश्च पुराणे प्रात्** ॥ पुराणार्थे वर्तमानात्प्रशब्दान्नो वक्तव्यः॥ चात्पूर्वोक्ताः। प्रणम्। प्रत्नम्। प्रतनम्। प्रीणम्॥ **भागरूपनामभ्यो धेयः** ॥ भागधेयम्। रूपधेयम्। नामधेयम्॥ **आग्नीध्रसाधारणादञ्** ॥ आग्नीध्रम्। साधारणम्। स्त्रियां ङीप्। आग्नीध्री। साधारणी॥ **२०९४। अतिथेर्ज्यः** ।५।४।२६। तादर्थ्ये इत्येव। अतिथय इदमातिथ्यम्॥ **२०९५। देवात्तल्** ।५।४।२७। देव एव देवता॥ **२०९६। अवेः कः** ।५।४।२८। अविरेवाविकः॥ **२०९७। यावादिभ्यः कन्** ।५।४।२९। याव एव यावकः। मणिकः॥ **२०९८। लोहितान्मणौ** ।५।४।३०। लोहित एव मणिर्लोहितकः॥

---

द्वितीयेऽर्थे मयडयम्।) ***देवतेति।** देवताशब्दान्तात्प्रातिपदिकत्तादर्थ्येऽभिधेये यत्प्रत्ययः तादर्थ्यञ्च प्रत्ययेनाभिधीयते। यद्वा – प्रत्ययेन तादर्थ्ये द्योत्ये स्वार्थे प्रत्ययः। स्वार्थिकप्रकरणस्थत्वादस्य सूत्रस्य तादर्थ्यशब्दार्थमाह – तदर्थ एवेति। तस्मा अयं तदर्थः। अर्थेन सह नित्यसमासः। स्वार्थे ष्यञ्। गुणवचनब्राह्मणादिभ्यश्चेति ब्राह्मणादेराकृतिगणत्वात्तदर्थशब्दात् स्वार्थे ष्यञ् प्रत्यय इत्यर्थः। एवञ्च तादर्थ्ये शब्दस्य तस्मा अयमित्यर्थे इत्यर्थो लब्धः तादर्थ्ये प्रत्ययविधिबलादेव चतुर्थ्यन्तात्प्रत्यय इति च लब्धम्। चतुर्थ्यन्ताद्देवतान्तप्रातिपदिकादिदमित्यर्थे यत्प्रत्यय इति निष्कृष्टार्थः। ***पादेति।** अत्र तादर्थ्ये इत्यनुवर्तते यदिति च। ***नवस्येति।** वार्तिकमिदम्। नवशब्दात्स्वार्थे त्नप्–तनप् – ख – इति प्रत्ययाः। नवशब्दस्य – नू इत्ययमादेशश्च स्यात्। अनेकाल्त्वात्सर्वस्य। त्नप्तनपोः प इत्। खस्येनादेशे – ओर्गुणे – अवादेशे – नवीनम्। ***नो।** वक्तव्यः। न इति प्रत्ययस्स्यादित्यर्थः प्रीणम्। प्रशब्दात् खे– खस्येनादेशः। यस्येति लोपः। प्रीणम् पुराणमित्यर्थः। एषां प्रत्ययानां स्वार्थिकत्वात्। ***भागधेयम्।** भागशब्दोऽत्र भाग्यपरः। भाग एव। भागधेयम्। दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिरित्यमरः।***आग्नीध्रसाधारणयोस्समाहारः आग्नीध्रसाधारणम्।** तस्मात् आग्नीध्रात् – साधारणाच्चेत्यर्थः। ***लोहितादिति।** मणौ वाच्ये सति लोहितात्कस्स्यात्। यावादिभ्यः कनिति सूत्रात्कनोऽत्रानुवृत्तिः। ***वर्णे** इति। अत्र लोहितादिति कन् इति चानुवर्तेते। मणावेव कन् इत्युक्तत्वादस्यारंभः। अनित्ये वर्णे द्योत्ये सति वर्णस्यानित्यत्वे द्योत्ये सतीति यावत्। लोहितात्कस्स्यात्। लोहितकः। कोपेन देवदत्तः। लोहितत्वं वर्णः। तच्च कोपजन्यमिति कोपसमानकालप्रध्वंसवदेव – अतस्तस्य अनित्यत्वं गम्यते – वर्णे इति किम्। लोहितकं रुधिरमिति माभूत् – अस्ति हि रुधिरे अनित्यत्वं प्राणापाये तस्य अवश्यनाशवत्त्वात्। इदं ह्यनित्यत्वं न वर्णगतं किन्तु द्रव्यगतमेवेति वर्णग्रहणे सति वर्णगते अनित्यत्वे द्योत्ये एव कः। न तु द्रव्यगतें इति लोहितं रुधिरमितीष्टसिद्धिरिति बोध्यम्।

*__लोहितात्लिङ्गबाधनं वा__। वार्तिकमिदम्। लोहितादि्वहितस्य कनः लिङ्गकर्तृकं बाधनं वाच्यमिति तदर्थः। लिङ्गमत्र स्त्री – टाबादिकम्। कनं बाधित्वा प्रथमत एव लोहितात् स्त्रीप्रत्ययो जायते इति भावः। वार्तिकाभावे परत्वात्कनेव स्यात्। लोहितात्कनः प्रतिपदोक्तत्वेनापवादत्वाच्च इति बोध्यम्। लोहितशब्दात्स्त्रियां वर्णादनुदात्तात्तोपधात्तो न इति ङीप् नकारे दशश्च तस्य – लोहिनी – ततः कनि केण इति ह्रस्वः – लोहिनिक – अदन्तलक्षणष्टाप् – लोहिनिका – लिङ्गबाधनं वेति लिङ्गबाधनस्य वैकल्पिकत्वेन लोहितशब्दात्प्रथमतः कन्। ततः स्त्रियां टाप्। न च कन्नन्तात्वर्णादनुदात्तादित्यस्य प्रवृत्तिश्शङ्क्या कन्नन्तस्य अतोपधत्वात्। लोहितका प्रत्ययस्थादितीत्वम्। लोहितिका। इति। ननु वार्तिके वेति व्यर्थम्। वर्णादनुदात्तादिति ङीपः पाक्षिकत्वेन ङीबभावपक्षे टापि कृते ततः कनि लोहिता – क – केणः। अजाद्यतष्टाप्। प्रत्ययस्थादितीत्वम् लोहितिका इति रूपसिद्धेरिति चेत्– मैवम्। लोहितशब्दात्सुबन्तात्कनि केण इति ह्रस्वे टापि च लोहित – का – इति स्थिते प्रत्ययलोपे प्रत्ययलक्षणन्यायेन अन्तर्वर्तिनीं विभक्तिमाश्रित्य सुपः पर एवायमाप् इति असुप इति निषेधेन प्रत्ययस्थादितीत्वस्याप्राप्तेः लोहितिका इति रूपासिद्धेरिति। ननु प्रातिपदिकात्तद्धिता इति पक्षस्यात्राभ्युपगम्यमानत्वेन लोहिता इत्यस्माट्टाबन्तात्प्रातिपदिकादेव कन् न तु सुबन्दादिति नास्त्येवात्रासुप इति निषेध इति चेत् सत्यम्। लोहितिकेति रूपसिद्ध्यर्थं लिङ्गबाधनस्य अनावश्यकत्वेन निष्फलत्वाल्लिङ्गबाधनं वेत्युक्तमिति बोध्यम्। वेत्युक्ते तु यद्रूपसिद्ध्यर्थं लिङ्गबाधनमावश्यकं तत्रैव लोहिनिकेत्यत्र लिङ्गबाधनवार्तिकप्रवृत्तिः। अन्यत्र निरर्थकत्वेन न प्रवृत्तिरिति लभ्यते। वस्तुतस्तु निरवकाशत्वमेवापवादत्वन्न तु प्रतिपदोक्तत्वमिति कनो नास्त्यपवादत्वम्। सुबन्तात्तद्धिता इति पक्षस्य प्रबलत्वेन ङ्याप्प्रातिपदिकात्स्वादय इति ङीबनन्तरमेव सुब्विधानाच्च। लोहितशब्दात् स्त्रियां प्रथमतो ङीप् – पश्चात्सुप् – ततः कन्। इति लोहितिका – लोहिनिका इति रूपद्वयसिद्धिर्भवत्येवेति व्यर्थमिदं लिङ्गबाधनं वेति वार्तिकमिति तत्वबोधिनी। ननु सुबन्तात्तद्धिता इति पक्षे लोहितिकेति न सिद्ध्यत्येव। असुप इति निषेधादित्वस्येति चेत् उच्यते – उदीचामातः स्थाने यकपूर्वाया इति सूत्रेण नात्रासुप इति निषेध इति ज्ञाप्यते । तथा हि तद्धि प्राप्तविभाषासूत्रम्। प्रत्ययस्थादित्यनेन नित्यमित्वे प्राप्ते विकल्पार्थन्तस्यारम्भात् । अप्राप्तविभाषात्वे तु यकेति किम्। अश्विका इति प्रत्युदाहरणं मूलोक्तं न सङ्गच्छेत। (अजा – एडका – अश्वा इत्यजादिषु पाठादश्वस्य स्त्रियां टाप् – तस्मादश्वाशब्दादज्ञाते कप्रत्यये कृते केण इति ह्रस्वः। अश्वक ततष्टाप् अश्वका – प्रत्ययस्थादितीत्वम् अश्विका सुबन्तात्तद्धिता इति मुख्यपक्षे कप्रत्ययान्तादि्वहितोऽयमाप् सुपः पर एवेति नात्रेत्वं स्यादिति अश्वकेत्येव वक्तव्यं स्यात् – तस्मात् – उदीचामिति सूत्रं प्राप्तविभाषेति सूत्रम्। तथा च यकपूर्वस्य स्त्रीप्रत्ययाकारस्य स्थाने योऽकारस्तस्य

**२०९९। वर्णे चानित्ये** ।५।४।३१। लोहितकः कोपेन॥ **लोहिताल्लिङ्गबाधनं वा**॥ लोहितिका लोहिनिका कोपेन॥ **२१००। रक्ते** ।५।४।३२। लाक्षादिना रक्ते यो लोहितशब्दस्तस्मात्कन्स्यात्। **लिङ्गबाधनं वा** इत्येव। लोहितिका लोहिनिका शाटी॥ **२१०१। कालाच्च** ।५।४।३३। 'वर्णे चानित्ये २०९९' 'रक्ते २१००' इति द्वयमनुवर्तते। कालकं मुखं वैलक्ष्येण। कालकः पटः। कालिका शाटी॥ **२१०२। विनयादिभ्यष्ठक्**। ५।४।३४। विनय एव वैनयिकः। सामयिकः॥ **(ग) उपायो ह्रस्वत्वं च**॥ औपयिकः॥

---

कात्पूर्वस्य इद्वा स्यादापीत्यनेन सुपः परत्वमापोऽव्यभिचार्येवेति। आर्यकेत्यादै न पूर्वसूत्रेणेत्वप्राप्तिरिति हेतोः प्राप्तविभाषात्वेनेदं सूत्रं व्यर्थम् सत् समासान्तर्वर्तिनीं विभक्तिमाश्रित्यैव असुप इति निषेधः – न तु – तद्धितान्तर्वर्तिनीमिति ज्ञापयतीति – अत एव बहुपरिव्राजका नगरीत्युदाहृतं मूले असुप इति किमित्याक्षेपप्रसङ्गे इति। वस्तुतस्तु सुबन्तात्परोऽयमाप्न भवति । कप्रत्ययान्ताद्विहितत्वेन तद्धितान्तात्परत्वात् इति नात्रासुप इति निषेधप्रसङ्गः। लोहिता– अश्वा – इत्यादयो यद्यपि सुबन्ताः तेभ्यस्तद्धिते कृते केण इति ह्रस्वे लोहितक अश्वक इति तद्धितान्तौ । एताभ्यां पुनष्टापि लोहितका अश्वका । अयं हि ककारोपरि श्रूयमाण आप् न सुवन्तात्परः। किन्तु तद्धितान्तात्प्रातिपदिकात्पर एवेति। ***रक्ते इति।** अत्र लोहितादिति कन् इति च संबध्येते। तदेतदाह लाक्षादिनेति। रक्तशब्दोऽत्र न रुधिरवाचीत्याह – लाक्षादिना रक्ते इति लाक्षादिना रक्ते वस्तुनि वृत्तिमान् यो लोहितशब्द इत्यन्वयः। लाक्षादिना रक्तं वस्त्रादिकमभिदधत् यो लोहितशब्द इत्यर्थः। लाक्षादिना रक्ते वस्त्रादौ यो वर्णो लोहितत्वं स हि नित्य इति वर्णे चानित्य इत्यनेन कनोऽप्राप्तावयमारम्भः – शाटी वस्त्रम्। ***कालाच्च।** कालशब्दोऽयं वर्णवाची न तु समयवाची। प्रकरणबलात्। कालशब्दो नीलवर्णे प्रसिद्धः । तद्योगान्नीलं वस्त्वपि कालमित्युच्यते। लोहितशब्दो यथा रागे रक्तवर्णवति च प्रसिद्धस्तद्वत् कालशब्दात्कन् स्यात्स्वार्थे। वर्णस्य (नैल्यस्य) अनित्यत्वे द्योत्ये इत्येकोर्थः। वर्णे चानित्ये इत्यस्यात्रानुवृत्तेः। नीलीरसादिभिः रक्ते (रज्यते इति रक्तं तस्मिन्। तेन रक्तं रागादित्यत्रेव अत्रापि रक्तशब्दः रज्यते इत्यर्थे प्रसिद्धः।) वर्तमानो यः कालशब्दस्तस्मात्स्वार्थे कन् इत्यन्योऽर्थः। रक्ते इति सूत्रस्यात्रानुवृत्तेः। प्रथमार्थस्योदाहरणमाह कालकं मुखमिति। मुखं दुःखेन नीलमित्यर्थः। दुःखशान्तौ नैल्यापगमाद्भवत्यत्रानित्यो वर्णः। मुखगतकालवर्णस्य अनित्यत्वं द्योतयितुमुपपदं प्रयुङ्क्ते – वैलक्षण्येनेति । दुःखादिप्रयुक्तविलक्षणत्वेनेत्यर्थः। दुःखादिनेति यावत्। द्वितीयार्थस्योदाहरणमाह – कालकः पट इति। नील्या रक्तो नीलः पटः कालक इत्युच्यते। (स्त्रियामाह कालिका इति। प्रत्ययस्थादितीत्वम्। अदन्तत्वाट्टाप्। काला इत्यस्यानदन्तत्वेऽपि के कृते केण इति ह्रस्वे कालकशब्दस्यादन्तत्वाट्टाप्लाभः।) नीलेत्यर्थः। ***उपायादिति।** ह्रस्वत्वञ्चेदं विधानसामर्थ्यात्।

**२१०३। वाचो व्याहृतार्थायाम्** ।५।४।३५। संदिष्टार्थायां वाचि विद्यमानाद्वाक्शब्दात्स्वार्थे ठक् स्यात्। संदेशवाग् वाचिकं स्यात्॥ **२१०४। तद्युक्तात्कर्मणोऽण्** ।५।४।३६। कर्मैव कार्मणम्। वाचिकं श्रुत्वा क्रियमाणं कर्मेत्यर्थः॥ **२१०५। ओषधेरजातौ** ।५।४।३७। स्वार्थेऽण्। औषधं पिबति। अजातौ किम्। ओषधयः क्षेत्रे रूढाः॥ **२१०६। प्रज्ञादिभ्यश्च** ।५।४।३८। प्रज्ञ एव प्राज्ञः। प्राज्ञी स्त्री। दैवतः। बान्धवः॥ **२१०७। मृदस्तिकन्** ।५।४।३९। मृदेव मृत्तिका। **२१०८। सस्नौ प्रसंशायाम्** ।५।४।४०। रूपपोऽपवादः। प्रशस्ता मृत् मृत्सा। मृत्स्ना। उत्तरसूत्रेऽन्यतरस्यांग्रहणान्नित्योऽयम्॥ **२१०९। बह्वल्पार्थाच्छस्कार कादन्यतरस्याम्** ।५।४।४२। बहूनि ददाति बहुशः। अल्पानि अल्पशः॥ **बह्वल्पार्थान्मङ्गलामङ्गलवचनम्**॥ नेह। बहूनि ददात्यनिष्टेषु। अल्पं ददात्याभ्युदयिकेषु॥

---

पकारोपर्याकारस्येति बोध्यम्। । तेन कादेशो नेति तत्त्वबोधिनी। दान्तत्वेन इसुसुक्तान्तात्क इति ठस्य कादेशो न भवतीत्यर्थः। वाच इति। व्याहृतः अर्थः प्रायोजनं संदेशरूपम्। यया यस्यां वा सा व्याहृतार्था। तस्यां संदिष्टार्थायामित्यर्थः। अनुगुणं विशेष्यमध्याहृत्य वदति – वाचि विद्यमानादिति । संदिष्टार्थवागर्थकात् संदेशवागर्थकादिति यावत्। वाच् ठस्येकः इके परतः पूर्वस्य भत्वान्न चोः कुरिति – कुत्वम् वाचिकम्। लोकात् क्लीबत्वम्। वाचः स्त्रीत्वेऽपि ठगन्तस्य क्लीबत्वदर्शनात् – लिङ्गं हि लोकतो ज्ञातव्यम्। ***तद्युक्तादिति।** तत्पदेन व्याहृतार्थवाचः परामर्शः। तेन युक्तात्तद्युक्तात् स च योगोऽत्र अनन्तरकृतिरिति विवक्षितमित्याह – वाचिकं शृत्वा क्रियमाणं कर्णेत्यर्थ इति। एतेन तद्युक्तादित्यस्य वाचिकश्रवणसमनन्तरकृतिविषयादित्यर्थः फलति । ***ओषधेरिति।** अजातौ वर्तमानादोषधिशब्दादित्यर्थः फलति। ***ओषधिशब्दो** हि ओषध्यः फलपाकान्ता इति सस्यजातौ रूढः। स हि नेह गृह्यते, किन्तु भेषजपर्यायः इति कृत्वोदाहरति औषधम्पिबतीति। रोगीति शेषः। ओषधिरेव औषधमिति। क्षेत्रे रूढाः – क्षेत्रे रोहन्तीत्यर्थः ***देवतेव** दैवतः। प्रकृतिलिङ्गातिवर्तनस्य स्वार्थिकानामपि क्वचिदिष्टत्वात्पुंस्त्वम्। बृन्दारका दैवतानि पुंसि वा – इत्यमरः। अतः दैवतमिति क्लीबमप्यस्ति। ***मृत्तिका।** तिकन्नन्तादददन्तलक्षणे टापि रूपम्। ***सस्नाविति।** मृद इत्यत्रानुवर्तते। प्रशंसायां द्योत्यायां मृदः सप्रत्ययः स्न प्रत्ययश्च स्तः। मृद् स खरि चेति चर्त्वम्।मृत्स टाप् मृत्सा – एवं मृत्स्ना। ***बह्विति।** बह्वल्पयोरिवार्थो यस्य तद्बह्वल्पार्थम्पदम्। बह्वर्थमल्पार्थञ्चेत्यर्थः। बह्वर्थकन्तु पदं बहु भूरि इत्यादि। अल्पार्थकन्तु अल्पं स्वल्पमित्यादि। कारकं क्रियान्वयि कर्मादिसंज्ञम्। बहुशो ददाति। अत्र हि ददातिक्रियानिरूपितं कर्णत्वं बह्वर्थस्य वर्तते इति द्वितीयाकारकाद्बहुशब्दात् शस्। एवमल्पशो ददातीत्यत्राप्यूह्यम्। ***बह्वल्पार्थादिति।** मङ्गळामङ्गळयोर्वचनम्। मङ्गळामङ्गलवचनम्। मङ्गळामङ्गळयोरिति सूत्रे उपसंख्यातव्यमित्यर्थः।

**२११०। संख्यैकवचनाच्च वीप्सायाम्** ।५।४।४३। द्वौ द्वौ ददाति द्विशः। माषं माषं माषशः। प्रस्थशः। परिमाणशब्दा वृत्तावेकार्था एव। संख्यैकवचनात्किम्। घटं घटं ददाति। वीप्सायां किम्। द्वौ ददाति। कारकादित्येव। द्वयोर्द्वयोः स्वामी॥ **२१११। प्रतियोगे पञ्चम्यास्तसिः** ।५।४।४४। प्रतिना कर्मप्रवचनीयेन योगे या पञ्चमी विहिता तदन्तात्तसिः स्यात्। प्रद्युम्नः कृष्णतः प्रति॥

---

तथा च – मङ्गळामङ्गळयोरर्थयोः बह्वल्पार्थात्कारकाच्छसन्यतरस्यां स्यादित्यन्वयस्सूत्रस्योपपद्यते। (अर्थयोः कार्ययोरित्यर्थः।) मङ्गळामङ्गळयोर्बह्वल्पयोश्च यथासंख्यम्। तेन बहोर्मङ्गळे शस् इति लभ्यते। यथा बहुशो ददात्याभ्युदयिकेषु कर्मसु – अत्र आभ्युदयिकानां कर्णणां मङ्गळत्वान्मङ्गळार्थवृत्तित्वं बह्वर्थस्यास्तीति बहोश्शस्–अल्पशो ददात्यनिष्टेषु कर्मसु। अत्रानिष्टकर्मणाममङ्गळत्वात्तदर्थे वृत्तिनोल्पशब्दाच्छस् – मङ्गळामङ्गळवचनमिति किम् इति शङ्कायामाह नेहेत्यादि। ***संख्येति**। अत्र कारकादिति शस् इति च पूर्वसूत्रादनुवर्तेते। कारकादित्यनुवर्तते – शस् इति तु चकारेण अनुकृष्यते इति वा। संख्या च एकवचनञ्च तयोस्समाहारः संख्यैकवचनम्। तस्मात् संख्यावाचकात् एकवचनाच्चेत्यर्थः। एकोऽर्थ उच्यते – येन तदेकार्थवचनम्। एकत्वविशिष्टार्थबोधकमित्यर्थः। एकत्वात्मकार्थबोधकमिति तु न भ्रमितव्यम्। तथात्वे एकशब्दादेव स्यादिति वचनग्रहणस्यानर्थक्यात्। न च एकपर्यायात्केवलशब्दादपि यथास्यात्तदर्थं वचनग्रहणमिति वाच्यम्। माषश इत्याद्यसिद्धेः। एकत्वाविशिष्टार्थबोधकञ्च एकवचनान्तमेव भवतीति एकवचनादित्यस्य एकवचनान्तादिति फलितोऽर्थः। वीप्सायां गम्यमानायां सत्यां वीप्सार्थवृत्तेरिति वा। कारकात्संख्यैकवचनाच्छस् स्यादिति सूत्रार्थः। संख्यायाश्शसमुदाहरति द्विश इति। एकवचनादाह। माषश इति। उन्मानपरिमाणविशेषो माषः। तत्परिमितसुवर्णादौ तस्य भाक्तः प्रयोगः। तेन – माषं ददातीत्यस्य माषपरिमितस्वर्णं ददातीत्यर्थः। एकवचनात्परिमाणाच्छसमाह – प्रस्थश इति। प्रस्थपरिमितधान्यादौ प्रस्थशब्द औपचारिकः। प्रस्थं प्रस्थं ददातीति प्रस्थशो ददाति। घटघटं ददाति। ननु असंख्यात्वेऽपि घटस्य एकवचनत्वलक्षणश्शस् दुर्वार इति चेन्मैवम्। एकार्थवृत्तित्वं येषां नियतं ते एव एकवचनादित्यनेन इह विवक्षिताः। तेन नियतैकवचनेभ्यः परिमाणशब्देभ्य एव शस् – न त्वनियतैकवचनेभ्यः धटादिभ्य इति नात्र शस् – घटानि घटानि ददातीत्यपि वक्तुं शक्यत्वादिति। न च प्रस्थानि प्रस्थानि ददातीत्यपि वक्तुं शक्यत्वात्परिमाणानामपि नैकार्थवृत्तित्वं नियतमिति वाच्यम्। परिमाणशब्दावृत्तावेकार्था एवेति वृत्तौ ये नियतैकार्थवृत्तिन स्त एवेह गृह्यन्ते। ते च परिमाणशब्दा एव। वृत्तौ बह्वर्थवृत्तित्वस्य तेषामन्याय्यत्वादिति। वस्तुतस्तु संख्यापरिमाणाच्च वीप्सायामिति सुवचो न्यासः। ऐकारस्य त्रिमात्रत्वेन विपरीतगौरवाभावादिति संक्षेपः। ***प्रतीति**। प्रतिप्रतिनिधिप्रतिदानोयरित्यनेन कर्मप्रवचनीयसंज्ञो यः प्रतिः प्रतिनिधिप्रतिदाने च यस्मादित्यनेन तेन योगे पञ्चमी विहितेति कृत्वा प्रतियोगे पञ्चमीति निर्देशबलात् प्रतिरयं कर्मप्रवचनीय इति लब्धम्। अकर्मप्रवचनीयप्रतियोगे पञ्चम्यभावादिति पर्यालोच्य आह–प्रतिना कर्मप्रवचनीयेन योगे इति। तसाविकारस्सकारपरित्राणार्थः। निर्दिश्यमानस्यादेशा

**आद्यादिभ्य उपसंख्यानम्** ॥ आदौ आदितः। मध्यतः। पृष्ठतः। पार्श्वतः। आकृतिगणोऽयम्। स्वरेण स्वरतः। वर्णतः ॥ **२११२। अपादाने चाहीयरुहोः** ।५।४।४५। अपादाने या पञ्चमी तदन्तात्तसिः स्यात्। ग्रामादागच्छति। ग्रामतः। अहीयरुहोः किम्। स्वर्गाद्धीयते। पर्वतादवरोहति।**२११३। अतिग्रहाऽव्यथन क्षेपेष्वकर्तरि तृतीयायाः** ।५।४।४६। अकर्तरि तृतीयान्ताद्वा तसिः स्यात्। अतिक्रम्य ग्रहोऽतिग्रहः। चारित्रेणातिगृह्यते। चारित्रतोऽतिगृह्यते। चारित्रेणान्यानतिक्रम्य वर्तत इत्यर्थः। अव्यथनमचलनम्। वृत्तेन न व्यथते। वृत्ततो न व्यथते। वृत्तेन न चलतीत्यर्थः। क्षेपे। वृत्तेन क्षिप्तः। वृत्ततः क्षिप्तः। वृत्तेन निन्दित इत्यर्थः। अकर्तरीति किम्। देवदत्तेन क्षिप्तः। **२११४। हीयमानपापयोगाच्च** ।५।४।४७।

---

भवन्तीति परिभाषया तसिरयं पञ्चमीविभक्तेरेवादेशो भवति। ***आद्यादिभ्य इति***। प्रतियोगे तु सूत्रेणैव सिद्धस्तसिरिति प्रतियोगाभावे पञ्चम्यास्तसिविधानार्थमिदं वार्तिकम्। आदिशब्दप्रमुखेभ्य इत्यर्थः। एवं स्थिते तस्यादित उदात्तमर्धह्रस्वं इत्यत्र आदित इति प्रयोगो न सिद्ध्यति। आदावेवादित इति सप्तम्यास्तसेस्तत्र दृश्यमानत्वादिति। तत्सूत्रस्थ आदित इति प्रयोगः ज्ञापयति। आद्यादिभ्य इतीदं वार्तिकमिति हेतोः प्रकृतवार्तिकस्य आद्यादिभ्यस्सुपस्तसिरुपसंख्यातव्य इत्यर्थस्सिद्ध्यति। तथा च आदौ आदितः स्वरेण स्वरतः इत्यादिसिद्धिः। एतद्वार्तिकसिद्धं तसिमेव सार्वविभक्तिकस्तसिरिति व्यवहरन्ति मल्लिनाथादयो व्याख्यातारः। ***अपादाने इति***। अत्र पञ्चम्यास्तसिरित्यनुवर्तते। ओ हाक् त्यागे इति धातोः कर्मणि यकि ततस्तङि हीयते इति रूपम्। तत्र तङमकृत्वा यगन्तेन निर्देशः। हियेति। रुधातोरन्त्यमिद्वर्णमकारं त्यक्त्वा निर्देशः। रुह् इति। हीयश्च रुह् च हियरुहौ तयोः हियरुहोः न हीयरुहोः अहियरुहोः हियरुहोर्योगे तु न तसिरित्यर्थः। स्वर्गाद्धीयते हातो भवति भ्रश्यतीति यावत्। हीयेति यका निर्देशः किम्। स्वर्गतो जहाति – देवदत्तकर्तृकं स्वर्गापादानकं हानमर्थः – बीजाद्रोहत्यङ्कुरः। क्षेत्राद्रोहति सस्यमित्यादौ रोहति योगे क्षेत्रस्य जनिकर्तुः प्रकृतिरिति भुवः प्रभव इति वा अपादानत्वेन क्षेत्रादेः पञ्चम्युत्पत्तिः। पर्वतादवरोहतीत्यादौ तु ध्रुवमपायेऽपादानमिति पर्वतादेरपादानत्वम्। केवलरुह्योगे इव सोपसर्गरुह्योगेऽपि अहीयरुहोरिति तसि निषेधोऽस्तीति ध्वनयितुमुदाहरणमिदम्। पर्वतादवरोहतीति। ***अतिग्रहेति***। महाविभाषया बह्वल्पार्थादिति सूत्रान्मण्डूकप्लुत्या अन्यतरस्यां ग्रहणमिह सम्बध्यते इति वा कृत्वा वा तसिस्यादित्युक्तं मूले। अतिग्रहादिषु उपपदेषु अकर्तरि तृतीयान्ताद्वा तसिरित्यन्वयः। कर्तृकरणयोस्तृतीयेति सूत्रेण कर्तरि या तृतीया विहिता तद्भिन्नतृतीयान्तादित्यर्थः। चारित्रेणातिगृह्यते इत्यत्र हेतौ तृतीया।चारित्रेण हेतुनेति। एवं वृत्तेन न व्यथते इत्यत्रापि। वृत्तेन क्षिप्त इत्यत्र तु करणे तृतीया। ***हियमानेति***। हियमानश्च पापश्च तयोर्योगः। हियमान – पाप। अन्यतरसम्बन्धादित्यर्थः। क्षेपस्याविवक्षायामिति।

हीयमानपापयुक्तादकर्तरि तृतीयान्ताद्वा तसिः। वृत्तेन हीयते। वृत्तेन पापः। वृत्ततः। क्षेपस्याविवक्षायामिदम्। क्षेपे तु पूर्वेण सिद्धम्। अकर्तरि किम्। देवदत्तेन हीयते। **२११५। षष्ठ्या व्याश्रये** ।५।४।४८। षष्ठ्यन्ताद्वा तसिः स्यान्नानापक्षसमाश्रये। देवा अर्जुनतोऽभवन्। आदित्याः कर्णतोऽभवन्। अर्जुनस्य पक्षे इत्यर्थः। व्याश्रये किम्। वृक्षस्य शाखा। **२११६। रोगाच्चापनयने** ।५।४।४९। रोगवाचिनः षष्ठ्यन्ताद्वा तसिश्चिकित्सायाम्। प्रवाहिकातः कुरु। प्रतीकारमस्याः कुर्वित्यर्थः। अपनयने किम्। प्रवाहिकायाः प्रकोपनं करोति। **२११७। कृभ्वस्तियोगे संपद्यकर्तरि च्विः** ।५।४।५०। **अभूततद्भाव इति वक्तव्यम्**॥ विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्तमानाद्विकारशब्दात्स्वार्थे च्विर्वा स्यात्करोत्यादिभिर्योगे।

---

अतिग्रहादिषु गम्यमानेषु सत्सु अकर्तरि तृतीयान्ताद्वा तसिरित्यर्थमाश्रित्य क्षेपस्यात्रापि गम्यमानत्वाद्वृत्तेन हीयते इत्यादिसिद्धौ व्यर्थमिदं सूत्रमित्याशङ्क्याह – क्षेपस्याविवक्षायामिदं सूत्रमिति। मदुक्तार्थाश्रयणे तु नात्र शङ्कावसर इति बोध्यम्। न च वृत्ततो निन्दित इति न सिद्ध्यति त्वदुक्तार्थाङ्गीकारे इति वाच्यम्। अतिग्रहादिषु तदर्थेषु वा उपपदेष्वित्यर्थात् – (उपसमीपे उच्चारितं पदमुपपदम्) ***षष्ठ्याः** – व्याश्रये इति छेदः। षष्ठ्या इति पञ्चमी। विविधाश्रयः व्याश्रयः तस्मिन् नानापक्षसमाश्रये गम्यमाने सतीत्यर्थः। देवा अर्जुनतोऽभवन्। अत्र देवा नानापक्षसमाश्रयाः। अर्जुनपक्षस्थितेः प्राक् श्रीरामादिपक्षेषु तेषां स्थितत्वात्। अतोऽत्र देवकर्तृकं नानापक्षसमाश्रयणं गम्यते। देवानां तथाविधत्वादिति। अर्जुनस्येति षष्ठ्यर्थे तसिः। तस्य भावपक्षे तु देवा अर्जुनस्य पक्षेऽभवन्निति प्रयोगः। पक्षशब्दघटकत्वेनैव श्रूयते। अर्जुनस्येति षष्ठ्या पक्षस्यागम्यमानत्वात्। वृक्षस्य शाखा। शाखा हि यद्वृक्षावयवः तद्वृक्षाश्रय एवेति एकाश्रयत्वमेव शाखाया न तु व्याश्रयत्वमिति नात्र व्याश्रयो गम्यते। अतः वृक्षतश्शाखेति न प्रयोगः। ***रोगादिति।** अपनयने इत्यस्यार्थमाह–चिकित्सायामिति गम्यमानायामिति शेषः। प्रवाहिकातः कुर्विति। तसिना प्रतीकारमिति गम्यते अन्यथा तसेरेवानुदयादिति मत्वा अर्थं वदति प्रतीकारमस्याः कुर्विति। तस्य भावे तु प्रवाहिकायाः प्रतीकारं कुरु इति। ***कृभ्विति।** डु कृञ् करणे भू सत्तायाम् अस भुवि इत्येषां धातूनामिह निर्देशः – कृभ्वस्तीति। का च भूश्च असिश्च कृभ्वस्तयः। तैर्योगस्संबन्धः कृभ्वस्तियोगः। तस्मिन्। (कृशब्दस्य सौ कृते का इति रूपम् धाता इतिवत्) अत्र अभूततद्भावे इति वक्तव्यमिति वार्तिकम्। अभूततद्भावे च च्विर्वक्तव्य इति तदर्थः। न भूतः अभूतः स इव भवतीति तद्भावः। स न भूतो यदि स इव भवति तदा यद्वा भावो भवनम् स इव भावस्तद्भावः। अभूतस्य (स न भूतोऽभूतः तस्य) तद्भावः अभूततद्भावः। स न भूतो नाम तद्भिन्नः। तस्माद्भिन्नो हि स न भवति। तस्मात् तद्भिन्नस्य तद्वद्भावः। अभूततद्भाव इत्युच्यते। सम्पद्यकर्तरीति पदं विवृणोति विकारात्मतामित्यादिना।

**२११८। अस्य च्वौ** ।७।४।३२। अवर्णस्य ईत्स्यात् च्वौ। वेर्लोपः। च्व्यन्तत्वादव्ययत्वम्। अकृष्णः कृष्णः संपद्यते तं करोति कृष्णीकरोति। ब्रह्मीभवति। गङ्गीस्यात्॥ **अव्ययस्य च्वावीत्वं नेति वाच्यम्॥** दोषाभूतमहः। दिवाभूता रात्रिः। एतच्च 'अव्ययीभावश्च ४५१' इति सूत्रे भाष्ये उक्तम्।

---

सम्पद्यकर्तरीति सप्तम्यविवक्षिता। संपद्यकर्तुरित्यर्थः। सम्पद्यते सम्पत्तिं प्राप्नोतीति सम्पद्यः (सम्पत्तिर्विकारः स चासौ कर्ता सम्पद्यकर्ता तस्मात्। यद्वा – प्रकृतिर्यदात्मना सम्पद्यते विक्रियते स सम्पद्यः विकार एव। कर्तृभूतात्तस्मादित्यर्थः। वस्तुतस्तु सम्पद्यकर्तरीति सप्तम्येव। सम्पद्यते विक्रियते इति सम्पद्यः। विकारात्मतां प्राप्त इत्यर्थः स चासौ कर्ता सम्पद्यकर्ता। या हि विकारात्मतां प्राप्नोति (विक्रियते) सैव प्रकृतिर्विक्रियात्मकक्रियायाः कर्तृत्वेन व्यपदिश्यते। प्रकृतेरेव विक्रियमाणत्वेन प्रकृतिर्विक्रियते इति विक्रियते इति धातुं प्रति प्रकृतेरेव कर्तृत्वात्। एतेन विकारात्मतां प्राप्नुवती प्रकृतिरेव सम्पद्यकर्त्रीति सिद्धम्। प्रकृतिर्नामात्र नैतच्छास्त्रसङ्केतिता। यस्मात्प्रत्यय उत्पद्यते तल्लक्षणा गृह्यते। किन्तु स्वतस्सिद्धः पदार्थोऽत्र प्रकृतिशब्देनोच्यते। युज्यते हि प्रकृतिशब्दस्य स्वसिद्धे वस्तुनि प्रयोगः। मृदादौ (मृद्विकारो घट इति मृदः प्रकृतित्वं स्वसिद्धत्वात् घटस्य विकारत्वं जन्यत्वादिति) एवं सम्पद्यकर्तरि विकारात्मतां प्राप्नुवत्याम्प्रकृतौ सप्तमीबलाद्वर्तमानत्वस्याक्षेप इति कृत्वा वदति। वर्तमानादिति। विकारात्मतां प्राप्नुवतीम्प्रकृतिमभिदधानो यश्शब्दस्तस्मादित्यर्थः। (अर्थे हि शब्दो वर्तते प्रतिपाद्यप्रतिपादकभावसंबन्धेन) तादृशश्च शब्दः विकारशब्द एव भवति। प्रकृतिशब्दस्यैवंविधार्थवृत्तित्वासम्भवादिति कृत्वाह – विकारशब्दादिति। विकारवाचकशब्दादित्यर्थः। येन विकारशब्देन विकारात्मतां प्राप्नुवती प्रकृतिरभिधीयते तस्मादिति यावत्। विकारशब्दस्य च एवंविधार्थबोधकत्वे मानमेतत्सूत्रमेव। यद्वा – लक्षणयाप्युपपद्यते। विकारशब्दस्य विकारात्मतां प्राप्तायाम्प्रकृतौ लक्षणेति वक्तुं शक्यत्वात्। एतस्य स्वार्थिकप्रकरणत्वादाह–स्वार्थे इति। महाविभाषया वेति। करोत्यादिभिर्योगे सतीति शेषः। योगोऽत्र साक्षात्सम्बन्ध एव। अयं हि योगः विकारशब्दस्य कृभ्वस्तिभिरिति बोध्यम्। च्विप्रत्यये च इत् अनुनासिकत्वेन इकारश्च इत्। व् इत्येकाल्प्रत्ययशिशष्यते। ***अस्येति।** ईघ्राध्मोरित्यस्मात्पूर्वसूत्रादी इत्यस्य अत्रानुवृत्तिः। मूले तत्कालग्रहणार्थमीदिति तपरं कृत्वा निर्दिष्टम्। ई इत्ययमादेशः। च्वौ परत इति शेषः। वेर्लोपः। वेरपृक्तस्येत्यनेन शेषितच्विप्रत्ययसम्बन्धिनो वकारस्य लोप इत्यर्थः। ननु च्वेस्सर्वापहारे सति च्विविधानं व्यर्थमत आह – च्व्यन्तादव्ययत्वमिति। अव्ययत्वमेव च्विविधानस्य फलमिति भावः। चादीनामाकृतिगणत्वात् च्व्यन्तस्य निपातत्वम्। निपातत्वादव्ययत्वमिति बोध्यम्। कृञ्योगे उदाहरति – कृष्णीकरोतीति। अकृष्णं कृष्णं सम्पद्यमानं करोतीत्यर्थः। अत्र यः कृष्णो न भवति

देवदत्तः स इह अकृष्णपदेनोच्यते। स एव प्रकृतिः–विकारः कृष्णः। तदात्मना देवदत्तस्य परिणममाणत्वात्। अकृष्णो देवदत्तः कृष्णस्सम्पद्यते । कृष्णात्मना विक्रियते इति सम्पद्यकर्ता – अकृष्णः देवदत्तो भवति। तमभिदधाति कृष्ण इति विकारशब्दः – अतः कृष्णशब्दात् कृष्णात्मना विक्रियमाणप्रकृतिभूतदेवदत्तवाचकात् करोति योगे स्वार्थे च्विः। कृष्ण – च्वि – करोति। करोतेर्न क्रिययां प्रवेशः। कृष्ण – च्वि इत्येव अलौकिकविग्रहः। च्वेस्सर्वापहारः। प्रत्ययलोपे प्रत्ययलक्षणन्यायेन च्विपरकत्वसत्त्वादस्य च्वावितीकारः। कृष्णी। ईकारान्तमिदमव्ययम्। अत्र अकृष्णं कृष्णं सम्पद्यमानं करोतीति विग्रहस्तु मूले न दर्शितः। तथात्वे अकृष्णस्य सम्पद्यकर्तृत्वाभावात्। कृष्णात्मना यस्स्वयं विक्रियते स हि विक्रियायां कर्ता इति। वस्तुतस्तु यः परेण विक्रियां प्राप्यते सोऽपि विक्रियायां कर्तैव। विक्रियाश्रयत्वात्तस्येति सोऽपि विग्रहो न दुष्ट इति बोध्यम्। भूयोगे आह ब्रह्मा भवतीति। अब्रह्मा ब्रह्मा सम्पद्यमानो भवतीति ब्रह्मा भवति। अगंगा गंगा सम्पद्यमाना स्यादिति गंगीस्यादित्यस्तियोगे उदाहरणम्। एवं सूत्रस्योदाहरणानि दर्शयित्वा अभूततद्भावे इति वक्तव्यमिति वार्तिकस्य दर्शयितुं तत्प्रसङ्गसङ्गतं वार्तिकमाह – अव्ययस्येति। अस्य च्वादित्यनेन प्राप्तमीत्वमव्ययाकारस्य न भवतीत्यर्थः। न च च्वन्तं सर्वमप्यव्ययमेवेति सर्वत्रापीत्वनिषेधशङ्क्यः च्विं विनापि यदव्ययं तत्रैवायन्निषेध इति। अदोषा दोषा सम्पद्यमानं भूतं दोषाभूतम्। दोषा रात्रिः। अदोषाभूते मेघाच्छादनजन्यतमस्सम्बन्धेन दोषावद्भूते च अह्नि वर्तमानत्वादभूततद्भावे वर्तमानोयं दोषा इति विकारशब्दः। तस्मात् भूतेति भवतियोगसत्त्वात् च्विः। दोषाभूतम्। एतेन स न भवतीत्यभूतः। सत्यभूतः। स इव भवतीति तद्भावः अभूतश्चासौ तद्भावश्च अभूततद्भावः। तस्मिन्। अभूतो यस्तद्भूतस्तस्मिन्निति वार्तिकार्थः। अभूततद्भूतप्रकृतिपदार्थाभिधायकाद्विकारशब्दाच्च स्वार्थे च्विस्स्यदिति वक्तव्यमिति निष्कृष्टार्थस्सिद्धः। ननु सम्पद्यकर्तरीत्यनेनैव दोषाऽभूतादिसिद्धिर्भवत्येवेति व्यर्थमभूततद्भावे इति वार्तिकमिति चेन्मैवम्। अदोषा दोषा सम्पद्यमाना भवतीत्यर्थे सम्पद्यकर्तरीत्यनेन दोषाभूतमिति रूपसिद्धावपि अदोषा दोषावद्भवतीति दोषाभूतमित्यर्थे न सिद्ध्येदिति। तस्मात् अदोषा दोषावद्भूतं दोषाभूतमिति प्रकृते विग्रहो वाच्यः। ननु विग्रहद्वयेऽपि विशेषानुपलम्भात् सम्पद्यते इति विग्रहं स्वीकृत्यैव दोषाभूतमित्यादीन् प्रयोगान् समरसय्य अभूततद्भावे इति वार्तिकं सुत्यजमिति चेन्मैवम्। विशेषस्य उपलभ्यमानत्वात्। अदोषा दोषा सम्पद्यते इत्यर्थात्। अदोषा दोषावद्भवतीत्यर्थे वत्करणेन उपमानत्वरूपांशस्य अधिकस्य भानात्। (दोषा न भवति – किन्तु दोषावद्भवतीति) अयं चाभूततद्भावे च्विः भवति योगे एव। न तु कृस्तिभ्यां योगे। दोषाभूतमहः। दिवाभूता रात्रिरिति भवति योगेनैव उदाहरणद्वयस्य भाष्ये उक्तत्वात्। अदोषा दोषावद्भवति तं करोति दोषाकरोतीत्यादिप्रयोगोपलंभे तु कृभ्वस्तिभिर्योगेऽपि

**२११९। क्यच्व्योश्च** ।६।४।१५२। हलः परस्यापत्ययकारस्य लोपः स्यात् क्ये च्वौ च परतः। गार्गीभवति। **२१२०। च्वौ च** ।७।४।२६। च्वौ परे पूर्वस्य दीर्घः स्यात्। शुचीभवति। पटूस्यात्। अव्ययस्य दीर्घत्वं नेति केचित्तन्निर्मूलम्। स्वस्ति स्यादिति तु महाविभाषया च्वेरभावात्सिद्धम्। स्वस्तीस्यादित्यपि पक्षे स्यादिति चेदस्तु। यदि नेष्यते तर्ह्यनभिधानात् च्विरेव नोत्पद्यते इत्यस्तु। 'रीङृतः १२३४'। मात्रीकरोति।

---

अभूततद्भावे च्विरस्त्येवेति बोध्यम्। एतच्च अव्ययस्य च्वावीत्वं नेति वार्तिकं चेत्यर्थः। एतद्वार्तिकस्य सूत्रपाठे अदर्शनादप्रामाण्यशङ्किनं प्रतीदमुक्तं मूले – चादुदाहरणद्वयमपि तत्रैवोक्तमिति लभ्यते इति। ***क्यच्वोश्च।** अत्र सूर्यतिष्येति सूत्राद्य इति। हलस्तद्धितस्येत्यतो हल इति। आपत्यस्य च तद्धिते इति सूत्रादापत्यस्येति च सम्बध्यन्ते इत्याह– हलः परस्येत्यादि। क्यङ्क्यचोस्सामान्येन ग्रहणं क्येति। अगार्ग्यः गार्ग्यः सम्पद्यमानो भवतीत्यर्थे गार्ग्य– (भवति) इति स्थिते – अस्य च्वावितीत्वम्। गार्ग्य् ई च्वि – अद्य क्यच्वोरिति यलोपः। न च ईकारेणव्यवधानान्न भवतीति वाच्यम्। येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादिति न्यायात्। न च उक्तन्यायात् आपत्यस्येत्यनेनापि यलोपस्स्यादिति वाच्यम्। अव्यवहितस्थलेषु तस्य चरितार्थत्वात्। न च हलस्तद्धितस्येति यलोपसिद्धिः। ईति परे हलः परस्य यकारस्यात्रानुपधात्वात्। अयं भावः। गार्ग्यशब्दात् ङीप्प्रत्यये कृते गार्ग्य ई इति स्थिते ईति परे यकारोयमुपधाभूत एव। अकारान्तत्वाद्गार्ग्य इति प्रकृतेः। अतस्तत्र यलोपस्स्यादेव। प्रकृते तु गार्ग्याकारस्य ईत्वे कृते गा र् ग् य् ई इति स्थिते ईदन्ते यद्यपि यकार उपधाभूतस्तथापि ईति परे यान्तस्यैव प्रकृतिभागत्वेन नास्ति योपधत्वमिति नात्र हलस्तद्धितस्येति यलोप इति ***च्वौ च।** अत्र अकृत्सार्वधातुकयोर्दीर्घ इत्यस्मात्पूर्वसूत्राद्दीर्घ इत्यनुवर्तते। तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषायाः पूर्वस्येति लाभः। (कृष्णीकरोतीत्यत्रापि च्वौ चेति पूर्वस्य दीर्घे प्राप्ते तदपवादः अस्य च्वावितीत्वम्। अन्यथा कृष्णाकरोतीत्यनिष्टरूपापत्तिः।) च्वौ चेति सूत्रानन्तरं अस्येत् इति सूत्रयित्वा – च्वौ इति पदमनुवर्त्य अवर्णस्य ईत् स्यात् च्वौ – च्वौ चेति दीर्घस्यापवादः इति व्याख्याय अस्य च्वाविति सूत्रम्प्रत्याख्येयम् अर्थमात्रलाघवसद्भावात्। तन्निर्मूलम्। अव्ययस्य च्वावित्वं नेतीत्येव दृश्यते। न तु अव्ययस्य च्वौ दीर्घो नेति दृश्यते इति हेतोः दीर्घत्वमव्ययस्य नेति केषांचिद्वादो निर्मूलः इति भावः। ननु स्वस्ति स्यादिति प्रयोग एव अव्ययस्य दीर्घत्वाभावे मूलम् – इति चेदत आह – महाविभाषया च्वेरभावात्सिद्धमिति स्वस्ति स्यादिति रूपं सिद्धमित्यन्वयः। तव स्वस्ति शुभं स्यादित्यर्थे स्वस्ति स्यादिति वाक्यं तद्धितानां वैकल्पिकत्वादिति भावः। ननु तद्धिताभावपक्षे स्वस्ति स्यादिति रूपसिद्धावपि तद्धितपक्षे च्वौ कृते दीर्घे

**२१२१। अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च** ।५।४।५१। एषां लोपः स्यात् च्विश्च। अरूकरोति। उन्मनीस्यात्। उच्चक्षूकरोति। विचेतीकरोति। विरहीकरोति। विरजीकरोति। **२१२२। विभाषा साति कार्त्स्न्ये** ।५।४।५२। च्विविषये सातिर्वा स्यात्साकल्ये। **२१२३। सात्पदाद्योः** ।८।३।१११। सस्य षत्वं न स्यात्। दधि सिञ्चति। कृत्स्नं शस्त्रमग्निः संपद्यतेऽग्निसाद्भवति। अग्नीभवति। महाविभाषया वाक्यमपि। कार्त्स्न्ये किम्। एकदेशेन शुक्लीभवति पटः। **२१२४। अभिविधौ संपदा च** ।५।४।५३। संपदा कृभ्वस्तिभिश्च योगे सातिर्वा स्याद्व्याप्तौ।

---

स्वस्तीस्यादिति शङ्कामिष्टापत्त्या परिहरति स्वस्तीस्यादित्यादिना। ननु स्वस्तीस्यादिति रूपमनिष्टमिति कथन्तत्रेष्टापत्तिस्तवेत्यत आह – यदि नेष्यते इत्यादिना। स्वस्तीस्यादिति रूपमप्रयुक्तत्वेन यद्यनिष्टं तर्हि च्विं विधाय दीर्घाभावकल्पनातः च्वेरेवाविधानं वरमिति भावः। इष्टस्य स्वस्तिस्यादिति रूपस्य तद्धिताभावपक्षे सिद्धत्वात्। अनिष्टस्य स्वस्तीस्यादिति रूपस्य तद्धिताविधाने अपगतत्वाच्च। अव्ययस्य दीर्घत्वाभाववादो प्रामाणिक इति निष्कर्षः। रीङृतः। अमाता माता सम्पद्यते तां करोतीत्यर्थे मातृ – च्वि (करोति) इति स्थिते च्वौ चेति दीर्घं बाधित्वा परत्वाद्रीङृत इति रीङादेशः। मात्रीकरोति। ***अरुरिति।** चात् च्विरित्याह–च्विप्रत्ययश्चेति। अलोन्त्यपरिभाषया लोपोऽयमन्त्यस्य भवति लोपानन्तरं अस्य च्वौ – च्वौ च इतीत्वदीर्घयोः प्रवृत्तिः। लोपस्य च्विसन्नियोगशिष्टत्वेन यदा च्विस्तदैव लोप इति लोपच्विविधानानन्तरमीत्वदीर्घयोः प्रसक्तिसत्वात्। अरुस् – मनस् – चुक्षुस् – चेतस् – रहस् – रजस् इति हलन्तानामेषान्त्यहलो लोपः। मन आदिषु तदन्तविधिरित्याह – उन्मनीस्यादित्यादि – रह एकान्तम्। विगतं रहः यस्य सः विरहाः। अविरहाः।विरहास्सम्पद्यते तं करोति विरहीकरोति। ***विभाषेति।** एतत्सूत्रस्य च्विप्रकरणस्थत्वादाह च्विविषये इति यद्वा च्विरित्यस्यानुवर्तमानस्य सप्तम्यन्तत्वेन विपरिणामः। च्वौ च्विविषये इत्यर्थः। यत्र च्विर्भवति तत्रैवार्थे सातिप्रत्ययोऽपीत्यर्थः। विशेषमाह – कार्त्स्न्ये इति। साकल्ये गम्यमाने सतीत्यर्थः। सात्यभावपक्षे च्विः। ***सादिति।** पूर्वसूत्रान्नेत्यनुवर्तते – सहेस्साढस्स इत्यतस्स इति च अपदान्तस्य मूर्धन्य इत्यधिकारः। साच्च पदादिश्च सात्पदादी तयोस्सात्पदाद्योः सातेः पदादेश्च सस्य षत्वन्न स्यादित्यर्थः। सातेरवयवो यस्सकारः, पदस्यादिश्च यस्सकारः। तस्य षत्वन्नेति यावत्। प्रत्ययावयवत्वात्सातेस्सस्य आदेशप्रत्यययोरित्यनेन षत्वप्राप्तिः पूर्वपदादित्यनेन पदादेस्सस्येति विवेकः। पदादेस्सस्य षत्भावं दर्शयति दधि सिञ्चतीति। ***अभिविधाविति।** अभिविधिर्व्याप्तिः। तस्मिन् द्योत्ये सति सम्पदादिभिर्योगे च सति सातिर्वा स्यादित्यर्थः। सम्पद्यतेः क्विपि संपत् तेन संपदा – यद्वा – सम्पूर्वकस्य पद्ल् गतौ इति धातोः स्वरूपतो निर्देशः। सम्पद्। (ऋवर्णस्य इत्त्वेन दान्तस्यैव

पक्षे कृभ्वस्तियोगे च्विः। संपदा तु वाक्यमेव। अग्निसात्संपद्यते अग्निसाद्भवति शस्त्रम्। अग्नीभवति। जलसात्संपद्यते जलीभवति लवणम्। एकस्या व्यक्तेः सर्वावयवावच्छेदेनान्यथाभावः कात्स्न्यर्म्। बहूनां व्यक्तीनां किंचिदवयवावच्छेदेनान्यथात्वं त्वभिविधिः।

---

धातोश्शेषात्) तेन सम्पदा सम्पूर्वकपद्ल् धातुनेत्यर्थः। पक्षे सात्यभावपक्षे सम्पदादियोगे च्वौ प्राप्ते तत्र विशेषमाह – कृभ्वस्तिभिश्च योगे इत्यादिना। सात्यभावपक्षे कृभ्वस्तिभिर्योगे सत्येव च्विः। संपदायोगे तु वाक्यमेव। कुतः? सम्पदायोगे च्वेरविहितत्वात्। कृभ्वस्तियोगे इत्यनेन कृभ्वस्तियोगे तु च्विर्विहित एवेति हेतोः। ननु सातिर्वा स्यादित्ययमेव विकल्पच्विं विधास्यतीति चेन्मैवम्। समर्थानां प्रथमाद्वेत्यतोऽधिक्रियमाणेन वेतिपदेन लब्धोऽयं विकल्पः महाविभाषात्वेन तद्धितविकल्पे वाक्यमेव विधास्यतीति। यदि तु विभाषेति सूत्राद्विभाषात्रानुवर्तेत तर्हि अवान्तरविभाषाया च्विः। महाविभाषया वाक्यमिति वक्तुं शक्येत नैवं दृश्यते इति अत्रापि सम्पद्यकर्तरि वर्तमानाद्विकारशब्दादेव हतिः। तेन – अनग्निरग्निस्सम्पद्यते अग्निसात्सम्पद्यते इति सम्पदायोगे उदाहरणम्। अग्निसाद्भवतीति तु भवतिना योगे – एवमग्निसात्करोतीत्याद्यूह्यम्। क्र्यादियोगे – सात्यभावपक्षे सम्पद्योगे तु अनग्निरश्निस्सम्पद्यते इत्येव। सम्पद्योगे सातावुदाहरणान्तरमाह जलसात्सम्पद्यते इति। सात्यभावपक्षे भवतियोगे च्विं दर्शयति। जलीभवतीति। प्रकृतिमाह लवणमिति एवमग्नी भवति। शस्त्रमित्यपि बोध्यम्। अभिविधिकात्स्न्र्ययोर्विशेषमाह एकस्या इत्यादिना – अयं भावः। अग्निसाद्भवति शस्त्रमिति कात्स्न्र्योदाहरणे प्रकृतिभूता शस्त्रव्यक्तिः। सर्वावयवावच्छेदेन अग्न्यात्मना परिणतेति तत्र कात्स्न्र्यप्रतीतिरस्ति। अवयविनि शस्त्रे सर्वात्मना अग्नौ स्फुटं परितप्ते सति तदवयवास्सर्वेऽपि तप्यन्त एव। (अवयवाः परमाणवः अणवो वा – तत्समुदायः अवयवी) अवयवतापं विना अवयवितापासंभवात्। यदा तु शस्त्रस्यैकदेशः अग्नौ तप्यते तदा अग्निसाद्भवति शस्त्रमिति न प्रयोगः। कतिचिदवयवावच्छेदेनैव अग्नितापः न तु सर्वावयवावच्छेदेनेति। तत्र कात्स्न्र्याप्रतीतेः। अन्यथाभावः अन्यथात्वम्। विकारात्मना परिणतिरिति यावत्। अग्नौ शस्त्रं स्फुटं तप्तञ्चेच्छस्त्रे अग्नित्वमायाति दाहाद्युपलम्भादिति शस्त्रस्य अग्निभाव उपपन्न एव। अभिविधिं लक्षयति – बहूनामित्यादिना। यदा – अग्निसाद्भवति शस्त्रम् इति द्वितीयोदाहरणे शस्त्रमिति जात्येकवचनम्। सर्वाणि शस्त्राणीत्यर्थः। तथा च बहवो व्यक्तयोऽत्र बहूनि शस्त्राणि तेषामग्नित्वं किञ्चिदवयवावच्छेदेनैव विद्यते न तु सर्वावयवाच्छेदेन। न हि भूतले यानि शस्त्राणि सन्ति तानि सर्वाण्यग्निसात्कर्तुम् कश्चित् क्षमते । अतः तेषां शस्त्राणाम्मध्ये कान्येव शस्त्राणीति। सवशस्त्रसमुदायः अवयवी। सर्वाणि शस्त्राणि तदवयवाः। एतेषामवयवानां मध्ये कतिचिदेवावयवा अग्निसाद्भवन्तीति।

**२१२५। तदधीनवचने** ।५।४।५४। सातिः स्यात्कृभ्वस्तिभिः संपदा च योगे। राजसात्करोति। राजसात्संपद्यते। राजाधीनमित्यर्थः। **२१२६। देये त्रा च** ।५।४।५५। तदधीने देये त्रा स्यात्सातिश्च कृभ्वादियोगे। विप्राधीनं देयं करोति विप्रत्रा करोति। विप्रत्रा संपद्यते। पक्षे विप्रसात्करोति। देये किम्। राजसाद्भवति राष्ट्रम्। **२१२७। देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्** ।५।४।५६। एभ्यो द्वितीयान्तेभ्यः सप्तम्यन्तेभ्यश्च त्रा स्यात्। देवत्रा वन्दे रमे वा। बहुलोक्तेरन्यत्रापि। बहुत्रा जीवतो मनः। **२१२८। अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच्** ।५।४।५७। द्व्यच् अवरं न्यूनं न तु ततो न्यूनम्।

---

किञ्चिदवयवावच्छेदेनैवान्यथात्वप्रतीतिरत्रास्तीत्यभिविधिरयम्। एकां व्यक्तिमवयवित्वेन स्वीकृत्य तस्यास्सर्वावयवावच्छेदेन यत्रान्यथात्वं तत्र कार्त्स्न्यम्। सर्वव्यक्तिसमुदायमवयवित्वेन स्वीकृत्य तस्य सर्वावयवभूतव्यक्तीनां मध्ये कासांचिद्व्यक्तीनामेवावयवभूतानां यत्रान्यथात्वं तत्राभिविधिरिति फलितार्थकथनम्। तस्मात् प्रथमोदाहरणे अग्निसाद्भवतीत्यस्य सर्वावयवोपेतं शस्त्रमग्निर्भवतीत्यर्थः। द्वितीयोदाहरणे तु शस्त्रजातिः प्रायशोऽग्निर्भवतीत्यर्थः। (प्रायश इत्यस्य किञ्चिदवयवावच्छेदेनेत्यर्थः) एवं जलीभवति लवणमित्यत्रापि लवणजातौ किञ्चिदवयवा लवणखण्डाः जलं भवन्तीत्यर्थो बोध्यः ***तदधीनवचने।** तदधीनमित्यर्थे सातिस्स्यात् क्रादियोगे सतीत्यर्थः। अभिविधाविति सूत्रात्सम्पदा चेति। विभाषासूत्रात्सातीति च अत्र संबध्येते – इति ज्ञेयम्। राजाधीनमित्यर्थः। राजसादिति पदस्येति शेषः। सम्पद्यते इत्यस्य तु सम्पन्न भवतीत्यर्थः जायते इति यावत्। अधीनपदसामर्थ्यात् सप्तम्यन्तात्सादिः। राज्ञि अधीनं सम्पद्यते राजसाद्भवति (अधिरीश्वरे – यस्मादधिकमित्यादिना अधियोगे सप्तमी – सप्तमी शौण्डैरिति समासः। अषडक्षेत्यादिना खः। तस्मिन्नधीनन्तदधीनम् – रामाधीना इतिवत्) ***देये इति।** यत्तदधीनम् तच्चेद्देयं तर्हि सप्तम्यन्तात् – त्राप्रत्ययः। चात्सातिस्स्यात्। क्रादियोगे सति तदधीनमित्यर्थे इत्यर्थः। राष्ट्रस्य राजकर्मत्वेन अदेयत्वात्प्रत्युदाहरणम्। ***देवेति।** अत्र स्वरूपविधिरेव। पुरुषमर्त्ययोः पृथग्ग्रहणात्। अयं हि त्रा निर्दिश्यमानपरिभाषया द्वितीयासप्तमीविभक्त्योरेव। बहुळोक्तेरन्यत्रापि। सूत्रे बहुळपदग्रहणाद्देवादिभिन्नेभ्योऽपि द्वितीयासप्तम्यन्यतरविभक्त्यन्तेभ्यस्त्रा स्यादित्यर्थः। जीवतो मनः बहुषु अर्थेषु प्रवर्तते इत्यर्थे। जीवतो बहुत्रामन इति प्रयोगोऽत्र लिङ्गमिति भावः। ***अव्यक्तेति।** देवेति सूत्रे निवृत्तमपि इह संबध्यते कृभ्वस्तिभिर्योगे इति। न व्यक्तमव्यक्तमप्रकटितमक्षरात्मनाऽविवृतमित्यर्थः। ध्वनिरिति यावत्। अनुकरोतीत्यनुकरणः। अव्यक्तस्य ध्वनेरनुकरणः अव्यक्तानुकरणः। द्व्यजवरार्थो यः ध्वनेरनुकरणः शब्दः तस्मात् डाच् स्यात् कृभ्वस्तिभिर्योगे न त्वितौ परतः। इति शब्दे परतो डाच् न भवतीत्यर्थः। (न इतिः अनितिः तस्मिन्ननितौ इति प्रसज्यप्रतिषेधः। इतौ नेत्यर्थः) द्व्यजवरार्धादिति पदं विवृणोति मूले। द्व्यच् अवरं न्यूनम् यस्मादिति शेषः। तत् द्व्यजवरम्। द्वावचौ

अनेकाजिति यावत्। तादृशमर्धं यस्य तस्माड्डाच् स्यात्कृभ्वस्तिभिर्योगे॥ **डाचि विवक्षिते द्वे बहुलम्॥ नित्यमाम्रेडिते डाचीति वक्तव्यम्॥** डाच्परं यदाम्रेडितं तस्मिन् परे पूर्वपरयोर्वर्णयोः पररूपं स्यात्। इति तकारपकारयोः पकारः। पटपटाकरोति। अव्यक्तानुकरणात्किम्। दृषत्करोति। द्व्यजवरार्धात्किम्। श्रत्करोति। अवरेति किम्। खरटखरटाकरोति त्रपटत्रपटाकरोति। अनेकाच इत्येव सूत्रयितुमुचितम्। एवं हि डाचीति परसप्तम्येव द्वित्वे सुवचेत्यवधेयम्। अनितौ किम्। पटिति करोति।

---

यस्य तत् द्व्यच् - द्व्यच्कमित्यर्थः! द्व्यचो न्यूनं द्व्यजवरमिति विपरीतार्थभ्रान्तिं वारयति। न तु ततो न्यूनमिति। ततः तस्मात् द्व्यच्कादित्यर्थः। द्व्यजवरमर्थ यस्य स द्व्यजवार्थः। समांशवाच्यर्थशब्दो नित्यं क्लीबे वर्तते इति अर्धन्नामात्र समांशः। अर्धभाग इति यावत्। यस्य शब्दस्य अर्धभागः। द्व्यजवरः स द्व्यजवरार्ध इत्युच्यते इति निष्कर्षः। डाचि प्रत्यये डचावितौ आ इति शेषः। ***डाचीति** । डाचि विवक्षिते सति अव्यक्तानुकरणस्य द्वित्वं बहुळं स्यादित्यर्थः। ***नित्यमाम्रेडिते डाचि।** ६-१-१०० सूत्रमिदम्। अत्र एङि पररूपमित्यतः पररूपस्यान्वयः। तस्य परमाम्रेडितमिति द्विरुक्तस्य परं रूपमाम्रेडितसंज्ञम्। डाचि परतः यदाम्रेडितं तस्मिन् डाच्परके आम्रेडिते इत्यर्थः। एकः पूर्वपरयोरित्यधिकारादाह - पूर्वपरयोर्वर्णयोरिति। पररूपं स्यात् - पररूपमेकादेशस्स्यादित्यर्थः। यथा पटध्वनेरनुकरणशब्दः पटत्। समुदायस्य द्व्यजवरत्वेऽपि अर्धभागस्य द्व्यजवरत्वाभावाड्डाचो प्राप्तौ सत्याम्। डाचीति द्वित्वम्। अत एव डाचि विवक्षिते इत्युक्तम्। द्वित्वे कृते पटत् पटत् - इदानीं द्व्ययजवरार्थत्वमस्ति। पटत्पटदिति समुदायस्य भागद्वयमध्ये अर्धभागः। एको भागः पटत् इत्ययम् । द्व्यजवर इति। यद्यपि पटदित्ययं द्व्यच्क एव न तु ततोऽधिक इति न द्व्यजवरस्तथापि द्व्यच्कादन्यूनत्वमेव विवक्षितं न त्वाधिक्यमिति द्व्यच्केपि द्व्यजवरत्वमस्त्येवेति - अत एव - न तु ततो न्यूनमिति मूले प्रोक्तम्। अनेकाजिति यावदित्यस्याप्ययमेवाभिप्रायः। एकाज्भिन्न इति। एवं द्व्यजवरार्थात्पटत् पटत् इत्यस्मादनुकरणात् करोति योगे डाचि कृते डित्त्वाट्टिलोपः। पटत्पटा - (करोति) इति स्थिते - नित्यमाम्रेडिते डाचीति पररूपत्वेन - पटतस्तकारस्य - पटा इत्यस्य एकारस्य च स्थाने पकारः। पटपटाकरोति इति। श्रत्करोति द्वित्वे कृतेऽपि द्व्यजवरार्थत्वाभावेन हेतुना सम्भाव्यमानेन डाज्विवक्षा अत्र नोदेत्येवेति नात्रद्वित्वम्। ननु द्व्यजवरार्थात् इति सूत्रितेऽपि श्रत्करोतीत्यत्रातिव्याप्तिवारणे सति द्व्यजवरार्थादित्यवरपदघटितत्वं व्यर्थमिति शङ्कते - अवरेति किमिति - खरटत् इत्यनुकरणशब्दः - तस्य द्वित्वे कृते खरटत् - खरटत् इति समुदायस्यार्धभागो न द्व्यच्कः त्र्यच्कत्वात्। अतः द्व्यजार्थादिति सूत्रिते ततो डाजसंभव एवेति भावः। अत्र

**२१२९। कृञो द्वितीयतृतीयशम्बबीजात्कृषौ** ।५।४।५८। द्वितीयादिभ्यो डाच् स्यात्कृञ एव योगे कर्षणेऽर्थे। बहुलोक्तेरव्यक्तानुकरणादन्यस्य डाचि न द्वित्वम्। द्वितीयं तृतीयं कर्षणं करोति द्वितीयाकरोति। तृतीयाकरोति। शम्बशब्दः प्रतिलोमे। अनुलोमं कृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षति शम्बाकरोति। बीजेन सह कर्षति बीजाकरोति। **२१३०। संख्यायाश्च गुणान्तायाः** ।५।४।५९। कृञो योगे कृषौ डाच् स्यात्। द्विगुणाकरोति क्षेत्रम्। क्षेत्रकर्मकं द्विगुणं कर्षणं करोतीत्यर्थः। **२१३१। समयाच्च यापनायाम्** ।५।४।६०। कृषाविति निवृत्तम्। कृञो योगे डाच् स्यात्। समयाकरोति। कालं यापयतीत्यर्थः। **२१३२। सपत्रनिष्पत्रादतिव्यथने** ।५।४।६१।

---

द्व्यजवरार्थादिति। किमनेन क्लेशेन। अनेकाच इत्येव सूत्रयितव्यमिति। स्वमतमाह - अनेकाच इत्यादिना। यदा तु अनेकाच इति सूत्र्यते (अव्यक्तानुकरणादनेकाचो नितौ डाच् इति न्यासः) तदा अनेकाच इत्यस्य एकाज्भिन्नस्येत्यर्थात्। पटच्छब्दाड्डाचः प्राप्तिर्भवत्येवेति प्रथमतो डाच् - पश्चात् डाचि परतः पूर्वस्य पटदित्यस्यानुकरणस्य द्वित्वं पूररूपादिकम्। पटपटाकरोतीति रूपं सिद्ध्यत्येवेति डाचि विवक्षिते इति वार्तिके विवक्षिते इत्यपि व्यर्थमेव डाचि द्वे बहुळमिति वार्तिकस्य न्यासः डाचि परतः पूर्वस्य द्वित्वं स्यादिति तदर्थः। इदमेवाह-एवं हीत्यादिना द्वित्वे कर्तव्ये डाचीति परसप्तम्येव सुवचेत्यन्वयः। ***कृञ इति।** कृभ्यस्तियोगे इति निवृत्तम्। कृञोऽत्र पृथग्ग्रहणात्। न च कृभ्वस्तियोग इत्यतः कृ इति पदमनुवर्त्य प्रकृतं कृञो ग्रहणं त्यज्यतामिति वाच्यम्। तत्र कृञ भ्वस्ति संबन्धसत्त्वेन एकानुवर्तते मानाभावात् कृञ इति षष्ठीसामर्थ्याद्योगे इति लभ्यते। डाच् इति त्वनुवर्तते। द्वितीयादीनां समाहारः। ननु द्वितीयादीनामप्यनेकाच्कत्वेन पूर्वसूत्रादेव डाचः प्राप्तौ व्यर्थिमदमिति चेन्मैवम्।अव्यक्तानुकरणादित्युक्तत्वात्। न हि द्वितीयादयः अव्यक्तानुकरणा भवन्तीति । ननु द्वितीयादिभ्योऽपि डाचि कृते - डाचि विवक्षिते द्वे बहुलमिति द्वित्वं स्यादिति शङ्कां वारयति। बहुलग्रहणादिति। क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिरिति बाहुळकात्। अव्यक्तानुकरणादन्यत्र द्वित्त्वस्याप्रवृत्त्यर्थन्तत्र बहुलग्रहणं कृतमिति भावः। कर्षणार्थवृत्तिभ्यः द्वितीयादिभ्यः कञ्योगे डाजिति सूत्रार्थः. कृषौ कर्षणे वाच्ये सतीति वा प्रतिलोमं कर्षति - प्रतिलोमं यथा भवति तथा कर्षणं करोतीत्यर्थः। ***सङ्ख्याया इति।** गुणशब्दः अन्ते यस्यास्तस्या- गुणान्तायाः. द्वौ गुणौ आवृत्ती यस्य तद्द्विगुणं कर्षणं करोति द्विगुणाकरेति क्षेत्रं द्विगुणं यथा तथा कर्षतीत्यर्थः ***समयादिति।** यापनायां गम्यमानायां समयाड्डाच् कृञ्योगे इत्यर्थः। समययापनां करोति समयाकरोति ***सपत्रेति** अतिव्यथने अत्यन्तव्यथायां गम्यमानायामित्यर्थः। पत्रेण सहितं सपत्रं करोति सपत्राकरोति - निष्क्रान्तं पत्रं यस्मात्तं निष्पत्रं करोति निष्पत्राकरोति। पत्रैर्दळैस्सहितं सपत्रं करोति भूतलं वृक्षः। एवं निष्पत्रं करोति भूतलं ग्रीष्मः। न ह्यत्र पत्रप्रवेशापनयनाभ्यां भूतलस्य काचिद्व्यथा

सपत्राकरोति मृगम्। सपुङ्खशरप्रवेशनेन सपत्रं करोतीत्यर्थः। निष्पत्राकरोति सपुङ्खस्य शरस्यापरपार्श्वेन निर्गमनान्निष्पत्रं करोतीत्यर्थः। अतिव्यथने किम्। सपत्रं निष्पत्रं वा करोति भूतलम्। **२१३३। निष्कुलान्निष्कोषणे** ।५।४।६२। निष्कुलाकरोति दाडिमम्। निर्गतं कुलमन्तरवयवानां समूहो यस्मादिति बहुव्रीहेर्डाच्। **२१३४। सुखप्रियादानुलोम्ये** ।५।४।६३। सुखाकरोति। प्रियाकरोति गुरुम्। अनुकूलाचरणेनानन्दयतीत्यर्थः। **२१३५। दुःखात्प्रातिलोम्ये** ।५।४।६४। दुःखाकरोति स्वामिनम्। पीडयतीत्यर्थः। **२१३६। शूलात्पाके** ।५।४।६५। शूलाकरोति मांसम्। शूलेन पचतीत्यर्थः। **२१३७। सत्यादशपथे** ।५।४।६६। सत्याकरोति भाण्डं वणिक्। क्रेतव्यमिति तथ्यं करोतीत्यर्थः। शपथे तु सत्यं करोति विप्रः। **२१३८। मद्रात्परिवापणे** ।५।४। ६७। मद्रशब्दो मङ्गलार्थः। परिवापणं मुण्डनम्। मद्राकरोति। माङ्गल्यमुण्डनेन संस्करोतीत्यर्थः॥ **भद्राच्चेति वक्तव्यम्**॥ भद्राकरोति। अर्थः प्राग्वत्। परिवापणे किम्। मद्रं करोति। भद्रं करोति॥ **इति तद्धितेषु तद्राजाः॥**

---

– शरपुंखप्रवेशापनयनाभ्यान्तु प्राणिनोऽतिव्यथास्तीति – यद्वा – सपत्रं करोति भूतलमित्यत्रापि पत्रशब्दस्य शरपुंखार्थ एवास्तु तथापि तत्प्रवेशादिप्रयुक्ता भूतलस्य व्यथा नास्तीति समयाकरोति भूतलमिति न भवति। ***निष्कुलादिति।** अत्रापि कृञो योगे इत्येव। आतद्धितं कृञो योगे इति संबध्यते। बहुव्रीहेरिति मूले किम्। कुलस्याभावो निष्कुलमित्यव्ययीभावान्माभूदिति। ***सुखेति**। आनुलोम्ये अनुकूलाचरणे गम्यमाने सति सुखप्रियाभ्यां डाच्। सुखप्रियशब्दावत्रार्श आद्यजन्तौ। सुखमस्यास्तीति सुखः। प्रियमस्यास्तीति प्रियः इति। तं करोति सुखाकरोति प्रियाकरोति। सुखवन्तं प्रियवन्तञ्च करोतीत्यर्थः। सुखप्रियशब्दावानन्दपर्यायौ। अत आह – आनन्दयतीत्यर्थ इति। आनुलोम्ये किम्। सुखं करोति राजानं राष्ट्रम्। ***दुःखादिति।** प्रातिलोम्ये प्रतिकूलाचरणे गम्यमाने सति दःखाड्डाच् कृञो योगे – अत्रापि दुःखशब्दः अर्श आद्यजन्तः। पीडायतीत्यर्थः। भृत्य इति कर्तुश्शेषत्वम्। ***शूलादिति।** पाके गम्यमाने सति कृञो योगे शूलाड्डाच्। शूलपाकं करोति शूलाकरोति। शूलशब्दो हि वृत्तिविषये शूलकर्तृकं पाकं लक्षयति। अत एव पाकस्य गम्यत्वं डाजन्तेन। फलितार्थमाह – शूलेन पचतीत्यर्थ इति। ***सत्यादिति**। शपथार्थे अवृत्तेस्सत्यशब्दात्कृञो योगे डाच्। सत्यं करोति विप्रश्शपथं करोतीत्यर्थः। ***मद्रादिति** परिवापणे गम्यमाने सतीत्यर्थः।मद्रं करोति – मद्रा करोति वृत्तौ मद्रशब्दः मद्रहेतुकमुण्डने लाक्षणिकः। तेन मद्रमित्यस्य माङ्गल्यमुण्डनमित्यर्थः। ***भद्राच्चेति वक्तव्यम्।** परिवापणे इत्येव। मद्रं करोति मङ्गळं करोतीत्यर्थः । एवं भद्रं करोति कुशलं करोतीत्यर्थः। भद्रमद्रशब्दौ पर्यायौ।

*इति तद्धितप्रत्ययाः*

(आपञ्चमसमाप्तितद्धिता इत्यधिकार इत्युक्तत्वात्)

भद्रमद्रशब्दाभ्यान्तद्धितव्याख्या समाप्तेति एतद्ग्रन्थपाठकानामवश्यमपि मंगळं स्यात्।

## द्विरुक्तप्रक्रिया ४० ।

**२१३९। सर्वस्य द्वे** ।८।१।१। इत्यधिकृत्य। **२१४०। नित्यवीप्सयोः** ।८।१।४। आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य द्विर्वचनं स्यात्। आभीक्ष्ण्यं तिङन्तेष्वव्ययसंज्ञककृदन्तेषु च। पचतिपचति। भुक्त्वाभुक्त्वा। वीप्सायाम्, वृक्षंवृक्षं सिञ्चति। ग्रामोग्रामो रमणीयः।

---

श्रीमते हयग्रीवाय नमः

***नित्यवीप्सयोः**। अत्र सर्वस्य द्वे इत्यधिकारः। पदस्येत्यधिकारसूत्रमत्रापकृष्यते। नित्यवीप्सयोर्द्योत्ययोः सर्वावयवोपेतस्य पदस्य द्वे स्तः इति सूत्रार्थः। नित्यपदार्थमाह–आभीक्ष्ण्ये इति। द्योत्यञ्च द्योत्या च द्योत्यम्। नपुंसकमनपुंसकेनेत्येकशेषः। एकवद्भावश्च। तस्मिन् द्योत्ये आभीक्ष्ण्ये द्योत्ये वीप्सायां द्योत्यायां सत्याञ्चेत्यर्थः। द्वे इत्यस्यार्थमाह – द्विर्वचनमिति द्विरुक्तिरित्यर्थः। सर्वम्पदं द्विरुच्चार्यते इति यावत्। अत्र सर्वस्य पदस्य स्थाने द्वे शब्दरूपे आदेशौ स्त इति व्याख्यानान्तरम्। आदेशभूते ते च शब्दरूपे। आन्तरतम्यात् स्थानिशब्दरूपसमानानुपूर्वीके समानार्थबोधके च भवत इति व्याख्यानद्वयस्याप्यस्मिन् फले तौल्यमेव। आभीक्ष्ण्यं नाम पौनःपुन्यम्। क्रियासमभिहार इति यावत्। अतः क्रियाविषयकमेव। न तु द्रव्यविषयकंभवितुमर्हतीति कृत्वा वदति। आभीक्ष्ण्यं तिङन्तेष्वित्यादि। भूवादयो धातव इति क्रियावाचिनान्धातुत्वस्याभिहितत्वात्। धातुभ्य एव तिङविधानस्य वक्ष्यमाणत्वात्तिङन्तेष्वित्युक्तम्। धातुष्वित्यर्थः। धातुमात्रस्य द्वित्वं माभूत्। किन्तु सर्वावयवोपेतस्य पदस्य द्वित्वं भवतु इति हेतोस्सर्वस्येत्यधिकारः। सुप्तिङन्तं पदमिति तिङन्ते पदत्वमस्ति। न तु धातुमात्रे इति कृत्वा तिङन्तेष्वित्युक्तम्। कृदन्तेषु रामादिशब्देषु क्रियावाचित्वाभावात्। अव्ययसंज्ञाककृदन्तेष्वित्युक्तम्। कृन्मेजन्तः। क्त्वातोसुन्कसुनः इति अव्ययप्रकरणे कृतां केषञ्चिदव्ययसंज्ञाप्रोक्तच्व्यन्तदिषु तद्धितेष्वपि अव्ययत्व सद्भावादाहाकृदन्तेष्विति। न च तद्धितान्ताव्ययेष्वपि आभीक्ष्ण्यमिष्यतामिति वाच्यम्। तेषां क्रियावाचित्वाभावात्। यथा पचति पचति। पचतीति तिङन्तम्। पचनक्रियावाचि। अत्र पौनःपुन्ये द्योत्ये पचतीत्यस्य तिङन्तत्वेन पदस्य सर्वस्यापि द्वित्वम्। न तु पच् इति धातुमात्रस्य – पचति पचति – पुनः पुनः पचतीत्यर्थः। ननु धातुमात्रस्य द्वित्वं न भवत्येव। अपदत्वात्। न च स्वादिष्विति पदत्वम्। तिङां तृतीयाध्यायस्थत्वात् स्वादीनाञ्चतुर्थपञ्चमाध्यायस्थत्वादिति सर्वस्येत्यनेन नोपयोग इति चेत्सत्यम्। नास्त्यत्रोपयोगः, किन्तु वृक्षाभ्यां वृक्षाभ्यामिति न सिद्ध्यति। भ्यामिति परतः वृक्षेत्यस्य स्वादिष्विति पदत्वेन वृक्षेत्यस्यैव द्वित्वे वृक्षवृक्षाभ्यामित्यनिष्टापत्तेः। सति तु सर्वस्य ग्रहणे सुप्तिङन्तलक्षणमेव पदमिह गृह्यते। सर्वावयवोपेतत्वात्तस्य। न तु स्वादिष्विति पदम्। असमग्रत्वात्तस्येति लभ्यते इति। पचति पचति। इत्येकमेव पदम्। एवं भुक्त्वा भुक्त्वा

**२१४१। परेर्वर्जने** ।८।१।५। परिपरि वङ्गेभ्यो वृष्टो दवः। वङ्गान्परिहृत्येत्यर्थः॥ **परेर्वर्जने वावचनम्**॥ परि वङ्गेभ्यः।**२१४२। उपर्यध्यधसः सामीप्ये** ।८।१।७। उपर्युपरि ग्रामम्। ग्रामस्योपरिष्टात्समीपे देश इत्यर्थः। अध्यधि सुखम्। सुखस्योपरिष्टात्समीपकाले दुःखमित्यर्थः। अधोऽधो लोकम्। लोकस्याधस्तात्समीपे देश इत्यर्थः।

---

इत्यादयोप्येकपदान्येव। वीप्सायां द्वित्वमुदाहरति - वृक्षं वृक्षं सिञ्चतीत्यादि। नन्वत्र द्वितीया दुर्लभा। न च कर्तुरीप्सिततमङ्कर्मेति कर्मत्वाद्द्वितीयेति वाच्यम्। सेचनक्रियाया वृक्षाणां सेचनकर्तुरनीप्सिततमत्वात् इति चेन्मैवम्। सेचनक्रिया यद्यपि वृक्षोपयोगिनी तथापि फलहेतुत्वेन वृक्षसेचनस्यात्मोपयोगित्वात्सेचनक्रियया वृक्षाः फलार्थमाप्तुमिष्यमाणतमा एवेति। यद्वा - प्रतिपर्यनूनामन्यतमस्यात्र शेषः। वृक्षं वृक्षम्प्रति पर्यनु वा सिञ्चतीति लक्षणेत्थंभूतेति सूत्रे वीप्सायामेवमुदाहृतत्वान्मूले एव। एतेन प्रतिपर्यनूनां वीप्सायां कर्मप्रवचनीयत्वेन कर्मप्रवचनीययुक्ते द्वितीया इति प्रत्याद्यन्यतमयोगे द्वितीयात्र सुलभेति फलितम्। अत्र वृक्षशब्दात् वीप्सायां विषये विवक्षितायामित्यर्थः। प्रत्यादियोगे द्वितीया - वृक्षंप्रति सिञ्चति इति। ततः वीप्सायां द्योत्यायां प्रतिनेति भावः। नित्यवीप्सयोरिति द्वित्वम्। वृक्षं वृक्षंप्रति सिञ्चतीति। द्वितीयोत्पत्तेः प्राक्तु न द्वित्वं वृक्षवृक्षेति। सुप्तिङन्तलक्षणपदत्वस्य तत्रास्तत्वात्। ननु वृक्षं वृक्षमित्यत्र सुपो धातुप्रातिपदिकयोरिति सुब्लोपस्स्यादिति चेन्मैवम्। समुदायस्य अप्रातिपदिकत्वेन सुपः प्रातिपदिकानवयवत्वात्। वृक्षं वृक्षं वृक्षौ वृक्षौ। वृक्षान् वृक्षान् इति द्वितीया। वृक्षो वृक्षः। वृक्षौ वक्षौ। वृक्षा वृक्षाः इति प्रथमा। एवमन्यापि विभक्तिरूह्या द्विरुक्तवृक्षशब्दः अकारान्तः पुंलिङ्ग इति बोध्यम् एवं ग्रामो ग्राम इत्यत्राप्यूह्यम्। सर्वान् वृक्षान् सिञ्चति। सर्वे ग्रामा रमणीया इति अत्र वीप्साद्योत्यते। वीप्साव्याप्तिः कात्स्न्र्यमिति यावत्। ***परेरिति।** वर्जनार्थवृत्तेः परेः द्विर्वचनं स्यादित्यर्थः। ***परेर्वर्जने** वा वचनम्। वार्तिकस्यार्थतः पठनमिदम्। परेर्वर्जने असमासे वेति च वक्तव्यम् इति तु वार्तिकद्वयम्। असमासे परेर्वर्जने वा इति सूत्रयितव्यमिति तदर्थः। असमासे किम्। परित्रिगर्तं वृष्टो देवः। त्रिगर्तान् परिहृत्य इन्द्रो ववर्षेत्यर्थः। इन्द्रस्य मेघाधिपतित्वादेवमुक्तम्। वर्जने किम्। मुखस्य परितः परिमुखम्। साकल्ये अव्ययीभावः। वेति किम्। परिवङ्गेभ्यो वृष्टो देवः। ***उपरीति।** उपरि-अधि अधस् - इत्यव्ययत्रयम्। त्रयाणां समाहारः - सामीप्यार्थे बोधकत्वसंबन्धेन वर्तमानानामुपर्यध्यधसां स्थाने - द्वे पदे समुदिते युगपदादेशौ भवतः इति सूत्रार्थः। उभसर्वतसोः कार्याधिगुपर्यादिषु त्रिषु द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते इति वचनादाम्रेडितान्तोपर्यादित्रिकयोगे द्वितीया। उपर्युपरि ग्राममित्यादि। अध्यधिसुखम्। अध्यधि इत्येकमेव समुदायात्मकमंययम्। सुखस्यानन्तरं दुःखं दःखस्यानन्तरं सुखमिति

**२१४३। वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु** ।८।१।८। असूयायाम्, सुन्दरसुन्दर वृथा ते सौन्दर्यम्। संमतौ, देवदेव वन्द्योऽसि। कोपे, दुर्विनीतदुर्विनीत इदानीं ज्ञास्यसि। कुत्सने, धानुष्कधानुष्क वृथा ते धनुः। भर्त्सने, चोरचोर घातयिष्यामि त्वाम्। **२१४४। एकं बहुव्रीहिवत्** ।८।१।९। द्विरुक्त एकशब्दो बहुव्रीहिवत्स्यात्। तेन सुब्लोपपुंवद्भावौ। एकैकमक्षरम्।

---

न्यायात्सुखस्य समीपे काले दुःखमेव वर्तेतेति कृत्वा आह – दुःखमित्यर्थ इति। अध्यधिसुखमिति पदद्वयस्य तु सुखस्य समीपे काले इत्येवार्थः। ऊर्ध्वभागस्थिते समीपे वस्तुनि उपरिशब्दप्रयोगः। अधोभागस्थिते अधश्शब्दप्रयोगः इति विवेकः। ***वाक्यादेरिति।** सामन्तितम्। संबोधने या प्रथमा तदन्तमामन्त्रितसंज्ञं स्यादिति हलन्तेषु गतम्। वाक्यस्यादिर्वाक्यादिस्तस्य वाक्यस्यादौ वर्तमानस्येत्यर्थः। आमन्त्रितस्य संबोधनप्रथमान्तस्य द्वे स्तः। असूयादिषु गम्यमानेषु। असूया तु दोषारोपो गुणेष्वपीति अमरः। गुणेषु सत्स्वपि परेषु दोषारोपः। असूयेति तदर्थः। सम्मतिरङ्गीकृतिः। सम्माननं वा । कोपः असहनम्। कुत्सनं निन्दा – भर्त्सनं भयोत्पादनम्। भर्त्सनं त्वपकारगीरिति भयोत्पादकवाक्यपरत्वे तु भर्त्सनवाक्यादेरामन्त्रितस्य द्वे स्त इत्यर्थो वक्तव्यस्स्यात्। यथा–सुन्दरसुन्दर वृथा ते सौन्दर्यम्। अत्र सौन्दर्यगुणे सत्यपि तद्वैयर्थ्यवचनेन विवेकाभावादिरूपः कश्चिद्दोषस्सुन्दरे पुरुषे आरोपित इति गम्यते। अतोऽत्र असूयाप्रतीतिः। देव देव वन्द्योऽसि। अत्र देवेनोक्तस्याङ्गीकारो द्योत्यते। अङ्गीकारं विना तस्य वन्द्यत्ववचनासम्भवात्। दुर्विनीतेति। अत्र तदीयदुर्विनयस्य असहनं गम्यते। दुर्विनयफलमिदानीं ज्ञास्यसीत्युच्यमानत्वात्। धानुष्केति। अत्र मद्रक्षायां यत्तव धनुरसमर्थमतस्तव धनुर्व्यर्थमिति धानुष्कस्य धनुर्विद्याऽपाण्डित्यप्रकटनेन निन्दा गम्यते। चोरचोरेति। अत्र त्वां घातयिष्यामीत्यनेन चोरस्य भयोत्पत्तिर्गम्यते। यद्वा – त्वां घातयिष्यामीत्यपकारगीरियम्। अत्र असूयादिप्रयुक्तं यत् वाक्यं तदादेरामन्त्रितस्य द्वे स्त इति सूत्रार्थकथनन्तु युक्तमिव भाति। एकमिति **बहुव्रीहाविव** बहुव्रीहिवत्। बहुव्रीहौ यानि कार्याणि दृश्यन्ते तानि द्विरुक्ते एकशब्दे स्युरिति भावः। यद्वा – बहुव्रीहिणा तुल्यं बहुव्रीहिवत् – द्विरुक्त एकशब्दः बहुव्रीहिणा तुल्यं कार्याणि लभते इत्यर्थः। बहुव्रीहिवदित्यतिदेशलब्धे कार्ये दर्शयति – तेनेत्यादि। तेन बहुव्रीहिवद्भावेनेत्यर्थः। सुब्लोपं तावद्दर्शयति – एकैकमक्षरमिति। एकैकमक्षरं प्रोक्तं महापातकनाशनमिति वाल्मीकिः। एकैकमित्यत्र एकस्य वीप्सायां द्वित्वम्। सर्वाण्यक्षराणीति व्याप्तेरवगम्यमानत्वात्। अक्षरस्य क्लीबत्वात् सोरमि एकम् – तस्य द्वित्वे एकम् एकम् इति स्थिते – प्रक्रियायान्तु एक अम् एक अम् इति स्थिते – सुपो धात्विति सुब्लोपेन अमोर्द्वयोरपि लुक्। न च समुदायस्य अप्रातिपदिकत्वेन सुब्लोपाभावश्शंक्यः। कृत्तद्धितसमासाश्चेति समासस्य

इह द्वयोरपि सुपोर्लुकि कृते बहुव्रीहिवद्भावादेव प्रातिपदिकत्वात्समुदायात्सुप्। एकैकयाहुत्या। इह पूर्वभागे पुंवद्भावादवग्रहे विशेषः। 'न बहुव्रीहौ २२२' इत्यत्र पुनर्बहुव्रीहिग्रहणं मुख्यबहुव्रीहिलाभार्थम्। तेनातिदिष्टबहुव्रीहौ सर्वनामतास्त्येवेति प्राञ्चः। वस्तुतस्तु भाष्यमते प्रत्याख्यातमेतत्। सूत्रमतेऽपि बहुव्रीह्यर्थेऽलौकिके विग्रहे निषेधकं न तु बहुव्रीहावितीहातिदेशशङ्कैव नास्ति। एकैकस्मै देहि।

---

प्रातिपदिकत्वेन बहुव्रीहेः। प्रातिपादिकत्वसत्त्वात्। बहुव्रीहिवद्भावातिदेशेन द्विरुक्तोऽप्येकशब्दः प्रातिपदिकमेवेति। ननु तद्धिताधिकारे एव द्विरुक्तिप्रक्रियासूत्राणि पठित्वा (चतुर्थपञ्चमाध्यायेषु सर्वस्य द्वे इत्यादीनि सूत्राणि पठित्वेत्यर्थः) एकम्बहुव्रीहिवदिति सूत्रं त्यज्यतामिति चेन्मैवम्। सति तु तद्धितत्वे कृत्तद्धितेति तद्धितान्तलक्षणं प्रातिपदिकत्वं स्यात्। न चेष्टापत्तिः। वृक्षं वृक्षमित्यादावपि सुब्लोपप्रसङ्गात्। सुब्लुकि – एक –एक इति। स्थिते। वृद्धिरेचि – एकैक – इदानीम् बहुव्रीहिवद्भावातिदेशेन समासलक्षणप्रातिपदिकत्वस्य अस्मिन् समुदाये सत्त्वात् ङ्याप्प्रातिपदिकादिति सुबुत्पत्तिः। स्वमोरम् – एकैकम् इति रूपम्। पुंवद्भावं दर्शयति – एकैकयाहुत्येति – एकैकया आहुत्या – इति छेदः। ननु एकया इति पदस्य द्वित्वे एकया एकया सुब्लुक् वृद्धिः एकैका पुनष्टाप् एकैकया इति रूपसिद्धेः। कोऽर्थः पुंवद्भावेन इति शङ्कायामाह–अवग्रहे विशेष इति। अवग्रहो नाम वेदस्य क्रमपाठे समस्तपदस्य पदच्छेदः। यथा नवो नवो भवति जायमानोह्नां केतुरुषसामेत्यग्रे भागं देवेभ्यो विदधात्यायन् प्रचन्द्रमाः स्थिरतिगच्छे अन्तः–अस्यां श्रुतौ नवो नव इत्यत्र नव इति नवः इति। अह्नां केतुरित्यत्र – अह्नामित्यह्नामिति – विदधातीत्यत्र वीति वि – दधातीति – प्रेति प्र चन्द्रमा इत्यादि। एवमत्रापि – एकैकयाहुत्या इत्यत्र एकैकयेत्येक– एकया इत्यवग्रहो भवति। पुंवद्भावाभावे तु एकैकयेत्येका – एकया इति स्यादिति बोध्यम्। सुब्लुगनन्तरम्। एका – एका – इति स्थिते। स्त्रियाः पुंवदिति पूर्वभागस्यैव पुंवद्भावः। समानाधिकरणस्त्रीवाचकशब्दपरकत्वसत्त्वात्. न तूत्तरभागस्येति। समुदायस्त्रियामेव वर्तते। न तु पंसीति एकैकयेति स्त्रीलिङ्गोपपत्तिः। ननु बहुव्रीहौ। यद्यत्कार्य दृश्यते तत्सर्वमिहातिदेष्टव्यमेवेति न बहुव्रीहाविति सर्वनाम संज्ञाभावरूपमपि बहुव्रीहौ दृश्यमानं कार्यमिहापि स्यादेव। तथा च – एकैकस्मै इत्यादिरूपासिद्धिः। सर्वनाम्नः स्मै इति स्मायादेशाभावात्। न ह्यस्ति सर्वनामत्वं बहुव्रीहाविति शङ्कायामाह – न बहुव्रीहावित्यादि। पुनर्बहुव्रीहिग्रहणादिति– विभाषा दिक्समासे बहुव्रीहौ इति – पूर्वसूत्राद्बहुव्रीहाविति पदस्य अनुवर्तने अभीष्टसिद्धेरिति भावः। प्रत्याख्यातमेतत्। न बहुव्रीहाविति सूत्रं भाष्यकाराः प्रत्याचख्युरिति न बहुव्रीहाविति सूत्रव्याख्यानावसरे मूले एव प्रतिपादितम्। ननु भाष्यमते

**२१४५। आबाधे च** ।८।१।१०। पीडायां द्योत्यायां द्वे स्तो बहुव्रीहिवच्च। गतगतः। विरहात्पीड्यमानस्येयमुक्तिः। बहुव्रीहिवद्भावात्सुब्लुक्। गतगता। इह पुंवद्भावः। **२१४६। कर्मधारयवदुत्तरेण** ।८।१।११। इत उत्तरेषु द्विर्वचनेषु कर्मधारयवत्कार्यम्। प्रयोजनं सुब्लोपपुंवद्भावान्तोदात्तत्वानि। **२१४७। प्रकारे गुणवचनस्य** ।८।१।१२। सादृश्ये द्योत्ये गुणवचनस्य द्वे स्तस्तच्च कर्मधारयवत्। 'कर्मधारयवदुत्तरेषु २१४६' इत्यधिकारात्। तेन पूर्वभागस्य पुंवद्भावः। 'समासस्य ३७३४' इत्यन्तोदात्तत्वं च।

---

प्राचां ग्रन्थस्य विरुद्धत्वेऽपि सूत्रमते प्राचोक्तमादर्तव्यमेवेत्यत आह – सूत्रमते त्विति। न बहुव्रीहाविति सूत्रस्य अप्रत्याख्यानपक्षे इत्यर्थः। अयं भावः। बहुव्रीहौ चिकीर्षिते सर्वनामसंज्ञा नास्तीति न बहुव्रीहाविति सूत्रेण प्रतिपाद्यते। न तु निष्पन्नस्य बहुव्रीहेस्सर्वनामसंज्ञाभावः इति होतोः बहुव्रीहौ कृते यत्कार्यन्तदिहातिदिश्यते। न तु चिकीर्षिते बहुव्रीहौ यत्कार्य तस्यात्रातिदेश इति भावः। शङ्कैव। सर्वनामसंज्ञाऽभावशङ्कैवेत्यर्थः– बहुव्रीह्यर्थं यदलौकिकविग्रहवाक्यं तद्धटितानां सर्वनामसंज्ञां निषेधयत्येव न बहुव्रीहाविति सूत्रं न तु पुनः कृतबहुव्रीहिघटितानामिति इह द्विरुक्तैकशब्दे यो बहुव्रीहिवद्भावातिदेशः तस्मिन् सर्वनामसंज्ञातिदेशशङ्कैव नास्तीत्यक्षरार्थः। *__प्रकारे इति।__ तच्च तत्र च द्विरुक्ते इत्यर्थः। कर्मधारयवत् – तत्पुरुषस्समानाधिकरणः कर्मधारयः तस्मिन्निव – तेन – कर्मधारयवद्भावातिदेशेन समासस्येति सूत्रेणेति शेषः। समासस्य अन्त उदात्तस्स्यादिति तदर्थः। पटु पट्वी – वोतो गुणवचनादिति पटुशब्दात् स्त्रियां ङीष् – पट्वी – तस्य सादृश्ये द्वित्वम्। पट्वीपट्वी – पुंवत्कर्मधारयेति पुंवद्भावेन पूर्वभागे ङीषः निवृत्तिः। पटुपट्वी – इति अत्र सुब्लोपपुंवद्भावौ दर्शितौ – केवलसुब्लोपं दर्शयति – पटुपटुः पुमान्। पटुस् पटुस् इति स्थिते सुब्लुक् – पटुपटु–कर्मधारयवद्भावातिदेशेन समासत्वात् प्रातिपदिकत्वमिति प्रातिपदिकात्पुनस्सुप्–पटुपटुः। अर्थमाह – पटुसदृश इति। पटुना सदृश इत्यर्थः। फलितमाह – ईषत्पटुरिति। पटुना सदृशे हि पटुत्वमीषद्वर्तते। अत्यन्तासत्त्वे सादृश्यासंभवात् – साकल्येन सत्त्वे पटुत्वादेव सादृश्याप्रतीतेरिति भावः। गुणोपसर्जनद्रव्यवाचिनः–गुणः उपसृज्यते उपसर्जनत्वेन प्रतिपाद्यते यैस्ते गुणोपसर्जनाः। द्रव्यमुच्यते यैस्ते द्रव्यवाचिनः। उभयोः कर्मधारयः – अप्राधान्येन गुणं प्राधान्येन द्रव्यञ्च येऽभिदधते ते शब्दा इति यावत्। पूर्वं गुणमुक्त्वा सम्प्रति ये द्रव्यमभिदधति ते इति भावः। यद्वा–गुणः उपसर्जनं यस्य तद्द्रव्यं गुणोपसर्जनद्रव्यं तद्वाचिन इत्यर्थः इह गृह्यन्ते– एतत्सूत्रस्थगुणवचनशब्देन प्रतिपाद्यन्ते इत्यर्थः। केवलगुणवाचिन उदाहरति – शुक्लशुक्लं

पटुपट्वी। पटुपटुः। पटुसदृशः। ईषत्पटुरिति यावत्। गुणोपसर्जनद्रव्यवाचिनः केवलगुणवाचिनश्चेह गृह्यन्ते। शुक्ल शुक्लं रूपं। शुक्लशुक्लः पटः॥ **आनुपूर्व्ये द्वे वाच्ये**॥ मूलेमूले स्थूलः॥ **संभ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः**॥ सर्पः सर्पः बुध्यस्व २। सर्पः ३ बुध्यस्व ३॥ **क्रियासमभिहारे च॥** लुनीहिलुनीहीत्येवायं लुनाति। 'नित्यवीप्सयोः २१४०' इति सिद्धे भृशार्थे द्वित्वार्थमिदम्। पौनःपुन्येऽपि लोटा सह समुच्चित्य द्योतकतां लब्धुं वा॥ **कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम्**॥ बहुलग्रहणादन्यपरयोर्न समासवत्। इतरशब्दस्य तु नित्यम्॥

---

रूपमिति ईषच्छुक्लमित्यर्थः। गुणोपसर्जनद्रव्यवाचिन उदाहरणमाह- शुक्लशुक्लः पट इति। पटुपटुरित्यप्यत्रैवोदाहरणम्। ***आनुपूर्व्ये इति**। पूर्वस्यानु समीपमनुपूर्वन्तस्य भाव आनूपूर्व्यम् क्रम इति यावत् मूले मूले स्थूल इत्यत्र एकस्मानूकूलप्रदेशात्तदधोमूलदेशस्स्थूलः तस्मात्तदधः इति क्रमेण शाखोत्पत्तिस्थानमारभ्य भूतलपर्यन्तं स्थौल्यं वृक्षस्य प्रतीयते इति मूले शब्दस्य द्वित्वम्। नात्र कर्मधारयवद्भावातिदेशेन सुब्लोपशशंक्यः। इत उत्तरेष्विति। कर्मधारयवदिति सूत्रात्परत्र निर्दिष्टेषु सौत्रेषु द्विर्वचनेष्वेव कर्मधारयवत्कार्य न तु वार्तिकसिद्धद्विर्वचनेष्विति हेतोः–कर्मधारयवदिति सूत्रं हि स्वदृष्ट्या उत्तरेष्वेव कर्मधारयवत्कार्यमतिदिशति। वार्तिकानि तु सूत्रकरणकाले अकृतत्वात्सूत्रदृष्ट्या नोत्तराणीति बोध्यम्। ***संभ्रमेणेति**। त्वरयेत्यर्थः। त्वरया प्रवृत्तौ गम्यमानायां अनेकधा त्रिः त्रिः चतुर्वा सर्वम्पदमुच्चारितव्यमित्यर्थः। **क्रियेति**। पौनःपुन्यं भृशार्थश्च क्रियासमभिहारः। तस्मिन् सर्वस्य द्वे स्तः। ननु नित्यमाभीक्ष्ण्यं पौनः पुन्यमिति यावदिति नित्येत्यनेनैव पौनःपुन्यरूपे क्रियासमभिहारे द्वित्वे सिद्धे व्यर्थमिदं वार्तिकमत आह – भृशार्थे द्वित्वार्थमिदमिति। भृशार्थरूपे क्रियासमभिहारे नित्यवीप्सयोरित्यनेन द्वित्वासिद्धेस्तदर्थमिदं वार्तिकमावश्यकमिति भावः। नन्वेवं भृशार्थे च इत्येव वार्तिकं वक्यव्यं लाघवादित्यत आह। पौनःपुन्येऽपीत्यादि। अयं भावः। क्रियासमभिहारे लोट् – लोटो हिस्वौ वाचतध्वमोरिति लकारार्थप्रक्रियायां सूत्रं व्याख्यास्यते। तत्र च सूत्रे प्रकृतोपयोगी त्वंशः। क्रियासमभिहारे लोट्–इत्येतावानेव – पौनःपुन्ये भृशार्थे च द्योत्ये धातोर्लोट् स्यादिति तदर्थः। यथाविध्यनुप्रयोगः पूर्वस्मिन्निति क्रियासमभिहारे लोड्विधाने लोट्प्रकृतिभूत एव धातुरनुप्रयोज्यः इति लोट्प्रकृतिभूतधातोरनुप्रयोगः। यथा लुनीहि लुनीहीति लुनाति। अत्र क्रियासमभिहारे लोट्। लुनीहि इति. प्रकृतवार्तिकेन द्वित्वम्। लुनीहि लुनीहि। लोट्प्रकृतिभूतधातोरनुप्रयोगः। लुनाति। लोडन्तलडन्तयोरभेदान्वयार्थमिति शब्दः। एवं पुनः पुनरतिशयेन वा लवनं लुनीहि लुनीहीत्यस्यार्थः। एककर्तृकं लवनं लुनातीत्यस्य –

**असमासवद्भावे पूर्वपदस्य सुपः सुर्वक्तव्यः** ॥ अन्योन्यं विप्रा नमन्ति। अन्योन्यौ। अन्योन्यान्। अन्योन्येन कृतम्। अन्योन्यस्मै दत्तमित्यादि। अन्योन्येषां पुष्कैरामृशन्त इति माघः। एवं परस्परम्। अत्र कस्कादित्वाद्विसर्गस्य सः। इतरेतरम्। इतरेतरेणेत्यादि॥

---

उभयोरभेदान्वयः इति स्थिते। क्रियासमभिहारे लोटो विहितत्वेन लोटा क्रियासमभिहारो व्यज्यते इति लब्धम्। पौनःपुन्यं भृशार्थश्च क्रियासमभिहार इत्युक्तम्। इति लोटा गम्यमानं क्रियासमभिहारार्थभूतं पौनःपुन्यं द्वित्वमपि कर्तृभूतं बोधयत्येव। द्वित्वस्यापि क्रियासमभिहारे विधानात्। अतः लोट्द्वित्वञ्च अन्योन्यसमुच्चयेन क्रियासमभिहारं बोधयत इति फलितम्। एतेन लोटा सह समुच्चयेन क्रियासमभिहारार्थभूतं पौनःपुन्यं द्वित्वमपि बोधयत्वित्येतदर्थमिदं वार्तिकमिति भावः। न च नित्यवीप्सयोरित्यनेनैतत्सिद्ध्यति इति वाच्यम् । लोटा नित्यत्वस्य द्योतितत्वेन नित्यवीप्सयोरित्यनेन लोडन्तस्य द्वित्वासंभवात्। सति तु क्रियासमभिहारे चेति वार्तिके पौनःपुन्ये नित्यवीप्सयोरित्यनेनैव द्वित्वे सिद्धे क्रियासमभिहारे इति गुरुवार्तिककरणं व्यर्थं सत् ज्ञापयति। किमिति। लोटा पौनःपुन्ये द्योतितेऽपि समुच्चयेन तदेव पौनःपुन्यं पुनर्द्वित्वमपि द्योतयतीति लोडन्तस्य पौनःपुन्ये द्वित्वम्भवतीति – नन्वेवं पौनःपुन्ये लोडन्तस्य द्वित्वं भवतु नाम। भृशार्थे लोडन्तस्य द्वित्वं न स्यादेव। भृशार्थे द्वित्वार्थं क्रियासमभिहारे चेति वार्तिकस्यावश्यकत्वेन वैयर्थ्यशङ्काया अवकाशादिति चेन्मैवम्। लोटा पौनःपुन्यवद्भृशार्थस्यापि द्योतितत्वेन द्वित्वस्य भृशार्थद्योतकत्वमेव न संभवतीति भृशार्थे द्वित्वविधायकमिदं वार्तिकं व्यर्थमेवेति – अत एव पौनःपुन्येऽपीत्यपेर्निवेशो मूले कृतः। पौनः पुन्ये – अपिना – भृशार्थे चेति तदर्थः। एतावता प्रकृतवार्तिकस्य लोडन्तमेव लक्ष्यमिति लब्धम्। पौनःपुन्ये भृशार्थे च लोटा सह समुच्चित्य द्योतकातां लब्धुमित्युक्तत्वात्। अत एव – लुनीहि लुनीहीत्येवायं लुनातीति मूले उदाहृतम्। सर्वस्य पदस्य भृशार्थे द्वित्वं यदीष्येत तर्हि लुनाति लुनातीत्येवोदाह्रियेत। भृशं लुनातीत्यर्थावगमात्। लोटा सह समुच्चित्येत्यनेन केवलो लोट्– केवलञ्च द्वित्वं क्रियासमभिहारं द्योतियितुं न क्षमते इति व्यज्यते। अन्यथा समुच्चयस्य वैयर्थ्यात्। अत एव लोडन्तमस्य द्वित्वविधायकवार्तिकस्य लक्ष्यमिति मया प्रागुक्तम्। द्योतकतां लब्धुमित्यस्य द्वित्वं कर्तृ – द्वित्वं क्रियासमभिहारद्योतकत्वं लब्धुमित्यन्वयः। ***अन्योन्यं विप्रा नमन्ति**। अत्र अन्यपदं सर्वनाम। एतेन स नम्यते। तेनैष नम्यते इति नमनक्रियाविनिमयोऽत्र द्योत्यते। य एव नमति स एव नम्यते इत्यर्थात् – अतः कर्मव्यतिहारे इति अन्यपदस्य द्वित्वम्। नमनक्रियया व्याप्तुमिष्यमाणतमत्वेन अन्यस्य कर्मत्वात्द्वितीया द्वितीयान्तस्य तु द्वित्वम्. अन्यमन्यम्। वृक्षं वृक्षमिति वत्। न च द्वितीयोत्पत्तेः प्रागेव द्वित्वमिति वाच्यम्। पदस्य द्वित्वमिति प्रागेव प्रपञ्चितत्वात्। अन्य अम् अन्य अम् इति स्थिते – समासवच्चबहुळम् – द्विरुक्तस्य सर्वनाम्नः समासे इव

**स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वक्तव्यः** ॥ अन्योन्याम्। अन्योन्यम्। परस्पराम्। परस्परम्। इतरेतराम्। इतरेतरं वा इमे ब्राह्मण्यौ कुले वा भोजयतः। अत्र केचित्। आमादेशो द्वितीयाया एव। भाष्यादौ तथैवोदाहृतत्वात्।

---

कार्यं बहुळं स्यादिति समासकार्यस्य सुब्लोपस्य प्राप्तौ बहुलग्रहणादन्यपरयोर्न समासः। द्विरुक्तयोरन्य–पर इत्येतयोस्सर्वनाम्नोस्समासवद्भावो न भवति। कुतः बहुळग्रहणात्। क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिरिति क्वचिदप्रवृत्तेर्बाहुलकत्वादित्यर्थः। एवं समासवद्भावाभावेन सुब्लोपाभावे सति असमासवद्भावे पूर्वपदस्थस्य सुपस्सुर्वक्तव्यः। समासवद्भावे असति। पूर्वपदस्थस्य सुपः प्रत्याहारः। स्वादीनामित्यर्थः। सु इत्ययमादेशो व्यक्तव्य इत्यर्थः। इति अमः स्वादेशः। अन्य सु अन्यम् सोरुकार इत् स सजुषोरुः अतो रोरप्लुतादप्लुते इत्युत्वम् आद्गुणः एङः पदान्तादति अन्योन्यमं इति परस्परं पर अम् पर अम् पूर्वस्यामस्सुः। परस् परम् – स सजुषोरुः। खरवसानयोर्विसर्जनीयः। **कस्कादिषु च** इत्यन्येत्र तु सः। परस्परम्। परस्परौ परस्परानित्यादि। ननु सुरादेशः अलोन्त्यपरिभाषया अन्त्यस्य मकारमात्रस्यैव स्यादिति चेन्मैवम्। अनेकाल्त्वात्सर्वादेश इति। ननु नानुबन्धकृमनेकाल्त्वमिति न्यायान्नास्त्यनेकाल्त्वं सौ इति चेन्मैवमपि तस्य क्वाचित्कत्वात् । अन्यथा अन्योन्यस्मै इत्याद्यसिद्धेः। अन्योन्यः अन्योन्यौ अन्योन्या इति प्रथमान्तो द्विरुक्तसर्वनामशब्दस्तु मूलेनोदाहृतः– कुतः सुपस्स्वादेशविधानप्रयुक्तफलादर्शनात्। सोरेव तत्र स्थितत्वादिति भावः। न च प्रथमान्तद्विरुक्तसर्वनामशब्दासंभवशङ्क्यः। परस्पर इत्यादिप्रयोगसद्भावात्। इतरेतरम् । इतरशब्दस्य तु नित्यम्। इतर शब्दस्य द्विरुक्तस्य समास वद्भावो नित्यं स्यादित्यर्थः। अत्रापि हेतुः बहुलग्रहणमेव। क्वचित्प्रवृत्तेरपि बाहुळकत्वात्। समासवद्भावेन सुब्लुकि आद्गुणः। इतरेतरम्। अन्योन्याम्। अत्र अन्या अम् अन्या अम् इति स्थिते पूर्वपदस्थस्यामस्सुः। अन्योन्या आम्। तस्य स्त्रीनपुंसकयोरित्यामादेशः। अन्योन्य आम्। सवर्णदीर्घः। अन्योन्याम्। सप्तस्वपि विभक्तिषु त्रिष्वपि वचनेषु एवमेव रूपम्। **सर्वासामपि** विभक्तीनामामादेशे विशेषानुपलंभात्। आमादेशस्य वैकल्पिकत्वेन तदभावपक्षे तु स्त्रियाममादिषु पुंवद्रूपम्। टाबभावात्। शसादिषु तु विशेषः। तस्माच्छसो नः पुंसीति नत्वाद्यभावात्। क्लीबे तु अद्ङादेशं विना क्लीबान्यशब्दवदेव रूपमामादेशाभावपक्षे इति बोध्यम्। द्वितीयाविभक्तेरेवामादेशः। सर्वासामाप्यामादेशः। इति पक्षद्वयमनुसृत्य द्वितीयान्तोदाहरणानि मूले दर्शितानि। पक्षद्वयेऽपि द्वितीयाया आमादेशसद्भावात् इति। **स्त्रीनपुंसकयोरपि** तृतीयादिषु पुंवदेव रूपम्। स्त्रियां टाबभावात्। क्लीबे तु पुंलिङ्गाद्वस्तुतो नास्त्येव विशेष इति च कृत्वेति भावः। अत्र वचनं पठति। दळद्वये इत्यादि। द्विरुक्ते शब्दे यद्भागद्वयमस्ति तदेव दळद्वयमिति व्यवह्रियते द्विरुच्चारिते पदे। यदवान्तरं पदद्वयं तदिति यावत्। तत्र टाबभावः। स्त्रियामन्यशब्दाददन्तत्वेन टाबुत्पद्यते हि। द्विरुक्तेत्वन्यशब्दे स्त्रियां टाप् न दृश्यते। अदर्शने हेतुस्तु समासवच्च बहुळमित्यत्र बहुळग्रहणमेव। क्वचिदन्यदेवेत्यस्यापि बाहुळकत्वादिति भावः। सति तु टापि। अन्यासु – अन्यासु – इति स्थिते – उत्तरपदस्थस्य सोरमादेशे अन्यासु

तेन स्त्रीनपुंसकयोरपि तृतीयादिषु पुंवदेव रूपमित्याहुः॥ अन्ये तूदाहरणस्य दिङ्मात्रत्वात्सर्वविभक्तीनामामादेशमाहुः॥ दलद्वये टाबभावः क्लीबे चाँड्विरहः स्वमोः॥ समासे सोरलुक्चेति सिद्धं बाहुलकात्त्रयम्॥१॥ तथाहि। अन्योन्यं परस्परमित्यत्र दलद्वयेऽपि टाप् प्राप्तः। न च सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः।

---

–अन्याम्। हल्ङ्याब्भ्य इति सुलोपः। सवर्णदीर्घः। अन्यान्यामिति स्यादिति ज्ञेयम्। तस्मात् स्त्रीवाचके द्विरुच्यमाने टाबन्ते अन्याशब्दे बहुलग्रहणाट्टापो लोपो भवतीति भावः। एवंपरस्परामित्यत्रापि बोध्यम्। क्लीबे चाद्विरहस्स्वमोः। अद्ड्डुतरादिभ्य इति डतरादिभ्यः क्लीबे स्वमोरद्डादेशः विहितः। आमादेशाभावपक्षे उत्तरपदस्थयोस्स्वमोरद्डादेशः प्राप्तः न भवति। कुतः। क्वचिदन्यदेवेत्यर्थकबहुळग्रहणादेव। समासे सोरलुक्च। द्विरुक्तयोरन्यपरयोः शब्दान्तरेण समासे द्विरुक्तावयवपूर्वपदस्थसुपो यस्स्वादेशः असमासवद्भावे इत्यनेन विहितस्तस्य सुपो धात्विति लुकि प्राप्ते तदभावश्च बहुलग्रहणादेव। यथा – अन्योन्यसंसक्तम्। अन्य – टा – अन्य – टा। संसक्त – सु – इति प्रक्रियायां पूर्वपदस्थायाष्टायाः सुरादेशः सुपो धात्विति । सु – टा – सु इत्येषां लुकि प्राप्ते स्वादेशस्यालुक्। अन्योन्यसंसक्त– ततस्सुः सोरम्। अन्योन्यसंसक्तम्। स्वादेशस्यापि लुकि अन्यान्यसंसक्तमिति स्यात्। वस्तुतस्तु – अन्योन्येन संसक्तमिति विग्रहात् परिनिष्पन्नः अन्योन्यशब्द एव संसक्तेन सह समस्यते इति नात्र स्वादेशस्य लुक्प्रसङ्ग इति बोध्यम्। बाहुळकात् बहुळग्रहणादित्यर्थः। उक्तं श्लोकं स्वयमेव विवृणोति तथाहीति। न च द्विर्वचनमेव वृत्तिः। अयं भावः। **सर्वनाम्नो** वृत्तिमात्रे पुंवद्भाव इति वृत्तिमात्रे पुंवद्भावो विहितः। ततश्च समासवद्भावाभावेन समासवृत्त्याश्रयः पुंवद्भावाभावेपि द्विर्वचनरूप वृत्त्य श्रयः पुंवद्भावोऽत्रास्तु – द्विर्वचनमपि वृत्तिरेव। परार्थाभिधायकत्वादिति वदन्तं प्रत्याह न च द्विर्वचनमेव वृत्तिरिति। द्विर्वचनं वृत्तिर्न भवतीत्यर्थः। अत एव हि कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्चवृत्तय इति प्रतिपादितं प्राङ्मूले एव। न हि द्विर्वचनस्य कृदादिष्वन्तर्भावश्शक्यते वक्तुम्। अप्रत्यत्वान्न द्वित्वस्य कृत्स्वन्तर्भावः। कृदतिङिति तिङ्भिन्नस्य प्रत्ययस्य कृत्संञ्ज्ञाविधानात्। नापि तद्धितेषु। तद्धिताधिकारबहिर्भूतत्वाच्च। न समासे – कडाराः कर्मधारय इत्यतः प्राक्समासाधिकारात्। समसनक्रियाया एवात्रानुपलभ्यमानत्वाच्च। नाप्येकशेषे – एकस्याशेषात्। नापि सनाद्यन्तधातुषु। असनादित्वात्। इति। अथ यदि द्विर्वचनेन सह षड्वृत्तय इत्युच्येत तत्र वदति – अतिप्रसङ्गादिति। यां यां सा सा इत्यादावपि पुंवद्भावेन यं यं स स इति प्रयोगस्स्यादिति भावः। वीप्सायां द्विर्वचनं यां यां सा सा इति। अन्योन्यमाश्रयतीत्यन्योन्याश्रयः। परस्परस्य अक्ष्णोस्सादृश्यम् परस्पराक्षिसादृश्यम्। अदृष्टः परस्परो यैस्तैः अदृष्टपरस्परैः। ननु दळद्वये टाबभाव इति वचनस्य किं प्रमाणमत

अन्यपरयोरसमासवद्भावात्। नच द्विर्वचनमेव वृत्तिः। यांयां प्रियः प्रैक्षत कातराक्षीं सा सेत्यादावतिप्रसङ्गात्। अन्योन्यमितरेतरमित्यत्र च 'अद्ड्डतरादिभ्यः-३१५' इत्यद्ड् प्राप्तः। अन्योन्यसंसक्तमहस्त्रियामम्। अन्योन्याश्रयः। परस्पराक्षिसादृश्यम्। अदृष्टपरस्परैरित्यादौ सोर्लुक् प्राप्तः। सर्वं बाहुलकेन समाधेयम्। प्रकृतवार्तिकभाष्योदाहरणं 'स्त्रियाम् ४५३' इति सूत्रे अन्योन्यसंश्रयत्वे तदिति भाष्यं चात्र प्रमाणमिति॥ **२१४८। अकृच्छ्रे प्रियसुखयोरन्यतरस्याम्।** ।८।१।१३। प्रियप्रियेण ददाति। प्रियेण वा। सुखसुखेन ददाति। सुखेन वा। द्विर्वचने कर्मधारयवद्भावात्सुब्लुकि पुनस्तदेव वचनम्। अतिप्रियमपि वस्त्वनायासेन ददातीत्यर्थः॥ **२१४९। यथास्वे यथायथम्** ।८।१।१४। यथास्वमिति वीप्सायामव्ययीभावः। योऽयमात्मा यच्चात्मीयं तद्यथास्वम्। तस्मिन्यथाशब्दस्य द्वे क्लीबत्वं च निपात्यते। यथायथं ज्ञाता। यथास्वभावमित्यर्थः। यथात्मीयमिति वा॥ **२१५०। द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु** ।८।१।१५।

---

आह - प्रकृतेत्यादि। (स्त्रीनपुंसकयोरिति) (समासवच्च बहुळमिति) प्रकृतवार्तिके यद्भाष्योदाहरणं अन्योन्यामन्योन्यमित्यादिकम् तत्। अत्र वचने इत्यर्थः। ***अकृच्छ्रे** इति। अनायासे गम्यमाने सति प्रिय - सुख - इत्यनयोः पदयोर्द्वे वास्तः। प्रियेणेत्यस्य द्वित्वे - पियेण प्रियेण इति स्थिते कर्मधारयवदुत्तरेष्विति कर्मधारयवद्भावात्सुब्लुक्। प्रियप्रिय - पश्चात्प्रातिपदिकत्वात्सुबुत्पत्तिः। प्रियप्रियेण इदमेवाह द्विर्वचने इत्यादिना। तदेव वचनम्। सुब्लोपात्प्राक् प्रियेण प्रियेणेत्यवस्थायां यत्तृतीयैकवचनमस्ति सुब्लोपानन्तरमपि प्रातिपदिकात्पुनस्तृतीयैकवचनमेव भवति। यद्वचनान्तम्पदं द्विरुक्तं तस्मादुपदात्तद्वचनोत्पत्तेर्न्यायत्वात्। अतः प्रियप्रियाभ्यामिति द्वित्वशङ्का नात्र कर्तव्येति भावः। ***यथास्व इति।** यथास्वमित्यर्थे यथायथमिति निपात्यते इति सूत्रार्थः। **यथास्वपदं** विवृणोति यथास्वमित्यादिना। अव्ययं विभक्तीति सूत्रे यथाशब्दो गृहीतः। तस्य च योग्यता वीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्था इति अर्था वर्णिता मूले एव। ततश्च वीप्सायामप्यव्ययीभावोऽस्ति स्वं स्वं यथास्वमिति समासः। अर्थमर्थम्प्रत्यर्थमितिवत्। आत्मात्मीययोस्स्वशब्दार्थत्वात्फलितमर्थमाह - योऽय आत्मा यद्यच्चात्मीयं तद्यथास्वमिति। यो य इति। यद्यदिति च द्विर्यच्छब्दग्रहणाद्वीप्सा द्योत्यते - सर्वोऽप्यात्मा सर्वमप्यात्मीयम् यथास्वमित्युच्यते इति भावः। यथास्वभावमित्यर्थः। सर्वमपि स्वभावमिति यावत्। स्वभावमनतिक्रम्येति तु न भ्रमितव्यम्। वीप्सायामव्ययीभावे इत्युक्तत्वात्। न च आत्मन्शब्दस्य स्वभावार्थकत्वे विवदितव्यमित्याह तत्त्वबोधिनी - आत्मा यत्नो धृतिर्बुद्धिस्स्वभावो ब्रह्मवर्ष्म चेत्यमर इति। यथात्मीयमित्यस्य च सर्वमात्मीयमित्यर्थः। ***द्वन्द्वमिति।** अम्भावः अमागमः मिदचोऽन्त्यात्पर इति द्विशब्दात्परस्सन्भवति द्वन्द्व इति स्यात्। यदि तु अमादेशः तर्हि अनेकाल्त्वात्सर्वस्येति अम्द्व इति स्यादत आह तत्त्वबोधिनी - पूर्वपदावयवस्येकारस्येति

द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम्भावोऽत्वमुत्तरपदस्य नपुंसकत्वं च निपात्यते एष्वर्थेषु। तत्र रहस्यं द्वन्द्वशब्दस्य वाच्यम्। इतरे विषयभूताः। द्वन्द्वं मन्त्रयते। रहस्यमित्यर्थः। मर्यादा स्थित्यनतिक्रमः। आचतुरं हीमे पशवो द्वन्द्वं मिथुनीयन्ति। माता पुत्रेण मिथुनं गच्छति। पौत्रेण प्रपौत्रेणापीत्यर्थः। व्युत्क्रमणं पृथगवस्थानम्। द्वन्द्वं व्युत्क्रान्ताः। द्विवर्गसंबन्धेन पृथगवस्थिताः। द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति। द्वन्द्वं संकर्षणवासुदेवौ। अभिव्यक्तौ साहचर्येणेत्यर्थः। योगविभागादन्यत्रापि द्वन्द्व इष्यते॥ **इति द्विरुक्तप्रक्रिया॥॥**

**इति श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यां पूर्वार्धं समाप्तम्॥**

---

अमादेश इति शेषः। अत्वञ्च – अकारादेश इत्यर्थः। द्वै द्वौ द्वन्द्वमिति द्विशब्दस्य द्विरुक्तौ पुंस्त्वेन द्वन्द्वशब्दोऽपि पुंलिंगस्स्यादित्याशङ्क्याह – नपुंसकत्वञ्चेति – रहस्येऽर्थे वाच्ये सति – मर्यादादिषु विषयभूतेषु सत्सु द्वन्द्वमिति निपात्यते इति सूत्रार्थो वक्तव्य इत्याह – तत्रेत्यादिना – तत्र तेष्वर्थेषु मध्ये इत्यर्थः। द्वन्द्वं मन्द्रयते – रहस्यमालोचयति इत्यर्थः। रहस्यमित्यर्थः द्वन्द्वशब्दस्येति शेषः। न च द्वन्द्वं मन्त्रयते इति पदद्वयस्यापि रहस्यमर्थ इति वाच्यम्। रहस्यं द्वन्द्वशब्दवाच्यमिति पूर्वापरव्याघातात्। मिथुनायन्ते। मिथुनमिवाचनरतीत्यर्थे मिथुनशब्दात् कर्तुः क्यङ् सलोपश्चेति क्यङि रूपम्। मिथुनीभूय गच्छन्ति मिळित्वा गच्छन्तीति यावत्। इमे पशवः चतुर्थादभिव्याप्य द्वौ द्वौ मिळित्वा गच्छन्तीति वाक्यार्थः। द्वन्द्वमित्यस्य द्वौ द्वौ इत्यर्थः। स्ववाक्यद्वयमेव विवृणोति। मातेत्यादिना। मातुः पुत्रादिभिर्मिळित्वा गमनं न्याय्यम्। मात्रा सह गणने प्रपौत्रश्चतुर्थो भवति – प्रपौत्रादभिव्याप्य मिळित्वा गमनं मातुरस्तीति अत्र मर्यादा द्योत्यते। आ चतुर्थमिति मर्यादायामाङश्चतुर्शब्देन सह समासविधानात् ज्ञापकात्। न च – आ चतुरमित्यनेन मर्यादाया उक्तत्वात् कथं द्योतकत्वं द्वन्द्वस्येति वाच्यम्। आ चतुरमित्यत्र स्थित आङ् मर्यादायामेव न त्वभिविधाविति द्योतयितुं द्वन्द्वशब्दप्रयोग इति। यद्वा – मर्यादाया द्योतकत्वन्द्वन्द्वस्य मास्तु । मर्यादायां विषयभूतायामेव द्वन्द्वस्य निपातनादिति। अत्र मर्यादास्तीति आ चतुरमिति पदेनैव गम्यते इति संक्षेपः। पृथक्भेदेन पृथगवस्थाने विषये द्वन्द्वमिति निपात्यते – द्वन्द्वशब्दार्थस्तु द्वौ द्वौ इत्येव। व्युत्क्रान्ता इत्यस्य पृथगवस्थिता इत्यर्थः। एवं द्वन्द्वं व्युत्क्रान्ता इत्यस्य द्वौ द्वौ पृथक्स्थिता इत्यर्थस्सिद्धः। इदमेवाह – द्विवर्गेत्यादि। द्वौ द्वौ वर्गौ इति द्विशब्दस्यातवर्गरूपसंख्येयवाचकत्वम्। वर्गस्समूहः– स चात्र पुरुषाणामेव। तथा च पुरुषाः वर्गद्वयीभूय भेदानावस्थिता इति फलितार्थः। वर्गद्वय नाम पक्षद्वयम्। यज्ञपात्रप्रयोगे विषये द्वन्द्वशब्दं दर्शयति। द्वन्द्वं यज्ञपात्राणि प्रयुनक्तीति। यज्ञपात्राणांमध्ये द्वौ द्वौ गृहीत्वा सकृत्प्रयुनक्तीत्यर्थः। एकैकवारम्। द्वयोर्द्वयोर्यज्ञपात्रयोः प्रयोग इति यावत्।

अभिव्यक्तिविषये द्वन्द्वं दर्शयति। द्वन्द्वं सङ्कर्षणेत्यादि। संकर्षणवासुदेवौ द्वौ द्वौ अभिव्यक्तौ इत्यर्थः। ननु अत्र संकर्षणवासुदेवयोः द्वित्वेन द्वौ इत्येव वक्तव्ये द्वौ द्वौ इति द्विरुक्तिर्न संभवतीति शङ्कायामाह – साहचर्येणेत्यर्थ इति। सङ्कर्षणेन सह वासुदेवस्य, वासुदेवेन सह संकर्षणस्य च अन्योन्यं द्वित्वं बोधयति द्वौ द्वौ इत्ययं द्वन्द्वशब्द इति भावः। इदमेव हि साहचर्य नाम – यदन्यतरानपाय इति। योगविभागादिति। द्वन्द्वमिति योगो विभज्यते। द्वौ द्वौ इत्यर्थे द्वन्द्वमिति निपात्यते इति तदर्थः। इष्यते भाष्यकारैरिति शेषः। एवञ्च द्वन्द्वमित्येव सूत्रयितव्यम्।अविशेषेण सर्वार्थविषये द्वन्द्वलाभे सति रहस्याद्युक्तेर्व्यर्थत्वादिति बोध्यम्।

**इति शरद्रात्रौ पूर्वार्धव्यशख्या "समाप्ता"**

प्लवमाघशुद्धषष्ठी शुक्रवासरे

इति शम्।





BELLAMKONDA VENKATA SUBRAMANYA SARMA.

BELLAMKONDA SRINIVASASARMA



BELLAMKONDA CHAKRADHAR KUMAR.

Grand Son's of Sri Bellamkonda Rama Raya Kavi.